श्रीविजयनेमिसूरिग्रन्थमालारत्नम्–४९



# न्यायसमुच्चयः ।

तदुपरि—

श्रीमत्तपोगच्छाधिपति–शासनसम्राट्–सूरिचक्रचक्रवर्ति–सर्वतन्त्रस्वतन्त्र–
श्रीमद्विजयनेमिसूरीश्वर–पट्टालङ्कारेण व्याकरणवाचस्पति–शास्त्र
विशारद-कविरत्नेन श्रीमद्विजयलावण्यसूरिणा विरचितो
न्यायार्थसिन्धुः, तरङ्गश्च ॥



सम्पादकः—

पन्न्यासश्रीसुशीलविजयो गणीन्द्रः

प्रकाशनस्थलम्—

श्रीविजयलावण्यसूरीश्वरज्ञानमन्दिरम्
[ बोटाद, सौराष्ट्र ]



R. 1 8=00

वीरसं० २४८३ ] नेमि सं० ८ [ विक्रम सं० २०१३

मुद्रणस्थलम्–निर्णयसागर प्रेस, २६/२८ कोलभाट स्ट्रीट, मुंबई नं. २

## સહાયક સદ્ગૃહસ્થોની નામાવલિ—

| | | | |
|---|---|---|---|
| [૧] | રૂપિઆ | ૭૫૦ | શેઠ હાથીભાઈ ગલાલચંદ મુંબઈ |
| [૨] | ,, | ૧૦૦૦ | શેઠ બાબુભાઈ ફકીરચંદ મુંબઈ |
| [૩] | ,, | ૭૫૦ | શેઠ બાપાલાલ ગભરૂચંદ મુંબઈ |
| [૪] | ,, | ૧૦૦૦ | શેઠ મણીલાલ મગનલાલ (પાટણવાળા) મુંબઈ |
| [૫] | ,, | ૨૫૦ | શેઠ છોટાલાલ મગનલાલ મુંબઈ |
| [૬] | ,, | ૨૫૦ | શેઠ ચિનુભાઈ રવિદાસ મુંબઈ |
| [૭] | ,, | ૨૫૦ | શેઠ કેશવલાલ માણેકચંદ સંઘવી પૂનાસિટિ |
| [૮] | ,, | ૨૫૦ | શેઠ મણીલાલ ચુનીલાલના ધર્મપત્ની અમરતબાઈ પૂનાસિટિ |
| [૯] | ,, | ૨૫૦ | શેઠ જેતાજી સાંકળાજી. પૂનાસિટિ. |
| [૧૦] | ,, | ૨૫૦ | શેઠ તારાચંદજી ખેમચંદજી પૂનાસિટિ. |
| [૧૧] | ,, | ૧૦૦ | શેઠ દેવચંદ જેઠાલાલના ધર્મપત્ની ચંપાબાઈ, મલાડ દેવચંદજીની ચાલ. |



પ્રકાશકઃ—
શ્રીવિજયલાવણ્યસૂરીશ્વર જ્ઞાનમંદિર
ના કાર્યવાહક
શા૦ ઈશ્વરદાસ મૂળચંદ
બોટાદ, સૌરાષ્ટ્ર



પ્રાપ્તિસ્થાનઃ—
[૧]
શ્રીવિજયલાવણ્યસૂરીશ્વર જ્ઞાનમંદિર
બોટાદ, સૌરાષ્ટ્ર
[૨]
સરસ્વતી પુસ્તક ભંડાર
ઠે૦ રતનપોળ, હાથીખાના.
મુ૦ અમદાવાદ (ગૂજરાત)

મુદ્રકઃ—લક્ષ્મીબાઈ નારાયણ ચૌધરી,
નિર્ણયસાગર પ્રેસ,
૨૬-૨૮ કોલભાટ સ્ટ્રીટ, મુંબઈ ૨.



शासनसम्राट्–सूरीचक्रचक्रवर्ति–तपोगच्छाधिपति–कदम्बगिरिप्रमुखतीर्थोद्धारक–

पूज्यपाद–आचार्य–महाराजाधिराजश्रीमद् विजयनेमिसूरीश्वरजी महाराज।

Imperial Printery Gheekanta Ahmedabad.

# भूमिका ।

अये सुरसरस्वतीसमुपासकाः !

"न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ १ ॥"

इति भर्तृहरिवचसाऽनुभवानुमोदितेन सकलोऽपि सचेतसां ज्ञानविषयोऽनुस्यूतः शब्देन । एतच्च तेनैवान्यत्रापि दृढीकृतम्—

"वाग्रूपता चेदुत्क्रामे-दवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत, सा हि प्रत्यवमर्शिनी ॥ २ ॥"

अपि च—

"इदमन्धं तमः कृत्स्नं, जायेत भुवनत्रयम् ।
यदि वागात्मकं ज्योति-,रा संसारं न दीप्यते ॥ ३ ॥" इति

न केवलं ज्ञानविषय एव, अपि तु सर्वोऽपि व्यवहारोऽखिलमिदं विश्वमेव वा शब्दस्यैव प्रपञ्चः ; तदपि तेनैवोक्तम्—

"अनादिनिधनं ब्रह्म, शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन, प्रक्रिया जगतो यतः ॥ ३ ॥"

युक्तं चैतत्—पूर्वं नाम्ना वस्तु बुद्धावानीय घटमहं करोमीति संकल्प्य पश्चान्निर्मीयत इति नामपूर्वकत्वं रूपस्य घटादिप्रपञ्चे सर्वैर्दृष्टचरमेव । अनयैव व्याप्त्याऽस्य महतो जगतोऽपि नामपूर्वकत्वमनुमातुं शक्यत एव, एतच्च विशदय्यान्यत्र प्रपञ्चितम् । नामानि च शब्दा एव ।

इत्थं सर्वस्य ज्ञानप्रपञ्चस्य रूपप्रपञ्चस्य च कारणभूतत्वं शब्दानामनुभवानुमोदितमागमसिद्धं चेति निर्विवादमेव । शब्दाश्चानेकधा बहुभिर्विवेचिताः, केचिल्लौकिकवैदिकभेदेन द्वैविध्यमाहुः, अन्येऽन्यथा विभिन्दन्ति, वयं त्विह शास्त्रीय-व्यावहारिकभेदेन द्वैविध्यमास्थाय विचारयामः । तत्र व्यावहारिकी भाषा परस्परं व्यवहारेणापि कथंचिदवगन्तुं सुशका, व्यवहारातीता शास्त्रीया भाषा च केवलं व्याकरणसाध्यबोधैवेति निश्चितम्, अत एव शक्तिग्राहकेषु व्याकरणस्य प्राधान्यमाहुरभियुक्ताः । तथाहि—

"शक्तिग्रहं व्याकरणोपमान-कोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति, सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ ४ ॥" इति ।

कश्चित् शब्दमजानानः शिशुर्व्यवहारत एव तदर्थं प्रतिपद्यते । या च भाषा व्यवहारविषया तस्यास्तत्तच्छब्दैर्वृद्धानां तेषु तेषु पदार्थेषु प्रवृत्तिनिवृत्ती समवलोक्यैव स [ शिशुः ] भाषायां व्युत्पद्यत इति सर्वदा प्रत्यक्षभूतं नः । येषां च पितरावन्ये वा वयोवृद्धाः संस्कृतज्ञा विदेशीयभाषाज्ञा वा संस्कृतेन विदेशीयभाषया वा व्यवहरन्ति ते विनाऽपि प्रयत्नं तस्यां भाषायां व्युत्पद्यन्ते, परमेतत् काचित्कम् ।

अस्माकमियं संस्कृतगीरद्यत्वे व्यवहारातीतेति निश्चितमेव, तस्याश्चावगमाय व्याकरणातिरिक्ता उपमानादय उपायाः क्वचित् कदाचित् पदविशेषज्ञानमात्रोपयुक्ता एवेति न तैः साकल्येन सारल्येन च संस्कृतगिरोऽवगतिः सम्भविनी, ततश्चास्या भाषायाः परिज्ञानाय व्याकरणं कोशश्चेति द्वावेवोपायाववशिष्टौ, तत्रापि कोशो नाम्नां शक्तिग्रहमात्र उपयुज्यते । भाषा च मुख्यरूपेण नामाख्यातोभयोपबृंहितेति सर्वांशेन तस्या ज्ञानाय व्याकरणं शास्त्रमेव प्रधानमेकमेव वा कारणम्, अत एव व्याकरणं समये समये पूर्वाचार्यैर्लोकसौविध्यानुसारं निर्मितम् ।

किं व्याकरणं प्राचीनतममित्यस्य, कुतो वा समयाद् व्याकरणप्रवृत्तिरित्यस्य वा विवेचनायां प्रस्तुतायां तन्मूलमिदं वेदे समुपलभ्यते ।

"वाग् वै पराच्यव्याकृता अवदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुरु इति । सोऽब्रवीत्, वरं वृणै, मह्यं चैवैष वायवे च सह गृह्याताविति । तस्मादैन्द्रा वायवः सह गृह्यते । तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते ।" इति [ तैत्तिरीये षष्ठकाण्डे ]

अस्यायमभिप्रायः—यथा पश्वादीनां वागसंस्कृता-अविभक्ता भवति, नहि तत्र पदवाक्यादिविभागः कथमप्युन्नीयते, तथैव

मनुष्याणामपि वाक् प्रक्रया अविभक्तैव–प्रकृति-प्रत्यय-पद-वाक्यादिविभागरहितैवाऽऽसीत्, इन्द्रस्तु ज्ञानस्याधिष्ठाता प्राणरूपो देवस्तां वाचं मध्यत आक्रम्य व्याकरोति–पदवाक्यादिरूपेण विभक्तां करोति । वाचि योऽयं पद-वाक्यादिविभागः स खलु ज्ञानकृतः, पश्वादीनां ज्ञानाभावात् स खलु न जायते इति ।

परं त्वन्ये इन्द्रं देवानां मुख्यमेव प्राथमिकं व्याकरणकर्त्तारं मन्यन्ते, तच्च पस्पशाह्निकस्थमहाभाष्यानुमोदितमपि, तथाहि-तत्रोक्तम् "एवं हि श्रूयते–बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम । बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, तथापि नान्तं जगाम ।" इति । यद्यप्येतेन ग्रन्थेन इन्द्रस्य बृहस्पतिसकाशे प्रतिपदोक्तानां शब्दानां पारायणरूपेणाध्ययनमेव विज्ञायते, न तु तस्य व्याकरणकर्तृत्वं, तथापि—

"इन्द्रश्चन्द्रः काशकृत्स्ना-ऽऽपिशली-शाकटायनः ।
पाणिन्यमर–जैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"

इत्यभियुक्तोक्तिदिशा प्रथमशाब्दिकत्वेन तस्य श्रवणाद् व्याकरणनिर्मातृत्वमपि स्वीकार्यमेव, तत्सम्पादनायैव बृहस्पतिसकाशे शब्दपारायणाध्ययनसंभवात् । किञ्च—

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥"

इति रीत्याऽष्टव्याकरणानां नाम क्वचिच्छ्रूयते । अत्र च पूर्वोक्ताष्टशाब्दिकेभ्योऽन्येषामपि कौमार-सारस्वत-शाकलकर्तॄणां नामानि श्रूयन्त एव । परमिदानीं समुपलभ्यमानेषु व्याकरणेषु पाणिनीयव्याकरणमेव प्राचीनमिति केचिन्मन्यन्ते ।

निरुक्तालोचने सत्यव्रतसामश्रमिमहाशयस्तु–पाणिनितः प्राचीनं सर्वतोमुखं व्याकरणं नासीदेवेति मन्यते । 'इन्द्रश्चन्द्रः' इत्यादिपूर्वोक्तपद्ये हि 'अष्टादिशाब्दिकाः' इत्येवोक्तम्, न त्वेते व्याकरणकर्त्तारोऽपीति । शाब्दिकत्वं तु शब्दशास्त्रप्रौढत्वं शब्दशास्त्रपारज्ञतत्वं शब्दशास्त्रप्रचारकत्वं वेत्यादिरीत्यापि संघटते । शब्दशास्त्रपदेन च न केवलं व्याकरणमेव ग्रहीतुं शक्यते, अपि तु कोश-मीमांसादिकमपि । महत्सु 'पदवाक्यपारावारीण' इति विशेषणं प्रयुज्यते, तत्र 'पद'पदेन व्याकरणं 'वाक्य'पदेन मीमांसा 'प्रमाण'-पदेन च न्यायं व्यपदिशन्ति शिष्टाः । शब्दपदेन च पदं वाक्यं चोभयमपि ग्रहीतुं शक्यत इति वाक्यविचारिका मीमांसापि शब्दशास्त्रम् ।

ये चैतेऽष्टौ शाब्दिकाः परिगणितास्तेषु विभिन्नप्रकारकमेव शाब्दिकत्वं प्रमाणान्तरैः सिध्यति । तथाहि–पूर्वोक्तव्याकरणमहाभाष्य-पस्पशाह्निकस्थग्रन्थेनेन्द्रस्य शब्दपारायणज्ञत्वेन कथनात् तस्य तन्मात्रकर्तृत्वमनुमातुं शक्यते, तेन च शब्दपारायणरूपव्याकरणकर्तृत्वमेव तस्य सिध्यति, ततः परेण वा केनचिदिन्द्रनामकेन विदुषा किमपि व्याकरणनिर्मितं भवेदिति संदेहः संभवति ।

चान्द्रं तु व्याकरणं किञ्चिदासीदिति स्वीक्रियत ऐतिहासिकैः । तथाहि–

"चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात् तदागमम् ।
प्रवर्त्तितं महाभाष्यं स्वं च व्याकरणं कृतम् ॥"

[ राजतरङ्गिणी १–१७६ ]

इति चान्द्रदौर्गादिनाम्ना ख्याता ये प्राक्तना महान्तो विद्वांसस्तैरेव चन्द्राचार्य-दुर्गाचार्यादिपदाभिधेयैर्जीर्णं महाभाष्यस्य पुस्तकं दाक्षिणात्येषु क्वचिदुपलभ्य काश्मीरदेशेऽभिमन्युराज्यकाले नीतम्, तैरेव विलुप्तप्रायस्य महाभाष्यस्य प्रचारः कृतः, स्वीयं चाभिनवं व्याकरणं विरचय्य प्रचारितमिति पूर्वोक्तराजतरङ्गिणीस्थपद्येन सिध्यति । तेन तदीयमिदं व्याकरणं पाणिनिव्याकरणतो बह्वर्वाचीनमित्यत्र न कोऽपि संशयः; पाणिनिसूत्रभाष्यकृतः पतञ्जलेरपि बहुतरपरभवत्वात् तेषाम् । ततश्चान्द्रं व्याकरणं पाणिनिव्याकरणात् पूर्वमपि भवेदित्यत्र न किमपि दृढतरं प्रमाणमुपलभ्यते ।

एवं काशकृत्स्नस्य काशकृत्स्नेर्वा व्याकरणकर्तृत्वे न किमपि प्रमाणमुपलभ्यते । तस्य मीमांसकत्वं तु "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी" इति महाभाष्योदाहरणेन [ पा० ४ अ० १ पा० १४ सूत्रे ] प्रतीयते । मीमांसकानामपि शाब्दिकत्वं वाक्यविचारकत्वेन स्वीकार्यमेवेत्यादिशाब्दिकेषु तस्य गणना । आपिशलेस्तु पाणिनिसूत्रेषु दृश्यते नामोल्लेखः–"वा सुप्यापिशलेः" [ पा० सू० ६. १. ९२ ], तस्माद् वैयाकरणेषु तन्मतमपि क्वचित् पार्थक्येनादृतमासीदित्येतावदेवाभ्युपगन्तुं शक्यते तावतैव च तस्य शाब्दिकेषु गणनापि समुपपद्यते, किन्तु तन्निर्मितं किमपि पूर्णं व्याकरणमासीदिति न प्रमाणपदवीमधिरोहति । नहि पाणिनिसूत्रेषु येषां नामोल्लेखस्ते सर्वेऽपि व्याकरणकर्त्तार एवेति स्वीकारो न्याय्यः, प्रयोगविशेषे तेषामेवंविधा रुचिरित्येतावत एव ततः प्रतीयमानत्वात् । परेऽपि केचित् तत्र तत्र पाणिनिसूत्रेपूल्लिखिताः, यथा–शाकल्यः, काश्यपः, स्फोटायनः, चाक्रवर्मणः, गालवः, भारद्वाजः, गार्ग्यः, सेनकश्च, एषु केषाञ्चिदेकत्र केषांचिच्चानेकत्र पाणिनिनोल्लेखः स्वसूत्रेषु कृतः, तेन च तेषां तत्तद्विषयप्रयोगविशेष एव रुचिपार्थक्यमनुमीयते, न तु पृथग्व्याकरणकर्तृत्वमपि ।

अत्रेदमपि विचारमर्हति–पाणिनिना प्रायः सन्धिविषये स्वर[ उदात्तादि ]विषये चाचार्यविशेषस्य मतविभेदः सूचितः, आख्यातविषये च एकत्राडागमविषये गार्ग्य-गालवयोः, इडागमविषये च भारद्वाजस्य, तिङ्विभक्त्यादेशविषये च शाकटायनस्य सकृत्सकृन्नामोल्लेखः कृतः; तेनेदमपि निश्चेतुं शक्यते, यत्–एते पाणिन्युल्लिखिताः शाब्दिकाः प्रातिशाख्यकर्त्तारो भवेयुः, तत्र सन्धि-स्वरयोरेव विचारितत्वात्, तदतिरिक्ताडागमादिविषये च सकृन्नामोल्लेखेन तेषां प्रयोगविशेषविषयो मतभेद एव बोधितो न तु व्याकरण-निर्मातृत्वम्। अमर-जैनेन्द्रयोस्तु पाणिनिपरभवत्वं सुप्रसिद्धमेव। एतावता पाणिनीयमेव व्याकरणं सम्प्रति समुपलभ्यमानव्याकरणेषु प्राचीनमिति केचित् साधयन्ति।

तत्र ब्रूमः,–पाणिनितः पूर्वतरस्य व्याकरणस्य सम्प्रत्यनुपलभ्यमानत्वेऽपि सत्ताऽवश्यमङ्गीकार्या, पाणिनिनैव तत्र तत्र प्राचीन-व्याकरणप्रचलितसंज्ञानां प्रत्याहारादीनां चोल्लेखात्, ततः परतरैर्व्याख्यातृभिः 'प्राचां व्याकरणकर्तृणामियं संज्ञा' इति स्पष्टं व्याख्याय-मानत्वाच्च। किंच वाल्मीकीये रामायणेऽपि व्याकरणस्य नामोल्लेखो दृश्यते, तथाहि–हनूमद्विषये श्रीरामचन्द्रेण श्रीलक्ष्मणं प्रत्युक्तम्—

"नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्॥" [ वा० रा० किष्किन्धाकाण्डे ] इति

एतेन तत्समयेऽपि व्याकरणसत्ता प्रतीयते। नच पाणिनीयव्याकरणस्य तदात्वे सम्भव इति किञ्चिदन्यदेव व्याकरणं तदात्वे स्वीकार्यम्। वेदाङ्गेषु मुख्यतया पठितं व्याकरणं सृष्टेरादिकालादारभ्यैव प्रचलितमिति मन्तव्यम्। समये समये चाचार्यैस्तत्र परिवर्त्तनं परिवर्द्धनं वा लोकसौकर्याय कृतमित्यन्यदेतत्।

किञ्च चीनदेशाद् भारतभ्रमणार्थमागतः ह्यूआनचूआननामकः पर्यटकोऽपि पाणिनिविषये बहु लिखन्निदमप्याह यत्–पाणिनेः पूर्वं बहूनि व्याकरणानि परस्परविरुद्धानि विशृङ्खलानि च प्रचलन्ति स्म इति, तन्मतं चैतिहासिकैरादियत एव, तस्य तदर्थमेव निष्पक्षपातं प्रवृत्तत्वात्।

एवं यथा पाणिनितः पूर्वमपि बहुतराणां व्याकरणान्तराणां सत्त्वेऽपि कंचिद्विशेषमवलम्ब्य पूर्वव्याकरणेषु वा काञ्चिन्न्यूनता-मवधार्य पाणिनिनाऽऽचार्येण व्याकरणं निर्मितं तथा पाणिनितः परतरैरपि कैश्चिदाचार्यैः पाणिनीयव्याकरणस्य काठिन्यादिदोषमनुभूय लोककल्याणार्थं व्याकरणान्तराणि सरलानि कोमलबुद्धीनामप्युपयोगीनि निर्मितानीति समवधेयम्।

पाणिनिपश्चाद्भवानि–कातन्त्र-चान्द्र-बुद्धिसागर-सरस्वतीकण्ठाभरणादीनि व्याकरणानि श्रूयन्ते, यानि च स्वल्पप्रसराणि जातानि। एवं क्रमेण व्याकरणानां बाहुल्यं दुरुहत्वं चावलोक्य गुर्जरक्ष्मापतिना जयसिंहदेवेन स्वविक्रमलब्ध'सिद्धराज'पदेन प्रार्थितः प्रथितयशा आचार्य श्रीहेमचन्द्रसूरीश्वरः सर्वाणि व्याकरणानि प्रमथ्य नवनीतमिव नूतनं व्याकरणं निरमात्। एतच्चैतद्व्याकरणपुष्पिकायां स्वयमेव स्पष्टीकृतमाचार्येण। तथाहि–

तस्यान्वये समजनि प्रबलप्रतापतिग्मद्युतिः क्षितिपतिर्जयसिंहदेवः।
येन स्ववंशसवितर्यपरं सुधांशौ, श्रीसिद्धराज इति नाम निजं व्यलेखि॥ ३३॥
तेनातिविस्तृत-दुरागम-विप्रकीर्णशब्दानुशासनसमूहकदर्थितेन।
अभ्यर्थितो निरवमं विधिवद् व्यधत्त, शब्दानुशासनमिमं मुनिहेमचन्द्रः॥ ३४॥

एतत्कृतेन व्याकरणेन व्याकरणान्तराणामनावश्यकत्वमित्थमुक्तं प्रबन्धचिन्तामणौ–

"भ्रातः! संवृणु पाणिनिप्रलपितं कातन्त्रकन्था वृथा,
मा कार्षीः कटु शाकटायनवचः क्षुद्रेण चान्द्रेण किम्?।
किं कण्ठाभरणादिभिर्बठरयस्यात्मानमन्यैरपि,।
श्रूयन्ते यदि तावदर्थमधुराः श्रीसिद्धहेमोक्तयः॥" इति।

यद्यपि पाणिनीयव्याकरणे आचार्यश्रीहेमचन्द्रसूरीश्वरस्यास्थाऽऽसीदेवेति तन्मतस्य यत्र तत्र न्यासादिषु समादृतत्वेनानुमीयते, तद्भाष्यकर्त्तरि च समादरस्तस्य तत्कृतशब्दमहार्णवन्यासमङ्गलश्लोकतोऽवगम्यत एव तथापि तद्भक्त्या प्रकृतवर्णनीयसिद्धहेमव्याकरणस्य स्तुतिविशेषोद्बोधनाय वा पाणिनिप्रलपितमिति प्रकृतपद्यकर्त्तुर्वचः।

एतावच्चावश्यमेव स्वीकरणीयं यत्–स्वल्पेन कालेन मन्दबुद्धीनामपि व्याकरणे सम्यक् प्रवेशाय सिद्धहेमशब्दानुशासनमनुपमं साधनम्। अतः परमस्याचार्यस्य विषयेऽधिकसमुल्लेखनमनावश्यकमेव। अस्याचार्यवर्यस्यायमपि विशेषः सर्वातिशायी यत्–स्वीयग्रन्थेषु

झटिति समेषां प्रवेशाय स्वयमेव टीकोपटीका अपि रचयामास, येन च स्वकीयाशये विसंवादोऽपि परिहृतः। अपरं चास्य वैशिष्ट्यम्—परमतं स्वानुमतं चेत् तच्छब्दैरेव तत् स्वीकृतं, न तत्र कश्चन परिवर्त्तो विहितः। दृश्यते बहुषु ग्रन्थकर्तृषु दोषोऽयं यद्—अन्यदीयमतं स्ववचोभिस्तथा समाच्छाद्य स्वीकुर्वते यथा तत्तदुपज्ञमेव प्रतीयेत, तत्र च स्वीययशःख्यापनैव हेतुः, वीतरागस्य मुनेरस्य च केवलं लोकोपकृतिरेव प्रवर्त्तिकेति दोषोऽयं नाङ्गीकृतः। यच्च तत्र तत्र यदुक्तिः स्वीकृता, तदीयनामोल्लेखो न कृतस्तत् तस्मिन् समये तस्य तस्य पाठस्यातिप्रसिद्धतयाऽनावश्यकत्वबुद्ध्यैव, न प्रच्छादनाय, तन्निमित्ताभावात्।

एतदीया प्रतिभा चैतावतैवानुमेया यत्-सपादलक्षश्लोकमितमिदं पञ्चाङ्गपूर्णं व्याकरणमेकेनैव वत्सरेणात्मनैव पूरितमिति प्रसिद्धमितिहासमर्मज्ञानाम्, यतः ११९३ मिते विक्रमवत्सरे सिद्धराजेन व्याकरणरचना प्रार्थिता, ११९५ वि. व. आदौ चैतत् पूरयित्वा तस्मै दत्तमिति प्रसिद्धिः।

न केवलं व्याकरण एवैतस्याचार्यवरस्य प्रतिभा, काव्ये योगे कोशे न्याये स्तुत्यादौ च सर्वत्रास्य तथाभूता दृश्यते सेति तदीयतत्तद्विषयकग्रन्थैरेवावगम्यते। सर्वेष्वेतेषु विषये प्रमाणभूता बुधजनसम्मताश्च ग्रन्था विरचिता इति दृष्ट्वैव 'कलिकालसर्वज्ञ' इति ख्यातिमलभतायं तदातनबुधसदसि।

सूत्रपाठ-गणपाठ-धातुपाठादीन् रचयताऽनेन व्याकरणप्रक्रियोपकारका न्याया अपि साकल्येन पठिता व्याख्याताश्च भवेयुः, परमधुनाऽसौ ग्रन्थो नोपलब्ध इत्यनुमीयते। यद्यपि स्वोपज्ञबृहद्वृत्तिग्रन्थान्ते—"ये हि शास्त्रे सूचिता लोकसिद्धाश्च न्याया न तदर्थं यत्नः क्रियते" इत्युक्त्वा *स्वं रूपम्०* इत्यादीन् *नानिष्टार्था शास्त्रप्रवृत्तिः* इत्यन्तान् ५७ सप्तपञ्चाशन्न्यायान् उल्लिलेख। तेन च स्पष्टमेव विज्ञायते यत्-तावत्कालपर्यन्तं न्यायव्याख्यानकृते न प्रयतितमाचार्येण। अत्र च शास्त्रे सूचिता इत्युक्त्या न्यायानां शास्त्रज्ञापितत्वं, लोकसिद्धाश्चेत्युक्त्या च तेषां शास्त्रलोकोभयप्रसिद्धत्वं सूचितम्। शास्त्रसूचितत्वमेतेषां तत्र तत्र तत्तन्न्यायव्याख्यायां प्रतिपादितमेव सिन्धुकृता। लोकसिद्धत्वं च न सर्वेषामुपपादयितुं शक्यम्, केषांचित् शब्दशास्त्रमात्रविषयाणां लोकसिद्धत्वस्य दुरुपपादत्वात्। तथा च तत्त्वं *सहचरितासहचरित०* इत्यादीनामेवोभयत्र प्रवृत्तानां न्यायानामिति विज्ञेयम्। विस्तरतश्च तदुपपादनमिह नाभिप्रेतम्।

अत्र च ये सप्तपञ्चाशन्न्याया आचार्येणोल्लिखितास्ते न साकल्येन परिगणनार्थमपि तु दिक्प्रदर्शनार्थमेव। तेनान्येऽपि तन्त्रान्तरोक्ताः स्वशास्त्रोपकारकास्तत्र तत्र बृहद्वृत्ति-शब्दमहार्णवन्यासादौ व्यवहृताश्च न्यायाः संग्राह्या एव। तेषां च संग्रहोऽनुग्रहेण लोकेषु सुगृहीतानामधेयेन सुविदुषा हेमहंसगणिना स्वोपज्ञन्यायसंग्रहे कृतः। तमेव संग्रहमाश्रित्य प्रकृतो न्यायार्थसिन्धुस्तरङ्गसहितो रचितोऽयम्। अत्र च हेमहंसगणी स्वीयसंग्रहे मञ्जूषानामानं वृत्तिं, तदुपरि बृहन्न्यासं च महता वैदुष्येण सम्पादयामास। तदीयपथेनैवात्र कार्येऽन्येषामपि शेमुषी समासादयत्यवकाशम्, अन्यथा दुर्गम एवायं मार्गः स्यात्। तदर्थं तस्य गणिनः सदुपकारं के न शिरसा धारयिष्यन्ति।

यद्यपि तदीयेन संग्रहेण स्वोपज्ञवृत्तिन्याससमुचितेनैतावत्कालपर्यन्तं सर्वे कार्यं निर्वाहयन्ति स्मैव, तथापि तल्लेखस्यातिसुकोमलतयाऽपरिष्कृततया च नवीनानां परिष्काररुचीनां विशदव्याख्या स्पृहयालूनां च चेतो न सन्तोषमासादयति स्म, तामिमां जिज्ञासामपनेतुकामेन प्राच्यनव्योभयविधविचारचातुरीवता विततव्याख्यानलब्धख्यातिना बहुतरग्रन्थटीकोपटीकाकरणप्रसिद्धनाम्ना शिष्यवर्गवशंवदेन व्याकरणवाचस्पतिना शास्त्रसमुदयविशारदेन कविरत्नेन श्रीमता विजयलावण्यसूरिणा शब्दमहार्णवन्यासस्य त्रुटितस्थलेष्वनुसन्धानकारिणाऽस्य न्यायसमुच्चयस्य न्यायार्थसिन्धुनाम्नी वृत्तिः, तरङ्गनामकं विवरणं च विहितम्। तदिदं ग्रन्थरत्नं प्राच्यनव्योभयमध्यगतशैलीमालम्ब्य विरचितमिति न कोमलमतीनां पीडाकरं न वा प्रौढधियां जिज्ञासापनोदाक्षममिति कामपि परां काष्ठां भजते समुपयोगस्य। अत्र क्वचित् तरङ्गे प्राचां हेमहंसगणिप्रभृतीनां व्याख्यानानि खण्डितानीव दृश्यन्ते, तच्च नवीनपथपरिष्करणाय छात्रमतिवैशद्याय च, न तु स्वपाण्डित्यप्रख्यापनकृते इति स्वयमेव सूरिणा प्रकृततरङ्गपुष्पिकायां स्पष्टमुक्तम्। यद्यपि तत्र तत्र सिन्धौ सामान्यतः, तरङ्गे च विशेषतः क्वचित् पातञ्जलमहाभाष्याद्युद्धरणं प्रकृतानुपयुक्तमिव प्रतिभायात् पाठकानामित्यनुमीयते, तथापि साम्प्रतं तदीयमतस्य बहुलं विद्वत्समाजे समादृतत्वेन स्वपाठकानामपि तद्बोधस्यावश्यकत्वेन तद्बुद्धिवैशद्यनिमित्तमेवेति विचारणीयं सुधीभिः।

इत्थञ्च तरङ्गसहितोऽयं न्यायार्थसिन्धुर्व्याकरणसिद्धान्तरत्नोद्दिधीर्षूणां कृतेऽनायासेन तद्रत्नानि समर्पयन् सुबहुमानभाजनतां गत आचन्द्रतारकं पाठकानुपकुर्यादित्याशासे।

अवश्यमत्र मानुषमात्रसुलभात्रुटयोऽपि भवेयुः किन्तु गुणैकपक्षपातिभिर्दोषवाचंयमैस्ताः स्वत एव संशोध्य ग्रन्थोऽयमुपयोक्ष्यते, सूचयिष्यते च ग्रन्थकर्त्ता तत्परिहारायेति प्रार्थयमानो विरमति—

द्वारवङ्गनगरम्, [दरभंगा]<br>
फाल्गुनशुक्लपञ्चमी<br>
२०११ वि. वत्सरस्य

'विश्वम्भर' झा शर्मा<br>
व्या० सा० वेदान्ताचार्यः

# પુરોવચન

વિશ્વમાં વર્તતા વિદ્વદ્‌સમાજમાં વ્યાકરણશાસ્ત્રની અસાધારણ ઉપયોગિતા સુપ્રસિદ્ધ છે.

ભાષ્યકાર પતઞ્જલિ મહર્ષિ પણ જણાવે છે–**'प्रदीपः सर्वविद्यानां०'**–સર્વ વિદ્યાનો દીપક–દીવડો વ્યાકરણ છે. શુદ્ધ પ્રયોગ અથવા અશુદ્ધપ્રયોગનું સાચું ભાન કરાવનાર વ્યાકરણ છે.

'यद्यपि बहुनाऽधीषे, तथापि पठ पुत्र! व्याकरणम्'

એ શ્લોકમાં પણ પિતા પોતાના પુત્રને ભલે બીજું ન ભણ, પણ વ્યાકરણ તો અવશ્ય ભણ. અર્થાત્ અવશ્ય વ્યાકરણ ભણવું જોઈએ એમ સૂચન કરાયેલ છે.

આજે જગતમાં અન્ય અન્ય વ્યાકરણો કરતાં પાણિનિનું **'પાણિનીય વ્યાકરણ'** અને કલિકાલ સર્વજ્ઞ શ્રીહેમચંદ્રાચાર્ય ભગવંતનું **'શ્રીસિદ્ધહેમશબ્દાનુશાસન વ્યાકરણ'** પઠન-પાઠનમાં વિશેષ પ્રચલિત છે.

બન્ને વ્યાકરણ પર વિપુલ સાહિત્ય રચાયેલ છે અને ઘણું મુદ્રિત પણ થયેલ છે.

એ સાહિત્યપૈકી શ્રીનાગેશકૃત **'પરિભાષેન્દુશેખર'** નામનો ગ્રંથ પાણિનિ વ્યાકરણ પર જેવો છે તેવો જ વાચક શ્રી હેમહંસગણિકૃત **'ન્યાયસંગ્રહ'** નામનો ગ્રંથ શ્રીસિદ્ધહેમવ્યાકરણ પર છે. જુઓ—

श्रीसूरीश्वरसोमसुन्दरगुरोर्निःशेषशिष्याग्रणी–
गच्छेन्द्रः प्रभुरत्नशेखरगुरुर्देदीप्यते साम्प्रतम् ॥
तच्छिष्याश्रवहेमहंसगणिना श्रीसिद्धहेमाभिधे
न्याया व्याकरणे विलोक्य सकलाः संसंगृहीता इमे ॥ १ ॥

प्रत्यक्षरं गणनया, ग्रन्थेऽस्मिन् न्यायसंग्रहे ।
श्लोकानामष्टषष्टिः स्यादधिका च दशाक्षरी ॥ २ ॥

[ ग्रन्थाग्रम् श्लो० ६८ अक्षर० १० ]

વાચક શ્રી હેમહંસગણિવરે આ ગ્રંથના ચાર વિભાગો પાડેલા છે. તે વિભાગોને 'વક્ષસ્કાર' તરીકે સમ્બોધેલ છે. તેના પ્રથમ વિભાગમાં (પ્રથમ વક્ષસ્કારમાં) કલિકાલસર્વજ્ઞ શ્રીહેમચંદ્રસૂરીશ્વર ભગવંતે સ્વરચિત શ્રીસિદ્ધહેમ બૃહદ્‌વૃત્તિના (અઢાર હજારીના) પ્રાંતે જણાવેલા ૫૭ ન્યાયોનો સંગ્રહ કરવામાં આવ્યો છે.

બીજા વિભાગમાં (બીજા વક્ષસ્કારમાં) વ્યાકરણશાસ્ત્રની અંદર તે તે સ્થલે ઉપલબ્ધ થતા યા ધ્વનિત થતા ૬૫ ન્યાયોનો સંગ્રહ કરવામાં આવેલો છે.

ત્રીજા વિભાગમાં (ત્રીજા વક્ષસ્કારમાં) જેની અંદર પ્રાયઃ જ્ઞાપક નથી એવા ૧૮ ન્યાયોનો સંગ્રહ કરવામાં આવ્યો છે.

અને ચોથા વિભાગમાં (ચોથા વક્ષસ્કારમાં) ઘણી વક્તવ્યતાવાળો એક જ ન્યાય આપવામાં આવેલો છે.

આના પ્રથમ વિભાગમાં આવેલ ન્યાયો ઉપર પૂર્વે પ્રાચીન સંક્ષિપ્ત વૃત્તિ હતી એમ વાચક શ્રીહેમહંસગણિવર જણાવે છે. વળી સાથોસાથ એમ જણાવે છે કે–એ વૃત્તિમાં ઉદાહરણ અને જ્ઞાપક જ જણાવેલ છે, પરંતુ ન્યાયોનું અનિત્યપણું જણાવ્યું નથી.

તેને જણાવવા માટે આ પ્રથમ વિભાગ-વક્ષસ્કાર પર મારી **'ન્યાયાર્થમઞ્જૂષા'** (ન્યાયના અર્થની પેટી) નામની બૃહદ્‌વૃત્તિ છે.

તથા બીજા વિભાગમાં મેં સંગ્રહેલા ન્યાયો પર વ્યાખ્યા ઉદાહરણ અને અનિત્યતાવાળી એની એજ વિસ્તૃત વૃત્તિ છે. ત્રીજા વિભાગમાં પ્રાયઃ જ્ઞાપક વિનાના ન્યાયો જણાવ્યા છે તેના પર પણ એજ બૃહદ્‌વૃત્તિ છે. અને પ્રાંતે ચોથા વિભાગમાં બહુવક્તવ્યતાવાળા ન્યાય પર પણ વિશદરૂપે એની એજ વૃત્તિ છે.

તદુપરાંત વાચક શ્રીહેમહંસગણિવરે પોતાની **ન્યાયાર્થમઞ્જૂષા** વૃત્તિપર દુર્ગમસ્થળમાં સ્વોપજ્ઞન્યાસ પણ રચેલો છે.

આ રીતે વાચક શ્રીહેમહંસગણિવરે શ્રીસિદ્ધહેમ વ્યાકરણ પર રચેલ સ્વોપજ્ઞન્યાયાર્થમંજૂષા બૃહદ્‌વૃત્તિ તથા ન્યાસ સહિત **'ન્યાયસંગ્રહ'** (પરિભાષાવિષયક સાહિત્ય) વારાણસી–કાશીથી મુદ્રિત પણ થયેલ છે.

આ ગ્રંથ ઘણો સરળ અને વિશદ છે, છતાં પણ વિશેષ તર્કદૃષ્ટિથી ચર્ચાયેલ નથી. જ્યારે પાણિનિ વ્યાકરણ પરનો પરિભાષેન્દુશેખર ગ્રંથ તર્કદૃષ્ટિથી ખૂબ ખૂબ ચર્ચાયેલ છે.

આ વસ્તુને લક્ષમાં રાખીને તર્કરસિકોને પણ આનંદ આપે તે દૃષ્ટિએ શાસનસમ્રાટ્ સૂરિચક્રચક્રવર્તિ ભારતીય ભવ્યવિભૂતિ બાલબ્રહ્મચારી તપોગચ્છાધિપતિ પ્રગુરુગુરુવર્ય પરમપૂજ્ય **આચાર્યદેવ શ્રીમદ્ વિજયનેમિસૂરીશ્વરજી મહારાજશ્રીના** પટ્ટાલંકાર વ્યાકરણવાચસ્પતિ કવિરત્ન શાસ્ત્રવિશારદ સાત લાખ શ્લોકપ્રમાણ નૂતનસંસ્કૃત સાહિત્યના સર્જક શાસનપ્રભાવક બાલબ્રહ્મચારી પૂજ્યપાદ પ્રગુરુદેવ **આચાર્ય શ્રીમદ્ વિજય લાવણ્યસૂરીશ્વરજી મહારાજ-શ્રીએ** ન્યાયસંગ્રહને સ્થાને **'ન્યાયસમુચ્ચય'** નામ આપી તેને વિશાલકાય **'સિન્ધુ'** નામની વૃત્તિથી અલંકૃત કર્યો છે. અને તરંગો જેમ સિન્ધુને અલંકૃત કરે તેમ **'તરંગ'** નામના વિશાલકાય વિવરણથી સિન્ધુ વૃત્તિને અલંકૃત કરેલ છે. તેઓશ્રીએ પ્રસ્તુત **ન્યાયસમુચ્ચય** ગ્રંથના ચાર વિભાગ પાડેલા છે. અને પ્રત્યેક વિભાગનું નામ **ઉલ્લાસ** રાખેલ છે.

સિન્ધુવૃત્તિમાં અને બહુધા તરંગ વિવરણમાં પાણિનિના મતની ઘણી ઘણી ચર્ચા કરેલી છે. જો કે પ્રસ્તુત સિદ્ધહેમવ્યાકરણમાં તેની વિશેષ ઉપયોગિતા નથી, છતાં પણ વ્યાકરણનો વિષય હોવાથી બુદ્ધિના વિકાસ માટે અને પાણિનિના વ્યાકરણનો વિશેષ પ્રચાર હોવાથી તેમાં પણ સારો પ્રવેશ થાય એ દૃષ્ટિએ આ ચર્ચાને સ્થાન આપવામાં આવેલ છે.

કોઈક સ્થળે પ્રાચીન માર્ગનું, કોઈક સ્થળે અર્વાચીન (નૂતન) માર્ગનું અને કોઈક સ્થળે ઉભય (પ્રાચીન-નવીન) માર્ગનું અનુસરણ કરેલ છે.

આ સર્વનો મુદ્દો અભ્યાસી વર્ગની બુદ્ધિનો વિશેષ વિકાસ થાય તે જ છે એમ પુષ્પિકામાં વૃત્તિકાર મહર્ષિ પૂજ્ય પ્રગુરુવર્ય આ૦ **શ્રીવિજય લાવણ્યસૂરીશ્વરજી મહારાજસાહેબે** જણાવેલ છે. વળી સાથોસાથ એમ પણ જણાવ્યું છે કે મારા લખાણમાંથી તત્ત્વભૂત જે વસ્તુ હોય તે બુધજનો છાત્રવર્ગને આપજો.

જુઓ એ પુષ્પિકાનો શ્લોક—

क्वचित् प्राच्यः पन्थाः, क्वचिदपि च नव्यो बुधपथः,
क्वचित् स्वातन्त्र्याध्वा क्वचिदपि च तेषां समुदयः ।
श्रितोऽस्मिन् शिष्याणां मतिविकसनार्थं शुभधिया,
बुधैर्बुध्वा तत्त्वं तदनुगतमर्प्यं श्रितजने ॥ १ ॥

પુનઃ એ પુષ્પિકામાં કલિકાલ સર્વજ્ઞ શ્રીહેમચંદ્રસૂરિ ભગવંતનો વાચક શ્રીહેમહંસગણિવરનો, અને ન્યાયાર્થમંજૂષાનો પણ ઉલ્લેખ કરેલ છે. જુઓ—

सूरीन्द्रं हेमचन्द्रं कलिसकलविदं संस्मरामोऽभिरामं,
धीमन्तं हेमहंसं गणिमणिममलं तं कथं विस्मरामः।

न्यायानामर्थसार्थं निजमतघटितं धारयन्तीं यदीयां,
मञ्जूषां प्राप्य जाता वयमिह प्रभवः साधु सिन्धौ तरङ्गे ॥ २ ॥

સિન્ધુ અને તરંગ વૃત્તિની રચના પૂ૦ વૃત્તિકાર મહર્ષિએ સપરિવાર મહારાષ્ટ્રમાં આવેલ પૂનાસિટિમાં (પૂના શહેરમાં) વીર સં૦ ૨૪૮૦ અને વિક્રમ સં૦ ૨૦૧૦ માં ચાતુર્માસ રહીને કરેલ છે. જે વૃત્તિના પ્રાંતે આપેલ પ્રશસ્તિ પરથી જાણી શકાય છે.

ન્યાયસમુચ્ચયના ચારે ઉલ્લાસના ૧૪૧ ન્યાયો છે. તેના પર રચાયેલ સિન્ધુ અને તરંગ વૃત્તિનું પ્રમાણ લગભગ ૧૨૦૦૦ શ્લોકનું છે.

આ ગ્રંથનું સંપાદનકાર્ય પૂજ્યપાદ પ્રગુરુદેવ **આચાર્ય શ્રીમદ્ વિજયલાવણ્ય સૂરીશ્વરજી મહારાજ સાહેબની** આજ્ઞાથી અને તેમની અસીમ કૃપાથી મેં કરેલ છે.

સંપાદન કાર્યમાં જણાતી ક્ષતિઓને સુધારી બુધજનો આ ગ્રંથને પઠન-પાઠનમાં અપનાવશે અને બુદ્ધિનો વિકાસ કરશે એ ભાવના સાથે આ 'પુરોવચન'ને પૂર્ણ કરું છું.

પન્યાસ—
સુશીલવિજયગણી.

વીર સંવત્ ૨૪૮૩,
વિક્રમ સં. ૨૦૧૩ ના
કાર્તિક વદ ૨ ને
મંગળવાર
તા૦ ૨૦-૧૨-૫૬

卐

સ્થળઃ—
શાન્તાક્રુઝ, (વેસ્ટ) જૈન ઉપાશ્રય
મુંબઈ નં. ૨૩.

॥ शुभं भवतु ॥



# પ્રકાશકીય-નિવેદન

વિદ્વદ્દ્સમાજને સહર્ષ જણાવતાં અમને અતિ આનંદ થાય છે કે-અમારા **'શ્રીવિજયલાવણ્યસૂરીશ્વરજ્ઞાન-મંદિર'** તરફથી પૂર્વે અનેક ગ્રન્થોનું પ્રકાશન થયેલ છે. આજે પણ એ ગ્રંથોની ભારતમાંથી અને ભારતના બહારના પ્રદેશમાંથી માંગ આવી રહી છે.

ઇગ્લેંડ, અમેરિકા અને જાપાન વગેરેની સરકારી લાઈબ્રેરીઓની માગણી આવતાં અમારી સંસ્થા તરફથી ભેટ તરીકે અનેક પુસ્તકો મોકલાવેલ છે.

આજે આ ૨૦૧૩ મા વર્ષમાં પણ અમારા જ્ઞાનમંદિર તરફથી આ એક અનુપમ ન્યાયસમુચ્ચય નામનો ગ્રંથ પ્રકાશિત થાય છે. આ ગ્રંથમાં વિશદ **સિન્ધુવૃત્તિ** અને તેના પર વિશાલકાય **તરંગવિવરણ** શાસન-સમ્રાટ્-સૂરિચક્રચક્રવર્તિ-ભારતીય ભવ્યવિભૂતિ-દિવ્યતેજોમૂર્તિ-તપોગચ્છાધિપતિ-બાલબ્રહ્મચારિ-શ્રીકદમ્બ-ગિરિપ્રમુખાનેકતીર્થોદ્ધારક-ભૂપાલાવલિનતપાદપદ્મ-પંચપ્રસ્થાનમયસૂરિમન્ત્રસમારાધક-પરમપૂજ્ય-આચાર્યમહા-રાજાધિરાજ શ્રી શ્રી શ્રી ૧૦૦૮ **શ્રીમદ્વિજયનેમિસૂરીશ્વરજી મહારાજશ્રી**ના પટ્ટાલંકાર-વ્યાકરણવાચસ્પતિ-શાસ્ત્રવિશારદ-કવિરત્ન-અદ્વિતીયપ્રવચનસુધાવર્ષી-સપ્તલક્ષ શ્લોકપ્રમાણ નૂતન સંસ્કૃત સાહિત્યના સ્રષ્ટા-શાસનપ્રભા-વક-બાલબ્રહ્મચારિ-પૂજ્યપાદ આચાર્યદેવ **શ્રીમદ્વિજયલાવણ્યસૂરીશ્વરજીમહારાજા** છે.

આ ગ્રંથના સંપાદક પ્રખરવક્તા-વિદ્વદ્વર્ય-બાલબ્રહ્મચારિ **પૂજ્યપાદ પન્યાસપ્રવર શ્રીસુશીલવિજયજી મહારાજ** છે. તેઓશ્રીએ આ ગ્રંથનું સંપાદન સુંદર રીતે કરેલ છે. તદુપરાંત આ ગ્રંથનો ગૂર્જરભાષામાં **સંક્ષેપાર્થઃ** અને **પુરોવચન** પણ તૈયાર કરી આપેલ છે. જે આ ગ્રંથમાં મુદ્રિત કરવામાં આવેલ છે.

આ ગ્રંથની **ભૂમિકા** વ્યાકરણ-સાહિત્ય-વેદાન્તાચાર્ય **પંડિતપ્રવર શ્રીવિશ્વંભરઝાજી**એ લખેલ છે.

આ ગ્રંથની પ્રેસકોપી મેળવવામાં પૂજ્ય વિદ્વાન્ **મુનિરાજ શ્રીવિકાશવિજયજી**એ તથા પૂજ્ય વિદ્વાન્ **મુનિરાજ શ્રીમનહરવિજયજી**એ પણ સારો સહકાર આપેલ છે.

આ રીતે ઉક્ત સર્વેનો, દ્રવ્યસહાયકોનો, અને મુદ્રણકાર્યકર્તા વગેરેનો સહર્ષ આભાર અમો માનીએ છીએ.



आ हस्ताक्षरोनो ब्लॉक वोरा त्रिभोवनदास काळीदासे गुरुभक्ति अर्थे कराव्यो छे.

एवं * पुनःप्रसङ्गविज्ञान* न्यायव्याख्यावसरे नागेशादिभिरपि लक्ष्यानुसारित्वमेव स्वीकृतमित्ययमेव न्यायस्तत्तदवशिष्टन्यायविषयसङ्ग्राहक इत्यलमतिविस्तरेणेति ॥१॥ शम् ॥

इति न्यायसमुच्चयस्य सिन्धुकलिते चतुर्थोल्लासे पूर्वदर्शितन्यायसजातीयस्य विस्तरतो व्याख्यातुं पृथगुपात्तस्य न्यायस्य, तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण "व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्न" इति पदालङ्कृतेन विजयलावण्यसूरिणा विरचितं तरङ्गाभिधं विवरणम् ॥

क्वचित् प्राच्यः पन्थाः क्वचिदपि च नव्यो बुधपथः,
क्वचित् स्वातन्त्र्याध्वा क्वचिदपि च तेषां समुदयः ।
श्रितोऽस्मिन् शिष्याणां मतिविकसनार्थी शुभधिया,
बुधैर्बुद्ध्वा तत्त्वं तदनुगतमर्थ्यं श्रितजने ॥१॥
सूरीन्द्रं हेमचन्द्रं कलिसकलविदं संस्मरामोऽभिरामं,
धीमन्तं हेमहंसं गणिमणिममलं तं कथं विस्मरामः ।
न्यायानामर्थसार्थं निजमतघटितं धारयन्ती यदीयां,
मञ्जूषां प्राप्य जाता यथमिह प्रभवः साधु सिन्धौ तरङ्गे ॥२॥

समाप्तं तरङ्गाभिधं न्यायसमुच्चयविवरणम् ॥

विजयलावण्यसूरिणा लेखितं - पुना - संवत - २०१० ॥

व्याकरणवाचस्पति, कविरत्न, शास्त्रविशारद, बालब्रह्मचारी, सातलाख श्लोकप्रमाण नूतन संस्कृत साहित्यना स्रष्टा शासनप्रभावक प. पू. आचार्यपुरन्दर श्रीमद् विजयलावण्यसूरीश्वरजी महाराजश्रीना हस्ताक्षरो.

तिवा शवाऽनुबन्धेन, निर्दिष्टं यद् गणेन च ।
एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि ॥ १८ ॥

તિવ્, શવ્, અનુબંધ અને ગણથી બતાવેલું જે કાર્ય તથા એકસ્વર નિમિત્તક જે કાર્ય, આ પાંચ કાર્ય યઙ્લુપ્માં થતાં નથી. (૧૮)

सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ १९ ॥

સમ્બન્ધને આશ્રયીને થયેલું જે કાર્ય તે સમ્બન્ધના વિઘાતક કાર્યનું નિમિત્ત થતું નથી. (૧૯)

असिद्धं बहिरङ्गमन्तरङ्गे ॥ २० ॥

અંતરંગ કાર્ય કરવાનું હોય ત્યારે બહિરંગ કાર્ય અસિદ્ધ થાય છે. (૨૦)

न स्वरानन्तर्ये ॥ २१ ॥

સ્વરનું જે અનન્તરપણું તેને આશ્રયીને થનાર જે અંતરંગ કાર્ય તે કરવાનું હોય ત્યારે બહિરંગ કાર્ય અસિદ્ધ થતું નથી. (૨૧)

गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥ २२ ॥

ગૌણ અને મુખ્યને વિષે મુખ્યમાં કાર્યની પ્રવૃત્તિ થાય છે. (૨૨)

कृत्रिमाऽकृत्रिमयोः कृत्रिमे ॥ २३ ॥

કૃત્રિમ અને અકૃત્રિમને વિષે કૃત્રિમમાં કાર્યની પ્રવૃત્તિ થાય છે. (૨૩)

क्वचिदुभयगतिः ॥ २४ ॥

કોઈક સ્થળે કૃત્રિમ અને અકૃત્રિમ એ બન્ને સ્થળમાં કાર્યની પ્રવૃત્તિ થાય છે. (૨૪)

सिद्धे सत्यारम्भो नियमार्थः ॥ २५ ॥

પ્રમાણાન્તરથી સિદ્ધ છતાં, આરંભ કરાતો જે વિધિ તે નિયમને માટે થાય છે. (૨૫)

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ॥ २६ ॥

ધાતુના સ્વરૂપનું ગ્રહણ કરે છતે ધાતુથી જ વિધાન કરાયેલ પ્રત્યય પર છતાં જણાવેલ કાર્ય થાય છે, પરંતુ નામને ઉદ્દેશીને વિધાન કરાએલ પ્રત્યય પર છતાં નહીં. (૨૬)

नञुक्तं तत्सदृशे ॥ २७ ॥

નઞ્ વડે કરીને કહેલું કાર્ય નઞ્ સહિત પદાર્થ સદશમાં સમજવું. (૨૭)

उक्तार्थानामप्रयोगः ॥ २८ ॥

જેનો અર્થ કહેવાયેલો છે તેનો પ્રયોગ થતો નથી. અર્થાત્ અર્થ જ્યાં ન કહેવાયેલો હોય ત્યાં તેનો પ્રયોગ થાય. (૨૮)

निमित्ताभावे नैमित्तिकस्याऽप्यभावः ॥ २९ ॥

નિમિત્તનો (કારણનો) અભાવ થયે છતે નૈમિત્તિકનો એટલે તેને માનીને થયેલ કાર્યનો પણ અભાવ થાય છે. (૨૯)

सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः ॥ ३० ॥

સાથે કહેલામાં એકનો અભાવ થયે છતે અન્યનો પણ અભાવ થાય છે. (૩૦)

नान्वाचीयमाननिवृत्तौ प्रधानस्य ॥ ३१ ॥

ગૌણની નિવૃત્તિ થયે છતે પ્રધાનની નિવૃત્તિ થતી નથી. (૩૧)

निरनुबन्धग्रहणे न सानुबन्धकस्य ॥ ३२ ॥

નિરનુબન્ધનું (અનુબન્ધ રહિતનું) ગ્રહણ કરે છતે સાનુબન્ધનું (અનુબન્ધ સહિતનું) ગ્રહણ થતું નથી. (૩૨)

एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ॥ ३३ ॥

એક અનુબન્ધવાળાનું ગ્રહણ કરે છતે બે અનુબન્ધવાળાનું ગ્રહણ થતું નથી. (૩૩)

नानुबन्धकृतान्यसारूप्या-ऽनेकस्वरत्वाऽनेकवर्णत्वानि ॥ ३४ ॥

અનુબન્ધને આશ્રીને એટલે સાથે ગણીને અસારૂપ્ય-અસમાનતા અનેકસ્વરત્વ અને અનેકવર્ણત્વ થતાં નથી. (૩૪)

समासान्ता-ऽऽगम-संज्ञा-ज्ञापक-गण-नञ्निर्दिष्टान्य-नित्यानि ॥ ३५ ॥

સમાસાન્ત, આગમ, સંજ્ઞાનિર્દિષ્ટ (કહેલ), જ્ઞાપક નિર્દિષ્ટ, ગણનિર્દિષ્ટ અને નઞ્ નિર્દિષ્ટ કાર્ય અનિત્ય છે. (૩૫)

पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥ ३६ ॥

પૂર્વે કહેલા અપવાદો અનન્તર વિધિનો બાધ કરે છે, પરંતુ વ્યવહિત રહેલા વિધિનો નહિં. (૩૬)

मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ॥ ३७ ॥

મધ્યમાં કહેલા અપવાદો પૂર્વ વિધિનો બાધ કરે છે, પણ ઉત્તર વિધિનો નહિં. (૩૭)

यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ॥ ३८ ॥

જે વિધિ પ્રત્યે ઉપદેશ અનર્થક થતો હોય તે વિધિનો તેનાથી બાધ કરાય છે. (૩૮)

यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते ॥ ३९ ॥

જે વિધિનું નિમિત્ત છે તે વિધિ બાધકથી બાધ કરાતો નથી. (૩૯)

येन ना प्राप्ते यो विधिरारभ्यते, स तस्यैव बाधकः ॥ ४० ॥

જેની અવશ્ય પ્રાપ્તિ રહેતે છતે જે વિધિ આરંભ કરાય તે તેનો જ બાધક થાય છે, અન્યનો નહિં. (૪૦)

बलवन्नित्यमनित्यात् ॥ ४१ ॥

અનિત્યકાર્યથી નિત્યકાર્ય બળવાન છે. (૪૧)

[જ્યાં અનેક કાર્યો સાથે પ્રાપ્તિ હોય ત્યાં બળવાન કાર્ય કરવું. હવે 'કોણ કોનાથી બળવાન છે' જેનું સ્વરૂપ નીચેના ન્યાયોથી બતાવે છે—]

अन्तरङ्गं बहिरङ्गात् ॥ ४२ ॥

બહિરંગ કાર્યથી અંતરંગ કાર્ય બળવાન છે. (૪૨)

निरवकाशं सावकाशात् ॥ ४३ ॥

સાવકાશ કાર્યથી નિરવકાશ કાર્ય બળવાન છે. (૪૩)

वार्णात् प्राकृतम् ॥ ४४ ॥

વર્ણના કાર્ય કરતાં પ્રકૃતિનું કાર્ય બળવાન છે. (૪૪)

स्वृद् स्वृदाश्रयं च ॥ ४६ ॥

સ્વૃદ્ અને સ્વૃદ્‌ને આશ્રયીને થનારું જે કાર્ય તે બળવાન છે. (૪૫)

उपपदविभक्तेः कारकविभक्तिः ॥ ४६ ॥

ઉપપદ વિભક્તિ કરતાં કારકવિભક્તિ બળવાન છે. (૪૬)

लुबन्तरङ्गेभ्यः ॥ ४७ ॥

અંતરંગ કાર્યથી લુબ્ કાર્ય બળવાન છે. (૪૭)

सर्वेभ्यो लोपः ॥ ४८ ॥

સર્વથી લોપ બળવાન છે. (૪૮)

लोपात् स्वरादेशः ॥ ४९ ॥

લોપ્‌થી **સ્વરાદેશ** બળવાન છે. (૪૯)

आदेशादागमः ॥ ५० ॥

આદેશથી **આગમ** બળવાન છે. (૫૦)

आगमात् सर्वादेशः ॥ ५१ ॥

આગમથી **સર્વાદેશ** એટલે સર્વના સ્થાનમાં થતો જે આદેશ તે બળવાન છે. (૫૧)

परान्नित्यम् ॥ ५२ ॥

પરથી-**નિત્ય** બળવાન છે. (૫૨)

नित्यादन्तरङ्गम् ॥ ५३ ॥

નિત્યથી **અન્તરંગ** બળવાન છે. (૫૩)

अन्तरङ्गाच्चानवकाशम् ॥ ५४ ॥

અંતરંગથી **અનવકાશ** બળવાન છે. (૫૪)

उत्सर्गादपवादः ॥ ५५ ॥

ઉત્સર્ગથી (સામાન્યશાસ્ત્રથી) **અપવાદ** (વિશેષ-શાસ્ત્ર) બળવાન છે. (૫૫)

अपवादात् क्वचिदुत्सर्गोऽपि ॥ ५६ ॥

કોઈક સ્થળે અપવાદથી 'ઉત્સર્ગ' પણ બળવાન છે. (૫૬)

नानिष्टार्था शास्त्रप्रवृत्तिः ॥ ५७ ॥

અનિષ્ટને માટે **શાસ્ત્રની પ્રવૃત્તિ** નથી. અર્થાત્ ઇષ્ટની સિદ્ધિ કરવી હોય ત્યાં શાસ્ત્રની પ્રવૃત્તિ કરવી. (૫૭)

ઇતિ શ્રી તપોગચ્છાધિપતિ **શ્રીવિજયનેમિસૂરીશ્વર**-પટ્ટાલંકાર-**શ્રીવિજયલાવણ્યસૂરીશ્વર**-શિષ્યરત્ન-પન્યાસપ્રવર-**શ્રીદક્ષવિજયગણિવર**-શિષ્યરત્ન-**પન્યાસશ્રીસુશીલવિજયગણિના** ગુમ્ફિતો **ન્યાયસમુચ્ચયપ્રથમોલ્લાસસ્ય સંક્ષિપ્તોऽર્થઃ** ॥

## [द्वितीयोल्लासः—]

प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम् ॥ १ ॥

જ્યાં કેવલ પ્રકૃતિનું ગ્રહણ કર્યું હોય ત્યાં **સ્વાર્થિક પ્રત્યયાન્ત પ્રકૃતિનું** પણ ગ્રહણ થાય છે. (૧)

प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ॥ २ ॥

જ્યાં પ્રત્યય અને અપ્રત્યય બન્નેનો સંભવ હોય ત્યાં **પ્રત્યયનું** જ ગ્રહણ થાય છે. (૨)

अदाद्यनदाद्योरनदादेरेव ॥ ३ ॥

અદાદિ અને અદાદિભિન્ન ધાતુનો જ્યાં સંભવ હોય ત્યાં **અદાદિભિન્ન** ધાતુનું જ ગ્રહણ થાય છે. (૩)

प्राकरणिकाप्राकरणिकयोः प्राकरणिकस्यैव ॥ ४ ॥

પ્રાકરણિક (પ્રકરણ પ્રાપ્ત) અને અપ્રાકરણિક (પ્રકરણ અપ્રાપ્ત)નો જ્યાં સંભવ હોય ત્યાં **પ્રાકરણિકનું** જ ગ્રહણ થાય છે. (૪)

निरनुबन्धग्रहणे सामान्येन ॥ ५ ॥

નિરનુબન્ધનું (અનુબન્ધરહિત પ્રત્યયાદિનું) જ્યાં ગ્રહણ કર્યું હોય ત્યાં સામાન્ય સ્વરૂપે કરીને ગ્રહણ થાય છે. અર્થાત્ નિરનુબન્ધ અને સાનુબન્ધ બન્નેનું ગ્રહણ થાય છે. (૫)

साहचर्यात्सदृशस्यैव ॥ ६ ॥

સાહચર્યથી **સદૃશનું** જ ગ્રહણ થાય છે. (૬)

वर्णग्रहणे जातिग्रहणम् ॥ ७ ॥

વર્ણનું ગ્રહણ કરે છતે **જાતિનું ગ્રહણ** થાય છે. અર્થાત્ તદ્‌જાતીય સકલનું ગ્રહણ થાય છે. (૭)

वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते ॥ ८ ॥

વર્ણનો એકદેશ છે તે પણ વર્ણના ગ્રહણ કરવાથી ગ્રહિત થાય છે. (૮)

तन्मध्यपतितस्तद् ग्रहणेन गृह्यते ॥ ९ ॥

જે જેની મધ્યમાં પડ્યો હોય તે તેનું ગ્રહણ કરવાથી તે ગ્રહિત થાય છે. (૯)

आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ १० ॥

આદિ શબ્દ અથવા અંત શબ્દ વડે કરીને વિધાન કરાએલા જે આગમો તે જેના વિશેષણી ભૂત બન્યા હોય, તેનું ગ્રહણ કરવાથી તે ગ્રહીત થાય છે. (૧૦)

स्वाङ्गमव्यवधायि ॥ ११ ॥

પોતાનો અંગ (દ્વિર્ભાવાદિ પામેલ અંશ) અંગીને (જેનો દ્વિર્ભાવાદિ થતો હોય તેને) જ્યારે કાર્ય કરવાનું હોય ત્યારે **વ્યવધાયક** બનતો નથી. અર્થાત્ વ્યાઘાત કરનાર થતો નથી. (૧૧)

उपसर्गो न व्यवधायी ॥ १२ ॥

ઉપસર્ગ **વ્યવધાયક** થતો નથી. (૧૨)

येन नाव्यवधानं तेन व्यवहितेऽपि स्यात् ॥ १३ ॥

જેનું અવશ્ય વ્યવધાન હોય તેના વ્યવધાનમાં પણ **કાર્ય** થાય છે. (૧૩)

ऋकारापदिष्टं कार्यं लृकारस्यापि ॥ १४ ॥

ઋકારને ઉદ્દેશીને કહેલું જે કાર્ય તે લૃકારને પણ થાય છે. (૧૪)

सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि ॥ १५ ॥

દન્ત્ય સકારને ઉદ્દેશીને કહેલું જે કાર્ય તે તેના સ્થાનમાં થયેલ તાલવ્ય શકારને પણ થાય છે. (૧૫)

ह्रस्व-दीर्घापदिष्टं कार्यं न प्लुतस्य ॥ १६ ॥

હ્રસ્વને ઉદ્દેશીને કહેલું જે કાર્ય તે પ્લુતને થતું નથી. (૧૬)

संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणं न तदन्तस्य ॥ १७ ॥

સંજ્ઞાવિધાયક સૂત્રમાં અને ઉત્તરપદના અધિકારવાળા સૂત્રમાં પ્રત્યયનું ગ્રહણ કરે છતે કેવલ પ્રત્યયનું જ ગ્રહણ થાય છે, પણ તદન્તનું નહિ. (૧૭)

ग्रहणवता नाम्ना न तदन्तविधिः ॥ १८ ॥

સાક્ષાત્ નામનું ગ્રહણ કરીને જે કાર્ય કહ્યું હોય તે તદન્ત સમુદાયને થતું નથી. (૧૮)

अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १९ ॥

अन्, इन्, अस्, અને मन् નું ગ્રહણ કરેલ હોય તે અર્થવાન્ અથવા અનર્થક એવા अन् વગેરે કરીને **તદન્ત-વિધિને** કરે છે. અર્થાત્ अन् इन् अस् અને मन् અર્થવાળા કે અનર્થક હોય તો પણ તદન્તવિધિ થાય છે. (૧૯)

गामादाग्रहणेष्वविशेषः ॥ २० ॥

ગા, મા, અને दा નું જ્યાં ગ્રહણ હોય ત્યાં સામાન્યરીતે સર્વનું ગ્રહણ થાય છે. (૨૦)

श्रुतानुमितयोः श्रौतो विधिर्बलीयान् ॥ २१ ॥

સૂત્રને વિષે જે સાંભળેલ હોય તે **શ્રુત** કહેવાય છે, અને પરિભાષાદિકથી જે સૂચિત હોય તે **અનુમિત** કહેવાય છે. શ્રુત અને અનુમિતમાં **શ્રુતવિધિ** બળવાન છે. (૨૧)

अन्तरङ्गानपि विधीन् यबादेशो बाधते ॥ २२ ॥

અન્તરંગ કાર્યનો પણ **યપ્ આદેશ** બાધ કરે છે. (૨૨)

सकृद् गते स्पर्द्धे यद्बाधितं तद् बाधितमेव ॥ २३ ॥

સ્પર્દ્ધમાં એક વખત જે બાધ કરાયું હોય **તે બાધિત** જ રહે છે. (૨૩)

द्वित्वे सति पूर्वस्य विकारेषु बाधको न बाधकः ॥ २४ ॥

દ્વિર્ભાવ થયે છતે પૂર્વના વિકારોમાં બાધક જે હોય તે **બાધક** થતો નથી. (૨૪)

कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये पश्चाद् वृद्धिस्तद् बोध्योऽट् च ॥ २५ ॥

બીજું ધાતુ અને પ્રત્યયનું કાર્ય કર્યા પછી વૃદ્ધિ, અને વૃદ્ધિથી બાધિત એવો જે 'अट्' તે થાય છે. (૨૫)

पूर्वं पूर्वोत्तरपदयोः कार्यं कार्यं पश्चात् सन्धिकार्यम् ॥ २६ ॥

પ્રથમ પૂર્વપદ અને ઉત્તરપદનું કાર્ય થાય છે, અને ત્યાર પછી સન્ધિનું કાર્ય થાય છે. (૨૬)

संज्ञा न संज्ञान्तरबाधिका ॥ २७ ॥

એક સંજ્ઞા બીજી સંજ્ઞાનો બાધ કરતી નથી. (૨૭)

सापेक्षमसमर्थम् ॥ २८ ॥

બીજાની સાથે અપેક્ષા રાખનાર હોય તે **અસમર્થ** કહેવાય છે. (૨૮)

प्रधानस्य तु सापेक्षत्वेऽपि समासः ॥ २९ ॥

મુખ્યને સાપેક્ષપણું હોય તો પણ **સમાસ** થાય છે. (૨૯)

तद्धितयो भावप्रत्ययः सापेक्षादपि ॥ ३० ॥

ભાવમાં આવતો **તદ્ધિત પ્રત્યય** સાપેક્ષથી પણ થાય છે. (૩૦)

गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः ॥ ३१ ॥

વિભક્ત્યન્ત એવા જે ગતિકારક અને ङस्युक्त તેને કૃદન્તની સાથે વિભક્તિની ઉત્પત્તિ પહેલાં જ સમાસ થાય છે. (૩૧)

समासतद्धितानां वृत्तिर्विकल्पेन वृत्तिविषये च नित्यैवापवादवृत्तिः ॥ ३२ ॥

સમાસ અને તદ્ધિતની વૃત્તિ વિકલ્પે થાય છે, અને વૃત્તિના વિષયમાં અપવાદવૃત્તિ છે તે નિત્ય જ થાય છે. (૩૨)

एकशब्दस्यासङ्ख्यात्वं क्वचित् ॥ ३३ ॥

એક શબ્દને કોઈ સ્થળમાં સંખ્યાવાચીપણું નથી (૩૩)

आदशभ्यः सङ्ख्या सङ्ख्येये वर्तते न सङ्ख्याने ॥ ३४ ॥

દશથી અઢાર સુધીની સંખ્યા સંખ્યેય અર્થમાં એટલે સંખ્યાવિશિષ્ટ અર્થમાં વર્તે છે, પરંતુ સંખ્યાન અર્થમાં નહિં (૩૪)

णौ यत्कृतं कार्यं तत्सर्वं स्थानिवद् भवति ॥ ३५ ॥

णि પર છતાં કરેલું જે કાર્ય તે સ્થાની જેવું થાય છે. (૩૫)

द्विर्बद्धं सुबद्धं भवति ॥ ३६ ॥

द्विर्बद्ध-બે વખત બંધાયેલું એટલે બે વખત જેને માટે પ્રયત્ન કરાયો હોય તે सुबद्ध-સારી રીતે બદ્ધ એટલે દઢ થાય છે. (૩૬)

आत्मनेपदमनित्यम् ॥ ३७ ॥

આત્મનેપદ અનિત્ય છે. (૩૭)

क्विपि व्यञ्जनकार्यमनित्यम् ॥ ३८ ॥

क्विप् પ્રત્યય પર છતાં વ્યંજન કાર્ય અનિત્ય છે. (૩૮)

स्थानिवद्भावपुंवद्भावैकशेषद्वन्द्वैकत्वदीर्घत्वान्यनित्यानि॥३९

સ્થાનિવદ્ભાવ, પુંવદ્ભાવ, એકશેષ, દ્વન્દ્વૈકત્વ, અને દીર્ઘત્વ છે તે અનિત્ય છે. (૩૯)

अनित्यो णिच्चुरादीनाम् ॥ ४० ॥

ચુરાદિ નો णिच् અનિત્ય છે. (૪૦)

णिलोपोऽप्यनित्यः ॥ ४१ ॥

णिच् નો લોપ પણ અનિત્ય છે. (૪૧)

णिच्सन्नियोगे एव चुरादीनामदन्तता ॥ ४२ ॥

णिच् ના સન્નિયોગમાં જ ચુરાદિ ને અકારાન્તપણું છે.

धातवोऽनेकार्थाः ॥ ४३ ॥

ધાતુઓ અનેકાર્થવાળા છે. (૪૩)

गत्यर्था ज्ञानार्थाः ॥ ४४ ॥

ગત્યર્થક જે ધાતુઓ તે જ્ઞાનાર્થક છે. (૪૪)

नाम्नां व्युत्पत्तिरव्यवस्थिता ॥ ४५ ॥

નામોની વ્યુત્પત્તિ અવ્યવસ્થિત છે. (૪૫)

उणादयोऽव्युत्पन्नानि नामानि ॥ ४६ ॥

ઉણાદિનામો અવ્યુત્પન્ન છે. અર્થાત્ પ્રકૃતિ અને પ્રત્યયથી બનેલા છે એમ ન સમજવું. (૪૬)

शुद्धधातूनामकृत्रिमं रूपम् ॥ ४७ ॥

શુદ્ધ ધાતુઓનું રૂપ અકૃત્રિમ છે. (૪૭).

क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते ॥ ४८ ॥

ક્વિબન્ત શબ્દો ધાતુત્વને છોડતા નથી, અને શબ્દત્વને એટલે નામત્વને પામે છે. (૪૮)

उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक् ॥ ४९ ॥

બેના સ્થાનમાં થયેલો જે આદેશ તે બેમાંથી ગમે તેના વ્યપદેશને લઈ શકે છે. (૪૯)

अवयवे कृतं लिङ्गं समुदायमपि विशिनष्टि चेत्तं समुदायं सोऽवयवो न व्यभिचरति ॥ ५० ॥

અવયવમાં કરેલું ચિહ્ન સમુદાયને પણ વિશેષિત કરે છે. જો તે સમુદાયને છોડીને તે અવયવ અન્ય ન રહેતો હોય તો. (૫૦)

येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः ॥ ५१ ॥

જે ધાતુની સાથે સમ્બન્ધ ધરાવતો प्रादि હોય તેના પ્રત્યે જ તેને ઉપસર્ગ સંજ્ઞા થાય છે. (૫૧)

यत्रोपसर्गत्वं न संभवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते न तु संभवत्युपसर्गत्वे ॥ ५२ ॥

જ્યાં ઉપસર્ગત્વ સંભવતું ન હોય ત્યાં ઉપસર્ગ શબ્દ વડે કરીને प्रादि નું ગ્રહણ થાય છે, પરંતુ જ્યાં ઉપસર્ગત્વ સંભવતું હોય ત્યાં નહિં. (૫૨)

शीलादिप्रत्ययेषु नासरूपोत्सर्गविधिः ॥ ५३ ॥

શીલ ધર્મ અને સાધુ અર્થમાં વિધાન કરાતા જે પ્રત્યયો તે અપવાદરૂપ હોય ત્યાં અસ્વરૂપ (સમાનરૂપવાળો ન હોય) એવો ઉત્સર્ગવિધિ થતો નથી. (૫૩)

त्यादिष्वन्योऽन्यं नासरूपोत्सर्गविधिः ॥ ५४ ॥

त्यादि ને વિષે પરસ્પર અસ્વરૂપ એવો ઉત્સર્ગવિધિ થતો નથી. (૫૪)

स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ ॥ ५५ ॥

સ્ત્રીલિઙ્ગમાં કહેલ પ્રત્યય, खल પ્રત્યય અને अन પ્રત્યય अल् પ્રત્યયના બાધક થાય છે. અને સ્ત્રીલિઙ્ગમાં વિધાન કરાયેલા પ્રત્યયના खल અને अन પ્રત્યય બાધક થાય છે. (૫૫)

यावत् संभवस्तावद्विधिः ॥ ५६ ॥

જ્યાંસુધી વિધિનો સંભવ હોય ત્યાંસુધી **વિધિ** કરવો. (૫૬)

संभवे व्यभिचारे च विशेषणमर्थवत् ॥ ५७ ॥

સંભવ અને વ્યભિચાર રહેતે છતે **વિશેષણસાર્થક** થાય છે. (૫૭)

सर्वं वाक्यं सावधारणम् ॥ ५८ ॥

વ્યાકરણમાં દરેક વાક્ય નિશ્ચયાત્મક બને છે. (૫૮)

परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति ॥५९॥

અન્ય અર્થમાં વપરાતો શબ્દ वत् પ્રત્યય વિના પણ वत्‌ના અર્થને જણાવે છે. (૫૯)

द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ६० ॥

બે નઞ્ પ્રસ્તુત અર્થને બતાવે છે. (૬૦)

चकारो यस्मात्परस्तत्सजातीयमेव समुच्चिनोति ॥ ६१ ॥

જેનાથી પર ચકાર હોય તેના સજાતીયને च શબ્દ જણાવે છે. (૬૧)

चानुकृष्टं नानुवर्त्तते ॥ ६२ ॥

च શબ્દથી ખેંચેલ પદ કે વાક્ય ઉત્તરસૂત્રમાં **અનુવૃત્તિ** પામતું નથી. (૬૨)

चानुकृष्टेन न यथासङ्ख्यम् ॥ ६३ ॥

च શબ્દથી ખેંચેલ નામવડે **યથાસંખ્ય ન્યાય** લાગતો નથી. (૬૩)

व्याख्यातो विशेषार्थप्रतिपत्तिः ॥ ६४ ॥

વ્યાખ્યાથી વિશેષ અર્થનો બોધ થાય છે. (૬૪)

यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते ॥६५॥

જ્યાં કોઈપણ ક્રિયાપદ ન સંભળાતું હોય ત્યાં વર્તમાન વિભક્તિ જેનાથી પર છે એવા अस् ધાતુનો અધ્યાહાર થાય છે. (૬૫)

ઇતિ શ્રી તપોગચ્છાધિપતિ-**શ્રીવિજયનેમિસૂરીશ્વર**-પટ્ટાલંકાર-**શ્રીવિજયલાવણ્યસૂરીશ્વર**-શિષ્યરત્ન-પન્યાસપ્રવર-**શ્રીદક્ષવિજયગણિવર**-શિષ્યરત્ન-પન્યાસ **શ્રીસુશીલ વિજયગણિના** ગુમ્ફિતો **ન્યાયસમુચ્ચયદ્વિતીયોલ્લાસસ્ય** સંક્ષિપ્તોऽર્થઃ ॥

## [ तृतीयोल्लासः- ]

यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः ॥ १ ॥

જે વિશેષણે કરીને સહિત ધાતુ વગેરેને વિકલ્પ બતાવ્યો હોય તે વિશેષણે કરીને સહિત જ એવા તેને પ્રતિષેધ સમજવો. (૧)

यस्य येनाभिसम्बन्धो दूरस्थस्याऽपि तेन सः ॥ २ ॥

જેની સાથે જેનો સમ્બન્ધ હોય તેની સાથે દૂર રહેલા એવા પણ તેને તેની સાથે સમ્બન્ધ થાય છે. (૨)

येन विना यन्न भवति तत् तस्याऽपि निमित्तम् ॥ ३ ॥

જેના વિના જે કાર્ય ન થતું હોય તે તેનો નિમિત્ત ન હોય છતાં પણ નિમિત્ત કહેવાય છે. (૩)

नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम् ॥ ४ ॥

નામનું ગ્રહણ કરે છતે પ્રાયઃ ઉપસર્ગનું ગ્રહણ થતું નથી. (૪)

सामान्यातिदेशे विशेषस्य नातिदेशः ॥ ५ ॥

સામાન્યનો અતિદેશ કરે છતે વિશેષનો અતિદેશ થતો નથી. (૫)

सर्वत्रापि विशेषेण सामान्यं बाध्यते न तु सामान्येन विशेषः ॥६॥

સર્વ સ્થળે વિશેષવડે કરીને સામાન્યનો બાધ થાય છે, પરંતુ સામાન્યવડે કરીને વિશેષનો નહિં. (૬)

ङित्त्वेन कित्त्वं बाध्यते ॥ ७ ॥

ङित्त्व વડે કરીને कित्त्व નો બાધ થાય છે. (૭)

परादन्तरङ्गं बलीयः ॥ ८ ॥

પરથી અન્તરઙ્ગ બળવાન છે. (૮)

प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते ॥ ९ ॥

પ્રત્યયનો લોપ થયે છતે પણ પ્રત્યયને માનીને થનારું કાર્ય થાય છે. (૯)

विधिनियमयोर्विधिरेव ज्यायान् ॥ १० ॥

વિધિ અને નિયમમાં વિધિ એજ બળવાન છે. (૧૦)

अनन्तरस्यैव विधिर्निषेधो वा ॥ ११ ॥

અનન્તરને જ વિધિ અથવા નિષેધ લાગુ પડે છે. (૧૧)

पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२ ॥

મેઘની જેમ લક્ષણની પ્રવૃત્તિ હોય છે. (૧૨)

न केवला प्रकृतिः प्रयोक्तव्या ॥ १३ ॥

કેવલ પ્રકૃતિનો પ્રયોગ કરવો નહિં. (૧૩)

क्विबर्थं प्रकृतिरेवाह ॥ १४ ॥

क्विब् પ્રત્યયના અર્થને તેની પ્રકૃતિ જ કહે છે. (૧૪)

द्वन्द्वात् परः प्रत्येकमभिसम्बध्यते ॥ १५ ॥

દ્વન્દ્વ સમાસથી પર રહેલ શબ્દ દરેકની સાથે જોડાય છે. (૧૫)

विचित्राः शब्दशक्तयः ॥ १६ ॥

શબ્દોની વિચિત્ર શક્તિ છે. (૧૬)

किं हि वचनान्न भवति ॥ १७ ॥

વચનના બળથી શું ન થાય? અર્થાત્ સર્વ થાય છે. (૧૭)

न्यायाः स्थविरयष्टिप्रायाः ॥ १८ ॥

વૃદ્ધ પુરુષની યષ્ટિના (લાકડીના) જેવા ન્યાયો છે. (૧૮)

ઇતિશ્રી તપોગચ્છાધિપતિ-શ્રીવિજયનેમિસૂરીશ્વર-પટ્ટાલંકાર-શ્રીવિજયલાવણ્યસૂરીશ્વર શિષ્યરત્ન-પન્યાસપ્રવર શ્રીદક્ષવિજયગણિવર-શિષ્યરત્ન-પન્યાસ શ્રીસુશીલવિજયગણિના ગુમ્ફિતો ન્યાયસમુચ્ચયતૃતીયોલ્લાસસ્ય સંક્ષિપ્તોऽર્થ: ॥

[चतुर्थोल्लासः—]

शिष्टानामनिष्पत्तिप्रयोगधातूनां सौत्रत्वाल्लक्ष्यानुरोधाद्वा सिद्धिः ॥ १ ॥

વ્યાકરણમાં નહિં કહેલ એવા નામ, નિષ્પત્તિ (ઉત્પત્તિ), પ્રયોગ અને ધાતુ તેની સૌત્રપણાથી અને લક્ષ્યના અનુરોધથી સિદ્ધિ થાય છે. (૧)

ઇતિશ્રી તપોગચ્છાધિપતિ-શ્રીવિજયનેમિસૂરીશ્વર-પટ્ટાલંકાર-શ્રીવિજયલાવણ્યસૂરીશ્વર-શિષ્યરત્ન-પન્યાસપ્રવર-શ્રીદક્ષવિજયગણિવર-શિષ્યરત્ન-પન્યાસ શ્રીસુશીલવિજયગણિના ગુમ્ફિતો ન્યાયસમુચ્ચયચતુર્થોલ્લાસસ્ય સંક્ષિપ્તોऽર્થ: ॥

વીર સંવત્-૨૪૮૨,
વિક્રમ સંવત્-૨૦૧૨ના
ચૈત્ર શુદિ ૧૩ને સોમવાર
[શ્રી મહાવીર પ્રભુનો જન્મકલ્યાણક દિવસ.]
તા. ૨૩-૪-૫૬.

સ્થળ :—
શેઠ ખુશાલભાઈ ખેંગારભાઇનો બંગલો.
સુરજનિવાસ, ઘોડબંદર રોડ,
વિલેપાર્લા, [વેસ્ટ], મુંબઈ નં. ૨૪.

॥ शुभं भवतु श्रीसङ्घस्य ॥

शासनसम्राट्पट्टालङ्कार—व्याकरणवाचस्पति—कविरत्न- शास्त्रविशारद—निरुपमव्याख्यान—
सुधावर्षी सप्तलक्षश्लोकप्रमाणसंस्कृतग्रन्थ—विवरणप्रणेता शासनप्रभावक—बालब्रह्मचारी—



परमपूज्य आचार्य श्रीमद् विजयलावण्यसूरीश्वरजी महाराज.

“शा. मनुभाई परसोत्तमदासना सौजन्यथी”
वोरा त्रिभोवनदास कालीदास तरफथी गुरुभक्ति निमित्ते.

॥ अर्हँ ॥

# ॥ न्यायसमुच्चयः ॥



[ "समर्थः पदविधिः" ७.४.१२२. इति सूत्रस्य बृहद्वृत्तिप्रान्ते श्रीहेमचन्द्रसूरिभगवद्भिरुक्ताः सावतरणा न्यायाः—]

**अथ ये तु शास्त्रे सूचिता लोकप्रसिद्धाश्च न्यायास्तदर्थं यत्नः क्रियते-**

***स्वं रूपं शब्दस्याशब्दसंज्ञा* ॥ १ ॥**

तपोगणगगनाङ्गणगगनमणि-शासनसम्राट्-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीविजयनेमिसूरीश्वरपट्टालङ्कारेण व्याकरणवाचस्पति-शास्त्रविशारदकविरत्नेतिपदालङ्कृतेन श्रीविजयलावण्यसूरिणा प्रणीतो—




पार्श्वं शङ्खेश्वरस्थं सुरनरनिकरैरर्चनीयाङ्घ्रियुग्मं,
सूरीन्द्रं हेमचन्द्रं निरुपमधिषणं सर्वतन्त्रस्वतन्त्रम् ।
सम्राजं शासनस्य प्रगुणगुरुवरं नेमिसूरीश्वरं च,
नत्वा न्यायार्थसिन्धुं विरचयतितरां श्रीललावण्यसूरिः ॥१॥

तपोगणगगनाङ्गणगगनमणि-शासनसम्राट्-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीविजयनेमिसूरीश्वरपट्टालङ्कारेण व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्नेतिपदालङ्कृतेन श्रीविजयलावण्यसूरिणा प्रणीतः—




स्तुत्वा श्रीशान्तिनाथं जिनवरममलं चक्रिणं धर्मतोऽपि,
श्रीनेमीशं मुनीशं चरणगुणनिधिं शीललीलालयं च ।
स्वीये न्यायार्थसिन्धौ प्रकटयतितरां पं०सुशीलैकहेतो-
श्चञ्चारं तरङ्गं नवनवकलनं श्रीललावण्यसूरिः ॥ १ ॥

सि०—संस्कृतशब्दानुशासनं समापयंस्तत्रापेक्षितान्न्यायान् संगृह्णन्नाह— **अथ ये तु शास्त्रे सूचिता** इति। अथ पूर्वोक्तरीत्या संस्कृतशब्दसाधुत्वान्वाख्यानार्थं व्याकरणविवरणानन्तरं, ये शास्त्रे सूचिता लोकप्रसिद्धाश्च न्यायास्तदर्थमयं यत्नः क्रियत इत्यन्वयः । तानेव क्रमश आह — स्वं रूपमिति-प्रकरणतो 'व्याकरणशास्त्रे' इति पदं प्रायः सर्वत्रोपतिष्ठते । 'शब्दस्य स्वं रूपं बोध्यम्' इति न्यायविधेयांशः; नन्वेवं "कर्मणि" [२.२.४०.] इत्यादौ कर्मशब्दस्य 'कर्म'शब्द एवार्थः स्यात्, तथा च कर्मशब्दयोग एव द्वितीया स्यान्न तु तण्डुलं पचतीत्यादौ कर्मसंज्ञकात् तण्डुलादिशब्दादिति चेत्? अत्राह— अशब्दसंज्ञेति शब्दे-शब्दशास्त्रे या संज्ञा सा शब्दसंज्ञा, न शब्दसंज्ञा-अशब्दसंज्ञा, तथा च शब्दसंज्ञाभिन्नमेव स्वरूपं व्याकरणे शब्दस्य बोध्यमित्यर्थः । अत्र केचित्—शब्दसंज्ञेत्यत्र शब्देन संज्ञा-शब्दसंज्ञेत्यर्थमाश्रित्य संज्ञाशब्दं च भावसाधनमाश्रयन्ते, तथा च यदि तेन शब्देन कस्यचित् संज्ञा कृता स्यात् तदा तेन स्वरूपं न ग्राह्यमित्यर्थं वर्णयन्ति; तत्र तेनेति पदस्याध्याहारे मानाभावः, संज्ञायाश्च शब्दस्वरूपत्वाव्यभिचारात् शब्देन संज्ञेति विशेषणवैयर्थ्यं च, तावतापि देवदत्तादिसंज्ञानां व्यवच्छेदाभावश्च, सापि हि संज्ञा शब्देनैव कृताऽस्ति; प्रत्यासत्त्या व्याकरणे या शब्देन संज्ञेत्यर्थस्वीकारेऽपि शब्देत्यस्य वैयर्थ्यमेव, शब्दः संज्ञेति विग्रहेऽपि संज्ञाशब्दपूर्वनिपातापत्तिवत् 'शब्द'शब्दस्य वैयर्थ्यमपि दोषः । तथा च शब्दशब्दस्य शब्दशास्त्रपरत्वमुत्तरपदलोपेनाश्रित्य शब्दे—शब्दशास्त्रे या संज्ञेत्यर्थकरणमेव ज्यायः । तथा च कर्मादिसंज्ञानां 'दा'संज्ञायाश्च न स्वरूपबोधकत्वमिति न "कर्मणि" [२.२.४०.] इत्यादौ कर्मशब्दयोगे द्वितीया, न वा "उपसर्गाद् दः किः" [५.३.८६.] इत्यादौ 'दा' स्वरूपस्य ग्रहणं, किन्तु "अवौ दा-धौ दा" [३. ३. ५.] इति सूत्रविहितसंज्ञयोर्दा-धोर्ग्रहणं सिद्धम् । *गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* *कृत्रिमा-ऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः* इत्यनयोर्न्यायोरपवादोऽयम्, तेन "समः ख्यः" [५. १. ७७.]

इत्यत्र मुख्यः "ख्यांक् प्रकथने" इति ख्याधातुः, "चक्षिक् व्यक्तायां वाचि" इति चक्षधातोः "चक्षो वाचि०" [४. ४. ४.] इत्यनेनादेशभूतश्चेति द्वावपि गृह्येते, उभयोरपि ख्यारूपत्वाविशेषात्, अन्यथा गौणमुख्यन्यायादरे "ख्यांक्" धातोरेव ग्रहणं स्यात्, कृत्रिमाकृत्रिमन्यायादरे चादेशभूतस्यैव ग्रहणं स्यादिति नोभयोर्ग्रहणं स्यात्, तथा च गाः संख्याति संचष्टे वेत्युभयोरर्थयोः 'गोसंख्यः' इतीष्टं रूपं न सिध्येत्। अत्र न्यायेऽशद्वयं—'शब्दस्य स्वं रूपं बोध्यम्' इति 'अशब्दसंज्ञा' इति च, तत्र प्रथमेंऽशे "नदीभिर्नाम्नि" [३. १. २७] इति सूत्रस्थं बहुवचनं ज्ञापकम्, तद्धि नदीशब्दस्यैव ग्रहणं मा भूत् किन्तु नदीविशेषाणामपि ग्रहणं यथा स्यादित्येवमर्थम्, एतन्न्यायाभावे तु एकवचननिर्देशेऽपि नदीवाचकस्य सर्वस्य ग्रहणे सिद्धे बहुवचननिर्देशो व्यर्थः स्यात्, सति चास्मिन् नदीशब्दोऽशब्दसंज्ञात्वेन स्वरूपस्यैव बोधकः स्यादिति बहुवचनग्रहणसामर्थ्यात् तद्विशेषाणां सर्वेषां ग्रहणं सिध्यति, तथा च "संख्या समाहारे" [३. १. २८.] इत्युत्तरसूत्रेण पञ्चानां नदीनां समाहार इत्यर्थे यथा पञ्चनदमित्यत्राव्ययीभावसमासो भवति तथैव द्वयोर्यमुनयोः समाहारो द्वियमुनं तिसृणां गङ्गानां समाहारः त्रिगङ्गमित्यादावपि भवति। द्वितीयांशज्ञापकं तु "स्वरादुपसर्गाद्दस्ति कित्यधः" [४. ४. ९.] इत्यत्र धापर्युदासः, *स्वं रूपम्०* इति न्यायेन दाशब्देन स्वरूपस्यैव ग्रहणे तु धाधातोर्ग्रहणमिह प्राप्तमेव नेति तत्पर्युदासो व्यर्थ एव, सति च शब्दसंज्ञाविषये स्वरूपग्रहणाभावज्ञापने दाशब्देन "अवौ दा-धौ दा" [३. ३. ५.] इति सूत्रेण सङ्केतितयोर्दा-धोर्ग्रहणे प्रसक्ते धापर्युदासः सार्थको भवति। प्रथमांशफलं तु "कल्यग्नेरेयण्" [६. १. १७] इति सूत्रेऽग्निशब्दस्यैव ग्रहणं न तु तत्पर्यायाणाम्, एवमन्यान्यपि फलानि समुदाहरणीयानि, द्वितीयांशज्ञापनफलं तु कर्मादिसंज्ञासु स्वरूपाग्रहणमिति ॥

अत्र केचित्—उभयोरप्यंशयोरनित्यत्वं ज्ञापयन्ति तत्फलं च प्रदर्शयन्ति, तथा हि—"अस्य चाद्योंऽशोऽनित्यस्तेन "उत्स्वराद्युजेरयज्ञतत्पात्रे" [३. ३. २६.] इत्यत्र "युजादेर्न वा" [३. ४. १८.] इत्यनेन विकल्पितणिचश्चौरादिकयुजेर्णिचोऽभावपक्षे युजिरूपसंभवेऽपि न ग्रहणम्। अनित्यताया ज्ञापकं तु "पूङ्क्लिशिभ्यो नवा" [४. ४. ४५.] इत्यत्र बहुवचनम्, तद्धि क्लिश्यति-क्लिश्नात्योर्ग्रहणार्थं न्यस्तम्, एतन्न्यायांशानित्यत्वे च तयोरुभयोरपि क्लिशिरूपसद्भावाद् बहुवचनं विनापि ग्रहणं सिध्यतीति कुतस्तदर्थं बहुवचनं प्रयुज्येतेति। द्वितीयांशोऽप्यनित्यः, तेन "प्राज्ज्ञश्च [५. १. ७९.] इति "दश्चाङः" [५. १. ७८.] इति पूर्वसूत्राद् द इत्यनुवृत्त्या दासंज्ञवददासंज्ञयोरपि दाव्-दैवोर्ग्रहः सिद्धः, अनित्यताज्ञापकं तु "प्राज्ज्ञश्च" [५. १. ७९.] इत्यस्य वृत्तौ द इति दारूपमेवेह ग्राह्य'-मित्युक्तिः।" इति।

अत्रेदं वक्तव्यम्—प्रथमांशस्यानित्यत्वज्ञापने न किञ्चित् फलम्, अनेन न्यायेन हि शब्देनार्थे समुपस्थापिते तस्य ग्रहणमेव वारणीयम्, तदनित्यत्वे चार्थोऽपि गृह्येतेत्येवायातं स्यादिति प्रकृते "उत्स्वराद्युजेरयज्ञतत्पात्रे" [३. ३. २६.] इति सूत्रे कथमनित्यणिचो युजेर्वारणं सिद्धं स्यात्, किञ्च तत्सूत्रवृत्तौ युनक्तेरिति स्पष्टं निर्दिष्टतया तथैवोदाहृततया च न तस्य ग्रहणमिहेष्टमित्यत्र तदेव विनिगमकम्। यच्च तत्र ज्ञापकमुपन्यस्तं "पूङ्-क्लिशिभ्यो नवा" [४. ४. ५५.] इत्यत्रत्यं बहुवचनं तदपि न समीचीनमिति प्रतिभाति, तदंशसत्त्वेऽपि यथा क्लिश्यति—क्लिश्नात्योरुभयोः क्लिशिरूपत्वाव्यभिचारादुभयोर्ग्रहणं भविष्यति तथैव तदभावेऽपि विनिगमनाविरहेणोभयोर्ग्रहणं साध्यते, तच्च विनापि बहुवचनं सिध्यत्येवेति न तदनित्यत्वज्ञापनार्थं बहुवचनस्यावश्यकता, "क्लिशिच् उपतापे" इति दिवादिपठितस्येकारानुबंधत्वेन तस्यैवेह क्लिशिरूपत्वेन ग्रहणं स्यात्, न तु क्र्यादिपु "क्लिशौश् विबाधने" इत्यौकारानुबन्धत्वेन पठितस्य* तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम्* इति न्यायेनेति तद्वारणाय बहुवचनमिति प्रतीयते। यच्च द्वितीयांशानित्यत्वज्ञापकमुपन्यस्तं तदपि न साधु क्वचिदन्यत्र फलाभावात्, ज्ञापनं हि न केवलं स्वसार्थक्यायैव भवति, किन्तु विषयान्तरे फलार्थम्, तस्य चानुपलम्भेन ज्ञापनानौचित्यात्। प्रत्युत वृत्तौ ज्ञाख्यासाहचर्येण दारूपग्रहणस्य साधनेनास्यांशस्य सत्त्वमेवानुमीयते, एतदभावे हि स्वत एव दारूपस्य ग्रहणं स्यात्। न ह्यपवादेनोत्सर्गस्यानित्यत्वं ज्ञाप्यते; तथा चोभयांशनित्यत्वमेव, यदि च क्वचित् स्वरूपस्य तदर्थकस्य च ग्रहणमिष्टं तर्हि *क्वचिदुभयगतिः* इति न्यायस्यैव शरणीकरणीयत्वमित्यन्यत्र विस्तरः ॥ १ ॥

त०—परमकारुणिकः श्रीमान् भगवान् हेमचन्द्राचार्यः स्वल्पायासेन पदसाधुत्वावबोधकं संस्कृतशब्दानुशासनं सप्तभिरध्यायैः संगृह्य तदुचितान् न्यायानपि स्वरूपतः संजिघृक्षुरादावित्थं भूमिकामाह—"**अथ ये तु शास्त्रे सूचिता लोकप्रसिद्धाश्च न्यायास्तदर्थं यत्नः क्रियते**" इति। अत्र **अथे**त्ययं शब्दः किमर्थक इति विचारणीयम्, न च मङ्गलार्थः,

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥" [ ]

इत्युक्ततया तस्य मङ्गलार्थत्वसिद्धेरिति वाच्यम्, अन्यार्थमानीयमानोदककुम्भवत् अर्थान्तरबोधनाय प्रयुक्तस्यैवाथशब्दस्य मङ्गलार्थत्वस्य शास्त्रकारव्यवहारविषयत्वात्। अथशब्दार्थश्च—

"अथाथो संशये स्यातामधिकारे च मङ्गले ।
विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये ॥"

इति मेदिनीकोशानुसारं संशयाद्या बहवः, तत्रान्येषामप्राकरणिकत्वादिह प्रकरणानुसारमानन्तर्यार्थकस्यैव ग्रहणमुचितमिति संक्षिप्य निश्चिनुमः, पूर्वं च हैमशब्दानुशासनशास्त्रवृत्तेरुक्तत्वात् तदनन्तरमस्य वाक्यस्योक्तत्वेन तदानन्तर्यस्यैवेह ग्रहीतुमौचित्यात्; तथा च शब्दसाधुत्वानुकूलसूत्राणां व्याख्याततत्वेन तत्प्रसङ्गसङ्गत्या तदुपकारकाणां न्यायानां स्मृतिविषयत्वे सत्युपेक्षानर्हत्वरूपमवश्यवक्तव्यत्वमापतितमिति भावः । तथा चैतद्व्याकरणप्रवृत्त्यनन्तरमेतदुपकारकाणां न्यायानामनुशासनाय यत्नः क्रियत इति भावः, एतेन व्याकरणप्रवृत्त्या सहानन्तर्यसम्बन्धोऽपि सूचितः । प्रयोजनं चासन्दिग्धशास्त्रप्रवृत्तिरूपमेव । तत्र नीयते सन्दिग्धोऽर्थो निर्णयमेभिरिति विग्रहे "न्यायावायाध्यायोद्यावसंहारावहाराधारदारजारम्" [५.३.१३४.] इति सूत्रेण घञि न्यायशब्दो निपातितः; तत्रार्थनिर्णयकरणत्वरूपस्य लक्षणस्य फलितत्वेन संज्ञासूत्र-विधिसूत्रादीनामप्यर्थनिर्णयानुकूलतया न्यायत्वप्रसक्तिरिति स्वाभिलषितन्यायपदबोध्यप्रकृतग्रन्थप्रतिपाद्यन्यायानामेव लक्षकं लक्षणान्तरमवश्याश्रयणीयम्, तच्चेत्थम्—विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाप्रकारकशक्त्यविषयकबोधजनकत्वे सति अधिकारशास्त्रभिन्नत्वं न्यायत्वमिति । न्यायेन कस्यचिद् विधिशास्त्रस्य कुत्रचित् प्रवृत्तेः कुत्रचिन्निवृत्तेश्चावश्यंभावेन तदुपयोगिबोधजनकत्वं न्यायेऽक्षतमेव, विधिसूत्रस्यापि विध्यन्तरप्रवृत्त्याद्युपयोगित्वस्य सत्त्वात् तन्निवृत्तये साधुत्वाप्रकारकेति बोधविशेषणम्, अधिकारसूत्राणां "भवे" [ ६. ३. १२३.] इत्यादीनामपि विधिशास्त्रप्रवृत्त्युपयोगिसाधुत्वाप्रकारकबोधजनकत्वेन तद्व्यावृत्तयेऽधिकारशास्त्रभिन्नत्वमिति विशेषणम् ॥

तान् न्यायान् विशिनष्टि-**ये त्विति** । **शास्त्रे सूचिता लोकप्रसिद्धाश्चेति**-अनेन तेषां न्यायानां स्वकल्पितत्वनिरासपूर्वकं शास्त्रप्रक्रियोपयोगित्वं सूचितं भवति, तथा च व्याकरणसूत्राणां नव्यत्वेऽपि न्यायरूपाणामेषां व्याकरणान्तरेष्वपि व्यवहृतत्वेन परम्पराप्राप्तत्वेन चिरन्तनत्वमित्यपि व्यक्तं वेदितव्यम् । **'शास्त्रे'** इत्यनेन प्रकृतव्याकरणशास्त्रे इत्यवगन्तव्यम्, तेन लोकप्रसिद्धानामपि सूचीकटाहन्याय-काकाक्षिगोलकन्याय-डमरुकमणिन्याय-घण्टालालान्यायादीनामिहासंगृहीतत्वेन न न्यूनता, तेषां शास्त्रे सूचितत्वाभावात्; यद्यपि भवत्येवैषामपि क्वचिदवसरेऽत्राऽपि शास्त्रे समुपयोगस्तथापि तेषां प्रकृतशास्त्रेऽनुल्लिखितत्वेन तदसंग्रहेऽपि न हानिः । **लोकसिद्धाश्चेति**-लोकश्चेह व्याकरणप्रवर्तकप्रामाणिकाप्तजनसमुदाय एव, तत्र प्रसिद्धत्वेन तेषामप्रामाणिकत्वशङ्कानिरासः । **तदर्थमिति**-ते न्याया एवाऽर्थाः-प्रयोजनानि प्रतिपाद्यत्वेन यत्र कर्मणि तद् यथा स्यात् तथेति भावः । **यत्नः** तत्स्वरूपलाभहेत्वादिनिर्देशरूपः, **क्रियते** विधीयत इत्यर्थः ॥

प्रतिज्ञातं प्रस्तौति-**स्वं रूपं शब्दस्येत्यादिना** । शब्दानुशासने शब्दैरेव सर्वव्यवहारात् तद्बोध्यनिर्णयप्रयोजकस्य न्यायस्यैव प्रथमं निरूपणीयत्वेनावसरप्राप्तत्वादाह-**स्वं रूपमिति**-शब्देन हि अर्थः प्रत्याय्यते, अर्थप्रत्यायनार्थमेव शब्दानां प्रयोगात्, तत्र शब्दशास्त्रीयकार्याणामर्थे बाधात् शब्द एव शब्दस्य बोध्यो व्याकरणशास्त्रे इति निश्चीयते, तथा च शब्देन तदर्थकशब्दमात्रस्य ग्रहणापत्तौ तत्स्वरूपस्य तत्पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्थोऽयं न्यायः—यत्र शब्दग्रहणं तत्र तस्य स्वरूपमेव ग्राह्यमिति । पाणिनीये तन्त्रे तु संज्ञासूत्रत्वमस्य स्वीक्रियते, संज्ञापक्षेऽपि नियमार्थत्वं संभवत्येव, देवदत्तादयो हि संज्ञाशब्दा नियमार्था एव, 'सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः, सर्वशब्दशक्तिप्रत्याय्यशक्तियुक्तश्चार्थः' इति व्यवहाराय नियमः क्रियते, नियमस्वरूपं च द्विधा-'देवदत्तशब्देनायमर्थो ग्राह्यः' इति 'अयमर्थो देवदत्तशब्देनैव बोधनीयः' इति च । वस्तुतस्तु सर्वेषां शब्दानां सर्वार्थवाचकत्वेऽपि तदस्मदादीनां ज्ञानविषयो न, सर्वार्थशब्दानां विशिष्यास्मदादिभिर्ज्ञातुमशक्यत्वात्, किन्तु योगिनामेव तज्ज्ञानम्, एवं च शास्त्राधिकारिणोऽस्मदादीन् प्रति शास्त्रस्य विधायकत्वमेव न नियमार्थत्वम्, किन्तु प्रकरणादस्यैवार्थस्य शास्त्रे उपस्थितौ अर्थादेव नियमः फलतीति 'व्यवहाराय नियम' इत्युपपन्नं भवति । ननु रूप-रूपिणोरत्र भेदाभावात् शब्दस्येति षष्ठ्यनुपपन्ना, संज्ञा-संज्ञिसम्बन्धश्चानुपपन्न इति चेत् ? सत्यम्-' रूपशब्देन "कल्यग्नेरेयण्" [ ६. १. १७.] इत्यादिसूत्रगृहीताग्निशब्दादिनिष्ठाग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरितभिन्नशब्दव्यक्तिसमवेतं सामान्यमभिधीयते, तथा चानेकसमवेतत्वं सामान्यलक्षणघटकं न दुर्लभम्, न च शुकसारिकाद्युच्चारणेपूच्चारणक्रियैव भिद्यते न शब्द इति वाच्यम्, ताल्वादिव्यापाररूपस्योच्चारणस्य श्रवणानर्हत्वेन शब्दश्रवणानन्तरं जायमानवक्तृविशेषानुमानानुपपत्तेः, उदात्तत्वादिविरुद्धधर्माध्यासाच्च भेदसिद्धेः, वर्णनिष्ठत्वेन प्रतीयमानानामुदात्तत्वादीनां ध्वनिनिष्ठत्वकल्पने मानाभावादिति भावः । तथा च रूपशब्दस्य सामान्यार्थकत्वे 'व्यक्तेः सामान्यं संज्ञा' 'सामान्यस्य वा व्यक्तिः' इति व्याख्याने कामचारः । अयमाशयः—स्वशब्द आत्मीयत्वेन रूपेण व्यक्तिबोधकः; एवं च शब्दस्य तत्तज्जातिविशिष्टस्य स्वं-व्यक्तिः, रूपं-सामान्यसंज्ञकमिति प्रथमव्याख्यानाभिप्रायः, शब्दस्य रूपमुद्दिश्य स्वमित्यनेन व्यक्तिसंज्ञकत्वं विधीयते इति द्वितीयव्याख्यानार्थः । एवं चोपपद्यते सामानाधिकरण्यम्, तथा च व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते,

सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यते इति फले न कश्चिद् भेदः । पाणिनीयतन्त्रे च सूत्ररूपेणायं न्यायः पठितः, महाभाष्ये च [ पा० सू०—१. १. ६८. ] अस्य न्यायस्य वैयर्थ्यं प्रतिपादितं, तदाशयश्च नागेशेन शब्देन्दुशेखरे संज्ञाप्रकरणे इत्थं प्रतिपादितः–"अर्थे कार्यस्य बाधेऽपि उपस्थितत्वात् 'राज्ञः' इत्यादौ [ राजशब्दात् प्रत्ययविधायकसूत्रस्थराज्ञ इति पदे इति भावः ] तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम् । उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयसम्भवेन च अर्थवत्परिभाषापि सिद्धा । लक्ष्यानुसारात् तत्तत्संज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचकषषृशब्दस्य संज्ञाकरणेन शब्दशास्त्रीयसंज्ञायां स्वरूपाग्रहणज्ञापनाच्च 'उपसर्गे घोः" [ पा० सू० ३. ३. ९२. ] इत्यादावदोषेणाशब्दसंज्ञेत्यपि व्यर्थम्" इति' "अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषः, अत एव वृक्षादिषु विशेषाणां ग्रहणम्, "स्वे पुषः" [ पा० सू० ३. ४. ४०. ] इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणम्, "सभा राजा" [ पा० सू० ४. २. २३. ] इत्यत्र पर्यायाणामेव ग्रहणम्, "पक्षिमत्स्यमृगान् हन्ति" [ पा० सू० ४. ४. ३५. ] इत्यादौ मृगपक्षिणोः पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणम्, मत्स्यपदेन स्वरूपस्य विशेषाणां मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति, अन्यथा तदर्थं यत्नः कर्तव्यः + + + + लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः" इति च । अस्यायमाशयः–"कल्यग्नेरेयण्" [ ६. १. १७. ] "जातौ राज्ञः" [ ६. १ ९२. ] इत्यादिसूत्रेषु अग्निराजादिपदैस्तदर्थस्योपस्थितावर्थे कार्यस्य बाधेऽपि तदर्थकसर्वशब्दात् प्रत्ययोत्पत्त्यापत्तेस्तद्वारणाय न्यायः समाश्रीयते । तच्च शब्देनार्थोपस्थितावपि तत्र [ शाब्दबोधे ] शब्दस्यापि प्रकारतया भासमानत्वस्य

"न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ॥"

इति वाक्यपदीयानुसारं सिद्धत्वेन वह्निरूपार्थवाचकाग्निशब्दात् नृपतिरूपार्थवाचकराजशब्दादेव च प्रत्ययोत्पत्त्यैव सिद्धमिति नास्यावश्यकता । *अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्* इत्यस्य न्यायस्य साधनार्थमपि नास्यावश्यकता, स्वभावत एव शब्दादर्थस्योपस्थितौ तत्त्यागे मानाभावेन तन्न्यायस्य सिद्धत्वात् । लक्ष्यानुसारिव्याख्यानस्य न्यायसत्त्वेऽपि तत्र तत्रावश्यकत्वेन व्याख्यानेनैव सकलार्थसिद्धिरिति । तथा हि–"स्वस्नेहनार्थात् पुषः" [ ५. ४, ६५. ] इत्यत्र स्वशब्दस्य तत्पर्यायस्य तद्विशेषाणां च ग्रहणं भवतीति स्वपोषमात्मपोषं रैपोषं धनपोषं गोपोषमित्यादयः प्रयोगा भवन्ति । "पक्षि-मत्स्य-मृगार्थाद् घ्नति" [ ६. ४. ३१. ] इत्यत्र मृगपक्षिणोः पर्यायाणां विशेषस्य स्वरूपस्य च ग्रहणं भवति, मत्स्यपदेन स्वरूपस्य, विशेषाणां मीनरूपस्य पर्यायस्य न त्वन्येषां "पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः । विसारः शकली च०" इत्यमरोक्तानां पर्यायाणाम् । यद्यपि प्रकृतसूत्रेऽर्थग्रहणेन वृत्तौ साधितमेतत्, तथा हि तत्र वृत्तिः–"अर्थग्रहणात् तत्पर्यायेभ्यो विशेषेभ्यश्च भवति" इति, तथापि तदुपलक्षणं लक्ष्यानुसारिव्याख्यानस्यैव, कथमन्यथा मीनरूपपर्यायादेव स्यान्न पृथुरोमादिभ्यः, तथा चेदृशव्यवस्थार्थं लक्ष्यानुसारिव्याख्यानस्यैव शरणीकरणीयत्वेन तेनैव सिद्धे नार्थोऽनेन न्यायेनेति भाष्याशयः । एवं चैवं व्याख्यानेनैव सिद्धेऽत्रत्योभयांशस्यानित्यत्वज्ञापनायां क्लिष्टकल्पनमनुचितमेव, तथा हि–"प्राज्ज्ञश्च" [ ५. १. ७९. ] इत्यत्र दारूपग्रहणेन वृत्तिकृत्प्रतिपादितेन तद्विषयेऽशब्दसंज्ञेत्यंशस्य यद्यपि प्रवृत्त्यभावोऽनुमीयते, तथापि न तदनित्यत्वसाधकं भवितुमर्हति, तथा सति ज्ञारूपसाहचर्यस्य वृत्तिकृदाश्रितस्यासंगत्यापत्तेः । एतस्य तदनित्यतानुमापकत्वाख्यानं चानुचितं, पक्षमात्रवृत्तेर्हेतोरसाधारण्यात्, व्याप्तिग्रहणाय हि हेतोः पक्षादन्यत्रापि वृत्तिरावश्यकी, न च तदिह दर्शितमिति । प्रतिपादितं च तदीयन्यासग्रन्थे तस्यातात्त्विकत्वं भङ्ग्यन्तरेणेति सुधीभिर्विचार्यम् ॥ १ ॥

## *सुसर्वार्धदिक्शब्देभ्यो जनपदस्य* ॥२॥

सि०—पूर्वन्यायेन सर्वत्र शब्दस्य स्वं रूपमेव बोध्यमिति निर्णीतम्, तथा च सर्वत्र स्वरूपग्रहणस्यैव प्रसक्तौ "अतः स्यमोऽम्" [ १. ४. ५७. ] इत्यादेरकारान्तेषु प्रवृत्तिर्न स्यादिति "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषासूत्रमारब्धम्, एवं च प्रत्ययविधावपि तदन्तविधिप्रसक्तौ गर्गादिभ्यो विहितो यञ् परमगर्गादिभ्योऽपि स्यादिति तद्वारणाय *ग्रहणवता नाम्ना न तदन्तविधिः* इति न्यायः स्वीक्रियते, तथा च "बहुविषयेभ्यः" [ ६. ३. ४५. ] इति सूत्रेण बहुविषयेभ्यो जनपदेभ्यो विधीयमानः प्रत्ययस्तन्मात्रादेव स्यान्न तु तदन्ताच्छब्दादिति सुमागधक इत्यादिलक्ष्याणामसिद्धिरित्याशङ्कायां न्यायोऽयं निर्णयाय समाश्रीयते, स चायं न्यायः पदान्तराध्याहारेण व्याख्येयः–जनपदस्य यत् कार्यमुच्यमानं स्यात् तत् सुसर्वादिभ्यः परस्यापि भवतीति । 'सुसर्वाऽर्धदिक्शब्देभ्यः' इत्यत्र स्वादयः सर्वे प्रसिद्धा एव, दिक्शब्दश्च दिशि दृष्टः शब्द इति व्युत्पत्त्या दिग्वाचकत्वेन रूढः शब्द उच्यते । तत्र, सुसर्वोऽर्धदिशः' इत्येतावतैव दिग्वाचकात् परस्य ग्रहणे सिद्धे शब्दग्रहणेन सम्प्रति दिग्वाचकत्वाभावेऽपि दिशि दृष्टत्वमात्रेण तस्य दिक्शब्दत्वाद् ग्रहणं भवति; दृष्टश्चैवं दिक्शब्दग्रहणं–"प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः" [ २. २. ७५. ] इति सूत्रेऽपि । अत्र ज्ञापकं–"सुसर्वा–ऽर्धाद् राष्ट्रस्य"

[७. ४. १५.] "अमद्रस्य दिशः" [७. ४. १६.] इति सूत्रद्वयमेकदेशानुमत्या सम्मिल्य, तथा हि–राष्ट्रवाचिनः सुसर्वार्धात् परस्योत्तरपदभूतस्य वृद्धिः प्रथमेन विधीयते "बहुविषयेभ्यः" [६. ३. ४५] इत्यादिसूत्रविहितान् प्रत्ययान् निमित्तत्वेनाश्रित्य; द्वितीयेनापि "अमद्रस्य दिशः" [७. ४. १६.] इति सूत्रेण मद्रभिन्नस्य राष्ट्रवाचकस्योत्तरपदस्य दिग्वाचकात् परस्य राष्ट्रवाचित्वनिमित्तके प्रत्यये परतो वृद्धिर्विधीयते, ततश्च "बहुविषयेभ्यः" [६. ३. ४५.] इत्यादीनां *ग्रहणवता०* इति न्यायविरोधात् तदन्तेभ्यः प्रत्ययविधायकत्वाभावेन निमित्तानुपलम्भादेतयोर्निर्विषयत्वमेव स्यादिति पूर्वं सूत्रं सुसर्वार्धपूर्वस्य जनपदस्य प्रत्ययविधौ ग्रहणस्यानुमापकं, परं च दिग्वाचकपूर्वस्य । तथा च ज्ञापकस्य बाधकतया *ग्रहणवता०* इति न्यायं बाधित्वाऽनेन न्यायेन "बहुविषयेभ्यः" [६. ३. ४५.] इत्यादीनां सुसर्वार्धदिक्शब्दपूर्वादपि प्रत्ययविधानेन सुमगधेषु भवः–सुमागधकः, सर्वमगधेषु भवः–सर्वमागधकः, अर्धमगधेषु भवः–अर्धमागधकः, मगधानां पूर्वो भागः–पूर्वमगधाः, तेषु भवः–पूर्वमागधक इत्यादयः सिध्यन्ति, पूर्वमागधक इत्यत्र च पूर्वशब्दस्य सम्प्रति देशावयववाचकत्वेऽपि दिशि दृष्टत्वेन दिक्शब्दत्वात् प्रत्ययः । ज्ञापकस्य विशेषविषयत्वाश्रयणाच्च सुसर्वार्धदिक्शब्दभिन्नपूर्वस्य जनपदस्य प्रत्ययविधौ ग्रहणं न भवतीति ऋद्धमगधेषु भव इत्यर्थेऽकञोऽभावेन "भवे" [६. ३. १२३.] इत्यनेनाणेव भवतीति आर्धमगधक इत्येव, तत्रोत्तरपदवृद्धेरप्यप्राप्तेः । अयं च न्यायोऽव्यापक एव परिच्छिन्नविषयत्वादिति नास्यानित्यताज्ञापकसंभव इति नित्य एवायम् ॥ २ ॥

## *सुसर्वार्धदिक्शब्देभ्यो जनपदस्य ॥३॥*

त०—निरूपिताऽस्य प्रसङ्गसङ्गतिर्वृत्तौ पूर्वन्यायेन शब्दस्य स्वं रूपमेव बोध्यमित्यादिना । पाणिनीये तन्त्रे "येन विधिस्तदन्तस्य" [पा० सू० १. १. ७२.] इति सूत्रेण प्राप्तस्य तदन्तविधेः "समासप्रत्ययविधौ प्रतिषेधः" इति वार्तिकेन निषेधः पठ्यते महाभाष्ये, तथा च प्रत्ययविधौ तदन्तग्रहणाभावात् बहुविषयेभ्यो जनपदेभ्यः केवलेभ्य एव प्रत्ययः स्यान्न तु तदन्तेभ्य इति तदपवादभूतं "सुसर्वार्धदिक्शब्देभ्यो जनपदस्य" इति वचनं वार्तिकरूपेण पठ्यते महाभाष्ये, तथा च न ज्ञापकादिकं तत्राश्रीयते, *ग्रहणवता नाम्ना न तदन्तविधिः* इति न्यायश्च 'समासप्रत्ययविधौ प्रतिषेधः' इति वार्तिकस्थप्रत्ययांशानुवादमात्रमिति परिभाषेन्दुशेखरे स्पष्टम् । अत्रेदं विचार्यते–स्वमते* ग्रहणवता नाम्ना न तदन्तविधिः* इति न्यायस्यायं न्यायोऽपवादभूत इति हि वृत्तौ प्रतिपादितम्, स न्यायश्च विशिष्य गृहीतनामस्वेव विधिषु तदन्तविधेः प्रतिषेधकः, ध्वनितं चेदम् "असमासे निष्कादिभ्यः" [पा० सू० ५. १. २०.] इति सूत्रे महाभाष्ये, तथा च तत्रत्यं भाष्यम्–"ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते; न च ठञ्विधौ काचित् प्रकृतिर्गृह्यते" इति, तत्र कैयटः–"यत्र विशिष्टा प्रकृतिरुपादीयते तत्रैव तदन्तविधेः प्रतिषेधः, ठञ्विधौ "[प्राग्वतेष्ठञ्" पा० सू० ५. १. १८.] इत्यत्र तु प्रातिपदिकाधिकारात् प्रातिपदिकमात्रं प्रकृतित्वेनाश्रीयते" इति व्याचख्यौ । तथा च विशिष्य आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदेन नामग्रहण एव तदन्तविधिनिषेधकोऽसौ न्यायः, "बहुविषयेभ्यः" [६. ३. ४५.] इति सूत्रं हि न विशिष्य किमपि नाम गृह्णाति किन्तु बहुत्वविषयेभ्यो राष्ट्रवाचिनामभ्य इति सामान्यत एव, ततश्च सुमागधकादिषु * ग्रहणवता०* इति न्यायस्याप्रवृत्त्या स्वत एव "बहुविषयेभ्यः" [६. ३. ४५.] इति प्रत्ययः स्यादेवेति न प्रकृतस्य न्यायस्योत्थानस्यावश्यकतेति । अत्रोच्यते–आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदेन नामग्रहण एव तस्य तदन्तविधिनिषेधस्य प्रवृत्तिरिति स्वीकारे "द्विस्रादनद्याः" [६. १. ७१.] इत्यादिष्वपि नामग्रहणवत्त्वाभावात् तदन्तविधेरप्रतिषेधे 'दात्तेय' इत्यत्र दत्ताशब्दादिव परमदत्ताशब्दादपि एयण् स्यात्, ततश्च आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वमपहाय नामवृत्तिविषयताप्रयोजकत्वमेव ग्रहणवन्नामत्व०मित्यास्थेयम्, [प्रतिपादयिष्यते चैतत्तन्न्यायव्याख्यावसरे विस्तरेण], एवं च "बहुविषयेभ्यः" [६. ३. ४५.] इत्युक्त्या बहुवचनमात्रविषयाणामङ्ग-वङ्ग-वृजि-मद्र-मगध-पञ्चालादीनां नाम्नां विषयतायाः समुपस्थित्या नामवृत्तिविषयताप्रयोजकपदत्वमस्याक्षतमेवेति तदन्तविधिप्रतिषेधप्राप्तिरक्षतैवेति तत्प्रतिषेधकोऽयं न्याय आवश्यक एवेति । नन्वत्र "सुसर्वार्धाद्राष्ट्रस्य" [७. ४. १५.] इति "अमद्रस्य दिशः" [६. ४. १६.] इति च वृद्धिविधानं यज्ज्ञापकत्वेनोपन्यस्तम्, तन्नोचितं, यतः "मद्रादञ्" [६. ३. ८४.] इति सूत्रवृत्तावेतद्विहितस्याञ्प्रत्ययस्य "बहुविषयेभ्यः" [६. ३. ४५.] इति प्राप्तस्याकञः, तदपवादभूतस्य "वृजिमद्राद्देशात् कः" [६. ३. ३८.] इति विहितस्य कस्यापवादत्वं यदुक्तं तत् तयोः [अकञ्-कयोः] तदन्तादप्राप्त्या न संगच्छत इति तथा वचनं ज्ञापयति यत्–सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिप्रापको न्यायोऽस्तीति प्रतिपादितत्वेन तस्यैव ज्ञापकत्वोपन्यासस्यौचित्यादिति चेत्? सत्यम्, तस्यैकदेशानुमत्या दिक्शब्दविषये तन्न्यायसत्त्वानुमापकत्वसम्भवेऽपि सुसर्वार्धांशे वृद्धिविधायकसूत्रस्यैव ज्ञापकत्वस्याश्रयणमुचितमिति दिक्शब्दांशेऽपि तादृशस्य वृद्धिविधायकस्यैव ज्ञापकत्वमाश्रयणीयमिति विचारेण तस्यानुल्लेखात्, ज्ञापिते च तस्मिन् न्यायेऽत्राञोऽकञ्कापवादत्ववचनमपि तदुदाहरणत्वेनोचितमेवेति न

काप्यनुपपत्तिः, सति सूत्रस्य ज्ञापकत्वसम्भवे वृत्तिवचनस्य ज्ञापकत्वाश्रयणं वृत्तिकृतां न संगतं स्यात्, स्ववचनेन विशेषवचनकल्पनायाः प्रौढित्वख्यापकत्वात्, तथा च "तर्हीदमेव ज्ञापकं सुसर्वार्धदिक्शब्देभ्यस्तदन्तविधेः" इति वृत्तौ 'इदमेव' इत्येवशब्दोऽप्यर्थकः–इदमपीति; यदि च 'इदमेव'इत्यस्यान्विधानमेवेत्यर्थः, तस्य च "दिक्पूर्वपदान्मद्राचानाम्नः" इत्येकयोगे कर्तव्ये पृथग्योगकरणादनुवर्तमानणप्रत्ययबाधनार्थत्वं 'प्राग्जितादण्' इत्यधिकारप्राप्ताण्विधानार्थत्वं चाश्रित्य 'मद्रात्' इत्येव सूत्रयितव्ये अञ्विधानं बाधकबाधनार्थं सत् बाध्ययोरकञ्कयोस्तदन्तेऽपि प्रवृत्तिं सूचयतीति भावः, तर्हि तदप्यस्तु–एकदेशानुमत्या ज्ञापकम्, सर्वांशेन तु वृद्धिविधायकसूत्रद्वयमेव ज्ञापकमित्यास्थेयमित्यलं बहुगवेषणेनेति । तथा च बहुविषयेभ्यो राष्ट्रवाचिभ्यो योऽकञादिविधिरुक्तः स तदन्तविधिनाऽवयवप्राधान्यविवक्षया वा यद्यपि तदन्तेभ्योऽपि प्राप्तः किन्तु *ग्रहणवता०* इति न्यायेनात्र तदन्तविधेः प्रतिषेधादप्राप्तोऽनेन न्यायेन प्रतिप्रसूयत इति सिद्धम् । ननु पूर्वमागधक इत्यादौ पूर्वेषु मगधेष्विति विगृह्य मगधशब्दादेव प्रत्ययं विधाय पश्चात् पूर्वशब्देन समासे तत्र वृद्धिविधायकसूत्रस्य चारितार्थ्यसम्भवे न तस्य ज्ञापकत्वमुचितमिति चेत्? न–"दिगधिकं संज्ञा-तद्धितोत्तरपदे" [ ३. १. ९८. ] इति सूत्रेण तद्धिते विषयभूते एव कर्मधारयसमासविधानेन समासात् पूर्वं प्रत्ययोत्पत्तेरसम्भवेन समासे कृत एव तदुत्पत्तेः; असमस्तस्य केवलस्य मगधशब्दस्य पूर्वशब्दमपेक्षमाणस्य सापेक्षमसमर्थमिति न्यायेनासमर्थत्वादसामर्थ्ये च सति तद्धितप्रत्ययोत्पत्तेरसम्भवात्, "समर्थः पदविधिः" [ ७. ४. १२०. ] इति सूत्रेण समास-नामधातु-कृत्तद्धितोपपदविभक्ति-युष्मदस्मदादेश-प्लुतरूपाणां पदविधीनां समर्थपदाश्रयत्वविधानात्, सामर्थ्यं च व्यपेक्षा एकार्थीभावश्च, व्यपेक्षायाः सामर्थ्यस्य वाक्ये सम्भवेऽपि एकार्थीभावरूपसामर्थ्यस्य समासादिनिष्ठस्य समासादौ विहिते एव सम्भवादिति समासात् पूर्वं नास्ति तद्धितोत्पत्तिरिति पूर्वमागधक इत्यादेर्न्यायं विनाऽसिद्धिरेवेति ॥ २ ॥

## ※ ऋतोर्वृद्धिमद्विधाववयवेभ्यः ※ ॥ ३ ॥

सि०—तदन्तविधिप्रापकपूर्वन्यायप्रकरणात् तत्समानविषयो न्यायो व्याख्यातुमवसरप्राप्त इति पूर्वन्यायसदृशोऽयं न्यायो व्याख्यातुमुपक्रम्यते । वृद्धिः कार्यत्वेनास्त्यस्मिन्निति वृद्धिमान्, तथा च यस्मिन् प्रत्यये वृद्धिर्विधीयते स प्रत्ययो वृद्धिमान्, स च "वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते" [ ७. ४. १. ] इति सूत्रानुसारं ञ्णित् प्रत्ययः, ऋतोरिति पञ्चम्यन्तम्, तथा च ऋतुवाचकाच्छब्दात् ञ्णित्प्रत्ययविधौ ञ्णित्प्रत्ययस्य विधाने कर्तव्ये तदवयवपूर्वात् ऋत्वन्तादपि स प्रत्ययो भवतीति न्यायार्थः। तेन "वर्षाकालेभ्यः" [ ६. ३. ८०. ] इति सूत्रविहित इकण् यथा वर्षासु भवमित्यर्थे वार्षिकमित्यत्र भवति, तथा वर्षाणां पूर्वो भाग इत्यर्थे "पूर्वापराधरोत्तरमभिन्नेनांशिना" [ ३. १. ५०. ] इति समासे पूर्ववर्षा इति, तासु भवमित्यर्थेऽपि तेनैकण्प्रत्यये कृते "अंशादृतोः" [ ७. ४. १४. ] इत्यवयववाचकात् परस्य ऋतुवाचकस्य वर्षाशब्दस्यादिस्वरस्य वृद्धौ पूर्ववार्षिकमिति भवति; एवं शिशिरे भवमित्यर्थे यथा शैशिरमिति भवति, तथा शिशिरस्य पूर्वो भागः पूर्वशिशिरं, तत्र भवमित्यर्थे पूर्वशैशिरमित्यत्राऽपि "भर्तुसन्ध्यादेरण्" [ ६. ३. ८९. ] इत्यण् भवति, वृद्धिश्च पूर्ववदेव "अंशादृतोः" [ ७. ४. १४. ] इत्यनेनोत्तरपदादिस्वरस्य । वृद्धिमद्विधाविति च वृद्धिनिमित्तकप्रत्ययभिन्नविधौ तदन्तविधिव्यावर्तनाय, तथा च "प्रावृष एण्यः" [ ६. ३. ९२. ] इति विहित एण्यप्रत्यये वृद्धिप्राप्त्यभावेन तद्विधौ तदन्तग्रहणाभावात् प्रावृषः पूर्वो भागः पूर्वप्रावृट्, तस्यां भवमित्यर्थे तत्प्राप्त्यभावात् ऋतुनिमित्तक एवाण् भवति–पूर्वप्रावृषमिति, न तु एण्यः । अवयवेभ्य इति च ज्ञापकसाजात्यप्रदर्शनम्, अन्यथा हि पूर्वन्यायाद् दिक्शब्देभ्य इत्यनुवृत्त्या दिक्शब्दपूर्वपदस्याऽपि ग्रहणमित्येव सिध्येतेति पूर्वासु ऋत्वन्तरैर्व्यवहितासु वर्षासु भवमित्यर्थेऽपि "वर्षाकालेभ्यः" [ ६. ३. ८०. ] इति वर्षालक्षण इकण् न भवति किन्तु काललक्षण एव, तथा च "अंशादृतोः" [ ७. ४. १४. ] इत्युत्तरपदवृद्धिरपि न भवति पूर्वशब्दस्यांशवाचित्वाभावात् । एवं पूर्वस्मिन् शिशिरे भवमित्यर्थे ऋतुलक्षणोऽण् न भवति किन्तु काललक्षण इकणेवेति पौर्ववार्षिकम्, पौर्वशैशिरिकमिति, अत्र "वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते" [ ७. ४. १. ] इत्यादिस्वरस्यैव वृद्धिः । अस्य ज्ञापकं तु "अंशादृतोः" [ ७. ४. १४. ] इत्यनेनोत्तरपदस्य ऋतुवाचिनोऽंशवाचिनः परस्य वृद्धिविधानमेव, तद्धि अंशवाचिपूर्वपदात् परस्मादृतुवाचिनः ञ्णित्प्रत्ययोत्पत्तौ सत्यामेव संगच्छेत, न च ततः प्रत्ययस्य प्राप्तिरस्ति *ग्रहणवता नाम्ना०* इति तदन्तविधिनिषेधात्, तथा च तद् व्यर्थमेव स्यादिति स्वसार्थक्याय तदन्तविधिं ज्ञापयतीत्यवयववाचिपूर्वादृत्वन्तादपि ञ्णित् प्रत्ययः सिद्धो भवति ॥ ३ ॥

## ※ऋतोर्वृद्धिमद्विधाववयवेभ्यः ॥ ३ ॥※

त०—एतन्न्यायफलप्रदर्शनावसरे यत्तु कैश्चित्–"पूर्वावयवयोगात् पूर्वाः–प्रथमा वर्षाः–पूर्ववर्षाः, तासु भवमित्यर्थे "पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम्" [ ३. १. १०३. ] इति सूत्रेण कृतसमासात् पूर्ववर्षाशब्दादपि "वर्षाकालेभ्यः" [ ६. ३. ८०. ] इत्यकणि पूर्ववार्षिकम्' इत्युक्तं तन्न रोचयामहे, तथा

हि-पूर्वावयवसम्बन्धनिमित्तकस्तत्र पूर्वशब्दप्रयोगो न तु वास्तविकः, तथा च तत्र पूर्वशब्दस्य नावयववाचित्वमपि तु तत्सम्बद्धप्रथमवर्षावाचित्वमित्यवयवत्वाभावात् पूर्वासु वर्षासु भवमित्यर्थ इव न तदन्तविधेः प्राप्तिर्न वा तत्र "अंशाहतोः" [ ७. ४. १४. ] इति वृद्धिरपि प्राप्ता, पूर्वशब्दस्य स्वार्थबाधे हि अर्थान्तरसङ्क्रमणमेव प्रथमवर्षालक्षकत्वम्, शक्यार्थबाध एव हि लक्षणायाः स्वीकारात्, एवं चावयववाचित्वाभावः स्पष्ट एव । एवं वृद्धिमद्विधाविति किमिति, अवयवेभ्यः किमित्यपि पदकृत्यप्रदर्शनप्रकारोऽयुक्त इव प्रतिभाति, "अंशाहतोः" [ ७. ४. १४. ] इति वृद्धिविधायकेन सूत्रेण ज्ञापितस्यास्य न्यायस्य स्वविषयसाजात्यवदेव वस्तु ज्ञापनीयं, येन स्वस्य चारितार्थ्यं स्यात्, नहि प्रत्ययविधौ तदन्तविधिरिति ज्ञापयितुं शक्यते, असति बाधके हि प्रमाणानां सामान्ये पक्षपातः, अस्ति चात्र बाधकं-ग्रहणवतेति न्यायस्य निर्विषयत्वापातो बहुलक्ष्योपप्लवश्च; तथा च तन्न्यायव्याप्यमेव किमपि ज्ञापनीयं येन स्वस्य चारितार्थ्यमिष्टलक्ष्यसिद्धिश्च भवेत्, तत्र ज्ञाप्यरूपोपस्थापकं चान्यच्च किञ्चिदस्तीति ज्ञापकशास्त्रीयोद्देश्यनिमित्ताभ्यामेव ज्ञाप्यरूपं गृह्यत इति वृद्धिमत्प्रत्ययविषयत्वमवयवविषयत्वं च ज्ञाप्येऽर्थेऽवश्यमेवेष्टव्यम् । तथा चेत्थं व्यावर्त्य प्रदर्शनं न्यायाप्रवृत्तिस्थलपरिचयमात्रार्थमिति स्वीकर्तव्यम् । यद्यप्यवयवेभ्य इत्यस्याभावेऽपि कथञ्चिदेकदेशे स्वरितत्वप्रतिज्ञया पूर्वन्यायाद् दिक्शब्देभ्य इत्यस्यानुवृत्त्या दिग्वाचकशब्दानामवयववाचित्वस्यापि दर्शनाज्ज्ञापकसार्थक्यसंभावनया तदंशे शङ्कयितुं शक्यते, तथापि तत्क्लिष्टकल्पनामात्रम्, गमके सत्येवैकदेशे स्वरितत्वस्वीकारात् । न्यायानां च ज्ञापकभेदात् परस्परासम्बद्धत्वेन परस्परोपकारकत्वाभावात् । ज्ञापकसूत्रे च 'ऋतोः' सामान्येनैवोपादानमिति ऋतुसामान्यमेव ज्ञाप्यार्थशरीरेऽपि प्रवृष्टमिति निर्विशेषं न सामान्यमिति नैयायिकाभ्युपगमरीत्या ऋतुविशेषवाचकविषये "वर्षाकालेभ्यः" [ ६ ३. ८०. ] इत्यत्र ऋतुसामान्यवाचकविषये "भर्तुसन्ध्यादेः" [ ६. ३. ८९. ] इत्यत्र चोभयत्र तदन्तविधिः, तदनुकूलमेव च पूर्ववार्षिकमिति पूर्वशैशिरमिति चोदाहरणद्वयं प्रदर्शितं वृत्तौ । ननु पूर्वासु ऋत्वन्तरैर्व्यवहितासु वर्षासु भवमित्यर्थे यत्-काललक्षण इकण् भवतीत्युक्तं तन्न चारु, वर्षाशब्दस्यैव कालवाचित्वात् पूर्ववर्षाशब्दस्य तदभावात्, न च तदन्तविधिना प्राप्तिः * ग्रहणवता० * इति तदन्तविधिप्रतिषेधादिति चेत्? सत्यम्-"वर्षाकालेभ्यः" [ ६. ३. ८०. ] इत्यत्र यथाकथंचित् कालवृत्तेः शब्दस्य कालवाचकत्वेनाश्रयणात्, अत एव "भर्तुसन्ध्यादेरण्" [ ६. ३. ८९. ] इति सूत्रे भार्थात् ऋत्वर्थात् सन्ध्यादेश्च कालार्थादित्युक्तं वृत्तौ, अन्यथा नक्षत्राद्यर्थानां कालार्थत्वाभावात् तेषां कालार्थत्वविशेषणमसङ्गतमेव स्यात् । *ग्रहणवता०* इति न्यायश्च विशिष्य तत्तन्नामत्वेन केनचित् प्रतिनियतधर्मेण वा संगृह्य यत्र नामग्रहणं तत्रैव प्रवर्तत इति पूर्वमुक्तत्वात् । "वर्षाकालेभ्यः" [ ६. ३. ९०. ] इत्यत्र च बहुवचननिर्देशेन यथाकथंचित् कालवृत्तीनामेव ग्रहणमिति प्रागुक्तमिति न तत्र ग्रहणवतेति न्यायस्य प्रवृत्तिः, यथाकथंचित्कालवृत्तीनां तत्र ग्रहणादेव साक्षात्कालवृत्तिभ्यो मास-संवत्सर-दिवसादिशब्देभ्यः प्रत्यये, मासे भवं मासिकं संवत्सरे भवं सांवत्सरिकं, दिवसे भवं दैवसिकमितिवत् निशासहचरितमध्ययनं निशा प्रदोषसहचरितमध्ययनं प्रदोष इति निशाप्रदोषशब्दाभ्यामुपचरितार्थवृत्तिभ्यामपि प्रत्यये तयोर्जयीत्यर्थेऽपि कालवाचित्वनिमित्तकेकण्प्रत्यये नैशिकः प्रादोषिक इति भवति । एवं कदम्बपुष्पसहचरितः कालः कदम्बपुष्पम्, यवबुससहचरितः कालो यवबुसमित्यादिरूपेणोपचरितार्थानामपि कालवृत्तित्वेन ग्रहणं तततन्निमित्तकप्रत्ययोत्पत्तिश्च भवति, एवंविधाश्चोपचरितार्थपराः कालवृत्तयो न केनचिदुपसंग्राहकरूपेण निर्देष्टुं शक्यन्त इति न तद्ग्रहणस्य नामग्रहणत्वमिति न तत्र *ग्रहणवता०* इत्यस्य प्रवृत्तिरिति तत्त्वम् । एवं च ऋतुवाचिभ्यो योऽणादिविधिरुक्तः स तदन्तविधिनाऽवयवप्राधान्यविवक्षया वा ऋत्वन्तेभ्योऽपि यदि स्यात् तदैव "अंशाहतोः" [ ७. ४. १४. ] इत्यस्य सार्थक्यमिति, तच्च न सिध्यति *ग्रहणवता०* इति तदन्तविधिप्रतिषेधादिति तन्न्यायबाधकोऽयं न्यायो वृद्धिविधायकेन तेन ज्ञापित इति तदन्तविधेः प्रतिप्रसवोऽयं न्याय इति सारम् । पाणिनीये तन्त्रे चायं न्यायः "येन विधिस्तदन्तस्य" [ पा० सू० १. १. ६९. ] इति सूत्रे समासप्रत्ययविधौ प्रतिषेध इति वार्त्तिकनिषिद्धतदन्तविधिप्रतिप्रसवरूपेण वार्त्तिकत्वेनोक्त इति वचनरूपमेवेदमिति न तत्र ज्ञापकापेक्षाऽस्ति । फलं चोभयोस्तन्त्रयोः समानमेवेति ॥ ३ ॥

## * स्वरस्य ह्रस्व-दीर्घ-प्लुताः * ॥ ४ ॥

सि०—"एक-द्वि-त्रिमात्रा ह्रस्व-दीर्घ-प्लुताः" [ १. १. ४. ] इत्यनेन एक-द्वि-त्रिमात्राणां ह्रस्व-दीर्घ-प्लुतसंज्ञाः विहिताः, ह्रस्वादिविधिप्रदेशेषु च प्रायः स्थानिविशेषा अनुक्ताः, तत्र कस्य स्थाने ते आदेशा इत्यनिर्णयप्रसङ्गे निर्णयार्थोऽयं न्यायः प्रस्तूयते । ह्रस्व-दीर्घ-प्लुता आदेशाः स्वरस्यैव स्युर्न तु व्यञ्जनस्येति न्यायार्थः । तत्र ह्रस्वविधायकं सूत्रं "क्लीबे" [ २. ४. ९७. ] इति, तत्रैतन्न्यायबलादेव नपुंसकवृत्तेः स्वरान्तस्य नाम्नो ह्रस्वः स्यादित्यर्थो लभ्यते, तत्र च "षष्ठ्याऽन्त्यस्य" [ ७. ४. १०६. ] इति परिभाषासूत्रेणान्त्यस्य ह्रस्वो भवति, यथा श्रिया सह वर्तते यत् कुलं तत् सश्रि, अत्र ईकारस्य ह्रस्वः । तथा च पदोपस्थापकोऽयं न्यायः, यत्र ह्रस्वादयो विधीयन्ते तत्र स्थानिनिर्देशपरं 'स्वरस्य' इति पदमुपतिष्ठत इत्यर्थात्, एतद्-

भावे च "क्लीबे" [ २. ४. ९८. ] इत्यस्य नपुंसकवृत्तेर्नाम्नो ह्रस्वः स्यादित्यर्थे यद्यपि सश्रि कुलमित्यादि सिद्ध्यति, नाम्न इति षष्ठ्या निर्दिष्टत्वेन "षष्ठ्यान्त्यस्य" [ ७. ४. १०६. ] इति परिभाषयाऽन्त्यस्य स्वरस्यैव ह्रस्वो विधीयते, किन्तु 'तत्' इत्यादि व्यञ्जनान्तस्थलेऽपि तत्प्रवृत्तौ तकारस्य स्थाने तदासन्नो ह्रस्व ऌकारः स्यादिति तद्वारणायास्यावश्यकत्वम्। एवं दीर्घविधेरुदाहरणम्—"अच्च् प्राग् दीर्घश्च" [ २. १. १०४. ] इति, अत्रापि स्वरस्येत्युपस्थित्या 'प्रतीचः' इत्यत्र प्रतेरिकारस्य दीर्घः, स्वरस्येति वचनाचायं दीर्घो व्यञ्जनस्य न भवति, यथा दृषदमञ्चतीति तान् 'दृषचः' इति, न चात्र दकारस्यासन्नो दीर्घो नास्तीति वाच्यम्, दन्त्यस्थानसाम्येन ॡकारस्यैव दीर्घत्वात्। प्लुतोदाहरणं यथा—"दूरादामन्त्र्यस्य गुरुर्वैकोऽपि लनृत्" [ ७. ४. ९९. ] इति 'हे चैत्र३ एहि' इत्यत्र हि स्वरस्यैव प्लुतो भवति, तत्फलं तु "प्लुतोऽनितौ" [ १. २. ३२. ] इत्यसन्धिः। ज्ञापकश्चास्य न्यायस्य ह्रस्वादिविधौ स्थानिनिर्देशाभाव एव। प्लुतविधौ यद्यपि "सम्मत्यसूयाकोप०" [ ७. ४. ८९. ] इत्यादिसूत्रे स्थानी निर्दिष्टो दृश्यते तथापि ह्रस्व-दीर्घयोः सहचारित्वमात्रेण प्लुतस्यापि न्याये पाठः। अथवा यदि कुत्रचिदन्यव्याकरणे स्थानी न निर्दिष्टः स्यात् तत्राऽपि स्वरस्य प्लुतो भवेदित्येवमर्थः पाठः, न्यायसूत्राणामेषां सकलव्याकरणसाधारणत्वात्, यथा पाणिनीयव्याकरणे "ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" [ पा० सू० ८. २. ९१. ] इति सूत्रेण आदेः प्लुतो विधीयते, स च स्वरस्यैव यथा स्यादित्येवमर्थं तदावश्यकमिति संभावनामात्रेण स्वकीयतन्त्रानुसारमप्युदाहृतमिति बोध्यम् ॥ ४ ॥

---

## ॥स्वरस्य ह्रस्व-दीर्घ-प्लुताः॥ ॥ ४ ॥

त०—विधिशास्त्रोपकारकेषु न्यायेषु प्रक्रान्तेषु तदुपकारकत्वेन बुद्ध्युपारूढतयाऽयमपि न्यायोऽवसरप्राप्त इति व्याख्यायते। अत्रेदं विचार्यते—किमयं न्यायः "षष्ठ्याऽन्त्यस्य" [ ७. ४. १०६. ] इति परिभाषाया अपवादभूतोऽथवा शेषभूत इति, तथाहि—"क्लीबे" [ २. ४. ९७. ] ॥इत्यादौ॥ नपुंसकवृत्तित्वयोग्यतया नाम इति लब्धम्, तच्च षष्ठ्यन्तम्, तथा च "षष्ठ्याऽन्त्यस्य" [ ७. ४. १०६. ] इत्यस्यापि विषयः, ह्रस्वविधायकतया अस्य न्यायस्य च, तत्र यद्ययं न्यायस्तदपवादभूत एव स्यात् तर्हि गाः पाति यत् कुलं तत् 'गोपम्' इत्यादौ गोशब्दौकारस्य ह्रस्वः स्यात्, सुवाक् कुलमित्यादावनन्त्यस्य 'वा'घटकाकारस्य च स्यात्, अतश्च तच्छेषभूत इत्यास्थेयम्। तथा च स्वरस्यान्त्यस्येत्यर्थे, अत्रोभयोरपि नामविशेषणत्वात् स्वरान्तस्य नाम्न इत्यर्थे, गोपमित्यादावन्त्यस्यैव भवति, सुवाक् कुलमित्यादौ नाम्नः स्वरान्तत्वाभावाच्च न भवति, किन्तु "क्रमो दीर्घः परस्मै" [ ४. २. १०९. ] "ष्ठिवूक्लम्वाचमः" [ ४. २. ११०. ] इत्यादौ स्वरान्तत्वाभावेनाप्रवृत्त्या तत्र 'स्वरस्य' इति वक्तव्यं स्यात्, येन तेषां स्वरस्य दीर्घो भवेदिति चेत्? सत्यम्—अत एव पदोपस्थापकपक्षस्याश्रयणात्। अयमाशयः—नायं "षष्ठ्याऽन्त्यस्य" [ ७. ४. १०६. ] इति परिभाषाया अपवादभूतो नापि शेषभूतः, किन्तु तदसम्बद्धः स्वतन्त्र एव ह्रस्वादिविधिषु स्वरस्येति पदमुपस्थापयति। तत्र च विशेष्यविशेषणभावस्य कामचारत्वाल्लक्ष्यानुसारं क्वचिद् गृह्यमाणेन नामादिनेदं विशेष्यते क्वचिच्च तस्यैवेदं विशेषणं भवति, तथा च नामादेर्विशेष्यत्वे स्वरान्तस्य नाम्नो ह्रस्व इत्याद्यर्थे सति "षष्ठ्याऽन्त्यस्य" [ ७. ४. १०६. ] इति परिभाषासाहाय्येन स्वरान्तस्य नाम्नोऽन्त्यस्य ह्रस्वो भवति, स्वरस्य विशेष्यत्वे च "क्रमो दीर्घः०" [ ४. २. १०९. ] क्रमः स्वरस्य दीर्घो भवतीत्याद्यर्थाश्रयणान्न क्वापि दोषः। स्पष्टश्चायमर्थः "अचश्च" [पा० सू० १. २. २९.] इति सूत्रे महाभाष्ये। अयं च न्यायो यत्र ह्रस्वदीर्घादिशब्देन ह्रस्वदीर्घादीनां विधानं तत्रैव प्रवर्तते ननु यत्र स्वरूपतो दीर्घादिविधानं तत्र। यथा "दिव औः सौ" [ २. १. ११७. ] इत्यनेन दीर्घस्वरूपस्यौकारस्य विधानेऽपि नायं न्यायः प्रवर्तते, तेन स्वरभिन्नस्य व्यञ्जनस्य वस्य औकारादेशो भवति। एवम् "आ द्वेरः" [ २. १. ४१. ] इत्यनेन ह्रस्वस्याकारविधानेऽपि तत्र नास्य प्रवृत्तिरिति तदादिशब्दान्त्यस्याकारो भवति, उभयत्र दीर्घह्रस्वशब्दाभ्यामविधानात्। नन्वेवं तदर्थं यत्नः कर्तव्यो येन विज्ञायेतेदं यत् संज्ञया विधाने एवायं न्यायः प्रवर्त्तत इति इति चेत्? न—ह्रस्वो दीर्घः प्लुत इत्येवं भाव्यमानः स्वरः स्वरस्य स्थाने भवतीत्येवं व्याख्यानादेव तल्लाभात्। केचित्तु—"ननु व्यञ्जनस्यार्द्धमात्रिकत्वेनैकमात्रत्वादिलक्षणानां ह्रस्वत्वादीनां प्रसङ्ग एव नास्तीति कोऽर्थोऽत्र न्यायेन?, मैवम्—अर्द्धमात्रिकयोः समुदाये एकमात्रत्वमपि सम्भवेत्, तथा च प्रतक्ष्येत्यत्र क्षस्य ह्रस्वसंज्ञत्वे "ह्रस्वस्य तः०" [ ४. ४. ११३. ] इति तागमप्रसङ्ग इत्यादौ साफल्यात्। स्वरस्येत्येकवचनोक्तेश्च तितउ छत्रमित्यत्राउतोः समुदितयोर्द्विमात्रत्वेऽपि दीर्घसंज्ञाया अभावात् "अनाङ्-माङः०" [ १. ३. २८. ] इति द्वित्वविकल्पो न स्यात्" इति वदन्ति, अपरे त्वेवमाहुः—तदेतत् परिभाषाऽसम्बद्धार्थकथनमेव, इयं हि परिभाषा ह्रस्वादिविधिविषयेऽनिर्दिष्टस्थानित्वेन स्थानिनिर्देशार्था व्यञ्जनस्य तत्स्थानित्वप्रतिषेधार्था चेति तदीयग्रन्थे स्पष्टत्वात्, 'प्रतक्ष्य, तितउ छत्र'-मित्यादौ हि न ह्रस्वदीर्घविधानस्य विषयः किन्तु ह्रस्वदीर्घसंज्ञाविषयः, तथा च नात्रैतन्न्यायचर्चाऽऽवश्यकी। अयमाशयः—स्वरस्येति कथनेन व्यञ्जनस्य स्थाने ह्रस्वाद्यादेशस्यैव व्यावृत्तिर्भवितुं शक्नोति न तु व्यञ्जने ह्रस्वत्वस्य, एवं स्वरस्येत्येकवचने-

नैकस्यैव स्वरस्य स्थाने दीर्घाद्यादेशः, न तु स्वरद्वयस्य स्थाने इत्येव कथयितुं शक्यते, न तु समुदितयोः स्वरयोर्दीर्घत्वाभावः [ दीर्घसंज्ञाभावः ] इति । तथा चेदं कथनं ह्रस्वादिसंज्ञाविधायकसूत्रविषयमेवोचितम्, ह्रस्वादिसंज्ञाविधायकसूत्रं च "एकद्वित्रिमात्रा ह्रस्व-दीर्घ-प्लुताः" [ १. १. ५. ] इति, तत्र च व्यञ्जनसमुदायस्य स्वरसमुदायस्य च संज्ञाव्यावृत्त्यर्थमेव "औदन्ताः स्वराः" [ १. १. ४. ] इति पूर्वसूत्रात् 'औदन्ताः' इति पदमनुवर्त्य एक-द्वि-त्रिमात्रा औदन्ता वर्णा यथासंख्यं ह्रस्वादिसंज्ञाः स्युरित्यर्थः प्रदर्शितो वृत्तौ । तथा चेह नेदं शङ्कासमाधानं युक्तमिति । पाणिनीये तन्त्रे महाभाष्येऽपि "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" [ पा० सू० १. २. २७. ] इति ह्रस्वादिसंज्ञाविधायकसूत्रे 'अच्' इति पदस्य [ स्वरार्थकस्य ] प्रयोजनप्रदर्शनायैव प्रतक्ष्यादीनामुपादानं कृतमस्ति । तथाहि—"अचश्च" [ पा० सू० १. २. २८. ] इति सूत्रशेषे अथ पूर्वस्मिन् योगे अज्ग्रहणे सति किं प्रयोजनम् ? "अज्ग्रहणं संयोगाच् समुदायनिवृत्त्यर्थम्" अज्ग्रहणं क्रियते संयोगनिवृत्त्यर्थम्, अच्समुदायनिवृत्त्यर्थं च, संयोगनिवृत्त्यर्थं तावत् प्रतक्ष्य, प्ररक्ष्य, "ह्रस्वस्य पिति कृति तुक्" [ पा० सू० ६. १. ७१. ] इति तुङ् मा भूदिति, अच्समुदायनिवृत्त्यर्थं तितउच्छाया "दीर्घात् पदान्ताद्वा" [ पा० सू० ६. १. ७६. ] इति विभाषातुङ् मा भूदिति । स्पष्टमेवैतद्भाष्यस्य ह्रस्वादिसंज्ञाविषयत्वं न तद्विधिविषयत्वम् । तथा च ह्रस्वादिविधिविषयके न्याये प्रतक्ष्येत्यादिलक्ष्यव्यावृत्तिप्रदर्शनमसम्बद्धमेवेत्यलमधिकेनेति ॥ ४ ॥

## ❋आद्यन्तवदेकस्मिन्❋ ॥ ५ ॥

सि०—अत्रैकशब्दोऽसहायार्थकः, न तु संख्यार्थकः, बहुषु सत्स्वपि एकत्वस्य तन्मध्यपतितत्वेन तस्याव्यावर्तकत्वं स्यात्, एतच्च विवरणे स्पष्टम् । तथा चास्य न्यायस्य **एकस्मिन्** असहाये—आदित्वा-ऽन्तत्वव्यवहारप्रयोजकशून्ये, **आद्यन्तवत्** आदिश्चान्तश्चाद्यन्तौ तयोः सतोरिवेत्यर्थे आद्यन्तवदिति सप्तम्यन्तादिवार्थे वतिः [ 'वत्' प्रत्ययः ], आद्यन्तयोः सतोर्यादृशो व्यवहारो भवति तादृशो व्यवहारः, तन्निमित्तकं कार्यं च स्यादित्यर्थः, वस्तुतस्तु व्यवहारस्यापि कार्यार्थतया कार्यमेवातिदिश्यते न व्यवहार इत्येव स्वीकर्तव्यम् । अयमाशयः—सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स 'आदिः' इत्युच्यते, सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते, ततश्च अन्यस्मिन् सत्येवाद्यन्तव्यवहारस्तन्निमित्तकं कार्यं च भवति, असति चान्यस्मिन्नसहाये [ एकस्मिन् ] आद्यन्तव्यवहारो न प्राप्त इति तन्निमित्तकानि कार्याणि न सिध्यन्तीति तदर्थं यत्नः कर्तव्य इत्ययं न्यायः समाश्रीयते, तथा चैकस्मिन्नप्राप्तकार्यप्रापणार्थोऽयं न्याय इति, स्पष्टमेतद् "आद्यन्तवदेकस्मिन्" [ पा० सू० १. १. २१ ] इति सूत्रे महाभाष्ये । आदिवद्भावस्य कल्पना यथा—"ईङ्च् गतौ" इत्यस्य परोक्षायाम् 'अयांचक्रे' इत्यादौ, तत्र हि "गुरुनाम्यादेरनृच्छ्रूर्णोः" [ ३. ४. ४८. ] इत्याम् विधेयः, स च नाम्यादेर्धातोर्विधीयते यथा—'ईहाञ्चक्रे' इत्यादौ, अयं च 'ई' मात्ररूपत्वान्न नाम्यादिः, आदित्वस्य परस्मिन् सत्येव संभवात्, इत्यनेन न्यायेन 'ई'कारमात्रे नाम्यादित्वकल्पना क्रियते, ततश्चाम् सिद्धो भवति । यथाऽयं वर्णविषये प्रवर्तते तथा नामविषयेऽपि, तथा च यत्रैकमेव नाम विद्यते. तत्र तदादित्वतदन्तत्वप्रयुक्तं कार्यं न प्राप्नोतीति तत्राप्यनेन तदादित्वादिकल्पना क्रियते, यथा—"इन्द्रे" [ १. २. ३०. ] इत्यस्य "सप्तम्या आदिः" [ ७. ४. ११४. ] इति परिभाषया इन्द्रादौ शब्दे परे इति न्यासकारादिसम्मतव्याख्यापक्षे 'गवेन्द्रयज्ञः' इत्यादाविन्द्रयज्ञशब्दे परे एव प्रवृत्तिः स्यान्न तु केवले 'गवेन्द्र' इत्यादाविन्द्रशब्दे परे इति तत्रापि प्रवृत्त्यर्थमेतन्न्यायाश्रयणेन इन्द्रशब्दमात्रस्येन्द्रशब्दादित्वाद् भवति गवेन्द्र इत्यस्य सिद्धिः । एतन्न्यायस्यादिवत् कार्यांशे ज्ञापकं तु "यस्वरे पादः पदणिक्यघुटि" [ २. १. १०२. ] इति सूत्रे णिपर्युदासकरणम्, तद्धि णेः स्वरादित्वेन तत्र पदादेशो मा भूदित्यर्थमेव कृतम्, णेश्चेकारमात्ररूपत्वेनासहायत्वात् [ अन्यस्याभावात् ] स्वरादित्वं नास्त्येवेति तत्र प्राप्तिरेव नेति तद्वर्जनं व्यर्थं सदेकस्मिन्नपि तदादित्वव्यवहारं तत्प्रयुक्तकार्यं च ज्ञापयति । एकस्मिन्नपि तदन्तत्वकल्पना वर्णविषये यथा—'एता' इत्यादौ, तथा हि—"नामिनो गुणोऽक्ङिति" [ ४. ३. १. ] इति गुणो नाम्यन्तस्य विधीयमानो यथा 'चेता, जेता' इत्यादौ पूर्वस्य विद्यमानत्वेन नामिनोऽन्तत्वस्य सत्त्वात् स्वभावत एव भवति तथा 'एता' इत्यादौ न प्राप्नोति, तत्र धातोरिकारमात्ररूपत्वेन नाम्यन्तत्वाभावात्, सति चानेन न्यायेन नाम्यन्तत्वातिदेशे गुणो भवतीति । नामविषये एकस्मिँस्तदन्तत्वकल्पना यथा—'सर्वस्मै' इत्यादौ, तथा हि—"सर्वादेः स्मै-स्मातौ" [ १. ४. ७. ] इत्यत्र सर्वादेरिति पदस्य स्याद्यधिकारस्थत्वेन, स्यादिना च नाम विनाऽनुपपद्यमानेन "नाम्नः" इति पदस्याक्षेपो भवति, येन विना यदनुपपन्नं तेन तदाक्षिप्यते इति न्यायात्, तच्च विशेष्यं सर्वादेरिति च विशेषणम्, ततश्च "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया सर्वाद्यन्तस्य नाम्न इत्यर्थ इति न्यासकारव्याख्यानुसारं "परमसर्वस्मै" इत्यादावेव स्मायादेशः प्राप्नोति न तु 'सर्वस्मै' इत्यादौ पूर्वस्याभावेन सर्वाद्यन्तत्वाभावात्, अनेन न्यायेन चैकस्मिन्नपि सर्वशब्दे सर्वाद्यन्तत्वकार्यस्यातिदेशाद् भवति स्मायादेशः ।

अत्रांशे ज्ञापकं तु "ह्निणोरप्विति व्यौ" [ ४. ३. १५. ] इति सूत्रेण यत्वविधानम्, तद्धि यन्तीत्यादौ "धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये" [ २. १. ५०. ] इति सूत्रेण प्राप्तस्येयो बाधनार्थम्, अनेन चेयादेश इवर्णान्तस्य विधीयते न चेण्धातुरिवर्णान्त इति तस्याप्राप्त्या "इवर्णादेरस्वे स्वरे यवरलम्" [ १. २. २१. ] इत्यनेनैव यादेशे सिद्धे व्यर्थमेव तत् स्यादित्येकस्मिन्नपि तदन्तत्वं कल्पयतीति इण्धातोरिवर्णान्तत्वं भवति, ततश्चेयादेशो मा भूदिति यविधानचारितार्थ्यमिति ॥ ५ ॥

## *आद्यन्तवदेकस्मिन्* ॥ ६ ॥

त०—अत्र एकस्मिन्नित्यत्रैकपदस्य संख्यापरत्वेन व्याख्यानं कैश्चित् कृतं, तन्न शोभनम्—बहुषु सत्स्वपि एकस्य विद्यमानत्वेन तत्राप्येकस्मिन्नेवाद्यन्तवद्भावः स्यादिति तन्मात्रे कार्यप्रसक्तिः, तथा च सभासन्नयनशब्दे आकारस्यादित्वे तस्य 'दु' संज्ञा स्यादिति तत्र भव इत्यर्थे "दोरीयः" [ ६. ३. ३२. ] इतीयप्रत्ययः स्यात् । तथा दरिद्राधातोरिकारस्याप्यन्तत्वं स्यादिति तत इवर्णान्तलक्षणोऽल् प्रत्ययः स्यात् । किञ्च आद्यन्तवदित्यस्य 'आदित्वेनान्तत्वेन च प्रकल्प्य' इति व्याख्यानमादिवत् अन्तवदित्यर्थकं प्रथमान्ताद् वत्प्रत्यय इत्याशयकं प्रतिभाति, तदपि न साधु—एकस्मिन्नित्यस्य सप्तम्यन्तस्योपमेयत्वेन उपमानभूतादपि तस्या एव विभक्तेरौचित्यादुपमानोपमेययोः समानविभक्तित्वस्य सर्वसम्मतत्वात्, भिन्नविभक्तिकत्वे चोपमानोपमेयभावो न स्यात्, स्पष्टं चेदं सर्वम् "आद्यन्तवदेकस्मिन" [ पा० १. १. २१. ] इति सूत्रे कैयटे, तथा हि—एकशब्दोऽसहायवाची, न संख्यावाची, बहुष्वपि व्यवस्थितैकत्वसंख्यास्तीति किमेकस्मिन्नित्यनेन कृतं स्यात्?, एकस्मिन्नित्युपमेये सप्तमीनिर्देशात् आद्यन्तवदिति सप्तम्यन्ताद् वतिर्विज्ञायते, यथा मथुरावत् पाटलिपुत्रे प्राकार इति । द्वयोर्ह्युपमानोपमेययोराधाराधेयभावसम्बन्धबोधनाय वाक्यं प्रयुज्यते, यदि च तयोर्भिन्नविभक्तिकत्वं स्यात् तदोपमानोपमेयभाव एव न गम्येतेति । व्याख्यातं चेदं पूर्वोक्ताशयपरत्वेनोद्द्योते नागेशेन । तथा चाद्यन्तयोः सतोरिवेत्याद्यन्तवत् इत्यर्थः । अत्र मतुप्रत्ययान्तत्वेन व्याख्यानमपि न मनोहरम्, अस्यातिदेशशास्त्रत्वेनेवार्थस्यैव वतेर्युक्तत्वात्, मत्वर्थीयमतुप्रत्ययान्तमास्थाय आद्यन्तयोः सतोरिव कार्यं मन्तव्यमिति इवार्थत्वेन व्याख्यानं च कथं सङ्गच्छेत?, तथा च पूर्वापरविरुद्धमिवेदं स्यात् । अस्य च न्यायस्य लोकसिद्धत्वमेवेति नात्र ज्ञापकापेक्षा तथापि अभ्युच्चयाय ज्ञापकमप्युपन्यस्तम्, लोकसिद्धत्वं चास्याग्रे प्रतिपादयिष्यते । आदिवद्व्यपदेशांशेऽस्य न्यायस्यानित्यत्वमपि कैश्चिदुक्तम्, तत्फलं च 'ईये, ईयाते' इत्यादिरूपसिद्धिरिति कथितम्, तदपि न मनोहरम्, अनित्यत्वज्ञापकोपन्यासं विना तादृशरूपाणामसिद्ध्या तदनुरोधेनानित्यत्वकल्पनस्यायुक्तत्वात्, बृहद्वृत्त्यादौ 'अयांचक्रे' इत्यस्यैवोदाहृतत्वात्, एकत्रैव लक्ष्ये नित्यत्वानित्यत्वयोरुभयोराश्रयणस्यानौचित्याच्च, यत्तु 'ईये' इत्यादिरूपाणां निराकरणाभावेन 'अप्रतिषिद्धं संमतं भवति' इति न्यायात् तेषां सम्मतत्वमित्युक्तं, तदपि न, तेषां क्वापि प्रसिद्धत्व एव तन्निरासस्यावश्यकत्वमिति तदनिरासेन तेषामनभिधानत्वमेव स्वीकार्यम्, पाणिनीये व्याकरणे च "आद्यन्तवदेकस्मिन्" [ पा० सू० १. १. २१. ] इति सूत्रेऽस्य सूत्रस्याव्यापकत्वेन केवलमाद्यन्तापदिष्टकार्यमात्रसाधकत्वेन व्यापकं वचनमाश्रितमेतत्स्थाने, तद्धि 'व्यपदेशिवदेकस्मिन्' इति । तथा हि भाष्यम् "तत्र व्यपदेशिवद्वचनम्, तत्र व्यपदेशिवद्भावो वक्तव्यः, व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम्, किं प्रयोजनम्? एकाचो द्वे प्रथमार्थम्, वक्ष्यति एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देश इति, तस्मिन् क्रियमाणे इहैव स्यात् 'पपाच, पपाठ', 'इयाय, आर' इत्यत्र न स्यात्, व्यपदेशिवदेकस्मिन् कार्यं भवतीति सिद्धं भवति" इति । अयमाशयः—'आद्यन्तवदेकस्मिन्' इत्येतावत्युक्ते हि यत्रादित्वव्यवहारोऽन्तत्वव्यवहारो मुख्यो न प्राप्नोति तत्र तद्व्यवहारनिमित्तकार्यं स्यादित्येव लभ्यते । यत्रैकस्मिन् समुदायव्यवहारनिबन्धनं कार्यमिष्टं तन्न स्यात्, यथा "आद्योऽश एकस्वरः" [ ४. १. २. ] इत्यनेन अनेकस्वरस्य धातोरेकस्वरस्यांशस्य द्वित्वं विधीयते, तत्र एकस्वरशब्दे बहुव्रीहिः, अन्यथा स्वरमात्रस्यैव द्वित्वं स्यात्, न तु स्वरविशिष्टस्यांशस्य, तथा च एकः स्वरो यत्रेत्यर्थेऽन्यपदार्थस्य समुदायस्यावश्यकत्वेन 'इयाय, आर' इत्यादौ द्वित्वं न स्यात्, तत्र धातोः स्वरमात्ररूपत्वात्, न च स व्यवहारः [ एकस्वरत्वव्यवहारः ] प्रकृतेन न्यायेन प्राप्त इति तदर्थं व्यपदेशिवदेकस्मिन्निति वक्तव्यम् । एवं प्रत्ययावयवे प्रत्ययत्वव्यवहारस्य प्रत्ययेऽपि प्रत्ययावयवत्वव्यवहारादेश्च तत्र तत्रावश्यकस्य सिद्ध्यर्थमपीदं वक्तव्यम् । अस्य चायमर्थः—निमित्तसद्भावान्मुख्यो व्यपदेशो यस्यास्ति स व्यपदेशी, यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते । अत्र च न ज्ञापकाद्यपेक्षेत्यपि "अवचनाल्लोकविज्ञानात् सिद्धम्" इति वार्तिकेनोक्तं तत्रैव भाष्ये, तच्च बहुभिर्दृष्टान्तैः प्रसाधितम् । तत्रायं निष्कर्षः—यथा बहुषु पुत्रेषु सत्सु 'अयं मे ज्येष्ठः, अयं मे मध्यमः, अयं मे कनिष्ठः' इत्येतदुपपन्नं भवति, तथैकस्मिन्नपि 'अयमेव ज्येष्ठः कनिष्ठो मध्यमो वा' इति व्यवहारः क्रियत एव । यथा वा बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते, तथा याऽप्यग्रे प्रसोष्यते साऽपि काचित् पूर्वोत्पन्नेन पुत्रेण हन्यत इति तत्र प्रथमगर्भेण हतेति मुख्यः प्रयोगः, किन्तु या नापि

प्रसूता नापि प्रसोष्यते साऽपि कुक्षिस्थेन गर्भेण हता सती प्रथमगर्भेण हतेत्युच्यते, तत्र तस्या एव गर्भान्तरधारणयोग्यताऽध्यवसायेन भाविगर्भापेक्षया प्रथमगर्भेण हतेति व्यपदेशः; स्त्र्यन्तरेषु वा बहुपुत्रत्वे सति आद्यगर्भस्य प्रथमव्यपदेशदर्शनात् तथाविधस्य प्रथमगर्भव्यपदेशः, गर्भपदमत्रापत्यवाचि । यथा वा कदापि पूर्वमनागतोऽग्रेऽप्यनाजिगमिषुः कथयति इदं मे प्रथममागमनमिति, तत्रान्यसम्बन्धिषु बहुष्वागमनेष्वाद्यस्यागमनस्य प्रथमत्वादेकस्मिन्नप्यागमने प्रथमत्वव्यवहारः, तथा आद्यन्तहीनेऽपि अन्तत्वादित्वव्यवहारः, अन्यस्मिन्नसत्यपि एकस्वरवत्त्वव्यवहारादिश्च लोकत एव सिद्ध इति नात्र ज्ञापकापेक्षेति । एवं च लोकसिद्धेनानेन न्यायेनेण्धातोः इवर्णान्तत्वे सिद्धे इयादेशेन भाव्यमिति तद्बाधनार्थं "ह्विणोरप्विति व्यौ" [ ४. ३. १५. ] इति यत्वविधानमपि सार्थकम् । कश्चित्तु नास्ति पूर्वो यस्मात् स आदिः नास्ति परो यस्मात् सोऽन्त इत्याद्यन्तलक्षणं विधायैकस्मिन्नपि तस्य [ आदित्वस्य अन्तत्वस्य च ] सम्भवेन नायं न्याय आवश्यक इत्याह । भाष्यकारस्तु अन्यस्मिन् सत्येवादित्वादिव्यवहारस्य लोकतो लाभाद् वचनमारब्धव्यमेवेत्याह । यद्यपि पूर्वोपदर्शितरीत्या लौकिकेन व्यपदेशिवद्भावेनैकस्मिन्नपि आद्यन्तव्यवहारः सिद्ध एव, तथापि गौणत्वात् तस्य व्यवहारस्य गौणमुख्यन्यायानुसारं तत्र कार्येण न भवितव्यमिति कस्यचित् सन्देहः स्यादिति तं प्रति वचनस्यावश्यकत्वमेवेति तात्पर्यम् ॥

अत्र नव्या अन्तत्वादित्वासहायत्वादीन्येवं परिष्कुर्वन्ति– अन्तत्वं यत्किञ्चिद्विशिष्टत्वम्, वैशिष्ट्यं स्वघटकत्व-स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसम्बन्धेन । आदित्वं यत्किञ्चिद्विशिष्टत्वम्, वैशिष्ट्यं च स्वघटकत्व-स्वघटकवर्णध्वंसाधिकरणक्षणावृत्तित्वैतदुभयसम्बन्धेन । एवं मध्यमत्वं च स्वघटकत्व-स्वघटकवर्णप्रागभावाधिकरणक्षणवृत्तित्व-स्वघटकवर्णध्वंसाधिकरणक्षणवृत्तित्वैतत्त्रितयसम्बन्धेन यत्किञ्चिद्विशिष्टत्वम् ।' यथा– रामशब्देऽकारस्यान्तत्वं, तत्र स्वं–समुदायः 'राम'रूपः, तद्विशिष्टत्वमकारे स्वघटितत्वेन [समुदायान्तर्गतत्वेन], स्वघटकवर्णानां रेफादीनां यः प्रागभावाधिकरणक्षणः, तत्रावृत्तित्वेन च सिद्धम् । एवं तत्रैव शब्दे रेफस्यादित्वमपि, तस्यापि तत्समुदायविशिष्टत्वात्, वैशिष्ट्यनियामकयोः स्वघटकत्वस्वघटकवर्णध्वंसाधिकरणक्षणावृत्तित्वसम्बन्धयोः सत्त्वात्, अस्ति हि समुदाये रेफघटितत्वम्, रेफे च समुदायघटकाकारादिवर्णध्वंसाधिकरणक्षणावृत्तित्वम् । एवमाकारादौ मध्यमत्वञ्च, समुदायस्याकारादिघटितत्वात्, स्वघटकान्तिमवर्णप्रागभावाधिकरणक्षणवृत्तित्वस्य स्वघटकरेफध्वंसाधिकरणक्षणवृत्तित्वस्य च सत्त्वात् । असहायत्वं च–अतिदिश्यमानधर्मवदसमभिव्याहृतत्वे सति अतिदिश्यमानधर्मवद्घटकत्वे सति अतिदिश्यमानधर्मवद्घटितत्वम् । तेन 'सभासन्नयन'शब्दे 'भा' शब्दाकारस्य नादित्वमसहायत्वाभावात्; अतिदिश्यमानसभासन्नयननिरूपितादित्वधर्मवत्सभासमभिव्याहृतत्वेन तदसमभिव्याहृतत्वाभावात्, न वा सभासन्नयनशब्दे 'द्रु'त्वातिदेशः, अतिदिश्यमानद्रुत्वधर्मवद्भासन्नयनशब्दघटकत्वेन द्वितीयविशेषणाभावात्, न वा आसन्नयनशब्दे नामत्वातिदेशः, अतिदिश्यमाननामत्वधर्मवत्सभासन्नयनघटकत्वेन विशेष्यांशाभावात् । यद्यपि सभासन्नयनशब्दे द्रुत्वादिदेशाभावायैकस्यापि विशेषणस्य शक्तत्वं तथापि तत्तद्धर्मातिदेशभेदेनांशत्रयस्यापि साफल्यम् । एवं दरिद्राशब्दघटकेकारे न दरिद्रानिरूपितान्तत्वम्, न वा दरिशब्दे धातुत्वम्, न वा दरिद्राशब्दे इवर्णान्तत्वम्, असहायत्वाभावात्, । एवं प्रकाराः परिष्कारा विस्तारभयान्न प्रदर्शिताः । नामविषयेऽन्तवद्भावस्योदाहरणं यदुक्तं 'सर्वस्मै' इति तस्यायमाशयः–"अत आः स्यादौ" [ १. ४. १. ] इति सूत्रस्थं 'स्यादौ' इति पदं पादसमाप्तिं यावदनुवर्त्तते, स्यादिप्रत्ययश्च नाम विनाऽनुपपन्न इति तेन 'नाम्नः' इति पदमप्याक्षिप्यते, ततश्च "सर्वादेः स्मै-स्मातौ" [ १. ४. ७. ] इति सूत्रे सर्वादेरिति नाम्न इति च षष्ठ्यन्तं पदद्वयमुपस्थितम्, तयोश्च पदयोः संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति न्यायेनेह वैयधिकरण्यासंभवेन च सामानाधिकरण्येनैवान्वयः । तथा च सर्वादेरिति पदं विशेषणमेव नामापेक्षया व्याप्यवृत्तित्वादिति "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया सर्वाद्यन्तान्नाम्नः परयोर्ङेङस्योः सर्वाद्यन्तनामसम्बन्धिनोर्वा ङे-ङस्योः स्मै-स्मातावादेशावित्यर्थो लभ्यते, ततश्च 'परमसर्वस्मै' इत्याद्येव मुख्यमुदाहरणम्, सर्वस्मै इत्यत्र सर्वाद्यन्तत्वाभावान्न प्राप्नोतीत्येतन्न्यायापेक्षेति । पाणिनीयतन्त्रे च *व्यपदेशिवद्भावोऽप्रातिपदिकेन* इत्येतन्न्यायापवादभूतो न्यायः पठ्यते, तथा च नामविषये नायं न्यायः प्रवर्तते, 'सर्वस्मै' इत्यादौ च न दोषः, सर्वादेः सर्वनामसंज्ञा विधीयते, ज्ञापकेन च सर्वाद्यन्तस्यापि संज्ञा भवतीत्युभयोः कार्यं सिद्ध्यतीति । एवमादिवद्भावोऽपि नामविषये न भवति "इन्द्रे" [ १. २. ३०. ] इति सूत्रस्थानीयस्य "इन्द्रे च" [ पा० सू० ६. १. १२४. ] इति सूत्रस्येन्द्रशब्दावयवे स्वरे परे प्रवृत्तिरित्याश्रीयत इति यथा 'इन्द्रयज्ञः' इति शब्दे परे प्रवर्तते तथेन्द्रशब्दे परेऽपीति न काऽप्यनुपपत्तिः, स्वमते च न्यासकारव्याख्यामनुसृत्य 'इन्द्रादौ शब्दे परे' इत्यर्थमाश्रित्य नामविषये आदिवद्भावोदाहरणतया तद्व्याख्यातम् । वस्तुतस्तु– "सप्तम्या आदिः" [ ७. ४. ११४. ] इति परिभाषाऽपि वर्णविषये एव प्रवर्तते, न नामविषये इत्येतत्सूत्रस्थवृत्तिग्रन्थेनानुमीयते, तथाहि–तत्र "इन् ङी-स्वरे लुक्" [ १. ४. ७९ ] "द्युक्तोपान्त्यस्य शिति स्वरे" [ ४. ३. १४. ] "उत औविंति

व्यञ्जनेऽद्वेः" [ ४. ३. ५९. ] इत्यादिसूत्राणां वर्णविषयाणामेवोदाहृतत्वम्, युक्तं चैतत् स्वरे व्यञ्जने वा परे विधीयमानं कार्यं तन्मात्रे सत्येव प्रवर्तेत, नाधिके-यथा 'अघुट्स्यादौ स्वरे परे विधीयमानं कार्यं स्वरमात्ररूपे स्यादावेव स्यात्, नाधिके इति तत्र तदादौ प्रवृत्त्यर्थमिदमारब्धम्; "इन्द्रे" [ १. २. ३०. ] इत्यादौ च इन्द्रयज्ञशब्देऽपि परे प्रवृत्तौ बाधकाभावः, तत्राऽपीन्द्रशब्दस्य सत्त्वात्, नहि तत्र विशेष्यं किञ्चिदस्ति येन तदन्तविधिप्रसक्तिरिति तदन्तविध्यपवादभूताया अस्याः परिभाषायाः प्रवृत्तेरयोग्यत्वात् *उत्सर्गसमानदेशा अपवादाः* इति न्यायात्। पाणिनीये च "सप्तम्या आदिः" [ ७. १. ११४. ] इति परिभाषास्थाने स्पष्टमेव "यस्मिन् विधिस्तदादावल्ग्रहणे" इति पठ्यते, तथा च अल्पदस्य तत्र वर्णमात्रार्थतया वर्णग्रहणमात्रमेव तद्विषय इति स्पष्टम् ॥ ५ ॥

## *प्रकृतिवदनुकरणम्* ॥ ६ ॥

सि०—प्रकृतिः-अनुकार्यं शब्दस्वरूपम्, **अनुकरणं** स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकम्, तत् **प्रकृतिवत्** अनुकार्यवृत्तिधर्मवद्भवतीति न्यायार्थः; तथा चानुकार्ये ये धर्मा धातुत्वादयस्तेऽनुकरणेऽसन्तोऽप्यतिदिश्यन्त इति तन्निमित्तकानि [प्रकृतिमुद्दिश्य विहितानि] कार्याणि तत्र कार्याणीत्यर्थः। तथा च "परिव्यवात् क्रियः" [ ३. ३. ३७. ] इत्यत्र धात्वनुकरणस्य 'क्री' इत्यस्य धातुवद्भावात् धातुकार्यं तत्र भवतीति "संयोगात्" [ २. १. ५३. ] इतीयादेशः सिध्यति, वत्करणाच्च सर्वथा धातुत्वाभावेन धातुत्वनिबन्धनास्त्यादयो न भवन्ति, किन्तु स्यादय एव; किञ्च तत एव कारणादस्य नामत्वमपि, अन्यथा "अधातुविभक्तिवाक्यमर्थवन्नाम" [ १. १. २७. ] इति नामसंज्ञाविधायके सूत्रे धातोः पर्युदस्तत्वेन नामसंज्ञाऽपि दुर्लभा स्यात्। अत्र च ज्ञापकं 'क्रियः' इति निर्देशनमेव, एतन्न्यायाभावे च तादृशनिर्देशस्यासंगतत्वमेव स्यात्, एतन्निर्देशादेव च यत्किञ्चित्कार्याय प्रकृतिवद्भावो भवति यत्किञ्चित्कार्याय नेत्यपि ज्ञायते, तथाहि—तत्रैवेयादेशाय प्रकृतिवद्भावो भवति, नामत्वाय न भवति। तथा चास्य न्यायस्यास्थिरत्वं स्पष्टमेव, अत एव "तदः सेः स्वरे पादार्था" [ १. ३. ४५. ] इति सूत्रे 'तद्' शब्दस्य सर्वादित्वाभावे तस्य सर्वादित्वनिमित्तकं कार्यं तदन्तर्गणभूतत्यदादित्वनिमित्तकं च कार्यं न भवति, अन्यथा अनेन न्यायेन प्रकृतिवत्त्वातिदेशे तस्मादिति निर्देशः स्यादिति ॥ ६ ॥

## *प्रकृतिवदनुकरणम्* ॥ ६ ॥

त०—अर्थभेदात् लोकेऽनुकार्यानुकरणयोर्भिन्नतयैव प्रतीतेः शास्त्रेऽनुकरणेऽनुकार्योद्देश्यककार्यार्थमवश्यं यत्नः कर्तव्यः, तदर्थमयं न्यायः पठ्यते। अनेन च न्यायेन तत्र-अनुकरणे, प्रकृतिवत्त्वम्-अनुकार्यधर्मवत्त्वम्, अतिदिश्यते। अतिदेशस्थले यद्यपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभाव इति स्वभावसिद्धम्, तथापि अनेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्यं न विनिवर्त्यते धर्मिग्राहकमानात्। "परिव्यवात् क्रियः" [ ३. ३. २८. ] इति हि न्यायस्यास्य ग्राहकं मानम्, तत्र 'क्रियः' इति निर्देशस्यातिदिश्यमानधर्मधातुत्वविरुद्धस्वाश्रयधर्मधातुभिन्नत्वनिमित्तकनामत्वनिमित्तकस्याद्युत्पत्तिरूपकार्याभावेऽनुपपद्यमानत्वेन एतदतिदिश्यमानधर्मविरुद्धकार्यस्यापि सत्त्वमभ्यनुज्ञायते। स्पष्टं चैतत्। "क्षियो दीर्घात्" [ पा० सू० ८. २. ४६. ] इति सूत्रे महाभाष्ये, तेन हि सूत्रेण दीर्घीभूतात् क्षियः [ क्षि-धातोः ] परस्य क्तयोस्तस्य नत्वं विधीयते, तत्र च यथा "क्षेः क्षी चाऽध्यार्थे" [ ४. २. ७४. ] इति सूत्रे ह्रस्वात्परस्य नत्वव्यावृत्त्यर्थम् 'अध्यार्थे' इति पठ्यते तथा दीर्घादिति पठ्यते, तस्य प्रयोजनकथनावसरे 'क्षियः' इति निर्देशस्यानुपपद्यमानत्वमुत्थाप्य इत्थमुक्तम्—"नात्र निर्देशः प्रमाणं शक्यं कर्तुम्, यथैव ह्यत्राप्राप्ता विभक्तिः, एवं मियङ[इया] देशोऽपि, नात्राप्राप्ता विभक्तिः, सिद्धा विभक्तिः प्रातिपदिकादिति [ नामत्वेन विभक्तिः सिद्धेति भावः ] कथं प्रातिपदिक[नाम]संज्ञा, अर्थवत् प्रातिपदिकमिति। ननु चाधातुरिति प्रतिषेधः प्राप्नोति, नैष धातुः, धातोरेषोऽनुकरणम्; यद्यनुकरणमियङादेशो न प्राप्नोति, प्रकृतिवदनुकरणं भवतीतीयङादेशो भविष्यति; यदि प्रकृतिवदनुकरणं भवतीत्युच्यते, स्वाद्युत्पत्तिर्न प्राप्नोति; एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्त्तन्ते, + + + + + +।" एतेन च प्रकृतिकार्यस्य स्वाश्रयकार्यस्य च तत्र सत्त्वमनुज्ञातम्। तथा च प्रकृतिकार्यमियादेशः स्वाश्रयकार्यं नामत्वनिमित्तकस्वाद्युत्पत्तिरित्युभयं भवति। अन्ते चास्य न्यायस्यानित्यत्वमपि ध्वनितम्, तथाहि—अथाप्येतन्नास्ति—प्रकृतिवदनुकरणं भवतीति, एवमपि न दोषः, धातोरजादौ यद्रूपं तदनुक्रियत इति। अस्याशय इत्थं प्रदर्शितः कैयटेन—इहाऽनुकर्त्ता कदाचित् सामान्यमनुकरोति कदाचिद् विशेषम्, तत्र यदा सामान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात् प्रकृतावदृष्टत्वादनुकरणेऽप्यभावः; यदा तु विशेषोऽनुक्रियते, तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्त्तते। तत्र यदा धात्वधातुसामान्यं क्षिमात्रमनुक्रियते तदा इयङोऽप्राप्तिरिति चिक्षियतुरित्यादौ कृतेयङादेशस्येदमनुकरणमिति। अयं भावः—यदि नामत्वधातुत्वादिविशेषं मनसि निधायानुक्रियते कश्चिच्छब्दस्तर्हि तत्र तद्विशेषकृतं कार्यमपि स्यादेव; यदि च न विशेषोऽनुक्रियतेऽपि तु शब्दत्वेन सामान्यधर्मेणानुक्रियते तदा तत्र विशेषनिमित्तकं कार्यं न भवतीति लक्ष्यानुसारादुभयोः पक्षयोः स्वत एव लाभेन नास्य न्यायस्यावश्यकत्वम्। स्याद्वादवलेनो-

भयोः पक्षयोश्च संभव एव, अयमेवार्थः कैश्चित् शब्दार्थानुकरणं शब्दानुकरणं चेत्यनुकरणस्य द्वैविध्यमाश्रित्य साधितः। तदाशयश्च—यत्रानुकार्या-ऽनुकरणयोर्भेदविवक्षा तत्र शब्दः प्रकरणादनुकार्योऽर्थो यस्य तत् शब्दार्थम्, तच्च तदनुकरणमिति शब्दार्थानुकरणम्; यत्र तु तयोर्भेदविवक्षा तत्रानुकार्यरूपस्यार्थस्यानुकरणस्वरूपे एवान्तर्हितत्वात् शब्द एवानुकरणमिति शब्दानुकरणम्। तथा च शब्दार्थानुकरणस्थले प्रकृतिकार्यं भविष्यति, न शब्दानुकरणस्थल इति ॥ ६ ॥

## ※एकदेशविकृतमनन्यवत्※ ॥ ७ ॥

सि०—"देवौ' इत्यादौ विभक्त्या सह सन्धिकार्ये कृते "तदन्तं पदम्" [१. १. २०.] इति पदत्वं न प्राप्नोति, "प्रत्ययः प्रकृत्यादेः०" [७. ४. ११५.] इति परिभाषया प्रकृतेरेव तदन्तत्वं युक्तमिति प्रकृतेरिह विकृतत्वात् तस्य प्रकृतित्वेनाश्रयितुमशक्यत्वात्, अतस्तत्र पदत्वसिद्ध्यर्थं न्यायमाह—

**एकदेशविकृतमिति**—एकदेशः समुदायस्यावयवः कश्चिद् विकृतो यस्मिन् तदेकदेशविकृतम्, यन्निष्ठविकारप्रतियोगी एकदेश इति यावत्, यथा 'देवौ' इत्यत्र स्यादिः 'औ'इति तद्रहिता प्रकृतिश्च 'देव्' इति, तत्र चैकदेशो विकृतः—विकारेण सम्बद्धः, तत्र देविति वकारान्तनिष्ठविकारप्रतियोगी देवेत्यकारान्तस्यैकदेशोऽकारः, तथा च यदेकदेशविकृतः, अर्थात् यदेकदेशप्रतियोगिकविकारविशिष्टो यो भवति स ततोऽन्यो न भवतीत्यर्थः। तथा च देवशब्दैकदेशाकारप्रतियोगिकविकारविशिष्टो देविति वान्तः सोऽकारान्तादन्यो न भवतीति तत्र प्रकृतित्वं सिध्यति। न च ※ भूतपूर्वकस्तदुपचारः ※ इत्यनेन सिद्धिरिति नात्रैतन्न्यायावश्यकतेति वाच्यम्, तेन न्यायेन समुदायवृत्तिधर्मस्य—धातुत्वादेः साम्प्रतिकाभावे सति भूतपूर्वस्याऽपि ग्रहणेन तदुपचारप्रवर्तकत्वात्, एतच्चान्यत्र विवेचयिष्यते। न च 'अनन्यवत्' इत्यनेनान्यसादृश्यं निषिध्यते, न त्वन्यत्वमिति तत्रान्यत्वं स्यादेवेति वाच्यम्, यतोऽन्यसादृश्यस्यापि निषेधेऽन्यत्वाभावः सुतरामेव सिध्यति, अत एव विकृतादप्यर्थबोधः सिध्यति, अन्यथा शक्ततावच्छेदिकाया दकारोत्तराकारोत्तरवकारोत्तराकाररूपाया आनुपूर्व्या अज्ञानात् ततो बोधो न स्यात्। अत्र "वाता-ऽतीसार-पिशाचात् कश्चान्तः" [७. २. ६१.] इति सूत्रे 'अतीसार'शब्दस्य कृतोपसर्गदीर्घस्य ग्रहणेऽप्यकृतदीर्घस्यापि 'अतिसार'शब्दस्य ग्रहणात् तत्रापि 'अतिसारकी' इति रूपं भवतीति केचित्। वस्तुतस्तु—जराशब्दस्य यथा टाविभक्तौ 'जरसा' इति रूपं "जराया जरस् वा" [२. १. ३.] इति जरसादेशे कृते भवति तथा निर्जरशब्दस्यापि टाविभक्तौ 'निर्जरसा' इति रूपं भवति, तत्राऽप्यनेन न्यायेन 'जर' इत्यस्य जरात्वातिदेशात्। एकदेशपदं चोपलक्षणं भूयोऽवयवविकाराभावस्य, तथा च यावताऽवयवविकारेण तत्त्वं न विहन्यते तावदवयवविकारे सत्यपि नान्यत्वमित्यर्थः; तेन यथा प्र-निपूर्वस्य हन्तेः क्ते "यमि-रमि०" [४. २. ५५.] इति सूत्रेण नलोपे सति प्रणिहत इति रूपमेतन्न्यायबलेन तत्र हन्रूपत्वस्यातिदेशाद् भवति, तथा प्रणिघ्नन्तीत्यादौ "गम-हन-जन०" [४. २. ४४.] इत्यल्लोपे "हनो ह्नो घ्नः" [२. १. ११२.] इति घ्नादेशे कृतेऽपि हन्रूपत्वातिदेशात् "नेर्ङ्गादापत०" [२. ३. ७९.] इति नेर्णत्वं भवत्येव। न च धातूपसर्गयोः कार्यमन्तरङ्गमिति न्यायेन पूर्वमेव नेर्णत्वे कृते पश्चात्साधनयोगे नात्रास्य न्यायस्यावसर इति वाच्यम्, "णषमसत् परे०" [२. १. ६०.] इति वचनात् परे स्यादिविधौ च कर्तव्ये णत्वशास्त्रस्यासत्त्वेनाप्रवृत्तेः। यत्र चार्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ नास्य न्यायस्य प्रसङ्गस्तत्र तु स्थानिवद्भावेनैव निर्वाहः। अयं च न्यायः "सख्युरितोऽशावैत्" [१. ४. ८३.] इति सूत्रे 'इत' इत्यनेन ज्ञाप्यते, तद्धि सखीशब्दस्यैत्वनिषेधार्थम्, एतन्न्यायाभावे च सखीशब्दस्य दीर्घत्वेनैत्वप्राप्तिरेव नेति तन्निषेधार्थस्य तस्य वैयर्थ्यं स्पष्टमेवेति तद्व्यर्थं सन्न्यायमिमं ज्ञापयति। वस्तुतस्तु नात्र न्याये ज्ञापकापेक्षा अस्य लोकसिद्धत्वात्, भवति हि लोके छिन्नपुच्छे शुनि श्वत्वव्यवहारः स्वभावत एव, तथैकदेशविकृतेऽपि तत्त्वव्यवहारो भविष्यत्येव, एवं च लोकसिद्धेनानेन न्यायेन सखीशब्दस्यापि सखिशब्दत्वेन ग्रहणं स्यादिति 'इत' इत्यस्य सार्थक्यं स्पष्टमेव। लक्ष्यानुरोधाच्च क्वचिदस्यानाश्रयणमपि भवति, सूचितं चैतत् "संख्याऽहर्दिवा०" [५. १. १०२.] इति सूत्रे लिपी-लिब्योरुभयोर्ग्रहणेन, तेन 'अभीयात्' इत्यत्र अभीत्युपसर्गस्य 'ईयात्' इत्यनेन संधौ जाते "आशिषीणः" [४. ३. १०७.] इति ह्रस्वो न भवति, अन्यथा 'अभ्-ईयात्' इत्येकदेशविकृते 'अभ्' शब्दे एकदेश विकृतत्वेनोपसर्गत्वमादाय तत्प्रवृत्तिः स्यादिति ॥ ७ ॥

## ※एकदेशविकृतमनन्यवत्※ ॥ ७ ॥

त०—अत्र केचिद् विकृतपदं विसदृशपरं व्याचख्युः, तथा च तेषां व्याख्यानम्—एकस्मिन् प्रदेशे वैसदृश्येनान्यत्वं न गण्यत इत्यादि। तत्रायं विचारः स्फुरति—विकृतपदं कथं विसदृशमित्यर्थं बोधयेत्? किञ्चेह विसदृशत्वं स्वाभाविकं गृह्यते विकारकृतं वा? नाद्यः—तथा सति 'सकृत्, शकृत्' इत्यादिरूपाणां स्वाभाविकैकदेशविसदृशानामन्यत्वं न स्यात्; विकारकृतमिति चेत्? तर्हि विकारापन्नमित्यर्थं विहाय विसदृशमित्यर्थकरणे किं मूलम्?, यच्चोक्तम्—

'ननु विकृतमिति शब्दस्य विकारापन्नमिति व्याख्या प्राक्तन्यां न्यायवृत्तावस्ति सैव युष्माकमप्यत्र कर्तुं युक्ता, तत् कथं वैसदृश्येनेत्यूचे, उच्यते–विकारापन्नमिति व्याख्याने भूतपूर्वकन्यायेन प्रकृतन्यायविषयस्य सर्वथाऽपहारात् प्रकृतन्यायो निर्विषय एव स्यात्' इत्यादि, तदपि न मनोरमम्–किं व्याख्याभेदेन लक्ष्यमपि भिद्यते ? उत लक्षणमात्रम्? नाद्यः–लक्ष्यस्य लक्षणाननुसारित्वात्, लक्ष्याणि पूर्वस्थितान्यनुसृत्यैव हि लक्षणानि क्रियन्ते सर्वैः, नहि पूर्वं लक्षणं ततो लक्ष्यमिति, ततश्चास्य न्यायस्य यत्र वास्तविको विषयो निर्जरशब्दादिगत'जर'शब्दादिस्तत्र किं भवद्रीत्या भूतपूर्वकन्यायस्य नावतारः ? अस्ति चेत् किमनेन व्याख्यानेन कृतं स्यात् । किञ्च अतिसारकीत्यस्य प्रकृतन्यायस्यासाधारणोदाहरणत्वं यदुक्तं तदपि न शोभनम्, अत्र विकारकृतमेव वैसदृश्यं ग्राह्यमिति पूर्वमुपपादितत्वेन 'अतिसार'शब्दे विकारकृतं वैसदृश्यं नास्ति, नहि दीर्घस्य पूर्वं स्थितस्य ह्रस्वो विधीयते किन्तु ह्रस्वस्यैव दीर्घो विधीयते पाक्षिकः, इति सूत्रे ह्रस्वग्रहणे सति दीर्घे विकारकृत वैसदृश्ये सत्यपि तस्य ग्रहणमनेन न्यायेन कल्पयितुं शक्यते, प्रकृते तु "वातातीसारपिशाचात् कश्चान्तः" [ ७. २. ६१. ] इति सूत्रे दीर्घ एवातीसारशब्दे पठ्यते, तथा च नात्रानेन न्यायेन 'अतिसार'शब्दस्य ग्रहणमुचितम्, तथा सति हि तस्य ग्रहणस्येष्टत्वे ह्रस्वमेव सूत्रे पठेत् दीर्घस्यानेन न्यायेन ग्रहीतुं शक्यतया मात्रालाघवात्, न च तथा पठितमिति तस्य ग्रहणं नाभिमतं सूत्रकृतामित्यनुमीयते, वृत्तावपि तदनुदाहरणात्, अत एव "विवधवीवधाद्वा" [ ६. ४. २५. ] इति सूत्रे उभयोरेव ग्रहणं कृतं दृश्यते, अन्यथैकतरग्रहणेनानेन न्यायेनोभयोरपि ग्रहणे सिद्धे उभयोर्ग्रहणमनर्थकं स्यात्; यद्यपि तत्राऽपि विवधशब्दस्यैव ग्रहणे कृतेऽनेन न्यायेन वीवधशब्दस्यापि ग्रहणं शक्यते कर्तुमिति व्यर्थमेवोभयोर्ग्रहणं तथापि तदपि वैकल्पिकरूपयोः शब्दान्तरत्वमेवेत्यस्य विनिगमकम् । तथा च 'अतिसारकी' इति नास्योदाहरणमिति युक्तमुत्पश्यामः । एवमनित्यत्वफलप्रदर्शनावसरे यदुक्तं तैरेव–"ततश्च यथा सूरस्य मर्त्तादिभ्यो यः" [ ७. २. १५९. ] इति स्वार्थिके यप्रत्यये सूर्य इति स्यात् तथा शूरस्य शूर्य इति न स्यात्" इति तदपि न मनोरममिति प्रतिभाति, सूर-शूरशब्दयोः सूर्यार्थत्वे सत्यप्युभयोर्भिन्नप्रकृतिकतया विकारकृतवैसदृश्याभावात् परस्परग्रहणप्रसङ्गस्यानेन न्यायेनोपपादयितुमशक्यत्वात् । यत्तु "साल्वाद् गोयवाग्वपत्तौ" [ ६. ३. ५४. ] इत्यत्रैकदेशविकृतस्यानन्यत्वात् सल्वशब्दोऽपि ग्राह्य इत्युक्तम् इति ग्रन्थेनैतादृशविषये प्रकृतन्यायप्रवृत्तिरिति सूचितं, तदपि न चारु साल्वादिति सूत्रवृत्तौ साल्वशब्दविषये नियमं प्रदर्श्य 'अयं च विभागः सल्वशब्दस्यादोरपि विज्ञेयः' इत्येतदुक्तम्, तस्यायमाशयः–साल्वसल्वयोरुभयो राष्ट्रवाचित्वेन साल्वशब्दविषये योऽयं नियमः प्रदर्शितः स यदि सल्वशब्दविषये न स्यात् तर्हि तस्मादेव शब्दादन्यत्राऽर्थे साल्वकप्रयोगस्याप्यापत्तौ वृथायं प्रयासः स्यादिति सूत्रसार्थक्याय सल्वशब्दविषयेऽप्ययं विभागः स्वीकार्य इति, तथा च नायं सामान्यतोऽस्य न्यायस्य विषयः, किन्तु सूत्रारम्भसामर्थ्यलब्ध इति नानेनान्यत्रैवंविषये तत्प्रवृत्तिः शक्या कर्तुं दीर्घोच्चारणवैयर्थ्यापातात् । किञ्च कच्छादिष्वपि साल्वशब्द एव पठ्यते इति सल्वशब्दस्य राष्ट्रवाचित्वमपि सन्दिग्धमेवेति यदि केनचित् तस्यापि राष्ट्रवाचित्वं भ्रान्त्या प्रतिपन्नं स्यात् तर्हि तत्राप्ययं विभागो ज्ञेय इत्येतावन्मात्रमेव प्रकृतवृत्तिग्रन्थस्याभिमतमित्यास्थेयमित्यलमत्रविषये बहुप्रपञ्चितेन । विकृतावयवनिबन्धनकार्ये तु नायं न्यायः प्रवर्त्तते, छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद् विकृतावयवव्यवहारस्य दुरुपपादत्वात्, अयमाशयः–एकदेशविकृतस्यानन्यत्वं तत्रैव भवति यत्र तस्य विकृतावयवस्योद्देश्यत्वेन ग्रहणं न स्यात्, नहि छिन्नपुच्छस्य शुनः श्वत्ववत् पुच्छवत्त्वमपि कैश्चिद् व्यवह्रियते । तेन राजकीयमित्यादौ राज्ञो नकारस्य ककारादेशे सति नान्तत्वाभावात् "अनोऽस्य" [ ३. १. १०९. ] इत्यकारलोपो न । एवमक्तपरिमाणग्रहणेऽपि नायं न्यायः प्रवर्त्तते, अक्तपरिमाणं च परिच्छिन्नपरिमाणम्, तेन संख्यात्वव्याप्यधर्मानयने परिमाणत्वव्याप्यधर्मानयने तद्घटितधर्मानयने च नास्य प्रवृत्तिः, तेन शतत्व-शतमुद्राघटितमञ्जूषात्वशेटकत्वशेटकपरिमितधान्यघटितमञ्जूषात्वयोश्च नातिदेशः, तत्रापि पूर्वोक्ता छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहाराभावमूलिका युक्तिरेव मानम् । ध्वनितं चेदं "येन विधिस्तदन्तस्य" [ पा० सू० १. १. ७२. ] इति सूत्रे भाष्यकैयटयोः, तथा हि–'अक' सहितानां सर्वादिशब्दानां सर्वनामादिसंज्ञाशास्त्रे ग्रहणं कर्तव्यमिति विचार प्रघट्टके–"तदेकदेशविज्ञानाद् वा सिद्धम्" तदेकदेशविज्ञानाद् वा सिद्धमेतत्, तदेकदेशभूतस्तद्ग्रहणेन गृह्यते, तद्यथा–गङ्गा, यमुना, देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुना ग्रहणेन गृह्यते, तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते, विषम उपन्यासः, इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति, य एते संख्याशब्दाः परिमाणशब्दाश्च, पञ्च, सप्त इत्येकेनाप्यपाये न भवन्ति, 'द्रोणः, खारी, आढकम्' इति नैवाधिके भवन्ति न न्यूने, केचिद् यावदेव तद् भवति तावदेवाहुः, य एते जातिशब्दा गुणशब्दाश्च, तैलं घृतमिति । खार्यामपि भवन्ति, द्रोणेऽपि, शुक्लो नीलः कृष्ण इति, हिमवत्यापि भवतिवटकणिकामात्रेऽपि द्रव्ये । इमाश्चापि संज्ञाः [ सर्वनामव्ययादिसंज्ञाः ] अक्तपरिमाणानामर्थानां क्रियन्ते, ताः केनाधिकस्य स्युरिति ।" एवं च परिच्छिन्नपरिमाणग्रहणे नैकदेशविकृतन्यायस्य प्रवृत्तिरिति भाष्यतात्पर्यमिति नागेशेन स्पष्टमुक्तं

तत्रैवोद्योते । नन्वेवमेतन्न्यायस्वीकारे "स्थानीवावार्णविधौ" [७. ४. १०९.] इति स्थानिवद्विधायकपरिभाषासूत्रस्य वैयर्थ्यमेव, अनेनैवादेशरूपविकारे सत्यपि स्थानिबुद्ध्या कार्यस्य संभवादिति चेत्? न-यत्र त्वर्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतवर्णरूपावयवत्वप्रतीत्यर्थं च तस्यावश्यकत्वात्। अयमाशयः–यत्रार्धं तदधिकं वा विकृतं तत्रायं न्यायो न प्रवर्त्तत इत्युपपादितत्वेन तादृशस्थले वर्णभिन्नविकृतावयवत्वप्रतीतिरनेन न्यायेन कर्तुं न शक्यत इति तदर्थं "स्थानीवा०" [७.४.१०९] इत्यादिसूत्रमावश्यकम् । *भूतपूर्वकस्तदुपचारः* इति न्यायश्च यत्रास्य न्यायस्य "स्थानीवा०" [७. ४. १०९.] इति सूत्रस्य च न प्रवृत्तिस्तत्र प्रवर्त्तत इति सर्वेषां विषयविभागो ज्ञेयः ॥ ७॥

## *भूतपूर्वकस्तदुपचारः* ॥ ८ ॥

सि०—पूर्वं भूतो भूतपूर्वः, स इवेति **भूतपूर्वकः**, **तदुपचारः** तस्य–सम्प्रति विद्यमानस्यभूत पूर्वस्थानेऽप्र युज्यमानस्य, उपचारः–कार्यार्थं व्यवहारः; अथवा तस्य पूर्वं प्रयुक्तस्य, उपचारः–भूतपूर्वकः, यथा पूर्वं भूतस्तथैव सम्प्रति तदभावेऽपीत्यर्थः; कार्यप्रवृत्तिसमये तत्तन्निमित्तस्यासन्निधानेऽपि तत्तद्वचनसामर्थ्यात् भूतपूर्वमपि तादृशधर्ममादाय तत् तत् कार्यं प्रवर्तनीयमिति भावः। अयं च न्यायो यत्र "स्थानीवा०" [७. ४. १०८.] इत्यादिना प्रसिद्धातिदेशशास्त्रेण कथमपि शास्त्रप्रवृत्तिनिमित्तभूतो धर्मो न लभ्यः, तेन च शास्त्रानर्थक्यशङ्का, तत्र शास्त्रारम्भसामर्थ्यादेव तथोपचारं करोतीति नात्र ज्ञापकविशेषापेक्षा; तथापि यदि ज्ञापकापेक्षा स्यात् तर्हि "ऋदुदितः" [१. ४. ७०,] इति पृथग्योग एवास्य न्यायस्य ज्ञापको बोध्यः। तथा हि–तत्र वृत्तौ पृथग्योगो भ्वादिव्युदासार्थ इत्युक्तम्, न हि घुटि परे भ्वादिर्धातुः सम्भवति, धातोर्नामत्वाभावाद् घुटश्च नाम्नो विधानात्, ततश्च भ्वादेरन्यथैव वारणसम्भवे तदर्थं योगविभागस्यानावश्यकत्वम्, तथा च सम्प्रति नाम्नोऽपि भूतपूर्वस्य भ्वादेरपि नोऽन्तो मा भूदित्येतदर्थकः पृथग्योग एतन्न्यायसत्त्वमनुमापयति । *नानिष्टार्था शास्त्रप्रवृत्तिः* इति न्यायेन यत्रैतन्न्यायप्रवृत्ताविष्टं कार्यं सम्पद्यते तत्रैवायं न्यायः प्रवर्तते, यत्र चैतत्प्रवृत्त्याऽनिष्टसम्भावना तत्र न प्रवर्तत इति न तदर्थमपि ज्ञापकापेक्षा, तेन 'विज्ञपय्य' इत्यादौ "मारण-तोपण-निशाने ज्ञश्च" [४. २. ३०.] इति कृतह्रस्वस्य ज्ञपेर्भूतपूर्वज्ञापिरूपत्वोपचाराभावात् "लघोर्यपि" [४. ३. ८६.] इत्यनेन लघूपान्त्यधातुलक्षणो णेरय् सिद्धः। एवं च न्यायस्वभावादेवानिष्टेऽर्थे औदासीन्यसिद्धावपि यदि ज्ञापकापेक्षा स्यात् तर्हि "संख्यानां र्णाम्" [१. ४. ३३.] इति सूत्रस्थं बहुवचनं ज्ञापकं बोध्यम्, तद्धि 'अष्टानाम्' इत्यत्र परत्वात् "वाऽष्टन आः स्यादौ" [१. ४. ५३.] इत्यात्वे कृते नान्तत्वाभावात् भूतपूर्वनान्तत्वमादायापि संख्यावाचिशब्दादामो नाम्भावार्थं कृतम्, अस्य न्यायस्य च जागरूकत्वे बहुवचनं विनापि भूतपूर्वोपचारे सिद्धे तद्वैयर्थ्यं स्पष्टमेव, तथा च तेन बहुवचननिर्देशेनास्य न्यायस्य क्वचिदौदासीन्यमपीत्यनुमीयत इति ॥ ८ ॥

## *भूतपूर्वकस्तदुपचारः* ॥ ८ ॥

**त०**—यत्त्वस्य न्यायस्य प्रण्यवधीदित्यत्र णत्वसिद्धिः फलमित्युक्तं, तन्न शोभनम्, तत्र "स्थानीवावर्णविधौ" [७. ४. १०९.] इत्यनेन स्थानिवद्भावेनैव गतार्थत्वादेतन्न्यायानवसरात्। न च स्थानीवेति परिभाषाद्वयमस्यैव न्यायस्य प्रपञ्च इति न तयाऽस्यान्यथासिद्धिरिति वाच्यम्, अग्रेऽस्य विषयस्य विवेचयिष्यमाणत्वात्, एवमत्र ज्ञापकत्वेन "नेर्ङ्मादा०" [२. ३. ६९.] इति सूत्रे वधेरपाठ इति यदुक्तं तदपि न चारु, नहि स्थानिन आदेशाश्च सूत्रेषु पठ्यन्ते। किञ्च तत्र वधेरपाठात् कथं न्यायो ज्ञापयितुं शक्यते? ज्ञापनं तेन विनाऽनुपपन्नेन प्रमाणसिद्धेन वस्तुना तस्याक्षेप एव, यथा दिवा भुञ्जानस्य देवदत्तस्य पीनत्वं रात्रिभोजनेन विनाऽनुपपद्यमानं रात्रिभोजनमाक्षिपतीति, नहि तथा वधेः पाठाभावानुपपत्तिः केनापि प्रमाणेन सिद्धा, सा च तदा सिद्ध्येत यदि क्वचित् प्रण्यवधीदिति प्रयोगः शास्त्रकृता कृतः स्यात्, सोऽपि च वधेर्णत्वविधायकसूत्रेऽपाठादनुपपद्यमानो भूतपूर्वकमुपचारं कल्पयेत् स्वयमेव, न च तत्र पाठाभावस्य कल्पकतोचिता, पूर्वप्रदर्शितरीत्या च तस्यापि प्रयोगस्य नानुपपद्यमानत्वं वधेरादेशत्वात्। न च न वधेरादेशत्वमपि तु प्रकृत्यन्तरमेवेदं प्रत्ययविशेषप्रकृतित्वेन नियम्यते–वधिर्हि हिंसार्थकोऽन्यत्रोच्यते स एव तत्र प्रयोक्तव्यो न हन्तिरिति तात्पर्यादिति वाच्यम्, तर्हि भूतपूर्वन्यायस्याप्यप्रसरापत्तेः, तस्माद् वधेरादेशत्वमेव स्वीकार्यं, तथैव च तत्र "इ-कि-श्तिव् स्वरूपार्थे" [५. ३. १३२.] इति इरपि सिद्ध्यति । अथ स्थानीवेत्यादयोऽस्यैव प्रपञ्च इति चेत्? तासां परिभाषाणां प्रत्यक्षसिद्धतयाऽनुमानिकेनानेन न्यायेन गतार्थत्वाभावात्, न्याया हि लोकशास्त्रव्यवहारादिभिरनुमीयन्त इत्यानुमानिकाः, स्थानीवेत्यादयश्च शास्त्रकृता स्वयमेवोक्ता इति प्रत्यक्षसिद्धाः, नहि प्रत्यक्षसिद्धमानुमानिकेन बाधितुं शक्यते । तथा च यत्रानयोः परिभाषयोर्न प्रवृत्तिरस्ति च किमपि तादृशं वचनं येन भूतपूर्वधर्माश्रयणं विना न कार्यं सिद्ध्यति तत्रैवास्य न्यायस्य विषय इति स्वीकार्यमिति । पाणिनीयव्याकरणे च परिभाषेन्दुशेखराख्ये न्यायसंग्रहग्रन्थे नागेशोपाध्यायैः *साम्प्रतिकाभावे भूतपूर्व-

गतिः* इति न्यायाकारः सूचितः। "नामि" [पा० सू० ६. ४. ३.] इति सूत्रे भाष्येऽस्य न्यायस्योल्लेखः समुपलभ्यते, तत्र च केवलमेतदेव दृश्यते–'तत्र वचनाद्भूतपूर्वगतिर्विज्ञास्यते' इति, तावता च भूतपूर्वगतिरित्येतावदेव न्यायविधेयम्, साम्प्रतिकाभाव इति तु स्वरूपकथनम्, साम्प्रतिकाभावे सत्येव तद्गतेराश्रयणस्यावसरात्। तत्रास्य न्यायस्य उल्लेखप्रसङ्गश्चायमासीत्… "नामि" [पा० सू० ६. ४. ३.] इति हि स्वरान्तानां नाम्नां षष्ठी बहुवचने दीर्घविधायकं सूत्रम्, यथा स्वमते "दीर्घोनाम्यतिसृचतसृषः" [१. ४. ४८.] इति सूत्रम्। तत्रेदं शङ्कितं पूर्वपक्षिणा–'आमि इत्येवोच्यताम्, दीर्घे कृतेऽपि भूतपूर्वगत्या "ह्रस्वापश्च" [१. ४. ३२.] इति नुट् [स्वमते नामादेशः] भविष्यति' इति, तत्र च बहु विचार्य अन्ते उत्तरसूत्रे "नोपधायाः [पा० सू० ६. ४. ७.] इत्यत्रानुवृत्त्यर्थमावश्यकः सनकारपाठः स्पष्टप्रतिपत्तये इहैव कृत इति समाहितम्। अनेन हि सूत्रेण नकारान्तस्य शब्दस्योपान्त्यस्य नामिदीर्घो विधीयते, स आमि चेत् विधास्यते तर्हि 'चर्मणाम्' इत्यादावपि भविष्यतीति तत्र मा भूदित्येतदर्थं नामि दीर्घविधानमावश्यकमिति। तथा च तत्रत्यं भाष्यस्थं संग्राहकं वार्तिकम्–"नामि दीर्घ आमि चेत स्यात् कृते दीर्घे न नुड् भवेत् वचनाद् यत्र तन्नास्ति, नोपधायाश्च चर्मणाम्॥ इति। अनेन च स्थानीवेति परिभाषातोऽस्य न्यायस्य विविक्तविषयत्वमपि सूचितं भवति। नहि देवशब्दस्य आमि दीर्घे कृते 'देवा–आम्' इति स्थिते स्थानिवद्भावेन तत्र ह्रस्वान्तत्वं संभवति, अत्र देवशब्दस्य स्थानित्वाभावात्, देवशब्दाकारस्य स्थानित्वेऽपि तस्येह नामकार्यित्वाभावात्, तथा च नात्र स्थानिवद्भावविषय इति न्यायस्यास्यावश्यकता भवतीति॥८॥

## *भाविनि भूतवदुपचारः* ॥ ९ ॥

**सि०—भाविनि** आगामिनि–अग्रेऽवश्यं सम्पद्यमाने धर्मे, **भूतवत्** सम्पन्नवत्, **उपचारः** व्यवहारः, स च कार्यनिमित्तक एवेति भाविधर्मादिनिमित्तकमपि कार्यं क्वचिल्लक्ष्यानुरोधाद् वचनसामर्थ्याच्च कार्यमित्यर्थः, यथा नृणामित्यादौ पदे "रषृवर्णान्नोण एकपदेऽनन्त्यस्य०" [२. ३. ६३.] इत्यादिना णत्वं क्रियते, तथा रवणं तक्षणमित्यादौ स्याद्युत्पत्तेः पूर्वं पदत्वाभावेऽपि भाविपदत्वमाश्रित्य णत्वं क्रियत एव। पूर्वन्यायवदस्यापि साम्प्रतिकाभावे एव प्रवृत्तिः, तथा च यत्र यो धर्मः सम्प्रति नास्ति कार्यानुरोधात् सूत्रादिसार्थक्याय च तस्याश्रयणमावश्यकं तत्र भाविनोऽपि धर्मस्याश्रयणम्। अयमपि न्यायो लोकसिद्ध एव, दृश्यते हि लोके 'ओदनं पचति देवदत्तः' इत्यादिप्रयोगे भाविनो धर्मस्य भूतवदुपचारः, तथाहि–"भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः" इत्यमरकोशानुसारमोदनं सिद्धमन्न[पक्वमन्न]मुच्यते, यदि च तत् पक्वं कथं तत् पक्तव्यमिति व्यवह्रियते। तथा च तत्र भाविनि स्वरूपे भूतवदुपचारेणौदनशब्दप्रयोगः, तथैव भाविनि पदेऽपि पदत्वव्यवहारः, एवं च नात्र ज्ञापकापेक्षा। अयं च भाविधर्मोपचारो लक्ष्यानुरोधादेवेति नानिष्टेऽर्थे भवति, *नानिष्टार्था शास्त्रप्रवृत्तिः* इति न्यायाच्च, तथा च 'अपाठीद्' इत्यादौ अटि भाविनि सति स्वरादित्वसंभावनायामपि पूर्वं स्वरादित्वोपचाराभावेन "व्यञ्जनादेर्वोपान्त्यस्यातः" [४. ३. ४७.] इति वृद्धिः सिद्धा। तथा चानिष्टे विषयेऽप्रवृत्तिरपि स्वत एव सिद्धेति न तदर्थमपि ज्ञापकापेक्षेति॥ ९॥

## *भाविनि भूतवदुपचारः* ॥ ९ ॥

**त०**—अयं न्यायः संज्ञाविषय एव प्रवर्तते, लोकव्यवहारमूलकतया लोके संज्ञाविषय एव तथा व्यवहरणात्, उपपादयिष्यते चैतदग्रे। तथा च संज्ञाविषयकमेवोदाहरणं—रवणं तक्षणमिति। अत्र ज्ञापकापेक्षा नेत्युक्तं वृत्तौ, तेन कैश्चिदत्र यज्ज्ञापकमुपन्यस्तं तदनावश्यकम्। किञ्च न तज्ज्ञापकं भवितुमर्हति, तथा हि–तेषां ग्रन्थः–निवेदकन्वस्य "रषृवर्णात्०" [२ ३. ६३.] इत्यनेन पदे एव णत्वविधानम्, तथा हि–णत्वं तावन्नृणामित्यादिपदेष्विव रवणादिनामस्वपि दृश्यते, "रषृवर्णात्०" [२ ३. ६३.] इति सूत्रेण च पदे एव विहितम्, ततो ज्ञायते नाम्नां णत्वे कर्तव्ये 'एष न्यायोऽस्तीति धिया सूत्रे पदे' इत्युक्तम्, इति। अत्रेदमुच्यते–'पदे' इति हि निमित्त-निमित्तिनोर्भिन्नपदस्थत्वव्यावृत्तये समुपादीयते, न च तत्प्रयोजनं 'पद' इत्यस्याभावे सम्पद्यते इति तदर्थं सार्थकं तत् कथमिदं ज्ञापयितुं प्रभवेत्, ज्ञापनं हि तेन विनाऽनुपपद्यमानेन वस्तुना भवतीति प्रागपि प्रतिपादितम्। तथा च निमित्त-निमित्तिनोर्भिन्नपदस्थत्वव्यावर्तकमिदं न रवणादिषु णत्व प्रवृत्तौ बाधकं स्यात्, पदत्ववत्त्येव प्रवृत्तिरित्यंशे तात्पर्याभावात्, भवति चात्र पदसंज्ञायां सत्यामपि णत्वप्रवृत्तिस्वीकारे बाधकाभावः। कृत्प्रत्ययोत्पत्तिमात्रेण तस्य नामत्वे सति स्यादौ सति च पश्चात् कार्यान्तरकरणे दोषाभावादिति नात्र तस्य न्यायस्याश्रयणीयता। लौकिकव्यवहारेण सिद्धे च तस्मिन् नामत्वादितः पूर्वमपि णत्वप्राप्तिरित्यन्यदेतत्। तथा चेदं ज्ञापकत्वकथनं चिन्त्यमेव। पाणिनीयादितन्त्रे च नेदृशो न्यायोऽवलम्बितः, न चायं न्यायः परिभाषेन्दुशेखराख्यन्यायसंग्रहे सङ्गृहीतः। यद्यपि भाष्यकृता क्वचिद् भाविन्याः संज्ञायाः समाश्रयणं भवतीति प्रतिपादितम्–'इग्यणः सम्प्रसारणम्" [पा० सू० १. १. ४५.] इति सूत्रे भाष्ये, तथापि न तत् तादृशन्यायवचनकल्पनापरं किन्तु लोकसिद्धविषयकथनमात्रम्, तथा हि–तत्र भाष्येऽनेन सूत्रेण वाक्यस्य संज्ञा क्रियते?

उत वर्णस्येति प्रश्ने वर्णस्य संज्ञेति सिद्धान्तपक्षे दूषणवार्तिकमिदमुक्तम्–'वर्णसंज्ञा चेन्निर्वृत्तिः'इति, व्याख्यातं चेत्थम्–"वर्णसंज्ञा चेन्निर्वृत्तिर्न सिद्धयति ष्यङः "सम्प्रसारणम्" [ पा० सू० ६. १. १३. ] इति स एव तावदिह दुर्लभो यस्य संज्ञा क्रियते । अथापि कथंचिल्लभ्येत, केनासौ यणः स्थाने स्यात्, अनेन ह्यसौ व्यवस्थाप्यते, तदितरेतराश्रयं भवति, इतरेतराश्रयाणि कार्याणि च न प्रकल्पन्ते" इति, अयमाशयः–'यणः इक् भवति' ( यवराणां ऋृत् भवति ) इति वाक्यं न 'सम्प्रसारण'संज्ञं, किन्तु तत्तत्स्थाने विधीयमाना इकारोकार-ऋकारा एव 'सम्प्रसारण'संज्ञा भवन्ति' इत्यर्थस्य समाश्रयणे "ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे" [पा० सू० ६. १. १३.] इत्यादिविधिसूत्रैः सम्प्रसारणसिद्धिर्न स्यात्, यणः स्थाने विधीयमानत्वे सति तस्य सम्प्रसारणसंज्ञा स्यात्, संज्ञायां च सत्यां विधानं स्यादिति परस्पराश्रयत्वात्, परस्पराश्रयं च कार्यं न सम्पद्यत इति कार्यशब्दवादे सम्प्रसारणविधानमसम्भवि स्यादिति । ततः परमनेकानि समाधानि दत्त्वा दूषयित्वा चान्ते इत्थमुक्तम्–"एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते, तद्यथा–कश्चित् कंचित्तन्तुवायमाह–अस्य सूत्रस्य शाटकं वय' इति, स पश्यति–'यदि शाटकः, न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाऽभिप्रेता । स मन्ये वातव्यो यस्मिन्नुते 'शाकट' इत्येतद् भवतीति । एवमिहापि स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य 'संप्रसारण'मित्येषा संज्ञा भविष्यतीति अयमाशयः–नित्यशब्दवादे तु यत्र यणः स्थाने इक् प्रयुक्तो दृश्यते तत्र 'सम्प्रसारण'शब्देन व्यवहारः कार्य इत्याश्रयणे नान्योन्याश्रयः । कार्यशब्दवादेऽपि सूत्रशाटकन्यायेन भाविनीं संज्ञामाश्रित्य व्यवहारः कार्यः, यथा–'अस्य सूत्रस्य शाटकं वय' इति तन्तुवायं प्रति कथिते वाक्ये यस्मिन्नुते सति 'शाटक' इत्येषा संज्ञा भवतीति विज्ञायते, तथाऽत्रापि यस्य यणः स्थाने विधीयमानस्य संप्रसारणसंज्ञा भविष्यति स विधेय इत्येवं विधिप्रदेशेषु भाविसंज्ञायाः समाश्रयणमिति । अनेन च भाष्यसन्दर्भेण संज्ञानिमित्तके कार्ये क्वचिद्भाविनीं संज्ञामादायापि व्यवहारो भवति लोकवदिति विज्ञायते । तथा च भाविनि भूतवदुपचार इति न्यायोऽपि संज्ञाविषय एव प्रयोक्तव्यो नान्यत्रेति 'अपाठीत्' इत्यादौ व्यञ्जनादित्वं स्वरादित्वं वा न संज्ञेति न तद्विषयेऽस्य प्रवृत्तिसंभावनेति नानित्यत्वकल्पनाऽवश्यकीति विज्ञेयमिति ॥ ९ ॥

---

## *यथासंख्यमनुदेशः समानाम्* ॥ १० ॥

**सि०**—सम्यक् ख्यानं-संख्या, बुद्धिः, ज्ञानमित्यर्थः; न च संख्याशब्दस्य बुद्धौ न प्रयोग इति वाच्यम्, "यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते [ भगवद्गीता अ० ५, श्लो० ५ ] इत्यादौ संख्याशब्दस्य बुद्धिवाचकत्वस्य दृष्टत्वात् । बुद्धिकर्तृत्वप्रतिपादकत्वेनैव च 'सांख्य'शास्त्रस्य तच्छब्देन व्यपदेशः । **समानां** साम्यवताम्, साम्यं च संख्यया । तथा च समसंख्यावतामुद्देशिनाम्, **अनुदेशः** पश्चाद्भववाक्यार्थकालिकः सम्बन्धः, **यथासंख्यं** संख्या-बोधक्रममनतिक्रम्य भवतीति न्यायार्थः । संख्या-गणनमिति वा, तथा च यथागणनं वाक्यार्थबोधकालिकः सम्बन्धो भवतीति वाऽर्थः । संख्याशब्दस्यैकत्वादौ रूढस्य तु नेह ग्रहणं तथा सति वाक्यार्थानुपपत्तेः । अत्रोद्देशिनोऽनुदेशिनश्च उच्चार्यमाणा उच्चार्यमाणप्रतिपाद्याश्च गृह्यन्ते । उद्देश्यनुदेशिशब्दौ पूर्वोच्चार्यमाण-पश्चादुच्चार्यमाणपरौ न तूद्देश्यविधेयपरौ, तथा सति अनूद्यमानानां यथासंख्यमन्वयो न स्यात् । यथा "कर्तुर्जीव-पुरुषान्नश्-वहः" [ ५. ४. ६९. ] इति सूत्रे जीव-पुरुषयोर्नश्-वहोश्चानूद्यमानयोरेव यथासंख्यं भवति, न तु विधीयमानेन तस्यैकत्वेन, यथासंख्यान्वयासंभवात् । एतदुदाहरणं तु–"ङे-ङस्योर्या-ऽऽतौ" [ १. ४. ६. ] इत्यादि, अत्र हि पूर्वं द्वन्द्वसाधुत्वाय 'ङे-ङस्' समुदायस्य 'यात्'समुदायेन सहान्वयबोधविवक्षा भवति, पश्चाल्लक्ष्यसंस्कारकवाक्यार्थबोधकाले ङेर्यकारेण ङसेराता च सम्बन्ध एतन्न्यायकृतः, अन्यथा इतरेतरयोगनिर्दिष्टतया प्रत्येकमादेशद्वयापत्तिः । **समानामिति** किम्? "नमस्-पुरसो गतेः क-ख-प-फि रः सः" [ २. ३. १. ] अत्र नमस्-पुरसोः क-खाद्यैः सह समानवचननिर्देशेऽपि वस्तुनः समसंख्यत्वाभावेन समत्वाभावान्न यथासंख्यम्, संख्या चेह वचनरूपा गणनारूपा च गृह्यते, इत्युभयथा साम्य एव समत्वव्यवहारादिह वचनेन साम्येऽपि गणनया साम्याभावात्; एवं "तौ मु-मो व्यञ्जने स्वौ" [ १. ३. १५. ] मु-मयोरनुस्वारा-नुनासिकत्वाभ्यां संख्यासाम्येऽपि वचनसाम्याभावान्न यथासंख्यं किन्तु पर्यायेण द्वयोरेव सर्वत्र विधानम् । ज्ञापकं त्वस्य "च-ट-ते सद्वितीये" [ १. ३. ७. ] इति गुरुसूत्रकरणम्, अन्यथा "च-छ-ट-ठ-त-थे" इति लघुभूतमेव सूत्रं कुर्यात्, तदकृत्वा गुरुसूत्रकरणं ज्ञापयति–यदिह विधेयानां श-ष-सानां त्रित्वेन षड्भिः सह यथासंख्यमन्वयो न स्यादिति त्रय एव सूत्रे निर्दिष्टाः, ते च त्रयो यथायथं स्वकीयेन द्वितीयेन सह पर्यायेण स्वोद्देश्यकमादेशमनुभवन्ति, तथा चैतन्न्यायस्य सत्ताऽनेन गुरुसूत्रकरणेनानुभूयते । लक्ष्यानुसारं च क्वचिद् वचनसाम्याभावेऽपि गणनामात्रसाम्येन न्यायोऽयं प्रवर्तते, यथा–"भुज-पत्यादिभ्यः कर्मा-ऽपादाने" [ ५. ३. १२८. ] इत्यत्र, अत्र हि वचनवैषम्येऽपि गणनासाम्येन भुजादिभ्यः कर्मणि पत्यादिभ्योऽपादाने इति यथासंख्यमन्वयो भवति । क्वचिच्चोभयसत्त्वेऽपि नास्य प्रवृत्तिः, यथा "पूर्वा-ऽवरा-ऽधरेभ्योऽसस्तातौ

पुरवधश्चैपाम्" [ ७. २. ११५. ] इत्यत्र, अत्र हि "दिक्-शब्दाद् दिग्-देश-कालेषु प्रथमा-पञ्चमी-सप्तम्याः" [ ७. २. ११३. ] इति सूत्रादनुवर्त्तमानैर्दिग्-देश-कालैः सह गणन-वचनसाम्येऽपि पूर्वा-ऽवरा-ऽधराणां न यथासंख्यमिति ॥१०॥

## ※ यथासंख्यमनुदेशः समानाम् ※ ॥१०॥

त०—अनुपूर्वकदिश्धातोः पश्चाद्भवनमर्थः, उत्पूर्वकदिश्धातोः सिद्धज्ञानमर्थः, एवं प्रतिनिर्पूर्वकदिश्धातोरपूर्वज्ञानमर्थः, ततश्च करणे घञि-अनुदेशोद्देशप्रतिनिर्देशशब्दानां सिद्धिः । तथा च न्याये अनुदेशपदेनोपस्थितिः पश्चाद्भवत्वाक्यार्थबोधविषयीभूताकाङ्क्षाभास्यसम्बन्ध उच्यते। समानामिति चावर्त्तते, एकत्रानुयोगित्वमपरत्र प्रतियोगित्वं च षष्ठ्यर्थः। **समानामि**त्यस्य तुल्यसंख्यावतामित्यर्थः। **यथासंख्यमि**त्यस्य संख्याकर्मकातिक्रमणकर्तृत्वाभाववानित्यर्थः। तथा च तुल्यसंख्याप्रतियोगिकस्तुल्यसंख्यानुयोगिकश्चाकाङ्क्षाभास्यसम्बन्धः संख्याकर्मकातिक्रमणकर्तृत्वाभाववान् भवतीति वाक्यार्थः। अत्र पक्षे संख्या क्रमः, क्रमश्चापेक्षाबुद्धिविशेषविषयता, आकाङ्क्षाभास्यसम्बन्धे सङ्ख्याकर्मकातिक्रमणकर्तृत्वं च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविषयतावदनुयोगिकत्वम्, तदभावश्च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम्, साजात्यं च स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वम्, स्ववृत्ति-स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टत्वावच्छिन्नधर्मितात्व-स्ववृत्ति-स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वावच्छिन्नधर्मितात्वैतदन्यतरवत्त्वम्-एतदुभयधर्माभ्याम्, यथा "कर्तुर्जीवपुरुषान्नश्-वहः" [ ५. ४. ६९. ] इत्यादौ तुल्यसंख्यावत्-जीवपुरुषप्रतियोगिकः, तुल्यसंख्यावत् नश्वहानुयोगिकश्च य आकाङ्क्षाभास्याव्यवहितोत्तरत्वादिः सम्बन्धः, तत्र स्वप्रतियोगिजीववृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावन्नशनुयोगिकत्वम्, एवं स्वप्रतियोगिपुरुषवृत्ति-अपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्वहनुयोगिकत्वमिति संख्याकर्मकातिक्रमणकर्तृत्वाभावः। संख्याकर्मकातिक्रमणकर्तृत्वं च स्वप्रतियोगिजीववृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम्, नशूनिष्ठापेक्षाबुद्धिविशेषविषयताया जीवनिष्ठापेक्षाबुद्धिविशेषविषयतासजातीयत्वात् वहनिष्ठापेक्षाबुद्धिविशेषविषयतायाश्च जीवनिष्ठापेक्षाबुद्धिविशेषविषयताविजातीयत्वाच्च साजात्यलक्षणसमन्वयश्चान्यत्रप्रदर्शितरीत्योहनीय इति नेह प्रतन्यते। यद्यपि स्थानिताख्यलौकिकप्रमाणेन यथा "शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय" इत्यादौ स्थानानुसारं क्रमेण शत्रु-मित्रादिपदानामर्थो जयेत्यादिपदार्थैः सम्बध्यन्ते तथा शास्त्रेऽपि स्थानाख्यलौकिकप्रमाणादेव क्रमिकान्वये सिद्धेऽयं न्यायो नावश्यकः, तथापि "ङेङसोर्याऽऽतौ" [ १. ४. ६. ] इत्यादिसूत्रेषु समासनिर्देशे साहित्ये द्वन्द्वविधानादुभयोः सहैवैकत्रान्वयः स्यादित्यप्राप्तक्रमिकान्वयविधानार्थमस्य न्यायस्यावश्यकत्वमिति ज्ञेयम्; किञ्च "इवर्णादेरस्वे स्वरे यवरलम्" [ १. २. २१. ] इत्यादौ यत्रोद्देशिनां न साक्षादुच्चारणं किन्तु शब्दान्तरैराख्यानं तत्र सूत्रे स्थानस्याश्रुतत्वात् स्थानाख्यप्रमाणस्याप्रवृत्तावप्राप्तक्रमान्वयबोधार्थं चास्य न्यायस्यावश्यकत्वम्। अयं च न्यायो धर्मसाम्य एव प्रवर्त्तते न व्यक्तिसाम्ये, व्यक्तीनामानन्त्येन तत्साम्यस्य दुरुपपादत्वात् ॥

पाणिनीयतन्त्रे सूत्ररूपेणायं न्यायः पठितः, तच्च सूत्रमष्टाध्याय्याः प्रथमाध्यायस्य तृतीये पादे दशमम्, तत्रापि महाभाष्ये लौकिकस्थानप्रमाणेनास्य गतार्थत्वमाशङ्क्य संज्ञया समासेन च यत्रोच्यते तदर्थमिदमिति समाहितम्, तथा हि—"किमर्थं पुनरिदमुच्यते" इत्याक्षेपभाष्यम्, तस्याशयः—सूत्रं विनापि लोकसिद्धस्थानाख्यप्रमाणेनैव "शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय" इतिवत् सिद्धिरस्तीति नावश्यकता सूत्रस्येति, तत्र समाधानवार्त्तिकम्—"संज्ञासमासनिर्देशात् सर्वप्रसङ्गोऽनुदेशस्य, तत्र यथासंख्यवचनं नियमार्थम्" इति, तद्भाष्यम्—"संज्ञया समासैश्च निर्देशाः क्रियन्ते, संज्ञया तावत्—परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति, [ पा० सू० ३. ४. ८२. ] समासैः "तूदीशलातुरवर्मतीकूचवाराड्-ढक्-छण्-ढञ्-यकः" [ पा० सू० ४. ३. ९४. ] इति, समाससंज्ञानिर्देशादेतस्मात् कारणात् सर्वप्रसङ्गः, सर्वस्योद्देशस्य सर्वोऽनुदेशः प्राप्नोति, इष्यते च यथासंख्यं स्यादिति, तच्चान्तरेण यत्नं न सिद्ध्यतीति तत्र यथासंख्यवचनं नियमार्थम्, एवमर्थमिदमुच्यते" इति कैयटेनेत्थं प्रदीपितम्—"परस्मैपदानां णलतुस" [ पा० सू० ३. ४. ८२. ] इत्यत्र संज्ञया सर्वे युगपत् प्रत्याय्यन्ते इति नास्ति पाठक्रमाद् व्यवस्था, लोकेऽप्यजाविधनौ देवदत्त-यज्ञदत्तौ इति समासनिर्देशे नास्ति क्रमनियमः, द्वन्द्वेऽनेकावयवात्मकः समुदायः एकेनैव शब्देन प्रत्याय्यते इति कुतः क्रमनियमः स्यात्?" इति। "यद्यपि संज्ञा प्रत्येकं पर्याप्तेति न संज्ञाकृतं युगपत् प्रत्यायनं, किन्त्वेकशेषप्रमाणवललभ्यं तत् 'ब्राह्मणानामर्घपाद्याचमनीयानीतिवत्, तत्र ब्राह्मणत्रित्वेऽपि नार्घादीनां क्रमनियमः, तथापि संज्ञाया नवकसाधारण्यमेव तत्र मूलमिति संज्ञानिर्देशादित्युक्तम्" इति च नागेशेन विवृतम्। तत्र चैतावत् सारम्—संज्ञया विधीयमानेषु कार्येषु सर्वेषां संज्ञिनां युगपदेवोपस्थितौ तैः सह क्रमान्वयः स्थानाख्यप्रमाणेनासिद्ध इति तदर्थं, समासस्थले च समासावयवानां समुदायोपसर्जनतया समुदायस्यैव पदान्तरार्थेनान्वयात् तत्राऽपि स्थाना-

ख्यप्रमाणस्य न प्रसर इति तत्र यथासंख्यमन्वयनियमार्थमिदं सूत्रमिति ॥

अथ 'समानाम्' इत्यस्य साम्यवतामित्यर्थः, तत्र साम्यं शब्दतो ग्राह्यमर्थतो वेति निर्णयाय–"किं पुनः शब्दतः साम्ये संख्यातानुदेशो भवत्याहोस्विदर्थतः" इत्येवं विचाराधिकरणमारब्धम्, तदाशयश्च कैयटेनेत्थं प्रकटितः–"यद्यप्यर्थे शब्दस्य गुणभावादर्थत एव साम्यं न्याय्यं तथापि शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते, यथा–भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफी भ्रमर इति, तथा द्व्यक्षरं मांसं, द्व्यक्षरमस्थि, तस्माच्छब्दतोऽपि साम्यमत्राशङ्कितम्", तस्यायमाशयः—यद्यप्यर्थप्रत्यायनार्थमेव शब्दः प्रयुज्यत इति शब्दस्य गुणत्वमर्थस्य प्राधान्यमित्यर्थत एव साम्यं ग्राह्यमिति नास्ति संदेह इति न विचारारम्भावश्यकता, तथापि वाच्यवाचकयोरभेदोपचारात् शब्दधर्मेणाप्यर्थस्य व्यवहारो लोके भ्रमरादिपदार्थे द्विरेफवत्त्वादिव्यवहारविधया क्रियत एवेति शब्दस्यापि तत्र प्राधान्यदर्शनादस्ति शङ्का [५. ३. १.] इति, शब्दतः साम्यविवक्षापक्षे चायमर्थः—शब्दतः संख्यया समानां योऽनुदेशः पश्चाद्भव उच्चार्यमाणेन सम्बन्धः स यथासंख्यमिति, तथा च संज्ञया निर्दिष्टानां प्रतिनिर्दिष्टेन सह न शब्दतः साम्यं भवति, संज्ञाया एकरूपत्वात् तेषां चानेकत्वादिति तत्र दोषः स्यादित्याह–उभयोः पक्षयोर्दोष-गुणौ विवेचयन् भाष्यकृत् । तथा च शब्दसाम्यपक्षदूषणवार्त्तिकम्–"संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां, डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः" इति [तद्भाष्यम्,] अगमको निर्देशोऽनिर्देशः, "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" [पा० सू० ३. ४. ८२] इति णलादयो वहवः, 'परस्मैपदाना'मित्येकः शब्दः, वैषम्यात् संख्यातानुदेशो न प्राप्नोति । डारौरसः प्रथमस्य, "लुटः प्रथमस्य डारौरसः" [पा० सू० २. ४. ८५.] डारौरसो वहवः प्रथमस्येत्येकः शब्दः, वैषम्यात् संख्यातानुदेशो न प्राप्नोति । "एचोऽय वायावः" [पा० सू० ६. १. ७८.] अयवायावो वहवः, एच इत्येकः शब्दः, वैषम्यात् संख्यातानुदेशो न प्राप्नोतीति । अयमाशयः–परस्मैपदशब्देन परोक्षास्थानिका नव त्यादय आदेशा उपस्थाप्यन्ते इति तेषां नवानां णलादिभिर्नवभिः सह साम्यमर्थत एवास्ति, न तु शब्दतः, इति शब्दतः साम्यस्य ग्रहणे संख्यातानुदेशो न प्राप्नोति । एवम्–लुटः [श्वस्तन्याः] प्रथमपुरुषस्य स्थाने विधीयमानाः डारौरसः [ता-तारौ-तारसः] वहवः, प्रथमस्येत्येकः शब्द इति संख्यातानुदेशो न प्राप्नोति । एवम्–एचोऽयवायावः [पा० सू० ६. १. ७८.] इति सूत्रे अयवायावश्चत्वारः, एच इत्येकं पदमिति शब्दतः साम्याभावात् संख्यातानुदेशो न प्राप्नोतीति शब्दतः साम्याश्रयणं न युक्तमिति । अथास्त्वर्थतः साम्यमिति चेत् ? अत्रापि पक्षे दूषणसद्भावात्, तथाहि–तत्र दूषणप्रदर्शनवार्त्तिकम्–"अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषः" इति, तद्भाष्यम्–"अर्थतश्चेल्लृलुटोर्नन्द्यरीहणसिन्धुतक्षशिलादिषु दोषो भवति, "स्यतासी लृलुटोः" [पा० सू० ३. १. ३३.] स्यतासी द्वौ, लृलुटोरित्यस्य त्रयोऽर्थाः, वैषम्यात् संख्यातानुदेशो न प्राप्नोति । "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" [पा० सू० ३. १. १३४.] इति नन्द्यादयो वहवः, ल्युणिन्यचस्त्रयः, वैषम्यात् संख्यातानुदेशो न प्राप्नोति । "अरीहणादयः" [पा० सू० ४. २. ८० ] पठिताः वहवः, वुञादयः सप्तदश, वैषम्यात् संख्यातानुदेशो न प्राप्नोति । "सिन्धुतक्षशिलादिभ्योऽणञौ" [पा० सू० ४. ३. ९३.] सिन्धुतक्षशिलादयो वहवः, अणञौ द्वौ, वैषम्यात् संख्यातानुदेशो न प्राप्नोति" इति । अस्यायमाशयः–गृह्यमाण [उच्चार्यमाण] शब्दार्थभूतानां संख्यया साम्यं विवक्षितमित्यर्थो विज्ञायते चेत् तदा यत्र गणेन निर्देशः क्रियते तत्र तदर्थभूता वहवो भवन्ति, प्रत्ययाश्च न तावन्त इति संख्यातानुदेशो न प्राप्नोति, यथा "भौरिक्याद्यैषुकार्यादेर्विधभक्तम्" [६. २. ६८.] भौरिक्यादयो वहवः, इषुकार्यादयश्च वहवः, प्रत्ययौ द्वाविति संख्यातानुदेशो न प्राप्नोतीत्युभयोः पक्षयोर्दोष इति, इत्थमुभयोः पक्षयोर्दोषान् प्रदर्श्य शब्दतः साम्यं स्वीकृत्य तस्मिन् पक्षे प्रसक्तान् दोषान् "स्थानेऽन्तरतमः" [पा० सू० १. १. ५०.] इति सूत्रेण ["आसन्नः" ७. ४. १२०. इति परिभाषासूत्रेणेत्यर्थः] परिजहार । ततश्च यत्र यथासंख्यमनिष्टं तत्र कुत्रचिदुपायान्तरमपि च प्रक्रियानुसारं प्रदर्श्य स्वरितत्वप्रतिज्ञया "स्वरितेनाधिकारः" [पा० सू० १. ३. ११.] इत्यग्रिमसूत्रस्थस्वरितेनेति पदमनुवर्त्य नवासमानयोगवचनादिति वार्त्तिकेन च समाहितम्, एकस्मिन् योगे उच्चारितानामेव यथासंख्यं भवति, न त्वन्यत्रोच्चारितानामित्यर्थत्वेन तस्य वार्त्तिकस्य सर्वदोषाः परिहृताः । तस्यायमाशयः–अनुदेश उच्चारणम्, योगान्तरे तु शब्दस्योच्चारणेऽपि अत्र तस्यानुमानमेवेति नानुदेशप्राप्तिरिति न्यायसिद्धैव तत्रास्य न्यायस्याप्रवृत्तिरिति; स्वमते चानिष्टस्थलेऽप्रवृत्तयेऽस्यानित्यत्वमेवाश्रीयते, तदपि समानयोगपठितानामेव यथासंख्यमिति स्वीकारेणैव सिद्धम्, तथाहि–'दिग्देशकालेषु' इति हि पदं "पूर्वापराधरेभ्योऽसस्तातौ पुरवधश्चैषाम्" [७. २. ११५.] इति सूत्रे न पठितमपि तु "दिक्शब्दाद् दिग्देशकालेषु प्रथमा-पञ्चमी-सप्तम्याः" [७. २. ११३.] इति सूत्रादेवानुवृत्तमिति तेन सह न यथासंख्यं भविष्यतीति ॥१०॥

## *विवक्षातः कारकाणि* ॥ ११ ॥

**सि०**—'विवक्षातः' इत्यत्र तसूप्रत्ययस्थानिन्याः पञ्चम्याः प्रयोज्यत्वमर्थः कारकत्वं च क्रियायां जनकत्वेनान्वयित्वम्, तद्वन्ति च यद्यपि पदानि न भवन्ति, पदानां शब्दरूपत्वेन क्रिया-

जनकत्वासंभवात्, तथापि स्वार्थद्वारा क्रियाजनकत्वं तेषामिति पदमपि कारकं निगद्यते। वस्तुतस्तु इह शास्त्रे स्यादिविभक्तिसमुदाय एव कारकत्वव्यवहारो दृश्यते तासां कारकत्वनिमित्तकत्वात्, तथा च तानि कारकाणि कारकविभक्तयः, विवक्षाप्रयोज्यानि, इत्यर्थः, विवक्षा च वक्तुरिच्छा। तथा च वक्ता यत्राकारकेऽपि कारकत्वं विवक्षति तदकारकमपि कारकं भवति, कारकान्तरमपि कारकान्तरतां गच्छति, कारकत्वं न वा लभते इति न्यायार्थः पर्यवस्यति। कारकविशेषाणां लक्षणानि नियतानि, तानि च न परस्परं व्यभिचरन्तीति न हेत्वादेः कदाचिदपि कारकत्वं (कर्तृत्वं) प्राप्नोति, विवक्षायाः कारकत्वप्रयोजकत्वाङ्गीकारे च हेतोरपि कर्तृत्वं विवक्ष्यते चेत् तदा भवति स कर्तापि, यथा—'भिक्षा वासयति भिक्षुकं ग्रामे' इति, अत्र हि भिक्षावासहेतुभूताऽपि विवक्षावशात् कर्तृत्वं प्राप्ता, हेतोश्च व्यापारशून्यत्वेन कारकत्वं नास्त्येव, तदभावाच्च तत्र कर्तृत्वमप्राप्तमेव विवक्षावशादेव [कर्तृत्वं] भवति; भिक्षाया वासं प्रति कारकत्वे सति तु 'भिक्षयोषितः' इति प्रयोगे "कारकं कृता" [३. १. ६८.] इति समासः स्यात्। एवं कारकस्यापि कारकत्वेनाविवक्षायां सम्बन्धमात्रबोधिका षष्ठ्येव भवति, यथा-मापाणामश्नीयादिति। क्वचिच्च कारकान्तरं कारकान्तरतां गच्छति, यथा—'ओदनः पच्यते स्वयमेव' इति, अत्र कर्मकारकमपि ओदनो विवक्षावशात् कर्तृतां यातः; तथा 'असिश्छिनत्ति' इति, अत्र करणस्यासेः कर्तृत्वविवक्षा। "स्मृत्यर्थदयेशः" [२. २. ११.] इत्यस्य वृत्तिकृता नियमार्थत्वोपवर्णनेन ज्ञापितोऽयं न्यायः। तथा हि—तत्र सूत्रे वृत्तिः "ननु कर्माविवक्षायां पक्षे माषाणामश्नीयादित्यादिवत् शेषषष्ठी सिद्धैव तत् किमनेन? सत्यम्, किन्तु "षष्ठ्ययत्नाच्छेषे" [३. १. ७६.] इत्ययत्नजे शेषे षष्ठ्याः समासो वक्ष्यते, ततो मातुः स्मृतमित्यादौ समासो मा भूदित्यनेन प्रकारेण यत्नाच्छेषो विधीयते, नियमार्थं च" इति, नियमप्रकारश्चेत्थं वर्णितः—एषां धातूनां कर्मैव शेषत्वेन विवक्ष्यते न कारकान्तरमिति, तथा चास्य न्यायस्यासत्त्वे सूत्रं विना पाक्षिककर्मत्वस्यासिद्ध्या सूत्रस्य नियमार्थत्वं न संघटेत इति तस्य विध्यर्थत्वमेव स्यादिति मात्रा स्मृतमित्यादावपि कर्तृत्वाद्यविवक्षा स्यादिति तत्रापि षष्ठी स्यात्। अनेन च न्यायेन संभवत्कारकत्ववत एव कारकविशेषत्वेन विवक्षाऽविवक्षा वा क्रियते, न त्वपूर्वं कारकत्वं तत्रोत्पाद्यते, अतश्च षष्ठ्या वाच्यस्य सम्बन्धस्य न कारकत्वेन विवक्षेति 'बहूनामिदं वस्त्रमित्यादौ कारकत्वविवक्षाभावेन "बह्वल्पार्थात् कारकादिष्टानिष्टे प्शस्" [७. २. १५०.] इति प्शस् प्रत्ययो न भवति, विवेचितं चैतदन्यत्र ॥ ११ ॥

## ❋ विवक्षातः कारकाणि ॥ ११ ॥ ❋

त०—नायं न्यायः पाणिनीये तन्त्रे न्यायत्वेन सङ्गृहीतः, किन्तु भाष्यकारादिव्यवहारबलादयमर्थः स्वतः सिद्ध एवेति प्रतीयते, क्रियते च तदनुकूलो व्यवहारः सर्वत्र, भाष्यकृता च "कारके" [पा० सू० १. ४. २३.] इति सूत्रं व्याचक्षाणेन कारकाणां विवक्षाधीनत्वमिति सूचितम्। पाणिनीयतन्त्रे हि अपादानादीनां तत्तत्संज्ञाभिः सह कारकसंज्ञापि विधीयत इत्याश्रीयते, तथा च सर्वत्रापादानादिविधायकसूत्रेष्वस्य सूत्रस्य "कारके" इत्यस्याधिकारो भवति, तथा च कारकसंज्ञं सदपादानसंज्ञमित्यर्थो भवति। अत्र च सूत्रे प्रथमार्थे सप्तमी निर्दिष्टा, तथा च संज्ञाधिकारत्वमस्येति सिद्धान्तः, तस्यैव स्फोरणाय प्रसङ्गेन कारकाणां विवक्षाधीनत्वं सूचितम्। तथा हि—कारकशब्दार्थनिर्णयमधिकृत्य शङ्कते—"किमिदं 'कारके'? [भाष्यम्] इति, अयमाशयः—इह सूत्रे विधेयानिर्देशेन 'कारके' इति सप्तम्यन्तपदस्य स्वार्थत्वासंभवादयमधिकार एव स्यात्, तत्र सप्तमीनिर्देशान्न संज्ञाधिकारत्वसंभवः, संज्ञाया भाव्यमानत्वाद् भाव्यमाने च प्रथमानिर्देशस्य न्याय्यत्वात्। अथ विशेषत्वेन कारकपदमधिक्रियत इत्याख्यायते तर्हि कारकसंज्ञारहितस्यापि कारकत्वं प्राप्नोति, तादृशस्थले च कर्मादिषड्विधस्यैव कारकत्वेन ग्रहणं दृश्यते कारकत्वं च क्वचिदन्यत्रापि दृश्यते, यथा नटस्य गाथां शृणोतीति, अस्ति क्रियाहेतुत्वेन नटस्यात्र कारकत्वम्, किन्तु तस्य कारकसंज्ञाभावान्न तत्र कारकत्वव्यवहारः। उक्तशङ्कायां समाधानमाह—"संज्ञानिर्देशः" इति, प्रथमायाः स्थाने सप्तमीं विधाय संज्ञानिर्देश एवायं कृत इति भावः। पुनरनुयोगभाष्यम्—"किं वक्तव्यमेतत्?" इति, विना वचनं सप्तम्यन्तस्यास्य 'संज्ञाधिकारत्वं न विज्ञास्यत इति वक्तव्यं संज्ञाधिकारोऽयमित्यनुयोगः। समाधानभाष्यम् "नहि, कथमनुच्यमानं गंस्यते?, इह हि व्याकरणे ये वा एते लोके प्रतीतपदार्थकाः शब्दास्तैर्निर्देशाः क्रियन्ते, या वा एता कृत्रिमाः 'टि' 'घु' 'भा'दिसंज्ञाः, न चायं लोके ध्रुवादीनां प्रतीतपदार्थकः शब्दः, न खल्वपि कृत्रिमसंज्ञाः, अन्यत्राविधानात्, संज्ञाधिकारश्चायम्; तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः? इति। अयमाशयः—इह व्याकरणशास्त्रे लोकप्रसिद्धैरपत्यसमूहादिशब्दैर्व्यवहारो दृश्यते कृत्रिमैश्च 'टि' 'घु' 'भ' आदिशब्दैः। कारकशब्दश्च ध्रुवादीनाम् [अपादानसंज्ञोद्देश्यभूतानाम्] लोके न प्रसिद्धो वाचकः, न वा शास्त्रे कारकमिति कृत्रिमा संज्ञाकृता, अस्ति चात्र संज्ञाधिकारेऽस्य पाठ इति शास्त्रे लोके च प्रसिद्ध्यभावात् भूतविभक्त्यनुपपत्त्या भाव्यमानविभक्तेः प्रथमायाः स्थाने सप्तमीकृतेति मत्वा संज्ञानिर्देश एवायमिति स्वीकार्यमिति, तत्राक्षेपवार्तिकम्—"कारक इति संज्ञानिर्देशश्चेत् संज्ञिनो निर्देशः" इति, तद्भाष्यम्—'कारक इति संज्ञानिर्देशश्चेत्

संज्ञिनोऽपि निर्देशः कर्तव्यः, साधकं निवर्तकं कारकसंज्ञं भवतीति वक्तव्यम्" इति, अयमाशयः—यद्यपि "अपायेऽवधिरपादानम्" [२. २. २९.] इत्यादौ संज्ञिनोऽवध्यादयो निर्दिश्यन्त एव तथापि क्रियाहेतुत्वेन विशिष्टोऽवधिः संज्ञी वक्तव्य इति; तथा च यत् क्रियायाः साधकमवध्यादि तत् कारकसंज्ञं सदपादनसंज्ञं भवतीति फलति । अन्यथानुपपत्तिप्रदर्शनवार्तिकम्—"इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य" इति, तद्भाष्यम्—इतरथा ह्यनिष्टं प्रसज्येत, अकारकस्याप्यपादानसंज्ञा प्रसज्येत, क्व? ग्रामस्य समीपादागच्छति" इति । अयमाशयः—क्रियायां साधकं कारकं सदपादानसंज्ञं भवतीत्यनुक्ताववधिः कारकसंज्ञमपादानसंज्ञं च भवतीत्यर्थो लभ्यते, तथा च यथा यो वृक्षशाखायाः पतति वृक्षादप्यसौ पततीति, तथा यो ग्रामसमीपादागच्छति ग्रामादप्यसावागच्छतीति ग्रामस्याप्यपायावधित्वेनापादानत्वं स्यात्; क्रियासाधकमित्युक्तौ चागमेन निवर्तकत्वाभावादेव न दोषः, ग्रामस्य समीपविशेषणत्वेनासाधकत्वादिति । आक्षेपप्रतिक्षेपभाष्यम्—"नैष दोषः, नात्र ग्रामोऽपाययुक्तः, किं तर्हि? समीपम्, यदा च ग्रामोऽपाययुक्तो भवति, भवति तदापादानसंज्ञा, तद्यथा—ग्रामादागच्छतीति" इति । अत्र कैयटः "समीपविशेषणत्वेनोपादानादेव ग्रामस्यापाययोगो नास्ति, स हि संश्लेषपूर्वकः, संश्लेषश्च सन्नसन् वा बुद्ध्या कल्प्यते, स च ग्रामसमीपस्यैव विवक्षितो न ग्रामस्येत्यर्थः, ग्रामात् समीपादिति चोक्ते वस्त्वन्तरापेक्षं ग्रामस्यैव सामीप्यं प्रतीयते, न तु ग्रामापेक्षमस्य सामीप्यम्" इति । तत आक्षेपान्तरवार्तिकम्—"कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति" इति । तद्भाष्यम्—कर्मसंज्ञा च प्राप्नोत्यकथितस्य, क्व? ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति । आक्षेपबाधकभाष्यम्—"नैष दोषः, अयमकथितशब्दोऽस्त्येवासंकीर्तिते वर्तते, तद्यथा- कश्चित् कञ्चित् संचक्ष्याह—असावत्राकथितः—असंकीर्तित इति गम्यते" इति । अयमाशयः—ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्राकारकस्याकथितत्वेन [पाणिनीयेऽप्रधानकर्मणो ह्यकथितत्वं समाश्रित्य "अकथितं च" [पा० सू० १. ४. ५१.] इत्यनेन कर्मसंज्ञा विधीयते] कर्मसंज्ञा स्यात्, इति शङ्का, तत्राकथितशब्दस्यासंकीर्तितपरत्वेनासंकीर्तितत्वं च वर्जितत्वं, वर्जनं च प्रसक्तस्य सजातीयस्यैव भवतीति कारकस्यैव कर्मसंज्ञा भवति, न तु ब्राह्मणस्य पुत्रं प्रतिविशेषणस्येति न दोष इत्युत्तरम् । पुनराक्षेपसाधकभाष्यम्—"अस्त्यप्राधान्ये वर्तते, तद्यथा—'अकथितोऽसौ ग्रामे, अकथितोऽसौ नगरे' इत्युच्यते यो यत्राप्रधानो भवति, तद्यदा अप्रधानेऽकथितशब्दो वर्तते तदैष दोषः "कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" इति । अयमाशयः—'अयमत्र ग्रामेऽकथित इति लौकिकप्रयोगेणाप्राधान्यवाची अकथितशब्दः, अप्राधान्यं च प्रधानभिन्नत्वमेव, न तु वर्जितप्राधान्यकत्वम्; प्रधानत्वसंभावनावत्यपि लोकेऽप्रधानशब्दप्रयोगात् । अत्र चेप्सिततमत्वात् पन्थाः प्रधानं, न पुत्रो नापि ब्राह्मण इति, अकथितशब्दस्याप्रधानत्वपरत्वे ब्राह्मणस्याप्यकथितत्वेन कर्मत्वं प्राप्नोति कारकसंज्ञाया विशिष्टविषयत्वाभावे । एवमाक्षेपान्तरमप्याह—"अपादानं च वृक्षस्य पर्णं पतति" इति, तद्भाष्यम्—"अपादानसंज्ञा च प्राप्नोति, क्व? वृक्षस्य पर्णं पतति" इति । अयमाशयः—पूर्वोक्ते ग्रामस्य समीपादागच्छतीत्यत्र समीपस्यावधेः सत्त्वाद् ग्रामस्यापादानसंज्ञाऽभावेऽपि वृक्षस्य पर्णं पततीत्यत्रान्यस्यावधेरभावाद् वृक्षस्यापादानसंज्ञा स्यादेवेति । एतत्समाधानवार्तिकम्- "न वाऽपायस्याविवक्षितत्वात्" इति, तद्भाष्यम्—"न वा एष दोषः, किं कारणम्? अपायस्याविवक्षितत्वात्, नात्रापायो विवक्षितः, किं तर्हि? सम्बन्धः, यदा चापायो विवक्षितो भवति, भवति तदापादानसंज्ञा, तद्यथा—वृक्षात् पर्णं पततीति । सम्बन्धस्तु तदा न विवक्षितो भवति, न ज्ञायते कङ्कस्य वा कुररस्य वा" इति । अयमाशयः—वृक्षस्य पर्णं पततीत्यनेन वाक्ये वृक्षसम्बन्धित्वमेव पर्णे विवक्षितं, न तु वृक्षस्यापायावधित्वम्, यदा चावधित्वं विवक्ष्यते तदाऽपादानसंज्ञा भवत्येवेति नात्र दोष इति । एवं सति ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्रोक्तं दोषं पुनः स्मारयति [भाष्ये]—"अयं तर्हि दोषः—कर्मसंज्ञाप्रसङ्गश्चाकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छति" इति । आक्षेपबाधकभाष्यम्—"नैष दोषः, महतीयं संज्ञा क्रियते 'कारक' इति, संज्ञा च नाम यतो न लघीयः; कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्, तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम्—अन्वर्था संज्ञा यथा विज्ञायेत—करोतीति कारकम्" इति । अयमाशयः—अन्वर्था हि संज्ञा महती संज्ञोच्यते, संज्ञायाः संक्षेपेण कथनमेव प्रयोजनमिति 'टि-घु-भ' आदिसंज्ञावत् लघ्वी काचित् संज्ञा कृता स्यात्, सा च न कृतेति कारकमिति महासंज्ञाकरणादनुमीयते यत्—क्रियानिवर्तकत्वरूपविशेषयुक्ता अवध्यादयः संज्ञित्वेन निर्दिष्टा इति । तथा च ब्राह्मणस्य क्रियानिर्वर्तकत्वरूपकारकत्वाभावेन न कर्मत्वमिति । इत्थं कारकाधिकारस्य संज्ञाधिकारत्वं संसाधितम्, कारकपदस्य क्रियासाधकपरत्वमिति च महासंज्ञया साधितम्, एतेन च प्रबन्धेन कारकाणां विवक्षाधीनत्वमित्यपि स्पष्टमेव प्रतिपादितम्, इतोऽग्रे च प्रतिकारकं क्रियाकर्तृत्वं कथमिति शोभनतया प्रदर्शितं, तच्चान्ततः कारकाणां विवक्षाधीनत्वमित्यर्थपर्यवसाय्येव भवतीति तावानेवांशो विलिख्यते । सर्वत्रापि कारके यथाकथञ्चित् कर्तृत्वं विद्यत एवेति प्रदर्शिते सर्वस्यापि कर्तृसंज्ञा कुतो नेत्याशङ्कायां समाधानवार्तिकम्—"न वा स्वतन्त्रपरतन्त्रत्वात् तयोः पर्यायेण वचनं, वचनाश्रया च संज्ञा" इति, तद्भाष्यम्—"न वा एष दोषः, किं कार-

णम् ? स्वतन्त्रपरतन्त्रत्वात्, सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम्, तयोः पर्यायेण वचनम्, तयोः स्वातन्त्र्य-पारतन्त्र्ययोः पर्यायेण वचनं भविष्यति, तद्यथा–वलाहकाद् विद्योतते विद्युत्, वलाहके विद्योतते, वलाहको विद्योतत इति" इति, सर्वत्र कारके स्वातन्त्र्य-पारतन्त्र्ययोर्विवक्षाधीनं कर्तृत्वादि, तदधीनाश्च विभक्तयः यथा–निःसरणाङ्के विद्योतने द्युतेर्वाच्ये पृथग्भावे च विवक्षिते वलाहकाद् विद्योतते विद्युदिति; स्थित्यङ्के द्योतने द्युतेर्वृत्तौ 'वलाहके विद्योतते' इति, वलाहके स्थित्वा ज्योतीरूपा विद्युद् विद्योतते इत्यर्थात्; विद्युतो वलाहकस्य चाभेदविवक्षायां वलाहको विद्योतत इति प्रयोगः। एवमेव स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रेति स्थाली पचतीति प्रयोगः, कर्तृस्थे यत्ने कथ्यमाने च स्थाली परतन्त्रेति स्थाल्यां पचतीति प्रयोग इति। अत्राक्षेपभाष्यम्–"ननु च भोः कर्तृस्थेऽपि यत्ने कथ्यमाने स्थालीसम्भावनक्रियां धारणक्रियां च करोति, तत्रासौ स्वतन्त्रा, क्वेदानीं परतन्त्रा स्यात्" इति। अत्र समाधानभाष्यम्–"एवं तर्हि प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा, तद्यथा–अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्, व्यवाये स्वातन्त्र्यम्" इति। अयमाशयः–धात्वर्थोनाश्रयायाः स्थाल्याः प्रधानधात्वर्थाश्रयेण समवाये पारतन्त्र्यमिति तत्र देवदत्तः स्थाल्यां पचतीति प्रयोगः, प्रधानविरहे च स्थाल्या एव धात्वर्थाश्रयत्वमिति तत्र तस्याः प्राधान्येन स्थाली पचतीति प्रयोग इति। अत्र शङ्कते–"किं पुनः प्रधानम्" इति, सामग्रीतः कार्योत्पादे सर्वेषां तत्र समानत्वान्न कस्यचित् प्राधान्यं प्रतीयत इति प्रश्नाशयः। समाधानभाष्यम्–"कर्ता, कथं पुनर्ज्ञायते कर्ता प्रधानमिति, यत् सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति" इति। अत्र कैयटः–"तदधीनप्रवृत्तित्वात् करणादीनां, तस्य च प्रागन्यतः शक्तिलाभात्, प्रतिनिध्यदर्शनात्, करणाभावेऽपि 'आस्ते, शेते' इत्यादौ केवलस्य कर्तुर्दर्शनात् कर्तृरहितानां करणादीनामदर्शनात् प्राधान्यं कर्तुरित्यर्थः" इति। अत्राक्षेपभाष्यम्–"ननु च भोः प्रधानेनापि वै समवाये स्थाल्या अनेनार्थोऽधिकरणं कारकमिति, नहि कारकमित्यनेनाधिकरणत्वमुक्तम्, अधिकरणमिति वा कारकत्वम्, उभौ चान्योन्यविशेषकौ भवतः, कथम्? एकद्रव्यसमवायित्वात्, तद्यथा–'गार्ग्यो देवदत्त' इति, नहि गार्ग्य इत्यनेन देवदत्तत्वमुक्तम्, देवदत्त इत्यनेन वा गार्ग्यत्वम्, उभौ चान्योन्यविशेषकौ भवत एकद्रव्यसमवायित्वात्" इति। अस्यायमाशयः–प्रधानेन कर्त्रा सह प्रयोगेऽपि स्थाल्या अधिकरणत्वसिद्धये कारकत्वमभिप्रेतम्, कारकत्वं च क्रियाप्रवर्त्तकत्वमेवेति तस्यापि कर्तृत्वमावश्यकम्, अन्यथाऽधिकरणं कारकमिति विशेषणविशेष्यभावो न स्यादिति। अथ समाधानभाष्यम्–"एवं तर्हि सामान्यभूता क्रिया वर्तते, तस्या निर्वर्तकं कारकम्" इति अत्र कैयटः–"सर्वेषां कारकाणां साध्यत्वेन साधारणी क्रिया, ततश्च सर्वेषां तस्यां कर्तृत्वम्, अवान्तरव्यापारविवक्षायां तु करणादिरूपत्वम्; यथा मातापित्रोरपत्योत्पादने कर्तृत्वम्, भेदविवक्षायां तु अयमस्यामियमस्माज्जनयतीत्यधिकरणत्वमपादानत्वं च व्यवतिष्ठते। कर्तृसंज्ञा तु करणत्वाद्यवस्थायां न भवति "स्वतन्त्रः कर्ता" [ २. २. २. ] इत्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था, तेन स्वतः स्वातन्त्र्यमेव यस्य कर्तृसंज्ञा तस्य, न तु पारतन्त्र्यसहितस्वातन्त्र्ययुक्तस्य, कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमनुद्भूतत्वेनाविवक्षितमपि स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात् प्रवर्तते। यत्र च शक्तीनां निमित्तनिमित्तिवद्भावेन युगपद्विवक्षा तत्र संज्ञानां विप्रतिषेध उच्यते, यथा–धनुषा विध्यतीति, विनापायविवक्षया धनुषः साधकतमत्वभावात् संज्ञाद्वयप्रसङ्गे परत्वात् करणसंज्ञा। असिश्छिनत्तीति सत्येव साधकतमत्वे स्वातन्त्र्यस्य विवक्षितत्वात् परत्वात् कर्तृसंज्ञा, तदा तु तैक्ष्ण्याधीनं करणत्वम्, तैक्ष्ण्यादीनां तु कर्तृत्वविवक्षायामात्मनः करणत्वम्, तैक्ष्ण्यमेव हि विवक्षावशाद् द्वेधाऽवतिष्ठते कर्तृत्वेन करणत्वेन च। वस्तुस्थित्या त्वेक एवार्थात्मेति कर्तृत्वं करणत्वस्य बाधकमुच्यते" इति। एतेन प्रदर्शितेन भाष्य-कैयटग्रन्थेन कारकाणां विवक्षाधीनत्वं न्यायतः प्राप्तमिति न तत्र वचनावश्यकतेति प्रतीयते। स्वमते चास्यैवार्थस्य संक्षेपतः प्रतिपादनाय न्यायोऽयं समाश्रीयते। एवं च विवक्षाया अपि वस्तुस्वभावमूलत्वादेव सम्बन्धे कारकत्वविवक्षा न भवति, कारकविभक्तिभिः सम्बन्धार्थस्य बोधयितुमशक्यत्वात्, सम्बन्धस्य च कारकत्वायोग्यत्वादिति तत्र कारकत्वविवक्षाभावार्थं न्यायस्य व्यभिचारित्वाश्रयणमकिञ्चित्करमेव, विवक्षायां वक्तुः प्राधान्येन तत्र न्यायस्य स्वातन्त्र्याभावादित्यास्तां विस्तरः ॥११॥

## ॥अपेक्षातोऽधिकारः॥ ॥ १२ ॥

सि०—अपेक्षणमपेक्षा आकाङ्क्षा, तस्या इति पञ्चम्यर्थे तस्, पञ्चम्याश्चेह ज्ञापकत्वमर्थः। अधिकरणमधिकार इति भावसाधनोऽधिकारशब्दः, अधिक्रियत इति वाधिकार इति कर्मसाधनोऽपि भवितुमर्हति। लोके नियोगः प्रेरणं तद्विषयीभूतं कार्यं वाधिकारशब्देनोच्यते–स तत्राधिकृतः, तत्र कार्ये विनियुक्त इत्यर्थः, तत् तेनाधिकृतम्, विनियोगवशादधिष्ठितमित्यर्थः, इत्युभयथाऽधिकारशब्दस्य प्रयोगदर्शनात्। तत्र शब्दस्य द्विविधं कार्यम्–अर्थबोधः स्वरूपबोधो वा, तत्रार्थबोधस्य वचनान्तरेणानपेक्षितत्वाद् द्वितीये स्वरूपबोधरूपे पर्यवसानमिति वचनान्तरेणाकाङ्क्षितस्य पदस्य योगे योगे समुपस्थानमधिकारशब्दार्थः फलति। तच्चोपस्थानं प्राय उत्तरयोगेष्वेव भवति, क्वचित् पूर्वयोगेऽपि लक्ष्यानुरोधादपकर्ष-

रूपोऽधिकारो भवति । तथा च वचनान्तरापेक्षाज्ञाप्योऽधिकारः-उत्तरत्र समुपस्थानमिति न्यायार्थः । एवं चाधिकारस्य ज्ञापकापेक्षा न भवति, लक्ष्यानुसारिभिर्वचनैराकाङ्क्षितत्वमात्रेणापेक्षितं पदमधिकृतं विज्ञायत इति भावः । तत्रापेक्षया प्रवृत्तिवदनपेक्षया निवृत्तिरपि स्वतः सिद्धा भवतीति न तदर्थमपि ज्ञापकाद्यपेक्षेति सूचयितुमेवायं न्यायः प्रवृत्तः, यथा-"णषमसत् परे स्यादिविधौ च०" [२. १. ६०.] इति सूत्रस्थं असत् परे इति पदं "रात् सः" [२. १. ९०.] इति सूत्रपर्यन्तमेवाधिक्रियते, न तत ऊर्ध्वम्, 'स्यादिविधौ' इति च "नोर्व्यादिभ्यः" [२. १. ९९.] इति यावदित्येषोऽर्थोऽनेन न्यायेन ज्ञापकं विनाऽपि साधितः । एतन्न्यायज्ञापकं तु-"समानानां तेन दीर्घः" [१. २. १.] इति सूत्रस्थं समानानामिति पदम्, समानानामिति पदे हि "ह्रस्वा-ऽऽपश्च" [१. ४. ३२.] इति सूत्रेणामो नाम् विहितः, "ह्रस्वापश्च" [१. ४. ३२.] इति सूत्रे चामोनामिति न श्रूयत इति कथं तेन तस्य स्थाने तस्य विधानं स्यात् 'आमो नाम्' इति पदद्वयं च "आमो नाम् वा" [१. ४. ३१.] इति पूर्वसूत्रे एव पठितम्, ततश्च तदधिकारं विना तत्सम्बन्ध इह सूत्रे [ह्रस्वापश्चेत्यत्र] दुर्लभः, तदसम्बन्धे च समानानामिति निर्देशोऽनुपपन्न इति तं विनाऽनुपपद्यमानः स पूर्वसूत्रस्थपदानामपेक्षावशादधिकार इत्यर्थकमिमं न्यायमाक्षिपत्येव, तदुपपादकान्तरस्यानुपलम्भात्; एतच्चानुवृत्तौ ज्ञापकम् । निवृत्तौ तु-"ऐदौत् सन्ध्यक्षरैः" [१. २. १२.] इति सूत्रे सन्ध्यक्षरैरिति पदमेव ज्ञापकम्, अत्र हि उपसर्गसम्बन्धिभिन्नस्याकारस्यैव विधानम् "ऋत्यारुपसर्गस्य" [१. २. ९.] इत्यतोऽनुवर्तमानस्य 'उपसर्गस्य' इत्यस्य पदस्य निवृत्तिं विना न सिध्यति, न च तन्निवृत्तौ किमपि ज्ञापकान्तरमुपलभ्यते, ततश्चापेक्षाभावादेव निवृत्तिरिति कल्प्यते; तथा चैतन्न्यायस्य प्रवृत्ति-निवृत्त्योरुभयोरपेक्षाप्रयोज्यत्वबोधकत्वं सुसम्पन्नम् । अयं च न्यायोऽपेक्षामाश्रित्यैव प्रवर्तत इति यत्र निरपेक्षाबोधकं किञ्चिल्लिङ्गं भवति तत्र स्वभावत एव न प्रवर्तते, यथा "प्रत्यये च" [१. ३. २.] इत्यत्र चकारोऽनुवर्त्तमानवाग्रहणस्य स्वस्मिन् विषये निवृत्तिबोधक इति तत्र निवृत्तोऽपि वाशब्द उत्तरत्रानुवर्तते, तन्मूलक एव चकारस्योत्तरत्र वा ग्रहणनिवृत्त्यर्थत्वव्यवहारो वृत्तौ कृतः, तत्र हि विनाऽपि चकारं पूर्वसूत्रस्थपदयोस्तत्रानुवृत्तानां 'वा' 'पदान्ते' 'अनुनासिक' इति पदानामनुवृत्तिसिद्धौ क्रियमाणश्चकारः किमपि वैलक्षण्यं सूचयति, तच्च स्वघटितयोगस्य नित्यत्वमेव, एवं च वाग्रहणनिवृत्त्यर्थत्वेन क्रियमाणश्चकारो वाग्रहणस्याधिकारत्वं सूचयति, तत्फलं चोत्तरत्रानुवृत्तिरेव । तथा चानेन चकारकरणरूपेण लिङ्गेनैतन्न्यायप्रवृत्तिं विनाऽप्यनुवृत्ति-निवृत्त्योर्यत्नान्तरेण लभ्यत्वमिति सूच्यते । अपेक्षावशादेव च मध्ये विशेषातिदेशाद् विच्छिन्नोऽप्यधिकारोऽग्रेऽपेक्षितश्चेत् तर्हि प्रवर्तत एव । अधिकारस्यैवं विषयत्वादेवाधिकारविषये मण्डूकप्लुतिन्यायोऽपि स्वीक्रियते, अयमाशयः-अधिकारस्य द्वयी गतिः-धाराप्रवाहन्यायेन मण्डूकप्लुतिन्यायेन च, यत्राविच्छिन्न एवाधिकारो यथाऽपेक्षं प्रवर्तते परत्र निवर्तते च तत्र धाराप्रवाहगतिराश्रीयते, यत्र च मध्ये विच्छिद्य पुनः प्रवर्तते तत्र मण्डूकगतिः । तत्र धाराप्रवाहानुवृत्तिः प्रसिद्धैव, मण्डूकप्लुतानुवृत्तिश्च यथा-"धातोरिवर्ण०" [२. १. ५०.] इत्यतोऽनुवर्तमानो धातोरित्यधिकारो "भ्रूश्नोः" [२. १. ५३.] इत्यादिसूत्रत्रये विशेषातिदेशसद्भावादसम्बद्धोऽपि "योऽनेकस्वरस्य" [२. १. ५६.] इत्यत्रापेक्षातः पुनरनुवृत्तः । इत्थं चानेनैव न्यायेनेदृशस्थलस्यापि निर्वाहे *विशेषातिदिष्टो विधिः प्रकृताधिकारं न बाधते* इति न्यायान्तरस्वीकारे न किमपि फलम् । केचित्तु "धातोरिवर्ण०" [२. १. ५०.] इत्यतो धातोरित्यस्यानुवृत्तिः धाराप्रवाहन्यायेनैव चलति, मध्ये च सूत्रत्रयेऽसम्भवादसम्बध्यमानोऽप्यविच्छिन्न एवेति न मण्डूकप्लुतिरत्रेत्याहुः, तन्मते च मण्डूकप्लुतेरुदाहरणं यथा—"अनवर्णात् स्वरे वोऽसन्" [१. २. ४०.] इति सूत्रस्थोऽसन्नित्यधिकारः "अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः" [१. २. ४१.] इति सूत्रं मध्ये लङ्घयित्वा "तृतीयस्य पञ्चमे" [१. ३. १.] "प्रत्यये च" [१. ३. २.] इति सूत्रयोर्गत इति तेन 'ककुम्मण्डलम्, अम्मयः' इत्यादौ समासान्तर्वर्तिविभक्त्या "नामसिदय्व्यञ्जने" [१. १. २१.] इत्यनेन च क्रमात् पदसंज्ञासत्त्वे पदान्तस्यापि मस्यासत्त्वात् "तौ मु-मः०" [१. ३. १४.] इत्यनुस्वारा-ऽनुनासिकौ न भवतः । एतच्चावश्यमेव स्वीकार्यं यदुभयत्रपक्षे [धाराप्रवाहे मण्डूकप्लुतौ च] अपेक्षात एवाधिकार इति नैतन्न्यायं विना तयोः सिद्धिरिति ॥ १२ ॥

## ✻ अपेक्षातोऽधिकारः ॥ १२ ॥ ✻

त०—सूत्राणि हि यथासम्भवमल्पाक्षराणि विधीयन्ते, "अल्पाक्षरमसन्दिग्धम्०" इत्यादिना सूत्रस्य लक्षितत्वेनाल्पाक्षरत्वस्य तत्र गुणत्वात्, किन्तु असंदिग्धत्व-सारवत्त्व-विश्वतोमुखत्वानां सिद्ध्यर्थं तत्र पदान्तराणामपेक्षा भवत्येव, तत्रैकप्रकरणपठितानां सूत्राणां मध्ये तत्प्रकरणसामान्यार्थसूचकं पदमेकत्रैव पठ्यते, आकाङ्क्षावशाच्च तस्य प्रतियोगमुपस्थितिर्भवति स एव चाधिकारशब्देन प्रयुज्यते; लोकेऽपि प्रथमे वाक्ये समुपात्तं पदमाकाङ्क्षावशादग्रिमवाक्येष्वपि सम्बध्यत एव, यथा अत्र विद्यालये देवेन्द्रः पठति, महेन्द्रोऽध्यापयति, सुरेन्द्रो वाचयति' इत्यादिवाक्येषु पूर्ववाक्यस्थे 'अत्र विद्यालये' इति पदे अनुवर्तेते एव ।

इत्थञ्च विनाऽपि ज्ञापकमपेक्षातः प्रतियोगं शब्दोपस्थानं सम्भाव्यत एवेति लोकसिद्धोऽयं न्यायस्तथापि स्वशास्त्रसम्मतत्वसूचनाय पूर्वाचार्यादिप्रक्रियामनुसृत्य ज्ञापकादिकमुपन्यस्तम्। पाणिनीये तन्त्रे चैतत्स्थानीयं परिभाषासूत्रमेव पाणिनिना कृतम्, तच्च "स्वरितेनाधिकारः" [पा० सू० १. ३. ११.] इति, भाष्यकृता च सूत्रस्य प्रयोजनस्फोरणायेत्थं शङ्कासमाधी कृते, तथाहि–"किमर्थमिदमुच्यते?" इति सूत्रप्रयोजनाक्षेपभाष्यम्, तदाशयश्च आकाङ्क्षादिवशात् प्रस्तुतपदस्य सम्बन्धो लोक इव व्याकरणशास्त्रेऽपि भविष्यत्येवेति न सूत्रप्रयोजनं किमपीति। ततः समाधानवार्त्तिकम् "अधिकारः प्रतियोगं तस्यानिर्देशार्थः" इति, तद्भाष्यम्–"अधिकारः क्रियते प्रतियोगं तस्यानिर्देशार्थः" इति। किमिदं प्रतियोगमिति? योगं योगं प्रति प्रतियोगमिति, योगे योगे तस्य ग्रहणं मा कार्षम्" इति। पुनराक्षिपति–"किं गतमियता सूत्रेण" इति, किमयमर्थोऽधिकारशब्देन वक्तुं शक्यते उत नेति तदाशयः, समाधत्ते–गतमित्याह, कुतः? लोकतः, तद्यथा–लोके 'अधिकृतोऽसौ ग्रामे, अधिकृतोऽसौ नगरे' इत्युच्यते यो यत्र व्यापारं गच्छति, शब्देन चाप्यधिकृतेन कोऽन्यो व्यापारः शक्योऽवगन्तुमन्यदतो व्यापारात्" इति अधिकारशब्दो व्यापारार्थकः, शब्दस्य चार्थबोधनं व्यापारः, स च स्वस्थान एव परिक्षीण इति कोऽन्यस्ततोऽधिको व्यापारः स्यात् प्रतियोगमुपस्थितिभिन्न इति प्रतियोगमुपस्थानमेवात्राधिकारशब्दार्थ इति तदाशयः समाधानबाधकवार्त्तिकम्–"न वा निर्दिश्यमानाधिकृतत्वाद् यथा लोके" इति। तद्भाष्यम्–"न वा एतत् प्रयोजनमस्ति, किं कारणम्? निर्दिश्यमानाधिकृतत्वात्, यथा लोके निर्दिश्यमानमधिकृतं गम्यते, तद्यथा–'देवदत्ताय गौर्दीयताम्, यज्ञदत्ताय, विष्णुमित्राय' इति गौरिति गम्यते। एवमिहापि–"पदरुजविशस्पृशो घञ्" [पा० सू० ३. ३. १६.] "सृ स्थिरे" [पा० सू० ३. ३. १७.] "भावे" [पा० सू० ३. ३. १८.] घञिति गम्यते" इति, वचनं विनाऽपि लोकव्यवहारादेव सूत्रसाध्योऽर्थः सिद्ध इति वृथा सूत्रमिति भाष्याशयः। अथ समाधानवार्त्तिकम्–"अन्यनिर्देशस्तु निवर्त्तकस्तस्मात् परिभाषा" इति। भाष्यम्–"अन्यनिर्देशस्तु निवर्त्तको भवति, तद्यथा–'देवदत्ताय गौर्दीयताम्, विष्णुमित्राय कम्बलः' इति कम्बलो गोर्निवर्त्तको भवति; एवमिहापि "अभिविधौ भाव इनुण्" [पा० सू० ३. ३. ४४.] घञो निवर्त्तकः स्यात्, तस्मात् परिभाषा" इति। अयमाशयः–धाराप्रवाहेनानुवृत्तिस्थले लोकन्यायेन सिद्धावपि यत्रान्यविधेयादिसम्बन्धात् प्रकृतविधेयादिनिवृत्तिर्भवति, तत्र तदग्रे पुनः प्रकृतसम्बन्धाय परिभाषासूत्रमिदमावश्यकमिति, एषा च युक्तिः स्वकीये न्याये [अपेक्षातोऽधिकार इत्यत्रा]पि वक्तुं शक्यत एव। अत्रैवान्ते कियत्पर्यन्तमधिकार इत्यस्यार्थस्य निर्णयाय व्याख्यानस्यैव शरणीकरणीयतया लोकन्यायव्याख्यानाभ्यामेव सर्वार्थसिद्धावेतत् सूत्रं व्यर्थमिति प्रस्तुत्य फलान्तरतया स्थापितं सूत्रम्, तथाहि–"न तर्हीदानीमयं योगो वक्तव्यः" इत्याक्षेपभाष्यम्। "वक्तव्यश्च, किं प्रयोजनम्? स्वरितेनाधिकारगतिर्यथाविज्ञायेत। अधिकं कार्यम्, अधिकः कारः"। अयमाशयः–प्रतियोगमुपस्थितार्थस्य तस्य परिभाषासूत्रस्यानावश्यकत्वेऽपि अधिकारबोधायेदमावश्यकम्, स्वरितत्वं हि निर्दिश्य एतदधिकारपठितानां ग्रहणमिति बोधनं यथा स्यात्, इत्येकं प्रयोजनम्, स्वरितत्वयुक्तेन शब्देनाधिकं कार्यं यथा स्यात्, इत्यर्थबोधनायापि सूत्रमिदमावश्यकम्, स्वरितत्वयुक्तस्य चाधिकोव्यापारो यथा बुध्येत तदर्थमपीदमावश्यकम्, इति। क्रमेणोदाहरति–'अधिकारगतिः "गोस्त्रियोरुपसर्जनस्य" [पा० सू० १. २. ४८.] इत्यत्र 'गोटाङ्' ग्रहणं चोदितं तन्न कर्तव्यं भवति, स्त्रीग्रहणं स्वरयिष्यते, स्वरितेनाधिकारगतिर्भविष्यतीति "स्त्रियाम्" [पा० सू० ४. १. ३.] इत्येवं प्रकृत्य ये विहितास्तेषां ग्रहणं विज्ञास्यते, तत्र स्वरितेनाधिकारगतिर्भवतीति न दोषो भवति" [अधिकार गतिः]। द्वितीयफलोदाहरणम्–"अधिकं कार्यम्, अपादानमाचार्यः किं न्याय्यं मन्यते? यत्र प्राप्यनिवृत्तिः, तेनैव यथा स्यात्–ग्रामादागच्छति, नगरादगच्छति; सांकाश्यकेभ्यः पाटलिपुत्रा अभिरूपतरा इत्यत्र न स्यात्, स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति। तथा अधिकरणमाचार्यः किं न्याय्यं मन्यते?, यत्र कृत्स्न आधारात्मा व्याप्तो भवति, तेनैव स्यात्–तिलेषु तैलं दध्नि सर्पिरिति; गङ्गायां घोषः, कूपे गर्गकुलमित्यत्र न स्यात्, स्वरितेनाधिकं कार्यमित्यत्रापि सिद्धं भवति [अधिकं कार्यम्]। तृतीयफलोदाहरणम्–"अधिकं कारः, पूर्वविप्रतिषेधाश्च न पठितव्या भवन्ति। "गुण-वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषिद्धम्" 'नुमचिरतृज्वद्भावेभ्यो नुट्' इति, नुम्नुटौ स्वरयिष्येते, तत्र स्वरितेनाधिकः कारो भवतीति नुम्नुटौ भविष्यतः" इति। अयमाशयः–स्वरितत्वं नाम स्वरविशेषः, स च यत्रार्थविशेषो बुबोधयिषितस्तत्र करिष्यते, तेन च यत्र स्त्रीप्रत्ययग्रहणमिष्टं यथा "गोश्चान्ते ह्रस्वोऽनंशिसमासे यो बहुव्रीहौ" [२. ४. ९६.] इत्यादौ, तत्र च ड्याबन्तस्य इति क्रियते, तेनान्येषां 'स्त्रियां क्तिः' इत्यादिस्त्रीप्रत्ययानां ग्रहणं न भवति, तथा 'अतितन्त्रीः' इत्यादिशब्दानामपि ह्रस्वत्वं न भवति, तथैव पाणिनीयेऽपि तद्विषयके "गोस्त्रियोरुपसर्जनस्य" [पा० सू० १.४.४८.] इति सूत्रेऽतितन्त्रीरित्यादौ ह्रस्वव्यावृत्त्यर्थं 'गोटाङ् ग्रहणं कर्तव्यम्, तत्र च टाङ्प्रत्याहारः, टापः टाशब्दादारभ्य ष्यङो ङकारं यावदिति तेनेष्टसिद्धिरित्यादि तत्र सूत्रे महाभाष्ये प्रतिपादितम्, स्वरितेनाधिकारगतिरित्यर्थमाश्रित्य च तत् खण्डितम्। तथा च "गोस्त्रियोः" [पा० सू० १.२.४८]

इति सूत्रस्थस्त्रीशब्दे स्वरितत्वं विधाय तत्र "स्त्रियाम्" [४. १. ३.] इति सूत्राधिकारविहितानामेव प्रत्ययानां स्त्रीप्रत्ययत्वेन ग्रहणमिति बोधनेन दोषाभाव इति, एतच्चाधिकारगतिरित्यस्योदाहरणम्, स्वरितेनाधिकं कार्यमिति चार्थः स्वीक्रियते, अधिशब्दस्याधिकार्थकत्वात् कारशब्दे बाहुलकात् कर्मणि घञि तस्य कार्यार्थपरत्वात् । तथा चाधिकारेण स्वरितत्वसमधिगतेनाधिकं कार्यं भवतीत्यपायेऽवधिभूतस्यापादानत्वमिति वस्तुस्थितौ सत्यां ग्रामादायातीत्यादावेवापादनत्वं स्यात्, न तु सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इत्यादौ, अत्र हि बुद्धया सांकाश्यकैः सह विषयीकृताभेदाः पाटलिपुत्रका अभिरुपतरत्वरूपप्रकर्षाश्रयेण तेभ्यो विभज्यन्ते इति मुख्यापायाभावादपादानत्वमप्राप्तमित्यपादानशब्दे स्वरितत्वप्रतिज्ञाने सति बुद्धिपरिकल्पितापायाश्रयणेनापि भवति । एवमधिकरणमपि कृत्स्नव्याप्तावेव भवति–यथा तिलेषु तैलमित्यादौ, गङ्गायां गावः कूपे गर्गकुलमित्यादौ च कृत्स्नस्याधारस्य व्याप्त्यभावान्नाधिकरणत्वं प्राप्नोति, अधिकरणशब्दे च स्वरितत्वप्रतिज्ञाने तेनाधिकस्यापि कार्यस्यलाभाद् भवति तत्राप्यधिकरणसंज्ञेति । एतच्चापायानां त्रैविध्यमाधारस्य च षोढात्वमाश्रित्य वृत्तावपि संगृहीतमेवेति–"अपायेऽवधिरपादानम्" [२. २. २९.] इति "क्रियाश्रयस्याधारोऽधिकरणम्" [२. २. ३०.] इति सूत्रयोर्बृहद्वृत्तौ स्पष्टम् । एतच्चापादानाधिकरणशब्दयोरधिककार्यकारित्वमूलकमेवेति भाष्यतो ज्ञायते । तथा चैतत् स्वमतेऽपि संग्राह्यमेवेत्यधिकं कार्यमिति स्वमतेऽप्युदाहर्तव्यमेव । 'अधिकः कार' इति च क्वचित् पूर्वशास्त्रस्याऽपि परशास्त्रबाधकत्वस्य लक्ष्यानुसारमाश्रयणीयस्य सिद्धयर्थं स्वीक्रियते, तदपि स्वशास्त्रे संग्राह्यमेव यदि तादृशं लक्ष्यं लक्षणीयं स्यात् । 'अधिकः कारः' इति विग्रहेऽधिकारस्य कथं परबाधकत्वमित्याशङ्कामपि लौकिकदृष्टान्तेनापनुनोद भाष्यकृत्, तथाहि–[आक्षेपभाष्यम्–]

कथं पुनरधिकः कार इत्यनेन पूर्वविप्रतिषेधाः शक्या न पठितुम् ? [समाधानभाष्यम्–] लोकतः, तद्यथा–लोकेऽधिकमयं कारं करोतीत्युच्यते–योऽयं दुर्बलः सन् बलवद्भिः सह भारं वहति, एवमिहाऽप्यधिकमयं कारं करोतीत्युच्यते–योऽयं पूर्वः सन् परं बाधते ॥ इति, स्पष्टमिदं भाष्यम् । तथा च *अपेक्षातोऽधिकारः* इति न्यायो न केवलं पदानामनुवृत्तिनिवृत्त्योरेवाख्यायकः, किन्तु यादृशेऽर्थे यत्पदस्य शक्तिर्निर्धारिता, यावच्च येन शास्त्रेण स्वभावतः कार्यं क्रियते, ततोऽधिकस्यापि कार्यस्य लाभार्थः, क्वचिद् बाध्यस्यापि बाधकत्वार्थश्चेति प्रकृतमहाभाष्यैक्योगक्षेमत्वाल्लभ्यत इति बोध्यम् ॥ १२ ॥

## *अर्थवशाद्विभक्तिविपरिणामः* ॥१३॥

**सि०**—अर्थः—प्रकृते तात्पर्यविषयीभूतोऽभिधेयः, तस्य



वशात्–आनुकूल्यात्, विभक्तेः–पूर्वनिर्दिष्टायाः, विपरिणामः–परावृत्तिः, भवतीति शेषः । पूर्वसूत्रे निर्दिष्टस्य पदस्यानुवृत्तिस्थलेऽनुवर्तनादेवार्थान्तरस्य प्रत्यायकत्वं न सम्भवति तदनुकूलविभक्तेरभावात्, न चानुवर्तनादेव विभक्त्यन्तरोत्पत्तिः सम्भवति, अनुवृत्तिक्रियायां तादृशसामर्थ्याभावात्, 'नहि गोधा सर्पन्ती सर्पणक्रियावत्त्वात् सर्पतां याति' इति दृष्टत्वात्, तथा च विभक्तिविपरिणामाय कश्चिद् यत्नः करणीय इति तदर्थमयं न्यायः समाश्रीयते । एवं च स्वीकृतेऽस्मिन् न्याये "अत आः स्यादौ जस्-भ्याम्-ये" [१. ४. १.] इत्यतोऽनुवर्तमानस्य षष्ठ्यन्तस्याप्यत इति पदस्य "भिस ऐस्" [१. ४. २.] इत्यत्र पञ्चम्यन्ततया विपरिणामः सम्पद्यते, अन्यथा तात्पर्यविषयीभूतार्थानवगमापत्तेः । ज्ञापकं त्वस्य न्यायस्य "अद् व्यञ्जने" [२. १. ३५.] इत्यत्र स्थानिनोऽनुपादानम्, अत्र च स्थानित्वेन पूर्वसूत्रादनुवर्तमान 'इदम्'शब्द इष्टः, स च तत्र षष्ठ्यन्तः, अत्र च षष्ठ्यन्तत्वे तस्याश्रीयमाणे "षष्ठ्यान्त्यस्य" [७. ४. १०६.] इति परिभाषासूत्रप्रवृत्त्या मकारस्य स्थाने एवाकारादेशः स्यादिति 'आभ्याम्' इत्यादीष्टरूपासिद्धिः स्यादिति सम्पूर्णस्य स्थाने आदेशः स्यादित्येवमर्थमत्र प्रथमान्त 'इदम्'शब्दः पठनीयः, स च न पठित इति पूर्वतोऽनुवृत्तस्यैवार्थवशाद् विभक्तिविपरिणामेनेह प्रथमान्तत्वमिति सिद्धं भवति, तथा चास्य ज्ञापनं स्पष्टमेव । एवं चाग्रिमसूत्रे "अनक्" [२. १. ३६.] इत्यत्र 'अनक्' इति प्रथमान्तविशेषणेनापि विभक्तिविपरिणामः समर्थितः । अयं च न्यायो यत्र विभक्तिविपरिणामार्थं न यत्नः कृतस्तत्रैव प्रवर्तते, न तु तदर्थं यत्र यत्नः कृतस्तत्रैतन्न्यायानुसरणेन तस्य यत्नस्य वैयर्थ्यं शङ्कनीयम्, 'नासूया तत्र कर्त्तव्या यत्रानुगमः क्रियते' इति भाष्योक्तेः, तेन च "तृतीयस्य पञ्चमे" [१. ३. १.] इत्यतोऽनुवर्त्तमानस्य तृतीयस्येति पदस्यैतन्न्यायेन पञ्चम्यन्ततया परिणामसंभावनायां सत्यामपि "ततो हश्चतुर्थः" [१. ३. ३.] इत्यत्र तत इति करणस्य नासङ्गतत्वम्, 'ततः' इति निर्देशादस्यानित्यत्वं तु नाशङ्क्यम्, अन्यत्र फलाभावात् । ज्ञापकसिद्धस्य न्यायस्य सूत्राक्षरवैयर्थ्यापादनसामर्थ्याभावात्, तस्माज्ज्ञापकसिद्धं न सर्वत्रेति सामान्यन्यायेनैवेदृशस्थले निर्वाह इति ॥ १२ ॥

## *अर्थवशाद् विभक्तिविपरिणामः* ॥ १३ ॥

**त०**—शास्त्रेष्वेकस्यैव पदस्य क्वचिद् द्वयोरर्थयोर्बोधनायोच्चारणं क्रियते, तत्र च न शक्यतेऽर्थद्वयस्य विभिन्नविभक्तिविषयस्य बोधनाय युगपद् विभक्तिद्वयमुच्चारयितुम्, एकत्र पदेऽनेकविभक्तेरसंभवात्; तथा च तस्यैव पदस्य विभक्तिविपरिणामेनाऽन्वयः क्रियते लोकवत्, लोकेऽपि यथा 'सर्वे छात्रा गमिष्यन्ति,

अध्यापकश्च' इत्युक्तेऽध्यापकेऽन्वयार्थं गमिष्यतीति विभक्तिवचन-विपरिणामः क्रियते, तत्रैव 'अहं च' इत्युक्ते पुरुषस्यापि विपरिणामो भवति-गमिष्यामीति । तथा चायमप्यर्थो लोकसिद्ध एवेति पाणिनीये तन्त्रे नायं न्यायः परिभाषेन्दुशेखरे सङ्गृहीतो दृश्यते । भाष्यादिपर्यालोचनया चायमर्थस्तत्र तत्र समाश्रित इति ज्ञायते, तथाहि-"अङ्गस्य" [पा० सू० ६. ४. १.] इत्यधिकारसूत्रमर्थवशात् क्वचित् षष्ठ्यन्तमपि पञ्चम्यन्तं सम्पद्यते, यथा—"अतो भिस ऐस्" [पा० सू० ६. १. ९.] इत्यत्र, तथा हि-अदन्तादङ्गादित्यर्थः सम्पद्यते, अन्यथा विशेषण-विशेष्यभावाभावात् तदन्तविधिर्न स्यात्; यद्यपि तत्र सूत्रे [अङ्गस्येति सूत्रे] महाभाष्ये उपायान्तरमपि प्रदर्शितं तथापि दीक्षितादिभिर्विभक्तिविपरिणाम एव स्वीकृतः । किञ्च "भ्यसोऽभ्यम्" [पा० सू० ७. १. ३०.] इति सूत्रे महाभाष्ये "शेषे लोपः" [पा० सू० ७. २. ९०.] इति सूत्रेण शेषस्य लोप इत्यर्थोऽपि समाश्रितः, स च विभक्तिविपरिणामेनैव सिद्ध्यति नान्यथा, तत्र मपर्यन्ताच्छेषस्य लोप इत्यर्थः समाश्रितः, "मपर्यन्तस्य" [पा० सू० ७. २. ९१.] इत्यधिकारसूत्रे च षष्ठी श्रूयते, साऽपि प्रकृतार्थानुरोधेन पञ्चम्या विपरिणमयितव्या; एवं च बहुषु स्थलेषु विभक्तिविपरिणामेन कार्यं सम्पादितम् । "स्थानिवदादेशोऽनल्विधौ" [पा० सू० १. १. ५६.] सूत्रे च महाभाष्ये-"यां काञ्चिद् विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या" इति स्पष्टमेव प्रतिपादितम् । तथा च पाणिनीयेऽपि तन्त्रे सिद्धवदस्य न्यायस्यार्थः समाश्रीयते ॥ १३ ॥

## *अर्थवद्ग्रहणे नानर्थकस्य* ॥ १४ ॥

सि०—इह हि व्याकरणशास्त्रे शब्द एव कार्यी, स च द्विविधो दृश्यते-सार्थको निरर्थकश्च, तत्र समुदायस्य सार्थकत्वमवयवस्य च निरर्थकत्वम्, समुदाय एव शक्तिग्रहात् । तत्रैकः शब्दः क्वचित् समुदायरूपः क्वचिच्चैकदेशरूपः, यथा—'जातीयर्' प्रत्ययघटक-'तीय'शब्दः, क्वचित् समुदायरूपोऽपि, यथा-'द्वितीय' इत्यादौ, इह चावयवयरूपतयाऽनर्थकः । तत्र 'तीय'ग्रहणे विनिगमकाभावात् कीदृशस्य ? सार्थकस्यैव निरर्थकस्यैव उभयस्य वा ग्रहणमित्याशङ्कायामयं न्यायः पठ्यते, तत्र च 'सम्भवति ग्रहणं कार्यम्' इति च पदत्रयमध्याहृत्य न्यायस्य व्याख्या सम्पद्यते । अर्थवतः शब्दस्य प्रत्ययभूतस्य प्रकृतिभूतस्य वा ग्रहणे सम्भवति सत्यनर्थकस्य तस्य ग्रहणं न कार्यमित्यर्थः । तत्र प्रत्ययग्रहणं यथा—"तीयं ङित्कार्ये वा" [१. ४. १४.] इत्यत्र तीयस्य ग्रहणम्, तत्र चैतन्न्यायसहकारात् "द्वेस्तीयः" [७. १. १६५.] इत्यनेन विहितस्य सार्थकस्य तीयप्रत्ययस्यैव ग्रहणम्, न तु 'जातीयर्' प्रत्ययघटकस्य तीयस्य, तस्यैकदेशत्वात् प्रकारार्थस्यावाचकत्वेनानर्थकत्वात्, तेन पटुजातीयायेत्यादौ "तीयं ङित्कार्ये वा" [१. ४. १४.] इति स्मायादयो न भवन्ति । प्रकृतिग्रहणं यथा-"इन्-हन्-पूषा-ऽर्यम्णः शि-स्योः" [१. ४. ८७.] इत्यत्र 'हन्'इत्यादीनां ग्रहणम्, एतन्न्यायबलाच्च तत्रार्थवत एव हनो ग्रहणेन निरर्थकस्य 'प्लीहन्' इत्यादि शब्दनिष्ठस्य 'हन्' इत्यस्य न ग्रहणं भवति, तेन 'वृत्रहणौ' इत्यादाविव 'प्लीहानौ' इत्यादौ नियमाप्रवृत्तिरिति "नि दीर्घः" [१. ४. २५.] इति दीर्घः सिद्ध्यति । अत्र च ज्ञापकं "तृ-स्वसृ-नप्तृ०" [१. ४. ३८.] इति सूत्रे नप्त्रादीनां त्रन्तानामेव पृथगुपादानम् । तच्चोणादीनामव्युत्पन्ननामत्वपक्षे तत्रत्यतृ-शब्दस्यानर्थकत्वेनानेन न्यायेन तृशब्देन ग्रहणं न स्यादिति तत्र पक्षे नप्त्रादीनामार्विधानार्थं क्रियते, एतन्न्यायाभावे तु तत्र [अव्युत्पन्ननामत्व] पक्षेऽपि तेषां त्रन्तत्वसत्त्वादेवारि सिद्धे तद्वैयर्थ्यं स्पष्टमेव स्यात् । अनित्यश्चायं "संख्याडतेश्चाशत्तिष्टेः कः" [६. ४. ३०.] इति सूत्रे डतिग्रहणात्, तद्धि तत्रति वर्जनेन डत्यन्तस्य ग्रहणं न स्यादिति शङ्कयैव कृतम्, अन्यथा "डत्यतु संख्यावत्" [१. १. ३५.] इति सूत्रेण डतिप्रत्ययान्तस्य संख्यावद्भावविधानात् संख्याग्रहणेनैव डत्यन्तस्यापि ग्रहणे सिद्धे किं तेन कृतं स्यात्, एतन्न्यायध्रौव्ये तु डत्यन्तस्य त्यन्तत्वेन ग्रहणं न स्यात्, विंशत्यादिशब्देऽर्थवतस्तिशब्दस्य संभवेनानर्थकस्य डत्यवयवतिशब्दस्याग्रहणात्, इति डत्यन्तस्यावर्जने सिद्धे संख्यात्वेन तस्य ग्रहणे पृथक् डतिग्रहणवैयर्थ्यं स्पष्टमेव, तच्च व्यर्थं सत् अस्य न्यायस्यानित्यत्वं ख्यापयति । एवं च *अनिनस्मिन् ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति* इति न्यायोऽप्यस्य स्वविषये निवारको युक्त एव ॥ १४ ॥

## *अर्थवद्ग्रहणे नानर्थकस्य* ॥ १४ ॥

त०—अयमत्राभिसन्धिः-'घटमानय, घटमुच्चारय' इत्युभयविधप्रयोगदर्शनात्, प्रथमेऽर्थस्य द्वितीये शब्दस्य च बोधदर्शनात्, शब्दानामर्थे शब्दे च शक्तिरिति प्रतीयते । अर्थे शक्त्यभावे 'घटमानय' इति वाक्याद् घटकर्मकमानयनं न प्रतीयेत, तदनुरोधेनार्थमात्रे शक्तिस्वीकारे 'घटमुच्चारय' इति कथिते घटशब्दकर्मकमुच्चारणं न प्रतीयेत, प्रतीयते चोभयमित्युभयत्र शब्दस्य शक्तिरिति स्वीकार्यम् । न चार्थे शक्तिः शब्दे च लक्षणेति वाच्यम्, विनिगमनाभावाच्छब्द एव शक्तिरर्थे लक्षणेत्येव कुतो न स्यात् ?; न चेष्टापत्तिः कर्तुं शक्या, बाधप्रतिसन्धानाभावेऽपि घटादिपदात् कम्बुग्रीवादिमतोऽर्थस्य प्रतीत्या

लक्षणाऽसंभवात्, शक्यार्थबाधे हि लक्षणा भवति; न च 'घटमानय'इत्यादौ घटशब्दस्य-शब्दार्थकतामाश्रित्य शब्दस्यानयनं कथं स्यादिति बाधं प्रतिसन्धाय तस्य कम्बुग्रीवादिमति लक्षणेति कस्यचित् प्रतिपत्तुर्गोचरी भवति; एवं 'घटमुच्चारय' इत्यत्रापि योजनीयम्। न चार्थे प्रचुरः प्रयोगः शब्दे चाल्प इति प्रयोगप्राचुर्येणार्थे [ कम्बुग्रीवादिमति ] घटपदस्य शक्तिः, शब्दे तस्य लक्षणेति निर्णेयम्, प्रयोगप्राचुर्यस्य प्रसिद्ध्यप्रसिद्धिनियामकत्वेऽपि शक्तिनियामकत्वस्यादर्शनात्, लक्षणामूलस्य बाधप्रतिसन्धानस्य शब्दार्थत्वपक्षेऽप्यदर्शनाच्च। न च व्यवहारेण शक्तिनिर्णयः, व्यवहारस्य पूर्वरीत्योभयत्र तुल्यत्वात्। एवं च—

"न सोऽस्ति प्रत्ययो लोके, यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"

इति वाक्यपदीयेनार्थबोधेऽपि शब्दस्यापि शाब्दबोधे भानमिति प्रमाणतयोदाहर्तुं शक्यमेव, एवं च शब्दस्य शब्देऽर्थे च शक्तिरभ्युपेयैव। तथा च 'घटमानय' इत्यादौ घटशब्दवाच्यं कम्बुग्रीवादिमन्तमर्थमानय, 'घटमुच्चारय' इत्यादौ घटरूपार्थबोधकं 'घट'शब्दमुच्चारयेति क्रमेण बोधो जायते। तत्र शब्दविशिष्टेऽर्थे, अर्थविशिष्टे शब्दे च शब्दानां शक्तिकल्पने शक्यतावच्छेदके गौरवात्, लाघवात् सर्वेषां शब्दानां स्ववृत्तिश्रूयमाणानुपूर्व्यवच्छिन्ने, घटत्वादितत्तद्रूपावच्छिन्ने च खण्डशः शक्तिः कल्प्यते, स्ववृत्तीत्यत्र स्वपदं शक्तपदपरम्, यथा-'घट' इति शक्तं पदम्, तद्वृत्तिः श्रूयमाणा या आनुपूर्वी-घकारोत्तराकारोत्तरटकारोत्तराकारत्वरूपा, तयाऽवच्छिन्नं घट इति पदम्, तत्र घटत्वादि यत् प्रातिस्विकं रूपं प्रवृत्तिनिमित्तभूतं तदवच्छिन्ने च कम्बुग्रीवादिमति व्यक्तिविशेषे खण्डशः शक्तिरिति तात्पर्यम्। लोके आनयनादिकार्यस्य शब्दे बाधादर्थस्य विशेष्यतया शब्दस्य चार्थे विशेषणतया बोधः, शास्त्रे च "जातौ राज्ञः" [ ६. १. ९२. ] इत्यादौ मांसपिण्डविशेषरूपस्यार्थस्य प्रत्ययेन सहान्वयासंभवात् शब्दस्य विशेष्यतयाऽर्थस्य च शब्दे विशेषणतया बोधः। तथा च तत्तदर्थविशिष्टे शब्दे तत्तत्कार्यमिति व्याकरणशास्त्रे निर्णयः। तथा चायं न्यायः फलित इति नात्र ज्ञापकाकाङ्क्षा, तदुक्तं नागेशेन परिभाषेन्दुशेखरे एतत्परिभाषाव्याख्यानावसरे 'विशिष्टरूपोपादाने उपस्थितस्यार्थस्य विशेषणतयाऽन्वयसम्भवे तत्त्यागे मानाभावोऽस्या मूलमिति, विशिष्टरूपोपादान इत्युक्त्या च आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादान एवायं न्यायः प्रवर्तते, न तु वर्णोपादाने, एकस्मिन् वर्णे पूर्वापरवर्णान्तराभावेन विशिष्टरूपत्वाभावात्। तथा च यत्र वर्णमात्रोपादानं तत्र नायं न्यायः प्रवर्त्तत इति वर्णानामनर्थकानां सार्थकानां च ग्रहणं भवति, तदुक्तं "लस्य" [ पा० सू० ३. ४. ७७. ] इति सूत्रे महाभाष्ये-"लादेशे सर्वस्य प्रसङ्गोऽविशेषात् [ वार्तिकम् ]" "लादेशे सर्वस्य प्रसङ्गः, सर्वस्य लकारस्य प्राप्नोति, अस्यापि प्राप्नोति-लुनाति लभते, किं कारणम्? अविशेषात्, न हि कश्चिद् विशेष उपादीयते-एवंजातीयस्य लकारस्यादेशो भवतीति, अनुपादीयमाने विशेषे सर्वप्रसङ्गः, ततः समाधानवार्तिकम्-'अर्थवद्ग्रहणात् सिद्धम्' इति, भाष्यम्-"अर्थवतो लकारस्य ग्रहणम्, न चैषोऽर्थवान्" इति ततः, आक्षेपवार्तिकम्-"अर्थवद्ग्रहणात् सिद्धमिति चेन्न वर्णग्रहणेषु" इति, भाष्यम्-"अर्थवद्ग्रहणात् सिद्धमिति चेत्? तन्न, किं कारणम्? वर्णग्रहणमिदम्, न चैतद्वर्णग्रहणेषु भवति-'अर्थवद्ग्रहणे नानर्थकस्य" इति। अत्र कैयटः-"लस्येत्यत्र लकारेऽकार उच्चारणार्थः, ततश्च वर्णमात्रस्यायं निर्देशः, वर्णनिर्देशेषु विद्यमानाऽप्यर्थवत्ता शब्देन नाश्रिता, वर्णरूपमात्रस्याश्रयणात्। तथा च यस्येति लोपोऽनर्थकस्याऽपि भवति-दैवदत्तिरिति"इति। अयमाशयः-पाणिनीये तन्त्रे लडादयो दश लकारा आस्थिताः, तेषां स्थाने एव त्यादय आदेशा भवन्ति, तत्र चादेशविधायकं "लस्य" [ पा० ३. ४. ७७. ] इति सूत्रं, तत्रेयमाशङ्का-इहाविशेषेण लस्यादेशो विधीयत इति 'लुनाति, लभते' इत्यादिषु धात्ववयवलकारस्यापि त्यादय आदेशाः स्युरिति, तत्र *अर्थवद्ग्रहणे नानर्थकस्य* इति परिभाषया-न्यायेन वारणं न सम्भवति, तत्र वर्णमात्रस्याश्रितत्वेनास्य न्यायस्याप्रवृत्तेरिति, तत्र च [ लस्येति ] विशिष्टरूपोपादानमाश्रितं तदर्थमिति वर्णग्रहणे नास्य प्रवृत्तिरिति सिद्धम्, एतद्भाष्यप्रकरणाच्च वर्णानामर्थविशिष्टे वर्णे एका शक्तिरपरा च वर्णमात्रे। तथा च शास्त्रे वर्णो यत्र उपात्तो वर्त्तते तत्र लोक इवार्थविशेष्यकबोधे कार्याणां बाधादपरा या वर्णमात्रनिरूपिता शक्तिस्तयैव वर्णमात्रस्य बोधः, न तु विशिष्टरूपोपादान इवार्थविशिष्टवर्णबोधः, इति तत्रानर्थकस्यापि वर्णस्य ग्रहणं भवति। अर्थवैशिष्ट्यं च शब्दे स्वविषयकबोधजनकत्वेन तात्पर्यविषयत्वसम्बन्धेन, तथा च "तीयं ङित्कार्ये वा" [ १. ४. १४. ] इति सूत्रे समुपादीयमानस्तीयशब्दः पूरणार्थविषयकबोधजनकत्वेन तात्पर्यवानिति तत्र तदर्थवैशिष्ट्यं सिद्धमिति जातीयरिघटितस्य तीयस्य तादृशार्थबोधजनकत्वाभावेन न तस्य ग्रहणम्। एतेन "बोधकत्वसम्बन्धेनार्थवैशिष्ट्ये यदि बोधकता फलोपधायकता-कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वरूपा, तदा यदा प्रतिबन्धकवशाद् बोधाभावस्तदा 'द्वितीयस्मै' इत्यादावपि स्मायादेशो न स्यात्, यदि च स्वरूपयोग्यतैव बोधकता, सा च बोधजनकतावच्छेदकानुपूर्वीरूपा, तर्हि पटुजातीयायेत्यादावपि तादृशानुपूर्व्याः, सत्त्वेन स्मायादेशप्रसङ्गः" इत्यपास्तम्, तात्पर्याविशेष्यतापर्याप्तेर्जातीयशब्दघटकतीयशब्देऽभावात्। सिद्धान्ते दोषाभावात्। यद्यपि लोकेऽर्थबोधकता 'द्वितीय' इत्यादिसमुदाय-

स्यैव, न तीयमात्रस्य "न केवला प्रकृतिः प्रयोक्तव्या नापि केवलप्रत्ययः" इति भाष्यादिसिद्धान्तात्, तथापि शास्त्रीयकार्यनिर्वाहाय शास्त्रप्रामाण्यात् 'तीय'शब्देऽप्यर्थबोधकता कल्प्यते, तदुक्तं परिभाषेन्दुशेखरे एतन्न्यायव्याख्यावसरे नागेशेन—"अत्रार्थः कल्पितान्वय-व्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यते" इति, अस्यार्थः-अत्र न्यायेऽर्थपदेन न केवलं लौकिकप्रयोगप्रसिद्ध एवार्थो गृह्यते, किन्तु कल्पितौ यावन्वय-व्यतिरेकौ ताभ्यां कल्पितः-शास्त्रकारैरारोपितः शास्त्रीयोऽप्यर्थो गृह्यत इति । अयमाशयः—वैयाकरणसिद्धान्ते शब्दानां नित्यत्वेन तत्र भागस्याभावात् स्फोटरूपमखण्डमेव पदं वाक्यं चार्थबोधकमिति प्रकृतीनां प्रत्ययानां चार्थवत्त्वमसम्भवि, तथाऽपि शास्त्रकारैः शास्त्रीयप्रक्रियानिर्वाहायान्वय-व्यतिरेकाभ्यां—यत्सत्त्वे यादृशार्थबोधो भवति, यदसत्त्वे च तादृशार्थबोधो न भवतीति रूपाभ्यां प्रकृति-प्रत्ययोरावापोद्धाराभ्यां शक्तिः कल्पिता, सापि शास्त्रीयप्रक्रियानिर्वाहायालमिति तीयस्य पूरणार्थे "द्वेस्तीयः" [ ७. १. १६५. ] इति शास्त्रेण विहितत्वात् तस्य पूरणार्थवाचकत्वमास्थीयते, इति तेनैवार्थेनार्थवत्त्वं तस्येति तदर्थविहीनो 'जातीय'घटितस्तीयो न गृह्यत इति । यत्र कल्पितावप्यन्वय-व्यतिरेकौ न स्तः, यथा 'यावक' इत्यादौ कप्रत्ययाभावे योऽर्थः प्रतीयते स एव कप्रत्ययसत्त्वेऽपि, तत्र प्रत्यय इति महासंज्ञा [ अन्वर्थसंज्ञा ] बलेन कप्रत्ययस्य प्रकृत्यर्थेनैवार्थवत्त्वं स्वीक्रियत इति सोऽप्यर्थः शास्त्रीयप्रक्रियानिर्वाहाय स्वीक्रियते । परं चैतन्मते "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इत्यादौ गोपदेन कोऽर्थो विवक्षितः ? यदि गोत्वावच्छिन्नस्तर्हि पशुतात्पर्येण प्रयोगे चित्रगुरित्यादौ ह्रस्वः स्यात्, किरणादितात्पर्येण प्रयुक्ते च न स्यात्, ततश्च लोके यावन्तोऽर्था गोपदेन बोध्यन्ते तत्सकलार्थतात्पर्यकोऽयं सूत्रस्थो गोशब्द इति वक्तव्यम्, अन्यथा किरणादितात्पर्यके ह्रस्वत्वं न स्यात्,

"स्वर्गे रश्मौ च वज्रे च, बलीवर्दे च गौः पुमान् ।
स्त्री सौरभेयी दिग्बाणदृग्वाग्भूस्वप्सु भूम्नि च ॥"

इति कोशरीत्या गोशब्दस्यानेकार्थवाचकत्वं प्रसिद्धमेव । तथा च सकलार्थवाचिगोशब्दबोधतात्पर्येणेह गोशब्दो गृहीत इति सर्वस्य ग्रहणमिति; तदपि न—सर्वेषामर्थानां सकृदुच्चरिताद् गोशब्दाद् बोद्धुमशक्यत्वात्, सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायात् । एवं च प्रतिशक्यतावच्छेदकं सूत्रमावर्त्तनीयम्, तथा च किरणतात्पर्यकस्य गोशब्दस्य, पृथिवीतात्पर्यकस्य गोशब्दस्य, गोत्वावच्छिन्न[पशु]तात्पर्यकस्य गोशब्दस्येत्यादिकमेणार्थः कर्तव्यः, न त्वर्थवाचकस्य गोशब्दस्येत्येवंरूपेण, अर्थत्वेन रूपेणार्थे गोपदशक्तेरभावात्, एवं रीत्या नानार्थकस्थले सर्वत्रावृत्तौ गौरवम् । एवं "ङ्यादीदूतः के" [ २. ४. १०४. ] इत्यादावर्थविशिष्टे कशब्दे परे इत्याद्यर्थो न स्यात् । प्रत्ययजन्यबोधे प्रकृतिसमभिव्याहारस्य कारणत्वात्, अन्यथाऽणादिशब्दादप्यपत्यार्थबोधप्रसङ्गात् । यदि तु लौकिके प्रयोगे कशब्दप्रकारककुत्साद्यर्थविशेष्यकबोधस्यैव सत्त्वेन, तादृशबोध एव प्रकृतिसमभिव्याहारस्य कारणत्वम्, सूत्रे तु "ङ्यादीदूतः के" [ २. ४. १०४. ] इत्यादावर्थप्रकारकशब्दविशेष्यकबोधस्य सत्त्वेन न तत्र प्रकृतिसमभिव्याहारापेक्षेत्युच्यते, तथापि कार्यतावच्छेदके कशब्दनिष्ठप्रकारतानिरूपितकुत्साद्यर्थनिष्ठविशेष्यतायाः प्रवेशे गौरवम् । तथा चेदृशस्थले *स्वं रूपं शब्दस्याशब्दसंज्ञा* इति न्यायेनैव निर्वाह इत्यास्थेयम्, तेन च न्यायेन शास्त्रघटकशब्देऽपूर्वः सङ्केतो बोध्यते, स चार्थतावच्छिन्ने स्ववृत्तिरूपावच्छिन्ने च । तथा च "गोश्चान्ते ह्रस्वो०" [ २. ४. ९६. ] इत्यादावर्थविशिष्टस्य गोशब्दस्येत्यर्थेन सर्वत्रार्थे प्रयुज्यमानस्य गोशब्दस्यैकेनैव सूत्रेण ग्रहणनिर्वाह इति नावृत्तेरावश्यकता, "ङ्यादीदूतः के" [ २. ४. १०४. ] इत्यादावप्यर्थविशिष्टे कशब्दे परे इत्येवार्थः, तत्र न प्रकृतिसमभिव्याहारस्य कारणत्वम्, अपि तु कुत्साद्यर्थबोधे एवेति न विशेषरूपेण कार्यकारणभावकल्पनप्रयुक्तमपि गौरवमिति विभावनीयं सुधीभिरिति ।

अत्रेदं प्रविचार्यते—अस्य न्यायस्य चञ्चलत्वमास्थेयं न वेति ?, विधिपक्षस्तु वृत्तावेवोपपादित इतीह निषेधपक्ष एवोपपादयितुमिष्टः । तथाहि—यदस्य चञ्चलत्वं तत्रोक्तं तत् प्राचामनुरोधादेव । तथा हि—लघुन्यासकारैः "संख्याडतेश्चाशत्तिष्टेः कः" [ ६. ४. १३० ] इति सूत्रव्याख्यायामित्थमुक्तम्—ननु डतिग्रहणं किमर्थं ? संख्याद्वारेणापि गतत्वात्, त्यन्तद्वारेण प्रतिषेधः स्यादिति न वाच्यम्, अर्थवद्ग्रहणेति न्यायेन तेः सार्थकस्योपादानात्; उच्यते—ष्ट्यन्तद्वारेण षष्टिवर्जनं ज्ञापयति—अत्राव्युत्पत्तिपक्ष इति, अव्युत्पत्तिपक्षे च न्यायस्याप्रवृत्तिः, किञ्च न्यायस्यानित्यत्वज्ञापनार्थं डतिग्रहणम्, तेनैकसप्ततिरित्यत्र त्यन्तद्वारेण प्रतिषेधः सिद्धः, अन्यथा सप्ततिरित्येव त्यन्तो नैकसप्ततिरिति न स्यात्, अव्युत्पत्तिपक्षश्च कस्मान्निश्चीयते ? षष्टिग्रहणात् [ ष्टिग्रहणादित्युचितम् ], अन्यथा षष्टिशब्दस्य तिप्रत्ययान्तत्वात् त्यन्तद्वारेण प्रतिषेधे सिद्धेऽस्योपादानमनर्थकं स्यात्" इति । अत्रेदमुच्यते—यदि षष्टिवर्जनार्थं कृतेन ष्ट्यन्तवर्जनेनात्राव्युत्पत्तिपक्ष एवाश्रीयत इति समाश्रीयते, तदा च तेरनर्थकत्वेनार्थवतस्तिशब्दस्य सम्भवाभावेनैवास्य न्यायस्याप्रवृत्तौ डतेरपि वर्जने प्राप्ते संख्यात्वेन नैव सिद्धिरिति कथमिव डतिग्रहणेनैतन्न्यायस्यास्थिरत्वं ज्ञापयितुं शक्यम्, एतन्न्यायस्यानित्यत्वे सत्यप्यप्रवृत्तिरेवेष्टा; सा चाव्युत्पत्तिपक्षाश्रयणेनैव साधितेति विध्यर्थं डतिग्रहणस्यावश्यकत्वेन वैयर्थ्याभावात् । न चानेन डति ग्रहणेनास्य न्यायस्यानित्यत्वं ज्ञाप्यतां, ष्टिवर्जने-

नाव्युत्पत्तिपक्षो वेत्यत्र विनिगमकाभाव इति वाच्यम्, ष्टिग्रहणवैयर्थ्यापत्तेरेव विनिगमकत्वम्। अयमाशयः—डतिग्रहणेनास्य न्यायस्यानित्यत्वज्ञापने कृतेऽपि ष्टिवर्जनस्य सार्थक्यं न सम्भवति, तद्विषये एतन्न्यायव्यापाराभावात्, नहि षष्टिशब्दे तिशब्दस्यानर्थकत्वं केनाऽपि मन्यते व्युत्पत्तिपक्षे, ष्टिवर्जनेनाव्युत्पत्तिपक्षज्ञापने कृते तु डतेरपि सार्थक्यं लघुन्यासरीत्या सम्भवतीति तस्यैव ज्ञापकत्वमुचितम्; किञ्च यथाकथञ्चित् डतिग्रहणस्याप्येतन्न्यायानित्यत्वज्ञापकत्वं स्वीक्रियताम्, किन्तु तथा स्वीकारे फलाभावः; न च एकसप्ततिरित्यत्र कप्रत्ययाभावः फलत्वेनोक्त एवोदाहृते लघुन्यासग्रन्थे इति वाच्यम्, तत्कथनस्याप्यविचारितरमणीयत्वात्, सप्ततिशब्दे तिशब्दः सार्थकः, एकसप्ततिशब्दे च सनिरर्थक इति विचारस्य बुद्ध्यऽनारोहात्। किं प्रत्ययग्रहणे प्रकृत्यादेरेव ग्रहणमिति वत् अयमपि न्यायो यतः स विहितस्तदन्तत्वे सत्येवार्थवत्त्वमन्यथा नेति बोधयति येनैतन्न्यायप्रवृत्तावेकसप्ततिशब्दस्य त्यन्तत्वं न स्यात्, न चैवम्, तस्मादेतत् फलकथनमविचारितमेव रमणीयमिति प्रतीमः। न च *अनिनस्मन्ग्रहणानि०* इति न्यायेनापोह्यमानत्वमेवास्यास्थिरत्वे मूलमिति वाच्यम्, तत्र ज्ञापकान्तरस्याग्रे प्रतिपादितत्वेनैतदस्थिरत्वस्य तत्राप्रयोजकत्वात्, तथा चास्यास्थिरत्वे न किञ्चित् फलमिति वृत्तौ तत्प्रतिपादनं प्राचामनुरोधेनैवेति विज्ञेयमिति॥१४॥

## *लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* ॥ १५ ॥

सि०—समानशब्दयोः कस्यचिद् ग्रहणेऽभिप्रेतेऽन्यस्य चानभिप्रेते तत्राभिप्रेतग्रहणसिद्ध्यर्थं पूर्वम् *अर्थवद्ग्रहणे नानर्थकस्य* इति न्याय उक्तस्तत्प्रसङ्गेन तत्समान एवायं न्यायः स्मृतः। लक्ष्यतेऽनेनेति लक्षणं लिङ्गं सूत्रं च, तदाश्रित्य सम्पन्नं रूपमपि लक्षणमुपचारात् तथा च लक्षणपदं लाक्षणिकार्थकम्। पदं पदं प्रति निर्दिश्य उक्तः प्रतिपदोक्तः, स च क्वचिच्छब्दस्वरूपरूपः क्वचिच्च विधिरूप इति यथाप्रयोगं व्यवस्था विज्ञेया। लक्षणं च प्रतिपदोक्तश्चानयोरितरेतरयोगस्तयोरित्यर्थः। उभयोरपि रूपयोर्विध्योर्वा सम्भवतोः सतोः प्रतिपदोक्तस्यैव विधे रूपस्य वा ग्रहणमिति न्यायार्थः। तत्र प्रतिपदोक्तस्यैवेत्येवकारेण लाक्षणिकग्रहणव्युदासः। ततश्च यत् सामान्येन केनचित् लक्षणेन विहितं, यच्च तच्छब्दमनूद्य विहितं, तयोर्मध्ये तच्छब्दानुवादेन विहितमेव बलवदिति तदेव ग्राह्यमिति फलति। अत्र च ज्ञापकं "आसन्नादूराधिकाध्यर्द्धार्द्धादिपूरणं द्वितीयाद्यन्यार्थे" [ ३. १. २०. ] इत्यादिसूत्रैः प्रतिपदोक्ततया बहुव्रीहिविधानम्, तद्धि "प्रमाणीसंख्याड्डः" [ ७. ३. १२८. ] इति डसमासान्तविधावेतत्प्रकरणविहितबहुव्रीहेरेव ग्रहणार्थम्। एतन्न्यायाभावे तु—प्रतिपदोक्तस्यैव ग्रहणमित्यर्थस्याभावे "एकार्थं चानेकार्थं च" [ ३. १. २२. ] इति विहितसमासेनैव सिद्धौ प्रतिपदोक्ततया समासविधानस्य वैयर्थ्यं स्पष्टमेव। ज्ञापिते त्वस्मिन् "आसन्ना दश येषां ते आसन्नदशाः' इत्यादावेव "प्रमाणी-संख्याड्डः" [ ७. ३. १२८. ] इति डो भवति, न तु 'प्रिया दश येषां ते प्रियदशानः' इत्यादौ सामान्येन "एकार्थं चानेकं च" [ ३. १. २२. ] इति विहितसमासस्थले, तस्य सामान्येनैकार्थत्वादिलक्षणेन विधानात्, आसन्नदशा इत्यत्र च "आसन्नादूराधिक०" [ ३. १. २०. ] इति प्रतिपदोक्ततया संख्याशब्दमुच्चार्य ] विधानात्। एवं "नोऽप्रशानोऽनुस्वारा-ऽनुनासिकौ च पूर्वस्याधुट्परे" [ १. ३. ८. ] इति सूत्रे प्रतिपदोक्तस्यैव नकारस्य ग्रहणात् त्वन्तत्रेत्यादौ "तौ मु०" [ १. ३. १४. ] इति विहितानुनासिकस्य नकाररूपस्य न ग्रहणमिति नात्र नकारस्य सकारो भवति, अत्र हि नकारो न प्रतिपदोक्ततया विहितोऽपि तु अनुनासिकत्वेन रूपेण लक्षणेनेति लाक्षणिकत्वं तस्य स्पष्टमेवेति, यत्र च नकारः प्रतिपदोक्ततया विधीयते तत्र च भवत्येव, यथा—भवांस्तत्रेत्यत्र, अत्र हि 'नोन्त' इति नकारमेवोक्त्वा विहितो नकार इति प्रतिपदोक्तः। अस्य च लक्ष्यानुसारित्वेन क्वचिदप्रवृत्तिरपि, अत एव "ह्रस्वस्य गुणः" [ १. ४. ४१. ] इत्यादौ प्रतिपदोक्तो लाक्षणिकश्च ह्रस्वो ह्रस्वशब्देन गृह्यत इति। हे कर्तः! इत्यत्रेव हे निष्कौशाम्बे! इत्यत्रापि गुणः सिद्धो भवति, अन्यथा कर्तृशब्दे "णक-तृचौ" [ ५. १. ४८. ] इत्यनेन तृशब्दस्य प्रतिपदोक्ततया विहितत्वात् तत्र गुणसत्त्वेऽपि निष्कौशाम्बिशब्दे निर्गतः कौशाम्ब्या इत्यर्थे समासे "गोश्चान्ते०" [ २. ४. ९६. ] इति ह्रस्वत्वे इकारस्य लाक्षणिकत्वान्न स्यात्। लक्षणशब्दस्य सूत्रपरत्वेन व्याख्यानफलं च हन्तेर्ह्यस्तन्यां दिवि 'अहन्' इत्यत्र लाक्षणिकत्वेन "अह्नः" [ २. १. ७४. ] इति रुत्वं न भवति, किन्त्वव्युत्पन्नस्य दिनार्थकस्याहन्शब्दस्यैव भवति। लक्षणेन—ह्यस्तनीरूपेण चिह्नेन निर्वृत्त इत्यर्थाश्रयणेऽप्यत्र दोषवारणमिति केचित्। वस्तुतस्तु लक्षणेन—सूत्रेण निष्पन्नं लाक्षणिकमित्येकस्यैवार्थस्याश्रयणेऽपि दोषाभाव इति लक्षणशब्दस्य चिह्नार्थकत्वमपि किमर्थमास्थेयम्? नहि व्याकरणे लक्षणं विना किमपि कार्यं भवति, तथा चाग्रे प्रतिपदोक्तत्व-लाक्षणिकत्वलक्षणयोर्व्याख्यानावसरे प्रतिपदोक्तभिन्नत्वमेव लाक्षणिकत्वमिति प्रतिपादयिष्यते। तथा च न लक्षणपदस्येह चिह्नपरत्वमास्थेयमित्येव साधु। यद्यपि प्रतिपदोक्तस्यापि लक्षणनिष्पन्नत्वं भवति, कार्यमात्रस्य व्याकरणे लक्षणाधीनत्वात्, तथापि लक्षणेन पदं पदं प्रति निर्दिश्य विहितत्वं प्रतिपदोक्तत्वम्, तद्भिन्नत्वं लाक्षणिकत्वमित्येव तयोर्भेद इत्यवधेयम्। विस्तरतश्चायं विवरणे समवलोकनीय इति ॥ १५ ॥

## *लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* ॥ १५ ॥

त०—अत्र लक्षणशब्दोऽर्शआदित्वादप्रत्ययान्तः, लक्षणमस्यस्येति विवक्षितत्वात्; लक्षणया वा लक्षणपदं लाक्षणिकपरम्, तत्त्वं च लाघवात् प्रतिपदोक्तभिन्नत्वमेव, लक्षणशब्दस्य चिह्नसूत्रोभयार्थकत्वेनेह विवक्षितत्वात् तस्यानेकार्थकत्वेनाननुगतलक्षणासंभवात्, प्रतिपदोक्तत्वस्य चानुगतत्वात् । तथा च यदर्थे विशेषणतया प्रतिपदोक्तत्वं विवक्षितं तद्विशिष्टत्वं प्रतिपदोक्तत्वम्, वैशिष्ट्यं च स्ववृत्त्यानुपूर्व्यवच्छिन्नविधेयताश्रयत्व-स्वार्थान्वय्यर्थकपदवृत्त्यानुपूर्वीमत्पदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन, पूर्वसम्बन्धो यत्र विधेयस्य विशेष्यत्वेन ग्रहणं तादृशस्थलपरः, द्वितीयश्च यत्र विधेयस्य विशेषणतया ग्रहणं तादृशस्थलपरः । प्रथमस्य लक्ष्यं यथा-"नोऽप्रशानो०" [ १. ३. ९. ] इत्यत्र न-पदम्, तदर्थे एव प्रतिपदोक्तत्वस्य विवक्षितत्वात्, तेन नपदवृत्त्यानुपूर्व्यवच्छिन्नविधेयताश्रयत्वं यत्र स्यात्, यथा भवानित्यादौ नोन्त इति नशब्दमुच्चार्य विधीयमाने नकारे, तत्रैव प्रतिपदोक्तत्वं तस्य, त्वन्तत्रेत्यत्र न । द्वितीयसम्बन्धस्य लक्ष्यं च-"ऋते तृतीयासमासे" [ १. २. ८. ] इत्यत्र तृतीयासमासपदम्, तथाहि-तत्र तृतीयान्तमुद्दिश्य विहितः समास एव गृह्यते, न तु यथाकथञ्चित् तृतीयान्तस्य विहितः समासः, तथा च-परमेण ऋतेनेति परिनिष्ठितविभक्त्या समासे परमर्त्तेनेत्यत्रार्न भवति, तत्र समासपदान्वयितृतीयार्थकतृतीयापदवृत्त्यानुपूर्वीमत्पद[तृतीयापद]प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वाभावात्, एवमन्यत्रापि यथायथं लक्षणं सङ्गमनीयम् । परिभाषेन्दुशेखरे च नागेशेनास्य न्यायस्य नापूर्वार्थविधायकत्वमपि तु न्यायसिद्धार्थानुवादकत्वमेवेति प्रतिपादितम्, तथा हि, तत्रत्यो ग्रन्थः-लक्षणं लाक्षणिकमुपचारात्, तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तः, तस्यैव ग्रहणं, शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । + + + + इदमेव ह्येतत्परिभाषाबीजम् ।" इति । अयमाशयः-यद्धि लक्षणानुसन्धानपूर्वकं विज्ञायते तस्य विलम्बेनोपस्थितेः, तच्छब्दानुवादेन विहितस्य शीघ्रमुपस्थितस्य ग्रहणे सति शास्त्रस्य कृतार्थत्वात्, विलम्बेनोपस्थितस्य ग्रहणे मानाभाव एवैतन्न्यायबीजभूत इति नात्र ज्ञापकापेक्षा, तथापि दार्ढ्यप्रदर्शनाय ज्ञापकमप्युपन्यस्तमेतद्वृत्तौ । यत्तु-"आत्सन्ध्यक्षरस्य" [ ४. २. १. ] इति सूत्रे वृत्तौ धातोरित्यस्य सम्बन्धस्य कृतत्वेनास्य न्यायस्य वर्णग्रहणेऽप्रवृत्तिः, अन्यथा अन्ते सन्ध्यक्षरस्य नामसु लाक्षणिकस्यैव सत्त्वेनानेन न्यायेन तत्र दोषाभावात् धातोरनुवृत्तिर्व्यर्थैव स्यात्; वर्णग्रहणे चाप्रवृत्तौ नामान्तस्य सन्ध्यक्षरस्यापि स्यादिति धातोरित्यनुवृत्तिः सार्थिका" इत्याहुः, तदसत्-उणादीनामव्युत्पन्नत्वपक्षे 'गो'इत्यादिशब्दानां लाक्षणिकत्वाभावेन तत्रात्त्वव्यावृत्त्यर्थं धातोरित्यस्यानुवृत्तेरावश्यकत्वेन ज्ञापकत्वासंभवात्, अत एव "औत्" [ पा० सू० १. १. १५. ] इति सूत्रे महाभाष्ये वर्णग्रहणेऽप्यस्य न्यायस्य चर्चा कृता ॥ १५ ॥

## *नामग्रहणे लिङ्गविशिष्टस्यापि [ ग्रहणम् ]* ॥ १६ ॥

सि०—नाम्नो ग्रहणं बोधनं येन तन्नामग्रहणं पदं, तत्र तद्विषये, नामबोधकपदे समुच्चारिते सति प्रत्यासत्त्या तेनैव पदेन **लिङ्गविशिष्टस्यापि** लिङ्गबोधकप्रत्ययविशेषसम्बद्धस्यापि ग्रहणं बोधनं भवतीति न्यायार्थः । लिङ्गप्रत्ययकृतवैरूप्येन शब्दभेदाल्लिङ्गविशेषबोधकत्वरूपार्थभेदाच्च सामान्येन विशेषेण वा निर्दिष्टस्य नाम्नस्तत्तल्लिङ्गविशेषबोधकप्रत्ययविशिष्टस्य तस्य ग्रहणं न स्यादित्यप्राप्तस्य तद्ग्रहणस्य प्रापणार्थोऽयं न्यायः अत्र च ज्ञापको "राजन् सखेः०" [ ७. ३. १०६ ] इति सूत्रस्थो नान्तनिर्देशः, सहि यत्रास्य नकारान्तमेव रूपं तत्रैव समासान्तोऽट् स्यादित्येवमर्थं कृतः, स च महती चासौ राज्ञीत्यर्थे महाराज्ञीत्यत्राट् मा भूदित्येवमर्थ एव । यदि चायं न्यायो न स्यात् तर्हि 'राज-सखेः०" इति करणेऽपि राज्ञीशब्दस्य स्वरूपत एव राजशब्दत्वाभावेन प्रत्ययाप्राप्तौ तद्ग्रहणं व्यर्थमेव स्यादिति प्रकृतन्यायस्य सत्तां सूचयति, ज्ञापिते त्वस्मिन् राजग्रहणे स्त्रीप्रत्ययविशिष्टस्य तस्या [ राज्ञीत्यस्या ] ऽपि ग्रहणं प्राप्तमिति तद्वारणार्थो नान्तनिर्देशः स्वांशे चरितार्थः । फलं च "त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते" [ २. १. ३३ ] इत्यत्र त्यदामिति बहुवचनेन तदादिगणपठितनाममात्रनिर्देशेऽपि त्यदाद्यधिकारे सर्वत्र स्त्रीत्वादिविशिष्टानामपि त्यदादीनां ग्रहणम्, तेन 'सा, स्या' इत्यादौ "तः सौ सः" [ २. १ ४२. ] इति ते कर्तव्ये त्यदादेः सेश्चाप्यव्यवधानाभावेन सत्वप्रवृत्तिर्भवति, अन्यथा आपा व्यवधाने सिपरत्वाभावेन सत्वं न स्यात्, लिङ्गविशिष्टस्यापीत्यनेन लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणे बोधिते आपश्च लिङ्गबोधकप्रत्ययत्वेन तद्विशिष्टस्यापि नामत्वेनैव ग्रहणे 'ता, त्या' इत्यनयोस्त्यदादित्वानपायात् । नामग्रहणे इत्युक्त्या च यत्र लिङ्गप्रत्ययविशिष्टस्य ग्रहणं न तत्र नामग्रहणं भवति, यथा-"अतः कृकमि-कंस-कुम्भ-कुशा-कर्णी-पात्रेऽनव्ययस्य" [ २. ३. ५. ] इत्यत्र 'कुशा' इति लिङ्गप्रत्ययविशिष्टस्य ग्रहणे 'कुश' इत्यविकृतस्य नाम्नो ग्रहणाभावे 'अयः कुशः' इत्यत्र रः सो न भवति । न्यायान्तरवदयमपि न्यायश्चपल इति "सर्वादि-विष्वग्-देवाड्डद्रिः" [ ३. २. १२२. ] इति सूत्रस्थ-विष्वक्शब्देन 'विषूची' इति लिङ्गप्रत्ययविशिष्टः शब्दो

न गृह्यत इति विपूचीमञ्चतीत्यर्थे न तस्य सूत्रस्य प्रवृत्तिः।, तत्प्रवृत्तौ च तत्रापि डद्र्यादेशेऽनिष्टरूपप्रसक्तिरिति ॥ १६ ॥

## *नामग्रहणे लिङ्गविशिष्टस्यापि [ग्रहणम्]* ॥ १६ ॥

**त०**—अत्र लिङ्गपदं लिङ्गबोधकप्रत्ययपरं लक्षणया । प्रत्ययविशिष्टस्य हि रूपान्तरत्वेनाग्रहणे प्राप्त एव न्यायप्रवृत्तेरावश्यकत्वम्, प्रत्ययाभावे हि लिङ्गार्थमात्रवैशिष्ट्येऽपि तद्ग्रहणे बाधकाभावादर्थभेदेन शब्दभेदस्यासति विशेषबाधकेऽत्र शास्त्रेऽस्वीकारात् । न च *एकदेशविकृतमनन्यवत्* इति न्यायेनैव लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणे सिद्धे किमर्थोऽयं न्याय इति शङ्कनीयम्, नामग्रहणस्य परिच्छिन्नपरिमाणग्रहणत्वेन परिच्छिन्नपरिमाणग्रहणे चोक्तन्यायाप्रवृत्तेस्तद्व्याख्यावसरे प्रतिपादितत्वात्। किञ्चात्रैकदेशविकृतत्वमपि नास्ति, किन्तु वर्णान्तराधिक्यमिति तन्न्यायस्यावसराभावाच । ननु "अत इञ्" [ ६. १. ३१. ] इत्यादौ 'अदन्तान्नाम्नः' इत्यर्थात् तस्यापि नामग्रहणत्वेन तत्राप्येतन्न्यायप्रवृत्तौ रमा गौरीत्यादिस्त्रीप्रत्ययविशिष्टादप्येतन्न्यायसहकारेण प्रत्ययः स्यादिति चेत्? न–नामत्व–तद्व्याप्यानुपूर्वीप्रकारेण बोधके नामग्रहणे सतीति निवेशेनादोषात् । अत्पदं चादन्तत्वप्रकारेण बोधकम्, अदन्तत्वं च न नामत्वरूपं तद्व्याप्यं वेति तेन रूपेण [अदन्तत्वेन] ग्रहणे नामग्रहणत्वाभावेन प्रकृतन्यायाप्रवृत्तेः। नन्वेवं "कुमारः श्रमणादिना" [३.१.११५.] इति सूत्रनिर्दिष्टे श्रमणादिगणे श्रमणा-प्रव्रजिता-कुलटा-गर्भिणीत्यादीनां स्त्रीलिङ्गविशिष्टानां शब्दानां पाठात् *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* इति स्वीकृत्य कुमारीशब्देनैव सह श्रमणादीनां समास इति यदुक्तं वृत्तौ तन्न संगच्छेत, "कुमारण् क्रीडायाम्" इति क्रीडार्थकधातोरपि सत्त्वेन कुमारत्वस्य नामत्वव्याप्यत्वाभावेन कुमारत्वेन रूपेण बोधके कुमारशब्दे न्यायाप्रवृत्तेरिति चेत्? न–नामत्वव्याप्यशाब्दबोधीयविषयताप्रयोजकस्यैव नामग्रहणपदेन ग्रहणात्, प्रकृतसूत्रे [ "कुमारः श्रमणादिना" इति सूत्रे ] कुमारप्रकृतिकस्यायन्तस्यैव बोधेन तत्रत्यकुमारपदप्रयोज्यविषयताया नामत्वव्याप्यत्वेनादोषात् । नन्वेवम् "अत इञ्" [ ६. १. ३१. ] इत्यत्रापि "ङसन्तादपत्ये" [ ६. १. २८. ] इत्यस्योपस्थिततत्वान्ङसन्तत्वस्य नामत्वव्याप्यत्वात् 'अदन्तान्ङसन्तनाम्नः' इत्यर्थस्यैव स्वीकार्यत्वेनादन्तत्वावच्छिन्नशाब्दबोधीयविषयताया अपि नामत्वव्याप्यत्वेनात्पदस्यापि नामग्रहणत्वापत्तिरिति न्यायप्रवृत्त्या रमादिशब्देभ्योऽपि प्रत्ययः स्यादिति चेत्? न–नामत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयताया एव ग्रहणेनादोषात् । अदन्तत्वावच्छिन्नविषयताया नामत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नत्वेन तद्भिन्नत्वाभावात् । अस्य च न्यायस्यानित्यत्वं "स्त्रियाम्" [ ३. २. ६९. ] इति सूत्रेण ज्ञायते, अन्यथा महत्याः करः–महाकर इत्यादावपि "महतः कर-घासविशिष्टे डाः" [ ३. २. ६९. ] इत्यनेनैव सिद्धे किमेतेन प्रयोजनं स्यात्, यत् तु कृतमिदं सूत्रं तेन ज्ञायतेऽस्यानित्यत्वमेव शङ्कितमिति । तथा च यत्र प्रवृत्तिरस्य न्यायस्य नेष्टा तत्रानित्यत्वाश्रयणं कार्यम् । अत एव–"ङ्याप् प्रातिपदिकात्" [ पा० सू० ४. १. १. ] इति सूत्रे महाभाष्येऽस्य न्यायस्य प्रयोजनानि दोषाँश्च प्रदर्शयित्वा—

"एतेऽस्याः परिभाषाया दोषाः,
एतानि च प्रयोजनानि स्युः ।
एते दोषाः समा भूयांसो वा–,
तस्मान्नार्थोऽनया परिभाषया ॥

नहि दोषाः सन्तीति परिभाषा न कर्त्तव्या लक्षणं वा न परिणेयम्, नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः, प्रयोजनानामुदाहरणमात्रम् । कुत एतत्? नहि दोषाणां लक्षणमस्तीति । तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि, तदर्थमेषा कर्तव्या, प्रतिविधेयं च दोषेषु" इत्युक्तम् । तस्यायमाशयः–यद्यपीह दोष-प्रयोजनयोः समत्वमेव प्रतिभाति, दोषाणामेव भूयस्त्वं वा, तथापि प्रयोजनानां लक्षणवत्त्वेन तेषामिह साकल्येन परिगणनं न कृतमतोऽपि बहुतराणि प्रयोजनान्यस्याः सन्ति । सन्ति चेमे दोषा अपि, किन्तु दोषसत्त्वमात्रेण प्रयोजनवत्कार्यस्याननुष्ठानं न लोकसिद्धम्, सत्यपि भिक्षुकादिसंभवे पाकादिकृतेः सत्यपि च मृगाद्युपद्रवसम्भवे कृष्यादिकृतेश्च दर्शनात् । तथा च प्रयोजनवत्त्वादयं न्यायः कर्त्तव्य एव, दोषाणां च प्रतिविधानं कर्त्तव्यम्, प्रतिविधानं चानित्यत्वाश्रयणमेवेत्युक्तं कैयटेन तत्रैव, अनित्यत्वेन चानिष्टस्थले न प्रवृत्तिरिति भावः ।

अत्र कैश्चित्–'स' इति पुंल्लिंगेऽप्येतन्न्यायप्रवृत्त्यैव "आ द्वेरः" [ २. १. ४१. ] इत्यत्वप्रवृत्तिः, 'ते' इति नपुंसकद्विवचनेऽपि न्यायेनैवात्त्वमिति तयोरपि पुंल्लिङ्ग-क्लीबयोरेतदुदाहरणत्वमाहुः, तन्न–लिङ्गपदस्य लिङ्गप्रत्ययविशिष्टपरत्वेन व्याख्यातत्वात् । पुंल्लिङ्ग-क्लीबयोस्तु स्वाभाविक्येव प्रवृत्तिः, यत्र हि प्रत्ययादिवैशिष्ट्येन शब्दभेदसंभावनयाऽप्रवृत्तिशङ्का तत्रैव न्यायप्रवृत्तेरावश्यकत्वात्, पुंल्लिङ्ग-क्लीबयोस्तु शब्दस्वरूपे भेदाभावेन प्रवृत्तौ बाधकाभावात् । अयस्कुशेत्यत्र विकारत्वाविवक्षायां "भाज-गोण-नाग-स्थल-कुण्ड-काल-कुश०" [ २. ४. ३०. ] इति ङीनें, तत्र हि अयः–प्रधाना कुशा, अयःसहिता वा कुशेत्यर्थः, मयूरव्यंसकादित्वाच्च प्रधानपदस्य सहितपदस्य वा

लोपः । यथाऽऽवन्तस्य ग्रहणं तथैव ङीप्रत्ययान्तस्यापि ग्रहणमेतन्न्यायसहकारेण बोध्यम् । तथा च "अतः कृकमि०" [२. ३. ५.] इति सूत्रे कुम्भपदेन कुम्भीत्यस्यापि ग्रहणे-अयस्कुम्भीत्यत्रापि रः सो भवतीति विज्ञेयम् ॥ १६ ॥

## *प्रकृतिग्रहणे यङ्लुबन्तस्यापि [ग्रहणम्]* ॥ १७ ॥

सि०—प्रकृतिशब्दस्यान्यत्र प्रधानपुरुषादौ रूढत्वेऽपि शब्दशास्त्रे प्रत्ययविधावुद्देश्यत्वेनाश्रीयमाणः शब्दः प्रकृतिरित्युच्यते । तत्र प्रत्यासत्त्या यस्य प्रकृतित्वेनाश्रितस्य ग्रहणमिष्टं तत्र यङ्लुबन्तस्यापि तस्य ग्रहणं विज्ञेयमित्यर्थः । यद्यपि प्रकृतिपदं नाम-धातूभयवाचकं प्रत्ययविधौ यथायथमुभयोरेवोद्देश्यत्वेनाश्रीयमाणत्वात् तथापि यङो धातोरेव विधानेनेह प्रत्यासत्त्या यत्र यङ्प्रकृतिभूतो धातुर्गृह्यते तत्र यङ्लुबन्तोऽपि गृह्यते इति विज्ञेयम् । अत्र च ज्ञापकम् "एकस्वरादनुस्वारेतः" [४. ४. ५६.] इति सूत्रे 'एकस्वराद्' इति वचनम्, अनुस्वारेतां धातूनां स्वभावत एकस्वरत्वेन व्यावर्त्याभावात् 'एकस्वराद्' इति विशेषणस्य वैयर्थ्याद् व्यर्थीभूतं च तदेतन्न्यायसत्तां ज्ञापयति । सति चास्मिन् यङ्लुबन्तस्यानेकस्वरत्वेन तद्व्यावृत्तये एकस्वरग्रहणस्य चारितार्थ्यम् । न च हन्तेर्वधादेशे तस्यादन्तत्वादनेकस्वरत्वेन स्थानिवद्भावाच्च तस्यानुस्वारेत्त्वेन तत्र प्राप्तस्येण्निषेधस्याप्रवृत्त्यर्थमेकस्वरादिति चरितार्थमिति वाच्यम्, तावन्मात्रप्रयोजनकत्वे "अवधानुस्वारेतः" इति वधिवर्जनादेवावधीदित्यादिसिद्धौ सामान्येनानेकस्वरवर्जनार्थमेकस्वरादित्यस्य वैयर्थ्यस्य दुरपह्नवत्वात्, सति हि वधातिरिक्तानेकस्वरनुस्वारेद्धातुबाहुल्ये तदर्थं सामान्यसूत्रकरणस्यौचित्यं स्यात्, न तु तथाऽस्ति, तच्च तदैव स्याद् यदि यङ्लुबन्तस्यापि प्रकृतिग्रहणेन ग्रहणं स्यात्, तच्चानेनैव न्यायेन सम्पाद्यमिति व्यर्थमेकस्वरादिति वचनं न्यायमिमं ज्ञापयतीति युक्तमेव । ज्ञापिते चास्मिन्न्याये 'चर्क्ष्' इत्यादीनां बहूनामनेकस्वराणामनुस्वारेतां सद्भावेन तद्व्यावृत्त्यर्थमेकस्वरादित्यस्य सार्थक्यम् । तथा च 'चर्क्ष्' इत्यादीनामनेकस्वरत्वेन तत्र नेण् निषेध इति । अस्य च चापल्येनाग्रिमन्यायेन बाधः सिद्धो भवति । फलं चास्य न्यायस्य 'प्रणिदादेति' इत्यत्र "नेर्ङादा०" [२. ३. ७९.] इति णत्वसिद्धिः, अन्यथा कृतद्वित्वस्य रूपभेदेन दाग्रहणेनाग्रहणं स्यात् ॥ १७ ॥

## *प्रकृतिग्रहणे यङ्लुबन्तस्यापि [ग्रहणम्]* ॥ १७ ॥

त०—यङ्लुबन्तस्थले हि प्रकृतिर्द्विरुच्यत इत्येतावदेव वैरूप्यम् । तथा च द्विर्वचनस्य द्विःप्रयोगमात्रत्वमिति द्विःप्रयोगो द्विर्वचनं षाष्ठमिति महाभाष्येऽप्युक्तम् । तथा च प्रयोगद्वयरूपे समुदायेऽनेन प्रकृतित्वबोधनमित्यायाति । तच्च युक्तिसिद्धमेवेति नात्र ज्ञापकापेक्षा, नह्येकमेव रूपं द्विरुच्चारितं स्वस्माद् भिद्यते, तथा च वृत्तौ ज्ञापकोपन्यासः प्राचामनुरोधेनैव, किञ्च ज्ञापितेऽपि न्याये 'एकस्वरात्' इत्यस्य स्वांशे चारितार्थ्याभावः, *तिवा शवाऽनुबन्धेन०* इत्याद्यग्रिमन्यायेनैकस्वरनिमित्तकस्य कार्यस्य यङ्लुबन्तेऽप्रवृत्त्या तन्निवृत्त्यर्थस्यैकस्वरग्रहणस्य वैयर्थ्यं स्पष्टमेव, अवधीदित्यादीनां तन्निवृत्त्यर्थत्वस्य पूर्वमेवापनोदितत्वात् । न च ज्ञापिते न्याये यङ्लुबन्तस्यापि निवृत्तये तस्य सार्थक्येनाग्रिमन्याये एकस्वरनिमित्तस्य ग्रहणं न कार्यमिति वाच्यम्, अस्याभावे यङ्लुबन्ते स्वत एव निषेधाप्रवृत्तेरेतज्ज्ञापकस्यैकस्वरादित्वस्य वैयर्थ्यतादवस्थ्यात् । तस्मात् स्वतः सिद्धमिमं न्यायमाश्रित्य यङ्लुबन्तस्यापि प्रकृतिग्रहणेन ग्रहणे तत्रापीण्निषेधः स्यादित्यग्रिमन्याये एकस्वरनिमित्तस्य कार्यस्य यङ्लुपि न प्रवृत्तिरित्याश्रितमित्यास्थेयम् । तथा च प्रकृतसूत्रस्थमेकस्वरादिति पदमेकस्वरनिमित्तकार्यस्य यङ्लुबन्तेऽप्रवृत्तिरित्यंशे एव ज्ञापकमिति स्वीकार्यम्, अत एव पाणिनीये तन्त्रे "एकस्वरानुस्वारेतः" [४. ४. ५६.] इत्येतत्सूत्रसमानार्थके "एकाच उपदेशेऽनुदात्तात्" [पा० सू० ७. २. १०.] इति सूत्रे महाभाष्ये 'एकस्वरात्' इत्येतत्स्थानीयस्य 'एकाचः' इति पदस्य प्रयोजनकथनावसरे यङ्लुक्व्यावृत्तिरेव प्रयोजनत्वेनोक्ता, न तु प्रकृतिग्रहणे यङ्लुबन्तस्यापि ग्रहणमिति न्यायो ज्ञापितः, तथाहि—तत्र भाष्येऽन्यानि प्रयोजनानि प्रदर्शयित्वा, तेषां खण्डनं च विधाय वध्यर्थहन्तेर्वधादेशस्थले इट्प्रतिषेधाभावार्थत्वमेकाज्ग्रहणस्योक्त्वा तस्य श्रूयमाणैकाच्परत्वमाश्रित्य च यङ्लुबन्तेऽपि निषेधाप्रवृत्तिरिति सूचितम्, यङ्लुबन्ते च प्रकृतेरनुदात्तत्वे [अनुस्वारेत्त्वेऽपि] श्रूयमाणैकच्त्वा[एकस्वरत्वा]भावात् । प्रकृतिग्रहणेन यङ्लुबन्तस्य ग्रहणं च 'द्विःप्रयोगो द्विर्वचनम्' इत्याश्रित्यैव कैयटेनोक्तम्, तथाहि तत्रत्यकैयटग्रन्थः—द्विःप्रयोगे द्विर्वचने भवति भिदिरुपदेशेऽनुदात्त उपदेशे एकाजित्यतो लोपे कृते ['बेभिदिता' इत्यत्र] सम्प्रत्यनेकाच्त्वेऽपि प्रतिषेधप्रसङ्गः, श्रूयमाणे त्वेकाच्याश्रीयमाणे आवृत्तिसंख्ययैकत्वसंख्याया बाधनात् प्रतिषेधाभावः" इति । इत्थं चैतन्न्यायं विनापि द्वित्वस्य द्विःप्रयोगमात्रत्वमाश्रित्य प्रकृतित्वं यङ्लुबन्ते स्वाभाविकमिति तदाश्रित्य प्रवर्त्तमानमिण्निषेधं वारयितुमेकस्वरादिति पदं श्रूयमाणैकस्वरबोधनपरमिति समाश्रयणीयमित्येकस्वरनिमित्तं कार्यं यङ्लुपि न भवतीति *तिवा शवा०* इत्यादिन्यायोक्तैकस्वरनिमित्तस्य यङ्लुप्यभावोऽपि सिद्ध इतीदमपि 'एकस्वरात्' इति पदमग्रिमन्याये प्रमाणभूतमिति स्वीकार्यम् । एषैव च सरणिः

पाणिनीयानामपि सम्मता । परिभाषेन्दुशेखरे च-इमं न्यायं पूर्वपक्षत्वेन प्रकम्यास्य भाष्ये क्वाप्यनुल्लेखादस्वीकार्यत्वमुक्तम्, तथाहि-"यदपि-"ननु हन्तेर्यङ्लुकि आशीर्लिङि वधादेशो न स्यादत आह-*प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्* १००, षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं सिद्धम्, अत एव 'जुहुधि' इत्यादौ द्वित्वे कृते धित्वसिद्धिरिति, तदपि न-भाष्येऽदर्शनात् । किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावात्" इति । अयमाशयः-द्विर्वचनस्य द्विःप्रयोगरूपत्वे प्रत्येकस्य प्रकृतित्वानपाय एव बोधयितुं शक्यते, तथा च तस्मिन् परतः तस्मात् परतश्च यत् कार्यं भवेत् तत्पूर्वभाग-परभागाभ्यां सेद्धुं शक्नुयादपि, किन्तु समुदायस्य प्रकृतिरूपत्वं न प्राप्तुं शक्यत इति नायं न्यायस्ततः सिध्यति, भाष्ये क्वाप्यस्यादर्शनाच्चास्याश्रयणमनुचितमिति । एतत्साध्यानां कार्याणां च पूर्व-परभागाभ्यां पृथक् पृथक् सिद्धिः । यथा 'प्रणिदादेति' इत्यत्र दापरतः नेर्नकारस्य णत्वं विधीयमानं 'दा' इति पूर्वभागस्य दासंज्ञकत्वमाश्रित्य कार्यम्, एवं "हुधुटो हेर्धिः" [ ४. २. ८३. ] इति विधीयमानोऽप्यादेशः 'जुहुधि' इत्यत्र परभागस्य हुरूपत्वमाश्रित्य विधेयः, एवं सर्वप्रयोजननिर्वाहे सिद्धेऽस्य न्यायस्य नावश्यकत्वम् । तथा च यङ्लुबन्ते परभागस्यैकस्वरत्वमनुस्वारेत्त्वं चादायेण् मा भूदित्येकस्वरपदं यस्येण्निषेधो विधित्सितस्तत्प्रकृतेः श्रूयमाणैकस्वरत्वविज्ञानार्थमिति न दोषो भवतीति विज्ञेयमिति विभावनीयम् ॥१७॥

## *तिवा शवाऽनुबन्धेन, निर्दिष्टं यद्गणेन च । एकस्वरनिमित्तं च, पञ्चैतानि न यङ्लुपि* ॥ १८ ॥

सि०—पूर्वेण न्यायेन प्रकृतेर्ग्रहणे यङ्लुबन्तस्यापि ग्रहणात् प्रकृतिमुद्दिश्य विहितानां सर्वेषां कार्याणां यङ्लुप्यपि प्राप्तिः, तन्न्यायानङ्गीकर्तृमते च द्विःप्रयोगमाश्रित्य यङ्लुबन्तपूर्वपरभागयोः प्रकृतिरूपत्वमाश्रित्य तत्र कार्यप्राप्तिरिति तेषां कार्याणां यङ्लुबन्तेऽभावायायं न्याय आश्रीयते । अत्र निर्दिष्टमिति पदं तिवाऽऽदिभिः चतुर्भिरपि सम्बध्यते, चकारेण प्रत्येकस्य तत्रान्वयित्वकल्पनात्, यथा-ईश्वरं गुरुं च भजस्वेत्यत्र, तथा च तिवा शवा अनुबन्धेन गणेन च निर्दिष्टं कार्यमेकस्वरनिमित्तं च कार्यं निर्दिष्टधातोर्यदि यङ्लुप् स्यात् तदा न स्यादिति न्यायार्थः । तत्र तिवा निर्दिष्टं द्विधा-अलुप्तेन तिवा, लुप्तेन च, तिविह 'इ-कि-श्तिव् स्वरूपाऽर्थे" [ ५. ३. १३८. ] इति सूत्रविहितो धातुस्वरूपनिर्देशकार्थ एव, न तु वर्तमानाया व्याख्यानात्; न च तदग्रे स्याद्यभाव इति वाच्यम्, अनुकरणत्वे तत्सम्भवात्; वस्तुतस्तु श्तिवा इत्येव निर्देशो युक्तो व्याख्यानाद् वरं करणमिति न्यायात्, श्तिवो लुप्तत्वं च सौत्रनिर्देशलभ्यम् । तत्रालुप्तेन तिवा निर्देशो यथा-"न कवतेर्यङः" [ ४. १. ४७. ] इति, अनेन च कस्य चत्वनिषेधो यथा कोकूयत इति यङि भवति तथा चोकवीतीति यङ्लुपि न भवति, अनेन न्यायेन निषेधात् । लुप्तेन तिवा निर्देशो यथा-"ङे पिब पीप्य्" [ ४. १. ३३. ] इति, अत्र पिबतेरिति निर्देष्टव्ये पिब इति निर्देशः सौत्रत्वात् तेर्लुपो विधानेन, स चायं पीप्यादेशः पिबन्तं प्रायुक्त-अपीप्यदित्यत्र यथा भवति तथा पापतं प्रायुक्तं 'अपापयत्' इत्यत्र न भवति, प्रकृतन्यायप्रवृत्तेः । शवा निर्दिष्टं यथा-"निसस्तपेऽनासेवायाम्" [ २. ३. ५१. ] इति निसः सस्य षत्वम्, तच्च यथा निष्टपतीत्यादौ भवति तथा 'भृशं निष्टपति' इत्यर्थे निस्तातपीतीत्यादि यङ्लुबन्ते न भवति । अनुबन्धनिर्देशो यथा-"गा-पा-स्था-सा-दा-मा-हाकः" [ ४. ३. ९६. ] इति, अत्र हि हाक इति ककारेणानुबन्धेन सह निर्देशात् हेयादित्यादौ विहितमेत्वं जहायादित्यादि यङ्लुबन्ते न भवति । गणेन निर्देशश्च त्रिधा-सङ्ख्यया, आदिशब्देन बहुवचनेन च । तत्र "रुत्पञ्चकाच्छिदयः" इत्यत्र पञ्चकादिति संख्यया गणनिर्देशेनेड् विहितः, स च यथा-स्वपितीत्यादौ भवति तथा सोषोसीत्यादौ न भवति, आदिशब्देन गणनिर्देशो यथा-"लृदिद्द्युतादिपुष्यादेः परस्मै" [ ३. ४. ६४. ] इति, एतच्च सूत्रं यथाऽद्युतदित्यादौ प्रवर्तते यथाऽदेद्योतीदित्यादौ न प्रवर्तते । बहुवचनेन गणनिर्देशो यथा-"तेर्ग्रहादिभ्यः" [ ४. ३. ३३. ] इति, अनेन ग्रहादिभ्यः परस्याशितस्तिप्रत्ययस्यादौ "स्ताद्यशितः" [ ४. ४. ३२. ] इत्यनेन प्राप्तस्येटोऽनुज्ञा विधीयते, ग्रहादिभ्य एव परस्य तेरादिरिड् नान्यधातुभ्यः परस्येति नियमविधायकत्वादस्य सूत्रस्य ग्रहादिभ्यः परस्य ते विषये इटोऽनुज्ञापकत्वमेव, नियमसूत्राणां विधिमुखेनापि प्रवृत्तेः स्वीकारात्, ग्रहादिभ्योऽन्यत्र निषेधमुखेन प्रवृत्तिरिति तत्र निवर्तकत्वमिति, अन्यत्रापि तु नियमशास्त्रस्थले व्यवस्था विज्ञेया; तथा च ग्रहादिभ्य इति गणनिर्दिष्टत्वादयं यङ्लुपि न प्रवर्तते, यथा-वम्भाण्टिरिति । एकस्वरनिमित्तं यथा-"एकस्वरादनुस्वारेतः" [ ४. ४. ५६. ] इति सूत्रविहित इण्निषेधः, स च यथा 'शक्त' इत्यादौ भवति तथा शाशकित इत्यादौ यङ्लुबन्ते न भवति, तस्य प्रकृतिग्रहणे यङ्लुबन्तस्यापि ग्रहणम्* इति पूर्वन्यायानुसारमेकस्वरत्वस्याप्यतिदेशेनेह प्राप्तिरिति केचित्, द्विर्वचनस्य द्विःप्रयोगमूलिका प्राप्तिरिति परे, विवेचितं चैतत् पूर्वन्यायविवरणावसरे । एतन्न्यायज्ञापकं तु तत्र तत्र तिवादिनिर्देशकरणमेव,

तेषां च प्रायेण प्रयोजनान्तराभावाद् यङ्लुप्यप्रवृत्त्यर्थत्वमेवेति विज्ञायते । अस्य न्यायस्य च पञ्चांशाः, तत्राद्यं पञ्चमं चांशं विहाय शेषेषु त्रिष्वंशेष्वस्यानित्यत्वमिति लक्ष्यानुरोधादवगम्यते, ततश्च द्वितीयांशस्यास्थिरतया "पिबैति-दा-भू-स्थः सिचो लुप् परस्मै न चेत्" [ ४. ३. ६६. ] इत्यनेन शवूनिर्दिष्टोऽपि सिचो लुविण्निषेधश्च यथा-अपादित्यत्र भवति तथा-अपादित्यादियङ्लुबन्तेऽपि भवति, अस्य स्थिरत्वे तु तत्र न स्यात् । तृतीयांशानित्यत्वस्योदाहरणम्-नरीनृत्त इति, अत्र "ङीयश्वैदितः०" [ ४. ४. ६१. ] इत्यनुबन्धनिर्दिष्टोऽपीड्निषेधः 'नृत्तः' इत्यादाविव भवत्येव, अस्य स्थिरत्वे तु न स्यात् । चतुर्थांशानित्यत्वे तु 'परप्रष्टि' इति फलम्, अत्र "स्पृशादिसृपो वा" [ ४. ४. ११२. ] इति गणनिर्दिष्टोऽप्यदागमो भवति, अस्य स्थिरत्वे तु न स्यात् ॥ १८ ॥

## *तिवा शवाऽनुबन्धेन, निर्दिष्टं यद् गणेन च । एकस्वरनिमित्तं च, पञ्चैतानि न यङ्लुपि* ॥ १८ ॥

त०—अत्र बहुवचनेन गणनिर्देशस्य "तेग्रहादिभ्यः" [ ४. ४. ३३. ] इति यदुदाहरणं वृत्तौ दत्तं तत् प्राचामनुरोधेन, वस्तुतस्तु इदमप्यादिशब्देन गणनिर्देशस्यैवोदाहरणम्, बहुवचनेन गणनिर्देशश्च "कर्तर्यनद्भ्यः शव्" [ ३. ४. ७१. ] इत्येवमादिः, स च यङ्लुबन्ते प्रवर्तत एव, यङ्लुपामदादौ पाठसामर्थ्यादित्यन्यदेतत् । तथा च बहुवचनेन गणनिर्देशाद् यङ्लुबन्ते प्रवृत्त्यभावस्य फलं मृग्यम् । एवम्-अनुबन्धनिर्देशांशस्यानित्यफलं यदुक्तम्-"ङीयश्वैदितः क्तयोः" [ ४. ४. ६१. ] इति, तदपि प्राचामनुरोधेनैव, अस्यानुबन्धनिर्देशत्वाभावात्, अनुबन्धनिर्देशो हि "गा-पा-स्था-दा-मा-हाकः" [ ४. ३. ९६. ] इत्येवमादिर्यत्र स्वरूपत एवानुबन्धो निर्दिश्यते, प्रकृते चानुबन्धस्योपसर्जनतयोपादानं न तु स्वरूपेणेत्यस्यानुबन्धेन निर्दिष्टत्वाभावः सुतरामिति यङ्लुपि प्रवृत्तिरव्याहतैव, ईदृशस्यानुबन्धनिर्दिष्टत्वस्वीकारे च "एकस्वरानुस्वारेतः" [ ४. ४. ५६. ] इत्यस्याप्यनुबन्धनिर्दिष्टत्वमेवेति तन्मूलकमेवैतन्न्यायोदाहरणं तत् स्यान्न त्वेकस्वरनिमित्तस्योदाहरणम् । "ङीयश्वि०" [ ४. ४. ६१. ] इति सूत्रे वृत्तौ नृतादीनामैदित्त्वस्य यङ्लुबर्थत्वकथनं तु केवले 'नृत्त' इत्यादिस्थले "वेटोऽपतः" [ ४. ४. ६२. ] इति निषेधेनैव सिद्धेऽनुबन्धस्याचारितार्थ्यात्, समुदायरूपस्य यङ्लुबन्तस्येड्व्यावृत्त्यर्थमेव विज्ञायत इत्याशयकं *केवलेऽचरितार्था अनुबन्धाः समुदायस्योपकारका भवन्ति* इति न्यायमूलकम्, न तु तावताऽननुबन्धनिर्देशनिमित्ताया यङ्लुप्यप्रवृत्तेरनित्यत्वमभ्यूहितुं शक्यम्, अनुबन्धकरणसामर्थ्येनास्य बाध इति कल्पनादनुबन्धनिर्दिष्टत्वस्य प्रकृतसूत्रे [ "ङीयश्वैदितः०" इत्यत्र ] अभावस्योपपादितत्वाच्च, आचार्येण 'नरीनृत्त' इत्यादाविण्निषेधाभावायोपायान्तरमनाश्रित्यानुबन्धनिर्देशसामर्थ्यस्याश्रयणादेवास्य न्यायस्यानुबन्धांशेऽनित्यत्वमायाति, यदि ह्यस्य स्थिरत्वमिष्टं स्यादाचार्यस्य तर्हि नानुबन्धसामर्थ्यमाश्रितं स्यादिति यदुक्तं तदपि परास्तं वेदितव्यमस्यानुबन्धनिर्देशत्वाभावादेव । एवं चैतद्विषयकः सर्वोऽपि प्राच्यो विचारो निर्मूलः प्रतिभाति । यदि चानुबन्धनिर्देशोऽपि द्विधा-स्वरूपेण, उपसर्जनतया [ 'ऐदितः' इत्यादिपदेन ] चेति स्वीक्रियते, अत एव यङ्लुपि इङितः कर्तरि" [ ३. २. २२. ] इति विहितस्यात्मनेपदस्य यङ्लुप्यप्रवृत्तिरिति मन्यते, तदाऽत्रत्यानुबन्धनिर्देशस्यैकस्वरनिमित्तत्वस्य चोभयांशस्य बाधायैदित्करणमित्यास्थेयम् । न च *प्रकृतिग्रहणेन यङ्लुबन्तस्यापि ग्रहणम्* इति न्यायेनैकस्वरत्वस्यापि यङ्लुबन्तेऽतिदेश इति वाच्यम्, एकस्वरत्वस्याशास्त्रीयत्वेन तस्यातिदेशेनातिदेष्टुमशक्यत्वात्, अनेकस्वरत्वस्य साक्षाद्विद्यमानत्वेन तत्रैकस्वरत्वस्य बोधयितुमशक्यत्वात्, परिच्छिन्नपरिमाणस्यातिदेशाभावाच्च । ननु तर्हि किमतिदिश्यतेऽनेन न्यायेन [ *प्रकृतिग्रहणे यङ्लुबन्तस्यापि ग्रहणम्* इत्यनेन ] इति चेत्? प्रकृतिनिष्ठमनुस्वारेत्त्वादिकमेवातिदिश्यत इति गृहाण, यथा-प्रणिदादेतीत्यादौ प्रकृतिनिष्ठं दात्वं 'दादा' इति समुदायेऽतिदिश्यते, तथा चैकस्वरत्वस्यातिदेष्टुमशक्यत्वात् 'नरीनृत्त' इत्यादौ "वेटोऽपतः" [ ४. ४. ६२. ] इत्यस्याप्राप्त्या इण्निषेधो न स्यादिति ऐदित्करणसामर्थ्येन "ङीयश्वैदितः०" [ ४. ४. ६१. ] इत्यस्य प्राप्तिरिह साध्यते, तत्रापि चैकस्वरादित्यस्यानुवृत्तिः स्वीकार्यैव, अन्यथा तदग्रिमे "वेटोऽपतः" [ ४. ४. ६२. ] इति सूत्रेऽपि तदनुवृत्तिर्न स्यात् । एवं च ङीयश्वैदितः०" इति सूत्रस्था वृत्तिरपि समञ्जसा स्यात्, तथाहि तत्र वृत्तिः-"कृतै-नृतै-चृतै-इत्येतेषां वेट्त्वेन क्तयोरिट्प्रतिषेधे सिद्धे ऐदित्त्वं यङ्लुबर्थम्, तेन चरीकृतः चरीकृतवान् इत्यत्रानेकस्वरत्वेऽपीट्प्रतिषेधः सिद्धः" इति । तथा चानेकस्वरत्वेऽपीहैकस्वरनिमित्त इट्प्रतिषेध इत्यायाति, तथा चैकस्वरनिमित्तस्य कार्यस्य यङ्लुपि न प्रवृत्तिरित्यंशोऽपि बाधित एव । तत्रायं विवेकः-यथैदित्करणसामर्थ्यादैदित्त्वनिमित्तक एव तत्र प्रतिषेधः, तर्ह्येतन्न्यायस्योभयांशस्य [ अनुबन्धनिर्देशविषयस्य, एकस्वरनिमित्तविषयस्य च ] बाधरूपमस्थिरत्वमायाति, यदि चैदित्करणसामर्थ्यादनेकस्वरत्वेऽप्येकस्वरनिमित्तस्य "वेटोऽपतः" [ ४. ४. ६२. ] इत्यस्य प्रवृत्तिरित्याश्रीयते, तदा एकस्वरनिमित्तांशमात्रस्य बाध इति केवलमनुबन्धानिर्देशांशस्यास्थिरतासूचकमिदमिति प्राचामुक्तिश्चिन्तनीयैवेति प्रतिभाति ॥

पाणिनीये तन्त्रे च दीक्षितादिभिर्मध्यवर्त्तिभिराचार्यैः "एकस्वरानुस्वारेतः" [४. ४. ५६.] इति सूत्रस्थानीये "एकाच उपदेशेऽनुदात्तात्" [पा० सू० ७. २. १०.] इति सूत्रे एकस्वरादित्यर्थकस्य 'एकाचः' इत्यस्य सामर्थ्यादयं न्याय एकदेशानुमत्या सिद्धः, तत्र च 'श्तिप्' आदिनिर्देशा अपि समर्थका इति स्वीक्रियते, किन्तु नवीनैर्नागेशादिभिरयं न्यायोऽस्वीकृतः, तथाहि–परिभाषेन्दुशेखरे पूर्वपक्षरूपेणेमं न्यायं व्याख्याय 'तदपि न–भाष्यानुक्तत्वात्, वधिव्यावृत्त्यर्थमेकाज्ग्रहणस्यावश्यकत्वाच्च। न च वधिः स्थान्युपदेशे एकाजेवेति वाच्यम्, साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणात्, उपदेशावच्छेदेनैकाजित्यर्थाच्च। + + + + अजर्घा वेमिदीतीत्यादौ श्नम्-श्यनादयस्तु चर्करीतं चेत्यदादौ पाठेन यङ्-लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति, छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः, भाषायां तु तादृशानामभाव एव। श्विप्-शपादिनिर्देशास्तु–"भवतेरः" [पा० सू० ७. ४. ७३.] इत्यादिनिर्देशा इव नार्थसाधकाः" इति। अयमाशयः–यद्वि प्राचीनैरेतन्न्यायज्ञापकमास्थीयते "एकाच उपदेशेऽनुदात्तात्" [पा० सू० ७. २. १०.] इति सूत्रस्थमेकाच इति पदं तस्य भाष्यकारेण फलान्तरपरतया कथनादेतन्न्यायस्यानाश्रयणाच्च नायं न्यायो भाष्यकृतामभिमत इत्यायाति। यङ्लुपश्च प्रायश्छन्दस्येव प्रयोगेण छन्दसि च दृष्टस्यैवानुविधानान्न कोऽपि दोषः, क्वचिद् भाषायामपि यङ्लुपः प्रयोगस्य ज्ञापकादिना लब्धत्वेऽपि यत्रैतन्न्यायं विना न निर्वाहस्तादृशप्रयोगाणां भाषायामनभिधानमेवेति स्वीकार्यम्। श्तिवा शपा वा निर्देशस्तु धातुमात्रनिर्देशपर इति तेन नैतन्न्यायसिद्धिरुचितेति ॥ १८ ॥

## *सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य* ॥ १९ ॥

**सि०**—सन्निपातः–द्वयोः सम्बन्धः, सन्निपतनम्–एकस्मिन् कार्ये सम्बन्धनं सन्निपात इति व्युत्पत्तेः, स लक्षणो–निमित्तं यस्य तादृशो विधिः, **तद्विघातस्य** तस्य–निमित्तभूतस्य सम्बन्धस्य, विघातः नाशः; तं विहन्ति इति तद्विघातः, निमित्तविघातको विधिर्वा, तस्य अनिमित्तम्, भवतीति शेषः। केचित्–सन्निपतति संगच्छते कार्यमस्मिन्निति सन्निपातः–निमित्तं, तल्लक्षणं–चिह्नं यस्य स सन्निपातलक्षण इत्यर्थमाहुः, तन्न साधु–सन्निपात-लक्षणशब्दयोरेकार्थत्वापातात्, लक्षणं हि चिह्नत्वेन निमित्तमेवेति निमित्तनिमित्तक इत्यर्थ एव पर्यवस्येत्, स च न साधुः। उपजीव्यविरोधस्यायुक्तत्वमिति लौकिकन्यायमूलोऽयं न्यायः, उपजीवयतीत्युपजीव्यः, ण्यन्तात् कर्तरि बाहुलकाद् यप्रत्ययः, तस्य यो विरोधो नाशानुकूलो व्यापारः स उपजीवकेन कर्तुमशक्य इति लौकिकन्यायार्थः। लोके पितृघातकादीनां निन्दितत्वस्य दर्शनाच्छास्त्रेऽपि तस्यायुक्तत्वमिति न तद् विधेयमिति भावः। यत्तु लोके पितृघातकपुत्रादौ कार्यादपि कारणविघातस्य दर्शनाद् व्याकरणे तथात्वनिषेधार्थोऽयमारम्भ इति, तन्न युक्तम्—लोकेऽपि तस्यायुक्तत्वेनैव प्रसिद्धेः, तन्मूलकत्वस्यैवात्रापि कल्पनौचित्यात्। ज्ञापकं चास्य "धातोरनेकस्वरात्०" [४. ४. ६.] इत्यत्र सामान्यरूपेणानेकस्वरादित्युक्तिः, द्विधा हि धातोरनेकस्वरत्वं स्वाभाविकं परोक्षानिमित्तं च, तत्र स्वाभाविकादनेकस्वरादाम् भवति–चकासामासेत्यादौ, पपाचेत्यादौ परोक्षाहेतुकादनेकस्वराच्च न भवति; तथा च तदर्थं विशिष्य सूत्रे किमपि वचनमावश्यकमिति तदनुक्त्वा सामान्येनानेकस्वरादिति कथनं परोक्षानिमित्तकस्यानेकस्वरत्वस्येहाग्रहणं न्यायसिद्धमेवेति सूचयति, न चान्यः कश्चन न्यायः पूर्वसिद्धस्तादृश इति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न्यायमेव ज्ञापयतीति विज्ञायते; अस्ति चात्र णव्रूपां परोक्षां निमित्तीकृत्य जातमनेकस्वरत्वमिति तत्स्थाने आमादेशरूपं तद्विघातं न करिष्यतीति पपाचेत्यस्य सिद्धिर्भवति। "भिस ऐस्" [१. ४. २.] इति सूत्रे ऐस्करणसामर्थ्याच्चायमनित्य इति विज्ञायते, अन्यथा एस्करणेऽपि "एदैत् सन्ध्यक्षरैः" [१. २. १२.] इत्यस्य प्रवृत्त्या देवैरित्यादिसिद्धौ सत्यामैस्करणं व्यर्थमेव। न च एस्करणे 'देव-एस्' इति स्थितौ "लुगस्यादेत्यपदे" [२. १. ११३.] इत्यल्लोपे देवेरिति स्यात्, न तु देवैरिति वाच्यम्, देवेरिति तु इस्करणेनापि सिध्यति, अथापि यद् 'एस्' क्रियते तत्सामर्थ्यादेवाल्लोपस्य बाधात्; एवं च "भिस ऐस्" [१. ४. २.] इति सूत्रे ऐस्करणमतिजरसैरित्याद्यर्थमिति प्रतीयते, तत्र हि जरामतिक्रान्तैरित्यर्थे समासे जराशब्दस्य "गोश्चान्ते ह्रस्वोऽनंशि०" [२. ४. १६.] इति ह्रस्वे कृते भिस ऐसादेशे *एकदेशविकृत*न्यायेन जराशब्दत्वं मत्वा जरसादेशे सति अतिजरसैरिति भवति, तत्र च एस्करणे "एदोत् सन्ध्यक्षरैः" [१. २. १२.] इत्यस्याप्राप्त्या अतिजरसेरिति स्यात्, एवं चातिजरसैरित्यादिसिद्ध्यर्थं विधीयमानमैस्करणमेतस्य न्यायस्यानित्यतां विना नोपपद्यते, अस्यानित्यत्वाभावे हि ऐसि कृते अदन्तत्वनिमित्तस्य तस्य अदन्तत्वविघातकजरसादेशं प्रति निमित्तत्वाभावेन अतिजरसैरित्यस्यासिद्धिः स्पष्टैवेति तदर्थकस्यैस्करणस्य वैयर्थ्यमपि स्यादेवेति व्यर्थं सत् तदस्य न्यायस्यानित्यत्वं ज्ञापयितुमलम्। तथा चानित्यताज्ञापनस्यातिजरसैरिति फलं सम्यगेवेति विज्ञेयम् ॥ १९ ॥

## *सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य* ॥ १९ ॥

**त०**—अत्र तद्विघातशब्दस्य द्विधा सिद्धिः-विहननं-विघातः, तस्य विघात इत्येका, अत्र च पक्षे विपूर्वकाद्धन्तेर्भावे घञ्। तं विहन्तीति तद्विघातः इत्यर्थे कर्मण्युपपदे कर्तरि अण्प्रत्ययेन तद्विघातशब्दसिद्धिरिति द्वितीया विधा, तत्र द्वितीयपक्षे विधिरिति करणे 'कि'प्रत्ययान्तम्, विधीयतेऽनेनेति विधिरित्यर्थात्, तथा च शास्त्रपरं तत्। तदा सन्निपातलक्षणशास्त्रीयाभ्यनुज्ञादानवाक्ये तद्विघातकातिरिक्तशास्त्रत्वेन संकोचः, अयमेवं नीतिशास्त्रप्रयुक्तः सङ्कोचः कथ्यते, नीतिशास्त्रज्ञो हि राज्याधिकारी स्वापेक्षया गुणवत्तरं विद्वांसं स्वोन्मूलनभिया न प्रवेशयिष्यति। तत्रादौ तत्तच्छास्त्रैः स्वोत्तरप्रवृत्तिमच्छास्त्रस्याभ्यनुज्ञानमपि विधीयते, यथा—"इवर्णादेरस्वे स्वरे य-व-र-लम्" [१. २. २१.] इत्यादिविधिशास्त्रैस्तादृशविधेयघटितस्य साधुत्वमितरस्य तदर्थकस्यासाधुत्वं बोध्यते, तेनैकरूपेण सुधी+उपास्यः सुध्युपास्येत्यादीनामसाधुत्वं सिध्यति, एवं गोशब्दस्य साधुत्वबोधनाद् गाव्यादीनामसाधुत्वं भवति। तथा च परिनिष्ठितस्यापि सुध्युपास्य इति विसर्गान्तरूपस्यासाधुत्वापत्तिः। 'उदिते जुहोत्यनुदिते जुहोति' इतिवत् शास्त्रद्वयप्रामाण्यात् पर्यायापत्तिर्वा स्यादिति "इवर्णादेरस्वे स्वरे यवरलम्" [१. २. २१.] इत्यादिशास्त्राणां तदुत्तरप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्विति स्वोत्तरप्रवृत्तिमच्छास्त्रस्याभ्यनुज्ञादानमपि विधेयम्। तत्तच्छास्त्रैः साधुत्वविधानफलं च "शब्दशास्त्रीयसाधुत्वविधायकशास्त्रं साधुष्वेव प्रवर्तते" इति नियमपरिरक्षणमेव, तेनासाधुगगरीत्यादिशब्दघटकेकारादिषु नैतच्छास्त्रप्रवृत्तिः। अयं भावः—साधुत्वं द्विविधम्, एकं शास्त्रप्रवृत्त्यर्हत्वरूपं शास्त्रप्रक्रियानिर्वाहाय परिकल्पितं प्रकृतिप्रत्ययादिगतार्थवत्त्वरूपमिव अपरं पुण्यजनकतावच्छेदकीभूतो व्याकरणशास्त्रज्ञानाभिव्यङ्ग्यः शब्दनिष्ठो जातिविशेषो मुख्यमेव, तच्च 'यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत् साधु' इत्यर्थापत्तिकल्पितवाक्येन बोध्यते इति। तदुक्तं मञ्जूषायां नागेशभट्टेन—साधूनामेव प्रत्ययविधावुद्देश्यत्वेन प्रकृतित्वम्, खण्डसाधुत्वबोधनद्वारा समुदायसाधुत्वबोधकं व्याकरणमर्थवत्त्वबोधनवदिति। एतेन साधुत्वाऽसाधुत्वरूपविरुद्धधर्मावच्छिन्नस्य बोधनादिदं शास्त्रमप्रमाणमेवेत्यपास्तम्। स्वोत्तरप्रवर्तमानशास्त्रान्तरबोधिताऽसाधुत्वासमानाधिकरणं च साधुत्वं पुण्यजनकतावच्छेदकमिति वैयाकरणसमयः। एवं चानेन न्यायेन तत्तच्छास्त्राभ्यनुज्ञावाक्यीयस्वोत्तरप्रवृत्तिमत्पदार्थे मदीयसन्निपातविघातकातिरिक्तेनेति सङ्कोचः क्रियते। अनित्यत्वविषये तु—एतन्न्यायप्रयोज्यसङ्कोचस्वरूपघटकस्वसन्निपातविघातकशास्त्रे तत्तच्छास्त्रातिरिक्तत्वेन सङ्कोचः, यथा "भिस ऐस्" [१. ४. २.] इत्यत्र ऐस्करणेनास्यानित्यत्वेन ऐसादेशशास्त्रीयाभ्यनुज्ञावाक्यघटकसन्निपातविघातकपदे जरसादेशविधायकशास्त्रातिरिक्तत्वेन सङ्कोचात् 'अतिजरसैः' इत्यत्र जरसादेशे कर्तव्ये नास्य प्रवृत्तिः माधवादयस्तु—अनित्यत्वविषये एतन्न्यायकृतसङ्कोचाभाव एवेत्याहुः। अथास्मिन् न्याये तद्विघात इत्यत्र विघातशब्दो भावघञन्तः, विधिशब्दश्च कर्मकिप्रत्ययान्तो 'विधीयते इति विधिः' इत्यर्थको विधेयपरः, तदा सन्निपातविघातकशास्त्रविधेये सङ्कोचो भवति, येन स्वस्योपकृतं तस्य विघातोऽयुक्त इति हि धर्मशास्त्रम्। तथा च स्वोपजीव्यसन्निपातविघातः स्वेन न न्याय्य इति न्यायार्थः। तथा च तत्तच्छास्त्रविधेये स्वनिमित्तभूतसन्निपातविघातकातिरिक्तत्वेन स्वनिमित्तसन्निपातसम्पादकशास्त्रीयकसन्निपातविघातकातिरिक्तत्वेन च सङ्कोचोऽनेन क्रियते। स्वोपकारकनाशकर्तुरभ्यनुज्ञादाने स्वयं वा स्वोपकर्तुर्नाशकरणे उपजीव्यविरोधः स्पष्ट एव। एवं चानयोः पक्षयोरेकतरपक्षाश्रयणेनेष्टसिद्धावपि द्वितीयपक्षः [विघातशब्दो भावघञन्तो विधिशब्दश्च कर्मसाधन इति] एव भाष्यादिसम्मतः। अस्य न्यायस्योपजीव्यविरोधस्यायुक्तत्वमूलकत्वादेवात्र न केवलं पूर्वपरयोः सम्बन्ध एव सन्निपातशब्देन गृह्यते, अपि तु विशेष्यविशेषणसन्निपातोऽपि। ज्ञापकसिद्धत्वस्वीकारे च तत्साजात्यात् पौर्वापर्यरूपः सन्निपात एव गृह्येत, विशेषणविशेष्यभावसन्निपातस्यापि ग्रहणे च 'ग्रामणि कुलम्' इत्यादौ "क्लीबे" [२. ४. ९७.] इति ह्रस्वे कृते "ह्रस्वस्य तः पित्कृति" [४. ४. ११३.] इति तागमो न भवति, स्वरान्तनामत्वरूपविशेष्यविशेषणभावसन्निपातेन जातस्य ह्रस्वस्य तद्विघातकतागमेऽनिमित्तत्वात्, तागमे सति हि स्वरान्तत्वविघातः स्पष्ट एव। न च ह्रस्वस्य नपुंसकत्वरूपार्थाश्रयत्वेन बहिरङ्गतयाऽसिद्धत्वमिति तत्र तागमस्य प्राप्तिरेव नेति वाच्यम्, अर्थकृतबहिरङ्गत्वस्याश्रयणं न भवतीत्यग्रे निरूपयिष्यमाणत्वात्। यदि च 'ग्रामणि कुलम्' इत्यत्र "वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे" [२. ४. ९८.] इत्यनेन ह्रस्वः, स चोत्तरपदनिमित्तक इति तागमे सति पूर्वोत्तरपदयोः सन्निपातविघात इह न शङ्क्यः, पदद्वयाश्रयत्वेन बहिरङ्गस्य ह्रस्वस्य तागमं प्रत्यसिद्धत्वादित्युच्यते, तदा वृत्रहभिर्भ्रूणहभिरित्यादौ नलोपे कृते नान्तनामत्वरूपसन्निपातविघातमादायाऽयं न्यायः प्रवर्तेत इत्याश्रयणीयम्, तथापि विशेष्यविशेषणभावरूपस्य सन्निपातस्याश्रयणमित्यायातमेवेति। पाणिनीये च तन्त्रे "कृन्मेजन्त०" [पा० सू० १. १. ३९.] इति सूत्रे महाभाष्येऽयं न्यायो गुणदोषप्रदर्शनपूर्वकं व्याख्यातः, तत्रान्ते इत्थं निर्णीतम्—"यद्यपि, अस्य न्यायस्य स्वीकारे बहवो दोषा अपि सन्त्येव, तथापि न्यायोऽवश्यं स्वीकार्यः, दोषेषु प्रतिविधानं कर्तव्यम्" इति।

प्रतिविधानं चानित्यत्वाश्रयणमेव । अनित्यत्वे ज्ञापकं च पूर्वं प्रदर्शितमेव । अस्य च न्यायस्य सन्निपातलक्षणविधित्वं लिङ्गम् । तथा च यो यः सन्निपातलक्षणविधिस्तत्र सर्वत्रास्य प्रवृत्त्या पूर्वोक्तरूपेण सङ्कोचः क्रियते, यत्र चास्यानित्यत्वादप्रवृत्तिरिष्टा तत्रैतत्कृतः सङ्कोचो नेति विज्ञेयम् । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमित्यर्थोऽस्य न्यायस्य फलति, एवं च देवायेत्यादौ आत्वस्य सिद्धयेऽनित्यत्वमेवाश्रयणीयम्, एवमन्येष्वपि दोषेपूह्यमिति ॥ १९ ॥

## *असिद्धं बहिरङ्गमन्तरङ्गे* ॥ २० ॥

सि०—सिद्धं निष्पन्नं लब्धसत्ताकमिति यावत्, तदेव च सच्छब्देनोच्यते, तद्भिन्नमसिद्धम्–अनिष्पन्नमलब्धसत्ताकमसदित्यर्थः । तत्र अन्तरेणापि वतिं वत्यर्थो गम्यते, यथा–'अब्राह्मणं ब्राह्मण इत्याह, ब्राह्मणवदिति गम्यते' इति भाष्यरीत्या सिद्धमप्यसिद्धमित्याहेत्यसिद्धवदिति गम्यत इत्यसिद्धमित्यस्यासदिवेत्यर्थः पर्यवसन्नः । अत्र बहिरङ्गस्योद्देश्यतयाऽन्तरङ्गात् पूर्वं निर्देशेऽपि बहिरङ्गत्वस्यान्तरङ्गत्वज्ञानाधीनत्वात् पूर्वमन्तरङ्गत्वमेव विज्ञेयं, पाठक्रमादर्थक्रमो बलवानिति न्यायरीत्याऽप्यन्तरङ्गस्यार्थज्ञानकाले पूर्वमुपस्थितत्वात् । तथा चोक्तमभियुक्तैः प्रथममन्तरङ्गलक्षणं ततो बहिरङ्गलक्षणम्, तथा हि–

"प्रकृतेराश्रितं यत् स्याद्, यद्वा पूर्वं व्यवस्थितम् ।
यस्य चाल्पनिमित्तानि, अन्तरङ्गं तदुच्यते ॥ १ ॥
प्रत्ययस्याश्रितं यत् स्याद्, बहिर्वा यद् व्यवस्थितम् ।
बहूनि वा निमित्तानि यस्य तद् बहिरङ्गकम् ॥ २ ॥ इति ।

एतच्चान्तरङ्गबहिरङ्गशब्दाभ्यामपि लभ्यते । तथा हि–अन्तः मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतानि, अङ्गानि-निमित्तानि यस्य तदन्तरङ्गम्, एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं च बहिरङ्गम् । *नित्यादन्तरङ्गम् [ बलवत् ]* इति वक्ष्यमाणे न्यायेऽन्तरङ्गस्य बलवत्त्वमुच्यते, तच्च बहिरङ्गस्य दौर्बल्यज्ञानाधीनमिति तद्दौर्बल्यहेतुसाधकोऽयं न्यायः, यतश्चान्तरङ्गे कार्ये कर्त्तव्ये बहिरङ्गमसदिव भवति, ततोऽन्तरङ्गं बहिरङ्गान्नित्यादपि बलवद् भवतीत्युभयोरेकवाक्यतया बोधः । अन्तरङ्गे कर्तव्ये जातं समकालप्राप्तिकं च बहिरङ्गमसिद्धमिति न्यायार्थः । तत्र जातस्य बहिरङ्गस्यासिद्धत्वे यथा–गिर्योरिति, अत्र 'गिरि ओस्' इति स्थितौ यत्वे कृते "भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने" [ २. १. ६३. ] इति दीर्घे कर्तव्ये जातस्यापि यत्वस्य प्रत्ययाश्रितत्वाद् बहिर्भूतनिमित्तकत्वाद्वा बहिरङ्गत्वेन प्रकृत्याश्रितत्वादन्तर्भूतनिमित्तकत्वाद्वाऽन्तरङ्गदीर्घे प्रत्यसिद्धत्वं भवतीति दीर्घो न भवति । समकालप्राप्तिकस्य बहिरङ्गस्यासिद्धत्वफलं तु 'पट्व्या मृद्व्या' इत्यादि, 'पटु+ई+आ' इतिस्थिते समकालप्राप्तिकमपीकारस्य यादेशं बहिरङ्गतयाऽसिद्धं बाधित्वा पूर्वमुकारस्य वादेशे पश्चादीकारस्य यादेशे च 'पट्व्या, मृद्व्या' इति सिद्ध्यतः, अन्यथा परत्वादीकारस्य यादेशे उकारस्य वकारो न स्यात् । यथा वा 'अयजे इन्द्रम्' इत्यत्र 'अयज+इ+इन्द्रम्' इति स्थिते वाक्यसंस्कारपक्षे "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घं समकालप्राप्तिकं बहिरङ्गं प्रबाध्यान्तरङ्गत्वादेकारे- अयजे इन्द्रमिति सिध्यति । समकालप्राप्तिकस्यापि बहिरङ्गस्यानेन न्यायेनासिद्धत्वबोधनादेव "ओमाङि" [ १.२.१८. ] इति सूत्रे आङ्ग्रहणं चरितार्थम्, तद्धि 'अद्य+आ+ऊढा' इति स्थिते धातूपसर्गयोः कार्यमन्तरङ्गमित्यन्तरङ्गत्वाद् 'आ+उ' इत्यनयोरोत्वे पश्चात् "ऐदौत् सन्ध्यक्षरैः" [ १. २. १२. ] इत्यस्याप्रवर्त्तनार्थं कृतम्, अन्यथा पूर्वं मद्यशब्दाकारेण सहाकारस्य "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घत्वे पश्चादोत्वे 'अद्योढा' इत्यस्य सिद्धौ व्यर्थमेव स्यात्, अत्र साधनबोधकक्तप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चादद्यशब्दस्य समुदायसम्बन्ध इति ओत्वस्यान्तरङ्गत्वमिति "सम्प्रसारणाच्च" [ पा० सू० ६. १. १०८. ] इति सूत्रे महाभाष्ये स्पष्टम् । यत्तु–'विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्' इति, तन्न–विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात्, भाष्ये एवंविधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च । पूर्वोपस्थितनिमित्तकस्य बलवत्त्वबोधकोऽयं न्यायो लोकतोऽपि सिद्ध इति महाभाष्यकारेणोक्तम्–"अचः परस्मिन् पूर्वविधौ" [ पा० सू० १. १. ५७. ] इति सूत्रे "सा चाप्येषा [ परिभाषा ] लोकतः सिद्धा, कथम्? प्रत्यङ्गवर्त्ती लोको लक्ष्यते, तद्यथा–पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत् करोति, ततः सुहृदाम्, ततः सम्बन्धिनाम् । प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्त्तते, सामान्ये वर्त्तमानस्य व्यक्तिरुपजायते, व्यक्तस्य सतो लिङ्गसङ्ख्याभ्यामन्वितस्य बाह्यार्थेन योगो भवतीति । यथैव चानुपूर्व्योऽर्थानां प्रादुर्भावः, तथैव शब्दानामपि, तद्वत् कार्येऽपि भवितव्यम्" इति । अयमर्थः–अङ्गमङ्गं प्रति प्रत्यङ्गम्, अङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते, अङ्गानां प्रत्यासन्नत्वात्, एवं च प्रत्यासन्नवाची प्रत्यङ्गशब्दः तथा च लोको यथा प्रत्यासत्तिमपेक्ष्यैव कार्याणि करोति, यथा सुप्तोत्थितः पूर्वं स्वशरीरकार्याणि करोति, शरीरस्य सकलान्यापेक्षया सामीप्यात् सकलभोगसाधनत्वाच्च, ततः सुहृदां सौहार्दस्यासत्तिहेतुत्वात्, ततः सम्बन्धिनाम्, असम्बद्धजनापेक्षया तेषामासन्नत्वात्, तथा शब्दशास्त्रेऽपि येन क्रमेणार्थानां सामीप्यं

तेनैव क्रमेण शब्दोपस्थितिः,शब्दोपस्थितिक्रममनुरुध्यैव चार्थोपस्थितिः, तथा च लिङ्ग-संख्यादिस्वासन्नार्थयुक्तस्य बाह्यार्थेन योग इति बाह्यार्थवाचिशब्दसम्बन्धोऽपि तेनैव क्रमेणेत्युपसर्गसम्बन्धादिभ्यः पश्चादन्यशब्दसम्बन्ध इति विज्ञेयम्। ननु अन्वितस्य बाह्यार्थयोगो भवतीत्ययुक्तम्, शब्दार्थसम्बन्धस्य नित्यत्वेन प्रतिपादितत्वात्, शब्दस्य चिरस्य व्यापाराभावाद् युगपदेव सकलार्थप्रतीतेः क्रमाभिधानमप्यसङ्गतमिति चेत्? उच्यते-नित्येऽपि शब्दार्थसम्बन्धेऽक्रमेऽप्यर्थप्रतिपादने उपायभावेनासन्तमपि क्रमं प्रकृत्याद्यर्थं चाश्रित्योपेयव्यवस्थापनात्, तत्र नागृहीतविशेषा बुद्धिः सामान्य उपजायते, इति प्रथमं सामान्यं [ प्रवृत्तिनिमित्तम् ] अभिधीयते, ततस्तदनुरक्ता द्रव्ये प्रतीतिः, लिङ्ग-सङ्ख्या-शक्तीनामाश्रयोऽपि द्रव्यमेवेति तदेव पूर्वमभिधातव्यम्, ततः संख्यापेक्षया लिङ्गं समासन्नमिति तदभिधीयते, द्वयादिसङ्ख्या हि वस्त्वन्तरापेक्षोपजायते, एकत्वसङ्ख्याऽपि वस्त्वन्तरापेक्षद्वित्वादिव्यवच्छेदं करोतीति वहिरङ्गा, साऽपि सजातीयपदार्थापेक्षत्वादन्तरङ्गा, कर्मादीनि तु विजातीयक्रियापेक्षणाद् वहिरङ्गाणि, इति न्यायप्राप्तः क्रमः इति, तथा च 'पट्व्या' इत्यादौ पूर्वं स्त्रीत्वनिमित्तको ङीरुत्पद्यते इति तन्निमित्तको वकारादेशः, पश्चात् कारकविभक्त्या तृतीयया योग इति तन्निमित्तको यकारादेश इति न्यायसिद्धमेवैतत्परिभाषा [ न्याय ] निमित्तभूतं पूर्वोपस्थितनिमित्तकस्यान्तरङ्गत्वमिति समुदितार्थः। एतच्च "यद्वा पूर्वं व्यवस्थितम्" इत्यनेनोक्तम्। प्रकृत्याश्रितस्यान्तरङ्गत्वं तु पूर्वोपस्थितनिमित्तकत्वमेव, अङ्गशब्देन निमित्तस्यैव ग्रहणात्, उद्देश्यत्वेन प्रकृत्याश्रितत्वं नेह ग्राह्यम्, अन्तरङ्गशब्दमर्यादया तदलाभात्। एवमल्पापेक्षस्यान्तरङ्गत्वं बह्वपेक्षस्य वहिरङ्गत्वमित्यपि न, तदर्थस्यापि शब्दमर्यादया लाभात्, विवेचयिष्यते चैतदग्रे विवरणे। वहिर्निमित्तकत्वरूपवहिरङ्गत्वस्य 'तच्चारु' इत्यप्युदाहरणम्। अत्र चवर्गयोगजं चत्वमुभयपदाश्रितत्वाद् वहिरङ्गमित्येकपदाश्रिते "च-जः क-गम्" [ २.१.८६. ] इति कत्वे कर्तव्येऽसिद्धमिति कत्वं न भवति। ज्ञापकं त्वस्य न्यायस्य "न सन्धि-ङी-य-कि-द्वि-दीर्घासद्विधावस्क्लुकि" [ ७.४.१११. ] इति सूत्रे सन्धिविधित्वेन द्वित्वविधौ स्थानिवद्भावनिषेधे सिद्धेऽपि द्विग्रहणम्, तद्धि दध्यत्रेत्यादौ यत्वादेरेतन्न्यायप्राप्तासिद्धत्वद्वारेणापि जायमानस्य स्थानिवद्भावस्य निषेधार्थम्, यतो दध्यत्रेत्यादौ "अदीर्घाद् विरामैकव्यञ्जने" इति [ १.३.३२. ] द्वित्वे क्रियमाणे "स्वरस्य परे प्राग्विधौ" [ ७.४.११०. ] इति प्राप्तं स्थानिवत्त्वं प्रतिषेद्धुमेव तत्र सूत्रे [ "न सन्धि०" इति सूत्रे ] द्विग्रहणं क्रियते, तच्चान्तरेणापि द्विग्रहणं सेत्स्यत्येव द्वितीय-तृतीयपादयोर्विधीनां क्रमशः स्वरव्यञ्जनसन्धिविधित्वेन तृतीयपादस्थस्य द्वित्वस्य व्यञ्जनसन्धिविधित्वात् सन्धिग्रहणेनैव निषेधात्, ततश्च द्विग्रहणं व्यर्थं सत् शास्त्रान्तरेणापि प्राप्तं स्थानिनिमित्तकं कार्यं न स्यादित्येवमर्थतया पर्यवस्यति, तच्च शास्त्रं नान्यदुपलभ्यते ऋतेऽस्मान्न्यायादिति न्यायस्यास्य सत्त्वमाक्षिपति द्विग्रहणमिति, एतन्न्यायप्राप्तासिद्धत्वमूलकस्थानिवत्त्वनिषेधाय द्विग्रहणं स्वांशे चरितार्थम्। यद्यपि "न सन्धि०" [ ७.४.१११. ] इति सूत्रस्थं नञ् पदं प्रकरणप्राप्तेन स्थानी वेत्यनेनैव सम्बद्धमित्येतन्न्यायप्राप्तासिद्धत्वनिषेधाय नालमिति शङ्कितुं शक्यते, तथापि द्विग्रहणसामर्थ्येनाप्रकरणस्थस्यानुमानिकस्याप्यस्य निषेध इत्याश्रीयते। वस्तुतस्तु एतन्न्यायसिद्धौ तत्सार्थक्यम्। तेन चैतन्न्यायसिद्धिरिति परस्पराश्रयत्वप्रसङ्गः, तथापि लोकसिद्धस्यास्य न्यायस्य निषेधार्थं तदित्याश्रित्य व्याकरणेऽपि तत्प्रवृत्तिर्द्विग्रहणेनानुमीयत इत्याश्रयणीयमिति चारु ॥ २० ॥

---

❋असिद्धं वहिरङ्गमन्तरङ्गे❋ ॥ २० ॥

**त०**—अन्तरङ्ग-वहिरङ्गशब्दयोः परस्परापेक्षार्थनिरूपकत्वेन तल्लक्षणेऽन्योन्याश्रयः स्यादिति मत्वाऽभियुक्तैः प्रकृतेराश्रितं यत् स्यादित्यादि परस्परानाश्रितमेव लक्षणमुक्तम्। तत्र प्रकृत्याश्रितस्यापि पूर्वोपस्थितनिमित्तकत्वरूपमेवान्तरङ्गत्वमिति प्रतिपादितं वृत्तौ। तथा च पूर्वं व्यवस्थितमित्येवान्तरङ्गलक्षणम्। 'यस्य वाऽल्पनिमित्तानि' इत्यनेनोक्तमल्पापेक्षस्यान्तरङ्गत्वं तु नवीना न स्वीकुर्वन्ति, तथा हि-परिभाषेन्दुशेखरे संज्ञाकृतवहिरङ्गत्वस्यानाश्रयणस्थापनमुखेन नागेशेनेत्थं खण्डितं तत्-"ननु "येन विधिस्तदन्तस्य" [ पा० सू० १.१.७२. ] इति सूत्रे भाष्ये "इको यणचि" [ पा० सू० ६.१.७७. ] इत्यादावपि तदन्तविधौ 'स्योन' इत्यत्रान्तरङ्गत्वाद् यद्यणो गुणवाधकत्वमिष्यते, तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशो न शब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादित्युक्तम्। अत्र कैयटः-सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्गे ऊठ् अपवादत्वाद् वलोपं बाधते, गुणं त्वन्तरङ्गत्वाद् बाधते, गुणो ह्यङ्गसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति; ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः, तत्र कृते यण्-गुणौ प्राप्नुत इति; एवं च संज्ञापेक्षस्यापि वहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत्? न-तदन्तविधावपि बहुपदार्थापेक्षत्वरूपवहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासङ्गतेः, वहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च। तथा सति असिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत्' इत्यादिना। तथा च 'ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्य-

न्तरङ्गत्वाद् गुण एव स्यादिति भाष्यस्य क आशय इति चेत्? ऊनशब्दे परे यणो विधानाद् गुणनिमित्तकस्य नकारस्य तदन्तर्गतत्वमिति गुणस्यान्तरङ्गत्वमित्यन्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमित्यत्रैव भाष्यतात्पर्यात् । तथा च वहिरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकेन सप्तम्यन्तेन पञ्चम्यन्तेन षष्ठ्यन्तेन वा प्रथमान्तभिन्नेन येन केनचित् पदेनाऽऽश्रीयमाणो यावान् शब्दसमुदायस्तद्घटको यच्छास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदेन गृह्यते तदन्तरङ्गमिति भाष्याशयः । यकारविधायक[ यण् ]शास्त्रीयसप्तम्यन्तेनाचीति पदेनाश्रीयमाण 'ऊन' इति समुदायस्तद्घटको नशब्दो गुणशास्त्रस्थेन सप्तम्यन्तेन गृह्यत इति गुणशास्त्रमन्तरङ्गमिति फलितम्, न तु वह्वपेक्षत्वं वहिरङ्गत्वमल्पापेक्षत्वमन्तरङ्गत्वमिति । एतेन संज्ञानिमित्तकस्यापि वहिरङ्गत्वं नेति सिद्धं मन्तव्यम्, अन्यथाऽत्र गुणस्यान्तरङ्गत्वं न स्यात्, तत्रानेकसंज्ञाया अपेक्षितत्वात्; एवमर्थनिमित्तकस्यापि न वहिरङ्गत्वम्, अङ्गशब्देन 'शब्द' रूपनिमित्तस्यैव ग्रहणात्, शब्दशास्त्रे तस्यैव प्राधान्यात् । अत एव "दीर्घो नाम्यतिसृचतसृष्रः" [ १. ४. ४७. ] इति सूत्रे 'अतिसृचतसृ' इति पर्युदासः सार्थकः, अन्यथा तिसाद्यादेशस्य स्त्रीत्वरूपार्थनिमित्तकत्वेन वहिरङ्गत्वात् तयोरसिद्धतया "त्रेस्त्रयः" [ १. ४. ३४. ] इति त्रयादेशे तस्य वैयर्थ्यं स्पष्टमेव । न च त्रयादेशोत्तरं तिसादेशे दीर्घवारणाय 'अतिसृचतसृ' इति पर्युदासकरणं सार्थकमिति वाच्यम्, त्रयादेशस्येव दीर्घस्याप्यन्तरङ्गत्वेन पूर्वं प्रवृत्तौ पश्चात् तिसादेशे *लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते* इति न्यायेन पुनर्दीर्घाप्राप्त्या तद्वैयर्थ्यस्य दुर्वारत्वात् । न च "त्रेस्त्रयः" [ १. ४. ३४. ] इत्यादावुद्देश्यनिमित्तयोर्विशिष्टरूपत्वेन विशिष्टरूपोदाने चार्थवद्ग्रहणन्यायोपस्थित्या प्रकृतिप्रत्ययोभयार्थस्य निमित्तत्वेन तिसादेश-त्रयादेशयोरुभयोरप्यर्थनिमित्तकत्वेव वहिरङ्गत्वं सममेवेति वाच्यम्, तिसादेशे तत्परिभाषोपस्थितार्थस्य विभक्तिसंज्ञारूपार्थस्य च साम्येऽपि स्त्रीत्वरूपार्थस्याधिक्येन वैषम्यात्, वस्तुतस्तु तिसादेशविधायकस्याल्पनिमित्तकत्वमेन, न साम्यम्, तथा हि–तत्रार्थवद्ग्रहणन्यायोपस्थाने 'अर्थाश्रयः, अर्थत्वम्, अर्थः' इत्यंशत्रयोपस्थितिः, स्त्रीत्वरूपार्थस्य स्त्रीत्वजातेश्चेति द्वयस्येति पञ्चानामुपस्थितिः, "त्रेस्त्रयः" [ १. ४. ३४. ] इत्यत्र च त्र्यंशे आमंशे चार्थवद्ग्रहणन्यायोपस्थित्या प्रत्येकमंशत्रयोपस्थितिरित्यंशषट्कोपस्थितिरिति त्रयादेशस्यैवाधिकापेक्षत्वमिति तत्र कर्तव्ये तिसादेशस्य नानेन न्यायेनासिद्धत्वं शक्यते वक्तुमिति, न तेन [ अतिसृचतसृ ] इति पर्युदासेनार्थनिमित्तकस्य न वहिरङ्गत्वमिति समर्थयितुं शक्यते परे तु–अर्थापेक्षमन्तरङ्गत्वं वहिरङ्गत्वं च वदता नार्थगततात्पत्वाधिकत्वे अपेक्षणीये, अर्थव्यक्तीनामानन्त्यात् तयोर्निर्धारयितुमशक्यत्वात्, किन्त्वर्थगतधर्मे विषयत्वे वा न्यूनत्वाधिकत्वे अपेक्षणीये, तथा चामंशेऽर्थोपस्थितावपि तत्रत्यार्थत्वधर्मतत्त्रिशब्दांशे उपस्थितार्थत्वरूपधर्मस्य भेदाभावेनाधिकधर्मस्यानाश्रयणात्, अवच्छेदकभेदेन विषयताभेदादर्थत्वावच्छिन्नविषयताया अप्येकत्वेनानाधिक्यात् । तथा च त्रयादेशे त्रित्वमर्थत्वमामूसंज्ञा, तिसादेशे त्रित्वमर्थत्वं विभक्तिसंज्ञेति धर्मत्रयनिमित्तकत्वं समानम्, अधिकं स्त्रीत्वं निमित्तमिति तस्य वहिरङ्गत्वमिति नार्थनिमित्तकस्य वहिरङ्गत्वमिष्टम् 'अतिसृचतसृ' इति पर्युदासं कुर्वतो ग्रन्थकर्तुरिति युक्तमेवेत्याहुः । वस्तुतस्तु–अन्तर्भूतनिमित्तकत्वं, शीघ्रोपस्थितनिमित्तकत्वम्; अपरनिमित्तकत्वमित्याद्यनेकविधमन्तरङ्गत्वं तत्तल्लक्ष्यानुरोधात् स्वीक्रियते । अथापरनिमित्तकस्यान्तरङ्गत्वे किं मानमिति चेत्? अत्रोच्यते–"अतः स्यमोऽम्" [ १. ४. ५७. ] इति सूत्रे तपरकरणमेव मानम्, तद्धि दीर्घादकारात् परयोः स्यमोरमादेशो माभूदित्येवमर्थम्, क्लीवे च "क्लीवे" [ २. ४. ९७. ] इत्यनेन ह्रस्वविधानाद् दीर्घस्याभावेन तद्व्यावृत्त्यर्थस्य तस्य वैयर्थ्यमेव, तच्च व्यर्थं सत् 'अपरनिमित्तकमन्तरङ्गम्' इति ज्ञापयति, ततश्च अश्च आश्चेति द्वन्द्वे [ समाहारे ]स्यादेर्लुकि 'अ+आ' इति स्थिते समानदीर्घापेक्षया अपरनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वं क्लीवत्वनिमित्तके ह्रस्वत्वे ततः समानदीर्घे *लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते* इति न्यायेन पुनर्ह्रस्वत्वाप्राप्त्या 'अतः' इति तपरकरणेन सेरमादेशाभावे "अनतो लुप्" [ १. ४. ५९. ] इति लुपि 'आ' इति सिध्यति, अन्यथा कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं दीर्घे ततो ह्रस्वत्वे व्यावर्त्यालाभेन तस्य [ 'अतः' इति तपरकरणस्य ] वैयर्थ्यमेव स्यादिति । ननु ज्ञापितेऽप्यपरनिमितकस्यान्तरङ्गत्वे 'अ+आ' इति स्थिते ह्रस्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वं, समानदीर्घस्यान्तर्भूतनिमित्तकत्वेनान्तरङ्गत्वमित्युभयोः साम्यमेवेति नान्तरङ्गत्वेनेह व्यवस्था शक्या कर्तुमिति चेत्? न–वहिरङ्गत्वेन विवक्षितशास्त्रघटकसप्तम्यन्तपदेनाश्रीयमाणसमुदायघटकवृत्तिविषयताप्रयोजकसप्तम्यन्तपदघटितत्वस्यैवान्तरङ्गत्वरूपत्वात्, ह्रस्वविधायके च तादृशसप्तम्यन्तपदाभावेन दीर्घस्यान्तरङ्गत्वाभावात् । अयमाशयः–यदा दीर्घस्यान्तरङ्गत्वं ग्राह्यं तदा ह्रस्वे वहिरङ्गत्वं विवक्षणीयं, [ साधनीयं ] ह्रस्वविधायकं शास्त्रं च "क्लीवे" [ २. ४. ९७. ] इति, तत्र च सप्तम्यन्तपदमपि तदेव, तच्च क्लीवत्वरूपार्थपरं न तु शब्दपरमिति तादृशसप्तम्यन्तपदेन समुदायस्याश्रयणाभावात् तद्घटकवृत्तिविषयताया एवाप्रसिद्धेस्तदपेक्षया दीर्घस्यान्तरङ्गत्वं दुरुपपादमिति । तथा च ह्रस्वस्यैवान्तरङ्गत्वमपरनिमित्तकत्वरूपमिति पूर्वं ह्रस्वे ततो दीर्घे 'आ' इति तपरकरणव्यावर्त्त्यं स्थिरमेवेति । यदि च "अतः स्यमोऽम्" [ १. ४. ५७. ] इति सूत्रे तपरकरणं न समकालग्रहणार्थम्, अपि तु "आत् स्यमोऽम्" इति करणे क्लिष्टत्वापत्त्या मुखसुखार्थमेव, अश्च अश्चेति समाहारद्वन्द्वे 'अम्' इत्येवरूपं युक्तमिति

मन्यते तदा अपरनिमित्तकत्वमन्तरङ्गत्वं माऽस्तु, अन्तर्भूतनिमित्तकत्वेनापि तत्र तत्र [अपरनिमित्तकत्वोदाहरणस्थले] ज्ञापकादिनापि निर्वाहसंभवात्। अथवा *न स्वरानन्तर्ये* इत्यग्रिमन्यायेनैव तत्र सर्वत्र निर्वाहः, स्वरनिष्ठान्यानन्तर्यनिमित्तके कार्ये कर्तव्ये कृते च यदन्तरङ्गं प्राप्नोति तत्र कर्तव्ये वहिरङ्गासिद्धत्वं नेत्यर्थात्। ननु समकालप्राप्तवहिरङ्गस्यासिद्धत्वे यत् "ओमाङि" [१. २. १८.] इति सूत्रे आङ्ग्रहणं मानत्वेनोक्तं वृत्तौ तन्न शोभनम्, 'अव+आ+ऊढः' इति स्थिते "समानानां तेन दीर्घः" [१. २. १.] इति प्राप्तं दीर्घत्वं परत्वात् प्रबाध्य "अवर्णस्येवर्णादिनैदोदरल्" [१. २. ६.] इत्यस्य प्रवृत्त्या ओत्वे समानदीर्घाप्राप्त्या "ऐदौत् सन्ध्यक्षरैः" [१. २. १२.] इत्यस्य वाधनार्थमाङीत्यस्य चारितार्थ्येन नोक्तार्थे ज्ञापकत्वं तस्य युक्तमिति चेत्? न—परापेक्षयाऽपवादस्य वलवत्त्वेन पूर्वं दीर्घस्यैव प्रवृत्तौ तत ओत्वे रूपसिद्धौ व्यर्थस्य तस्य ज्ञापकत्वसंभवात् न च ज्ञापनोत्तरमपि न स्वांशे चारितार्थ्यमन्तरङ्गापेक्षयाऽप्यपवादस्य वलीयस्त्वादिति वाच्यम्, अपवादस्यापि दीर्घस्यान्तरङ्गवहिरङ्गभावाभावविषये दैत्यारिरित्यादौ चरितार्थस्य प्रकृतेऽन्तरङ्गेण ओत्वेन वाधसंभवात्, तदुक्तम्—"अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण वाध्यते" इति। ननु आङ्पूर्वकेण्धातोः 'एहि' इति रूपं, तदनुकरणे एहिशब्देऽनुकार्यघटकैकारे पूर्वान्तवद्भावेनाङ्त्वात् *अनुकरणं प्रकृतिवत्* इत्यतिदेशेनाङ्त्वेऽनुकरणैकदेशभूतैकारे देवादिशब्दयोगे प्राप्त ऐत्त्ववाधनपुरःसरमवर्णलोपार्थमाङ्ग्रहणस्यावश्यकत्वेन न ज्ञापकत्वसम्भव इति चेत्? न—ज्ञापकतापरभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्त्वे प्रकृत["ओमाङि" इति]सूत्राप्रवृत्तेः। अत्रेदं विचार्यते-यदुक्तं वृत्तौ—'पूर्वं धातोरुपसर्गयोगे' इति, तत्र किं मूलम्? इति चेत् "सुट्कात् पूर्वः" [पा० सू० ६. १. १३५.] इति सूत्रस्थं भाष्यमेव मानमिति गृहाण, तत्र हि सूत्रशेषे धातूपसर्गयोः कार्यं यत् तदन्तरङ्गम्' इत्युक्तम्, तत्र शङ्कते—"कुत एतत्" इति, उत्तरमाह—"पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इति। नैतत् सारम्—'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण, साधनं हि क्रियां निर्वर्त्तयति, तामुपसर्गो विशिनष्टि, अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्, सत्यमेवमेतत्—यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते, अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति, तस्य 'आस्यते गुरुणा' इत्यकर्मक उपास्यते गुरुरिति केन सकर्मकः स्यात्?" इति। तत्र कैयटः पूर्वं धातुरिति प्रतीकमादाय "विशिष्टा क्रिया साधनेनार्थलाभाय सम्बध्यत इति पूर्वं विशेषणेन [उपसर्गद्योत्यार्थेन] युज्यत इत्यर्थः" इत्याह। नैतत् सारमिति प्रतीकावतरणमित्थमाह—"इतरो लब्धस्वरूपा क्रिया विशेषणमाकाङ्क्षतीति मत्वाह—नैतदिति" इति। सत्यमेवमेतदिति भाष्यावतरणमित्थमाह—"इतरो विशिष्टा क्रिया साधनेन साध्यते, न तु साधनाल्लब्धस्वरूपाऽन्यतो विशेषं लभते इति मत्वा बुद्धिनिरूपितविशिष्टसाध्यभाविसाधनसम्बन्धाश्रयेणाह—सत्यमिति" इति, उक्तकैयटरीत्या भाष्यकृतामाशय इत्थमायाति—यद्यपि क्रियायोग एव सत्युपसर्गसंज्ञा भवति, क्रिया च साधनसाध्यैवेति साधनसम्बन्धः प्रथमं तत उपसर्गसम्बन्ध इति प्रतिभाति, तथापि साधनेनाप्युपसर्गार्थविशिष्टैव क्रिया साध्या, अन्यथा 'उपास्यते गुरुः' इत्यत्राकर्मकाद् 'आस्' धातोः कर्मणि लकारो न स्यात् इति, भाविसाधनसम्बन्धसाध्यस्वरूपं बुद्धौ परिकल्प्योपसर्गयोगानन्तरमेव साधनयोग इति धातूपसर्गयोः कार्यस्यान्तरङ्गत्वे बीजमिति। उद्द्योते नागेशस्तु—नैतत् सारमित्यादिभाष्यमेवं वर्णयति—"भाष्ये नैतत् सारमिति—वक्ष्यमाणोऽभिप्रायः। तस्यासारतां दर्शयन् 'पूर्वं धातुः साधनेन' इत्यस्य युक्तत्वं दर्शयति—साधनं हीति। क्रियां—तत्प्रतीतिम्। साधनयोगेन हि साध्यत्वेन धात्वर्थप्रतीतिः, साध्यत्वस्य साधननिरूप्यत्वात्। क्रियायोगे चोपसर्गत्वमिति भावः। तदाह—तामुपसर्ग इति। तां—साध्यत्वेन प्रतीताम्। तत्र विशेषणीभूतमर्थमुपसर्गो द्योतयतीत्यर्थः। अभिनिर्वृत्तस्य—साध्यत्वेन ज्ञातस्य, विशेषः—विशेषणम्, उपसर्गेण शक्यो द्योतयितुम्। एवं च पूर्वं धातुरुपसर्गेणेति नैतत्सारमिति भावः। इतर एतदङ्गीकुर्वन्नेवान्तरङ्गत्वं व्युत्पादयितुमाह—सत्यमेवमेतत्, यस्त्वसाविति—उपसर्गसंज्ञकशब्दयोगात् पूर्वं साधनयोग इति सत्यमेव, परन्तु त्वदभिमतं धातूपसर्गसम्बन्धकृतमर्थमभ्यन्तरं कृत्वा—स्वबोध्यं कृत्वा, धातोः पूर्वं नियमेनाकाङ्क्षितत्वात् साधन—तत्कार्यप्रत्यययोगे कृते क्रियात्वावगतावुपसर्गसंज्ञकशब्दयोगः, अन्यथा केवलधातुतः सर्वत्राप्रतीयमानः सोऽर्थः, कथं श्रोत्रा बुध्येतेति भावः। यो हि मन्यत इति—शब्दसम्बन्धवदर्थसम्बन्धोऽपि पश्चादिति यो मन्यत इत्यर्थः।" इति। अत्रत्यस्वमतसार इत्थं प्रकटितो नागेशेन परिभाषेन्दुशेखरे एतन्न्यायविवरणावसरे—"यत् तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन, उपसर्गेण-तत्संज्ञकशब्देन, साधनेन-कारकेण तत्प्रयुक्तकार्येण, अत एवानुभूयत इत्यादौ सकर्मकत्वात् कर्मणि लकारसिद्धिरिति, तन्न—क्रियायाः साध्यत्वेन वोधात् साध्यस्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियावोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात्। + + + + + उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु [अनुभूयते आनन्दः, उपास्यते गुरुरित्यादिषु] कर्मणि लकारसिद्धिः, पश्चाच्छ्रोतुर्वोधायोपसर्गसम्बन्ध" इति। अयमाशयः—पूर्वं धातुरुपसर्गेण युज्यत इति भाष्यस्योपसर्गसंज्ञक-

शब्देन पूर्वं धातोर्योग इति नार्थः, क्रियायोग एवोपसर्गसंज्ञायाः सम्भवेन, क्रियायाश्च साध्यरूपत्वात् साधनसम्बन्धोत्तरमेव [ साधन-कारकवाचकप्रत्ययसम्बन्धोत्तरमेव ] साध्यत्वलाभात् पूर्वं साधनसम्बन्धस्यैवौचित्यात् । तथा चोपसर्गद्योत्यस्यार्थान्तरस्य धात्वर्थेऽन्तर्भावं कृत्वा धातुनैव कर्मादीनामभिधानात् सकर्मकत्वप्रयुक्तकार्योपपत्तेश्च, उपसर्गेणेत्यस्योपसर्गद्योत्यार्थेनेत्यर्थः । उपसर्गद्योत्यार्थसम्बन्धस्यान्तर्भावमात्रेण सकर्मकत्वादिसिद्धेर्न तदर्थद्योतकशब्दसम्बन्धस्यापि पूर्वमुपगमावश्यकत्वम् । शब्दार्थसम्बन्धस्यानादित्वाद् भूधातोर्ज्ञानार्थत्वस्य 'आस्'धातोरुपासनार्थत्वस्य चोपसर्गसम्बन्धात् प्रागपि सत्त्वेन सकर्मकत्वात् कर्मणि लकारे बाधकाभावः, उपसर्गः पश्चात् सम्बध्यमानः प्रयोक्तुर्ज्ञानोपासनाद्यर्थतात्पर्यं श्रोतारं ग्राहयति, अत एव श्रोतुर्बोध उपसर्गसम्बन्धोत्तरमेव, नहि श्रोतृबोधः कर्मसंज्ञायां कर्मणि लकारे वा कारणं येन पूर्वं कर्मणि लकारो न स्यात्, अत एव वृत्तौ–साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोग इति प्रतिपादितमित्यवधेयम् । धातूपसर्गकार्यस्यान्तरङ्गत्वोपपत्तिश्चेत्थम्–बुद्ध्यारुढानामेवार्थानां बोधनाय शब्दप्रयोगात् सर्वेषामर्थानां तत्तदर्थबोधकशब्दप्रादुर्भावात् प्रागेवास्थितत्वात्, साधनबोधकशब्दनिमित्तककार्यापेक्षयोपसर्गनिमित्तककार्यस्य शीघ्रोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वमेवोत्पत्तिरिति । तथा च 'अद्य+आ+ऊढः' इत्यादावुपसर्गनिमित्तककार्यस्यान्यकार्यापेक्षयाऽन्तरङ्गत्वेन समकालप्राप्तिकं वहिरङ्गं समानदीर्घं बाधित्वा प्रवृत्तिरूचितेति, तत्र औत्वबाधनार्थमाङ्ग्रहणं स्वांशे चरितार्थमिति बोध्यम् । अत एव च पूर्वं धातुरुपसर्गेण सम्बध्यते पश्चात् साधनेनेति द्विर्वचनादडागमाच्च पूर्वः स्सडेवेति प्रतिपादितं "सं-परेः कृञः स्सट्" [ ४. ४. ९१. ] इति सूत्रवृत्तौ । तस्याप्ययमेवाशयः–संचस्कारेत्यादौ परोक्षापेक्षया भूषणरूपोपसर्गार्थस्य प्रथमतरमेवोपस्थितत्वेन तन्निमित्तकः स्सट् परोक्षादिनिमित्तकद्वित्वादितोऽन्तरङ्गतरक इति । अत्रेदं बोध्यम्–दैशिक-कालिकादिभेदादन्तरङ्गत्वमनेकविधम्, तत्र दैशिकं प्रथमोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं 'पद्ध्या मृद्ध्या' इत्यादौ, कालिकं प्रथमोपस्थितनिमित्तकत्वम् 'अद्योढा' इत्यादौ, नव्यमते–अपरनिमित्तकत्वेनाप्यन्तरङ्गत्वं 'पचावेदम्' इत्यादौ पाणिनीयमते, स्वमते च–अश्व आश्वेति द्वन्द्वे ह्रस्वत्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वमुक्तमेव । एवमेकपदसम्बन्धिवर्णद्वयापेक्षत्वम्, प्राचां मतेऽर्थकृतसंज्ञाकृताल्पापेक्षत्वं पूर्वं पूर्वमन्तरङ्गत्वमित्यादि च यथासंभवं लक्ष्यानुरोधादन्तरङ्गत्वं, तद्भिन्नत्वं च वहिरङ्गत्वमाश्रयणीयमिति, स्वयमूहनीयं सुधीभिरिति नेह प्रपञ्चितम् ।

परिष्काररसिकाश्चैतेषु सर्वप्रधानमन्तर्भूतनिमित्तकत्वमन्तरङ्गत्वं शब्दमर्यादालब्धमिति तदित्थं परिष्कुर्वन्ति–स्वप्रवृत्तौ निमित्तत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तद्विशिष्टं शास्त्रं 'स्वा'पेक्षयान्तरङ्गम्, वैशिष्ट्यं च स्वघटकनिमित्तकत्व–स्वघटकेतरानिमित्तकत्वोभयसम्बन्धेनेति । तथा च 'गिर्योः' इत्यत्र वहिरङ्गत्वेन विवक्षितं शास्त्रं यत्वविधायकं, तदेव स्वपदेन ग्राह्यम्, तत्प्रवृत्तौ निमित्तत्वेनाश्रीयमाणः शब्दसमुदायः 'गिरि+ ओस्' इति, तद्विशिष्टत्वमन्तरङ्गत्वेन जिघृक्षिते "भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने" [ २. १. ६३. ] इति दीर्घविधायके शास्त्रेऽस्त्येव, स्व–वहिरङ्गशास्त्रीयनिमित्तभूतशब्दसमुदायः, तद्घटकरेफनिमित्तत्वेन तदितरघटकोदासीनवर्णानिमित्तत्वेन चोभयसम्बन्धेन तादृशसमुदायविशिष्टत्वस्याक्षतत्वात् । इत्थमेवान्यत्रापि लक्षणं सङ्गमनीयमिति संक्षेपः ॥ २० ॥

## *न स्वरानन्तर्ये* ॥ २१ ॥

सि०—पूर्वन्यायोऽनुवर्तते, अन्यथा 'न' इत्यस्यासम्बद्धत्वं स्यात् । यद्यपि न्यायानामेषां ज्ञापकसापेक्षतया न पौर्वापर्यमस्ति, ततश्च न पूर्वेण परस्य न्यायस्य कोऽपि सम्बन्धः, सर्वेषामेषां स्वातन्त्र्यात्, तथापि प्राचां व्याख्यानमनुरुध्य पूर्वन्यायसम्बन्धः परिकल्पनीय एव । तथा च स्वरयोरानन्तर्यं स्वरानन्तर्यं तस्मिन् स्वरानन्तर्ये इति निमित्तार्थे सप्तमी। स्वरयोरानन्तर्यनिमित्तकेऽन्तरङ्गे [ कर्तव्ये ] वहिरङ्गमसिद्धं न भवतीति न्यायार्थः । आनन्तर्यं च व्यवधानाभावः, यथा–'इयेष, बभूवुषा' इत्यनयोः क्रमशो बहिरङ्गयोर्गुणोषादेशयोरन्तर्भूतनिमित्तकयोर्यथाक्रमं "पूर्वास्यास्वे स्वरे य्वोरियुव्" [ ४. १. ३७. ] इति "धातोरिवर्ण०" [ २. १. ५०. ] इति च सूत्राभ्यां विहितयोरियुवादेशयोरन्तरङ्गयोः कर्तव्ययोरसिद्धत्वं न भवति, उभयोरपि स्वरस्थानिकत्वेन स्वरादिनिमित्तकत्वेन च स्वरानन्तर्यनिमित्तकत्वात्, तथा च तावादेशौ भवतः । एतस्य न्यायस्य ज्ञापकं च सूत्रकृतां "वृत्त्यन्तोऽसषे" [ १. १. २५. ] इति निर्देशकरणमेव, अत्र हि वृत्त्यन्तशब्दात् परस्य से रोः "अतोऽति रोरुः" [ १. ३. २०. ] इत्यनेन विहितस्य उत्वस्य पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन वहिरङ्गत्वात्, एकपदस्थितवर्णद्वयापेक्षत्वेनान्तरङ्गे "अवर्णस्येवर्णादिनैदोदरल्" [ १. २. ६. ] इत्यनेनैत्वे कर्तव्येऽसिद्धत्वं यदि स्यात् तर्हि ओत्वं न स्यादिति स निर्देशोऽसङ्गत एव स्यात्, पश्यति च लक्ष्यैकचक्षुष्क आचार्यः स्वरानन्तर्ये पूर्वस्य न्यायस्याप्रवृत्तिमिति तादृशं निर्देशं करोति, तथा च पूर्वन्यायस्य स्वरानन्तर्येऽप्रवृत्तिं विनाऽनुपपद्यमानोऽयं निर्देशः पूर्वन्यायप्रतिषेधकममुं न्यायमाक्षिपतीति सिद्धम् । अयं च न्यायो वस्तुतः पूर्वन्यायस्यानिष्टस्थलेऽप्रवृत्तिसूचक एवेति नास्यानित्यतासंभावना यथा–"स्थानी वा०" [ ७. ४. १०९. ] इति "स्वरस्य परे०"

[७. ४. ११०.] इति परिभाषयोः सजातीयः पूर्वन्यायस्तथा तत्परिभाषयोर्निषेधरूपाया "न सन्धि०" [७. ४. १११.] इति परिभाषायाः सजातीयोऽयं न्याय इति बोद्धव्यम् । वस्तुतस्तु 'इयेष' इत्यत्र स्वे स्वरे परे इयुवादेशविधानसामर्थ्यादेव तत्र नासिद्धत्वं न वा "स्वरस्य परे प्राग्विधौ" [७. ४. ११०] इति स्थानिवद्भाव इति विनाऽपि न्यायं तत्र सिद्धिरिति 'बभूवुषा' इत्येव न्यायोदाहरणं विज्ञेयम् । यत्त्विह—"स्थानिवद्भावमाशङ्क्य "स्वरस्य परे०" [७. ४. १००.] इत्यत्र सप्तमीनिर्देशेन "सप्तम्या [निर्दिष्टे] पूर्वस्य" [७. ४. १०५.] इति परिभाषया अनन्तरपरनिमित्त एवादेशः स्थानिवत्, इह च णवा सह गुणस्थानिन इकारस्य व्यवहितत्वान्न स्थानिवद्भावः इति केचिदूचुः, तन्न युक्तम्—"लघोरुपान्त्यस्य" [४. ३. ४.] इति सूत्रे समुपस्थितस्याक्ङितीत्यस्य क्ङिद्भिन्नप्रत्ययवाचकस्य सप्तम्यन्तत्वेन तत्र च "सप्तम्या पूर्वस्य" [७. ४. १०५.] इत्यस्योपस्थितिरवश्यं स्वीकार्येति तद्विहितो गुणोऽपि प्रत्ययानन्तरस्यैव भवति, किन्तु उपान्त्यस्य कदाचिदपि प्रत्ययानन्तरत्वासम्भवेन *येन नाव्यवधानं तेन व्यवहितेऽपि भवति* इति न्यायेनैकवर्णव्यवधानेऽपि प्रवृत्तिर्भवति, न तावता तस्य परनिमित्तकादेशाभावत्वम् । किञ्च "स्वरस्य परे०" [७. ४. ११०.] इति "सप्तम्या पूर्वस्य" [७. ४. १०५.] इति चोभे अपि परिभाषे, परिभाषाणां च विधिसूत्राणि प्रति शेषतया गुणत्वम्, गुणानां च न परस्परं सम्बन्धः, गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादिति न्यायात्; युक्तं चैतत्—यथा राजसेवकानां राजानं प्रत्येव सेव्यसेवकभावो न परस्परं सेव्यसेवकभावः, तथा परिभाषासूत्राणामपि परस्परमुपकार्योपकारकभावाभावात् । इत्थं च "स्वरस्य परे०" [७. ४. ११०.] इत्यत्र "सप्तम्या [निर्दिष्टे०" ७. ४. १०५] इत्यस्योपस्थितिरसम्भविनी, तथा च नात्र तत्परिभाषाया उपस्थितिः । किञ्च 'अस्व' इत्यस्य नञा निर्दिष्टत्वेनानित्यत्वेन समाधानमपि न रमणीयम्, नञा निर्दिष्टस्यानित्यत्वे मानाभावात्, प्रत्युत निषेधाश्च बलीयांस इत्यस्यैव युक्तत्वात्, किञ्च तथा सति 'ईषतुः, ईषुः' इत्यादावपि समानदीर्घं प्रबाध्येयादेश एव स्यात्; एवं भवतु वा स्थानिवद्भावस्तथापि स्वेऽपि परेऽत्रेयादेशो भविष्यतीत्यपि निर्युक्तिकमतिप्रसङ्गावहं च वचनम् । पर्जन्यवल्लक्षणप्रवृत्त्या समाधानमपि निरालम्बनमेव, तेन हि न्यायेन निमित्तसद्भावे फलाभावेऽपि लक्षणप्रवृत्तिरित्यायाति, यथा पर्जन्यो जले स्थले वा फलमसमीक्ष्यैव जलं वर्षति तथैव फलाभावेऽपि लक्षणानां प्रवृत्तिरित्यत्रैव तत्तात्पर्यात् । एवं नञा निर्दिष्टस्यानित्यत्वेन पूर्वं समाधाय पश्चात् "न च स्थानिवद्भावेनादेशस्य स्थानिस्वरूपभवनादस्वस्वरास्थित्या कथमियुवाविति शङ्क्यमिति शङ्का निरालम्बनैव, तथाऽस्याः शङ्कायाः 'यतः स्थानिवद्भावेन स्थानिवत् कार्यमेव स्यात् न तु स्थानिवद्रूपम्, तत्करणस्यैतावन्मात्रार्थकत्वात्' इति समाधानमपि चिन्त्यमेव, स्थानिवद्भावेन स्थानिकार्यमिति देशे आदेशप्रयुक्तकार्यस्याभावात्, आदेशस्वरूपसत्त्वेऽपि तस्याकिञ्चित्करत्वात् । अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्' इत्येवमत्रत्यस्तद्ग्रन्थः सर्वोऽपि काशकुशावलम्बनमिव प्रतीयते । अन्ते च 'स्थानिवद्भावपुंवद्भाव" इत्यादिन्यायेन *नानिष्टार्था शास्त्रप्रवृत्तिः* इति न्यायेन वा यत् समाधानमुक्तं तत् कथञ्चित् स्वीकार्यं स्यात्; किन्त्वत्र सूत्रारम्भसामर्थ्यादेव स्थानिवद्भावाभावस्योपपादयितुं शक्यत्वेन वृथा गतिकगत्याश्रयणम् । अत एव परिभाषेन्दुशेखरे नागेशेन "पूर्वस्यास्वेस्वरे०" [४. १. ३७.] एतत्सूत्रस्थानीयस्य "अभ्यासस्यासवर्णे" [पा. सू. ६. ४. ७८.] इति सूत्रस्यारम्भसामर्थ्यादेवाभ्यासकार्ये [द्वित्वे पूर्वस्य कार्ये] तदुत्तरखण्डस्वरादेशस्य न स्थानिवत्त्वमिति सामान्येनैव ज्ञापितम् ॥ २१ ॥

## *न स्वरानन्तर्ये* ॥ २१ ॥

**त०**—अत्र वृत्तौ पूर्वन्यायस्थपदयोः 'बहिरङ्गम्, अन्तरङ्गे' इत्यनयोरनुवृत्तिः सूचिता, सा चावश्यक्येव । यद्यपि न्यायानां परस्परनिरपेक्षत्वं ज्ञापकसिद्धत्वेन भिन्नदेशस्थत्वं च तथा हि—पूर्वन्यायः "न सन्धिङी०" [७. ४. १११.] इति सूत्रस्थद्विग्रहणेन ज्ञापितः, अयं च "वृत्त्यन्तोऽसषे" [१. १. २५.] इति निर्देशेनेति *यथोद्देशं संज्ञा-परिभाषम्* इति पक्षेऽनयोर्बहुव्यवहितत्वमिति नानुवृत्तिः सम्भवति, तथाप्याचार्यैरुभयोर्न्याययोः सहैव पठिततयाऽव्यवहितत्वमिति तदभिसन्धायैव पदानुवृत्तिः स्वीकृता । दृश्यते चैतन्न्यायस्थानीये *नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः* इति न्याये नागेशादिनापि 'अन्तरङ्गे' इति पदानुवृत्त्याश्रयणम् । तथा हि—तन्न्यायव्याख्याने तेनोक्तम् "परिभाषार्थस्तु—अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्न, बहिष्पदेन बहिरङ्गम्, तस्य भावो बहिष्ट्वं बहिरङ्गत्वं [तस्य], तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः—न प्राप्तिरिति । 'असिद्धं बहिरङ्गम्' [अन्तरङ्गे] इत्युक्त्वा *नाजानन्तर्ये* इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्य 'अन्तरङ्गे' इत्यस्यानुवृत्तिसूचनात्" इति । तथा च यथा तत्र नये भाष्योक्तिप्रामाण्यादनुवृत्तिः कल्प्यते तथा स्वमतेऽपि सहपाठसामर्थ्यात् सा साध्या । केचित्तु—"न्याययोर्ज्ञापकदेशस्थत्वस्यौचित्येनोभयोर्भिन्नदेशस्थतया तत्र परस्परसामीप्यान्न पदानुवृत्तिसम्भवः । *नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः इति* न्याये च 'अन्तरङ्गे' इत्येतावन्मात्रमेवानुवर्तनीयं, तच्च बहिष्ट्वपदार्थस्य नित्यसाकाङ्क्षत्वेन

लभ्यत एवेति न भाष्यव्याख्यानेन तदनुवृत्तिः कल्पनीया" इत्याहुः। परं क्षमते त्वेवं न सम्भवति वहिष्पदस्यापि तत्रासत्त्वादिति न्याययोरिह पाठक्रतमेव पूर्वपरत्वमाश्रित्यानुवृत्तिः साधनीयैव गत्यन्तराभावात् । न्यायार्थे च जातस्य वहिरङ्गस्येत्युक्त्या समकालप्राप्तिकस्य वहिरङ्गस्य पूर्वन्यायेनासिद्धत्वं भवत्येव, अन्यथा 'अयजे + इन्द्रम्' इत्यादौ 'अयज + इ + इन्द्रम्' इति स्थितौ समकालप्राप्तिकस्य वहिरङ्गस्य समानदीर्घत्वस्याऽपि स्वरानन्तर्यनिमित्तककार्यत्वादसिद्धत्वाभावे शब्दपरविप्रतिषेधेन समानदीर्घे कृते तन्न सिध्येत् । किञ्च समकालप्राप्तिकस्यापि वहिरङ्गस्यानेनासिद्धत्वाभावबोधने "ओमाङि" [१. २. १८.] इति सूत्रे आङ्ग्रहणस्य वैयर्थ्यमेव स्यात्, 'अद्य + आ + ऊढ' इति स्थितौ समानदीर्घस्यापि स्वरानन्तर्यनिमित्तकत्वादसिद्धत्वाभावे पूर्वं दीर्घे ओत्वे च रूपसिद्धेः। 'स्वरानन्तर्ये' इति पदस्य 'स्वरयोरान्तर्ये' इति यद् व्याख्यानं कृतं तत् प्राचामनुरोधेन वस्तुतस्तु—स्वरस्यान्यानन्तर्यमेवापेक्षितम्, तत्रान्यः स्वरो वा भवतु व्यञ्जनं वा, न तत्राग्रहः, तथा च सति लक्ष्ये क्वचिदन्यानन्तर्यनिमित्तकेऽपि कार्येऽस्य न्यायस्य प्रवृत्तिरुपपादयितुं शक्यते। एतन्न्यायज्ञापकेन च पूर्वन्यायस्यानित्यतामेव ज्ञापयन्ति केचित्, परन्तु तन्न शोभनम्—अननुगतानित्यत्वकल्पनापेक्षया वचनज्ञापनस्यैव साधीयस्त्वात्; किञ्चैवं पूर्वन्यायस्यानित्यत्वकल्पनादेव सिद्धे *अन्तरङ्गानपि विधीन् वहिरङ्गो यप् बाधते* इत्यादिन्यायानामपि वैयर्थ्यप्रसङ्गादिति ॥ २१ ॥

## *गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* ॥ २२ ॥

सि०—गुणादागतो गौणः गुणादिति पञ्चमी हेतौ, आङ्पूर्वकगम्धातोर्ज्ञानमर्थः, क्तप्रत्ययार्थो विषयताश्रयः, ज्ञानं चेहारोपात्मकं हेतुबोधकपदसान्निध्यात्, गुणपदं गुणज्ञानपरम्, तथा च गुणप्रतिसन्धानप्रयोज्यारोपीयविषयताश्रयोऽर्थः—गौणोऽर्थः, यथा गोशब्दस्य जाड्यादिगुणनिमित्तो वाहीकार्थः 'गौर्वाहीकः' इत्यादौ, अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः प्रथमः प्रधान इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते, एवं चाप्रसिद्धत्वं गौण लाक्षणिकत्वं चात्र गौणत्वम्। तथा च गौणमुख्ययोरर्थयोः सम्भवतोर्मध्ये मुख्य एवार्थे कार्यसम्प्रत्ययः, मुख्यार्थबोधक एव शब्दे कार्यप्रवृत्तिरिति न्यायार्थः । एतन्न्यायोपष्टम्भादेव "चरणस्यस्थेणोऽद्यतन्यामनुवादे" [३. १. १३८.] इति सूत्रं स्थेणोः कर्तुश्चरणस्येत्यादिना व्याख्यातम्, तथाहि—"तत्रत्योऽयं वृत्तिग्रन्थः—"शाखाध्ययननिमित्तकव्यपदेशभाजो द्विजन्मानश्चरणाः कठादयः; प्रमाणान्तरप्रतिपन्नार्थस्य शब्देन सङ्कीर्तनमनुवादः, यज्ञकर्मणि संशितानुशंसनमित्येके, अनुकरणमित्यपरे, अद्यतन्यां परभूतायां यौ स्थेणौ तयोरनुकथने कर्तृत्वेन सम्बन्धिनो ये चरणास्तद्वाचिनां शब्दानां स्वैर्द्वन्द्वोऽनुवादविषये एक एकार्थो भवति" इति, यथा—उदगात् कठकालापम्, प्रत्यष्ठात् कठकौथुमम्, एषामुदयप्रतिष्ठे कश्चिदिहानुवदति, तत्र प्रतिष्ठोदयौ प्रति कठादीनां कर्तृत्वेन सम्बन्धित्वम्, सूत्रे च चरणस्येति सम्बन्धसामान्यमुक्तम्, तथापि क्रियावाचकयोः स्थेणोः सम्बन्धित्वं कर्तृत्वादिना कारकेण भवतीति तत्र कारकचक्रप्रयोक्तृत्वेन कर्तुरेव सम्बन्धित्वेन ग्रहीतुमौचित्यं मुख्यत्वादिति तादृशव्याख्यानमेतन्न्यायसत्त्वमूलकमेव। कर्तृत्वेन सम्बन्धित्वस्य ग्रहणाच्च करणत्वादिना सम्बन्धित्वे न भवति समाहारद्वन्द्वः, यथा प्रत्यष्ठात् कठ-कलापाभ्यां कश्चिदित्यादौ। अत्रैतन्न्यायबलादेव कर्ताऽपि यत्र मुख्यस्तत्रैव समाहारो भवति, गौणत्वभाजा च कर्त्रा सम्बन्धे सत्यपि न भवति, यथा 'प्रत्यष्ठायि कठ-कालापाभ्याम्' इत्यादाविति। अत्र हि भावे प्रत्ययस्य विधानात् कठ-कालापयोः कर्तृत्वे सत्यपि भावस्यैव प्राधान्येन, कर्तुस्तदनुयायित्वान्न प्राधान्यमिति केचिदाहुः, तन्न रोचयामहे, द्विधा न्यायव्यापाराभावात्, एकदा हि न्यायव्यापारेण कर्तृत्वेन सम्बन्धित्वमिति लब्धं पुनः कर्तुः प्राधान्यलाभार्थं न्यायप्रवर्तनाभावात्। किञ्च भावे प्रत्यये सति कर्तुरप्राधान्यमिति कुतः समायातम्? कर्ता हि तादृश्यामवस्थायामपि कारकेषु प्रधानमेव क्रियां प्रत्यपि तस्य प्राधान्यमक्षतमेव, केवलं भावार्थकप्रत्ययेन तदनभिधानात् कथं तस्य प्राधान्यं व्याहन्येत, तथा च सति कर्मणि प्रत्ययेऽपि तत्प्राधान्यं न स्यात्, तत्रापि प्रत्ययेन कर्तुरनभिधानस्य सत्त्वात्, कर्त्रनुकूलसंख्याद्यभावोऽप्युभयत्र समान एव, तथा च यदीह भावे प्रयोगः प्रसिद्धस्तर्हि प्रत्यष्ठापि कठकौथुमेनेत्येव भवितव्यं विपरीतप्रयोगे प्रमाणाभावात्। लोकसिद्ध एवायं न्याय इति यद्यपि नास्त्यत्र ज्ञापकापेक्षा तथापि प्राचां रीत्या ज्ञापकमपि प्रदर्श्यते, तथा हि—"चरणस्य" [३. १. १३८.] इति सूत्रे सम्बन्धविशेषानुल्लेख एव तत्र ज्ञापकः, कर्तृत्वेन सम्बन्ध एवेहेष्ट इति जानतापि लक्ष्यैकचक्षुष्केणाचार्येण सम्बन्धविशेषनिश्चायकस्य कर्त्रादिपदस्याप्रयोग एतन्न्यायस्य व्याकरणेऽपि नियामकत्वमिति ज्ञापयतीत्यवगम्यते । किञ्चायं न्यायो न नामसम्बन्धिनि कार्ये प्रवर्तते, किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्ये एव प्रवर्तते, परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौणत्वप्रतीतिर्न त्वपरिनिष्ठितस्येति "धातोरिवर्णोवर्णस्य०" [२. १. ५०.] इत्यादीनां यथा 'शिश्रियतुः, लुलुवतुः' इत्यादौ प्रवृत्तिस्तथैव 'नियो भुवौ' इत्यादौ क्विबन्त-

त्वप्रयुक्तगौणधातुसम्बन्धिनोरपीवर्णोवर्णयोः, तत्र धातोरित्यस्य विशिष्टार्थोपस्थापकत्वेऽपि कार्यिणोरिवर्णोवर्णयोर्विशिष्टार्थोपस्थापकत्वाभावात्। एवं चैतदर्थं न्यायानित्यत्ववर्णनक्लेशो न कर्तव्यः, सकललोकसिद्धस्य च न्यायस्यानित्यत्वं तु वर्णयितुमपि न युक्तम्। एवं च वसु इच्छतः–वसूयतः, ततः क्विपि "अतः" [ ४. ३. ८२. ] इत्यल्लोपे "योऽशिति" [ ४. ३. ८० ] इति यलोपे नामत्वादौकारादिषु स्यादिषु 'वस्वौ, वस्वः' इत्यादौ धातोरिवर्ण०" [ २. १. ५०. ] इत्यस्य प्रवृत्तिर्निराबाधेति तद्बाधनार्थस्य "स्यादौ वः" [ २. १. ५७. ] इत्यस्य सार्थक्यं स्पष्टमेवेति नानित्यताज्ञापकत्वमित्यपि विज्ञेयम्। किञ्च क्विबन्तेषु धातुत्वं न गौणम्, गौणत्वस्य पूर्वन्दर्शितस्य तेष्वभावात्, तत्र हि धातुत्वस्य *क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते इति न्यायेनैव लब्धत्वात्। *प्रधानानुयोगिनो व्यवहाराः* *प्रधानानुयाप्यप्रधानम्* इति न्यायावेतन्न्यायसमानार्थकतया प्रतिभासमानावनेन न्यायेन गतार्थौ न वेति विवेचने प्रस्तुते गौणशब्दस्यात्र मुख्यभिन्नपरत्वमास्थायानेनैव गतार्थौ ताविति केचित्। वस्तुतस्तु प्रथमस्य लक्ष्यं यदुक्तम्–'मुनीनित्यादाविकारस्य शसोऽकारस्य चेत्युभयोः स्थानित्वेऽपि 'ई' दीर्घः स्यान्नत्वकारस्यासन्न आः, 'शतोऽता सह' इति सहार्थनिर्देशेन शसोऽकारस्य गौणत्वाद्' इति, तत्रेदं विचारणीयं-गौण-मुख्ययोरुभयोः पार्थक्येन कार्ययोगित्वे गौणस्य कार्यं न स्यात्, मुख्यस्यैव स्यादिति तात्पर्यकस्यास्य न्यायस्य तत्र कः प्रसर इति, अत्र हि उभयोः स्थाने कार्यमेकमेव विधेयमिति न गौणस्य कार्ययोगाभावः कर्तुं शक्यते। तथा च षष्ठ्या निर्दिष्टस्यैव स्थानित्वं स्थानिन एव चासन्न आदेश इति "क्षासन्नः" [ ७. ४. १२० ] इति परिभाषासहकारेणैव तत्र निर्णयो युक्तः, सति चानियमसन्देहे *प्रधानानुयायिनो व्यवहाराः* इति लोकसिद्ध एव न्याय आलम्बनीयः, न च तावता गौरवमुद्भावनीयम्, स्वतः सिद्धस्य स्वीकारे गौरवचर्चानवकाशात्। एवं *प्रधानानुयायि अप्रधानम्* इत्यपि चेन्न्यायस्तर्हि *प्रधानानुयायिनो व्यवहाराः* इत्यस्यैव रूपान्तरमिति स्वीकार्यं, न पृथक् तस्य न्यायान्तरत्वम्, तदाग्रहे च सोऽप्यास्तां नाम, न स्वतः सिद्धवस्तुस्वीकारे भारः। विवेचितं चैतदन्यत्रेति ॥ २२ ॥

*गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* ॥ २२ ॥

त०—शब्दस्य हि द्विधा प्रयोगः-मुख्यो गौणश्च, मुख्यस्तावदनादिपरम्पराऽवगतार्थविषयः, गौणश्च गुणनिमित्तकः, कस्यचिद् गुणं क्वचिदवलोक्यारोप्य तद्वाचकः शब्दस्तत्र प्रयुज्यते स एव गौणः शब्दः, तस्य चार्थनिष्ठगौणत्वमादाय गौणत्वेन व्यवहारः, वस्तुतः शब्दे गौणत्व-मुख्यत्वयोरभावात्। तथा च गौणशब्दार्थो वृत्तौ निरूपितः गुणप्रतिसन्धानप्रयोज्यारोपीयविषयताश्रय इति, तस्य च स्वशक्यतावच्छेदकसमानाधिकरणगुणप्रतिसन्धानप्रयोज्यस्वशक्यतावच्छेदकप्रकारकारोपीयविषयताश्रयोऽर्थः स्वस्य गौणोऽर्थ इति तात्पर्यम्। यथा गौर्वाहीक इत्यादौ गोपदशक्यतावच्छेदकं गोत्वं, तत्समानाधिकरणं यज्जाड्यमान्द्यादिकं, तस्य वाहीके-संस्कारहीने पुरुषविशेषे ज्ञानात् गोपदशक्यतावच्छेदकं गोत्वं तत्रारोप्यत इति वाहीको गोपदस्य गौणोऽर्थः। एवं–'महद्भूतश्चन्द्रमाः' इत्यत्र महत्त्वसमानाधिकरणस्य शिवशिरोवहनकर्मत्वस्य कलङ्किन्यपि चन्द्रे दर्शनात् तत्र महत्त्वारोप इति चन्द्रतात्पर्यको महच्छब्दः प्रकृते गौण इति "महतः कर-घास-विशिष्टे डाः" [ ३. २. ६८. ] इति डा न भवति; एवं यः कश्चित् पुत्रादेः रामेति कृष्णेति वा नाम करोति स रामादिगतपित्राज्ञापालनकर्तृत्वादिकं गुणं पुत्रादावारोप्य तद्धेतोश्च रामत्वादिकमारोप्य रामत्वादिना बोधं करोति। तथा च गुणप्रतिसन्धानप्रयोज्यशक्यतावच्छेदकप्रकारकबोधविषयत्वरूपगौणत्वस्य तत्रापि समन्वय इति तदुपाश्रित्यैवाप्रसिद्धस्य संज्ञादिरपि तद्गुणारोपादेव बुध्यत इत्युक्तं वृत्तौ इयानेव विशेषो यदेकत्र गुणप्रतिसन्धानं प्रमात्मकमपरत्र भ्रमात्मकमिति। ननु संज्ञा नाम शब्दो, गौणश्चार्थ इति संज्ञादिरपि गौण इत्यसंगतम्, इति चेत्? न–संज्ञादिरिति पदस्य संज्ञा आदिः-प्रथमो बोधको यस्येत्यर्थपरत्वात्, सम्यग् ज्ञायते–बोध्यत इति संज्ञेति व्युत्पत्त्याऽर्थस्यैव लाभाच्च। एतन्न्यायप्रवृत्तिस्थलनिरूपणप्रसङ्गेन वृत्तौ 'उपात्तं विशिष्यार्थोपस्थाकं विशिष्टरूपं यत्र तादृशे पदकार्ये एव प्रवर्तते' इत्युक्तम्, तत्र उपात्तमित्यस्य सूत्रे उच्चार्यमाणमित्यर्थः, विशिष्यार्थोपस्थापकमित्यस्य स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नबोधकमित्यर्थः, विशिष्टरूपमित्यनेन स्ववृत्तिधर्म आनुपूर्वीरूप एव बोध्यते, तथा च स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादान एव न्यायः प्रवर्तत इति पदत्रयेण बोधितम्। "अत इञ्" [ ६. १. ३१. ] इत्यादावतपदस्य नामपदस्य वाऽऽनुपूर्वीरूपत्वाभावेन तदुपादानं न विशिष्टरूपोपादानम्, अत एव गौणेऽपि तस्य प्रवृत्तिः। नन्वेवं विशिष्टरूपोपादान एवास्य न्यायस्य प्रवृत्तिस्वीकारे च्व्यन्तस्य निपातत्वेन चादि[अव्यय]त्वेन च 'अगौर्गौः समपद्यत गोऽभवत्' इत्यादौ "ओदन्तः [ १. २. ३७. ] इति सूत्रेणासन्धिवारणाय "ओत्" [ पा० सू० १. १. १५. ] इति सूत्रे महाभाष्ये गौण-मुख्यन्यायाश्रयणं विरुध्येत, ओत्पदस्य निपातपदस्य [ चादिपदस्य ] वा पूर्वोक्तरीत्या ओदन्तत्वाद्यवच्छिन्नविषयताप्रयोजकत्वेन आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वाभावेन विशिष्टरूपोपादानाभावादिति चेत्? न–निपातपदं [चादिपदं]

चादित्वेनैव चादीनामुपस्थापकमिति चादित्वस्यानुपूर्वीरूपत्वाद् विशिष्टरूपोपादानसत्त्वात् । ननु चत्वावच्छिन्ने वात्वावच्छिन्ने एवंरूपेण शक्तिकल्पनायामपि स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वस्याभाव एवेति चेत्? न–स्ववृत्तित्वं विहायानुपूर्व्यवच्छिन्नत्वस्यैव लक्षणे प्रवेशात् । ननु तथा सति शक्यतावच्छेदकभेदेन शक्तिभेदापत्त्या सर्वधर्मावच्छिन्नस्यैकदा बोधाभाव इति चेत्? न–चाद्यन्यतमत्वावच्छिन्ने शक्तिकल्पनया शक्यतावच्छेदकभेदाभावेन शक्तिभेदाभावात् । नन्वानुपूर्व्या साक्षादवच्छिन्नमुख्यविशेषताप्रयोजकपदोपादानं विशिष्टरूपोपादानमिति वक्तव्यम्, अन्यथा नामपदवृत्तिविषयताया नामत्वरूपानुपूर्व्या साक्षादवच्छिन्नत्वेन नामपदवत्त्वावच्छिन्नमुख्यविशेष्यतायाः परम्परयाऽऽनुपूर्व्यवच्छिन्नत्वेन नामपदोपादानस्यापि विशिष्टरूपोपादानत्वापत्तिः, उक्तनिवेशे त्वाद्यविशेष्यताया मुख्यविषयतात्वविरहात्, अन्त्यायाः साक्षादवच्छिन्नत्वाभावान्न दोषः, तथा च निपातपदस्य [ चादिपदस्य ] चाद्यन्यतमत्वावच्छिन्नत्वाङ्गीकारेऽपि तत्पदीयमुख्यविशेष्यतायाश्चत्वाद्यानुपूर्व्या साक्षादवच्छिन्नत्वविरहात्, चत्वादिना साक्षादवच्छिन्नायाश्च मुख्यविशेष्यतात्वाभावात् नामपदस्येवास्याप्युपादानं न तादृशम्, स्वेन साक्षादवच्छिन्नत्वं स्वावच्छिन्नत्व-स्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टत्वम्, मुख्यत्वं च विशेष्यतायां प्रकारत्वासामानाधिकरण्यम् । किञ्च निपातपद [ चादिपद ] इव नामपदेऽपि घटाद्यन्यतमत्वावच्छिन्ने शक्त्यापत्तिः । न च घटादीनामानन्त्याच्चादीनां च परिसंख्यातत्वान्नायं दोष इति वाच्यम्, चादेरप्याकृतिगणत्वेनोभयोः साम्यादिति चेत्? अत्र वदन्ति "ओत्" [ पा० सू० १. १. १५. ] इति सूत्रस्थमहाभाष्यप्रामाण्यान्निपातपदस्य [ चादिपस्य ] स्वाश्रयसङ्केतवत्त्वसम्बन्धेन निपातत्व-चादित्वरूपानुपूर्वीविशिष्टे शक्तिः कल्प्यते । तथा च निपात [ चादि ] पदप्रयोज्यमुख्यविशेष्यतानिरूपिता स्वाश्रयसङ्केतवत्त्वसम्बन्धावच्छिन्ना साक्षादवच्छेदकता निपातत्वरूपानुपूर्वीनिष्ठेति विशिष्टरूपोपादानत्वमुपपन्नम् । नामपदे च स्वनिरूपितसङ्केतवत्त्वसम्बन्धेन नामपदविशिष्टे शक्तिरिति मुख्यविशेष्यता नामपदेनैव साक्षादवच्छिन्ना न त्वानुपूर्व्येति न तत्र विशिष्टरूपोपादानत्वमिति दिक् । पदकार्यत्वं च विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम्, अत एव "ओत औः" [ १. ४. ७४. ] "आ अम्–शसोऽता" [१. ४. ७५.] "भाजगोणनागस्थल०" [ २. ४. ३०. ] इत्यादीनां विभक्तिस्त्रीत्वनिमित्तकत्वेन गौणेऽपि प्रवृत्तेः । तेषामुक्तरूपपदकार्यत्वाभावात् तत्रैतन्न्यायाऽप्रवृत्तिः । स्थौल्यगुणयोगाद् गजवाचिनागशब्देऽन्यत्र प्रयुक्ते 'नागी स्थूला' इत्युदाहृतं वृत्तौ । एवं "त्रेस्त्रयः" [ १. ४. ३४. ] इत्यस्यापि पदकार्यत्वाभावाद् गौणेऽपि प्रवृत्तिरिति प्रियत्रयाणामिति दीक्षितादयः । पदकार्ये प्रवृत्तौ बीजमुक्तम्–'परिनिष्ठितस्य पदान्तरसम्बन्धे हीत्यादिना वृत्तौ' अनेन यस्मिन् समये गौणत्वप्रतीतिस्तस्मिन् समयेऽस्य न्यायस्य कार्योभाव इति सूचितम्, तेन च नामसंस्कारवेलायां गौर्वाहीक इत्यादौ न गौणत्वप्रतीतिरिति न्यायप्रवृत्त्यभावादौत्वं सिद्ध्यति । यदि च तत्रापि कदाचिन्नामसंस्कारवेलायामेव गौणत्वप्रतीतिस्तर्हि न्यायः प्रवर्तत एवेति 'गोर्वाहीक' इत्यत्र रूपमिति केचित् । ननु विभक्त्यनिमित्तकत्वांशस्यैतत्फलितत्वेऽपि स्त्रीत्वानिमित्तत्वांशे किं प्रमाणमिति चेत्? न–"भाज-गोण-नाग०" [ २. ४. ३०. ] इति सूत्रे नागग्रहणस्यैव तत्र मानत्वात्, अन्यथा गजवाचिनागशब्दात् मुख्येऽर्थे "जातेरयान्तनित्यस्त्रीशूद्रात्" [ २. ४. ५४. ] इत्यनेनैव ङीः सिद्ध इति तस्य वैयर्थ्यं स्पष्टमेव, उक्तांशज्ञापने तु गौणे चारितार्थ्यं भवतीति न वैयर्थ्यम् । न च तत्रापि जातेरित्येवसिद्धमारोपितगजत्वजातिप्रकारेणैव तत्र बोधादिति वाच्यम्, स्वसामानाधिकरण्य-स्वनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन जातिविशिष्टविषयताकबोधजनकत्वरूपजातिवाचकत्वाभावात् । गां पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थत्वस्य ग्रहेण, 'अत्वं त्वं सम्पद्यते, अमहान् महान् भूतः' त्वद्भवतीत्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयकत्वम्, अयमाशयः–यद्यपि 'गां पाठय' इत्यादौ कर्मत्वाय पाठनक्रियान्वयस्य विभक्त्युत्पत्तिवेलायामेवावश्यकत्वेन मुख्यगोपदार्थस्य पाठनान्वयासम्भवात् गोपदस्य गौणार्थकत्वस्य वक्तुमुचितत्वेन विभक्त्यनिमित्तकत्वांशस्य न फलमिति प्रतिभाति, तथाप्युच्चारणानन्तरमेवार्थप्रतीतिः, उच्चारणं तु पदस्यैव, 'अपदं न प्रयुञ्जीत' इति भाष्यात्, तथा च पदत्वसिद्ध्युत्तरमेव श्रोतुर्गौणार्थत्वग्रहः, यदा च श्रोतुर्गौणार्थत्वग्रहसम्भवस्तदैव गौण-मुख्यन्यायप्रवृत्तिरिति कल्पनात्, प्रयोक्तुः पूर्वं गौणार्थत्वग्रहेऽपि न न्यायप्रवृत्तिः । ननु प्रयोक्तुरेव प्रयोजननिमित्तज्ञानं भवितुं युक्तमिति तस्यैव मुख्यार्थ-तात्पर्ये शास्त्रप्रवृत्तिर्गौणार्थतात्पर्ये च शास्त्राप्रवृत्तिरित्येव कल्पना ज्यायसीति विभक्तिनिमित्तकार्ये न प्रवृत्तिरिति न फलितम्, गां पाठयेत्यादौ विभक्त्युत्पत्तिवेलायामेव गौणार्थतात्पर्यस्यावश्यकत्वादिति चेत्? तर्हि 'अत्वं त्वं सम्पद्यते, अमहान् महान् सम्पद्यते' इत्यादौ [ युष्मच्छब्दस्य ] त्वाद्यादेश[महच्छब्दस्य] दीर्घादीनां महाभाष्यकृता प्रयुक्तत्वेनास्य पदकार्यविषयकत्वं स्वीकार्यमिति । 'अत्वं त्वं सम्पद्यते' इत्यत्र च्विप्रत्ययो वैकल्पिकत्वान्न भवति, एवम्–अमहान् महान् भूत इत्यत्रापीति बोध्यम्, च्विप्रत्ययाभावेऽप्यारोपितसम्बोध्यत्वादिप्रकारेणैव बोधाद् गौणत्व-

मस्त्येव । ननु वाक्यसंस्कारपक्षाश्रयणे 'अत्वं त्वं सम्पद्यते' इत्यादौ न्यायाप्रवृत्त्यर्थं पदकार्यविषयत्वं न्यायस्येति कल्प्यते, तन्न युक्तं–पदसंस्कारपक्षाश्रयणेन तत्र दोषाभावात्, तथाहि–त्वाद्यादेशकरणेन पदं संस्कृत्याभूततद्भावविवक्षायां जातसंस्कारस्य बाधायोगेनैतेषु दोषाभावः, एकतरपक्षेण लक्ष्ये सिद्धे पक्षान्तराश्रयणेन दोषदानस्यादुष्टत्वादिति चेत्? अत्रोच्यते "शुक्लामित्युक्ते कर्मनिर्दिष्टं कर्तृ-क्रिये चानिर्दिष्टे इत्याद्युक्त्वा, इहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टम्, गामेव कर्म, देवदत्त एव कर्ता, अभ्याजेव क्रियेत्यर्थकेन "अर्थवत्०" [पा० सू० १. २. ४५.] सूत्रस्थभाष्येण 'कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोगः' इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानस्य लाभेन, पाठनक्रियान्वयकाले प्रयोक्तुरपि पदस्यैव गौणार्थत्वप्रत्ययाद् गां पाठयेत्यादौ व्यभिचाराभावेन पदकार्यविषयत्वस्य निर्बाधत्वात् । अयमाशयः– 'शुक्लाम्' इत्युक्ते कर्म निर्दिष्टमित्यादिप्रदर्शितभाष्येण सामान्यतः क्रियाकर्मत्वविवक्षया द्वितीयादेः साधुता भवतीत्यर्थस्य लाभेन गौणस्थलेऽपि मुख्यार्थ एव क्रियाकर्मत्वविवक्षया पदं संसाध्य पश्चाद् गौणार्थविवक्षा प्रयोक्तुरपि भवतीत्ययमर्थः स्फुटं प्रतीयते । तेन फलितमेवेदं–'पदकार्येऽयं न्यायः प्रवर्तते, न प्रातिपदिक[नाम]कार्ये इति । एवमेतन्न्यायमूलकः—

"अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥"

इति प्राचीनश्लोकोऽपि पदकार्यविषयक एव । ध्वनितं चास्य न्यायस्य पदकार्यविषयकत्वम् सर्व-विश्वादीन् पठित्वा 'इत्यसंज्ञायां सर्वादिः' इति गणनिर्देशेऽसंज्ञायामिति वदता वृत्तिकृता, तथा हि–संज्ञाभूतानां सर्वादीनां मुख्यसर्वादित्वाभावेनैतन्न्यायेनैव संज्ञाभूतानां वारणसंभवे 'असंज्ञायाम्' इति कथनं व्यर्थमेव स्यात्, अस्य पदकार्यविषयकत्वे च नामकार्येषु स्मैस्मातादिषु न्यायस्याप्रवृत्त्या संज्ञाभूतानामपि तत्र सर्वादित्वेन ग्रहणे प्रसक्ते भवत्यसंज्ञायामित्यस्य सार्थक्यम् । ननु 'गौर्वाहीकः, गां पाठय' इत्यादौ गौण-मुख्यन्यायेन वृद्ध्यात्वयोरप्राप्तिमाशङ्क्य 'अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्ध्यात्वे' इति "ओत्" [पा० सू० १. १. १५.] इति सूत्रे भाष्ये समाधानकरणेन नामकार्यत्वेन तत्र न्यायप्रवृत्तिवारणं तद्भाष्यविरुद्धमिति चेत्? न–'लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायः, तद्रहितशब्दाश्रये च वृद्ध्यात्वे' इत्येतत्तात्पर्यकत्वात् तस्य भाष्यस्य । अयमाशयः– लौकिकार्थवत्त्वस्य पदे एव सत्त्वेन 'अर्थाश्रय' इत्यस्य पदाश्रय इत्येव तात्पर्यम्, 'शब्दाश्रय' इत्यस्य च नामाश्रय इत्यत्र तात्पर्यमिति । *प्रधानानुयायिनो व्यवहाराः* इति न्यायस्योदाहरणप्रसङ्गे 'मुनीन्' इत्युदाहरणमुक्तं कैश्चित्, तत्र 'व्यवहाराः' इत्यस्य यदि कार्याणीत्यर्थस्तदा तु न तस्यैतन्न्यायात् पार्थक्यमिति यद्यपि प्रतीयते, तथापि न मुनीनित्यादिप्रयोगा एतदुदाहरणानि, उक्तरीत्यास्य न्यायस्य पदकार्यविषयकत्वस्य व्यवस्थापितत्वात्, नहि मुनीनित्यत्र पदकार्ये न्यायोपयोगः, अपि तु नामसंस्कारवेलायामेवेति तत्रास्य प्रवृत्तेरसम्भवात् । तथा च व्यवहारा इत्यस्य व्यपदेशा इत्यर्थ इति स्वीकार्यम्, यथा–ब्राह्मणग्रामोऽयमिति वर्णान्तरेष्वपि ग्राममध्ये वसत्सु ब्राह्मणानामेव तत्र प्राधान्येन ब्राह्मणग्रामत्वेन व्यपदेशो भवति । तथा च पृथगेवायं न्याय इति नास्य न्यायस्य गौण-मुख्यन्यायेऽन्तर्भावः, मुनीनित्यत्र "शसोऽता शश्च नः पुंसि" [१. ४. ४९.] इति दीर्घो विधेयः, स कस्यासन्नः स्यादिति विचारणा, तत्र समानस्येति षष्ठ्यन्तं स्थान्यनुवर्तते, 'अता' इति सहार्थतृतीयान्तनिर्दिष्टोऽकारः कथं कार्यभाक् स्यात्, स्थानार्थबोधकषष्ठ्यभावात्; स च यदि स्थानिनि समान एवात्मानमन्तर्भावयेत् तदैव स्यादिति तत्रान्तर्भूतस्यास्य तद्ग्रहणेनैव ग्रहणमित्युचितमेव समानमात्रस्य स्थानित्वमिति तदासन्न ईकार एव 'दीर्घः' स्यादेकवचननिर्देशाच्चेति नात्र न्यायस्यावश्यकताऽनियमाप्राप्तेरिति नेदमुदाहरणमुक्तन्यायस्येति बोध्यम् । एवं *प्रधानानुयाय्यप्रधानम्* इति न्यायः प्रस्तुतस्तत्रैव । तल्लक्ष्यं च–नीलोत्पलमित्यादावुत्पलस्यापि विशेषणत्वविवक्षायाम् "विशेषणं विशेष्येणैकार्थं कर्मधारयश्च" [३. १. ९६.] इति समासे उत्पलशब्दस्य पूर्वप्रयोगाभावः' इत्युक्तम् । अयमर्थः पाणिनीये तन्त्रे महाभाष्यकृता इत्थं निर्णीतः–"विशेषणं विशेष्येण बहुलम्" [पा० सू० २. १. ५७.] इति सूत्रे, तथाहि–"विशेषण-विशेष्ययोरुभयविशेषणत्वादुभयविशेष्यत्वादुपसर्जनाप्रसिद्धिः" [आक्षेपवार्तिकम्], विशेषण-विशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनत्वस्याप्रसिद्धिः । कृष्णतिला इति कृष्णशब्दोऽयं तिलशब्देनाभिसम्बध्यमानो विशेषणवचनः सम्पद्यते, तथा तिलशब्दः कृष्णशब्देनाभिसम्बध्यमानो विशेषणवचनः सम्पद्यते, तदुभयं विशेषणं भवत्युभयं च विशेष्यम् । विशेषण-विशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेषत्वादुपसर्जनत्वस्याप्रसिद्धिः [भाष्यम्], अयमाशयः—विशेषणाभिमत-विशेष्याभिमतयोरुभयोरपि विशेषणत्व-विशेष्यत्वरूपरूपद्वयस्य सत्त्वात् समासे सति तयोरुभयोरप्यनियतः पूर्वनिपातः प्राप्नोति । उपसर्जनाप्रसिद्धिरित्यस्योपसर्जननियमाप्रसिद्धिरित्यर्थः । तत्र मते समासशास्त्रे प्रथमान्तत्वेनोक्तस्य उपसर्जनसंज्ञा भवति, "प्रथमानिर्दिष्टं समास उपसर्जनम्" [पा० सू० १. २. ४३.] इति सूत्रेण, "उपसर्जनं पूर्वम्" [पा० सू० २. २. ३०.] इति सूत्रेण च तस्य पूर्वप्रयोगो विधीयते; यथा स्वमते "प्रथमोक्तं प्राक्" [३. १.

१४८.] इति सूत्रेण, समासविधायकं सूत्रं च "विशेषणं विशेष्येणैकार्थे कर्मधारयश्च" [३.१.९६.] तत्र च प्रथमोक्तं विशेषणमेव, तच्चोभयमपि पर्यायेण विशेषणं भवतीत्युभयोः पर्यायेण पूर्वप्रयोगः प्राप्नोतीति कृष्ण-नीलयोः समासे कृष्णस्यैव, उत्पल-नीलयोः समासे नीलस्यैव पूर्वप्रयोग इति नियमो न सिद्ध्यतीति प्रश्नाशयः। तत्रोभयोर्विशेषणत्वं विशेष्यत्वं चेत्थमुपपादितम्—तिलशब्दोच्चारणे श्वेत-रक्त-कृष्णादिवर्णाः सर्वे तिला उपस्थिता भवन्ति, कृष्णशब्दसम्बन्धाच्च कृष्णवर्णेष्वेव तिलेषु स नियम्यते एवं च कृष्णशब्दस्य व्यावर्तकत्वेन विशेषणत्वं तिलशब्दस्य व्यावर्त्यत्वेन विशेषत्वम्; एवमेव कृष्णशब्दे उच्चारिते भ्रमर-कोकिल-काकादि द्रव्यमात्रं प्रतीयते, तस्य च तिलशब्देन सम्बन्धे सति स भ्रमरादिभ्यो व्यावृत्त्य तिलेष्वेव स नियम्यते इति तिलशब्दस्य व्यावर्त्तकत्वेन विशेषणत्वं कृष्णशब्दस्य व्यावर्त्त्यत्वेन विशेष्यत्वमिति भवत्युभयोर्विशेषणत्वं विशेष्यत्वं चेति। अत्राह—"नवाऽन्यतरस्य प्रधानभावात् तद्विशेष्यत्वाच्चापरस्योपसर्जनसिद्धिः" [समाधानवार्तिकम्], "न वा एष दोषः, किं कारणम्? अन्यतरस्य प्रधानभावात्, अन्यतरदत्र प्रधानम्, तद्विशेषकत्वाच्चापरस्य, तद्विशेषकं चापरम्, अन्यतरस्य प्रधानभावात् तद्विशेषकत्वाच्चापरस्योपसर्जनसंज्ञा भविष्यति। यदाऽस्य तिलाः प्राधान्येन विवक्षिता भवन्ति कृष्णो विशेषकत्वेन तदा तिलाः प्रधानं कृष्णो विशेषणम्।" [भाष्यम्] इति अयमाशयः—द्रव्यस्यैवानयनादिक्रियासम्भवेन तस्यैव क्रियान्वयौचित्येन तस्यैव विशेष्यत्वम्, कृष्णस्तु गुणत्वाद् द्रव्यव्यवधानेन क्रियायामुपयोगात् तिलानां विशेषणं सम्पद्यते। भाष्यस्थौ यदा-तदाशब्दौ यतस्तत इत्यर्थकाविति ज्ञेयम्। भाष्यस्य 'यदा-तदा'शब्दौ "विवक्षिताः" इति शब्दं च यथोक्ताभिप्रायत्वेनाजानानः 'द्रव्यस्यैव विशेष्यत्वं गुणस्यैव विशेषणत्वम्' इति भाष्यकर्तुराशयमप्रतिपद्यमान इति यावत्, विवक्षामात्रनिबन्धनत्वं विशेषण-विशेष्यभावस्य प्रतिपादितमनेन भाष्येण, विवक्षायाश्च स्वातन्त्र्यादनियमात् प्रयोगानियम इति मन्यमानः पृच्छति—"कामं तर्ह्यनेनैव हेतुना यस्य कृष्णाः प्राधान्येन विवक्षिता भवन्ति तिला विशेषणत्वेन, तेन कर्तव्यं तिलकृष्णा इति" [आक्षेपभाष्यम्], पूर्वमेव प्रदर्शितोऽस्याशयः। सिद्धान्ती स्वाशयं स्फोरयन् प्रतिक्षिपति—"न कर्तव्यम्, न ह्ययं द्वन्द्वः तिलाश्च कृष्णाश्चेति, न खल्वपि षष्ठीसमासः—तिलानां कृष्णा इति, किं तर्हि? द्वाविमौ प्रधानशब्दावेकस्मिन्नर्थे युगपदवरुध्येते, न च द्वयोः प्रधानशब्दयोरेकस्मिन्नर्थे युगपदवरुध्यमानयोः किञ्चिदपि प्रयोजनमस्ति। तत्र प्रयोगादेतद् गन्तव्यम्—नूनमन्यतरदत्र प्रधानं तद्विशेषकं चापरमिति। तत्र त्वेतावान् सन्देहः—किं प्रधानं किं विशेषणमिति। स चापि क्व सन्देहः—यत्रोभौ गुणशब्दौ, तद्यथा—खञ्जकुब्ज', कुब्जखञ्ज इति। यत्र ह्यन्यद् द्रव्यमन्यतरो गुणः, तत्र यद् द्रव्यं तत् प्रधानम्, तद्यथा—'शुक्लमालभेत, कृष्णमालभेत, न पिष्टपिण्डीमालभ्य कृती भवति, अवश्यं तद्गुणं द्रव्यमाकाङ्क्षति।" इति भाष्यम्। अत्र कैयटः—"नह्ययमिति नहि गुण-द्रव्यवाचिनोर्द्वन्द्व उपपद्यते, गुणवचनस्य द्रव्यापेक्षत्वादसामर्थ्याद् द्रव्येण सह विवक्षाया असंभवात्, यदि तु द्वन्द्वः स्यात् स्यादेव तिलकृष्णा इति प्रयोग इति। न खल्वपीति—गुणेन सह षष्ठीसमासनिषेधादिति भावः। प्रधानशब्दाविति—प्रथमान्तावित्यर्थः, अनेन षष्ठीसमासविपरीतत्वं कथितम्। 'एकस्मिन्नर्थे' इत्यनेन तु द्वन्द्वविपरीतत्वं कथितम्। द्वन्द्वे हि सर्वपदार्थानां प्राधान्यान्नास्ति सर्वपदानामेकस्मिन्नर्थेऽवस्थानम्, एतच्चावयवार्थापेक्षयोक्तम्, समुदायार्थापेक्षायां तु समुदायलक्षण एकस्मिन्नर्थे सर्वेषां पदानां वृत्तिरस्त्येव। प्रधानशब्दयोरिति—परस्परविशेषणत्वेनानुपकारकयोः स्वतन्त्रयोरित्यर्थः। यत्रोभाविति—द्वयोरपि गुणत्वाद् द्रव्यव्यवधानेन क्रियासाधनत्वादिति भावः। यत्र ह्यन्यतरद् द्रव्यमिति—तत्र नास्ति सन्देह इति वाक्यशेषः। यद्द्रव्यमिति—साक्षात् क्रियासाधनत्वादिति भावः। ननु तिलशब्दो जातिवाची न द्रव्यवाची, तत्र जातिविशिष्टद्रव्यवाचित्वाद् यदि द्रव्यवाचीत्युच्यते तर्हि कृष्णशब्दोऽपि गुणविशिष्टद्रव्यवचनत्वाद् द्रव्यशब्द आपद्यते इति नानयोः कश्चिद् विशेषः, नैष दोषः—उत्पत्तिप्रभृत्याविनाशाज्जातिर्द्रव्यं न जहाति, नहि शब्देन द्रव्याद् व्यतिरेको जातेः प्रत्याय्यते, नहि भवति—शावलेयस्य गौरिति, किं तर्हि? गौः शावलेय इति। तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयत इति जातिशब्दो द्रव्यवचनत्वेनावस्थाप्यते, गुणाः पुनरुपायिनश्चापायिनश्च, 'पटस्य शुक्लः' इति व्यतिरिक्ता अपि द्रव्यात् स्वशब्देन गुणाः प्रत्याय्यन्त इति गुणात्मकत्वं द्रव्यस्य नास्तीति न गुणशब्दो द्रव्यवचनत्वेनावस्थानमर्हति।" इति। एताभ्यां भाष्य-कैयटग्रन्थाभ्यां जातिप्रवृत्तिनिमित्तकानां द्रव्यवाचिनां शब्दानां प्राधान्यम्, गुणक्रियादिप्रवृत्तिनिमित्तकानां चाप्रधानत्वमेवेति न विशेषणविशेष्यभावे कामचारः। तथा च तिलकृष्णा इत्यादिप्रयोगा असाधव एव। परिच्छेद्य-परिच्छेदकभावाच्चान्य एव विशेष्य-विशेषणभावः, स हि प्राधान्याप्राधान्यानुरोधी, तथा च कृष्णस्य परिच्छेद्यत्वेऽपि विशेषणत्वमेव न विशेष्यत्वमिति प्रधानानुयाय्यप्रधानमिति फलति। तथा च नायमर्थः *गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* इति न्यायेन लभ्य इति नात्र तदन्तर्भाव इति समुदिताशयः। इत्थं च निर्णीते द्रव्यवाचकशब्दस्य प्राधान्ये 'अमुकदीक्षितः, देवदत्त सोमयाजी' इत्यादयो लोके प्रचलिताः प्रयोगा असाधव एवेति विज्ञेयमिति। एवमेव परिभाषेन्दुशेखरे नागेशेन पठितः *प्रधाना-ऽप्रधानयोः प्रधाने कार्यसम्प्रत्ययः* इति न्यायोऽपि भिन्न एव *प्रधाना-

नुयायिनो व्यवहाराः* इत्येतन्न्यायसमानः, तस्य न्यायस्य फलत्वेन ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यत्रैकशेषाभाव उक्तः, अत्र हि "पुरुषः स्त्रिया" [ ३. १. १२६. ] इति सूत्रेणैकशेषः प्राप्नोति, पुँस्त्व-स्त्रीत्वमात्रकृत एव च भेद इत्येतन्न्यायप्रवृत्तेरावश्यकता, प्रवृत्ते चास्मिन् न्याये प्रधानस्त्रीत्वपुँस्त्वकृतविशेषस्य ग्रहणेऽपि वत्सविशेषणत्वादप्रधानब्राह्मणशब्दनिष्ठस्त्रीत्वपुँस्त्वकृतविशेषस्य सत्त्वात् तन्मात्रभेदाभावेन नैकशेषः । तथा चोक्तं– "पुमान् स्त्रिया" [ पा० सू० १. २. ६७. ] इति सूत्रमुपक्रम्य तदग्रिमसूत्रे महाभाष्ये–"इह कस्मान्न भवति ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेति" इति [ भाष्यम् ], सूत्रे प्रधानाप्रधानादिपदोपादानाभावेन पुँस्त्वस्त्रीत्वकृतविशेषस्य च भेदकत्वाभावेनेहैकशेषस्य प्राप्तिरिति प्रश्नाशयः । ततः "ब्राह्मणवत्सा-ब्राह्मणीवत्सयोर्लिङ्गस्याविभक्तिपरस्य विशेषवाचकत्वादनेकशेषः" [ इति समाधानवार्तिकम् ]. "ब्राह्मणवत्सा-ब्राह्मणीवत्सयोर्लिङ्गस्याविभक्तिपरस्य विशेषवाचकत्वादेकशेषो न भविष्यति, यत्र लिङ्गं विभक्तिपरमेव विशेषवाचकं तत्रैकशेषो भवति, नात्र लिङ्गं विभक्तिपरमेव विशेषवाचकम् ।" [ इति भाष्यम् ] अयमाशयः–"स्यादावसंख्येयः" [ ३. १. ११९. ] इत्यतः 'स्यादौ' इति पदमनुवर्तते, तच्च तत्र सर्वस्मिन् स्यादौ विभक्ताविस्यर्थपरतया व्याख्यातम्, तदेव चैकशेषनिमित्तम्, तेनैकशेषनिमित्ते विभक्तौ परतो यत्र स्त्री-पुंसमात्रकृतो विशेषस्तत्रैकशेषः, इह तु तस्यां चान्तर्वर्तिन्यां च विभक्तौ स्त्रीत्व-पुंस्त्वकृतो विशेष इति नैकशेष इति । इत्थं च "पुरुषः स्त्रिया" [ ३. १. १२६. ] इति सूत्रस्य यत्र प्रकृत्यतिरिक्तैकशेषनिमित्तस्यादिविभक्तिपरशब्दगम्य एव स्त्रीत्वपुंस्त्वरूपो विशेषस्तत्रैकशेषो विभक्तौ परतः समानानाम्, विभक्तौ समानरूपत्वं च लिङ्गबोधकातिरिक्तकृतमेव बोध्यम् । एवं चात्रायमनुमानप्रयोगः–ब्राह्मणवत्सा-ब्राह्मणीवत्सौ पक्षः, एकशेषाभावः साध्यम्, प्रकृत्यतिरिक्तैकशेषनिमित्तविभक्तिपरशब्दत्वसमानाधिकरणं यत् स्त्रीत्वबोधकत्वं तद्घटितत्वे सति तदितरस्त्रीत्वबोधकत्ववद्घटितत्वं हेतुः, व्यतिरेके ब्राह्मण-ब्राह्मण्यादिशब्दसङ्घो दृष्टान्तः, पक्षे हेतुघटकविशेष्यदलं त्वेकशेषनिमित्तत्वाभावादन्तर्वर्तिविभक्तिपरशब्दत्वसमानाधिकरणस्त्रीत्वबोधकत्ववद्घटितत्वरूपं बोध्यम् । अयं चानुमानाकारः प्रकृतसमाधानवार्तिकलभ्यः । अतोऽग्रे कथं पुनरिदं ज्ञायते शब्दो या स्त्री तल्लक्षणश्चेदेव विशेषः [ तन्मात्रकृतश्चेदेव भेदः ] इति, आहोस्विदर्थो या स्त्री तल्लक्षणश्चेदेव विशेषः" इत्यादिना विचार्य गुणदोषौ प्रदर्श्य "क्वचिच्छब्दस्त्रीकृतविशेषपरिग्रहः क्वचिदर्थस्त्रीकृतविशेषपरिग्रह इति लक्ष्यानुसाराद् व्यवस्थेति निश्चित्य "एवं च कृत्वा इहापि प्राप्नोति–ब्राह्मणवत्सा च ब्राह्मणीवत्सश्च" इति पुनरपि दोषमुद्भाव्य "एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् ? तदित्यनुवर्तते, तदित्यनेन प्रकृतौ स्त्री-पुंसौ प्रतिनिर्दिश्येते, कौ च प्रकृतौ ? प्रधाने, प्रधानं या शब्दस्त्रीप्रधानं या अर्थस्त्रीति" इति समाहितम् । अयमाशयः–स्त्री-पुंसयोः सहोक्तावेकशेषः, स च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीकृतो विशेषस्तत्रैकशेषः, इहाप्रधानस्त्रीकृतोऽपीति नैकशेषः । इत्थं च *प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः* इति न्यायोऽत्र भाष्यकृता सूचितः । एवं "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" [ पा० सू० १. २. ६९. ] इति सूत्रे चायं न्यायः [ प्रधानाप्रधानयोरित्यादि ] वार्तिकरूपेण भाष्यकृता पठितः, एतच्च सूत्रं "क्लीबमन्येनैकं च वा" [ ३. १. १२८. ] इत्येतत्सूत्रस्थानीयम्, तस्य च सूत्रस्य प्रत्याख्यानायायं न्यायो भाष्यकृता समाश्रितः, तथा हि–"अयं योगः शक्योऽवक्तुम्" इति, तत आक्षेपभाष्यम्–"कथं शुक्लश्च कम्बलः शुक्लं च वस्त्रम्–तदिदं शुक्लं, ते इमे शुक्ले । शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं–तदिदं शुक्लम्, तानीमानि शुक्लानि ।" इति । ततः समाधानवार्तिकम्–"प्रधाने कार्यसम्प्रत्ययाच्छेषः ।" इति । "प्रधाने कार्यसम्प्रत्ययाच्छेषो भविष्यति । किं च प्रधानम् ?, नपुंसकम्, कथं पुनर्ज्ञायते नपुंसकं प्रधानमिति, एवं हि दृश्यते लोके अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते–किं जातमिति, द्वयं चैव हि जायते–स्त्री वा पुमान् वा । तथा विदूरेऽव्यक्तरूपं दृष्ट्वा वक्तारो भवन्ति–महिषीरूपमिव ब्राह्मणीरूपमिवेति प्रधाने कार्यसम्प्रत्ययान्नपुंसकस्य शेषो भविष्यति ।" इति भाष्यम् । अत्र कैयटः—प्रधाने कार्यसम्प्रत्ययादिति–शब्देनार्थस्याभिधानमिह कार्यम्, तच्च नपुंसकानपुंसकसन्निधौ नपुंसकस्यैव भविष्यतीति नार्थः सूत्रेणेत्यर्थः, कथमिति–यथा लोके बहुषु गच्छत्सु राजा गच्छतीति प्रधानं राजा व्यपदिश्यते, राज्ञश्च प्राधान्यं तदधीनप्रवृत्तिनिमित्तत्वादन्येषाम्, इह तु नपुंसकस्य किं कृतं प्राधान्यमिति प्रश्नः । एवं हि लोके दृश्यत इति–व्यापित्वान्नपुंसकस्य प्राधान्यमाह, स्थितिर्नपुंसकं, सा च सर्वत्र विद्यत इति स्थितिरूपत्वेनैव-स्त्रीपुंसयोरपि विवक्षायां सिद्धो नपुंसकशब्दप्रयोगः । अनिर्ज्ञातेऽर्थे इति–सामान्यरूपेण ज्ञाते, स्त्रीत्वादिना विशेषरूपेणाज्ञाते इत्यर्थः । गुणसन्देह इति–गुणाः स्त्रीत्वादयः । द्वयं चैवेति–यद्यपि नपुंसकस्यापि जन्म, तथापि यत् प्रजननासमर्थं तन्नपुंसकमिति नेह नपुंसकलक्षणम्, किं तर्हि ? शब्दैकगोचरत्वमेव लिङ्गलक्षणम्, तथा च नपुंसको भवतीति प्रयोग उपपद्यते । महिषीरूपमिवेति–रूपशब्दः संस्थानवचनः, यत्र दूराद् दृश्यमाने वस्तुनि निश्चयो नास्ति, केवलं सम्भावनारूपः सन्देहः, तत्रैकस्यापि शब्दस्य प्रयोगो भवति–स्थाणुरयं स्यादिति, एवमिहापि महिषीवैतत् संस्थानमित्यस्मिन्नर्थे महिषीरूपमिवेति प्रयुक्तम्, रूपशब्दोऽत्र नपुंसकलिङ्गो दृष्टान्त-

त्वेनोपात्तः, यत्र तु विशेषत्वेन निदर्शनं-शुक्लाः शाट्यः, शुक्लाः कम्बला इति, तत्र नास्ति नपुंसकप्रयोगः" इति । एवं च प्रदर्शितोदाहरणादिभिः क्लीबलिङ्गस्य प्राधान्येन, अप्रधानाभ्यां स्त्री-पुंल्लिङ्गाभ्यां तस्य सह विवक्षायामेकस्य शेषे विधीयमाने न्यायत एव क्लीबस्यैवैकशेषो भविष्यतीति तदेकशेषविधानार्थं पृथग्वचनं नारम्भणीयमिति समुदितार्थः । कैयटेन चारभ्यमाणे सूत्रे 'अरण्यारण्यान्यौ' इत्यत्र महत्त्वस्योपाधेराधिक्यान्नैकशेष इति फलमुक्तम् । इत्थं *प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः* इति न्यायः सर्वैरादृतः, एवमेव *अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलम्* इति न्यायो "हेतुमति च" [पा० सू० ३. १. २६.] इति सूत्रे भाष्य-कैयटयोः सूचित इति प्रधानप्राबल्यबोधका बहवो न्याया लक्ष्यानुसारेणेह शास्त्रे स्वीकृताः, तेष्वत्र *गौण-मुख्ययोर्मुख्ये कार्यसम्प्रत्ययः* इत्यस्य विशेषादराच्छास्त्रकृदादिभिर्व्याख्यातत्वमुपलभ्यते नान्येषाम्, तेषां लोकेऽतिप्रसिद्धत्वेनाव्याख्यानेऽपि कार्यार्थमुपादातुं शक्यत्वादित्यलमतिगवेषणेनेति ॥ २२ ॥

## *कृत्रिमाऽकृत्रिमयोः कृत्रिमे* ॥ २३ ॥

सि०—क्रियया निर्वृत्तं कृत्रिमम्, तद्भिन्नमकृत्रिमं, स्वाभाविकम् । क्रिया च सङ्केतकरणादिरूपा, तथाहि—शब्दो यत्रार्थे नियम्यते सोऽर्थः कृत्रिमः, यश्च शब्दो यमर्थं स्वभावत एवाह सोऽर्थस्तस्याकृत्रिमः; तथा च कृत्रिमाऽकृत्रिमयोरुभयोः कार्ये प्राप्ते कृत्रिम एव कार्यसम्प्रत्ययः कार्यः । अयमाशयः—'सर्वे सर्वार्थवाचकाः' इति सिद्धान्तेन सर्वेषां शब्दानां सर्वार्थवाचकत्वस्य स्वाभाविकत्वे यः शब्दो यत्र विशिष्टेऽर्थे व्यवहाराय नियम्यते स तदा तत्रैव प्रतीतिं जनयति नान्यत्र । यत् तु—'कृत्रिमस्य परिभाषानिष्पन्नत्वेनौपाधिकत्वाद् गौणत्वमकृत्रिमस्य स्वाभाविकत्वेन मुख्यत्वमिति पूर्वन्यायादकृत्रिमस्यैव कार्ये प्राप्तेऽनेन कृत्रिमस्य कार्यं प्राप्यते' इति, तन्न युक्तम्—कृत्रिमस्य हि न गुणप्रयुक्तो व्यवहारः, नहि कश्चिद् गुणमाश्रित्य स्वाङ्गशब्दोऽर्थविशेषे परिभाषितः अपि तु स्वाभिमतप्रक्रियानिर्वाहायैवेति न तत्र गौणत्वम्, अप्रसिद्धत्वं गौणलाक्षणिकत्वं च गौणत्वमिति पूर्वन्यायव्याख्यावसरे प्रतिपादितत्वात् । न चाप्रसिद्धत्वेनैव कृत्रिमस्य गौणत्वमिति वाच्यम्, लोकप्रसिद्धितः शास्त्रप्रसिद्धेर्बलीयस्त्वेनाप्रसिद्धत्वाभावात्, अन्यथा तस्य बलवत्त्वमपि न स्यात् । न च तथैव [शास्त्रप्रसिद्ध्यैव] बलवत्त्वे सिद्धे किं न्यायेनेति वाच्यम्, न्यायस्यापूर्वार्थानवबोधकत्वात्, अस्य न्यायस्य स्वाभाविकत्वं चाग्रे निरूपितम् । उदाहरणं चास्य 'दीर्घमुखा शाला' इत्यादि, तथाहि—"असहनञ्-विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः" [२. ४. ३८.] इत्यत्र स्वाङ्गेन

"अविकारोऽद्रवं मूर्तं, प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥"

इति परिभाषितमेव स्वाङ्गं गृह्यत इति प्रकृतस्थले मुखस्य शालाया लोकप्रसिद्धस्वाङ्गत्वे सत्यपि प्राणिस्थत्वाभावेन परिभाषितस्वाङ्गत्वाभावान्न ङीब्भवति । अत्र ज्ञापकं च यद्यपि नापेक्ष्यतेऽस्य स्वभावसिद्धत्वस्योपपादयिष्यमाणत्वात् तथाप्यभ्युच्चयाय तदपि प्रदर्श्यते, तथा हि—"आङो यम-हनः स्वेऽङ्गे" [१. ३. ८६.] इति सूत्रेऽसमस्तयोः स्वशब्दाऽङ्गशब्दयोर्ग्रहणमेव तत्र प्रमाणं विज्ञेयम्, तद्धि 'आयच्छति पादौ मैत्रस्य' इत्यादावात्मनेपदवारणार्थं कृतम्, अत्र 'स्वाङ्गे' इत्युक्तेऽपि वारणं सम्भवत्येव, स्वस्याङ्गस्येह कर्मत्वाभावात्, किन्तु स्वाङ्गपदेन पारिभाषिकमेव स्वाङ्गं गृह्येतेति तादृशस्वाङ्गत्वस्येह मैत्रपादयोरपि सत्त्वमेवेति स्वाङ्ग-पदेन तस्यापि ग्रहणप्रसक्तावात्मनेपदं दुर्वारं स्यादिति तद्वारणायात्र व्यस्ततयाऽभिधानम्, तथा च प्रकृतधातुकर्तुरेवाङ्गं स्वाङ्गपदेनेह गृह्यत इति तादृशस्वाङ्गकर्मकत्वाभावाद्भवति वारणमिति, तद्वारणार्थं कृतं व्यस्तग्रहणमेतन्न्यायसत्तां विना न सार्थकमित्येतन्न्यायसत्तां ज्ञापयतीति । एतच्च क्वचिन्नापि प्रवर्तत इत्यग्रिमन्यायव्याख्यावसरे स्फुटीभविष्यति । पाणिनीये तन्त्रे महाभाष्येऽयं न्यायो लोकव्यवहारेणैव साधितः, तथाहि—'बहु-गण-वतु-डति-संख्या" [पा० १. १. २३.] इति सूत्रे महाभाष्ये लोकप्रसिद्धैकादीनामपि संख्याशब्देन ग्रहणार्थं संख्या च संख्यासंज्ञा भवतीति बोधनार्थमत्र सूत्रे संख्याग्रहणमप्युद्देश्यकोटौ कर्तव्यमित्याक्षिप्तम्, तत्साधनाय चोक्तम्—'इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद् यथा लोके' इति [वार्त्तिकम्] "अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष सम्प्रत्ययो न स्यात्, किं कारणम्? अकृत्रिमत्वात्, बह्वादीनां कृत्रिमा संज्ञा, *कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति* यथा लोके, तद्यथा—'गोपालकमानय, कटजकमानय' इति यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जातः" इति, अयमाशयः—यथा लोके कृत्रिमायां गोपालकादिसंज्ञायां ज्ञातायां तदुच्चारणे स एव ज्ञायते न तु यो गाः पालयतीति स्वाभाविको गोपालः तथैव शास्त्रेऽपि यस्य या संज्ञा क्रियते तेन शब्देन स एव ज्ञायते, न तु यौगिकाद्यर्थः । तथा च बह्वादीनां संख्यासंज्ञायां कृतायां त एव संख्यात्वेन गृह्येरन् न तु स्वाभाविका एकद्व्यादिसंख्या इति तासामपि संख्यासंज्ञार्थमिह संख्याग्रहणं कर्त्तव्यमिति, अग्रे चोभयगतेरिहाश्रयणात् समाहितमित्यन्यत् । तथा चायं न्यायो लोकसिद्ध इति भाष्यतात्पर्यम् । विशेषश्चाग्रे प्रतिपादयिष्यते ॥ २३ ॥

## *कृत्रिमा-ऽकृत्रिमयोः कृत्रिमे* ॥ २३ ॥

त०—न्यायानां परस्परनिरपेक्षत्वेऽप्याकाङ्क्षितपदानुवृत्तिरेकत्र पाठसाध्येति पूर्वं प्रतिपादितमेव *न स्वरानन्तर्ये* इति न्यायव्याख्यानावसरे, तथा चात्राऽपि पूर्वन्यायात् 'कार्यसम्प्रत्ययः'' इत्यंशोऽनुवर्त्तनीयः । पूर्वन्यायापवादत्वमस्य प्राचीनैरुक्तं नातीव युक्तमित्युपपादितमेव वृत्तौ । यत्तु–'अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुद्ध्यते, यथा-राम-कृष्णादिसाम्प्रतिकनामस्थले प्रसिद्धरामादिगतपित्राज्ञापालकत्वादिगुणारोपाद् गौणो व्यवहारः इत्यादि गौण-मुख्यन्यायव्याख्यावसरे प्रतिपादितं तल्लौकिकसंज्ञादिस्थलाभिप्रायं न शास्त्रीयपारिभाषिकशब्दाभिप्रायमिति विज्ञेयम् । प्रकृतन्यायबीजं तु प्रकरणस्याभिधानियामकत्वम्, उक्तं हि हरिणा—

''संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'' इति ।

तथा च संयोगादयः शब्दार्थस्य सामान्यतोऽनेकत्र प्राप्तस्य विशेषे नियामका इत्यनेन लभ्यते, प्रकरणं च संयोगादिष्वेव पठितम्, अस्ति च शास्त्रे तत्तत्संज्ञाकरणरूपं प्रकरणम्, तच्च सर्वत्र अर्थाभिधानतात्पर्यमर्थविशेषे नियमयति, अत्र शास्त्रेऽनेन शब्देनायमेवार्थो बोध्य इति । अभिधापदस्य तात्पर्यपरत्वमेव 'प्रकरणस्याभिधानियामकत्वम्' इत्यत्र, न तु शक्तिपरत्वम्, तस्याः शक्यतावच्छेदकमात्रनियम्यत्वात् । अयं भावः–यस्मिन् शब्देऽनेका शक्तिस्तत्र श्रोतुः कीदृक्शक्तिज्ञानाधीनार्थबोधनेच्छया वक्त्रोच्चारितमिति निश्चयाभावात्, शाब्दबोधे समानविषयकतात्पर्यनिश्चयस्य कारणत्वात्, शाब्दबोधानुपपत्तौ प्राप्तायां प्रकरणादिना तात्पर्यनिर्णयोत्तरं बोधो भवति । एवं च शास्त्रे संख्यादिपदे एकत्वादिनिरूपिता लौकिकी, बह्वादिनिरूपिता शास्त्रीया च शक्तिरस्तीति कीदृशार्थबोधनेच्छयोच्चरितमिदमिति जिज्ञासायां स्वयमेव शास्त्रकारेण बह्वादिनिरूपितशक्तिं बोधयित्वा कथमन्यार्थबोधनेच्छयोच्चारितं स्यादिति ज्ञानरूपप्रकरणबलेन बहुगणादावेव तात्पर्यनिर्णयेन तद्विषयकबोधस्यैव शास्त्रे सम्भवेन लौकिकार्थबोधाप्रसक्तिरित्येतत्फलितमेव *कृत्रिमा-ऽकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः* इति न्याय इति । यत्तु कैयटेन ''संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनायमेवार्थो बोध्य इति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजम्'' इत्युक्तं, तन्न- तेषामगृहीतशक्तिग्राहकत्वेन नियामकत्वायोगात्, 'सर्वे सर्वार्थवाचकाः' इत्यभ्युपगमोऽपि योगिदृष्ट्या न त्वस्मदृष्ट्या विशिष्य सर्वशब्दार्थज्ञानासम्भवात्, सामान्यज्ञानं तु न बोधोपयोगि'' इति नागेशः परिभाषेन्दुशेखरे प्राह । तस्यायमाशयः–सर्वशब्देभ्यः केषाञ्चित् शक्तिभ्रमात् केषाञ्चिल्लक्षणया सर्वार्थविषयकबोधोत्पत्त्या सर्वार्थबोधकत्वं सर्वेषां शब्दानां सिद्धम् । वैयाकरणमते च बोधकतैव शक्तिरिति सर्वार्थनिरूपितशक्तिमत्त्वं सर्वेषां शब्दानां सिद्धमेव । ननु 'शक्तिभ्रमाद् बोधः, लक्षणया बोधः' इति–व्यवहारानुपपत्तिः, तव मते सर्वत्र शक्तेः सत्त्वादिति चेत्? न–परमताभिप्रायेण तद्व्यवहारस्य सत्त्वात्, अत एव सर्वे सर्वार्थवाचका इत्यभियुक्तानां व्यवहारः । एवं च शास्त्रसांकेतिकसंज्ञाशब्देषु तत्तदर्थनिरूपितशक्तेरपि सत्त्वेन तत्तत्पदेन तत्तदर्थप्रतीतेर्लौकिकशक्त्यैव सिद्धौ संज्ञासूत्राणां वैयर्थ्यात् 'अस्मच्छास्त्रेऽनेन पदेन अत एव ग्राह्याः' इति नियमार्थत्वेन कृत्रिमाकृत्रिमयोरिति न्यायः सिद्ध इति कैयटाशयो न युक्तः, उक्तरीत्या तत्तत्संज्ञापदे तत्तदर्थनिरूपितशक्तेः सत्त्वेऽपि लोके तत्पदेन तेषामर्थानां बोधाभावेन व्यवहारादिना शक्तिग्रहासम्भवेन, अज्ञातशक्त्या बोधाभावेन च शक्तिज्ञानजननाय संज्ञासूत्राणां विधायकत्वे सम्भवति नियामकत्वायोग इति नानेन प्रकारेणोक्तन्यायसिद्धिरिति । नन्वेवं सर्वे सर्वार्थवाचका इत्यस्य का गतिरित्यत आह—सर्वे सर्वार्थवाचका इति तु योगिदृष्टेति योगिनां विशिष्य तत्तद्धर्माणां ज्ञानसम्भवादिति भावः । ननु घटपदमर्थवाचकं पदत्वादित्यनुमानेन सामान्यलक्षणासहकृतेनार्थत्वावच्छिन्नसकलार्थनिरूपितशक्तिज्ञानमस्मदादीनामपि सुलभमिति चेत्?, न–अनुभवोपस्थितिशाब्दबोधानां समानप्रकारेणैव हेतुहेतुमद्भावेनार्थत्वप्रकारकशक्तिग्रहणे घटत्वादिविशेषधर्मप्रकारकोपस्थिति-शाब्दबोधयोरजननात् । तथा च प्रकरणादेव कृत्रिमस्य ग्रहणम्, तदेव चैतन्न्यायमूलमित्यग्रेऽपि ''बहु-गण-वतु-डति-संख्या'' [ पा० सू० १. १. २६. ] इति सूत्रे महाभाष्ये स्पष्टीकृतम् । तथा हि–''अर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति । अर्थो वाऽस्यैवंसंज्ञकेन भवति प्रकृतं वा तत्र भवति–इदमेवंसंज्ञकेन कर्तव्यम्'' इति । तथा च लोकत एव सिद्धोऽयमर्थ इति भावः । अत एवायं न्यायो नागेशादिभिर्न परिभाषारूपेण पठितः परिभाषेन्दुशेखरे, केवलमुभयगतिरिह भवतीति न्यायस्योत्थाने बीजरूपेण तदवतरणे प्रदर्शित इति ॥ २३ ॥

## *क्वचिदुभयगतिः* ॥ २४ ॥

सि०—पूर्वन्याये कृत्रिमाऽकृत्रिमयोरुभयोः प्रकृतत्वादिहोभयपदेन तावेव गृह्येते, तथा च पूर्वन्यायेन सर्वत्र कृत्रिम एव कार्यसम्प्रत्ययस्य बोधितत्वेन स्वाङ्गादिपारिभाषिकपदैः क्वापि स्वमङ्गं स्वाङ्गमिति योगार्थस्य ग्रहणं न स्यादिति प्राप्तेऽयं न्यायस्तदपवादत्वेन पठ्यते । क्वचिदित्यस्येष्टस्थले इति भावः । उभयस्य कृत्रिमाऽकृत्रिमद्वयस्यापि, गतिः–विज्ञानं कार्यित्वेन ग्रहणमिति

यावत्, भवति–जायते । तेन "नाडी-तन्त्रीभ्यां स्वाङ्गे" [७. ३. १८०.] इत्यनेन 'बहुनाडिः कायः, बहुतन्त्रीर्ग्रीवा' इत्यनयोः परिभाषितस्वाङ्गवाचकयोर्नाडी-तन्त्रीशब्दयोर्यथा ग्रहणं भवति, तथा च तत्र कच् निषिध्यते तथैव 'बहुनाडिः स्तम्बो, बहुतन्त्रीर्वीणा' इत्यत्रापि प्राणिस्थत्वाभावेऽपि यौगिकार्थमादाय स्वाङ्गत्वेन ग्रहणात् कच् निषिध्यते । ननु स्तम्बस्य अद्भिर्विना ग्लायमानत्वेनैकेन्द्रियप्राणित्वस्य स्वीकृतत्वेन तत्र कथं प्राणिस्थत्वाभाव उक्त इति चेत्? अत्रोच्यते–"प्राण्यौषधिवृक्षेभ्योऽवयवे च" [६. १. ३१.] इति सूत्रे प्राणिग्रहणेनैव वृक्षौषधिग्रहणे सिद्धेऽपि पृथक् तद्ग्रहणेनेदं ज्ञाप्यते यत्–प्राणिग्रहणे व्याकरणे त्रसा एव गृह्यन्ते, न तु स्थावरा इति, तथा च तत्र नाडीशब्दस्याप्राणिस्थत्वं सुस्थिरम् । अयं च न्यायस्तत्र तत्र शास्त्र-लोकयोरुभयोर्ग्रहणदर्शनेनैव सिद्धः, तथाहि–*कृत्रिमाऽकृत्रिमयोः०* इति न्याये सत्यपि यच्छास्त्रे क्वचिदुभयस्य ग्रहणं दृश्यते, लोकेऽपि क्वचित् कृत्रिमस्य क्वचिदकृत्रिमस्य क्वचिच्चोभयोर्ग्रहणं दृश्यते, तेनास्य न्यायस्य सिद्धिरिति । पूर्वन्यायस्यानेन बाधितत्वात् प्रकरणादिवशात् सर्वथा कार्यं निर्वहति । अस्यापि च क्वाचित्कत्वं क्वचिदिति पदेनैवोच्यते, तथा च क्वचित् केवलस्याकृत्रिमस्यापि ग्रहणं भवति, यथा–"शिरोऽधसः पदे समासैक्ये" [२. ३. ४.] इत्यत्र कृत्रिमं विभक्त्यन्तं पदं विहाय स्वरूपस्यैव ग्रहणे–शिरस्पदम्, अधस्पदमित्यादि सिद्ध्यति ॥ २४ ॥

## *क्वचिदुभयगतिः* ॥ २४ ॥

त०—प्रकरणस्याभिधानियामकत्वाश्रयणेन हि पूर्वन्यायः सिद्ध इत्यावेदितं तस्य न्यायस्य व्याख्यावसरे । तथा च यत्र प्रकरणेन कृत्रिमस्याकृत्रिमस्य वा ग्रहणमिति न निश्चेतुं शक्यते, अस्ति चोभयोपस्थितिः, तत्रोभयोरेव ग्रहणम्, यत्र चाप्रकरणज्ञं प्रति तदुच्चारणं तत्र केवलं कृत्रिमस्यैव ग्रहणमिति प्रतिपादितं "बहु-गण-वतु-डति-संख्या" [पा० सू० १. १. २३.] इति सूत्रे महाभाष्ये लौकिकदृष्टान्तेन । तथा हि–[ पूर्वन्यायानुसारं दोषं प्रदर्श्य ] नैष दोषः, अर्थात् प्रकरणाद् वा लोके कृत्रिमाऽकृत्रिमयोः कृत्रिमे सम्प्रत्ययो भवति । अर्थो वाऽस्यैवंसंज्ञकेन भवति, प्रकृतं वा तत्र भवति–इदमेवंसंज्ञकेन कर्तव्यमिति । आतश्चार्थात् प्रकरणाद् वा । अज्ञ हि भवान् ग्राम्यं पांशुरपादमप्रकरणज्ञमागतं ब्रवीतु–गोपालकमानय कटजकमानयेति, उभयगतिस्तस्य भवति । साधीयो वा यष्टिहस्तं गमयिष्यति ।" इति । अयमाशयः—लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणम्, किन्तु अर्थः प्रकरणं वा, अर्थः–सामर्थ्यम्, यथा–गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्य [ गवां पालकस्य ] अध्यापनासम्भवात् संज्ञिनो ग्रहणम् । प्रकरणं च प्रस्तावः–इदमेवंसंज्ञकेन कर्तव्यमिति, तत्र प्रयोजनं प्रकृतं–प्रस्तुतं बुद्धिस्थं भवति संज्ञाया बुद्धिस्थत्वात् । यश्चाचिरागतः स्वयमूहासमर्थः स चेत् केनाऽपि गोपालकमानयेत्यादि पूर्वोक्तवाक्यमुक्तः स कदाचिदुभयमपि तदाशयं जानानः सन्देग्धि–कोऽनेन समानेतुमभिलषितः, किं गवां पालयिता, किं वा कश्चिदेतन्नामप्रसिद्ध इति । अथवा कदाचित् स योगार्थमनुरुध्य यष्टिहस्तं गवां पालकमेवानीय कृती भवतीति । तथा च न तत्र कृत्रिमस्यैव गतिरिति नियम इत्युभयगतिः सिद्धा । अत्रत्यं भाष्यं व्याचक्षाणानां मध्ये कश्चिद् भेद उपलभ्यते, तथा हि—गोपालकमानयेति श्रुतवतः पांशुरपादस्योभयगतिः, किं संज्ञेयमुत यौगिकोऽर्थो विवक्षित इति भवति, अथवा यष्टिहस्तविषयं तात्पर्यं पांशुरपादः सम्यग् ग्रहीष्यतीति कैयटाद्यभिप्रायः । अत्र केचित्–"उभयगतिस्तस्य भवतीति प्रकथनानन्तरं यष्टिहस्तविषयं तात्पर्यं ग्रहीष्यतीत्युक्तिर्न सम्यक्, किन्तूभयप्रकारकमेव ज्ञानं भाष्यकार आह–साधीय इति, साधीयः–अध्यापयिष्यतीति वाक्यशेषज्ञानात् तात्पर्यं साधीयो ग्रहीष्यति, अथवा यष्टिहस्तविषयं तात्पर्यं ग्रहीष्यति" इत्यर्थमाहुः । तथा च यथा प्रकरणात् कृत्रिमस्यैव ज्ञानं तथा क्वचिदर्थात् प्रकरणाच्चोभयस्यापि ज्ञानं लोकसिद्धमेवेति भाष्याशयः । अग्रेऽपि पूर्वपक्षिणा–'यत्रार्थः प्रकरणं च भवति तत्र केवलं कृत्रिमस्यैव ग्रहणं स्याद् यथा लोके' इत्याक्षिप्ते 'भाष्यकार आह–"न यथा लोके तथा व्याकरणे, उभयगतिः पुनरिह भवति" इति । शास्त्रीयसंज्ञाशब्दो हि तन्नाम्ना लोकेऽप्रसिद्धस्यापि पदार्थस्य ग्रहणाय प्रयुज्यते, न तु लोकप्रसिद्धतदर्थनिरासाय, संज्ञाकरणस्याधिकार्थप्रतिपत्त्यर्थत्वादित्युभयोर्ग्रहणं भवतीति भाष्याशयमाह कैयटः । नागेशोपाध्यायस्तु–"व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थं इत्यन्ये" इत्याह । एवं च क्वोभयगतिः? क्वाकृत्रिमस्यैव? क्व कृत्रिमस्यैवेत्यर्थे लक्ष्यानुसारि व्याख्यानमेव शरणम्, न केवलन्यायानुसारमेव व्यवस्था संभविनी, उभयोर्न्याययोरस्थिरत्वात् ॥ २४ ॥

## *सिद्धे सत्यारम्भो नियमार्थः* ॥ २५ ॥

सि०—प्रमाणान्तरेण प्राप्तमेवार्थं यदि केनचिद् वचनेन विदधाति शास्त्रकृत् तर्हि तस्य वैयर्थ्यशङ्कायां न्यायोऽयं पठितः । तथा च प्रमाणान्तरप्राप्तार्थविधायकं वचनं नियमार्थं भवतीति न्यायार्थः । यथा दण्डीत्यादौ दीर्घार्थम् "इन-हन्-पूषा०" [१. ४. ८७.] इति वचनम्, तथाहि–सामान्यतो घुटि दीर्घविधायकेन "नि दीर्घः" [१. ४. ८५.] इत्यनेनैव शि-स्योरपि दीर्घो भविष्यत्येवेति विशिष्य शि-स्योः परतोऽनेन

["इन्-हन्०" इत्यादिना सूत्रेण] दीर्घविधानं व्यर्थं सत् इनादीनां शि-स्योरेव दीर्घो नान्यघुटीति नियमयति, तेन दण्डिनावित्यादौ दीर्घो न भवति । अयं च न्यायः पुनर्वचनेनैव विज्ञाप्यते, एतदभावे हि "इन्०" इत्येवमादिसूत्राणां विधित्वमेव स्वीकर्तव्यं स्यात् । तथा च सति तेषां वैयर्थ्यं स्पष्टमेव, एतत्साध्यरूपाणां "नि दीर्घः" [१.४.८५.] इत्यनेनैव सिद्धेरुक्तत्वात् । क्वचिच्च सिद्धे सत्यप्यारभ्यमाणो विधिर्नियमार्थो न भवति न्यायस्यास्थिरत्वात्, यथा "लिहादिभ्यः" [५.१.५०] इति सूत्रेण लिहादिभ्य आकृतिगणेभ्योऽच् विधीयते, तत्रैव गणे कर्मोपपदेभ्योऽर्हादिभ्योऽपि भवतीति पाठेनैव 'पूजार्हा' इत्यादिसिद्धौ "अर्होऽच्" [५.१.९१.] इत्यादिसूत्राणि वृथैवारभ्यन्त इति नियमार्थानि स्युः, न च नियमः सम्भाव्यते, तथाहि—कीदृशो नियमः स्यात्? कर्मोपपदेभ्यो लिहादिभ्योऽजेव नाणिनि चेत्? अस्यार्थस्य लिहादिपाठेनैव सिद्धेः, कर्मोपपदेभ्योऽच् चेल्लिहादिभ्य एवेति चेत्? तदपि न—अन्येभ्योऽचः प्रमाणान्तरेणाप्राप्तेरिति न प्रत्ययनियमो नापि प्रकृतिनियमः संभाव्यत इति लिहादिप्रपञ्चार्थत्वमेवैषां सूत्राणामित्यास्थेयमिति ॥ २५ ॥

## *सिद्धे सत्यारम्भो नियमार्थः* ॥ २५ ॥

त०—यद्यपि "विधिरत्यन्तमप्राप्तौ, नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥"

इति मीमांसकरीत्या पाक्षिक्यां प्राप्तौ सत्यामेव नियमः, न तु सर्वथा प्राप्तौ [तत्र चान्यत्र च प्राप्तौ]। "नि दीर्घः" [१.४.८५.] इत्यनेन च शि-स्योरन्यत्र च प्राप्तिरेव, न तु पाक्षिकी प्राप्तिः, पाक्षिकी प्राप्तिर्हि विकल्पस्थाने भवति । यथा—'व्रीहीनवहन्ति' इति, अत्र हि यागीयचरुनिष्पादनार्थं व्रीहीणामवघातो विधीयते, अवघातश्च निस्तुषीकरणार्थ एव, शक्यते च निस्तुषीकरणमुपायान्तरेण नखविदलनादिनाऽपि । तथा च चरुनिष्पादनार्थं निस्तुषीकरणायावघातस्य न नियता प्राप्तिरपि तु पाक्षिकी एतद्विध्यभावे हि कदाचिदुपायान्तरेणापि तत्करणस्य सम्भवात्, इत्यनेन विधिना नियम्यते—अवघातेनैव व्रीहीन् निस्तुषीकुर्यादिति । तथा च नात्र मीमांसकपरिभाषितो नियमः, किन्तु परिसंख्याविधेरेवात्र शास्त्रे नियमपदेन व्यवहारः, तदुक्तं नागेशेन पस्पशाह्निके महाभाष्यव्याख्यायाम्—"नन्वस्य परिसंख्यात्वात् कथं नियमत्वेन व्यवहारः?, अस्ति च नियम-परिसंख्ययोर्भेदः, पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः, अन्यनिवृत्तिफला च परिसंख्येति चेत्?, न-नियमेऽप्यप्राप्तांशपरिपूरणफलबोधनद्वाराऽऽर्थान्यनिवृत्तेः सत्त्वेनाभेदमाश्रित्योक्तेः" इति । तथा च "इन्-हन्०" [१.४.८७.] इत्यादिशास्त्राणां शिस्योरन्यत्र दीर्घाभाव एव तात्पर्यम् । "अर्होऽच्" [५.१.९१.] इत्यादिषट्सूत्र्या बृहद्वृत्तौ लिहादिप्रपञ्चार्थत्वस्योक्त्या चास्य न्यायस्यास्थिरत्वमुक्तं वृत्तौ, तत्र यद्यपि न लिहादिषु पाठः पूर्वकृतोऽस्ति येन सिद्धे सत्यारम्भत्वमेषां स्यात्, लिहादिषु तथा पठित्वैतेषां तथात्वापादने च न कश्चिद् विशेषः, सूत्रैरप्राप्तांशपरिपूरणायैव गणेषु विशिष्टो विधिर्गणसूत्रैरारभ्यते, सति च सूत्रैः प्राप्तौ तदारम्भस्यैव प्रत्याख्येयत्वम्, तथा च यथास्थितलिहादिपाठे नास्त्येषां नियमत्वसंभावनेति प्रपञ्चार्थत्वमुक्तमिति नैतावतास्य न्यायस्यास्थिरत्वं कल्पयितुं शक्यं, तथापि प्राचां रीत्या तथोल्लेख आदृतो वृत्ताविति विज्ञेयम् ॥ २५ ॥

## *धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्* ॥ २६ ॥

सि०—धातोः स्वरूपस्य ग्रहणं यस्मिन् स विधिः स्वरूपग्रहणस्तस्मिन् । यद्यपि धातोरित्यस्य स्वरूपेण सम्बन्धः, स्वरूपस्य च ग्रहणेनेति स्वरूपशब्दस्य धातुना साकाङ्क्षत्वात् साकाङ्क्षमसमर्थवदिति न्यायेनासामर्थ्यादिह समासो न प्राप्नोति, तथापि

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥
समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥"

इति हरिकथितरीत्या सापेक्षत्वेऽपि समासः कृत इत्यवधेयम् । प्रकृतहरिकारिकार्थस्तु—सर्वः, नित्यं सापेक्षः, सम्बन्धिशब्दः समस्यते, हि—यतः, सा व्यपेक्षा वाक्यवद् वृत्तावपि न हीयते । अयमाशयः—सर्वे सम्बन्धिशब्दाः—ये कमपि सम्बन्धं प्रवृत्तिनिमित्तीकृत्य स्वार्थमभिदधति ते शब्दाः सम्बन्धिशब्दा उच्यन्ते, ते च नियतमेव स्वसम्बन्धिपदार्थान्तरमाकाङ्क्षन्त्येव, यथाऽत्र स्वरूपशब्दः स्वसम्बन्धिनं धातुमाकाङ्क्षति,—तथा च ते नित्यं साकाङ्क्षा इति तेषां वाक्य इव वृत्तावपि सामर्थ्यं तिष्ठत्येवेति समासो भवति । तथा च *सापेक्षमसमर्थवत्* इत्यत्र नित्यसापेक्षातिरिक्तत्वं निवेशनीयमिति ॥

तत्रोदाहरणरूपेण द्वितीयकारिकामाह—समुदायेनेति—'येषां गुरुकुलादीनां समुदायेन सम्बन्धः, ते, अवयवान्— गुर्वादीन्, संस्पृश्य—तैः पूर्वसम्बन्ध्य, तद्वता—अवयविना समुदायेन गुरुकुलादिना, युज्यन्ते—सम्बन्ध्यते' इत्यन्वयः । अयमाशयः— देवदत्तस्य गुरुकुलमित्यादौ देवदत्तस्य गुरुणा गुरोश्च कुलेन सम्बन्धः, गुरुशब्दो हि निरूपकत्वेन देवदत्तादिपदार्थं नित्यमा-

काङ्क्षत्येवेति नित्यसापेक्षः, देवदत्तस्य च कुलेन सह न साक्षात्सम्बन्धः, अपि तु गुरुद्वारैव, तथा च देवदत्तशब्दो गुरुणा सम्बन्धमनुभूय पश्चात् कुलेन सह सम्बन्धमनुभवतीति तत्र समासो भवत्येव। तथैवेह स्वरूपशब्दो धातुमाकाङ्क्षन्नपि धातुना सम्बन्धमनुभवन्नेव ग्रहणेन सह सम्बन्धमनुभवति, नित्यसापेक्षत्वाच्चासामर्थ्याभावेन समासो भवत्येवेति। तथा च धातुत्वव्याप्येनानुपूर्वीरूपेण यत्र विधौ धातुरुपादीयते तत्र, तत्प्रत्यये-तस्माद्धातोर्यः प्रत्ययो विहितः, धातुत्वेन धातुं प्रकृतित्वेनाश्रित्य विहित इति भावः, तस्मिन् प्रत्यये परे कार्यस्य विज्ञानं-विधेयतावगमः, भवतीति शेषः। धातुत्वव्याप्यानुपूर्व्यवच्छिन्नोद्देश्यताकं कार्यं, धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये परे भवतीति यावत्। सर्वं वाक्यं सावधारणम्* इति न्यायात् तत्प्रत्यय एव भवति नान्यस्मिन् प्रत्यये-नामत्वमुद्दिश्य विहिते इत्यर्थो लभ्यते। *क्विबन्ता धातुत्वं नोज्झन्ति नामत्वं च प्राप्नुवन्ति* इति न्यायेन क्विबन्तानां नामत्वदशायां ततो विहिते नामत्वोद्देश्यके प्रत्यये परतोऽपि धातुत्वव्याप्येन रूपेण धातुमुद्दिश्य विधीयमानं कार्यम् "ऊद् दुषो णौ" [ ४. २. ४०. ] इत्यादिविहितं-स्यादिति तद्वारणार्थमयं न्यायः समाश्रीयते। तथा च दुष्यन्तं प्रयुङ्क्ते दूषयतीत्यत्रेव दोषणं दुट्, तां करोतीत्यर्थे "णिज् बहुलम्०" [ ३. ४. ४२. ] इति णिजि, दूषयतीत्यत्र "ऊद् दुषो णौ" [ ४. २ ४० ] इत्यूत्वं न भवति, यतोऽत्र दुषो धातुत्वव्याप्येन रूपेणाश्रयणमिति धातुत्वोद्देश्यक एव णावूत्वं स्यान्न तु "णिज् बहुलम्०" [ ३. ४. ४२. ] इति विहितनामत्वोद्देश्यके णौ, एतन्न्यायप्रवृत्तेः। एवं-"अः सृजि-दृशोऽकिति" [ ४. ४. १११. ] इति विधीयमानोऽकिद्धुडादिप्रत्ययनिमित्तकोऽकारो यथा 'स्रष्टा द्रष्टा' इत्यादौ भवति तथा रज्जुसृड्भ्यामित्यादौ न भवति। सृजि-दृशोर्हि धातुत्वव्याप्येन रूपेणैवाकारविधाने उद्देश्यतेति धातुत्वव्याप्यानुपूर्व्यवच्छिन्नोद्देश्यताकं तत्कार्यमिति धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये परत एव तत् स्यात्, न तु नामत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयेभ्यामि परतः, भ्यामोऽकिद्धुडादिप्रत्ययत्वसत्त्वेऽपि धातोर्विहितत्वाभावादिति। न चात्र क्विपः स्थानिवद्भावेनाकारस्य न प्राप्तिरिति नास्ति न्यायोपयोग इति वाच्यम्, धुटो वर्णत्वेन तस्य चात्र विशेषणतयाऽऽश्रयणेन वर्णाश्रयविधित्वात् स्थानिवद्भावाप्रवृत्तेः, विशेषणतयाऽपि वर्णाश्रये विधौ स्थानिवद्भावो नेत्यस्य पक्षस्य तत्सूत्रव्याख्यायां सिद्धान्तितत्वात्। एवं चात्र स्थानिवद्भावस्यानित्यत्वाद्याश्रयणेनाचार्यमतपोषणमित्याशयकः प्राचां विचारो नावश्यक इत्यवधेयम्। अत्र ज्ञापकं तु तत्र तत्र धातोः स्वरूपग्रहणे निमित्तत्वेनाश्रितेषु प्रत्ययेषु विशेषानुक्तिरेव, तथाहि-आचार्यैः "ऊद् दुषो णौ" [ ४. २. ४०. ] "अः सृजि-दृशः" [ ४. ४. १११. ] इत्यादिसूत्रेषु ण्यादीनां सामान्येन कथनं दूषयतीत्यादौ तदप्रवर्तनं च यत् कृतं दृश्यते तेन विज्ञायते यत्-धातोः स्वरूपग्रहणे तत्प्रत्यय एव कार्यं विज्ञायत इति, तथा चाचार्याचारादेवास्य न्यायस्य सिद्धिरिति ॥ २६ ॥

## *धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्*॥२६॥

त०-यत् कार्यं प्रत्ययनिमित्तकं तत्रैव व्यवस्थापकोऽयं न्यायः। पदान्तत्वादिनिमित्तके च कार्ये नास्य प्रवृत्तिः, यथा-"नशो वा" [ २. १. ७०. ] इति विधीयमानो गकारादेशः पदान्तत्वनिमित्तक इति तत्र धातोः स्वरूपग्रहणेऽपि न तत्प्रत्यय एव कार्यम्, अपि त्वन्यत्रापि, अत एव प्रनग्भ्यामित्यादावपि भवति; एवं "नहा-ऽऽहोर्ध-तौ" [ २. १. ८५. ] इत्यादिविषयेऽपि विज्ञेयम्। 'स्वरूपग्रहणे' इत्युक्ततया च "धातोरिवर्णोवर्णस्येयुवौ स्वरे प्रत्यये" [ २. १. ५०. ] इत्यादौ नास्य न्यायस्य प्रवृत्तिः, तत्र धातुत्वेनैव धातोर्ग्रहणं, न तु धातुत्वव्याप्यानुपूर्व्यवच्छिन्नत्वेन, तथा च 'नियौ नियः' इत्यादौ नाम्नो विहिते प्रत्यये परतोऽपि भवति। पाणिनीये तन्त्रे च "मृजेर्वृद्धिः" [ पा० सू० ७. २. ११४. ] इति सूत्रे महाभाष्ये *धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्* इति न्यायस्वरूपमुक्त्वा यत्र केनापि धर्मेण धातुर्गृह्यते तत्रास्याप्रवृत्तिः स्यादिति स्वरूपग्रहणमपनीय *धातोः कार्यमुच्यमानं तत्प्रत्यये भवति* इत्येव न्यायस्वरूपं स्वीकृतम्। स्वमते च प्रक्रियाभेदेनैवं [ प्रकृतरूपेण ] न्यायस्वरूपेऽपि क्षत्यभावः। किञ्च तथा सति "धातोरिवर्णोवर्णस्येयुवौ स्वरे प्रत्यये" [ २. १. ५०. ] इत्यस्यापि धातुप्रत्यये एव प्रवृत्त्यापत्तौ 'नियः' इत्यादावियादेशानापत्तिः, पाणिनीये च ज्ञापकेन तद्वारणं क्रियते इत्यन्यत्। ननु वृत्तौ यत्-रज्जुसृड्भ्यामित्यादौ क्विपः स्थानिवद्भावस्य वर्णाश्रयत्वेन वारणमुक्तं तन्न युज्यते, "स्थानीवावर्णविधौ" [ ७. ४. १०९. ] इति सूत्रे 'अवर्णविधौ' इत्यस्य स्थानिवर्णाश्रये विधौ नेत्यर्थस्याश्रयणात्, इह च न स्थानिनः क्विपः कश्चिद् वर्ण आश्रीयते ऽकारविधाविति न तस्य निषेधस्य प्राप्तिरिति स्थानिवद्भावो दुर्वार इति चेत् ?, न-*वर्णाश्रये नास्ति प्रत्ययलक्षणम्* इति न्यायान्तरानुरोधेन तदाश्रयणात्। यदि च नायं न्यायः स्वप्रक्रियासम्मत इत्याश्रीयते तर्हि आचार्योक्तिप्रामाण्यादेव तत्र न स्थानिवत्त्वमित्याश्रयणीयम्। यदि च "स्थानीवा०" [ ७. ४. १०९. ] इति सूत्रेण भावातिदेश एव क्रियते-'स्थानिनि सति यद् भवति तद् भवति' इत्यर्थाश्रयणात्, स्पष्टं चैतत् "स्थानीवावर्णविधौ" [ ७. ४. १०९. ] इति सूत्रस्थानीयस्य "स्थानिवदादेशोऽनल्-

विधौ" [पा० सू० १. १. ५६.] इति सूत्रस्य महाभाष्य इत्युच्यते; तदाऽत्र न स्थानिवद्भावप्राप्तिः, स्थानिनि क्विपि सतीह कस्यापि कार्यस्य प्राप्त्यभावात्। अकारागमबाधनार्थं हि स्थानिवद्भावकरणे स्पष्टमभावातिदेशस्याश्रयणप्रसङ्गात्, स्थानिनि क्विपि सत्यभवतोऽकारस्य तल्लोपरूपे आदेशेऽप्यभावादिदेशस्येष्टत्वावधारणात्। परसूत्रेण च भावाभावयोरुभयोरप्यतिदेशः, स्वरस्य परे प्राग्विधौ [७. ४. ११०.] इति हि परसूत्रम्, तत्स्थानीये "अचः परस्मिन् पूर्वविधौ" [पा० सू० १. १. ५७.] इति पाणिनीये सूत्रे भावाभावयोरुभयोरप्यनेनातिदेश इति भाष्यकृता सिद्धान्तितत्वात्। तथा च तत्र सूत्रेऽनुवृत्तं स्थानीवेति पदं स्थानिनि सति यद् भवति तदादेशेऽपि भवति, स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थकम्। तथा हि-तत्रत्यं भाष्यम्-"काममतिदिश्यतां सच्चासच्चापि नेह भारोऽस्ति।" अत एव गणयतीत्यादावकारलोपे कृतेऽपि तस्यानेन स्थानिवत्त्वेनोपान्त्यवृद्धिर्न भवति, स्थानिन्यकारे सत्यभवन्त्या उपान्त्यवृद्धेरादेशेऽप्यभावातिदेशात्। न चैकेनैव स्थानीवेति पदेन कथमेकत्र केवलं भावातिदेशः, अन्यत्र भावाभावयोरुभयोरप्यतिदेश इति भिन्नार्थबोधनमिति शङ्क्यम्, शब्दाधिकाराश्रयणात्, द्विविधो ह्यधिकारः-शब्दाधिकारोऽर्थाधिकारश्च, तत्रार्थाधिकारे एव पूर्वत्र योऽर्थो बोधितः स एव परत्रापि बोधनीय इति नियमः, शब्दाधिकारे च तस्य शब्दस्येह लक्ष्यानुरोधाद् भिन्नार्थकत्वमप्याश्रयितुं शक्यत इति लक्ष्यानुरोधिव्याख्यानादुभयार्थत्वसंभवात्। तथा च पूर्वसूत्रेण "स्थानीवा" [७.४.१०९.] इत्यनेनेह रज्जुसृड्भ्यामित्यादावकाराभावाय स्थानिवद्भावो न स्यादित्यकारादेशवारणायेह न्यायोपयोगः स्फुट एवेति युक्तमेवात्राचार्यैस्तदुपयोगकरणमिति युक्तं पश्यामः। अत्रेदं विचार्यते-क्विपः स्वमते लुक्लुपादेरविधानम्, किन्तु "अप्रयोगीत्" [१. १. ३७.] इति सूत्रेण तस्य प्रयोगेऽदृश्यमानस्येत्संज्ञामात्रं विधीयते, इति तस्य न स्थानित्वं न वा तददर्शनस्यादेशत्वमिति कथं तस्य स्थानिवद्भावशङ्का, कुतश्च तत्समाध्यर्थं चिन्तनम्। अत्र चार्थे "न वृद्धिश्चाविति०" [४. ३. ११.] इति सूत्रस्थो न्यासग्रन्थोऽप्यनुकूलः, तथाहि-तत्रोक्तम् "नहि क्विपो लुक् लुप् वा किन्तु अप्रयोगीत्" [१. १. ३७.] इति। तथैव वृत्तिकृता 'अदर्शनं लुक् लोपः लुप् वा' इति पूर्वतन्त्रसिद्धान्तमनुसरता "ईर्व्यञ्जनेऽयपि" [४. ३. ९७.] इत्यस्य वृत्तौ 'शं सुखं तत्र तिष्ठतीति क्विपि शंस्थाः पुमान्' इत्यत्र क्विप्-लुकि तस्य स्थानिवत्त्वेन प्राप्तमपि "ईर्व्यञ्जनेऽयपि" [४. ३. ९७.] इतीत्वं न स्यात्, साक्षाद् व्यञ्जनस्याभावात् तत्सूत्रे च व्यञ्जनग्रहणस्य साक्षाद्व्यञ्जनप्रतिपत्तये कृतत्वादित्युक्तम्, एवं च न्यासानुसारं क्विपः स्थानिवत्त्वशङ्कैव न, वृत्तिकृदनुसारं च सेति किमत्र ज्याय इति। अत्रेदमुच्यते-तत्रत्यन्यासग्रन्थात्रत्यवृत्तिग्रन्थयोरविरोधात् काऽपि शङ्कैव नास्ति, तथाहि-"न वृद्धिश्चाविति०" [४. ३. ११.] इति सूत्रवृत्तौ 'लोपोऽदर्शनमात्रमिह गृह्यते' इत्युक्तम्, तत्र अदर्शनमात्रमिति प्रतीकमुपादाय न्यासकृता 'न तु लुक्-लुपावित्यर्थः, तद्ग्रहणे हि दध्येत्यादौ (? देय इत्यादौ) गुणप्रतिषेधो न स्यात्, अत्र हि क्विपो लुक् लुप् वा न, किन्तु "अप्रयोगीत्" [१. १. ३७.] इति; 'ईर्व्यञ्जनेऽयपि" [४. ३. ९७.] इति सूत्रवृत्तौ "तेन क्विब्लुपि स्थानिवद्भावेनापि न भवति" इति उक्तम्। तत्र पूर्ववृत्तिग्रन्थस्यायमाशयः-'लोप'शब्देन यदि कश्चिदेवं मन्येत यत्-साक्षाल्लोपार्थकेन पदेन विहितकार्यस्यैवेह लोपपदेन ग्रहणमिति तन्न मन्तव्यम्, अपि तु यथा-कथञ्चिददर्शनविधायकपदेन विहितं कार्यं ग्राह्यमिति, स एव चाशयो न्यासकृतोपन्यस्तः, नैतावता लुप्-लुकोरित्संज्ञायाश्च भेदो न्यासकारस्याभिमत इत्यायाति, सर्वेषामप्यदर्शनार्थत्वाविशेषात्, अदर्शनस्य चादेशत्वमादिश्यत इत्यादेश इति योगार्थानुकूलमेव, तस्य च स्थानिवत्त्वमपि लुवादिभिः सर्वैः शब्दैर्विहितस्य स्यादेव, नहि स्थानिवत्त्वमित्संज्ञकस्य न भवतीति न्यासकारेणाभिहितमिति नात्र तयोर्विरोध इति ॥ २६ ॥

## ※नञुक्तं तत्सदृशे※ ॥ २७ ॥

सि०—नञा-नञ्सहितपदेनोक्तं कार्यं तत्सदृशे-नञ्सहितपदार्थसदृशे विज्ञेयमिति सम्बन्धः, पूर्वतः 'कार्यविज्ञानम्' इत्यस्यानुवर्तमानतया तदनुकूलमेवार्थस्य कर्तव्यतौचित्यात्। नञ्सहितपदार्थश्च व्याकरणे तत्पदस्वरूपमेव, शब्दानां स्वरूपबोधकत्वस्येह ※स्वं रूपं शब्दस्याशब्दसंज्ञा※ इति न्यायेन सिद्धान्तितत्वात्। यत्र च शब्दशास्त्रीयसंज्ञा नञ्युक्ता तत्र संज्ञिसदृशबोधकत्वं तत्पदस्येति तत्रैव कार्यं विज्ञेयम्, यथा "प्रथमादधुटि शश्छः" [१. ३. ४.] इत्यत्र 'अधुटि' इति नञ्युक्तं पदं धुड्भिन्ने तत्सदृशे वर्णे एव परतः कार्यविधायकम्, न तु धुड्भिन्ने तत्सदृशे पदे। "नञा उक्तं पदं नञुक्तपदसदृशे विशेष्यभूते पदे विश्राम्यति" इति व्याख्यानमार्थिकम्, न तु न्यायार्थः, सर्वत्र पदस्यैव पदार्थत्वाभावात् नञुक्तपदस्य च पदार्थोपस्थापकत्वात्। एवं "यत् पदं नञा योगान्निषिध्यते तत्सदृशमेवापरं पदं ग्राह्यम्" इत्यपि बाहुल्याभिप्रायकम्, व्याकरणे बाहुल्येन पदस्यैव पदार्थत्वात्। वस्तुतस्तु-नञा योगान्न तत्पदं निषिध्यतेऽपि तु तत्पदार्थो निषिध्यते, नञ्पदार्थस्य निषेधस्य तत्प्रतिषेध्ये पदार्थे एवान्वयौचित्यात्, 'पदार्थः पदार्थेनान्वेति' इति न्यायात्, उदाहरणं यथा-"व्यक्ये" [१. २. २५.] इत्यत्र नञ्युक्तेन क्यप्रत्ययेन क्यसदृशस्य यकारादेरपि प्रत्ययस्यैव ग्रहणात्, 'गां नावं चेच्छति' इत्यर्थे

क्यनि-'गाव्यति नाव्यति' इत्यादाववावौ भवतः, न तु गोयानं नौयानमित्यादौ यकारादौ पदे परे। अत्र ज्ञापकं स्वीदृशस्थले विशेष्यानुक्तिरेव। 'क्यभिन्ने यादौ' इति द्वयमपि विशेषणमेवेति विशेष्यमेतन्न्यायेनैव लभ्यमिति 'प्रत्यये' इत्यर्थो लभ्यते। नञा सहोक्तं नञुक्तमिति समासाश्रयणादेवायं न्यायः पर्युदासविषय एव प्रवर्तते, तत्रैव नञा सह प्रतिपेध्यस्य पदस्य सम्बन्धात्, अन्यत्र तु क्रियया सम्बन्ध इति क्रियायां कस्यापि कार्यान्तरस्याभावान्न्यायप्रवृत्तिरनर्थिका स्यात्। श्रूयते चैतदनुसारिणी प्राचामुक्तिः-"पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्।" इति। सादृश्यं च क केन रूपेण ग्राह्यमित्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम्। अतश्च "अनतो लुप्" [१. ४. ५९.] इति सूत्रेऽकारसादृश्ये गृह्यमाणे वर्णत्वेनैव सादृश्यं गृह्यते न तु स्वरत्वेन, ततश्च पय इत्यादावपि लुब् भवति। इत्थञ्च तत्र प्रसज्यप्रतिषेधमाश्रित्य तत्र न्यायाप्रवृत्तिकल्पना प्राचामनावश्यकी किञ्च प्रसज्यप्रतिषेधस्थले नञः क्रिययाऽन्वयस्य सत्त्वेन तत्रासामर्थ्यात् समासो न भवतीत्यसामर्थ्येऽपि सौत्रत्वात् समास इति क्लिष्टकल्पना समाश्रयणीया स्यात्। तदुक्तमन्यत्रापि—

"पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रसज्यप्रतिषेधस्तु क्रियया सह यत्र नञ्॥" इति,

यत्रोत्तरपदेन सह नञ्समासो भवति तत्र पर्युदासः, यत्र च क्रियया तस्य सम्बन्धस्तत्र प्रसज्यप्रतिषेधोऽर्थ इति कारिकार्थः। तथा च "अनतो लुप्" [१. ४. ५९.] इत्यत्र पर्युदास एव, वर्णत्वेनैव च सादृश्यमिति च स्वीकार्यम्। प्रसज्यप्रतिषेधवाचिनञः प्रयोगे च नायं न्यायः, तत्र सादृश्यानुपपत्तेरिति॥ २७॥

## *नञुक्तं तत्सदृशे* ॥ २७॥

त०—अयं च न्यायो न विशिष्टवचनरूपोऽपि तु स्वाभाविक एव, प्रतीयत एव नञ्समभिव्याहारे तत्सदृशान्यार्थप्रतीतिः, यथा—अब्राह्मणमानयेत्युक्तः कश्चिद् ब्राह्मणसदृशं क्षत्रियादिं पुरुषमेवानयति, न तु लोष्टकाष्ठादिकमानीय कृती भवति। तथा हि—"भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" [पा० सू० ३. १. १२.] इति सूत्रे महाभाष्ये 'अच्वेः' इत्युच्यमाने 'क दिवा भृशा भवन्ति' इत्यर्थेऽपि भृशशब्दात् क्यङ्प्रत्ययः कस्मान्न भवतीत्याशङ्क्य—"नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः [वार्तिकम्]; नञ्युक्तमिवयुक्तं वा यत् किञ्चिदिह दृश्यते, ततोऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते, अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश एवानीयते, नासौ लोष्टमानीय कृती भवति, एवमिहाप्यच्वेरिति प्रतिषेधादन्यस्मिन्नच्व्यन्ते च्विसदृशे कार्यं विज्ञायते। किञ्चान्यदतोऽच्व्यन्तं च्विसदृशम्, अभूततद्भावः।" इत्युक्तम्। तथा च स्वाभाविकार्थगतेरेव नञ्युक्तस्य सदृशार्थपरत्वमित्याशयितेन भाष्येण। भाष्यस्थे न्याये च 'अन्यसदृशाधिकरणे' इति दृश्यते, तस्य चार्थः—अन्यस्मिन् सदृशार्थे चेति, अधिकरणशब्दस्यार्थपरत्वात्, अर्थे हि शब्दः प्रयुज्यत इति सोऽधिकरणं शब्दस्य, तथा चान्यस्मिंस्तत्सदृशेऽर्थे इति कथनेनाभेदेऽपि सादृश्यं भवतीति सूचितम्। तथा च सादृश्यस्य न भेदघटितत्वमिति वैयाकरणसमयः सूचितो भवति, युक्तं चैतत्; तथाहि—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रदर्शिताः॥"

इत्यभियुक्तोक्तदिशा सादृश्य-भेदयोरुभयोर्नञर्थत्वकथनं सङ्गच्छते, अन्यथा सादृश्य एव भेदस्याऽपि समाविष्टत्वेन तस्य पार्थक्येन कथनं कथं सङ्गतं स्यात्। प्रकृतस्वसम्मतन्याये च 'तत्सदृशे' इत्येतावन्मात्रोक्त्या सादृश्यस्य भेदघटितत्वमेव, भिन्नव्यक्त्योरेव सादृश्यं भवतीति यावत्, इत्यभिप्रेत्यान्यार्थस्यानुक्तिः। अत्र न्यायमञ्जूषायाम्—'अस्य न्यायस्यानिर्णयात् पर्युदासे प्रवृत्तिर्न प्रसज्यप्रतिषेधे' इति यदुक्तं तद् विवेचितमेव वृत्तौ। एतच्च परिभाषेन्दुशेखरे नागेशोपाध्यायेनापि सूचितम्। 'अनित्यत्वे भाष्यसम्मतफलाभावात्' इति वदता। तस्यायमाशयः—नञो भेदबोधकत्वमत्यन्ताभावबोधकत्वं च स्वतःसिद्धमेव, भेदस्थले सादृश्यमात्रं लोकसिद्धमेव न्यायेन बोध्यते। तथा चास्यानित्यत्वफलमिदमेव यत्—क्वचिदसदृशोऽपि भिन्नः प्रतीयते, यथा—"अनतो लुप्" [१. ४. ५९.] इत्यत्रासदृशोऽपि वर्णः प्रतीयते इत्येवानित्यत्वमास्थातुरभिप्रायः। तत्र सोऽपि केनचिद् वर्णत्वादिना रूपेण सदृश एवेति तेनैव रूपेण सादृश्यस्य लक्ष्यानुरोधादाश्रयणीयतया दोषाभावेनानित्यत्वाश्रयणे न किमपि फलमिति। लोकसिद्धतया चैतन्न्यायलभ्यार्थस्य न ज्ञापकापेक्षत्वमिति ज्ञापकत्वेनाभिप्रेतमस्य फलमेवेति स्वीकर्तव्यमित्यपि नागेशादीनामभिप्रायः। तथाहि—"ग्यक्ये" [१. २. २५.] इत्यादौ विशेष्यानुक्तिरेवैतज्ज्ञापिकेति यत् पूर्वमुक्तं तदिह फलत्वेनैव योज्यं, यदेतन्न्यायबलादेव तत्र विशेष्योपलब्धिरिति। सादृश्यस्य च भेदाघटितत्वमित्ययमर्थः स्पष्टतया प्रतिपादितो वैयाकरणलघुमञ्जूषायां तेनेति विशेषजिज्ञासुभिस्तत एवावलोकनीयम्, इह च स्वग्रन्थानपेक्षिततया न प्रपञ्चितम्॥ २७॥

## *उक्तार्थानामप्रयोगः* ॥ २८॥

सि०—उक्तोऽर्थो येषां ते उक्तार्थास्तेषाम्—उक्तार्थानां, परप्रत्ययाद्यभिहितस्वार्थानां प्रत्ययादीनाम्, अप्रयोगः—अनुचितः

प्रयोगः—अप्रयोगः, प्रयोगो न कार्य इति न्यायार्थः अर्थप्रत्यायनार्थमेव शब्दाः प्रयुज्यन्ते, ते च सामान्यतो द्विधा प्रत्ययाः प्रकृतयश्च, तथा च येषां प्रत्ययानां प्रकृतीनां वाऽर्थाः प्रकृते प्रयुक्तैरन्यैः प्रत्ययैः पदैर्वाऽभिहितास्तेषां पुनः प्रयोगो व्यर्थ एव स्यात्, अर्थप्रत्यायनरूपस्य प्रयोजनस्य पूर्वमेव सम्पन्नत्वात्, ततश्च स्वभावसिद्ध एवार्थ इह वचनरूपेण पठित इत्यवधेयम्, यथा 'क्रियते कटस्तेन' इत्यादौ कर्मादीनामर्थानामात्मनेपदादिनोक्तत्वेन तत्र तत्र [ कर्मादौ—कटादौ ] कर्मत्वबोधिका द्वितीयादयो नोत्पद्यन्ते, किन्तु परिशिष्टे नामार्थमात्रे प्रथमैव भवति क्वचिच्च लोकप्रसिद्ध्या कस्यचिद् वैचित्र्यस्य विवक्षया वोक्तार्थस्यापि प्रयोगो भवति, यथा—'अक्ष्णा काणः पदा खञ्जः' इत्यादौ, अत्र हि काणत्वस्याक्ष्णोः खञ्जत्वस्य पादयोश्च सम्बन्धे निश्चितेऽप्यङ्गिनि वैरूप्यस्य प्रतिभासनायैवं प्रयोगः क्रियते, इति विशेषार्थबुबोधिषयोक्तार्थस्याऽपि प्रयोगे दोषाऽभावः। लोकप्रसिद्ध्या वा तथा प्रयोगः, नहि लौकिकी प्रसिद्धिरनुयोक्तुं शक्या प्रवाहस्यानादित्वात्। तथा 'क्रियते कटः' इत्यादावपि कर्मत्वबोधकप्रत्ययादिप्रयोगापत्तिरिति तद्वारणार्थोऽयं न्यायः समाश्रयणीयः। "रघुवर्णा०" [ २. ३. ६३. ] इति सूत्रे एकशब्दस्य नियमार्थत्वकथनमत्र ज्ञापकम्, तथा हि तत्र वृत्तिः—"पदे इत्येतावतैवैकपदे लब्धे एकग्रहणं नियमार्थम्, एकमेव यन्नित्यं तत्र यथा स्यात्, यदेकं चानेकं च तत्र मा भूत्" इति। यच्च विध्यर्थं न सम्भवति तदेव नियमार्थं कथ्यते, *सिद्धे सत्यारम्भो नियमार्थः* इति *विधिनियमयोः सम्भवतो विधिरेव ज्यायान्* इति च न्यायाभ्याम्, विधेश्चासम्भवत्वमेतन्न्यायमूलमेव। तथाहि—यदि प्रकृतसूत्रस्थैकशब्दस्यैवैकत्वमात्रमर्थः स्यात्, स च विधावन्वियात्, किन्तु विनाप्येकशब्देनैकत्वार्थस्य तत्र बोधसंभव इति न स विध्यर्थः, यथा—"ह्रस्वोऽपदे वा" [ १. २. २२. ] इत्यत्रापदे इत्यैकवचनैकत्वस्य विवक्षया 'न चेत् तौ निमित्तनिमित्तिनावेकत्र पदे स्याताम्' इत्यर्थो भवति तथेहाप्येकशब्दाभावेऽपि 'पदे' इत्यत्रैकत्वस्य विवक्षया 'एकत्रपदे' इत्यर्थो लभ्येतैवेत्येकग्रहणमुक्तार्थत्वाद्-प्रयोगार्हं विधावन्वयमलभमानं व्यर्थं सत् वृत्त्युक्तमर्थं ग्राहयतीति, तेन च 'नृनाथः' इत्यत्र समुदायस्यैकपदत्वम्, अन्तर्वर्तिविभक्त्या च प्रत्येकस्याऽपि पदत्वादनेकपदत्वं चेति नैकमेवेदं पदमिति ऋवर्णात् परस्य नस्य णत्वं न भवति। तथा चायं न्यायस्तत्राश्रित इति लभ्यते, अन्यथा 'पदे' इत्यनेनैकत्वे लब्धेऽपि पुनरप्येकपदेनैकत्वार्थस्य कथनं कथं व्यर्थं विज्ञायेत। एवं च क्वचिदुक्तार्थानामपि प्रयोगः स्पष्टार्थः *द्विर्बद्धं सुबद्धं भवति* इति न्यायानुकूलो वा, यथा—"शिरोऽधसः पदे समासैक्ये" [ २. ३. ४. ] इति सूत्रे ऐक्यशब्दप्रयोगः, अत्र हि 'समासे' इत्येकवचननिर्देशेऽप्येकत्वरूपस्यार्थस्योक्तावपि "वौष्ठौतौ समासे" [ १. २. १७. ] इत्यादिवत् निर्वाहे सिद्धे ऐक्यशब्दप्रयोगः स्पष्टार्थ एव। यत्तु कैश्चित्, 'अत्रत्यैकग्रहणेनास्य न्यायस्यानित्यत्वमिति सूच्यते' इत्युक्तं तत् तु न साधु—लोकसिद्धस्याप्यस्य न्यायस्यानित्यत्वस्य ज्ञापयितुमशक्यत्वात्, ज्ञापकसिद्धस्यैवासार्वत्रिकत्वात्; यत् तु ज्ञापकमिहोपन्यस्तं तन्नास्य न्यायस्य साधनायाऽपि तु लोकसिद्धोऽयं न्यायः शब्दशास्त्रेऽपि समाश्रीयत इत्येतावतोऽर्थस्य सूचनायैव। अस्तु वाऽत्रत्यैक्यग्रहणेन *विचित्रा सूत्राणां कृतिः* इत्येतन्न्यायज्ञापनद्वारोक्तार्थप्रयोगरूपस्य वैचित्र्यस्य सूत्रेऽनुज्ञा क्रियते इति कल्पना ॥ २८ ॥

## *उक्तार्थानामप्रयोगः* ॥ २८ ॥

त०—अस्य न्यायस्य लोकसिद्धत्वमपीति वृत्तौ प्रतिपादितम्, लोकसिद्धस्य चास्य ज्ञापकेन शब्दशास्त्रेऽप्यभ्यनुज्ञा क्रियते। तथा च क्रियते कट इत्यादौ कर्मण उक्तत्वाद् द्वितीया न, चित्रा गावोऽस्य सन्तीत्यादौ मतोरर्थस्य बहुव्रीहिणाभिहितत्वान्मतुर्न, गर्गस्य गोत्रापत्यानीत्यर्थे समुत्पन्नस्य यञो लुपि पुनर्यञ् न, 'सप्तपर्ण'शब्दे सप्त सप्त पर्णानि सन्ति यस्येत्यर्थसत्त्वेऽपि वीप्सायाः समासेनैवोक्तत्वाद् द्विर्वचनं नेत्यादीनि फलानि। पाणिनीयव्याकरणे तु—उक्ते कर्मादौ द्वितीयादिविभक्तीनामभावाय "अनभिहिते" [ पा० सू० २. ३. १. ] इत्यधिकारसूत्रं क्रियते। तत्रानेनैव न्यायेनोक्तार्थानामप्रयोगादेव विभक्तीनामनुत्पत्तौ सिद्धायां तस्य वैयर्थ्यमाशङ्क्येत्थं समाहितं तत्रैव महाभाष्ये—"अनभिहितस्तु विभक्त्यर्थस्तस्मादनभिहितवचनं [ वार्तिकम् ], अनभिहितस्तु विभक्त्यर्थः, कः पुनर्विभक्त्यर्थः ?, एकत्वादयो विभक्त्यर्थाः, तेष्वनभिहितेषु सत्सु कर्मादयोऽभिहिता विभक्तीनामुत्पत्तौ निमित्तानि मा भूवन्निति। तस्मादनभिहितवचनम्, तस्मादनभिहिताधिकारः क्रियते। अवश्यं चैतदेवं विज्ञेयम्—एकत्वादयो विभक्त्यर्था इति। 'अभिहिते हि प्रथमाभावः' [ वार्तिकम् ] यो हि मन्यते—'कर्मादयो विभक्त्यर्थाः, तेष्वभिहितेषु सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्न भविष्यति इति, प्रथमा तस्य न प्राप्नोति, क्व ? वृक्षः प्लक्षः, किं कारणम् ? प्रातिपदिकेनोक्तः प्रातिपदिकार्थ इति।" [ इति भाष्यम् ]। अयमाशयः—कर्मादीनां विभक्त्यर्थत्वमाश्रित्य "अनभिहिते" इत्यधिकारसूत्रमाक्षिप्तम्, तन्न शोभनम् न केवलं कर्मादीनि कारकाणि विभक्तीनामर्था अपि त्वेकत्वादिका संख्याऽपि विभक्त्यर्थः। तथा हि—"नाम्नः प्रथमैक-द्वि-बहौ" [ २. २. ३१. ] इति सूत्रस्थस्य 'एक-द्वि-बहौ' इति पदस्य "कर्मणि" [ २. २. ४०. ] इत्यादिविभक्तिविधायकसूत्रैः सहैकवाक्यता भवति, तत्र यदैकत्वादीनि

विशेषणानि कर्मादीनि विशेष्याणि, [ एकस्य यत् कर्म तत्र द्वितीयैकवचनमित्येवं रूपेण ] तदा कर्म द्वितीयार्थः सम्पद्यते, तच्च यदा कृदादिप्रत्ययैरभिहितं भवति तदोक्तार्थत्वाद् द्वितीयायाः प्राप्तिरेव नेत्यनभिहिताधिकारवैयर्थ्यमायाति । यदा तु कर्मादीनां विशेषणत्वमेकत्वादीनां विशेष्यत्वं-कर्मणो यदेकत्वादि तत्र द्वितीयैकवचनमिति, तदेकत्वादयो विभक्त्यर्थाः सम्पद्यन्ते, ते चाभिहितेष्वपि कृदादिभिः कर्मादिष्वनभिहिता इति तदभिधानाय द्वितीयादीनां प्रसङ्गे तद्वारणाय कर्तव्योऽनभिहिताधिकारः । तथा च "कर्मणि" [ २. २. ४०. ] इत्यादौ सप्तमीनिर्देश एकत्वाद्यपेक्षः कर्मणि यदेकत्वादि तत्र द्वितीयेति, न त्वभिधेय[ कर्म ]प्रतिपादनाय, एवं च कर्माद्याश्रितानामेकत्वादीनामपि विभक्त्यर्थत्वे पारम्पर्येण कर्मादीनामपि निमित्तत्वमिति कृदादिप्रत्ययैः कर्मादीनामुक्तावपि तदाश्रितैकत्वादीनामनुक्तत्वात् तन्निमित्ता द्वितीयादिविभक्तिस्तत्र मा भूदिति, अनभिहिताधिकारेणानभिहितानां कर्मादीनामेकत्वादावेव द्वितीयादिविभक्तीनामेकवचनादि भविष्यतीति नातिप्रसङ्गो भवति । किञ्च कर्मादयो विभक्त्यर्था इति मते नामार्थस्यापि विभक्त्यर्थत्वेन भाव्यमिति नामार्थस्य नाम्नैवोक्तत्वात् तत्र प्रथमा विभक्तिर्न प्राप्नोतीति 'वृक्षः प्लक्षः' इत्यादयः प्रयोगा न स्युः । एकत्वादीनां विभक्त्यर्थत्वपक्षे तु तदभिधानाय प्रथमा प्रवर्तेत इति न दोषो भवति । स्वमते तु "कर्मणि" [ २. २. ४० ] इति सूत्रे 'द्वितीया' इत्यस्यानुवर्तनात् तदपेक्षयैव सप्तमी समुचिता, न तु 'एक-द्वि-बहौ' इति पूर्वानुवृत्तापेक्षया । किञ्च संख्यायाः प्रायेण विशेषणत्वस्यैव दृष्टतया 'एकत्वविशिष्टे कर्मणि' इत्येवार्थ उचित इति कर्मण उक्तत्वे न द्वितीयाप्राप्तिरिति नानभिहिताधिकारावश्यकतेति सिद्धान्तः । अत्रेदं शङ्क्यते-"यदि कर्मादयो विभक्त्यर्थास्तर्ह्यभिहिते प्रथमायाः प्रवृत्त्या कटं भीष्ममुदारं शोभनं वा करोतीत्यादौ कटशब्दादुत्पन्नया द्वितीयया कर्मणोऽभिहितत्वात् तत्र भीष्मादिभ्यः प्रथमा प्राप्नोति, द्वितीया न प्राप्नोति, भीष्मादिविशेषणविशिष्टस्य कटस्य करोतिक्रियाव्याप्यत्वात् कर्मत्वम्, तच्च कटशब्दादुत्पन्नया द्वितीययाऽभिहितमिति भीष्मादिभ्यो द्वितीयाया अप्रसङ्गात् प्रथमा स्यात्, यथा कृतः कटो भीष्म उदारः शोभनो दर्शनीय इत्यादौ कृधातोरुत्पद्यमानेन क्तेनाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न भवति, किन्तु प्रथमैव भवतीति । अत्रेदमुच्यते-"नायं दोषो मम मते, सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्भविष्यति, अस्ति च सामर्थ्यम्; किम्? कर्मविशेषो वक्तव्यः । अथवा कटोऽपि कर्म भीष्मादयोऽपि, तत्र "कर्मणि" [ पा० सू० २. ३. २. ] इत्येव सिद्धम् । अथवा कट एव कर्म तत्सामानाधिकरण्याद् भीष्मादिभ्यो द्वितीया भविष्यति । अस्ति खल्वपि विशेषः-कटं करोति भीष्ममुदारं दर्शनीयं शोभनमिति च, कृतः कटो भीष्म उदार शोभनो दर्शनीय इति च करोतेरुत्पद्यमानः क्तोऽनवयवत्वेन सर्वं कर्माभिधत्ते, कटशब्दात् पुनरुत्पद्यमानया द्वितीयया यत् कटस्थं कर्म तत् शक्यमभिधातुं न कर्मविशेषः" । अयमाशयः-भीष्मादियुक्तकटसम्बन्धिकर्मत्वं प्रतिपाद्यम्, तत्र च यथा कटशब्देन भीष्मत्वादीनामनभिधानात् तदभिधानाय भीष्मादिशब्दप्रयोगः, तथा कटशब्दादुत्पन्नया द्वितीयया भीष्मादिशब्दाश्रिता कर्मत्वशक्तिरनभिहितेति तत्रापि तद्विशिष्टकटकर्मत्वप्रतिपादनाय द्वितीया भविष्यत्येवेति । अथवा यद् यत् करोतिक्रिययाऽऽप्तुमिष्टतमं तत् सर्वं कर्म द्रव्यं गुणो वा । न ह्यसौ कर्ता कटमात्रेण सन्तुष्यति, किन्तु भीष्मत्वादिगुणविशिष्टेन, तत्र करोतिक्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः, पश्चात् त्वेकवाक्यतया विशेषणविशेष्यभावः । तथा च न विशिष्टस्य कर्मत्वं, किन्तु क्रियायां कर्मत्वेनान्वितयोः पश्चान्मनसा विशेषणविशेष्यभाव इत्येके । परे तु-"साक्षात्फलाश्रयस्य द्रव्यद्वारा फलाश्रयस्य च कर्मत्वम् । एवं च भीष्मस्यापि पृथक्कर्मशक्तिविशिष्टस्यैव बोधनं भीष्मपदात्, द्रव्येणाभेदान्वयात् तु तस्याः शक्तेर्वाक्यार्थबोधे विशिष्याऽग्रहः, भीष्मकटयोर्बोधश्च विशेषण-विशेष्यभावेनैव" इत्याहुः । अथवा भीष्मादीनां स्वयमकर्मत्वेऽपि विशेष्यसम्बन्धिन्यैव विभक्त्या भाव्यम्, तदेकयोगक्षेमत्वात्, केवलानां च नाम्नां *न केवला प्रकृतिः प्रयोक्तव्या* इति नियमेन प्रयोगानर्हत्वात्, ततो यथा राजसुहृदः स्वयं निर्धना अपि राजधनेनैव धनवन्तो धनफलभाजो वा तथा गुणा अपि स्वयं कर्मत्वाभाववन्तोऽपि कर्मत्ववन्तं कटादिकं विशेषयन्तस्तदीयकर्मत्वफलभाजो भवन्तीति नास्मत्पक्षे कटादिविशेषणेभ्यो भीष्मादिभ्यो विभक्त्यप्राप्तिरिति । उक्तं चैतत् "कर्मणि" [ २. २. ४०. ] इति सूत्रे बृहद्वृत्तावपि । विशेषजिज्ञासुभिश्चाकरग्रन्था अवलोकनीयाः । अक्ष्णा काण इत्यादावस्य न्यायस्य नाश्रयणमिति सूचितं वृत्तौ, तत्रायं विशेषोऽभिधीयते-काणशब्दः "कणण् निमीलने" इत्यस्माच्चौरादिकाद्धातोरच्प्रत्यये घञि वा कृते व्युत्पाद्यते, स चाक्षिसम्बन्धिनिमीलनरूपे गुणे रूढः, तथापि गुण-गुणिनोरभेदोपचारात्, काणोऽस्येत्यर्थे विहितस्य मतोर्मतान्तरे लुग्विधानाद् वा काणशब्दः काणत्वगुणविशिष्टे जनेऽपि रूढः, अक्षण्यपि च प्रयुज्यते-अक्षि काणमस्येति । तथा च काणो देवदत्त इति कथितेऽपि विवक्षितार्थप्रतीतिर्भवत्येवेत्यक्ष्णा काणो देवदत्त इति लौकिकव्यवहारादेव प्रयोग इति तत्रत्यग्रन्थाशयः । यदि च काणशब्दस्य गुणमात्रपरत्वं तर्हि निमीलनरूपगुणमात्रस्यैव तेन शब्देन प्रतीत्याऽक्ष्णा सह तस्य गुणस्य सम्बन्धप्रतिपादनायावश्यक एवाक्षिशब्दप्रयोग इति नात्र प्रकृतन्यायप्रसरावसर इति बोध्यम् । "रपृवर्णा०" [ २. ३. ६३. ] इति सूत्रे 'एकपदे' इत्यत्रैकशब्दस्य नियमार्थत्वमिति

प्रतिपादितं बृहद्वृत्तौ, तदेवानूदितमिह वृत्तावपि प्रसङ्गेन, तत्र नियमाकारश्चेत्थं प्रदर्शितः–'एकमेव यन्नित्यम्' इति, तस्य चाखण्डमेव यत् पदमित्यर्थः, अखण्डपदत्वं च पदाघटितपदत्वम्, 'नृ-नाथः' इत्यादेः समुदायस्य पदघटितपदत्वात् पदाघटितपदत्वाभावेन तत्र न णत्वप्रवृत्तिर्भवति । न च 'मातृभोगीण' इत्यादौ मातृपदघटितत्वेन पदाघटितत्वाभावेन णत्वं न स्यादिति वाच्यम्, निमित्तिमत्पदाघटितत्वमखण्डपदत्वमिति स्वीकारेण मातृपदस्य निमित्तिमत्त्वाभावेन भोगीनेत्यस्य केवलप्रत्ययस्य वा पदत्वाभावेन च 'मातृभोगीन' इति समुदाये विशिष्टाभावसत्त्वेन णत्वसिद्धौ बाधकाभावात्, निमित्तं रेफ-षकारौ निमित्ती नकार इति पारिभाषिकोऽर्थः । न च सुपर्वणेत्यादौ निमित्तिमत्पदं तु पर्वन्निति, तद्घटितत्वेन णत्वं न स्यादिति वाच्यम्, निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वमित्यखण्डपदत्वस्य परिष्कृतलक्षणस्वीकारात्, अत्र च पर्वन्नित्यस्य निमित्तानधिकरणत्वाभावेनाखण्डपदत्वाक्षतेर्दोषाभावात् । न च गन्धर्वस्य गानं–गन्धर्वगानमित्यादौ *गति-कारक-ङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः* इति न्यायेन गानेत्यस्य पदत्वाभावेन समुदाये निमित्तानधिकरणनिमित्तिमत्पदाभावरूपविशिष्टाभावसत्त्वेनाखण्डपदत्वाक्षतेर्णत्वमापद्येतेति वाच्यम्, पदशब्देन पदत्वयोग्यस्यार्थवतो ग्रहणेनार्थवत्त्वस्य च तत्र [गानशब्दे] सत्त्वेन निमित्तानधिकरणनिमित्तिमत्पदाभावरूपस्याखण्डपदत्वस्य तत्राभावेन दोषाभावात् । किञ्चिदशस्थले विभक्तीतरानपेक्षया लोकेऽर्थविषयकबोधजनकत्वं पदत्वमिति परिष्कारस्यादरादपि न दोषः, गानेत्यस्य तादृशपदत्वस्याक्षतेः । ननु सर्वेनरेणेत्यादौ सर्वशब्दघटकरेफोत्तरत्वेन नरघटकनकारस्यापि णत्वं स्यात्, निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वस्याभाव इति च कथने च तदुत्तरविभक्तिनकारस्यापि णत्वं न स्यादि चेत्? 'रघृवर्णात्' इत्यत्र वैशिष्ट्यं पञ्चम्यर्थः, रेफ-षकार-ऋकारान्यतमविशिष्टस्य नस्य णत्वमित्यर्थः सूत्रस्य, वैशिष्ट्यं च स्वोत्तरत्व-स्वाघटितपदाघटकत्वोभयसम्बन्धेन, एकपदग्रहणं चात्रैवार्थे तात्पर्यग्राहकम् । सर्वेनरेणेत्यत्र नरघटकनकारे रेफवैशिष्ट्यं नास्ति, स्वोत्तरत्वसत्त्वेऽपि स्वाघटितपदाघटकत्वरूपद्वितीयसम्बन्धाभावात् । तत्रैव विभक्तिनकारे नरघटकरेफवैशिष्ट्यमस्ति, स्वोत्तरत्व-स्वाघटितपदाघटकत्वोभयसम्बन्धसत्त्वात्, इति तस्य णत्वसिद्धिरित्यलं बहुतरक्षोदेन । "शिरोऽधसः पदे समासैक्ये" [२. ३. ४.] इति सूत्रे ऐक्यग्रहणेनास्यानिर्णीतत्वं यदुक्तं प्राचीनैस्तद्वृत्तौ प्रत्युक्तमेव, तत्रायमपि हेतुः–'समासे' इत्येतावता एकस्मिन् समासे इत्येतस्यार्थस्य लाभेऽपि परमशिरसः पदमित्यर्थे परमशिरःपदमित्यादौ सत्त्ववारणासम्भवः, अस्ति हि शिरःशब्दस्य पदशब्दस्य चैकस्मिन्नेव षष्ठीतत्पुरुषसमासे सत्त्वम् । तथा चैकस्मिन्नेव समासे इत्यर्थस्य समासान्तराघटकत्वार्थस्य नियमस्य लाभायैक्यग्रहणमिति तेनास्य न्यायस्यानिर्णीतत्वज्ञापनासंभवः । कृते चैवं नियमे शिरःपदस्य समासान्तरघटकत्वस्यापि सत्त्वेन सत्वं न भवति ॥ २८ ॥

## *निमित्ताभावे नैमित्तिकस्याऽप्यभावः* ॥ २९ ॥

सि०—लोके हि द्विविधं निमित्तकारणं दृश्यते-कार्यस्थितिनियामकं तदनियामकं च, प्रथमं यथा न्यायनये–अपेक्षाबुद्धिः, 'अयमेकः, अयमेकः' इति पूर्वमपेक्षाबुद्धिर्जायते, ततो द्वित्वसंख्योत्पत्तिः, ततोऽपेक्षाबुद्धिनाशः, ततो द्वित्वनाश इति हि क्रमोऽभ्युपेयते नैयायिकैः, तत्र अपेक्षाबुद्धिरेव द्वित्वोत्पत्तेर्निमित्तमिति निमित्तभूतापेक्षाबुद्धिनाशान्नैमित्तिकस्य द्वित्वस्यापि नाश इति कार्यस्थितिनियामकं निमित्तकारणमिति गम्यते । यथा वा वेदान्तनये प्रारब्धस्य कर्मणो विक्षेपस्थितिनियामकत्वम्, कर्म हि द्विविधं–सञ्चितं प्रारब्धं च, यत् फलप्रदानोन्मुखतां न गतं तत् प्रथमम्, यच्च फलप्रदानोन्मुखतां गतं तद् द्वितीयम्, तत्र प्रथमस्य तत्त्वसाक्षात्कारेण [ब्रह्मसाक्षात्कारेण] नाशः, "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" [मुण्डको० २.२.८.] इति श्रुतेः । द्वितीयस्य [प्रारब्धस्य] कर्मणस्तु भोगादेव क्षयः, "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥" इति वचनात्, तत् कर्म यावदस्ति तावद् भोगात्मकः संसारः, तन्नाशे च संसारनाश इति संसारनिमित्तस्य प्रारब्धकर्मणो नैमित्तिकस्य संसारस्य स्थितिनियामकत्वम्, इति वेदान्तिनां प्रक्रिया । कार्यस्थित्यनियामकं च दण्डादि, तन्नाशेऽपि घटनाशादर्शनात्, तथा च द्विधाऽपि निमित्तनैमित्तिकभावस्य दर्शनाद् व्याकरणशास्त्रे निमित्तनैमित्तिकयोः को नियम इत्याशङ्कायामयं न्यायः प्रवर्तते । निमित्तस्य–समवाय्यसमवायिकारणभिन्नकारणस्य, अभावे–नाशे सति, नैमित्तिकस्य–निमित्तमाश्रित्य जातस्य कार्यस्यापि, अभावः–असत्त्वमिति न्यायार्थः । तथा च व्याकरणे निमित्तकारणनाशे तन्निमित्तकस्य कार्यस्यापि नाशो भवतीत्याश्रीयते इति भावः, यथा–बिम्बशब्दाल्लताविशेषनामत्वविवक्षायां गौरादित्वान्ङीप्रत्यये सति "अस्य ङ्यां०" [२. ४. ८६.] इति बिम्बाकारलुकि च–'बिम्बी' इति रूपं भवति, ततो बिम्ब्याः फलमित्यर्थे हेमादित्वादञि "फले" [६. २. ५८.] इति सूत्रेण फलार्थप्रत्ययस्याञो लुपि "ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगौणीसूच्योः" [२. ४. ९५.] इति ङीनिवृत्तौ "अस्य ङ्यां लुक्" [२. ४. ८६.] इति ङीनिमित्तकाल्लुकोऽपि निवृत्त्या अकारस्य स्थितिर्भवतीति 'बिम्बम्' इति रूपं भवति ।

तथा च निमित्तविनाशे नैमित्तिकविनाशः स्पष्ट एवात्र। अस्य ज्ञापकं तु "न सन्धि०" [ ७. ४. १११. ] इति सूत्रेणालुकि कर्तव्ये ङीलुक् स्थानिवद्भावनिषेधोक्तिः, तथा हि–तत्सूत्रवृत्तौ ङीविधौ कर्तव्ये स्वरादेशस्य स्थानिवद्भावनिषेधस्योदाहरणं विम्बमिति दर्शितम्। तथा हि–विम्बमित्यत्र फलार्थकप्रत्ययस्य लुपि "ङ्यादेः०" [ २. ४. ९५. ] इति विहितस्य ङीलुकः स्वरादेशरूपत्वेन परनिमित्तकत्वेन तस्य "स्वरस्य परे प्राग्विधौ" [ ७. ४. ११०. ] इति स्थानिवद्भावे सति ङीप्रत्यये सद्भूततां प्राप्ते तस्मिन् परे "अस्य ङ्यां लुक्" [२. ४. ८६.] इति विम्बशब्दाकारस्य लुक् प्रसज्येतेति स्थानिवद्भावः प्रतिषिध्यते। यदि चायं न्यायो न स्यात् तर्हि विम्बशब्दाकारस्य पूर्वमेव लुप्तत्वेन तद्रक्षणार्थः स्थानिवद्भावप्रतिषेधो व्यर्थ एव स्यात्, एतन्न्यायसद्भावे तु फलप्रत्ययलुब्निमित्तके ङ्यो लुक्करणे तन्निमित्तकस्यालुको विनाशादकारस्य सद्भाव इति। तद्रक्षणार्थो ङीलुकः स्थानिवद्भावनिषेधः सार्थको भवति। इत्थं चैतन्न्यायं विनाऽनुपपद्यमानामकारप्रत्यावृत्तिं विनानुपपद्यमाना स्थानिवद्भावनिषेधोक्तिरेतन्न्यायज्ञापिका। निमित्तकारणस्य कार्यस्थितिनियामकत्वपक्षाभिप्रायश्चायं न्यायः। तदनियामकत्वपक्षाश्रयणमपि शास्त्रे दृश्यते लक्ष्यानुरोधात्, तथाहि–मुनीनामित्यादौ "दीर्घो नाम्यतिसृचतसृषः" [१. ४. ४७.] इत्यनेन दीर्घे कृते नाम्निमित्तस्य ह्रस्वस्यापायेऽपि नैमित्तिको नाम् न नश्यति। एवं चास्य पक्षस्याश्रयणे केचिज्ज्ञापकमपि ददति–"र्हादर्हस्वरस्यानु नवा" [ १. ३. ३१. ] इति सूत्रेऽनुग्रहणं, तच्च न युक्तमिति विवेचयिष्यते विवरणे। तथा च व्यवस्थितयोरनयोः पक्षयोर्लक्ष्यानुरोधादाश्रयणेनैव सर्वलक्ष्यसिद्धौ न्यायस्यास्य विशिष्य स्वीकारोऽनावश्यक इत्यपि तत्रैव विवेचयिष्यते ॥ २९ ॥

## *निमित्तापाये नैमित्तिकस्याप्यपायः* ॥ २९ ॥

त०—अस्य न्यायस्य यथा लोकसिद्धत्वं तथोपपादितं वृत्तौ। वस्तुतस्तु नास्य न्यायस्यावश्यकत्वमिति नवीनाः कथयन्ति, निरूपितं चैतत् *अकृतव्यूहाः पाणिनीयाः* इति न्यायव्याख्यावसरे परिभाषेन्दुशेखरे नागेशेन। अयं च न्यायः [ अकृतव्यूहन्यायः ] प्रकृतन्याय[*निमित्तापाये नैमित्तिकस्याप्यपायः* इत्येतन्न्याय]स्थानीयः कैयटादिभिराश्रितः, स्पष्टं चैतत् "समर्थानां प्रथमाद् वा" [ पा० सू० ४. १. ८२. ] इति सूत्रे कैयटे, किन्तु महाभाष्ये क्वाप्यस्य न्यायस्य चर्चा न कृता'। उक्तं च कैयटेनापि "असिद्धवदत्राभात्" [ पा० सू० ६. १. २२. ] इति सूत्रे "निमित्ताभावे नैमित्तिकस्याप्यभाव इति परिभाषायाः भाष्यकारेणानाश्रयणात्" इति। तत्र च महाभाष्यकारस्य तत्र तत्र तन्न्यायानाश्रयणव्यवहारः प्रदर्शितः। नागेशादिभिश्चैतन्न्यायसिद्धानां प्रयोगाणामन्यथा सिद्धिः प्रदर्शिता, शक्यते च स्वमतेऽपि तथाऽस्य न्यायस्य प्रयोजनानामन्यथा सिद्धिः प्रदर्शयितुम्, तथाहि–विम्ब्याः फलं विम्बमित्यत्राल्लुपो निमित्तस्य ङीप्रत्ययस्य लुकि तन्निमित्तकस्याल्लुपो निवृत्तिरिति प्रयोजनत्वेनोक्तम्, तच्चान्यथापि सिद्धम्, तथाहि–पदावधिकेऽन्वाख्याने 'विम्ब+ई+अय्+लि'इति स्थितावपरनिमित्तकत्वेनान्तरङ्गत्वादल्लो लुकि ङीलुगल्लुक्कोः प्राप्तौ ङीलुकः परत्वात् प्रवृत्तावल्लुको निमित्ताभावादेवाप्रवृत्तिः। इत्थं च "न सन्धि०" [ ७. ४. १११. ] इति सूत्रस्य ङीलुकः स्थानिवद्भावनिषेधकत्वमपि स्वत एव चरितार्थमिति न काचिदनुपपत्तिः। यच्चोक्तं "र्हादर्हस्वरस्यानु नवा" [ १. ३. ३१. ] इति सूत्रेऽनुग्रहणस्यैतन्न्यायानित्यत्वज्ञापकत्वमिति तदपि विचार्यताम्, तथाहि–न्यायमञ्जूषाग्रन्थः—"अन्वित्यस्याभावे किल प्रोर्णुनावेत्यत्र प्रथममन्तरङ्गत्वादूर्णुधातोर्नस्य द्वैरूप्ये कृते पश्चात् परोक्षाहेतुकत्वेन वहिरङ्गं द्विर्वचनं स्यात्, तथा च प्रोर्णुन्नावेत्यनिष्टं रूपं प्रसज्येतेत्यनुग्रहणं कृतम्। यदि चायं न्यायो नियत एव स्यात् तदा रेफानन्तर्यजं नस्य द्वैरूप्यं कृतमपि द्विर्वचनकरणे रेफस्य णुव्यवधानभवनेन एतन्न्यायान्निवर्तेत एवेति कुतोऽनिष्टापत्तिरिति तद्वारणाय कुतोऽनुग्रहणं कुर्यात्" इति, तन्न शोभनम्–द्वित्वस्य द्विःप्रयोगरूपत्वेन शब्दान्तरत्वाभावेनाव्यवधायकत्वात्। अयमाशयः–यदि द्वित्वेन किञ्चिद् विलक्षणं वस्तु मध्ये क्रियेत तर्हि व्यवधायकत्वमित्यानन्तर्यविघातः स्यात्, न च किमपि विलक्षणं वस्तु क्रियते, स एव 'नु' शब्दो द्विः पठ्यत इति परस्यापि 'नु' शब्दस्य पूर्वाभिन्नत्वं तदङ्गत्वमेव वा सिद्धमिति *स्वाङ्गमव्यवधायकं भवति* इति न्यायेन तत्र व्यवधानाभावात् प्रकृतन्यायप्रसराभावेन नकारद्वयस्य श्रवणं स्यादेवेति तद्वारणाय सार्थकमेवानुग्रहणमिति तज्ज्ञापकत्वकथनं कथं संगतं स्यात्। तथा च मुनीनामित्यादौ दीर्घे कृते ह्रस्वनिमित्तकस्य नामोऽविनाशाय लौकिकं निमित्तकारणस्य कार्यस्थित्यनियामकत्वमेव स्वीकर्तव्यमिति लक्ष्यानुरोधादुभयोः पक्षयोः समाश्रयणमेव युक्तं, सति तादृशे लक्ष्येऽभिहिते। पराक्रान्तं चात्र नवीनैर्बहुतरमिति विस्तरभिया न प्रपञ्च्यते। न च प्रोर्णुनावेत्यत्र 'णु'शब्दस्याव्यवधायकत्वं साधयता रेफादव्यवहितत्वेन तस्य [ अग्रिमनकारस्य ] णत्वं कथं वारणीयमिति शङ्क्यम्, 'णु'शब्दस्य द्वित्वं प्रत्येव स्वाङ्गत्वस्वीकारात्, णत्वस्य कृते तु तस्य व्यवधायकत्वं स्यात्सत्येवेत्यदोषात्। वस्तुतस्तु न्यायोऽयं नावश्यक इति पूर्वं वर्णितमेवेति दिक् ॥ २९ ॥

## *सन्नियोगशिष्टानामेकापाये-ऽन्यतरस्याप्यपायः* ॥ ३० ॥

सि०—सं-समुच्चयेन, नियोगः-विधानं-सन्नियोगः, तेन शिष्टानि-कथितानि-सन्नियोगशिष्टानि, तेषां मध्ये, एकस्य, अपाये-विनाशे सति, अन्यतरस्य-अवशिष्टस्यापि, सहैवेत्यर्थः, अपायः-विनाशः, इति सामान्यतो न्यायार्थः । यद्यप्यन्यतरपदसमभिव्याहारेण सन्नियोगशिष्टयोरिति द्विवचनमेव निर्देष्टुं युक्तम्, द्वयोरेवैकस्य निर्धारणेऽन्यतरशब्दस्य प्रयोगादिति सन्नियोगशिष्टानामिति बहुवचनमनुचितमिति प्रतिभाति, तथापि सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च सन्नियोगशिष्टौ चेत्येवंरूपेण द्वित्वविशिष्टानां सन्नियोगशिष्टपदानां सहोक्तौ प्रस्तुतायामेकशेषेण सन्नियोगशिष्टानामिति बहुवचननिर्देश इति व्याख्याने दोषाभावः, विवेचयिष्यते चैतदन्यत्र, समुच्चयेन विहितघटकान्यतरस्यापाये सम्भाविते तदुभयोरप्यनुत्पत्तिः कर्तव्येति भावः । लोके युग्मजभ्रात्रादावेकस्याभावेऽपि तदन्यस्य सत्त्वदर्शनात्, सव्येतरविषाणयोरपि सहैव जातयोरेकस्य कथञ्चिद् विनाशेऽपरस्य सद्भावदर्शनाच्च तथैव शास्त्रेऽपि मा ज्ञायीति तन्निवृत्त्यर्थोऽयं न्यायः । अपायोऽभवनं च द्विधा भवति-भूत्वाऽपि निवृत्तिर्मूलतोऽप्यभवनं च द्वयमप्येतन्न्यायविषयः । तत्राद्यं यथा-पञ्चेन्द्राण्यो देवता अस्येत्यर्थे "देवता" [ ६. २. १०१. ] इत्यणि "द्विगोरनपत्ये यस्वरादेर्लुबद्विः" [ ६. १. २४. ] इति तस्य लुपि "ङ्यादेर्गौणस्य०" [ २. ४.-९५. ] इति ङीनिवृत्तौ तत्सन्नियोगशिष्ट आनपि निवर्तत इति पञ्चेन्द्र इति प्रयोगो भवति, द्वितीये यथा-एतान् गाः पश्येत्यत्र गोशब्दौकारस्य शसोऽता सह "आ अम्-शसोऽता" [ १. ४. ७५. ] इत्यात्वे कृते शसोऽकारस्याभावात् "शसोऽता सश्च नः पुंसि" [ १. ४. ४९. ] इति विधेययोर्दीर्घनकारादेशयोर्मध्ये दीर्घस्याभवनात् तत्सन्नियोगशिष्टो नकारादेशोऽपि न भवति समुच्चयार्थकचशब्दयोगेन विधेययोः कार्ययोरेकदेशैककालस्थनियमान्न्यायसिद्ध एवायमर्थ इति नात्र ज्ञापकापेक्षा । प्राचीनास्त्वत्र ज्ञापकमेवं वर्णयन्ति-"उद्द्योतकं त्वस्य आन्निवर्तनाय नत्वनिवर्तनाय च यत्नाकारणम् । तथाहि-पञ्चेन्द्र इत्यत्र तावद् ङ्य इव आनोऽपि निवृत्तिर्दृश्यते, न च आनो निवृत्तिः क्वाऽपि सूत्रे विहिता, ततो ज्ञायते-ङीनिवृत्तावेतन्न्यायबलात् साऽपि जातेति; तथा 'एतान् गाः' इत्यत्र गोशब्दस्य "शसोऽता सश्च" [ १. ४. ४९. ] इत्यनेन दीर्घो नाभूत् तत्र हेतुर्दृश्यते-"आ अम्-शसोऽता" [ १. ४. ७५. ] इत्यात्वे कृते सति सोऽकारो नास्ति येन सह दीर्घः क्रियते इत्येवंरूपः, नत्वाभवनस्य तु हेतुः कोऽपि न दृश्यते, प्रत्युत तद्भवनस्यैव हेतुर्दृश्यते पुंल्लिङ्गत्वस्य सद्भावात् । तत एकान्तप्राप्तमपि नत्वं निषेद्धुं यद् यत्नो न कृतस्तज्ज्ञायते-दीर्घस्याभवने एतन्न्यायबलान्नत्वमपि न भावीत्याशयैव ।" इति । अत्रेदमुच्यते-"लक्ष्ये कार्यमदृष्ट्वा तदनुसारिलक्षणानुमानं लक्ष्यैकचक्षुष्काणां कृते स्यादपि, लक्षणैकचक्षुष्काणामद्यतनानामस्मदादीनां कृते तु तन्नोचितम्, अस्मदादयस्तु शास्त्रकृद्वचनमनुसरामः, तदभावे च लोकरीतिमेवानुसरामः, न तु लक्ष्यबलात् तादृशं वचनान्तरं कल्पयितुं प्रभवामः । आचार्यव्यवहारेण-तादृशप्रयोगाणामाचार्यैः कृतत्वेन च कल्पयितुं शक्येताऽपि, यद्याचार्यैः स्वकीयप्रयोगत्वेन तदुल्लेखः कृतः स्यात्, न चैवं तथा दृश्यते, ततश्च समुच्चयार्थचकारयोगविधेयत्वमेवैकापायेऽन्यतरापायहेतुरित्यास्थेयमिति युक्तमुत्पश्यामः । आचार्यैर्वचनरूपेणास्य न्यायस्य पठितत्वं वाऽत्र प्रमाणमस्त्विति समाश्रयणीयम्" इति वरमप्रामाणिकज्ञापकान्तरकल्पनयेत्यलमतिगवेषणया । अनेन न्यायेन स्वभावत एवान्यतरस्याभावे इतरदपि निवर्तत इति प्रसक्ते सति गौणस्य निवृत्तौ मुख्यस्य न निवृत्तिरिति पक्षान्तरस्याग्रिमन्यायेन प्रतिपादनादस्यानित्यत्वमित्यपि लभ्यते, तेन वर्णवाचक-'एत-श्येत'शब्दाभ्यां स्त्रियां "श्येतैतहरितभरतरोहिताद् वर्णात् तो नश्च" [ २. ४. ३६. ] इति ङीप्रत्यये तकारस्य नकारादेशे-'एनी, श्येनी' इति, ताभ्यामपत्येऽर्थे "द्विस्वरादनद्याः" [ ६. १. ७१. ] इत्येयण्प्रत्यये "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे-'ऐनेयः, श्यैनेयः' इति रूपे भवतः, अन्यथा ङ्यो निवृत्तौ तत्सन्नियोगशिष्टो नकारोऽपि निवर्तेत, ततश्च 'ऐतेयः, श्यैतेयः' इति रूपे स्यातामिति ॥ ३० ॥

## *सन्नियोगशिष्टानामेकापायेऽन्यतरस्याप्यपायः* ॥ ३० ॥

त०—अत्र सन्नियोगशिष्टानामिति बहुवचनस्यानौचित्यं परिहर्तुं द्वित्वविशिष्टसन्नियोगशिष्टपदानामेकशेषः प्रदर्शितो वृत्तौ । परे तु सन्नियोगशिष्टत्वं-समुच्चयेन विहितत्वं द्वयोर्द्वयोरेव दृष्टमिति प्रत्येकं बोधकतत्सन्नियोगशिष्टत्वेनोभयबोधकतात्पर्येणैकशेषं विनाऽपि सन्नियोगशिष्टपदप्रयोगो भवितुमर्हति, अन्यतरपदसमभिव्याहाररूपतात्पर्यवशात् 'घटौ' इतिवत्, तदुक्तं-"सरूपाणामेकशेष एकविभक्तौ" [ पा० सू० १. २. ६४. ] इति सूत्रे महाभाष्ये, अर्थौ अर्थौ प्रति च यत् तदपि प्रत्यर्थम्, अर्थानर्थान् प्रति यत् तदपि च प्रत्यर्थमिति । तथा च द्वित्वविशिष्टसन्नियोगशिष्टत्वावच्छिन्नबोधकतया सन्नियोगशिष्टपदस्य बहुवचनान्तत्वोपपत्तिः । एकशेषेण तु न निर्वाहः, यावतामेकशेषः क्रियते तावतां ग्रहणेऽप्यवशिष्टानामग्रहणप्रसङ्गाद् विवक्षितसंख्याज्ञानं च दुर्लभम् । अयमाशयः-ननु द्वित्वत्वेन द्वित्वस्य शक्यताव-

च्छेदककोटौ प्रवेशे नित्यद्विवचनान्तत्वप्रयोगोपपत्तिः "ताभ्यां सन्नियोगशिष्टो ङीप् च" इति प्रयोगानुपपत्तिश्च; लक्षणया तथा बोधनसम्भवेऽपि सामान्यतो द्वित्वत्वेन द्वित्वप्रवेशेऽनभीप्सित-द्वित्ववतामपि बोधप्रसङ्गः, तत्तद्द्वित्वत्वेन द्वित्वप्रवेशे तु विवक्षितानां तावतां द्वित्वानां ज्ञानं दुर्लभं स्यादिति चेत्? सत्यम्–वस्तुतो द्वित्वविशिष्टस्य सन्नियोगशिष्टत्वेन बोधकमिति तदर्थात्। एतेन "सन्नियोगशिष्टपदं द्वित्वविशिष्टसन्नियोगशिष्टत्वावच्छिन्नबोधकमित्ययुक्तमेव, 'ताभ्यां सन्नियोगशिष्टो ङीप् च' इति दीक्षितोक्त्या द्वित्वस्य सन्नियोगशिष्टपदप्रवृत्तिनिमित्तकोटावप्रवेशात्" इति कैश्चिदुक्तं, तत् परास्तम्, उभयात्मकाश्च यावन्तो सन्नियोगशिष्टास्तेषां बहुत्वाद् बहुवचनान्तत्वोपपत्तिः। अत एव एकशेषेण न निर्वाहः, प्रत्यर्थशब्दनिवेश इति पक्षे हि तदारम्भादिति। यत्तु–अष्टाध्याय्यां [हैमशब्दानुशासनरीत्या सप्ताध्याय्यां] यावन्तः सन्नियोगशिष्टास्तेषां सर्वेषामेकशेषकरणेनाऽशिष्टाभाव एवेति केचिदाहुः, तन्न–तावतां सन्नियोगशिष्टानामस्माकमेकशेषप्रवृत्तिकाले ज्ञानासम्भवात्, आचार्याणां तज्ज्ञानसम्भवेऽप्यस्मदुद्देशेन तेषां शास्त्रप्रवृत्तेः, अस्माकं तज्ज्ञानस्य तदानीमसत्त्वेन वाक्यार्थबोधविलयप्रसङ्गात्। कथञ्चित् तत्सम्भवेऽपि च तावतामेकशेषकरणेन गौरवापाताच्च। ननु स्वीकृतेऽप्यस्मिन्न्याये पञ्चेन्द्राण्यो देवता अस्येत्यर्थे "देवता" [६. २. १०१.] इत्यणि तस्य "द्विगोरनपत्ये०" [६. १. २४.] इति लुपि "ङ्यादेगौंणस्य०" [२. ४. ९५.] इति ङीनिवृत्तावानस्यापि निवृत्तिरित्यभ्युपगम्यमाने पञ्चेन्द्रशब्दः स्वरान्तो न स्यात्, इन्द्रशब्दाकारेण सह जातस्यानो दीर्घस्य आन्शब्दनिवृत्तिकाले आन्शब्दाकारत्वेनैव ग्रहणात् तन्निवृत्तौ पञ्चेन्द्रशब्दस्य व्यञ्जनान्तत्वापत्तिरिति चेत्? न–आन्कृतस्य विशेषस्यैवापहारे स्वाभाविकस्याकारस्य स्थितौ बाधकाभावात्, *अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते* इति तन्त्रान्तरीयन्यायेनान्तरङ्गदीर्घनिमित्तविनाशकलुकः प्राबल्यबोधनात्, पूर्वं दीर्घाप्रवृत्तेर्वा। नन्वेवमपि पञ्चभिरेनीभिः क्रीतः 'पञ्चैतः' इत्यत्र क्रीतार्थकप्रत्ययस्य "द्विगोरनपत्ये०" [६. १. २४.] इति लुपि "ङ्यादेगौंणस्य०" [२. ४. ९५.] इति ङ्यो लुपि नकारस्यापायेऽपि तकारश्रवणं न स्यात्, देवदत्तहन्तृहतन्यायादिति चेत्? न–अन्यतरापाये सम्भाविते सति उभयोरनुत्पत्तिरित्यर्थस्वीकारेणादोषात्। अग्रिमन्यायेनास्यापोद्यमानत्वेनानित्यत्वमिति प्राचीना आहुः, तदनुसारमेव वृत्तौ तदाश्रित्यैनेयादिप्रयोगाणां सिद्धिरिति प्रतिपादितम्। वस्तुतस्तु न तेन न्यायेनास्यानित्यत्वं ख्यापयितुं शक्यते, तेन गौणस्य निवृत्तौ प्रधानस्यानिवृत्तिरेव विधीयते, तदंशे चास्य न्यायस्य बाध एतावदेव बोधयितुं शक्यते, अनित्यत्वे च सति तस्य न्यायस्यावश्यकतैव न स्यात्, अनित्यत्वेनैव प्रधाननिवृत्त्यभावस्य सिद्धत्वात्। नन्वेवमेन्या अपत्यम् 'ऐनेयः' इत्यादिप्रयोगाः कथमिति चेत्? स्थानिवद्भावेनैव सिद्धत्वात्। अयमाशयः–तत्रेकारलुपि तस्य स्थानिवद्भावेनेकारबुद्ध्या तदपायाभावान्नकारस्य स्थितिर्भविष्यति। न च "स्वरस्य परे प्राग्विधौ" [७. ४. ११०.] इति सूत्रेणैवात्र स्थानिवद्भावो विधेयः, स च प्राक्तनि कस्मिंश्चिद् विधौ कर्तव्ये भवति, न चात्र कश्चित् प्राग्विधिः कर्तव्य इति कथं स्थानिवद्भाव इति शङ्क्यम्, यतः प्राग्विधावित्यत्र विधिशब्दो भावसाधनः, विधानं–विधिर्भावः सत्ता, प्राचो विधौ सत्तायां कर्तव्यायामित्यर्थे, प्राचो नकारस्य सत्ताऽत्र कर्तव्येति तत्प्रवृत्तौ बाधकाभावः। वस्तुतस्तु विधीयते विधिरिति कर्मसाधनविधिशब्दस्वीकारेऽपि दोषाभावः, अत्र नादेशस्यानेन न्यायेन निवृत्तिरूपे कार्ये कर्तव्ये स्थानिवद्भावप्रवृत्त्याश्रयणात्। केचित् तु–णौ परे "जातिश्च णि-तद्धितय-स्वरे" [३. २. ५१.] इति सूत्रेण पुंवद्भावविधानेनास्य न्यायस्यानित्यत्वं ख्यापयन्ति, तेषामयमाशयः–पुंवद्भावविधानस्यैतत्फलं यत् 'एनीमाचष्टे' इत्यर्थे णौ, अनेन पुंवद्भावे एतयतीति रूपं यथा स्यात्, तच्च विनाऽपि पुंवद्भावं णौ परतः "त्र्यन्त्यस्वरादेः" [७. ४. ४३.] इत्यनेनान्त्यस्वरादेर्लुकि ईकारनिवृत्तौ तत्सन्नियोगशिष्टस्य नकारस्यापि निवृत्त्या सिद्धमेव स्यात्, इति पुंवत्त्वविधानं व्यर्थं सदस्य न्यायस्यानित्यतां ज्ञापयतीति। न च पट्वीमाचष्टे पटयतीत्यादिसिद्धिस्तत्फलमिति वाच्यम्, तत्रापि ईकारनिवृत्तौ तन्निमित्तकस्य वकारस्यापि *निमित्तापाये०* इति न्यायेन निवृत्तौ पुनरप्यन्त्यस्वरादिलोपे रूपसिद्धिसंभवात्। न च *लक्ष्ये लक्षणं सकृदेव प्रवर्तते* इति न्यायेन पुनरन्त्यस्वरादिलोपाप्राप्तिरिति वाच्यम्, विकारकृतभेदेन लक्ष्यभेदस्याश्रयणात्। अत्रोच्यते–दरदोऽपत्यं स्त्रीत्यर्थे "पुरु-मगध-कलिङ्ग-सूरमसद्द्विस्वरादण्" [६. १. ११६.] इत्यणि तस्य द्रिसंज्ञायां "द्रेरञणोऽप्राच्यभर्गादेः" [६. १. १२३.] इति लुपि 'दरद्' इति, तामाचष्टे इत्यर्थे णौ पुंवद्भावेन दारदयतीति रूपमिष्टं, तदर्थं पुंवद्भावविधानस्यावश्यकत्वात्, ततश्च न तेनास्य न्यायस्यानित्यत्वं ज्ञापयितुं शक्यत इति नित्य एवायं न्याय इति ॥ ३० ॥

## *नान्वाचीयमाननिवृत्तौ प्रधानस्य* ॥ ३१ ॥

सि०—पूर्वन्यायेन सामान्यतः सन्नियोगशिष्टयोर्मध्येऽन्यतरस्य निवृत्तावपरस्यापि निवृत्तिरिति बोधितम्, तत्र निवृत्तिश्च द्विधा–भूत्वा निवर्तनं मूलतोऽप्यभवनं चेति तत्रैव न्याये प्रतिपादितम्। तत्रान्वाचीयमानस्यापि सन्नियोगशिष्टत्वेन तन्निवृत्तौ प्रधानस्यापि निवृत्तिः प्राप्नोतीति तद्वारणायायं न्यायः समाश्रीयते। एकस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः, यथा–भिक्षामट

गां चानयेत्यत्र भिक्षार्थं गच्छता प्रधानभूतया भिक्षया सह गवानयनस्यापि विधानम्, अन्वाचयविषयीक्रियमाणश्चान्वाचीयमानः, तस्य निवृत्तौ–स्वभावतोऽभवने सति, प्रधानस्य–तेन सह प्राधान्येन शिष्टस्य, न अपायः–निवृत्तिरिति न्यायार्थः। अत्र 'अपाय' इति पदं पूर्वन्यायादनुवर्त्य व्याख्येयम्, उक्तं च–न्यायानामाचार्येण सहपठितत्वेन परस्परसम्बन्ध इति। एतदुदाहरणम्–'बुद्धीः धेनूः' इत्यादि, अत्र पुंस्त्वाभावात् "शसोऽता०" [१. ४. ५.] इत्यनेन शसः सस्य नत्वाभावेऽपि प्राधान्येन शिष्टो दीर्घः स्यादेव। अस्य ज्ञापकं तु "शसोऽता सश्च नः०" [१. ४. ५९.] इति सूत्रेण नत्वविधेरन्वाचयार्थेन चकारेण विधानमेव, अन्वाचयेन विधानस्य चैतदेव फलं यत्–क्वचित् प्रधानस्यैव विधानेऽपि विधेश्चारितार्थ्यमिति, तच्चैतन्न्यायसत्त्वे एव संगतं स्यादिति ॥ ३१ ॥

## *नान्वाचीयमाननिवृत्तौ प्रधानस्य* ॥ ३१ ॥

त०—अन्वाचयेन विधानं हि तस्यानुषङ्गिकत्वं द्योतयति। तथा च न तत्र मुख्यतया विधानस्यावश्यकत्वं भवति, यथा भिक्षामट गां चानयेति नियुक्तो वटुर्यदि भिक्षार्थमटन् गां पश्यति शक्नोति चानुषङ्गिकत्वेन तामानेतुं तर्ह्यानयति, अन्यथा नानयति, न च तावताऽसावकृतकार्य इत्याख्यायते, प्राधान्येनोक्तस्य भिक्षाटनस्य सम्पादितत्वात्; तथेहापि "शसोऽता सश्च नः पुंसि" [१. ४. ५९.] इति सूत्रेण प्राधान्येन दीर्घ एव विधेयः, नकारादेशश्च सति पुंस्त्वे विधेयोऽसति च न विधेय इति न नियतो व्याप्यत्वात्, व्याप्यनिवृत्तौ हि न व्यापकनिवृत्तिः, अयोगोलके वह्निव्याप्यस्य धूमस्य निवृत्तावपि व्यापकस्य वह्नेरनिवृत्तेः। तथा च न्यायसिद्ध एवायमर्थ इति नात्र ज्ञापकापेक्षा, यत् तु ज्ञापकमुपन्यस्तं तद् दार्ढ्याय। वस्तुतस्तु–अत्रान्वाचयेन नकारविधानमिति न प्रामाणिकं, तथा सति च तस्यैच्छिकत्वापत्तेः, न च तथेष्टमिति नैतेन न्यायेन 'धेनूः, मतीः' इत्यादौ दीर्घः साधयितुं शक्यः, किन्तु सूत्रस्य यावदंशे प्रवृत्तिस्तावदंशे प्रवर्त्तते, यावतोंऽशस्य तु प्रवृत्तेर्निमित्तमेव नास्ति, तस्य प्रवृत्तिः कथं स्यात्। किञ्चात्र सूत्रे ["शसोऽता सश्च नः पुंसि" इत्यत्र] वाक्यार्थद्वयम्–शसोऽता सह पूर्वसमानस्य दीर्घः स्यादित्येकं वाक्यम्, पुंसि च शसः सस्य नत्वं स्यादिति द्वितीयम्, तत्र प्रथमस्य वाक्यस्य प्राधान्यात् तत्सत्त्व एव नत्वं प्रवर्तेत इति 'एतान् गाः पश्य' इत्यादौ न प्रवर्त्तते, प्रथमवाक्याप्रवृत्तेः; धेनूरित्यादौ च प्रथमस्य वाक्यस्य प्रवृत्तावपि निमित्ताभावादेव द्वितीयं न प्रवर्तत इति समुच्चीयमानत्वेऽपि दोषाभावः। यदि चान्वाचीयमानत्वमेव नकारादेशस्याभिमतं तर्हि तु तस्यानुषङ्गिकत्वेनैव दुर्बलत्वं बोधितमेवेति न तन्निवृत्तौ प्रधानस्य निवृत्तिरिति न तदर्थं विशेषवचनाश्रयणमावश्यकम्। नकारादेशस्य गौणत्वेन विधानमेव हि न्यायज्ञापकमित्युच्यते; न्यायार्थश्च गौणत्वादेव सिद्ध इति किं ज्ञापनेन, अत एव पाणिनीये नये नायं न्यायो दृश्यते इति ॥ ३१ ॥

## *निरनुबन्धग्रहणे न सानुबन्धकस्य* ॥ ३२ ॥

सि०—निरनुबन्धकस्य–निर्गतोऽनुबन्धो यस्मात् तस्य, ग्रहणे–सूत्रे समुच्चारणे सति, सानुबन्धकस्य–अनुबन्धेन सहितस्य, न, ग्रहणमिति पदमर्थादाक्षिप्यते, पूर्वत्र ग्रहणपदसाहचर्यात्। "कार्यं स्यादितीहोत्तरत्र च शेषः" इति च प्राचां लेख आर्थिकः, ग्रहणाभावे हि कार्याभावः सुतरामेव सिद्धः। कश्चित् प्रत्ययादिर्निरनुबन्धः क्वचिदन्यत्र सानुबन्धश्च दृश्यते, तत्र विधिप्रदेशेषु कथं व्यवस्थेति संशये, अनुबन्धस्य लक्ष्येऽविद्यमानत्वेनोभयोरैकरूप्यादुभयोरेव ग्रहणमिति पूर्वपक्षे च प्राप्तेऽयं न्यायो निर्णयति यत्–निरनुबन्धकस्यैव ग्रहणमिति, युक्तं चैतत्, शास्त्रे, उभयविधरूपदर्शनाल्लक्ष्ये तददर्शनेऽप्यवश्यमन्यतरस्मिन् परिहरणीये सति, विनिगमकान्तराभावाच्छास्त्रे श्रूयमाणं रूपवैलक्षण्यमेव विनिगमकं स्वीकार्यमिति। तथा च "येऽवर्णे" [३. २. १००.] इति सूत्रे "तस्मै हिते" [७. १. ३५.] इति विहिते निरनुबन्ध एव यप्रत्यये नसादेशो भवति, न तु सानुबन्धे ञ्यादिरूपे, तथा च नासिकायै हितं नस्यमिति भवति, न तु नासिका यत्रास्तीत्यर्थे "सुपन्थादेर्ञ्यः" [६. २. ८४.] इति विहितञ्यप्रत्ययान्ते नासिक्यमित्यत्र। अत्र च ज्ञापकं–"न यि तद्धिते" [२. १. ६५.] इत्यत्र व्यञ्जनमात्रनिर्देशः, तथा हि–तत्र निरनुबन्ध-सानुबन्धयोरुभयोरेव ग्रहणं स्यादित्येतदर्थमेव व्यञ्जनमात्रं निर्दिश्यते, अन्यथा यकारमात्रस्य कस्यापि प्रत्ययस्याभावादेव तथा निर्देशोऽसङ्गतः स्यात्, तथा च व्यञ्जनमात्रनिर्देशेन सूचयत्याचार्यः यदिह यकारादित्वमात्रं विवक्षितमिति तथाभूतो निरनुबन्धः सानुबन्धो वा प्रत्यय इह गृह्यते। अकारसहिततयोपादाने कृते तु तादृशनिरनुबन्धयप्रत्ययस्य सम्भवात् सानुबन्धस्य यस्य ग्रहणमेतन्न्यायविरोधात् कर्तुं न शक्यत इत्येतन्न्यायाशङ्कया कृतो व्यञ्जनमात्रनिर्देश एतन्न्यायज्ञापक इति। यद्यपि 'ये' इति निर्देशे लाघवं नास्ति, 'यि' इत्येतस्य सार्धमात्रिकत्वात् 'ये' इति निर्देशस्य च सार्धद्विमात्रिकत्वादिति लाघवादेव 'यि' इति निर्देशः कृत इति कथयितुं शक्यत इति न तस्य ज्ञापकत्वं संभवति, कथञ्चिदसाङ्गत्ये सत्येव ज्ञापकत्वस्य दृष्टत्वात्, तथापि 'ये' इति व्याप्यनिर्देशमपहाय व्यापकत्वेन 'यि' इति निर्देशः सर्वसङ्ग्रहार्थः, सत्येवास्मिन्

न्याये समुपपद्यत इत्यभिमानः प्राचाम् । ननु सानुबन्धे यप्रत्यये "न यि तद्धिते" [२. १. ६५.] इत्यस्य प्रवृत्तिरेव नास्तीति न तस्य ज्ञापकत्वे स्वांशे चारितार्थ्यम्, ज्ञापकेषु हि स्वांशे चारितार्थ्ये सति फलमन्यत्र भवतीति तदभावेन नास्य ज्ञापकत्वमिति चेत्? उच्यते-धुरं वहतीत्यर्थे "धुरो यैयण्" [७. १. ३.] इति यप्रत्यये "य्वादेर्नामिनः" [२. १. ६३.] इति प्राप्तस्य दीर्घत्वस्य निषेधस्तावद् "न यि तद्धिते" [२. १. ६५.] इति सूत्रेण क्रियते, केचिदन्ये वैयाकरणा धुर्यशब्दस्थं यप्रत्ययं टितमिच्छन्ति तन्मतेऽपि धुर्य इत्यत्र दीर्घनिषेधोऽनेनैव सूत्रेण भवतीति सानुबन्धेऽपि यादौ प्रत्ययेऽस्य प्रवृत्तिरिष्टा, टित्त्वस्य फलं च स्त्रियां टित्त्वाद् ङ्यां "व्यञ्जनात् तद्धितस्य" [२. ४. ८८.] इति यलोपे 'धुरी' इति प्रयोगस्तन्मते । अयं च न्यायोऽनित्यः *निरनुबन्धग्रहणे सामान्येन* इति न्यायान्तरस्याप्यग्रे निरूपयिष्यमाणत्वेन तद्दृष्ट्याऽस्य क्वचिदप्रवृत्तेरावश्यकत्वात् ॥ ३२ ॥

## *निरनुबन्धग्रहणे न सानुबन्धस्य* ॥ ३२ ॥

त०—अनुबध्यन्तेऽपरस्मिन् सम्बध्यन्ते ये तेऽनुबन्धाः, कार्यार्थं प्रत्ययादिषु सम्बद्धा लक्ष्येष्वदृष्टा वर्णाः, दृश्यन्ते च समाना एव प्रत्यया अनुबन्धविशेषेण भिद्यमानाः । ते चानुबन्धाः कार्ये भेदकाः सन्तोऽनुवादस्थलेऽपि भेदकाः स्युरेव, किन्तु यत्रानुबन्धो नोच्चारितस्तत्र न सानुबन्धस्य ग्रहणमिष्टमित्यर्थमयं न्यायः समुपाश्रीयते । परमत्र यज्ज्ञापकमुपन्यस्तं तन्न घटते स्वांशे चारितार्थ्याभावात्, परतन्त्रसम्मतप्रयोगादिकमनुसृत्य स्वतन्त्रे व्यवस्थाया आश्रयणस्यानौचित्यात् । किञ्च न तथापि स्वांशे चारितार्थ्यं सानुबन्धे सत्यपि यकारादित्वस्यानपायात् तत्र न्यायं विनापि प्रवृत्तेर्निराबाधात् । नहि न्यायस्य पूर्वसत्त्वं स्वीकृत्य 'ये' इति पाठे सति सानुबन्धे न प्रवृत्तिः स्यादिति शङ्कया 'यि' इति कृतमिति न्यायसत्त्वमनुमापयतीति कथयितुं शक्यते, 'यि' इति करणे प्रयत्नविशेषस्याभावात्, वर्णमात्रस्य ग्रहणे हि विशिष्टरूपोपादानाभावेन कस्य ग्रहणं कस्य नेति शङ्काया अनुदयात् । निरूपितं च वर्णमात्रग्रहणेऽस्य न्यायस्याप्रवर्तनम्-'औङ आपः' [पा० सू० ७. १. १८.] इति सूत्रे महाभाष्ये, 'औ' इति निरनुबन्धनिर्देशे स्वीकृते सानुबन्धकस्यौकारस्य ग्रहणं न स्यादिति शङ्किते 'अथवा वर्णग्रहणमिदं भवति, न चैतद्वर्णग्रहणेषु भवति, अननुबन्धकग्रहणे न सानुबन्धकस्येति' इत्युक्तम् । तथा च ज्ञापकान्तरमन्वेषणीयमाचार्यवचनमात्रसिद्धत्वं वाऽस्य स्वीकर्तव्यम् । पाणिनीये नये चैकस्यैव प्रत्ययस्य कार्यान्तराभाववदनुबन्धद्वयकरणेनायं न्यायो ज्ञापितः "वामदेवाड्ड्यड्ड्यौ" [पा० सू० ४. २. ९.] इति सूत्रे महाभाष्ये । किञ्चास्य न्यायस्य *निरनुबन्धग्रहणे सामान्येन* इति न्यायान्तरप्रतिक्षेप्यत्वादनित्यत्वमपि न युक्तम्, वर्णग्रहणे एतदप्रवृत्तिसूचकभाष्यस्वारस्यात् । न च न परतन्त्रीयवचनमस्मत्तन्त्रे व्यवस्थापकमिति शङ्कनीयम्; यतो न तद्वचनमात्रमपि तु युक्तिसहकृतम्, अनुबन्धाऽऽसञ्जनयोग्ये विशिष्टरूपे निर्दिष्टे हि सानुबन्धस्य निरनुबन्धस्य वा ग्रहणमिति विचारणा भवति, यत्र च वर्णमात्रग्रहणं तत्रेदृशसंशयाभावेन न्यायाप्रवृत्तेः । तथा च "रः पदान्ते विसर्गस्तयोः" [१. ३. ५३.] इत्यत्र वर्णमात्रस्य निर्दिष्टत्वेन सानुबन्धस्य निरनुबन्धस्य वा ग्रहणमिति संशयाभावेनास्य [*निरनुबन्धग्रहणे सामान्येन* इति] न्यायस्यानावश्यकत्वादिति तदपेक्षयास्यानित्यत्वस्वीकृतिरनर्थिकेति । सत्यनित्यत्वफले ज्ञापकसिद्धत्वेनासार्वत्रिकत्वमेव शरणमिति ॥ ३२ ॥

## *एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य* ॥ ३३ ॥

सि०—पूर्वन्यायेनानुबन्धसम्बन्धिविचारस्य प्रस्तुतत्वेन तत्सदृशविषयस्यास्य न्यायस्य प्रकरणसङ्गतत्वम् । यथा निरनुबन्धस्य ग्रहणे न सानुबन्धकस्य ग्रहणमनुबन्धस्य भेदकस्य सत्त्वात्, तथैकानुबन्धकश्चेत् प्रत्ययादिः सूत्रे समुपात्तस्तर्हि तदधिकानुबन्धस्याऽप्यन्यत्र स्थितस्य भेदकत्वौचित्यादेव तद्विशिष्टस्याग्रहणम् । तथा च द्व्यनुबन्धकस्येत्यत्र द्वित्वसंख्याऽनेकसंख्योपलक्षणार्था, एकानुबन्धकग्रहणे नानेकानुबन्धस्य ग्रहणमिति भावः । एकानुबन्धकस्येत्यत्रैकपदं द्व्यनुबन्धकत्वेनेष्टप्रत्ययादिघटितानुबन्धद्वयान्यतरपरम्, त्र्यनुबन्धकत्वेनेष्टप्रत्ययादिघटितानुबन्धत्रयान्यतमपरमिति च मन्तव्यम् । तथा च न भिन्नानुबन्धघटितविषयत्वमस्य, अन्यथा णकारानुबन्धघटितस्य ककारानुबन्धघटितस्य चैकानुबन्धघटितत्वसाम्यादेकग्रहणेऽपरग्रहणापत्तेः । अत्र "सूत्रोक्ते एकानुबन्धे शब्दे योऽनुबन्धोऽस्ति तस्यानुबन्धस्य द्व्याद्यनुबन्धकेऽपि सद्भावाद् द्व्याद्यनुबन्धकस्यापि ग्रहणे प्राप्ते प्रतिषेधार्थोऽयं न्यायः" इति प्राचीनानामुक्तिरपि पूर्वोक्ततात्पर्यिकैव, अन्यथा संख्यामात्रपरत्वे एकानुबन्धके योऽनुबन्धः स द्व्यनुबन्धकेऽपि स्यादेवेति नियमाभावेन तदुक्तेरसङ्गत्यापत्तेः । एतदुदाहरणं यथा-"य्यक्ये" [१. २. २५.] इत्यत्र एकानुबन्धस्य क्यस्य वर्जनाद् द्व्यनुबन्धके क्यनि क्यङि चावावौ भवत एव, तथा च गामिच्छति-गव्यति, नावमिच्छति-नाव्यति, गौरिवाचरति-गव्यते, नौरिवाचरति-नाव्यते इत्यादिसिद्धिः । ज्ञापकं चास्य "दीर्घश्च्वियङ्-यक्-क्येषु च" [४. ३. १०८.] इति सूत्रे क्येष्विति बहुवचनम्, तद्धि क्य-क्यन्-क्यङ्ष्-क्यङामविशेषेण संग्रहार्थम्, यदि चायं न्यायो न स्यात् तर्हि जातिविवक्षयासेकवचननिर्देशेऽपि सर्वेषां संग्रहे सिद्धे तद्वैयर्थ्यं स्पष्टमेव स्यात्,

तथा चैतन्न्यायासत्त्वे साफल्यमनुपलभमानो बहुवचननिर्देश एतन्न्यायं सूचयति । अस्य च ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात् "आपो ङितां यै-यास्-यास्-याम्" [१. ४. १७.] इत्यत्र आप इव डापोऽपि ग्रहणेन मालायै इत्यत्रेव "ताभ्यां वाप् डित्" [२. ४. १५.] इति डापि 'सीमायै' इत्यादावपि भवति 'यै' इत्यादिरादेशः, अन्यथा एकानुबन्धकस्यापो ग्रहणे डापो ग्रहणं न स्यादिति 'सीमायै' इत्याद्यसिद्धिरेव स्यादिति ॥ ३२ ॥

### *एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य* ॥ ३३ ॥

त०—अत्र संख्याविशेषो न विवक्षितः, तथा च द्व्यनुबन्धकेऽत्र द्वित्वस्यानेकत्वोपलक्षकत्वमित्यावेदितं वृत्तौ । पाणिनीये च *तदनुबन्धकग्रहणे नातदनुबन्धकस्य* इत्येवंरूपेणायं न्यायः पठितः । तदर्थश्च तन्मात्रानुबन्धग्रहणे स चान्यश्चानुबन्धो यत्र तद्ग्रहणं नेति, अत्र च नान्यानुबन्धकृतसंख्यासाम्यमादाय दोषः । युक्तं चैवमेव न्यायस्वरूपस्वीकरणम्, प्रकृतन्यायस्वरूपे हि एकानुबन्धग्रहणे द्व्यनुबन्धकस्याग्रहणसाधनेऽपि द्व्यनुबन्धस्य ग्रहणे त्र्यनुबन्धस्य ग्रहणं न वारितं स्यात् प्रकृतन्यायाविषयत्वात्, तथा च क्यङो ग्रहणे क्यङ्षोऽपि ग्रहणं स्यात् । किञ्च 'यङ्-यक्-क्यानाम्' एकानुबन्धत्वसाम्यात् परस्परं ग्रहणापत्तिः, तद्वारणाय *तदनुबन्धकम्* इत्यादि न्यायस्वरूपं स्वीकार्यमेव । यङो भिन्नानुबन्धत्वेऽपि यक्-क्ययोस्त्वेकानुबन्धत्वमेवेति तयोः परस्परं ग्रहणवारणमनेन न्यायेन दुरुपपादम् । अत एव एकानुबन्धग्रहणे सम्भवतीत्यादि प्रकृतन्यायव्याख्यानं भाष्यकृताऽनादृतमित्यास्तां विस्तरः ॥ ३३ ॥

## *नानुबन्धकृतान्यसारूप्या-ऽनेक-स्वरत्वा-ऽनेकवर्णत्वानि* ॥ ३४ ॥

सि०—अनुबन्धसम्बन्धिविचारस्य प्रकृतत्वात् तद्विषयमपरमपि न्यायमवसरप्राप्तत्वाद् व्याख्यातुमयं न्याय उपन्यस्तः । तत्रानुबन्धेषु पक्षद्वयं दृश्यते—अनुबन्धा बोधकानवयवा इत्येकः पक्षः, अनुबन्धा बोधकावयवा इति द्वितीयः पक्षः । अवयवस्य समवायसम्बन्धेन सम्बद्धत्वात् तत्रापि [बोध्येऽपि] समुपलभ्यमानत्वमावश्यकं स्यात्, न चैवं दृश्यते, शास्त्रेऽनुबन्धाः सन्तोऽपि लक्ष्ये नोपलभ्यन्ते, अतश्च अनवयवा एवेति प्रथमपक्षाशयः । अत्र पक्षे बहूनां दोषाणां सत्त्वेन द्वितीयः पक्ष एव समाश्रीयते, तत्पक्षवादिनामयमाशयः- शास्त्रे बोधके 'सन्' इत्यादिपदे तस्य समुपलभ्यमानत्वेन लक्ष्ये समुपलभ्यमानत्वाभावेऽपि तस्य बोध्यावयवत्वं माऽस्तु, बोधक'सन्'-पदावयवत्वं केन वार्यताम्? यो य एकजातीयसम्बन्धेन यत्रोपलब्धः सन्नन्यत्र नोपलभ्यते स तस्यावयव एव, अनवयवो हि काकादिरेकजातीय[संयोग]सम्बन्धेन गृहवृक्षादिषूपलभ्यते, नैवमयम्, यत्र पूर्वं दृष्टस्तदन्यत्रानुपलभ्यमानत्वादित्यवयवत्वमेव । तथा च 'कित्' 'ङित्' इत्यादिषु बहुव्रीहिसमासोऽपि स्वरसत एवोपपद्यते, अन्यथा [अनवयवत्वे]ककार इत् यस्य स कित्, ङकार इत् यस्य स ङित् इत्यादिष्ववयवार्थकषष्ठ्यर्थे बहुव्रीहिसमासो न स्यात्, तदर्थमनेकक्लिष्टकल्पनाऽपेक्षया अवयवत्वस्वीकार एव लाघवादिति । एवं चानुबन्धकृतमनेकप्रत्ययादीनामसरूपत्वमनेकस्वरत्वमनेकवर्णत्वं च प्राप्तम्, धात्वादीनां चानेकस्वरत्वं प्राप्तम्, तच्चानिष्टमिति तद्वारणायाचार्यैर्न विशिष्य किमपि वचनमुपन्यस्तं, परन्तु तदाचारादयं न्यायः सूचित इति स इहोपन्यस्तः । तस्यायमर्थः—अनुबन्धाः—इत्संज्ञका वर्णाः, तैः कृतानि—तन्निमित्तकानि, असारूप्यं चानेकस्वरत्वं चानेकवर्णत्वं चेत्येतानि न भवन्तीति । असारूप्यं—सारूप्यभिन्नत्वम्, सारूप्यं च—[संक्षेपेण] स्वघटकयावद्वर्णघटितत्वम्, यथा—डप्रत्ययस्यासरूपोऽण्प्रत्ययः, तथा हि—स्वं-डप्रत्ययः, तद्घटकः—डकारोऽकारश्च, तद्घटितत्वमण्प्रत्ययस्य नास्तीत्यसरूपत्वं तयोः परस्परमस्ति । तथा चास्मिन् न्याये स्वीकृते तयोः सरूपत्वमेव भवतीत्यनयोर्विषये "असरूपोऽपादे वोत्सर्गः प्राक् क्तेः" [५. १. १६] इत्यस्य प्रवृत्त्यभावान्नित्यमेव डेनाण् बाध्यते, तथा च 'गोद' इत्यत्र "आतो डोऽह्वा-वा-मः" [५. १. ७६.] इति ड एव भवति, न तु "कर्मणोऽण्" [५. १. ७२.] इत्यण्, अन्यथा गोदाय इत्यनिष्टं रूपं स्यात् । अयं भावः—अपवादप्रत्यये—नोत्सर्गप्रत्ययस्यैकान्तेन बाधे प्राप्ते "असरूपोऽवादे वोत्सर्गः प्राक् क्तेः" [५. १. १६.] इति सूत्रं तद्वारणाय कृतम् । अस्यार्थः—"आ तुमोऽत्यादिः कृत्" [५. १. १.] इत्यतः प्रारब्धे कृत्प्रत्ययाधिकारे क्तेः प्राग् ये प्रत्यया वक्ष्यन्ते तेष्वपवादप्रत्ययेनोत्सर्गप्रत्ययो नैकान्तेन बाध्यते, किन्तु विकल्पेनोभावपि भवत एव, यदि तयोः परस्परमसारूप्यं स्यादिति; यदि पुनरुत्सर्गप्रत्ययोऽपवादप्रत्ययेन सदृशरूपः स्यात् तदा सोऽपवादप्रत्ययेन बाध्यत एवेति सामर्थ्याल्लभ्यते । इह च "कर्मणोऽण्" [५. १. ७२.] इत्युत्सर्गशास्त्रम्, "आतो डोऽह्वा-वा-मः" [५. १. ७६.] इति चापवादशास्त्रम्, तयोश्च कृदधिकारस्थत्वम्, ततश्चानुबन्धकृतं तयोरसदृशत्वं यद्यप्यस्ति तथाप्येतेन न्यायेनानुबन्धकृतस्यासरूपत्वस्याभावात् सरूपयोश्चात्र बाध्यबाधकभावाभावाड्ड एव भवति, न त्वणिति । अत्रांशे ज्ञापकं तु "कृ-वृषि-मृजि-शंसि-गुहि-दुहि-जपो वा" [५. १. ४२.] इत्यनेन क्यपो विकल्पेन विधानम्, तद्धि पक्षे "ऋवर्ण-व्यञ्जनाद् घ्यण्" [५. १. १८.] इति सूत्रविहितो घ्यणपि यथा स्यादित्येवमर्थम्, एतन्न्यायाभावे चानुबन्धकृतासारूप्येण "असरूपोऽपवादे वोत्सर्गः

प्राक् क्तेः" [ ५. १. १६. ] इति सूत्रबलादेव सिद्ध इति विकल्पविधानं व्यर्थमेव, तच्च व्यर्थं सदनुबन्धकृतमसारूप्यं न भवतीति ज्ञापयति, ततश्च क्यप्-घ्यणोः सरूपत्वेन परस्परं बाध्यबाधकभावः स्यादिति क्यपो विषये घ्यणः प्रवृत्तिर्न स्यादिति विकल्पेन विधाने तस्य पाक्षिकी प्रवृत्तिर्भवति ॥ अनेकस्वरत्वं यथा—"डुपचींष् पाके" इति धातुपाठेऽनेकस्वरत्वेन पठितस्यापि परोक्षायाः पपाचेत्यत्र "धातोरनेकस्वरात्०" [ ३. ४. ४६. ] इत्याम् न भवति, स चानुबन्धकृतानेकस्वरत्वस्याभाव एव सम्भवति । अत्र च ज्ञापकं—"निन्द-हिंस-क्लिश-खाद-विनाशि-व्याभाषा-ऽऽसूया-ऽनेकस्वरात्" [ ५. २. ६८. ] इति सूत्रे निन्दादिग्रहणम्, अनुबन्धकृतस्यानेकस्वरत्वस्य स्वीकारे च निन्दादयः सर्वेऽप्यनेकस्वरा एव; "णिदु कुत्सायाम्" "हिसुप् हिंसायाम्" इत्यादिरीत्या धातुपाठे पाठात्, ततश्चानेकस्वरत्वेनैव तेषां ग्रहणे सिद्धे पृथक् तेषां पाठो व्यर्थ एव स्यात्, अतश्च तेषां पाठेन विज्ञायते यत्—अनुबन्धनिमित्तकमनेकस्वरत्वं न सूत्रकृतामभिप्रेत्तमिति । तथा च पपाचेत्यत्राऽप्यनुबन्धकृतमनेकस्वरत्वमादायाम् न भवति, निन्दादीनामनेकस्वरत्वाभावेन तेषां पाठस्य चारितार्थ्यं च ॥ अनेकवर्णत्वं यथा—"वन्याङ् पञ्चमस्य" [ ४. २. ६५. ] इति विहितस्याङादेशस्य ङकारेणानुबन्धेन सह वर्णद्वयरूपत्वेऽप्यनेन न्यायेनानेकवर्णत्वाभावबोधनात्—"घुणि भ्रमणे" "वन भक्तौ" इत्येताभ्यां धातुभ्यां "मन् वन् क्वनिप् विच् क्वचित्" [ ५. १. १४७. ] इत्यनेन वनि 'घ्वावा, वावा' इत्यत्र "षष्ठ्याऽन्त्यस्य" [ ७. ४. १०६. ] इति परिभाषया पञ्चममात्रस्यैवाङादेशो भवति, अन्यथा "अनेकवर्णः सर्वस्य" [ ७. ४. १०७. ] इति परिभाषया परत्वात् पञ्चमान्तस्य धातोः सम्पूर्णस्य स्थाने आङादेशः स्यात् । अत्रांशे ज्ञापकश्च—"व्या पुत्र-पत्योः केवलयोरीच् तत्पुरुषे" [ २. ४. ८३. ] इति सूत्रे व्याशब्दस्य स्थानित्वेन षष्ठीनिर्देशस्यावश्यकत्वेऽपि 'व्या ईच्' इत्यभेदनिर्देशः, तद्धि कारीषगन्ध्यायाः पुत्रः—कारीषगन्धीपुत्र इत्यत्र सर्वस्य व्याशब्दस्य 'ईच्'आदेशविधानार्थः, स च षष्ठीनिर्देशेऽपि 'ईच्'आदेशस्यानेकस्वरत्वेन सिद्ध एवेति व्यर्थ एवाभेदनिर्देशः । कारीषगन्ध्याशब्दश्च करीषस्येव गन्धो यस्येत्यर्थे बहुव्रीहिसमासे "वोपमानात्" [ ७. ३. १४७. ] इति इसमासान्ते-करीषगन्धिः, तस्यापत्यं पौत्रादि स्त्रीत्यर्थे "ङसोऽपत्ये" [ ६. १. २८. ] इत्यणि "वृद्धिः स्वरेष्वादेः०" [ ७. ४. १. ] इति वृद्धौ "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे "अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्य ष्यः" [ २. ४. ७८. ] इत्यनेनाणः ष्यादेशे "आत्" [ २. ४. १८. ] इत्यापि सति सिध्यति, तथा च

९ न्यायसमु०

संपूर्णस्य व्याशब्दस्य 'ईच्' आदेशो यथा स्यादित्येवमर्थोऽभेदनिर्देशोऽनुबन्धकृतमनेकवर्णत्वं न भवतीति सूचयतीति सिद्धम् । यद्यपि 'व्याया ईच्' इति षष्ठीनिर्देशे गौरवमप्यस्ति तथाप्यभेदनिर्देशे बुद्धिकृतगौरवस्यापि सत्त्वेनोभयोः साम्यमेवेति संतोष्टव्यम्, नहि वर्णोच्चारणगौरवमेव गौरवतयादरणीयं न मनोव्यापारगौरवमिति राजाज्ञास्ति । तथा चोभयनिर्देशस्य साम्येऽपि प्रसिद्धं स्थान्यादेशभावमपहाय प्रकृतिविकृतिभावरूपाभेदाश्रयणमेतन्न्यायांशज्ञापकमेवेति सुस्थम् ॥ अयं च न्यायः प्रथमांशेऽनैकान्तिकः, तेन डा-डाचोरनुबन्धमात्रकृतमसारूप्यं भवत्येवेति 'पिता कृत्वा गतः' इति पितृशब्दस्य प्रथमैकवचने "ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः" [ १. ४. ८४. ] इति डाविधानेन निष्पन्नं 'पिता' इति पदं डाजन्ततया "ऊर्याद्यनुकरणच्विडाचश्च गतिः" [ ३. १. ४२. ] इति सूत्रेण गतिसंज्ञं न भवति, तत्र सूत्रे डाचो ग्रहणेन 'द्वितीयाकृत्य क्षेत्रं गतः' इत्यादौ "तीयशम्बबीजात् कृगा कृषौ डाच्" [ ७. २. १३५ ] इति विहितस्यैव ग्रहणात् । तथाच पूर्वत्र [ पिता कृत्वा गतः ] इत्यत्र गतिसंज्ञाया अभावात् "गति-कन्यस्तत्पुरुषः" [ ३. १. ४२. ] इति समासो न भवतीति पूर्वोत्तरपदव्यवस्थाया अभावात् "अनञः क्त्वो यप्" [ ३. २. १५४. ] इति यबादेशो नाभूत्, द्वितीयाकृत्य गत इत्यत्र तु "ऊर्याद्यनुकरण०" [ ३. १. २. ] इति गतिसंज्ञया समासे यबादेशो भवत्येव । सति चाद्यांशस्य स्थैर्येऽनुबन्धकृताऽसारुप्यस्याभावादुभयोरैकरूप्येण ग्रहणं स्यादित्युभयोर्गतिसंज्ञकत्वं स्यादेव । वस्तुतस्तु नैतदर्थं न्यायाद्यांशस्यानित्यत्वमावश्यकम्, डाग्रहणे एव कर्त्तव्ये 'डाच्' इति चकारविशिष्टग्रहणात्, तद्विहितस्य ग्रहणमनिष्टमिति ज्ञातुं शक्यत्वात् । डात्वं हि डा-डाचोरुभयोरपि सामान्यं रूपं, तदनादृत्य विशेषरूपग्रहणे विशेषस्यैव ग्रहीतुमौचित्यात्, सामान्यग्रहणे विशेषग्रहणसम्भवेऽपि विशेषग्रहणे सामान्यग्रहणस्यानौचित्यात्, ततश्च शेषांशद्वयस्येवास्याप्यंशस्यानैकान्तिकत्वं न प्रतीयते ॥ अत्रेदं विचार्यते—नानुबन्धकृतमनेकवर्णत्वमित्यस्मिन्नंशे यत् "व्या पुत्र-पत्योः केवलयोरीच् तत्पुरुषे" [ २. ४. ८३. ] इति सूत्रस्थोऽभेदनिर्देशः सर्वादेशार्थं कृतो ज्ञापक इति तन्न संगच्छते, असत्यप्यभेदनिर्देशे 'व्या' इत्यस्य प्रत्ययत्वेन तद्विषये "प्रत्ययस्य" [ ७. ४. १०८ ] इति परिभाषासूत्रस्य प्रवृत्त्या सर्वस्यैवादेशः स्यादिति तद्वैयर्थ्यस्य स्पष्टत्वात् । न च 'व्या' इत्यस्य समुदायरूपत्वेन कथं प्रत्ययत्वमिति वाच्यम्, अण इञो वा प्रत्ययस्य स्थाने विहितत्वात्, 'तदादेशस्तद्वत्' इति सिद्धान्तात् व्यस्य प्रत्ययत्वम्, आपश्च प्रत्ययत्वं स्वत एव, तयोश्च सम्बन्धेन

निष्पन्नस्य 'ष्या' इत्यस्यैकजातीयमाता-पितृनिष्पन्नपुत्रस्यैकजातीयत्ववत् प्रत्ययद्वयसम्पन्नस्य तस्य प्रत्ययत्वानपायात् । तथा चाभेदनिर्देशं विनाऽपि संपूर्णस्यादेशः सिद्ध एवेति ज्ञापितेऽप्यस्मिन्नंशे न तस्य चारितार्थ्यमिति चेत् ? अत्रोच्यते—ष्यस्य प्रत्ययादेशत्वेन प्रत्ययत्वे सत्यपि 'ष्या' इत्यस्य प्रत्ययत्वमयुक्तम्, एकस्य तादृशस्य कस्यचित् प्रत्ययत्वाभावात्, माता-पितृजन्यपुत्रस्यैकजातीयत्वदृष्टान्तस्यानेन दार्ष्टान्तिकेन सह वैषम्यात्, नहि पुत्रे पित्रो रूपे पृथक् पृथक् साक्षाल्लक्ष्येते, इह चोभयोः [ ष्यस्य आपश्च ] रूपे पृथक् साक्षादेव लक्ष्येते, ततश्च नायमेकप्रत्ययरूपः किन्तु प्रत्ययसमुदायरूप इति तस्य प्रत्ययत्वेन ग्रहणाभावात् "प्रत्ययस्य" [ ७. ४. १०८. ] इति परिभाषाया अप्रवृत्तेः । प्रत्ययसमुदायस्य प्रत्ययकार्यस्वीकारे च स्वाङ्गसमुदायस्यापि स्वाङ्गकार्यं स्वीकर्तव्यं स्यादिति कल्याणं पाणिपादं यस्याः सेत्यर्थे कल्याणपाणिपादेत्यत्र स्वाङ्गसमुदायस्यापि स्वाङ्गत्वेन "असहनञ्०" [ २. ४. ३८ ] इति ङीप्रत्ययस्यापि प्रसङ्गः स्यात् । यद्यपि भोजवंशजा क्षत्रिया—भोज्या, अत्र आपि परे "भोज-सूतयोः क्षत्रिया-युवत्योः" [ २. ४. ८१. ] इति सूत्रेण भोजशब्दान्त्याकारस्य 'ष्य' आदेशे प्रत्ययसमुदायरूपत्वं 'ष्या' इत्यस्य नास्ति तथापि 'ष्याया' इति भेदनिर्देशे "षष्ठ्यान्त्यस्य [ ७. ४. १०६. ] इत्यस्य प्राप्त्या सर्वादेशत्वमसम्भवीत्यभेदनिर्देशस्य तदर्थत्वमस्य न्यायांशस्य ज्ञापकमित्यस्मिन्नभिप्रेतार्थे बाधकाभाव इत्येतावन्मात्रे तात्पर्यात् ॥ ३४ ॥

---

## *नानुबन्धकृतान्यसारूप्या-ऽनेकस्वरत्वा-ऽनेकवर्णत्वानि ॥ ३४ ॥

त० —एतन्न्यायस्योत्थितिबीजं चानुबन्धानां बोधकावयवत्वस्वीकार एव । 'सन्' इत्यादि प्रत्ययोपस्थापकपदं बोधकम्, 'स' इत्यादि लक्ष्यघटकशब्दस्वरूपं च बोध्यम्, बोधकेष्वनुबन्धा उपलभ्यन्ते बोध्येषु च नोपलभ्यन्ते, अतो बोधकावयवत्वमपि तेषां सन्दिह्यते, बोध्य-बोधकयोरर्थ-शब्दयोर्वैयाकरणानां मतेऽभेदेन बोध्यानवयवत्वे बोधकानवयवत्वमपि तेषां स्यादिति सन्देहः । अत्र च पाणिनीये तन्त्रे महाभाष्ये "तस्य लोपः" [ पा० सू० १. ३. ९. ] इति सूत्रे इत्थं विचारितम्—"अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः ?, "एकान्तस्तत्रोपलब्धेः" [ वार्तिकम् ], एकान्त इत्याह, कुतः ? तत्रोपलब्धेः, तत्रस्थो ह्यसावुपलभ्यते, तद्यथा वृक्षस्य शाखा वृक्षैकान्तोपलभ्यते" इति । अत्र कैयटः—"एकान्तः—एकदेशः, अवयव इत्यर्थः, अनेकान्तस्तूपलक्षणमेव केवलम्, यथा गृहस्य काकः । तत्रोपलभ्यमानस्य रूपद्वयदर्शनाद् वृक्षे शाखा-वलाकयोरिवेति प्रश्नः । [ तत्रोत्तरम्— ] एकान्तस्तत्रोपलब्धेरिति । ननु यदेव संशयनिमित्तं स एव कथं निश्चयहेतुः ?, उच्यते—सामर्थ्यादवधारणमाश्रीयते—तत्रैवोपलब्धेरिति, अवयवस्तत्रैवोपलभ्यते, अनवयवस्तु तत्र चान्यत्र च । ननु वकारस्य वन-व्रण-वृक्षादिषु बहुशूपलब्धिः, न चासावनवयवः, नैष दोषः—भिन्नसमुदायविषयं वर्णान्तरमेव तदिति शकुनिभाष्ये [ यदि पुनरिमे वर्णाः शकुनिवत् स्युः, आन्यभाव्यं तु कालशब्दव्यवायादिति प्रथमाध्यायप्रथमपादभाष्ये ] प्रतिपादितम् ।" इति । तथा च लोपशास्त्रज्ञानात् पूर्वं यस्तत्रोपलभ्यत एव सोऽवयव इत्यर्थः, अन्यथा शाखाया अपि छेदनोत्तरमन्यत्रोपलम्भादनवयवत्वं स्यात् । एवं चानुपलम्भकयत्नं विनाऽपि तत्र चान्यत्र चोपलभ्यमानोऽनवयवः, तं विना तत्रोपलभ्यमान एव यः सोऽवयव इति भाष्याशय इति परे" । इत्थमनुबन्धानामवयवत्वमेवेति स्वमतं प्रदर्श्य तत्र प्रसक्तानसारूप्यादिदोषानुद्भाव्य तदुद्धरणायानवयवत्वपक्षमुपस्थाप्य तत्र च दोषोद्धारं कृत्वा "उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति, किमत्र न्याय्यमित्याशङ्क्य—"एकान्ता इत्येव न्याय्यम्, कुत एतत् ? अत्र हि हेतुर्व्यपदिष्टः, यच्च नाम सहेतुकं तन्न्याय्यम् ।" इत्येकान्तपक्षो [ अवयवत्वपक्षः ] व्यवस्थापितः [ तत्रैव महाभाष्ये ], अत्र च प्राचीन-नवीनयोर्बहुविवादः—बोध्यावयवत्वं बोधकावयवत्वं भाष्यकृतोऽभिमतमिति, किञ्चानुबन्धत्वमिति, कथं चात्र पक्षता, किं साध्यस्वरूपं, किं हेतुस्वरूपमित्यादिविषये, तच्चात्रानुपयुक्तमिति न विचार्यते । स्वमते च तत्रोपलब्धिदर्शनादवयवत्वमेव निश्चित्य तत्पक्षे समापतितानसारूप्यादिदोषानुद्धर्तुमयं न्यायः संगृहीतः । अनुबन्धानां च बोधकावयवत्वेन डा-ऽणोरनुबन्धहेतुकमसारूप्यं प्राप्तं तदनेन न्यायेन निषिद्धमिति न डविषयेऽण् भवतीति पूर्वं प्रतिपादितमेव । अत्रेदं शङ्क्यते—बोधकावस्थायामसरूपयोरित्यर्थस्य विवक्षणे सर्वेषामेव प्रत्ययानां प्रायोबोधकावस्थायामसरूपत्वेन व्यावर्त्यालाभेन "असरूपोऽपवादे०" [ ५. १. १६. ] इति सूत्रेऽसरूपग्रहणस्य वैयर्थ्यं स्यात्, किञ्च तत्र पक्ष एव न्यायस्वीकारोऽपि कर्तव्य इति लाघवानुरोधेन प्रायोगिकासरूपत्वस्यैव ग्रहणं कर्तव्यं, प्रयोगे च डा-ऽणोरसरूपत्वाभावेन सरूपत्वाड्डविषयेऽणः प्राप्तिरेव नेति नास्ति न्यायस्वीकार आवश्यक इति, अत्रोच्यते—वाक्यार्थबोधकाले लक्ष्यैकचक्षुषां प्रायोगिकरूपज्ञानाभावेनौपदेशिकरूपग्रहणस्यैवौचित्यमिति । अयमाशयः—प्रायोगिके हि रूपे डा-ऽणोः सारूप्यमिति लक्ष्यैकचक्षुष्का एव जानन्ति, लक्षणैकचक्षुष्काणामस्माकं कृते तु पूर्वं तस्य [ प्रायोगिकरूपस्य ] दुर्ग्रहत्वेन शास्त्रेषूपदिष्टस्यैव रूपस्य सरूपत्वादिव्यवहारप्रयोजकत्वमिति डा-ऽणोर्विरूपत्वेन "असरूपोऽपवादे०" [ ५. १. १६. ] इत्यत्रासरूपत्वेन ग्रहणाद् विकल्पेन बाधापत्तिरिति डविषयेऽणोऽप्याप्तिः, तद्वारणायैतन्न्यायांशस्वीकारस्यावश्यकत्वमिति ॥

ननु किमिदमसरूपत्वम्? न तावदसमानरूपवत्त्वं तत्, सर्वेषां रूपाणां स्वापेक्षया समानत्वेनाव्यभिचारात्; नापि स्ववृत्तिरूपवत्त्वसम्बन्धेन स्वविशिष्टत्वं स्वसरूपत्वम्, तव्य[प्रत्यय]स्य क्तप्रत्ययसरूपत्वापत्तेः, स्ववृत्तिरूपं 'त' इति, तद्वत्त्वोभयोरप्यस्तीति स्वविशिष्टत्वाक्षतेः। किञ्च नीलघटशब्दस्यापि घटशब्दसरूपत्वापत्तिः, स्ववृत्तिघटत्वरूपस्य तत्रापि सत्त्वादिति चेत्? अत्रोच्यते—स्वपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्याप्त्यधिकरणत्वसम्बन्धेन स्वविशिष्टत्वमेव स्वसरूपत्वम्। एतन्न्यायसहकारेण तु स्वघटकानुबन्धेतरयावद्वर्णघटितपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्याप्त्यधिकरणत्वं स्वसरूपत्वम्, परन्त्वत्र यावत्त्वं दुर्वचम्, तस्मात् स्वविशिष्टत्वं स्वसरूपत्वम्, वैशिष्ट्यं च स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्घटितत्व-स्वघटकावृत्तितादृशधर्मवदघटितत्वोभयसम्बन्धेन। न च सरशब्द-रसशब्दयोः परस्परवैशिष्ट्यसत्त्वात् सरूपत्वापत्तिरिति वाच्यम्, स्वं-सरशब्दः, तद्घटकावृत्तितादृशो धर्मो रशब्दोत्तरत्वविशिष्टसत्वं, तद्वान् 'रस' इति तद्घटितत्वस्यैव रसशब्दे सत्त्वात्, एवं रसशब्दघटकावृत्तितादृशो धर्मः सशब्दोत्तरत्वं, तद्घटितत्वस्यैव सरशब्दे सत्त्वेनादोषात्। न्यायबलेन तु धर्मेऽनुबन्धावृत्तित्वं निवेशनीयमित्यन्यत्। अयमाशयः—'असमानरूपवत्त्वमसरूपत्वम्' इति स्वीकारे सर्वेषां रूपाणां स्वापेक्षया साम्येन सर्वस्य स्वसरूपत्वमेव स्यादित्यसरूपपदेन कस्यापि व्यावृत्तिर्न स्यात्, इति तद्दोषपरिहाराय स्ववृत्तिरूपवत्त्वसम्बन्धेन स्वविशिष्टत्वं सरूपत्वं तद्भिन्नत्वमसरूपत्वमिति स्वीकारे स्वस्मिन् स्ववैशिष्ट्याभावेऽपि तव्यप्रत्ययस्य क्तप्रत्ययेन सह स्वरूपत्वापत्तिः, अस्ति हि तव्येऽपि तकाररूपवत्त्वं क्तप्रत्ययेऽपि च; एवं नीलघटशब्दस्य यथा घटरूपवत्त्वं तथा केवल'घट'शब्दस्यापि तादृशरूपवत्त्वमिति तयोः सरूपत्वापत्तिः; एतद्दोषपरिहाराय स्वपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्याप्त्यधिकरणत्वसम्बन्धेन स्वविशिष्टत्वमेव स्वसरूपत्वमिति स्वीकारे पूर्वत्र तव्यप्रत्यये पर्याप्ता व्याप्यवर्तिनी या श्रावणप्रत्यक्षविषयता तकारोत्तराकारोत्तरवकारोत्तरयकारोत्तराकारत्वरूपा, तदवच्छेदको धर्मस्तादृशानुपूर्वी, तत्पर्याप्त्यधिकरणत्वं क्तप्रत्यये नास्तीति तादृशसम्बन्धेन तव्यप्रत्ययवैशिष्ट्यं क्तप्रत्यये नास्तीति न तयोः सरूपत्वम्। एतन्न्यायसहकारेण च श्रावणप्रत्यक्षविषयतायां स्वघटकानुबन्धेतरयावद्वर्णघटितत्वं विशेषणं देयम्, तथा च डाऽणोः स्वघटकानुबन्ध'ड्''ण्'वर्णेतरयावद्वर्णघटितश्रावणप्रत्यक्षविषयताया उभयोरपि पर्याप्तत्वात् तदवच्छेदकधर्मस्य 'अत्व'रूपस्योभयोरपि सत्त्वेन तदधिकरणत्वसम्बन्धेनोभयोरपि सरूपत्वमेवेति "असरूपोऽपवादे०" [५. १. १६.] इति सूत्रस्याप्रवृत्त्या न डविषयेऽण् भवति। परं त्वत्र पक्षे यावत्त्वस्य प्रवेशात् तस्य च निर्वक्तुमशक्यत्वेन दोषः, तस्मात् तदपहाय स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्घटितत्वस्वघटकावृत्तितादृशधर्मवदघटितत्वोभयसम्बन्धेन स्वविशिष्टत्वं स्वसरूपत्वं वाच्यम्। एवं च तव्यप्रत्यये क्तप्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक'तत्व'रूपधर्मवत्तकारघटितत्वरूपप्रथमसम्बन्धसत्त्वेऽपि स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक'व्य'त्वरूपधर्मवद्'व्य'शब्दघटितत्वस्यैव सत्त्वेन तदघटितत्वाभावाद् द्वितीयसम्बन्धाभावेन स्वविशिष्टत्वं [क्तप्रत्ययविशिष्टत्वं] नास्तीति न तयोः सरूपत्वम्। एवं-'सर''रस'शब्दयोरपि न सरूपत्वम्, तत्र स्वं 'सर'-शब्दः, तद्घटकावृत्तिर्धर्मः—रकारोत्तरसत्वरूपानुपूर्वी, तद्घटितत्वमेव रसशब्दे इति तदघटितत्वाभावेन द्वितीयसम्बन्धाभावात्, एवं रसशब्दमादाय सरशब्देऽपि योजनीयम्। एतन्न्यायसहकारेण चोभयत्र सम्बन्धे धर्मेऽनुबन्धावृत्तित्वं देयमित्यनुबन्धघटितधर्ममादाय न सरूपत्वभङ्ग इति॥

अनेकस्वरत्वमप्यनुबन्धकृतमनेन न्यायेन निषिध्यते। तत्र यद्यप्यनुबन्धानां बोधकावयवत्वमेव स्वसिद्धान्तसिद्धम्, बोध्येषु अनुबन्धरहितप्रत्ययादिषु तस्य कदाप्यदर्शनेन तदवयवत्वस्यासम्भवात्। 'डुपचींष्' इति समुदायो बोधकः, 'पच्' इति च बोध्यः, स एव च धातुसंज्ञ इति न तत्रानेकस्वरत्वमनुबन्धकृतं प्राप्नोतीति नैतदंशस्यावश्यकता प्रतिभाति, तथाप्यनुबन्धप्रयुक्तकार्यस्य बोध्ये धातुस्वरूपे एव सम्भवेन [तत्रैवानुस्वारेदित्त्वादिप्रयुक्तकार्यस्य दर्शनेन] तस्याप्यनुबन्धसम्बन्ध एष्टव्य एवेति तस्यानेकस्वरत्वेन तत्प्रयुक्तं कार्यं स्यादेवेति तन्निवारणायास्याप्यंशस्यावश्यकत्वात्॥

अनेकवर्णत्वमप्यनुबन्धकृतं न भवति। तत्र च "ष्या पुत्रपत्योः केवलयोरीच् तत्पुरुषे" [२. ४. ८३.] इति सूत्रे सर्वादेशत्वार्थं कृतोऽभेदनिर्देशो ज्ञापक इत्युक्तमेव। तत्रेदं विचार्यते—नन्वनुबन्धानामवयवत्वपक्षेऽपि बोधकावयवत्वमेवेति 'ईच्' पदबोध्यस्य ईकारस्यानेकवर्णत्वाभावेनाभेदनिर्देशं विना सर्वादेशत्वस्यासिद्ध्या कथं तद्वैयर्थ्यमिति तस्य ज्ञापकत्वासंभव इति। अत्र केचित्—"अनेकवर्णबोधकबोध्यः सर्वस्येति "अनेकवर्णः सर्वस्य" [७. ४. १०७.] इति सूत्रस्यार्थः, तेनासत्यप्यभेदनिर्देशे 'ईच्' इत्यनेकवर्णत्वपदरूपबोधकबोध्य ईकारः सर्वस्य स्थाने स्यादेवेति तदर्थकोऽभेदनिर्देशो व्यर्थ एव; न च लोपादिरूप आदेशोऽप्येवं सर्वादेशः स्यात्, सोऽपि ह्यनेकवर्णवल्लोपलुबादिशब्दैर्बोध्य इति वाच्यम्, शास्त्रीयसङ्केतानाश्रयत्वस्य बोधकविशेषणत्वात्। नन्वेवं "जराया जरस् वा" [२. १. ३.] इति सूत्रस्थं 'जरस्' इति पदमपि ※स्वं रूपं शब्दस्याशब्दसंज्ञा※ इति [न्याय] शास्त्रसंकेतितमिति तस्यापि वर्जने सोऽप्यादेशः सर्वस्य स्थाने न स्यादिति चेत्? न—तस्य न्यायत्वेन शास्त्रत्वाभावात्, शास्त्रपदेन ह्याचार्यभाषितशासनवचनमेव गृह्यते, इदं च ज्ञापकादिसिद्धमित्यस्य

शास्त्रत्वाभावात्" इत्याहुः, तन्न—अनुस्वार-विसर्जनीयादीनामप्यनेकवर्णबोधकबोध्यत्वेन सर्वादेशतापत्तेः, शब्दमर्यादां विहाय स्वेच्छयाऽर्थकरणे सौत्राक्षराणि खण्डयित्वाऽन्यथा तेषां नामादिकरणेऽतिप्रसङ्गाच्च। तस्मादिदमत्रावधेयम्—स्वरूपबोधकस्थले स एवायमिति प्रत्यभिज्ञया बोध्य-बोधकयोरभेद इत्युपेयते, तथा च स एवायमीकाराद्यादेशो यो बोधके 'ईच्' इत्याद्याकारक आसीदिति प्रतीत्याऽनेकवर्णत्वमप्यस्यैव धर्म इत्यस्यावश्यमेव मन्तव्यतया भवत्यनेकवर्णत्वधर्मवानीजादेश इति स्यादेवाभेदनिर्देशं विनापि सर्वस्य 'ष्या'शब्दस्य स्थाने इति स निर्देशो व्यर्थः सन् ज्ञापयितुं शक्नोति न्यायांशमिममिति। ज्ञापिते चास्मिन् न्यायांशेऽनुबन्धस्यानेकवर्णघटकवर्णपदेनाग्रहणाद् बोधकावस्थायामप्यनेकवर्णत्वस्येजादेशेऽभावेन सर्वादेशार्थमभेदनिर्देशस्य चारितार्थ्यम्। तथा च वर्णविशिष्टत्वमनेकवर्णत्वमिति फलति। वर्णश्चानुबन्धभिन्नो गृह्यते, वैशिष्ट्यं च स्वघटितत्वम्, स्वेतरो योऽनुबन्धभिन्नो वर्णस्तद्घटितत्वमित्युभयसम्बन्धेन, ईजादिपदेषु द्वितीयसम्बन्धाभावात् तस्यानेकवर्णत्वाभावः। तथा चाभेदनिर्देशं विना तस्य सर्वादेशत्वासंभव इति सर्वादेशत्वार्थमभेदनिर्देशस्य चारितार्थ्यमिति ॥ ३४ ॥

## ※समासान्ता-ऽऽगम-संज्ञा-ज्ञापक-गण-नञ्निर्दिष्टान्यनित्यानि※ ॥ ३५ ॥

सि०—समासस्य अन्तः-समासान्तः, समासचरमावयवतया विधीयमानः 'अत्' इत्यादिः। आगमः-कमपि वर्णं पदं वोद्दिश्य तत्समीपे विधीयमानो मागमादिः। संज्ञया निर्दिष्टं—संज्ञानिर्दिष्टम्, संज्ञां निर्दिश्य विधीयमानं कार्यम्। ज्ञापकेन स्वरूपबोधकेन सौत्रनिर्देशादिना गणपाठादिना च निर्दिष्टं—ज्ञापकनिर्दिष्टम्। नञा समस्तेनासमस्तेन वा निर्दिष्टं कार्यं—नञ्निर्दिष्टम्। एतानि अनित्यानि—न नियतानि लक्ष्यानुरोधात् क्वचिन्नापि भवन्ति, क्वचिदन्यथा च भवन्तीति भावः। सर्वं वाक्यं सावधारणमिति विनापि नित्यमिति कथनेनैषां नित्यत्वे प्राप्तेऽनिष्टस्थलेऽप्रवृत्त्यर्थमयं न्यायः स्वीक्रियते। अनित्यत्वकथनेनैव यथाप्रयोगदर्शनं क्वचिन्न भवन्तीति सिद्धे "यथा प्रयोगदर्शनं क्वचिदिति शेषः" इति ग्रन्थेन वाक्यपूरणं प्राचामनावश्यकम्, क्वचिन्न भवन्तीत्येव ह्यनित्यत्वमेषामिति पृथक् क्वचिदिति पूरणं व्यर्थमेव ॥

तत्र समासान्तो यथा—बह्व्य आपो यत्रेत्यर्थे बहुव्रीहिसमासे "ऋक्-पूः-पथ्यपोऽत्" [७. ३. ७६.] इत्यति कृते 'बह्वपं सरः' इति भवति, क्वचिच्च 'बह्वाम्पि बह्वम्पि वा सरांसि' इत्यपि समासान्तरहितः प्रयोगः समुपलभ्यते, स च समासान्तविधेरनित्यत्वेनैव साधुः स्यात्। एतद्विषयज्ञापकश्च—"ऋक्-पूः-पथ्यपोऽत्" [७. ३. ७६.] इति सूत्रे 'पथ्यपः' इति निर्देश एव, अन्यथा ऋगादीनामप्पर्यान्तानां द्वन्द्वे समासान्तप्रवृत्त्या "ऋक्-पूः-पथ्यपात्" इति निर्देशः समुचितः स्यात्, अतश्च समासान्तविधायकसूत्र एव समासान्ताकरणमाचार्याणामिममाशयं ज्ञापयति यत्—समासान्तविधिर्लक्ष्यानुसारीति क्वचिन्नापि भवतीति ॥

आगमो यथा—'पट्वा पटिता' इत्यादौ सेटः पटेर्नित्यमेवेडुचित इति विकल्प्य विहितोऽस्यागमस्यानित्यत्वं विनाऽनुपपन्नः। तथा च क्वचिदनिटोऽपि वेट्त्वं दृश्यते, यथा—पक्त्वा, पचित्वा, आस्कन्तव्यमास्कन्दितव्यमिति। अत्र च पचि-स्कन्दी उभावप्यनुस्वारेताविति पक्षेऽपीटा न भाव्यं, दृश्यते च क्वचिदिट्सहितः प्रयोगोऽपीत्यागमविधेरन्यथापि भवनरूपमनित्यत्वं विनाऽसम्भवि। तथा धावेरूदित्वात् क्तयोर्वेट्त्वेऽपि गतौ नित्यमिट्—धावितः, धावितवानिति; शुद्ध्यर्थे तु नेट्—धौतः, धौतवानिति। तथा जभेस्तिवि "जभः स्वरे" [४. ४. १००.] इति नागमे—जम्भतीति भवति, जञ्जभीतीति यङ्लुगन्ते च नागमो न भवति, आगमस्यानित्यत्वादेव। एवं—कमेर्णिङन्तस्य आने परे मागमे—कामयमान इति भवति, तस्यैवानित्यत्वाश्रयणे च—कामयान इति मागमरहितोऽपि प्रयोगो भवति। एतदनित्यत्वसूचकं च इडाद्यागमानामनित्यत्वेन लक्ष्येषु प्रयुक्तत्वेऽपि तदर्थं यत्नाकरणमेव, तथा हि—पट्वा पटितेत्यादौ विकल्पेनेडागमादि प्रयुक्तम्, न च तदर्थं कोऽपि यत्नः शास्त्रे कृतः, तथा चैतन्न्यायांशमवलम्ब्यैव तथाप्रयोगाः सम्पादनीया इति शास्त्रकृतामाशयः प्रतीयते। अन्यत्रापि यत्र क्वचनानित्यत्वार्थं यत्नो न कृतस्तत्र तथालक्ष्यदर्शनेनैव तादृशार्थज्ञापनमुन्नेयम् ॥

संज्ञानिर्दिष्टं यथा—"धातोरनेकस्वराद्०" [३. ४. ४६.] इति सूत्रेण परोक्षां संज्ञां निर्दिश्य आम् विहितः, स च चकासामासेत्यादौ नित्यमेव प्रवर्तते, दरिद्राञ्चकारेत्यादौ चानित्यत्वेन विकल्प्य प्रवर्तते, अत एव ददरिद्रावित्यपि रूपं भवति, तच्च संज्ञानिर्दिष्टस्यानित्यत्वं विनाऽसम्भवि। एतदंशज्ञापकं तु "आतो णव औः" [४. २. १२०.] इत्यत्र ओकारविधानेऽपि पपावित्यादिसिद्धावौकारविधानमेव, तद्धि दरिद्राधातोः परोक्षायां णवि "अशित्यस्सन्-णकच्-णकानटि" [४. ३. ७७.] इत्याकारलोपे ददरिद्रावित्यस्य सिद्ध्यर्थं विधीयते, अन्यथा तत्र 'ददरिद्रो' इति रूपं स्यात्। यदि च "धातोरनेकस्वराद्०" [३. ४. ४६.] इति विहित आम् नित्यः स्यात् तर्हि दरिद्रातेर्णव आमादेशे ददरिद्रावित्यस्यासंभवेन तदर्थमौकारविधानं व्यर्थमेव स्यात्, कृतं चौकारविधानं स्वसार्थक्यविधायकमेतन्न्यायांशं ज्ञापयति, ज्ञापिते च तस्मिन्नामोऽभवनेन 'ददरिद्रौ' इत्यत्र औकारश्रवणार्थमौकारविधानस्य चारितार्थ्यं भवति ॥

ज्ञापकनिर्दिष्टं यथा—"दशैकादशादिकश्च" [ ६. ४. ३६. ] इति सौत्रनिर्देशेन दशैकादशशब्दस्यादन्तत्वसिद्ध्या दशैकादशान् गृह्णातीत्येव विग्रह उचितः, परन्तु दशैकादश गृह्णातीत्यपि विग्रहो भवत्येव, स च ज्ञापकनिर्दिष्टस्यानित्यत्वमूलक एव । अस्य ज्ञापकं तु—"ऋगयनमित्यत्र णत्वनिषेधार्थमुपात्तं "पूर्वपदस्थान्नाम्न्यगः" [ २. ३. ६४. ] इति सूत्रे 'अगः' इति पदम्, णत्वनिषेधश्चात्र "शिक्षादेश्चाण्" [ ६. ३. १४८. ] इति सूत्रोक्ते शिक्षादिगणे ऋगयनमिति णत्वरहितपाठादेव सिद्धः, परं च गणपाठरूपज्ञापकनिर्दिष्टस्य णत्वनिषेधस्यैतन्न्यायांशबलेनानित्यत्वसम्भावनया तस्य दृढतासम्पादनायात्र सूत्रे "अगः" इत्युक्तम्, तच्चैतन्न्यायांशं विनाऽनुपपन्नमिति न्यायांशमिमं ज्ञापयति । तथा चोभयविधज्ञापकनिर्दिष्टस्येहोपयोगः, उदाहरणं सौत्रनिर्देशरूपज्ञापकनिर्दिष्टापेक्षं, ज्ञापकं च गणपाठरूपज्ञापकनिर्दिष्टापेक्षमिति ॥

गणनिर्दिष्टं यथा—कुटिता कुटितुमित्यादौ यथा "कुटादेर्ङिद्वदञ्णित्" [ ४. ३. १७. ] इति ङित्त्वं भवति, तेन चात्र गुणाभावः, तथा विव्यचिथेत्यादौ न भवति, अनित्यत्वादेव, अत्र च कुटादिरिति गणनिर्देशः, विव्यचिथेति रूपं च—"व्यचत् व्याजीकरणे" इत्यस्माद्धातोः परोक्षायां थवि द्वित्वादौ कृते पूर्वस्य "ज्या-व्ये-व्यधि-व्यचि-व्यथेरिः" [ ४. १. ७०. ] इति इत्वे च कृते "कुटादेर्ङिद्वदञ्णित्" [ ४. ३. १७. ] इत्यस्य गणनिर्दिष्टत्वेनानित्यत्वात् ङित्त्वाभावे धातोर्यस्य "व्यचोऽनसि" [ ४. १. ८२. ] इति य्वृन्न, सति हि ङित्त्वे विविचिथेति रूपं स्यात् । समर्थकं चास्य विव्यचिथेत्यादौ य्वृतोऽनिष्टत्वेऽपि तदर्थं यत्नान्तराकरणमेव ॥

नञ्निर्दिष्टं यथा—"अञ्वर्गात् स्वरे वोऽसन्" [१. २. ४०] इति सूत्रे 'असन्' इति, अस्योदाहरणं यथा—'क्रुङ्+उ+आस्ते= क्रुङ्ङ्वास्ते, किम्+उ+आवपनं+किम्वावपनम्' इति, अत्रोकारस्थानीयस्य वस्यानेन सूत्रेणासत्त्वात् स्वरे परे "ह्रस्वान्ङणनो द्वे" [ १. ३. २७. ] इति पूर्वत्र प्रयोगे ङस्य द्वित्वं भवति, परत्र तु मस्य पुरो व्यञ्जनाभावात् "तौ मु-मो व्यञ्जने स्वौ" [ १. ३. १४. ] इत्यनेनानुस्वारानुनासिकौ नाभूताम् । 'असन्' इति नञ्निर्दिष्टस्यानित्यत्वफलं तु तद्+उ+अस्य मतम्=तद्व्वस्य मतमित्यत्रोकारस्य वत्वे "ततोऽस्याः" [ १. ३. ३४. ] इति वस्य द्वित्वं भवतीति, अन्यथा वत्वस्यासत्त्वात् द्वित्वं न स्यात् । एतदंशज्ञापकस्तु "व्याप्तौ स्सात्" [ ७. २. १३०. ] इति द्वितीयः सकारः, स हि 'अग्निसात्' इत्यादौ षत्वनिषेधज्ञापनार्थं कृतः, तथा हि—द्विसकारनिर्देशेन सकारादिः सात् प्रत्ययो भवतीति विज्ञायते, 'सात्' च स्वत एव सकारादिरिति तस्य सकारादित्वकथनं व्यर्थमेव, व्यभिचाराभावे विशेषणवैयर्थ्यात्, तदुक्तमभियुक्तैः—"संभवे व्यभिचारे च स्याद् विशेषणमर्थवत् ।" इति, तथा च व्यर्थः सकारादिनिर्देशो नियमज्ञापनार्थः, नियमश्चायम्—सात् सर्वदा सादिरेव स्यान्न तु कदापि तस्य विकारान्तरमिति, एतन्न्यायांशाभावे चात्र षत्वस्य प्राप्तिरेव नास्ति, सातः सकारस्य "नृत्यन्तोऽसपे" [ १. १. २५. ] इति सूत्रानुसारं पदादित्वात्, तथा हि—नृत्यन्तः पदसंज्ञको न स्यात्, असपे—सस्य षत्वभिन्ने कार्ये इति तदर्थः । तथा च सस्य षत्वे कर्तव्ये त्वप्राप्तापि पदसंज्ञा स्यादेवेति ध्वन्यते, तथा चात्र सातः प्रत्ययत्वेनाप्राप्ताऽपि पदसंज्ञा 'असपे' इति पर्युदासेन विधीयते, ततश्च तस्य सस्य पदादित्वात् षत्वस्य प्राप्तिरेव नास्तीति तदभावार्थो द्वितीयसकारनिर्देशो व्यर्थ एव स्यात्; एतन्न्यायांशसत्त्वे तु 'असपे' इति नञ्निर्दिष्टस्यानित्यत्वसम्भावनया कदाचित् सातः पदत्वाभावे सकारस्य पदमध्यस्थत्वसंभवात् षत्वं स्यादिति तद्वारणार्थो द्विसकारनिर्देशः सार्थकः । तदेवमिमं न्यायांशं विनानुपपद्यमानां षत्वप्राप्तिं विनानुपपद्यमानस्तद्वारणार्थो द्विसकारपाठ इमं न्यायांशं ज्ञापयतीति सुस्थम् । अस्य च न्यायस्यादृढत्वात् केचिदेव समासान्तादयो लक्ष्यानुसारं क्वचिद् भवन्ति क्वचिन्न भवन्तीति लभ्यते । तथा चान्ये नित्यमेव भवन्ति, तेषामुदाहरणानीमानि प्रदर्श्यन्ते—यथा "इच् युद्धे" [ ७. ३. ७४. ] इति समासान्त इच् 'केशाकेशि' इत्यादौ नित्यमेव भवति । "स्वराच्छौ" [ १. ४. ६५. ] इति नागमः 'कुण्डानि, 'बदराणि' इत्यादौ नित्यमेव भवति । स्वरसंज्ञानिर्दिष्टम् "इवर्णादेरस्वे स्वरे यवरलम्" [ १. २. २१. ] इति यत्वादि दध्यत्रेत्यादौ नित्यमेव भवति । "सप्तमी चोर्ध्वमौहूर्तिके" [ ५. ४. ३०. ] इति सौत्रनिर्देशरूपज्ञापकनिर्दिष्टा उत्तरपदवृद्धिरूर्ध्वमौहूर्त्तिकशब्दे भवत्येव, न कदापि न भवति । "अजादेः" [ २. ४. १६. ] इत्यजादिगणनिर्दिष्ट आप् 'अजा' इत्यादौ भवत्येव । "अवर्णो नामी" [ १. १. ६. ] इति सूत्रे नामिसंज्ञायामवर्णवर्जनं नञ्निर्दिष्टमपि नियतमेवेति । इत्थं च ये समासान्तादयोऽनित्याः—भवन्ति च न भवन्ति च, त एवेहैतन्न्यायोदाहरणत्वेनोक्ता इति ॥ ३५ ॥

### ※समासान्ता-ऽऽगम-संज्ञा-ज्ञापक-गण-नञ्निर्दिष्टान्यनित्यानि※ ॥ ३५ ॥

त०—अत्र समासान्तविधेरनित्यत्वे तु यत्र तत्र बहूनि लक्ष्याणि मिलन्ति, किन्त्वागमादीनामनित्यत्वज्ञापने न किमपि विशिष्टं फलमिति नवीनाः कथयन्ति, दृढतरज्ञापकाभावश्च । 'पट्वा पटिता' इत्यादिप्रयोगाणां शिष्टप्रयुक्तत्वग्रहे चोपायान्तरमाश्रयणीयम्, तद्धि तत्र तत्र विशेषवचनकल्पनमेव । यथा पाणिनीयैर्घावितमित्यादिसिद्ध्यर्थं "यस विभाषा" [ पा० सू०

७. २. १५ ] इति सूत्रस्य "वेटोऽपतः" [ ४. ४. ६२. ] इति सूत्रस्थानीयस्यानित्यत्वं कल्प्यते । न तु प्राचीनोक्तमागमशास्त्रस्यानित्यत्वम् । लक्ष्यैकचक्षुष्काणामाचार्याणामीदृशलक्ष्याणामिष्टत्वे तदर्थं लक्षणमवश्यमनुष्ठितं स्यात्, ज्ञापकं च दृढतरं तस्य निर्दिष्टं स्यात्, तद्विषयकयत्नाकरणे तादृशन्यायांशानुमानं त्वतिप्रसक्तम्, तथा हि–अन्यान्यपि शास्त्रकृदनुक्तानि वचनानि यथेच्छप्रयोगानुरोधेन कल्पनीयानि स्युः । एवं संज्ञानिर्दिष्टस्यानित्यत्वमपि यत्र संज्ञा विधिकोटिगतविशेषणत्वादिनोपादीयते तत्रैवेष्टव्यम्, सामान्यतः संज्ञानिर्दिष्टस्यानित्यत्वे तु प्रायः सर्वेषां शब्दशास्त्रीयकार्याणां यत्किञ्चित्संज्ञानिर्दिष्टत्वापत्त्याऽऽकुलीभावापत्तेः । "आतो णव औः" [ ४. २. १२०. ] इति च संज्ञानिर्दिष्टस्यानित्यत्वज्ञापकं तथा सति न संभाव्यते "धातोरनेकस्वरात्०" [ ३. ४. ४६ ] इति सूत्रे धातुसंज्ञाया विधेयकोटौ निर्देशाभावात्, तत्र ह्युद्देश्यकोटावेव धातुसंज्ञा समाश्रीयते । तथा च ददरिद्रावित्यादिसिद्ध्यर्थं 'दरिद्रातेराम् न' इत्येतावदेव ततः [ औकारविधानात् ] कल्पनीयम्, न तु संज्ञानिर्दिष्टमात्रस्यानित्यत्वम् । एवं ज्ञापकनिर्दिष्टस्यानित्यत्वमपि नावश्यकम्, तद्धि दशैकादश गृह्णातीत्येवं विग्रहस्य साधुत्वार्थमाश्रीयते, तत्र च "दशैकादशादिकश्च" [ ६. ४. ३६. ] इति सूत्रे तथानिर्देशस्य सूत्रमात्रविषयत्वेऽपि दोषाभावात्, दशैकादशेति च पृथगेव पदे; न चैवं चकारप्रयोगापत्तिः, कृते प्रयोगे दोषाभावात्, अकृते च 'विनाऽपि चं चार्थो गम्यते' इति सिद्धान्तेन दोषाभावः; न च तस्य निर्देशरूपज्ञापनस्य सूत्रमात्रविषयत्वे दशैकादशान् गृह्णातीति विग्रहो न स्यादिति वाच्यम्, इष्टापत्तेः । यच्चात्रांशे ज्ञापकमुपन्यस्यते–"पूर्वपदस्थान्नाम्यगः" [ २. ३. ६४. ] इति सूत्रस्थम् 'अगः' इति पदम्, तदपि न चारु–केवलं स्वचारितार्थ्याय ज्ञापकत्वकल्पनापेक्षया तस्य त्याग एव वरम् । कृतं च 'अगः' इत्यस्य प्रत्याख्यानं महाभाष्ये निर्देशरूपज्ञापकाश्रयणेन, तथाहि–"पूर्वपदात् संज्ञायामगः" [ पा० सू० ८. ४. ३. ] इति सूत्रे महाभाष्ये–"संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमप्रतिषेधः" [ वार्तिकम् ], संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमस्यायं प्रतिषेधो विज्ञायते–अग इति । तत्र को दोषः ? "तत्र नित्यं णत्वप्रसङ्गः" [ वार्तिकम् ], तत्र पूर्वेण संज्ञायां चासंज्ञायां च नित्यं णत्वं प्राप्नोति । "योगविभागात् सिद्धम्" [ वार्तिकम् ], योगविभागः करिष्यते–'पूर्वपदात् संज्ञायाम्' ततः 'अगः' गान्तात् पूर्वपदाद् या यावती च णत्वप्राप्तिः, तस्याः सर्वस्याः प्रतिषेधः । "अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम्" [ वार्तिकम् ], नवाऽर्थः प्रतिषेधेन, णत्वं कस्मान्न भवति ? यथा सर्वनामसंज्ञायाम्, उक्तं च–सर्वनामसंज्ञायां निपातनाण्णत्वाभावः । यथा पुनस्तत्र निपातनं क्रियते–"सर्वादीनि सर्वनामानि" [ पा० सू० १. १. २८. ] इति । इहेदानीं किं निपातनम् ?, इहापि निपातनमस्ति, किम् ? "अणृगयनादिभ्यः" [ ४. ३. ७३. ] इति । [ ततः] नैव वा पुनरत्र णत्वं प्राप्नोति, किं कारणम् ? समानपद इत्युच्यते, न चैतत् समानपदम्, समासे कृते समानपदम्, समानपदमेव यन्नित्यम्, न चैतन्नित्यं समानपदमेव । किं वक्तव्यमेतत् ? नहि, कथमनुच्यमानं गंस्यते ? समानग्रहणसामर्थ्यात्, यदि हि यत् समानं चासमानं च तत्र स्यात् समानपदग्रहणमनर्थकं स्यात्" इति [ भाष्यम् ] । अयमाशयः–'अग' इति पदं संज्ञायामेव [ नाम्न्येव ] इति नियमेन प्राप्तस्य [ 'पूर्वपदस्थान्नाम्नि' इत्यंशेन प्राप्तस्येति भावः ] णत्वस्यैव प्रतिषेधः, अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायात् । तत्र 'ऋगयनादिशब्दानां नामत्वा-ऽनामत्वोभयदर्शनात् तत्र पूर्वसूत्रेण [ "रघुवर्णात्०" २. ३. ६३. इत्यनेन ] नित्यं णत्वं प्राप्नोतीति कृते 'अगः' इति प्रतिषेधे नात्र णत्ववारणमिति शङ्कायाम्–"पूर्वपदस्थान्नाम्नि" इत्येको योगः, "अगः" इति च योगान्तरमित्यास्थाय योगविभागसामर्थ्याच्च सर्वस्या णत्वप्राप्तेः प्रतिषेधोऽयमिति विज्ञास्यते, ततश्च न दोष इति समाधानम् । पुनर्निर्देशेनैवात्र णत्वाभाव इत्युक्तम्, स च निर्देशः "शिक्षादिभ्योऽण्" [ ६. ३. १४८. ] इति सूत्रस्थो गणपाठे ऋगयनशब्दस्य नकारविशिष्ट पाठ एव, यथा 'सर्वनाम'शब्दे सूत्रे तथा निर्देशादेव नत्वाभावः कल्पितस्तद्वत्, तथा च 'अगः' इति प्रतिषेधस्य नावश्यकतेति । किञ्च पूर्वसूत्रे 'एकपदे' इत्यत्र 'पदे' इत्येकत्वविवक्षयैवैकपदत्वे लब्धे एकग्रहणेनैकमेव यत् पदं तत्रैव यथा स्यान्न त्वेकं चानेकं चेति ज्ञाप्यत इति पूर्वमुपपादितमेव । तथा च नामतोऽन्यत्र नित्यमेकपदत्वाभावेन णत्वप्राप्तिरेव नेति न तद्वारणार्थमग इति कथनमावश्यकमिति । अयं च प्रकारः स्वमतेऽपि कर्तुं शक्य एवेति 'अग' इत्यस्य न ज्ञापनार्थत्वमुचितम् ॥

स्वप्रक्रियायां विव्यचिथेति रूपसिद्ध्यर्थं गणनिर्दिष्टस्यानित्यत्वाश्रयणं यद्यपि आवश्यकम्, तथापि तदर्थं यत्नान्तरमेव करणीयम्, अप्रामाणिकस्यानित्यत्वाश्रयणस्यापेक्षया तस्यैवौचित्यात् । पाणिनीये तु "ज्या-व्यधः ङिति" [ ४. १. ८१. ] इतिसूत्रस्थानीये "ग्रहिज्यावयिव्यधिवष्टि०" [ पा० सू० ६. १. १६. ] इति सूत्र एव विचति इति पठ्यते, "कुटादेर्ङिद्वदञ्णित्" [ ४. ३. १७. ] इतिसूत्रस्थानीये "गाङ्कुटादिभ्योऽञ्णिन्ङित्" [ पा० सू० १. २. १. ] इति सूत्रे 'व्यचेः कुटादित्वमनसि' इति कुटाद्यन्तर्गणसूत्रं पठ्यते, तत्र चानसीति पर्युदास आश्रीयते, तथा च 'पर्युदासः सदृग्ग्राही' इति न्यायेन 'असभिन्नेऽसत्सदृशे कृत्प्रत्यये परत एव व्यचेः कुटादित्वनिमित्तकं कार्यमिति 'विव्यचिथ, अव्याचीत्' इत्यादौ ङित्त्वं न भवति । तथा स्वमते "व्यचोऽनसि [ ४. १. ८२. ] इतिसूत्रस्थव्यचेः पाठः पूर्वसूत्र

एव [ "ज्याव्यधः क्ङिति" ४. १. ८१. ] इति सूत्र एव करणीयः, कुट्टादौ च गणे "व्यचोऽनसि" इति गणसूत्रपाठः कार्यः । तथा च नानित्यत्वाश्रयणमावश्यकं भविष्यति ।

एवं नञ्निर्दिष्टस्यानित्यत्वमपि नावश्यकं, तद्वक्षेत्यत्र वकारस्य द्वित्वसिद्धिर्हि तत्फलमित्युच्यते, तत्र व्यञ्जनात् परस्यैकस्यानेकस्य वा व्यञ्जनस्योच्चारणे भेदाभावेन द्वित्वाभावेऽपि क्षत्यभावात् । पाणिनीये तु द्वित्वे कर्तव्येऽसिद्धत्वस्याप्रवृत्त्यर्थं 'पूर्वत्रासिद्धीयमद्वित्वे' इति न्यायः पठ्यते । तथैव वा स्वमतेऽपि समाश्रयणीयं चतुर्णामित्यादावपि णकारस्य द्वित्वार्थम् । "व्याप्तौ स्सात्" [ ७. २. १३०. ] इति सूत्रे द्विसकारनिर्देशश्चास्य न्यायांशस्य ज्ञापकत्वेनोक्तः, स चान्यथापि चरितार्थः, तथाहि—"वृत्त्यन्तोऽसषे" [ १. १. २५. ] इति सूत्रस्य योऽयमर्थ आक्षिप्यते—सस्य षत्वे कर्तव्ये पदसंज्ञा न स्यादिति न किन्त्वप्राप्ताऽपि पदसंज्ञा तस्य स्यादेवेति, तत्र किं मूलम् ? केवलं यस्य पदसंज्ञा प्राप्ता तस्य वृत्त्यन्तस्य षत्वभिन्ने कार्ये पदसंज्ञा नेत्येवार्थः शब्दमर्यादालभ्यः । स्सातश्च प्रत्ययत्वेनानामत्वात् पदसंज्ञाप्राप्तिरेव नेति तस्य षत्वनिषेधार्थं द्विसकारपाठ आवश्यक एवेति न तस्य ज्ञापकत्वसंभावना । इत्थं चास्य पञ्चांशा नावश्यका इति प्रतिभाति, तथापि प्राचामनुरोधेन समाश्रितास्तत्र तत्र कार्यप्रवृत्त्यर्थमाश्रीयन्ते चेति । पाणिनीये तन्त्रे परिभाषेन्दुशेखरेऽपि नागेशभट्टेन—'यत्तु' इत्यारभ्य 'संज्ञापूर्वकमनित्यम्' 'आगमशास्त्रमनित्यम्' 'गणकार्यमनित्यम्' 'अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्' 'नञ्घटितमनित्यम्' इत्यादिन्यायानुल्लिख्य तत्र तत्र ज्ञापकफलादिकं प्रदर्श्य, तत्र भाष्येऽदर्शनादित्यादिना एते न्यायाः खण्डिताः । ज्ञापिते चास्मिन् सम्पूर्णे न्यायेऽस्याद्दढत्वमनित्यत्वं च यदाश्रितं प्राचीनैस्तदपि नोचितम्, अनित्यत्वज्ञापकस्यास्य न्यायस्यानित्यत्वे सर्वेषामेतद्विषयाणां नित्यत्वमिति फलति, तच्च स्वतः सिद्धमेवेति किं तदर्थं न्यायस्वीकारतदनित्यत्वाश्रयणगौरवेण, किञ्चानित्यत्वेन हि क्वाचित्कत्वं कादाचित्कत्वमिति च विज्ञायते, तावतैवेष्टप्रयोगसिद्धौ तदर्थं पुनरस्याप्यनित्यत्वाश्रयणं व्यर्थमेव । तथा च समासान्तादीनां नित्यत्वं स्वतः सिद्धमेव, लक्ष्यानुरोधात् क्वचित् स्याद्वादाश्रयणादप्रवृत्तिरिति सर्वं सुस्थम् ॥ ३५ ॥

## *पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्* ॥ ३६ ॥

सि०—पूर्वे—उत्सर्गशास्त्रतः पूर्वमुक्ताः, अपवादाः—बाधकशास्त्राणि, अनन्तरान्—अग्रे वक्ष्यमाणबाध्यशास्त्रसमुदायमध्ये स्वाव्यवहितान्, उत्सर्गान्, बाधन्ते—प्रतिषिध्य स्वयं प्रवर्तन्ते, नोत्तरान् न शास्त्रान्तरव्यवहितान्, इति न्यायार्थः । स्वचारितार्थ्याय स्वविषयव्यापके परस्मिन् शास्त्रेऽवश्यं बाधनीये प्रथमोपस्थितशास्त्रमात्रबाधेन स्वचारितार्थ्यसंभवे बाधकत्वबीजस्यानवकाशत्वस्य क्षीणत्वात् तदन्यबाधे प्रमाणाभाव एवास्य न्यायस्य बीजम् । "मद्विषये यद् यत् प्राप्तं तन्मया बाध्यम्" इति बाध्यसामान्यचिन्तया स्वविषयप्राप्तसर्वशास्त्रबाधे प्राप्तेऽयं न्यायः समाश्रीयते । यथा "श्लिषः" [ ३. ४. ५६. ] इति सूत्रविहितः श्लिषोऽद्यतन्यां सक् पुष्यादिगणनिमित्तिकं "लृदिद्द्युतादिपुष्यादेः परस्मै" [ ३. ४. ६४. ] इति सूत्रविहितमङं बाधते, अतः 'अश्लिक्षत् कन्यां देवदत्तः' इत्यत्र सगेव भवति, न त्वङ्; किन्तु "भाव-कर्मणोः" [ ३. ४. ६८. ] इति सूत्रविहितं ञिचं न बाधते, इत्याश्लेषि कन्या चैत्रेणेत्यत्र सक् न भवति । अत्र केचित्—"उल्लासकं त्वस्य सक्-अङ्-ञिच्सूत्राणामेवमुपन्यासक्रम एव, तथाहि—अङ्-ञिचोरपवादस्तावत् सक्, तत्राप्यङ् बाधितुमिष्टो, न तु ञिच्, तथा चाङ्सूत्रादनु सक्सूत्रं चेत् क्रियते तदा बाध्योक्तेरनु बाधकोक्तिरिति न्यायानपेतः समर्थपक्ष आदृतः स्यात्, अनिष्टो ञिच्-बाधोऽपि च मध्येऽपवादाः पूर्वानिति न्यायबलाट्टलति । एवं सत्यपि यद्बाधकोक्तेरनु बाध्योक्तिरित्यसमर्थपक्ष आदृतस्तदेतन्न्यायादेवेष्टसिद्धिर्भविष्यतीत्याशयैव" इत्याहुः । तत्रेदं विचार्यते—अङोऽपवादः सक् भवितुमर्हति, अङा सको विषयस्य व्यापनात्, ञिचोऽपवादत्वं तु न युक्तम्, ञिचो भाव-कर्मणोरेव विधानात् तदतिरिक्ते कर्तरि प्रत्यये सकश्चारितार्थ्यसंभवात् । सत्यपि सम्भवे बाधनं भवतीति भाष्योक्तपक्षमाश्रित्य तदपवादत्वव्यवस्थापनेऽपि नैवं क्रमेण सूत्रोपन्यासो न्यायमिमं ज्ञापयितुं शक्तः, यतः सर्वेषामद्यतनीपरतो विधीयमानानां प्रत्ययानां परत्वाद् बाधनार्थमेव ञिचः प्रकरणान्ते पाठः, प्रकरणादौ च सर्वतो व्यापकस्योत्सर्गभूतस्य सिचः पाठः, तदनन्तरं तदपवादस्य सकः, ततश्चात्मनेपदपरस्मैपदयोरुभयत्र विधीयमानस्य "णि-श्रि०" [ ३. ४. ५२. ] इत्यादिसूत्रविहितस्य ङः, तदनन्तरं परस्मैपदमात्रे विधीयमानस्याङः पाठः, सर्वान्ते च भाव-कर्ममात्रविधेयस्य ञिचः, इति क्रमस्यान्यथोपपत्तिसम्भवादेतेन क्रमेण पाठः प्रकृतन्यायज्ञापक इत्याश्रयितुमशक्यम् । तस्मात् स्वचारितार्थ्याय परस्मिन् शास्त्रेऽवश्यं बाधनीयेऽव्यवहितबाधेन चारितार्थ्यसम्भवे व्यवहितबाधे प्रमाणाभाव इत्येवैतन्न्यायमूलमित्यवगन्तव्यम् ।

अयमप्यनित्य एव, तथा च "संयोगात्" [ २. १. ५२. ] इतीयादेशो यथा शिश्रियुरित्यादौ "योऽनेकस्वरस्य" [ २. १. ५६. ] इत्यनन्तरसूत्रविहितं यत्वं बाधते, तथा यवक्रियावित्यादौ "क्विब्वृत्तेरसुधियस्तौ" [ २. १. ५८. ] इति व्यवहितेन सूत्रेण विहितं यत्वमपि बाधत एवेति ॥ ३६ ॥

## *पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्* ॥ ३६ ॥

त०—अत्र "उत्सर्गशास्त्रमुक्त्वाऽपवादशास्त्रकथनमिति न्यायोपेतः पन्थाः, प्रतियोगिज्ञानस्याभावज्ञाने इवापवादज्ञाने उत्सर्गज्ञानस्याप्यावश्यकत्वात्" इत्येकः पक्षः, स च लक्षणैकचक्षुष्कविषयः। "पूर्वमपवादशास्त्रमुल्लिख्य तद्विषयपरिहारेणोत्सर्गशास्त्रप्रवृत्त्यर्थं पश्चादुत्सर्गशास्त्रोल्लेखः" इति द्वितीयः पक्षः, स च लक्ष्यैकचक्षुष्कविषयः। तत्र प्रथमपक्षस्यैव शिष्यानुकूलतया तस्यैव समादरेणायं न्यायः पठ्यते। यत्रापवादशास्त्रमेव पूर्वं पठ्यते पश्चादुत्सर्गशास्त्रं तत्र केनाऽपि विशिष्टेन प्रयोजनेन भवितव्यमिति लक्षणैकचक्षुष्क आलोचयति, तच्च प्रयोजनमेतदेव यद्—अव्यवहितमेवोत्सर्गशास्त्रमयं बाधते न व्यवहितमिति। सर्वबाधस्येष्टत्वे हि सर्वानुत्सर्गान् पूर्वमुक्त्वैवापवादान् कथयेत्, यत्र न तत् कृतं तत्र पूर्वोक्त एव ग्रन्थकृतामाशय इत्युक्तन्यायः सिद्ध्यति। इति 'सक्-अब्-जिच्'विधायकसूत्राणामेवमुपन्यासक्रमस्य ज्ञापकत्वमुपन्यस्यतां न्यायार्थमञ्जूषाकृतामाशयं केचिद् वर्णयन्ति, तदपि न—प्रकृतशास्त्रक्रमस्योपपत्तेरुक्तत्वेन तस्य क्रमस्यात्र ज्ञापकत्वासम्भवात् ॥ ३६ ॥

---

## *मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्* ॥ ३७ ॥

सि०—मध्य इति वर्तमानक्रियाऽपेक्षा सप्तमी, उत्सर्गशास्त्राणां मध्ये वर्तमानाः, अपवादाः—अपवादशास्त्राणि, पूर्वान्—स्वस्मात् पूर्वं पठितान्, विधीन्—विधायकानि उत्सर्गशास्त्राणि, बाधन्ते—प्रतिषिध्य प्रवर्त्तन्ते, नोत्तरान्—स्वोत्तरपठितानि सूत्राणि न बाधन्त इति न्यायार्थः। यथा "ब्रह्म-भ्रूण-वृत्रात् क्विप्" [५. १. १६१.] इति सूत्रेण भूते ब्रह्माद्युपपदाद्धन्तेर्विहितः क्विप् विशेषविहितत्वादपवादः, स च स्वविषये "कर्मणोऽण्" [५. १. ७२.] इत्यणं "ब्रह्मादिभ्यः" [५. १. ८५.] इति टकं "हनो णिन्" [५. १. १६०.] इति णिनं च बाधते पूर्वोक्तत्वात्; "क्त-क्तवतू" [५. १. १७४.] इति क्तवतुं तु न बाधते परतः पठितत्वात्, अत्र अण्-टकौ कालसामान्ये विहिताविति सामान्यविहितत्वं तयोः, णिन् तु यद्यपि भूते विहितस्तथाप्युपपदविशेषानुक्तेः सामान्यविहित एवेति ते क्विपा बाध्यन्ते, स च मध्ये पटितत्वेन परतः पठितं क्तवतुं न बाधते, एतन्न्यायप्रवृत्तेः। तथा च 'ब्रह्महा' 'ब्रह्म हतवान्' इति रूपद्वयमेव भवति, न तु—ब्रह्मघातः, ब्रह्मघ्नः, ब्रह्मघातीति च। अस्य मूलं तु तादृशप्रयोगा एवेति लक्ष्यानुरोधादेवायं न्यायः समाश्रीयते इति प्राचीनाः। वस्तुतस्तु पूर्वशास्त्रबाधेन बाधकताबीजस्यानवकाशत्वस्योपक्षीणतया "स्पर्धे" [ परः " ७. ४. ११९.] इति परिभाषासूत्रबाधे सामर्थ्याभाव एव बीजमिति युक्तः पन्थाः ॥ ३७ ॥

---

## *मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्* ॥ ३७ ॥

त०—अयमपि न्यायोऽपवादशास्त्रस्याविशेषात् सर्वोत्सर्गशास्त्रबाधकत्वे प्रसक्ते तस्य संकोचार्थ एव। तत्र मूलं चैतन्न्यायानुकूललक्ष्याणां सिद्धये उपायान्तराकरणमेवेति प्राचीना आहुः, तन्न युक्तम्—तादृशलक्ष्याणामनभिधान एवाचार्याणां तात्पर्यमित्येव कुतो नावधार्येत। ततश्च यत्र पूर्वं परतश्चोत्सर्गशास्त्राणि पठ्यन्ते मध्ये चापवादशास्त्रं, तत्र "स्पर्धे" [७. ४. ११९.] इति परिभाषासूत्रसहकारेणापि पूर्वशास्त्रबाधे कृते निरवकाशत्वमूलस्य बलवत्त्वस्य प्रक्षीणतया "स्पर्धे" [७. ४. ११९.] इति शास्त्रबाधे प्रमाणाभावेन स्वोत्तरोत्सर्गशास्त्रबाधेऽपवादशास्त्रस्य सामर्थ्याभाव एवैतन्न्यायमूलमित्यवगन्तव्यमिति, तदेवोक्तं वृत्तौ ॥ ३७ ॥

---

## *यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते* ॥ ३८ ॥

सि०—यम्—उत्सर्गतया स्वविषये प्राप्तं, विधिं प्रति-विधिविषयकः, उपदेशः—कथनं लक्ष्ये प्रवृत्तत्वान्वाख्यानम्, अनर्थकः—न कमप्यर्थं साधयति, स विधिः, बाध्यते—प्रवृत्तिविकलीक्रियते, स्वयमेव न प्रवर्तत इति यावत्। यस्य सूत्रस्य लक्ष्ये प्रवर्तने किञ्चित् फलं नास्ति तत् सूत्रं तत्र न प्रवर्त्यते, सर्वस्याः सूत्रप्रवृत्तेर्लक्ष्यसंस्कारार्थत्वाद् येन किमपि लक्ष्ये न संक्रियते स विधिरानर्थक्यान्न प्रवर्तते इति भावः। लोके मेघादिकृता वृष्टिर्जलेऽपि स्थलेऽपि च दृष्टा, यत्र च वर्षणस्य किमपि प्रयोजनं नास्ति तत्रापि मेघो वर्षति, तथा शास्त्रेऽपि प्राप्तमिति तद्वारणाय न्यायोऽयमाश्रितः। यथा—"तनि-त्यजि-यजिभ्यो डद्" [उणा० ८९५.] इत्यनेन डद्प्रत्यये 'तद् त्यद् यद्' शब्दा निष्पाद्यन्ते, अत्र दस्य पुनः "धुटस्तृतीयः" [२. १. ७६.] इति दविधिः स्यात्, न च तदुपरतिरिति तत्प्रयोगस्य कदापि परिनिष्ठितत्वं न स्यादिति तस्य प्रवर्तने फलाभावेन तस्य प्रवृत्तिरनेन न्यायेन वार्यते। तथा संचस्कारेत्यादावुपसर्गयोगानन्तरमेव पूर्वं स्सटि ततः परोक्षानिमित्तके द्वित्वे 'स्कृ-स्कृ' इति स्थितौ "अघोषे शिटः" [४. १. ४५.] इति द्वित्वे पूर्वस्य स्सटो लुकि, पुनश्च स्सड्विधायकसूत्रस्य प्राप्तिसत्त्वात् स्सट् भविष्यति, अनेन न्यायेन निवर्त्यते, यतः स्सटि सत्यपि "अघोषे शिटः" इत्यस्य प्रवृत्त्या तस्य लुपि फलाभावः। लक्ष्यस्य परिनिष्ठितत्वार्थमीदृङ्न्यायस्यावश्यकत्वम्। तथा चेदृशलक्ष्यसिद्धिरेवात्र न्याये मानमिति प्राचीनाः।

कृतस्यैव पुनः पुनः करणे हि व्यापारानुपरमप्रसङ्गेन रूपाणि कदापि न सिद्ध्येयुः । एवञ्च क्रियानुपरमप्रसङ्गस्थल एवैतन्न्यायप्रवृत्तिरिति तत्त्वम् ॥ ३८ ॥

## *यस्य तु विधेर्निमित्तमस्ति नासौ विधिर्बाध्यते* ॥ ३९ ॥

सि०—यस्य–प्रवर्त्तयितुमिष्टस्य, विधेः, निमित्तं–प्रवृत्तिप्रयोजनमस्ति, असौ विधिर्न बाध्यते, प्रवर्त्यत एवेति भावः । यथा 'तच्चारु' इत्यादौ तदो दकारस्यैव "धुटस्तृतीयः" [२. १. ७६.] इति दत्वं क्रियत एव, अग्रेऽसत्त्वबोधनेन कार्यान्तरस्य साधयिष्यमाणत्वेन प्रयोजनसद्भावात्; तथाहि–असदधिकारविहितस्य दत्वस्य "च-जः क-गम्" [२. १. ८६.] इति परकार्ये कर्तव्येऽसत्त्वात् तस्य स्थाने विहितं "तवर्गस्य श्चवर्ग-ष्टवर्गाभ्यां योगे च-टवर्गौ" [१. ३. ६०.] इति जत्वमप्यसदेवाभूत् स्थानिधर्मात्, ततस्तत्स्थाने "अघोषे प्रथमोऽशिटः" [१. ३. ५०.] इति कृतं चत्वमप्यसदभूत्, तथा च "च-जः क-गम्" [२. १. ८६.] इत्यनेन गत्वकत्वे नाभूताम्, अन्यथा जकारसत्त्वे गत्वं चकारसत्त्वे च कत्वं दुर्वारं स्यादिति 'तक्चारु, तग्चारु' इत्यादि रूपं स्यात् । अयं च न्यायो यद्यपि नावश्यकः, सप्रयोजनस्य विधेः स्वत एव प्रवर्त्तमानत्वेन तदर्थं न्यायाश्रयणस्यानावश्यकत्वात्, तथापि पूर्वन्यायेन 'तद्' शब्दे "धुटस्तृतीयः" [२. १. ७६.] इति सूत्रस्य प्रवृत्तिः फलाभावाद् वारितेत्यत्रापि [ 'तच्चारु' इत्यादिप्रयोगेष्वपि ] तन्न्यायाश्रयणेन तत्प्रवृत्तिर्वारिता स्यादिति तन्न्यायस्यात्र प्रवृत्तिर्मा भूदित्यर्थमेवायं न्यायः समाश्रित इति प्राचीनानामाशयः ॥ ३९ ॥

### *यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते* ॥ ३८ ॥

### *यस्य तु विधेर्निमित्तमस्ति नासौ बाध्यते* ॥३९॥

त०—प्राचीनरीत्या व्याख्याताविमौ न्यायौ वृत्तिसमये । वस्तुतस्तु नानयोर्न्याययोरित्थं व्याख्यानमुचितम्, आनर्थक्यप्रसङ्गात् । तथाहि–पूर्वन्यायेन निष्प्रयोजनस्य विधेरप्रवृत्तिरित्ययमर्थो व्यापारानुपरमप्रसङ्गेन साधितः, न चैतद् युक्तम् *पर्जन्यवल्लक्षणप्रवृत्तिः* इति न्यायस्याग्रे वक्ष्यमाणत्वेन तेन न्यायेन सम्प्रति फलाभावेऽपि तात्कालिकं फलमनपेक्ष्यापि प्राप्तौ सत्यां शास्त्रप्रवृत्तिर्भवतीत्युपपादितत्वात् । इहापि च 'तच्चारु' इत्याद्यर्थं 'तद्' इत्यादौ "धुटस्तृतीयः" [२. १. ७६.] इति शास्त्रं प्रवर्तयितुमिष्टमेवेति न तस्य सर्वथाऽऽनर्थक्यम्, अनर्थकप्रवृत्तिमच्च शास्त्रं कथमुपदिष्टं स्यात्? । न च व्यापारानुपरमवारणार्थमपि न्यायोऽयमपेक्षितः *लक्ष्ये लक्षणं सकृदेव प्रवर्तते* इत्यस्यापि न्यायस्य भाष्यकारादिभिर्ध्वनितत्वात्, तदुक्तम्–"इको झल्" [पा० सू० १. २. ९.] इति सूत्रे महाभाष्ये–"अकृतकारि खल्वपि शास्त्रम्, अग्निवत्" इति । यथा अग्निर्दग्धं पुनर्न दहति तथा शास्त्रं कृतं कार्यं पुनर्न करोतीति, युक्तं चैतत्; प्रयोजनार्थमेव हि सर्वस्यापि प्रवृत्तिर्मन्दस्यापि, विना प्रयोजनमेव शास्त्रं कुतः प्रवर्तिष्यते? । परिनिष्ठितत्वं चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्, पुनः प्रवृत्तिवारणायैव ह्येतल्लक्षणे 'अप्रवृत्त' इति विशेषणं दत्तम् । तथा च पूर्वन्यायस्य तदुक्तार्थत्वाभावे तद्वारणार्थस्य परस्य न्यायस्यापि न तादृशं व्याख्यानमुचितम् । अस्मन्मते चाग्रिमन्यायस्य [ *येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः* इति न्यायस्य ] अवतरणभूतावेवेमौ न्यायाविति नानयोः पृथग्व्याख्यानमपेक्षितमिति । तथा च तदप्राप्तियोग्येऽचारितार्थ्यमेवाग्रिमन्याये बाधकत्वबीजमित्येताभ्यां न्यायाभ्यां प्रकटीकृतम् ॥ ३८–३९ ॥



## *येन ना प्राप्ते यो विधिरारभ्यते, स तस्यैव बाधकः* ॥ ४० ॥

सि०—पूर्वन्यायेष्वपवादशास्त्राणां व्यवस्था वर्णिता, सम्प्रत्यपवादपदार्थं बोधयितुमथवा बाधकत्वबीजं स्फोरयितुमिमं न्यायमाह । अत्र 'नाप्राप्ते' इति पदघटके प्राप्तपदे भावे क्तः, ततश्च येनेत्यत्र कर्तरि तृतीया, तथा च 'येन नाप्राप्ते' इत्यस्य यत्कर्तृकावश्यप्राप्तौ सत्यामित्यर्थः । 'नाप्राप्ते' इत्यत्र नञ्द्वयसत्त्वेन तस्य प्रकृतप्राप्तपदार्थदार्ढ्यबोधकत्वाद् यत्कर्तृकावश्यप्राप्तौ सत्यामारभ्यमाणो यो विधिः–विधायकशास्त्रं तद्विहितं कार्यं वा, स विधिः, तस्यैव–स्वविषयेऽवश्यप्राप्तस्यैव, विधेर्बाधकः । अत्रैवकारो भिन्नक्रमत्वेन योजनीयः–स तस्य बाधक एवेति, अन्यथा तस्य वैयर्थ्यमिव प्रतिभासेत, अन्यस्य बाधकत्वाप्राप्तेरन्ययोगव्यच्छेदार्थस्यैवकारस्य वैयर्थ्यात्, येन हि स्वविषयो व्याप्तः स एव बाध्यो विरोधात्, यश्चोदासीनस्तेन सह बाध्यबाधकभावानौचित्यात् । बाधकपदसामीप्ये त्वेवकारेणायोगव्यवच्छेदः क्रियते, तथा च न कदाचिदपि बाधकत्वायोगः सर्वदा बाधकत्वमेवेत्यर्थः पर्यवस्यति ।

पाणिनीयादितन्त्रे चात्र न्याये एवकारो नैव पठ्यते, पूर्वन्यायादिभिः क्वचिदपवादस्यापि बाधकत्वायोगस्य कथितत्वात् । किञ्च तत्र नयेऽस्य स्वतन्त्रन्यायत्वास्वीकारः, किन्त्वपवादपदार्थपरिचायकत्वमात्रमस्येति विवेचयिष्यतेऽग्रे ।

प्राचीनैश्चैवकारस्यान्ययोगव्यवच्छेदकत्वार्थतयैव व्याख्यानं कृतमिति सम्प्रति तदनुसारमेव व्याख्यायते । यस्तु स्वविषये क्वचित् प्राप्नोति क्वचिच्च न प्राप्नोति तादृशस्यानित्यप्राप्तिमतोऽपि विधेर्बाध्यत्वे प्राप्ते एवकारेण तस्य बाध्यत्वं व्यावर्त्यते इति

तदाशयः। अवश्यप्राप्तिमत इव प्राप्त्यप्राप्तिमतोऽपि [ तादृश-विधिं प्रत्यपि ] बाधकत्वे प्राप्तेऽयं न्याय आरभ्यते। यथा 'विद्वत् कुलम्, विद्वान्, हे विद्वन्!' इत्यादौ सर्वत्र सकारस्य "सो रुः [ २. १. ७२. ] इति रुत्वं प्राप्नोत्येव; एवं 'स्वनडुत् कुलम्, अनड्वान्, हे अनड्वन्!' इत्यादौ सर्वत्र हस्य "हो धुट्-पदान्ते" [ २. १. ८२ ] इति ढत्वं प्राप्नोत्येव; "पदस्य" [ २. १. ७९ ] इति संयोगान्तलोपात् तु 'विद्वान्, हे विद्वन्!, अनड्वान्, हे अनड्वन्!' इत्यादावेव प्राप्नोति, नागमेन संयोगस्य भवनात्, 'विद्वत् कुलम्, स्वनडुत् कुलम्' इत्यादौ तु न प्राप्नोति, धुटोऽभवनान्नागमाभावात् संयोगानिष्पत्तेः। एवं च सति रुत्व-ढत्वयोः संयोगान्तलोपस्य च बाधनार्थं "स्रंस्-ध्वंस्-क्वस्स्वनडुहो दः" [ २. १. ६८. ] इति दत्वविधायकसूत्रं प्रारब्धम्, परन्तु तत्सूत्रमेकान्तप्राप्तिमती रुत्व-ढत्वे एव बाधते प्रकृतन्यायात्, न तु कादाचित्कप्राप्तिमन्तं संयोगान्तलोपम्, तेन 'विद्वत् कुलं, स्वनडुत् कुलम्' इत्यादौ क्रमाद् रुत्वं ढत्वं च बाधित्वा दत्वमेव जातम्, 'विद्वान्, अनड्वान्' इत्यादौ तु दत्वसूत्रेण संयोगान्तलोपस्याबाधात् संयोगान्तलोपो भवत्येव।

ज्ञापकं त्वस्य "स्रंस्-ध्वंस्०" [ २. १. ६८. ] इति सूत्रे क्वसः सन्तत्वविशेषणम्, तथाहि—क्वसः सकारस्य दत्वविधिर्यथा सो रुत्वं बाधते तथा संयोगान्तलोपमपि यदि बाधेत तदा क्वसः सन्तत्वं न कदापि व्यभिचरतीति तस्य सन्तत्वविशेषणं व्यर्थमेव स्यात् "संभवे व्यभिचारे च स्याद् विशेषणमर्थवत्" इति न्यायात्, यत् तु सन्तत्वविशेषणं कृतं तेनेदं ज्ञायते यत्—कदाचित् क्वसः सन्तत्वं व्यभिचरत्यपि, स च व्यभिचारस्तदैव स्याद् यदि संयोगान्तलोपः प्रवर्तेत, संयोगान्तलोपप्रवृत्तिश्चैतन्न्यायाधीनैव, ततश्च 'विद्वान्, अनड्वान्' इत्यादौ दत्वाप्रवृत्त्यर्थं कृतं सन्तत्वविशेषणमेतयोः सन्तत्वाभावप्रयोजकसंयोगान्तलोपप्रवृत्तिज्ञापनद्वारा न्यायमिमं सूचयतीति, सन्तत्वाभावेन विद्वानित्यादौ दत्वं न भवतीति प्राचीनमतानुसारि व्याख्यानम्। एवकाररहितन्यायस्वरूपस्वीकारे, एवकारस्य भिन्नक्रमतया व्याख्याने वा, अवश्यप्राप्तिमतो रुत्व-ढत्वयोर्दत्वविधिर्बाधकः स्यादेव, संयोगान्तलोपश्च नावश्यप्राप्तिमानिति तद्विषयेऽस्य न्यायस्यौदासीन्येन "स्पर्धे" [ ७. ४. ११९. ] इति परिभाषासूत्रेण व्यवस्थायां कृतायां परत्वात् "पदस्य" [ २. १. ७९. ] इति संयोगान्तलोपे विद्वानित्यादि सिद्ध्यति, सन्तविशेषणं च संयोगान्तलोपस्याबाधात् स्वत एव चरितार्थमिति न ज्ञापकम्। अन्यविधेरवश्यप्राप्तौ विधीयमानस्य शास्त्रस्य वैयर्थ्यमेव चोक्तन्यायज्ञापकमित्यवसेयम्। विशेषश्च विवरणे विलोकनीयः॥ ४०॥

***येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः* ॥ ४० ॥**

त०—नायं स्वतन्त्रो न्यायः किन्त्वपवादपदार्थबोधक इति नागेशादीनां मतम्। तथाहि—*अन्तरङ्गादपवादो बलीयान्* इति न्यायमुल्लिख्य नागेशेनालेखि—"तत्रापवादपदार्थमाह—येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति, तत्र 'येन नाप्राप्ते यो विधिरारभ्यते स' इत्यन्तोऽपवादपदार्थः। लोके सति विरोधे बलीयसा दुर्बलस्य बाधदर्शनाल्लोकसिद्धमेवार्थमाह—'तस्य बाधक' इति। एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य विशेषशास्त्रेण बाध इति फलति। विशेषशास्त्रोद्देश्यो यो विशेषधर्मावच्छिन्नः, तद्वृत्तिर्यः सामान्यधर्मः, तदवच्छिन्नोद्देश्यताकशास्त्रस्य, विशेषशास्त्रेण विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रेण बाध इति तदर्थः, सामान्यत्वं व्यापकत्वम्, विशेषत्वं व्याप्यत्वम्। ननु सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तित्वविशेषणं व्यर्थं, सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तित्वासत्त्वे तस्य सामान्यत्वासम्भवादिति चेत्?, न—उद्देश्यतावच्छेदकतावच्छेदकसम्बन्ध एव व्यापकतावच्छेदको ग्राह्य इति भ्रमवारणाय तत्सार्थक्यात्, अन्यथा उद्देश्यतावच्छेदकावच्छेदकसम्बन्धेनेत्येवोपादीयेत, तथा च सम्बन्धानुल्लेखपूर्वकं तादृशविशेषणमात्रोपादानेन कालिकातिरिक्तेन येन केनापि सम्बन्धेन वृत्तिता विवक्षितेति तात्पर्यमवसेयम्। तेन "स्वरादेर्द्वितीयः" [ ४. १. ४. ] इत्यनेन "आद्योऽश एकस्वरः" [ ४. १. २. ] इत्यस्य बाधः, तस्य ह्युद्देश्यतावच्छेदकं धात्ववयवादिभूतस्वरपरत्वविशिष्टद्वितीयैकस्वरत्वम्, तच्च यद्यप्युद्देश्यतावच्छेदकावच्छेदकस्वरूपसम्बन्धेनोर्णुनावित्यत्र नुशब्देऽस्ति, तत्र धात्ववयवप्रथमैकस्वरत्वं स्वरूपसम्बन्धेन नास्ति, किन्तूर्णित्यत्रास्तीति तयोः सामानाधिकरण्यस्याप्यभावेन व्याप्यव्यापकभावस्य सर्वथाऽभावेऽपि स्वघटकस्वरत्ववदुत्तरत्वसम्बन्धेन प्रथमैकस्वरत्वस्य द्वितीयैकस्वरे सत्त्वात् तस्य द्वितीयैकस्वरत्वव्यापकत्वमुपपन्नम्॥

नन्वत्र बाधः कः पदार्थः? न तावद् व्यापकधर्मावच्छिन्ने व्याप्यधर्मावच्छिन्नत्वबोधनम्, तथा सति "स्वरादेर्द्वितीयः" [ ४. १. ४. ] इति शास्त्रीयोद्देश्यतावच्छेदकमादिभूतस्वरत्वं व्याप्यं, तद्धर्मावच्छिन्नातिरिक्तत्वस्य "आद्योऽश एकस्वरः" [ ४. १. २. ] इति शास्त्रीयोद्देश्यतावच्छेदकप्रथमैकस्वरत्वस्य व्यापकत्वात् तद्धर्मावच्छिन्ने बोधनं स्यात्, तथा सति धातोरादिभूतो यः स्वरस्तद्भिन्नस्वरघटितो यः प्रथमैकस्वरोंऽशः, तस्य द्वित्वमित्यर्थे 'आटतुः' इत्यादौ 'अट्' इत्यस्य तथाभूतस्वरभिन्नस्वरघटितत्वाभावाद् द्वित्वानापत्तेः, तथा ञ्णित्तद्धितत्वस्य "वृद्धिः स्वरेष्वादेः" [ ७. ४. १. ] इति शास्त्रीयोद्देश्यतावच्छेदकस्य व्याप्य-

तया तद्धर्मावच्छिन्नातिरिक्तत्वस्योपान्त्यवृद्धि–[ ४. ३. ५०. ]–नाम्यन्त[ ४. ३. ५१. ]वृद्ध्युद्देश्यतावच्छेदकं व्यापकीभूतं ञ्णिणित्प्रत्ययत्वं, तदवच्छिन्ने बोधनेनोपान्त्यवृद्धेर्नाम्यन्तवृद्धेश्च ञ्णिणित्तद्धितभिन्ने एव प्रवृत्त्या ञ्णिणित्तद्धिते तयोरप्रवृत्तेर्न्यायेनैव सिद्धौ "अनुशतिकादीनाम्" [ ७. ४. २७. ] इति सूत्रेऽनुशतिकादिगणे 'पुष्करसद्'शब्दपाठेन 'आदिवृद्धिरन्त्योपान्त्यवृद्धी बाधते' इति ज्ञापनपरभाष्यविरोधापत्तेः। "अनुशतिकादीनाम्" [ ७. ४. २७. ] इति सूत्रेण हि तद्गणपठितानामुभयपदस्थस्वरेष्वादेः स्वरस्य वृद्धिर्विधीयते, तत्र 'पुष्करसद्'शब्दोऽपि गणे पठ्यते, ततोऽपत्येऽर्थे बाह्वादित्वादिञि–'पौष्करसादिः' इत्यत्रोभयपदादिस्वरस्य वृद्धिः सिद्धा, सा च आदिस्वरस्य "वृद्धिः स्वरेष्वादेः" [ ७. ४. १. ] इति सूत्रेण "ञ्णिति" [ ४. ३. ५०. ] इत्यनेनोपान्त्यस्य च वृद्धिविधानेन सिद्धैवेति व्यर्थमेव तत्र गणे 'पुष्करसद्'शब्दग्रहणमिति तद् व्यर्थं सत् 'आदिवृद्धिरन्त्योपान्त्यवृद्धी बाधते' इति ज्ञापयतीत्युक्तं महाभाष्ये। तथाहि–"तद्धितेष्वचामादेः" [ पा० सू० ७. २. ११७. ] इति सूत्रे "तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणवृद्धिप्रतिषेधः" [ वार्तिकम् ], तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः–'कौष्ट्रः, जागतः, इति। ननु चाचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते। कथमन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्?। असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात्। "लोकविज्ञानात् सिद्धम्" [ वार्तिकम् ], सत्यपि सम्भवे बाधनं भवति, तद्यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति, एवमिहापि सत्यपि सम्भवेऽचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते। विषम उपन्यासः, नाप्राप्ते दधिदाने तक्रदानमारभ्यते, तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यति, इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धावचामादिवृद्धिरारभ्यते–सुश्रुत्सौश्रुत इति। "पुष्करसद्ग्रहणाद्वा" [ वार्तिकम् ], अथवा यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽचामादिवृद्धावन्त्योपधालक्षणा वृद्धिर्न भवतीति॥" [ भाष्यम् ]। क्रोष्टुरपत्यमित्यर्थेऽणि आदिस्वरस्य वृद्धौ क्रौष्ट्र इति भवति, जगतोऽपत्यमित्यर्थेऽणि जागत इति, इहोभयत्र क्रमेण "नामिनोऽकलिहलेः" [ ४. ३. ५१. ] "ञ्णिति" [ ४. ३. ५०. ] इति चान्त्यवृद्ध्युपान्त्यवृद्धी अपि प्राप्नुतः, अस्ति च सम्भवो यदुभयं स्यात्, तथा च 'क्रौष्टारः, जागातः' इति रूपे युक्ते इति शङ्काभाष्याशयः। सत्यपि सम्भवे बाधनं भवति, यथा–'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्युक्ते कौण्डिन्यस्यापि ब्राह्मणत्वेन दधिदानतक्रदानयोरुभयोः प्राप्तौ सत्यपि दधिदानोत्तरं तक्रदानसम्भवे तक्रदानेन दधिदानं बाध्यते, तथा सत्यपि सम्भवे उभयवृद्ध्योरादिस्वरवृद्ध्याऽन्त्योपान्त्यवृद्धी बाध्येते इत्येकदेशिनोत्तरिते दधिदानस्यावश्यप्राप्तावारभ्यमाणं तक्रदानं सत्यपि संभवे बाधकं भवति, इह चान्त्यवृद्ध्युपान्त्यवृद्ध्योर्नावश्यप्राप्तावादिवृद्धिरारभ्यते, यतः सुश्रुतोऽपत्यं सौश्रुतः, मरुतोऽपत्यं मारुतिरित्यादावन्त्योपान्त्यवृद्ध्योरप्राप्तावप्यादिवृद्धिरवकाशं लभते, इति न तक्रकौण्डिन्यन्यायेनात्रादिवृद्धेरन्त्योपान्त्यवृद्धिबाधकत्वं साधयितुं शक्यम्, ततश्चानुशतिकादिगणे पुष्करसच्छब्दपाठेनैव 'आदिवृद्धिरन्त्योपान्त्यवृद्धी बाधते' इति ज्ञापनीयमित्युत्तरग्रन्थाशयः। ज्ञापनप्रकारश्च पूर्वमुपपादित एव। प्रकृतमनुसरामः, तथा च पूर्वोक्तरीत्या बाधपदार्थस्वीकारेऽनेनैव न्यायेनादिवृद्धेरन्त्योपान्त्यवृद्धिबाधकत्वं सेत्स्यतीति वृथैव भाष्यकृता ज्ञापकानुसरणं कृतं स्यादिति पूर्वसम्बन्धः। अथैतद्दोषपरिहाराय यैर्यैर्विशेषणैर्यैर्यैर्विशेष्यभूतैः पदार्थैर्विशेषितो व्याप्यो धर्मः, तैस्तैर्विशेषितव्याप्यधर्मावच्छिन्नातिरिक्तत्वबोधनं व्यापकीभूतधर्मावच्छिन्ने बाधपदार्थ इत्यपि न युक्तम्, तथा सति यद्यपि द्वितीयैकस्वरनिष्ठपरत्वावधिभूतत्वविशिष्टं धात्ववयवादित्वविशिष्टं यत् स्वरत्वं तदवच्छिन्नातिरिक्तत्वस्य धात्ववयवप्रथमैकस्वरत्वघटकस्वरत्ववतो बोधनेनाऽऽटतुरित्यादौ 'अट्'धातुघटकस्य स्वरस्य तदतिरिक्तत्वसत्त्वान्न दोषः, ऊर्णुनावेत्यादौ च द्वितीयैकस्वरो 'नु'इति, तन्निष्ठपरत्वावधित्वस्य धात्ववयवादिस्वरत्वस्य चोकारे सत्त्वेन तदवच्छिन्नातिरिक्तत्वविरहान्न तद्घटितस्य द्वित्वम्। एवं चोद्देश्यतावच्छेदकावच्छेदकत्वसम्बन्धेनैव वृत्तित्वग्रहणेऽपि न दोष इति वक्तुं शक्यं, तथाप्युक्तभाष्यविरोधस्य तादवस्थ्यमेव। तथाहि–व्याप्यं ञ्णिणित्तद्धितत्वं, तच्च नामावधिकपरत्वेन विशेषितं कृत्वा नामावधिकपरत्वविशिष्टञ्णिणित्तद्धितत्वावच्छिन्नातिरिक्तत्वेन ञ्णिणित्प्रत्ययत्वावच्छिन्ने सङ्कोचे पाठस्य चारितार्थ्याज्ज्ञापकत्वासंभवादुक्तभाष्यविरोधस्य जागरूकत्वमिति; अत्रोच्यते–तत एव भाष्याद् व्याप्यभूतया शाब्दबोधीयविषयतया व्यापकीभूतायाः शाब्दबोधीयविषयताया बाधः, शाब्दबोधीया च विषयता शाब्दबोधीयविशेष्यतया प्रकारतया च सङ्कुचिता भवति, ततश्चोपान्त्यभूतान्निष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारतारूपोपान्त्यवृद्धिसम्बन्धिनी ञ्णिणित्प्रत्ययत्वावच्छिन्ना विषयता नाम्यन्तप्रकृतिनिष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना अन्त्यवृद्धिसम्बन्धिनी ञ्णिणित्प्रत्ययत्वावच्छिन्ना प्रकारतारूपा वा विषयता, नामनिष्ठविशेष्यतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नञ्णिणित्तद्धितत्वावच्छिन्नप्रकारतारूपविषयताया न व्यापिका, तदभाववति मरुच्छब्दप्रकृतिक इञि प्रत्यये एतस्याः सत्त्वात्। तथा च न्यायेनादिवृद्ध्याऽन्त्योपान्त्यवृद्ध्योर्बाध्याप्राप्त्या ज्ञापकेन बाधः साधित इति न तद्भाष्यविरोधः।

अत्रत्यतत्तन्मतविचारस्तदनुकूलनिवेशप्रवेशादिश्च शास्त्रार्थरसिकैरन्यतोऽवसेयो ग्रन्थगौरवभिया नेहोपन्यस्तः ॥

इत्थं सामान्यधर्मावच्छिन्नोद्देश्यताकशास्त्रत्वं बाध्यत्वे बीजमिति संक्षिप्य विवेचितम्, सम्प्रति विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रत्वं बाधकत्वे बीजमिति वर्णयितुं सामान्यस्तत्स्वरूपमुच्यते—तदप्राप्तियोग्येऽचारितार्थ्यमेव विशेषशास्त्रस्य बाधकत्वे बीजमित्यवसेयम्। तच्च चतुर्विधम्—तदप्राप्तियोग्येऽचारितार्थ्यम् १, तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्यम् २, तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽचारितार्थ्यम् ३, तदप्राप्तियोग्येऽचारितार्थ्ये सत्यपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तावपवादशास्त्रप्रणयनवैयर्थ्यसम्भावना ४, चेति। अत्र तदप्राप्तियोग्यं च तद्विधेयाघटितं बोध्यम्, तेन तद्विधेयघटिते तदप्राप्तियोग्येऽपवादत्वेन जिघृक्षितशास्त्रस्य चारितार्थ्येऽपि न क्षतिः। तत्राद्येन बाधबीजेनोत्सर्गस्य पूर्वमप्रवृत्तिरित्येव बाधः। तथा चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन सङ्कोचः। यथा—"एदापः" [१. ४. ४२.] इति सूत्रस्य "दीर्घङ्याब्व्यञ्जनात्सेः" [१. ४. ४६.] इति सूत्राप्राप्तियोग्येऽचारितार्थ्येन "एदापः" [१. ४. ४२.] इत्येतत्प्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन "दीर्घङ्याब्०" [१. ४. ४६.] इति शास्त्रीयसिपदार्थे संकोचात् 'पद्मा+स्'इत्यवस्थायां "दीर्घङ्याब्०" [१. ४. ४६.] इति सूत्राप्राप्त्या "एदापः" [१. ४. ४२.] इति सूत्रेण सिना सहाप एकारे कृते रूपसिद्धिर्भवति, न चात्र द्वितीयबाधबीजेन निर्वाहः, तस्य बीजस्य "दीर्घङ्याब्०" [१. ४. ४६.] इति सूत्रविषयेऽप्रवृत्तेः। अत एव चानड्वानित्यत्र सिलोपसिद्धिः, अन्यथा "अनडुहः सौ" [१. ४. ७२.] इत्यनेन "दीर्घङ्याब्व्यञ्जनात्०" [१. ४. ४६.] इति सिलोपस्य द्वितीयबाधबीजेन बाधापत्त्या कृतेऽपि नागमे सिलोपानापत्तेः ॥

द्वितीयबाधबीजोदाहरणं च सर्वेषामिति, अत्र "अवर्णस्यामः साम्" [१. ४. १५.] इत्यस्य "ह्रस्वापश्च" [१. ४. ३२.] इति नामाप्राप्तियोग्येऽचारितार्थ्येन कृतेऽपि नामि स्थानिवद्भावेन सामादेशसंभवे चारितार्थ्याच्च द्वितीयबाधबीजेन सामादेशेन नामादेशबाधसिद्धिः। एतद्बाधश्चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वविहितकार्याश्रयातिरिक्तत्वेन संकोचः, तथा च "ह्रस्वापश्च" [१. ४. ३२.] इत्यत्रामूपदार्थे "अवर्णस्यामः साम्" [१. ४. १५.] इति शास्त्रविहितसामाश्रयातिरिक्तत्वेन सङ्कोचात् सर्वेषामित्यत्र सामोत्तरं न नाम्। एवमत्र प्रथमबाधबीजस्य सत्त्वे साम्प्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेनाम्पदार्थे सङ्कोचात् सामः पूर्वमपि नाम् न भवति। एतदेव तक्रकौण्डिन्यन्यायस्वरूपम् ॥

तृतीयबाधबीजेन तु प्रथमबाधबीजप्रयोज्यसङ्कोचघटकस्वप्रवृत्तियोग्यार्थे स्वीयोद्देश्यतावच्छेदकावच्छिन्नेति विशेषणदानरूपः सङ्कोचः क्रियते। तथा च 'अयज+इ+इन्द्रम्' इत्यत्र विभक्तीकारस्य "समानानां तेन दीर्घः" [१. २. १.] इति शास्त्रप्रवृत्तियोग्यत्वेन "अवर्णस्येवर्णादिनैदोदरल्" [१. २. ६.] इत्यत्र "समानानां तेन दीर्घः" [१. २. १.] इति शास्त्रीयसमानस्वराव्यवहितपूर्वत्वविशिष्टसमानस्वरत्वरूपोद्देश्यतावच्छेदकावच्छिन्नो यः स्वप्रवृत्तियोग्यस्तदतिरिक्तस्यावर्णस्य समानस्वराव्यवहितपरसमानस्वररूपस्वप्रवृत्तियोग्यातिरिक्ते इवर्णादावित्येवंरूपस्यैव सङ्कोचस्य प्राप्त्या 'अयज+इ' इत्यत्र "अवर्णस्येवर्णादिना०" [१. २. ६.] इत्यस्य दुर्वारत्वेन न दीर्घः ॥

चतुर्थबाधबीजेन च "अतः स्यमोऽम्०" [१. ४. ५७.] इत्यस्य ["अनतो लुप्" [१. ४. ५९.] इति सूत्रे 'अनतः' इति पदाभावेऽपि] लुब्प्राप्तियोग्येऽचारितार्थ्येन, अमुत्तरं लुपि तु "अतः स्यमोऽम्" [१. ४. ५७.] इत्यस्य प्रणयनवैयर्थ्येन द्वितीयबाधबीजवत् स्वविहितकार्याश्रयातिरिक्तत्वेनैव लुब्विधायकशास्त्रे सङ्कोचः, तेनामुत्तरं न लुप्, प्रथमबाधबीजेन बाधाच्चामः प्रागपि न लुप्, इति बोध्यम्। एवञ्चानेन न्यायेनैव सिद्धे "अनतो लुप्," [१. ४. ५९.] इत्यत्र 'अनतः' इति स्पष्टार्थमेव ॥

अन्ये तु प्रथमबाधबीजेनैव सर्वत्र निर्वाहेऽन्यानि त्रीणि बाधबीजानि नाङ्गीकार्याणीत्याहुः, तेषां मतमिह विस्तरभयात् संक्षिप्य प्रदर्श्यते, तथाहि—द्वितीयबाधबीजस्य फलं सर्वेषामित्युक्तम्, तत्र "अवर्णस्यामः साम्" [१. ४. १५.] इत्यत्र "ह्रस्वापश्च" [१. ४. ३२.] इत्यत्र च 'आमः' इति पदे 'आ+आमः' इत्याकारप्रश्लेषेणाकारादेरामः साम्-नामोः प्रवृत्त्या प्रथमबाधबीजेन पूर्वं सामि आकारादेरामोऽभावेन नाम् न भवति। तृतीयबाधबीजफलस्य 'अयजे इन्द्रम्' इत्यस्य च *असिद्धं बहिरङ्गमन्तरङ्गे* इति न्यायेनैव सिद्धिरिति पूर्वमुपपादितमेव तन्न्यायव्याख्यावसरे। चतुर्थस्य बाधबीजस्य फलं ज्ञानमित्यादावमोलुबभावस्तु 'अनतः' इति कथनादेव सिद्ध इति न तस्याप्यावश्यकतेत्येकेनैव बाधबीजेन सर्वत्र निर्वाह इति संक्षेपः। विस्तरप्रेप्सुभिराकरग्रन्था अवलोकनीयाः ॥ ४० ॥

## *बलवन्नित्यमनित्यात्* ॥ ४१ ॥

सि०—निरवकाशत्वमूलकं बलवत्त्वं [बाध्यबाधकभावं] पूर्वन्यायैर्विचार्य, अन्यकारणमूलकं तद् विचारयितुं क्रमेण प्रवर्तमानो नित्यस्य बलवत्त्वप्रदर्शकं न्यायमाह—बलवदिति। नित्यं—कृताकृतप्रसङ्गि, अनित्यात्—नित्यत्वेनाभिमतशास्त्रभिन्नात् तस्मिन् प्रवृत्ते प्रवृत्त्यभाववतः शास्त्रात्, बलवत्—पूर्वप्रवृत्तिक-

मित्यर्थः । अवश्यमेकस्याप्रवृत्तौ कल्पनीयायां यद्धि शास्त्रं स्वत एव कदाचित् प्रवृत्त्यभाववत् तस्यैव प्रवृत्त्यभावः कार्यं औचित्यात्, यद्धि शास्त्रमन्यस्मिन् कृतेऽकृते च प्रवृत्तिमत् तस्याभावस्य पूर्वमक्लृप्तत्वात् तत्कल्पनस्यानौचित्यमिति भावः । एवं च नित्यस्य बलवत्त्वे तदेव बीजम्, दार्ढ्यायात्र ज्ञापकमपि प्रदर्शयिष्यत इत्यन्यत् । यथा–'अकार्ष्ट' इत्यादौ सिज्लुकि सत्यपि प्रत्ययलक्षणेन "सिचि परस्मै समानस्याङिति" [ ४. ३. ४४. ] इति वृद्धिः प्रवर्त्तिष्यत एवेति नित्या सा, ततश्चानित्यात् "धुड्-ह्रस्वाल्लुगनिटस्तथोः" [ ४. ३. ७०. ] इति सिज्लुको बलवतीति पूर्वमेव प्रवर्त्तते, ततश्च ह्रस्वाभावात् सिज्लुग् न भवति ।

अत्र ज्ञापकं तु "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति सूत्रे कलिहलिवर्जनम्, तद्धि हलिं कलिं वाऽग्रहीत्–'अजहलत्, अचकलत्' इत्यादिसिद्धये पूर्वं "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इत्यस्य प्रवृत्त्यर्थं कृतं स्यात्, तच्च स्वत एव सिद्धम्, त्र्यन्त्यस्वरादिलोपस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वमेव प्रवृत्त्या ततो "नामिनः०" [ ४. ३. ५१. ] इति सूत्रस्य प्राप्त्यभावादेव वृद्धिरप्राप्तेति कलि-हल्योः समानलोपित्वेन "असमानलोपे०" [ ४. १. ६३. ] इत्यादिसूत्राणां प्राप्त्यभावात्, यत् तु कृतं कलिहलिवर्जनं तदन्यत्र त्र्यन्त्यस्वरादिलोपापेक्षया वृद्धेर्बलवत्त्वज्ञापनाय, तच्च ज्ञापनं तस्य वैयर्थ्ये सत्येव सम्भवति, तस्य वैयर्थ्यं च प्रकृतन्यायाश्रयणेनैवेति । एवं च कलि-हलिवर्जनं प्रकृतन्यायज्ञापनद्वारा वृद्धेर्बलीयस्त्वज्ञापकम्, एतन्न्यायमात्रे ज्ञापिते च त्र्यन्त्यस्वरादिलोपस्य नित्यत्वेन पटुमाख्यदपीपटदित्यादावपि पूर्वमन्त्यस्वरादिलोपे कृते समानलोपित्वेन सन्वद्भावाघनापत्तिरिति कलि-हलिवर्जनेन वृद्धेर्बलीयस्त्वमपि ज्ञाप्यते, अन्यथा ज्ञापितेऽप्येतन्न्याये स्वस्य चारितार्थ्याभावात्, एतन्न्यायमात्रसत्त्वे हि नित्यत्वात् पूर्वमन्त्यस्वरादिलोपे समानलोपित्वेन सन्वद्भावाप्रवृत्त्याऽजहलदित्यादिसिद्धेः सुसंपादत्वात् । तथा च यावता विनाऽनुपपत्तिस्तावत् सर्वं ज्ञापयतीति न्यायेन वृद्धेर्बलीयस्त्वमपि ज्ञापयति, तथा पूर्वं वृद्धौ सत्यामैकारलोपेऽसमानलोपित्वेन सन्वद्भावः स्यादिति तद्वारणाय कलि-हलिवर्जनस्य स्वांशे चारितार्थ्यम्; इति प्राचीनानामाशयः । तथाहि–तेषां ग्रन्थस्य निगमनांशः–"तदेवं पट्वादीनां प्रथमतो वृद्धेरेव सम्पादनार्थं यत् कलिहलिवर्जनोपायः सूरिभिः कृतः, तदेवंकरणाभावे नित्यत्वादेतन्न्यायेन बलवत्त्वादन्त्यस्वरादिलुक एव सर्वत्र प्रथमत एव प्रवृत्तिं भवन्तीमाशङ्क्य तन्निवारणार्थमेव । यदि त्वेष न्यायो नाभविष्यत् तदान्त्यस्वरादिलुचो बलवत्त्वाशङ्काया अप्यभावान्नानिष्टार्थेति न्यायेन यथा शिष्टप्रयोगं सर्वाण्यपि रूपाण्युपायं विनाऽप्यसाधयिष्यन्त्यकथम्? अचकलदित्यादीनि कलि-हल्योः प्रथमत एवान्त्यस्वरादिलुक्करणेनासाधयिष्यन्त, अपीपटदित्यादीनि तु पट्वादीनां प्रथमतो वृद्धिं कृत्वा पश्चादन्त्यस्वरादिलुक्करणेनेति । ततश्च यदेतन्न्यायाशङ्कितैः सूरिभिः पट्वादिषु प्रथमं वृद्धेर्व्यवस्थापनार्थं कलि-हलिवर्जनयत्नः कृतः स एतन्न्यायज्ञापक इति व्यक्तमेव" इति । अत्रेदमुच्यते–कलि-हलिवर्जनेन लोपापेक्षया वृद्धेर्बलीयस्त्वमित्येव ज्ञापयितुं शक्यते, तावतैव स्वस्य चारितार्थ्यात्, अपीपटदित्यादीनां सिद्धेश्च, लोपस्य वृद्ध्यपेक्षया कथं बलवत्त्वमित्यत्र तस्य व्यापाराभावात् । यावता विना न स्वस्य चारितार्थ्यं तावदेव ज्ञापनीयम् । लोपस्य बलीयस्त्वे पूर्वं नियते एव हि कलि-हलिवर्जनस्य वैयर्थ्यशङ्का भवति, तदेव कलि-हलिग्रहणं स्ववैयर्थ्यशङ्कार्थं लोपबलीयस्त्वं [ नित्यमनित्याद् बलवदिति रूपम् ] ज्ञापयिष्यतीति चित्रम् । किञ्च वृद्ध्यपेक्षया लोपस्य बलीयस्त्वं स्वत एव परत्वादपि सिद्धम्, परो हि लोपः । तथा च "स्पर्धे" [ परः ७. १. ११८. ] इति परिभाषया लोपस्य वृद्ध्यपेक्षया परत्वाद् बलवत्त्वे प्राप्ते कलि-हलिवर्जनेन वृद्धेर्बलवत्त्वं ज्ञाप्यते इति भवति, नित्यस्य बलवत्त्वज्ञापने च वृद्धेरनित्यतया दुर्बलत्वमेव स्यात्, तच्च कलि-हलिग्रहणप्रतिकूलम् । तस्मान्नित्यस्य बलवत्त्वे ज्ञापकान्तरमन्वेषणीयं, पूर्वोक्तमक्लृप्ताभावस्याभावकल्पनापेक्षया क्लृप्ताभावस्याभावकल्पनस्यैवौचित्यमिति वा न्यायसङ्गतं तन्मूलं स्वीकरणीयमिति प्रतीमः । एतेन यदि त्वेष न्यायो नाभविष्यदित्यादिना या व्यतिरेकव्याप्तिरुक्ता साऽपि प्रत्युक्ता वेदितव्या, परत्वादेव लोपस्य बलीयस्त्वात् । किञ्च *परान्नित्यं बलवत्* इति न्यायेनापि नात्र व्यवस्था सम्भविनी, नित्यत्वेनाभिमतस्य लोपस्यैव परत्वस्यापि सत्त्वात् । तथा च वृद्धेर्बलीयस्त्वमात्रज्ञापनेन स्वचारितार्थ्येऽपीपटदित्यादिरूपसिद्धौ च–निर्बाधायां सर्वोऽप्ययं प्राचीनानां ग्रन्थः किमाशयक इति विचारणीयं सुधीभिरिति ॥ ४१ ॥

*बलवन्नित्यमनित्यात्* ॥ ४१ ॥

त०—बाधकत्वबीजकथनप्रसङ्गेनानवकाशत्वस्य सकलबाधकत्वबीजप्राधान्येन तन्निरूपणमादौ कृतं *येन नाप्राप्ते०* इति न्यायेन, सम्प्रति नित्यत्वमपि क्वचिद् बाधकत्वबीजमिति वर्णयितुं न्यायोऽयमाश्रितः । अस्य च [ नित्यस्य ] बाधकत्वबीजं कृताकृतप्रसङ्गित्वमेव । कृताकृतप्रसङ्गिनोऽपि विधेः शब्दान्तरस्य शब्दान्तरे शब्दान्तराद् वा प्राप्तौ न नित्यत्वमिति *शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः* *शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम्* *लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः* इत्यादिन्यायैः परिभाषेन्दुशेखरे निरूपितम् । यदा तु शास्त्रव्यतिरेकेण तद्विधेय-

कार्ययोरेव नित्यत्वादिविचारः, यदापि लक्ष्यानुरोधाद् व्यक्त्यैक्यस्य लक्षणैक्यस्य वाऽनादरस्तदापि कार्यस्य सदा प्राप्तिमत्त्वेनैव नित्यत्वमित्यपि *क्वचित् कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता* इति न्यायेनोक्तं तत्रैव, तस्यायमाशयः—कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकम्, न तु बाधकाबाधितफलोपहितप्रसङ्ग एव तथेति, तदेतन्न्यायान्तरेणापि प्रतिपादितं *यस्य च लक्षणान्तरेण निमित्तं व्याहन्यते न तदनित्यम्* तथा च तस्य नित्यत्वप्राप्तये लक्ष्ये प्रवृत्तिर्नावश्यिका, यदि लक्षणान्तरेण तस्य निमित्तं व्याहन्यते । क्वचिच्च बाधकाबाधितफलोपहितप्रसङ्ग एव नित्यत्वार्थं गृह्यते, तथा च न्यायान्तरं तदर्थमाश्रयन्ति—*यस्य च लक्षणान्तरेण निमित्तं व्याहन्यते तदप्यनित्यम्* इति । तथा च लक्षणान्तरेण निमित्तस्य व्याघाते तदप्रवृत्तौ न तस्य नित्यत्वमेषितव्यमिति भावः । सप्तमाध्याये महाभाष्यव्याख्यायां कैयटेनास्य न्यायस्योपष्टम्भकत्वेन लोकव्यवहारद्वयमुदाहृतम्—“वालि-सुग्रीवयोर्युद्ध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिनः [ वाल्यपेक्षया ] प्राबल्यं न व्यवहरन्ति । भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति च” इति । अयमाशयः—यथा भगवत्प्रयत्नेनैव सुग्रीवस्य पाण्डवानां च जयेऽविशिष्टेऽपि लोका वालिनं प्रति सुग्रीवस्य प्राबल्यं न व्यवहरन्ति, कौरवान् प्रति पाण्डवानां प्राबल्यं व्यवहरन्ति, तथा प्रकृतेऽपि लक्षणान्तरेण निमित्तविघातस्थलप्रसङ्गस्य बाधकाबाधितफलोपहितप्रसङ्गत्वाभावेऽविशिष्टेऽपि क्वचिन्नित्यत्वं क्वचिदनित्यत्वमिति लक्ष्यानुरोधेनैव व्यवस्थापनीयमिति ॥

अत्र ज्ञापकमप्युपन्यस्तं न्यायमञ्जूषायां प्राचीनैः, तच्च विवेचितमेव वृत्तौ । तत्र चाचार्यसम्मतिरपि प्रतीयत इति बृहद्वृत्तिग्रन्थेनावसीयते, तथाहि—“उपान्त्यस्यासमानलोपिशास्वृदितो ङे” [ ४. २. ३५ ] इति सूत्रव्याख्यायामसमानलोपिपदस्य प्रयोजनप्रदर्शनावसरे राजानमाख्यदरराजदित्यादिप्रत्युदाहरणस्य सङ्गमनाय—“यत्रान्त्यस्वरादिलोपस्तत्र स्थानिवद्भावेन न सिद्ध्यतीति वचनम्” इत्युक्तम्, तत्रेदं शङ्कितम्—“ननु यत्रापि स्वर-व्यञ्जनलोपस्तत्राप्यवयवावयविनोरभेदनयेन स्वरादेश एवेति स्थानिवद्भावेनैव सिद्ध्यति, किमसमानलोपिवचनेन” इति । उत्तरयति—“सत्यम्, स्थानिवद्भावस्य अनित्यत्वख्यापनार्थं वचनम्, तेन वास्यापरिच्छिन्नवान्—पर्यवीवसत्, स्वादुकृतवान्—असिस्वदत् इत्यादि सिद्धम् । अत्रेकारोकारयोः “नामिनोऽकलिहलेः” [ ४. ३. ५१. ] इति वृद्धौ कृतायामन्त्यस्वरादिलोपादसमानलोपित्वम् । ननु च परत्वात् प्रथमं लोपेनैव भवितव्यम्, नैवम्—कलिहलिवर्जनात् परमपि लोपं वृद्धिर्बाधते । अत एव तत्र कलि-हलिवर्जनमर्थवत्” इति । एतेन ग्रन्थेन परत्वमेवान्त्यस्वरादिलोपस्य बलवत्त्वे नियामकमिति स्पष्टमेवोक्तमित्यस्य नित्यस्य बलवत्त्वे ज्ञापककथनं कथमिव तेषां समीचीनमिति विवेचनीयं सूरिभिः । किञ्चास्यान्त्यस्वरादिलोपस्य नित्यत्वमस्त्यपि नेति विवेचितं महाभाष्ये “णौ चङ्युपधाया ह्रस्वः” [ पा० सू० ७. ४. १. ] इति सूत्रे । तथाहि—वादितवन्तं प्रयोजितवान्—अवीवदद् वीणां परिवादकेनेति वाक्येऽवीवददित्यत्र प्रथमणिचो लोपे तेन व्यवधानाद् ह्रस्वाप्राप्त्या सन्वद्भावायपि न स्यादिति तत्सिद्ध्यर्थमित्थं विचारितम्—“उपधाह्रस्वे णेर्णिच्युपसंख्यानम्” [ वार्तिकम् ], उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान्—अवीवदद्वीणां परिवादकेन । किं पुनः कारणं न सिद्ध्यति ?, णिचा व्यवहितत्वात्, णिलोपे कृते नास्ति व्यवधानम्, स्थानिवद्भावाद् व्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावः, चङ्परनिर्ह्रासे न स्थानिवदिति । एवमग्लोपिनां नेति प्रतिषेधः प्राप्नोति, वृद्धौ कृतायां लोपः, तन्नाग्लोप्यङ्गं भवति । इदमिह सम्प्रधार्यं—वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ? परत्वाद् वृद्धिः । नित्यो लोपः कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि, अनित्यो लोपोऽन्यस्य कृतायां वृद्धौ प्राप्नोति, अन्यस्याकृतायाम् । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति, उभयोरनित्ययोः परत्वाद् वृद्धिः, वृद्धौ कृतायां लोपः, तन्नाग्लोप्यङ्गं भवति, एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—वृद्धेर्लोपो बलीयानिति; यदयमग्लोपिनां नेति निषेधं शास्ति; नैतदस्ति ज्ञापकम्, अस्त्यन्यदेतस्य वचने प्रयोजनम्, किम् ? यत्र वृद्धावपि कृतायामगेव लुप्यते, अत्यरराजत् । यत् तर्हि प्रत्याहारग्रहणं करोति, इतरथा हि अलोपिनां नेति ब्रूयात् । एवं तर्हि वृद्धेर्लोपो बलीयानिति” इति । अस्यायमाशयः—अवीवददित्यत्र पूर्वणिलोपस्य स्थानिवद्भावेन व्यवधानान्ङ्परणेरभावादुपान्त्यस्य ह्रस्वो न स्यादिति तदर्थं णेर्णिचि—ण्यन्ताण्णिचि, ह्रस्वविधानार्थं किमपि वचनं कर्तव्यम् । यदि च णिलोपे कृते तस्य वचनान्तरेण स्थानिवद्भावनिषेधाद् व्यवधानाभाव इत्याश्रीयते, तथाप्यन्त्यस्वरादिलोपे समानलोपित्वादेवात्रोपान्त्यह्रस्वो न स्यात् । वृद्धौ कृतायामन्त्यस्वरादिलोपे समानलोपित्वाभाव इत्यपि न वक्तव्यम्, वृद्धेर्लोपस्य बलीयस्त्वात् । तत्र वृद्धेर्बलीयस्त्वं न कृताकृतप्राप्तिमत्त्वरूपनित्यत्वेन, वृद्धावकृतायामिकारलोपः कृतायां च ऐकारलोप इति शब्दान्तरप्राप्त्या तस्यानित्यत्वात्, किन्तु—असमानलोपिनां ह्रस्वादिनिषेधविधानसामर्थ्येन वृद्धेर्लोपस्य बलीयस्त्वज्ञापनात्, यदि च राजानमतिक्रान्तवान्—अत्यरराजदित्यादौ वृद्धौ कृतायामपि समानलोपित्वस्याक्षतेस्तदर्थं समानलोपिनां प्रतिषेध इत्याश्रीयते, तदाऽकारलोपिनामित्यर्थक'अलोपिनाम्' एव प्रतिषेधेन सिद्धे 'अक्' इति समानलोपिसमुदायवाचकशब्दोपादानस्यैव तदर्थज्ञापकत्वमित्यास्थेयम् । तथा च वृद्धेर्लोपस्य बलीयस्त्वेनावीवददित्यादौ समानलोपित्वसत्त्वात्

तत्र ह्रस्वादि न स्यादिति तदर्थं किमपि वचनमारब्धव्यमिति शङ्का स्थिरेति ॥ एतेन महाभाष्यसन्दर्भेणान्त्यस्वरादिलोपस्य नित्यत्वं नेति व्यवतिष्ठते । सति हि नित्यत्वनिमित्तके तस्य बलवत्त्वे तदर्थं ज्ञापकानुसरणक्लेशो न कृतः स्यात् । इत्थं च प्रकृतभाष्यपर्यालोचनेन पटुमाख्यदित्यर्थेऽपपटदित्येव भविष्यति, अन्त्यस्वरादिलोपस्य बलवत्त्वेन समानलोपित्वात् सन्वद्भावाभावात् । तस्यैव भाष्यस्य कैयटग्रन्थेनैतत्स्फोरितम्, तथाहि-तत्रत्यप्रदीपग्रन्थः "हलिकल्योरदन्तत्वनिपातनमेव ज्ञापकं-लोपात् पूर्वं वृद्धिर्भवतीति । णिलोपस्तु वाचनिकेन पूर्वविप्रतिषेधेन वृद्धेः पूर्वं भवति । एवं पटुमाख्यदपीपटदिति सन्वद्भावप्रसङ्गात् प्रत्याहारग्रहणमेव ज्ञापकमाश्रयणीयम्, तेन वृद्धेः प्राग् लोपो विधेयः" इति । अयमाशयः—स्वमते "नामिनोऽकलिहलेः" [ ४. ३. ५१. ] इति सूत्रे कलि-हलिवर्जनमिव पाणिनीये नये "मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच्" [ पा० सू० ३. १. २१. ] इति सूत्रे कलि-हल्योरदन्तत्वनिपातनं क्रियते, तेन च वृद्धौ कृतायामपि तयोः समानलोपित्वमेव भवतीति 'अचकलत्, अजहलत्' इत्यादि सिद्ध्यति । यदि च वृद्धेर्लोपस्यैव बलवत्त्वं स्यात् तर्हि स्वमते कलि-हलि-वर्जनमिव तन्मते तयोरदन्तत्वनिपातमपि व्यर्थमेव स्यात्-ततश्च तेन निपातनेन लोपात् पूर्वं वृद्धिर्भवतीति विज्ञायते । अवीवददित्यत्र च "ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन" इति वार्त्तिकेन णिलोपस्यैव पूर्वं प्रवृत्त्या तदर्थं किमपि वचनमारब्धव्यमेव, णाविति जातिपरो वा निर्देशः स्वीकार्य इति ङपरयोर्णित्वजात्याश्रययोर्द्वयोरपि व्यवधाने ह्रस्वो भविष्यति । एवं पटुमाख्यदपीपटदित्यत्र सन्वद्भावो मा भूदित्येतदर्थं वृद्धेः प्राग् लोपो भवतीति पूर्वोक्तं ज्ञापकमाश्रयणीयमेव, तथा चापपटदित्येव रूपमुचितम् । सूत्ररीत्या चापीपटदित्युभयोः परस्परविरोधे यथोत्तरं मुनीनां प्रामाण्यमिति भाष्यकारमतस्यैव प्रामाण्यमिति नवीनाः । दीक्षितेन च सिद्धान्तकौमुद्यां-'परत्वाद् वृद्धौ सत्यां हि लोपः' इति सूत्रकारमतमुपन्यस्य पश्चाद् भाष्यमतमिदमुपन्यस्तमित्युभयत्र प्रामाण्यमङ्गीकृतमिति 'अपीपटत्, अपपटत्' इत्येव रूपद्वयमपि साधु । स्वमते च पूर्वोक्तेन "उपान्त्यस्यासमानलोपिशास्वृदितो ङे" [ ४. २. ३५. ] इति सूत्रोक्तबृहद्वृत्तिग्रन्थेन वृद्धेरेव बलीयस्त्वस्य ज्ञापनात् पटुमाख्यदपीपटदित्येव भविष्यति, तत्र वृद्धौ कृतायामन्त्यस्वरादिलोपेऽसमानलोपित्वाक्षतेः । तथा च 'अनित्यान्नित्यं बलवत्' इत्यर्थे न ज्ञापकमपि तु स्वतःसिद्धत्वमेवेति । किञ्चास्य न्यायस्य स्वतःसिद्धत्वेनानित्यत्वमपि नोचितम् । न च *नित्यादन्तरङ्गम्* इति वक्ष्यमाणन्यायेन बाध्यमानत्वादस्यानित्यत्वमिति वाच्यम्, बाधकप्रयुक्ताप्रवृत्त्याऽनित्यत्वस्यानङ्गीकारात्, बाधकाबाधितकृताकृतप्रसङ्गित्वरूपस्य नित्यत्वस्य विधिशास्त्रमात्रविषयत्वात्, लक्ष्यानुरोधाज्ज्ञापकान्तरेण वा क्वचिदप्रवर्त्तमानमेवानित्यमिति शाब्दिकसम्प्रदायेऽङ्गीकारात् । बाधकेन हि वक्ष्यमाणन्यायेनान्तरङ्गशास्त्रभिन्नत्वरूपेणानित्यपदार्थे सङ्कोच एव बाधो न तु न्यायस्य साक्षाद्बाध इति तत्त्वविदां विमर्शः । अन्त्यस्वरादिलोपस्य नित्यत्वमपि पूर्वोक्तमहाभाष्यग्रन्थे प्रत्युक्तमेव वेदितव्यम् । यत् तु न्यायार्थमञ्जूषान्यासेऽन्त्यस्वरादिलोपस्य नित्यत्वं सिद्धवत्कृत्य 'नित्यत्वादेतन्न्यायेन बलवत्त्वात्' इति न्यायमञ्जूषाप्रतीकमादाय "नन्वन्त्यस्वरादिलोपस्य न केवलं नित्यत्वादेव बलवत्ताऽस्ति, किन्तु परत्वादपि, ततोऽन्त्यस्वरादिलोपस्य परत्वहेतुकबलवत्त्वशङ्कयाऽपि प्रथमं वृद्धिभवनज्ञापनाय कलि-हलिवर्जनं कृतं स्यादिति कथं नित्यत्वस्यैव केवलस्य ज्ञापकमिदमुद्भावितं भवद्भिः ?, उच्यते-प्रधानधर्मे सम्भवत्यप्रधानधर्मस्य व्यपदेशो न युज्यते, परत्वनित्यत्वयोश्च नित्यत्वमेव प्रधानो धर्मः *परान्नित्यम्* इति न्यायात्, ततः प्रधानधर्मस्य नित्यत्वस्यैव व्यपदेशः कृतः" इति । अस्यायमाशयः-अन्त्यस्वरादिलोपस्य परत्वमपि नित्यत्वमपि, तत्र स्वतः सिद्धस्य परत्वस्याप्यन्त्यस्वरादिलोपप्रयोजकत्वमिति तद्वारणायापि कलि-हलिवर्जनं कुतो नोक्तमिति नाशङ्कनीयम्, नित्यत्वस्य परत्वापेक्षया प्राधान्येन तेनैव वृद्धितो लोपस्य बलवत्त्वोद्भावनं युक्तमिति विचार्य नित्यत्वस्यैवादरादिति । अत्रेदमुच्यते-यदि परत्वमिव नित्यत्वमपि पूर्वसिद्धं बलवत्त्वप्रयोजकं प्रसिद्धं स्यात् तदा परत्वापेक्षया तस्य समादरो युक्तियुक्तः स्यात्, न त्वेवमस्ति, भवद्भिर्नित्यत्वस्य बलवत्त्वे ज्ञापकमिदमेव दीयते, ज्ञापकं च तदा भवति यदा तस्य सार्थक्यायान्य उपायो न स्यात्, अस्ति चेह परत्वरूपो लोपस्य बलवत्त्वप्रयोजक उपाय इति तमाश्रित्य कलि-हलि-वर्जनस्य लोपापेक्षया वृद्धेर्बलवत्त्वज्ञापनेन चारित्यार्थसम्भवे नित्यत्वस्यापि बलवत्त्वज्ञापकत्वायोगात्, किञ्च लोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वस्य पूर्वमुपपादितत्वेनापीह नित्यत्वं तस्य बलवत्त्वप्रयोजकं न भवितुमर्हति । न च शब्दान्तरप्राप्तस्यानित्यत्वं परमतसिद्धमस्मन्मते नादरणीयमिति वाच्यम्, पूर्वोक्तबृहद्वृत्तिग्रन्थे परत्वस्यैवान्त्यस्वरादिलोपे समादृतत्वेन परमतसिद्धस्यापि शब्दान्तरप्राप्त्याऽनित्यत्वस्य स्वीकृतप्रायत्वादिति तदनादरणं तदनुयायिनामयुक्तमेवेति ॥ ४१ ॥

## *अन्तरङ्गं बहिरङ्गात्* ॥ ४२ ॥

सि०—बलवत्त्वप्रयोजकपदार्थान्तरसंग्रहायायं न्यायः, अत्रापि पूर्वन्यायस्थं बलवदिति पदं योज्यम् । अन्तरङ्गम्—अन्तरङ्गत्वेनाभिमतं शास्त्रं, बहिरङ्गात्-स्वापेक्षया बहिर्भूतनिमित्तकात् शास्त्रात्, बलवत्-पूर्वप्रवृत्तिकमित्यर्थः । अन्तरङ्गबहिरङ्गपदार्थौ च पूर्वं विवेचितावेव । तथा च 'ते+इन्द्रम्,

वृक्षे+इन्द्रम्' इत्यत्र पूर्वत्र जस इत्वे परत्र ङौ विभक्तौ च कृतायाम् 'त+इ+इन्द्रम्, वृक्ष+इ+इन्द्रम्' इति स्थितौ प्राप्तात् "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घात् प्रथमम् "अवर्णस्येवर्णादिनैदोदरल्" [ १. २. ६. ] इत्योत्वमेव भवति, एकपदाश्रितवर्णद्वयनिमित्तत्वेनान्तरङ्गत्वात्, समानदीर्घस्य च पदद्वयाश्रितवर्णद्वयनिमित्तकत्वेन वहिरङ्गत्वात्। ज्ञापकं त्वत्र "वृत्त्यन्तोऽसषे" [ १. १. २५. ] इति सूत्रे वत्वापेक्षया वलवत्त्वेनौत्वस्य प्रवर्त्तनमेव, अत्र हि वृत्त्यन्तशब्दादुपस्थितस्य सेरुत्वे तस्योत्वे च कृते 'वृत्त्यन्त+उ+असषे' इति स्थिते उकारस्य पूर्वेण सह ओत्वं परेणाकारेण योगे च वत्वं प्राप्नोतीति परत्वात् "इवर्णादेरस्वे स्वरे यवरलम्" [ १. २. २१. ] इत्यनेन वत्वमेव प्राप्तमिति तदविधायौत्वनिर्देशः कृत इति प्रकृतन्यायाश्रयणं कृतमिति विभाव्यते। अस्ति च तत्राप्येकपदनिष्ठवर्णद्वयाश्रितत्वेनौत्वस्यान्तरङ्गत्वम्, पदद्वयनिष्ठवर्णद्वयाश्रितत्वेन च वत्वस्य वहिरङ्गत्वम्। तथा चैतन्न्यायं विनानुपपद्यमानः स निर्देश एतन्न्यायज्ञापक इति सुस्थमेव। अयं च *वार्णात् प्राकृतम्* इत्यादिभिरग्रे वक्ष्यमाणैर्न्यायैर्बाध्यत इति व्यक्तीभविष्यत्यग्रे। न च तावताऽस्यानित्यत्वं सामान्यशास्त्रस्य विशेषशास्त्रैर्बाधस्य न्यायसिद्धत्वेन तावताऽनित्यत्वव्यवहारस्यायुक्तत्वात्, अन्यथाऽनित्यत्वेनैव तादृशस्थलेऽप्रवृत्तौ विशिष्य ज्ञापकादिभिस्तत्तदर्थस्य ज्ञापने फलाभावात् तेषां न्यायानां वैयर्थ्यप्रसङ्ग इति विभावनीयमन्यत्रापि ॥ ४२ ॥

## *अन्तरङ्गं वहिरङ्गात्* ॥ ४२ ॥

त०—पूर्वम् *असिद्धं वहिरङ्गमन्तरङ्गे* इति न्यायो वहिरङ्गस्यान्तरङ्गापेक्षयाऽसिद्धत्वबोधकः प्रोक्तः, तेन च वहिरङ्गत्वस्य दुर्वलत्वप्रयोजकत्वमुक्तमेव, अत्रान्तरङ्गत्वस्य वलवत्त्वप्रयोजकत्वमुच्यते। न च देवदत्तापेक्षया यज्ञदत्तो दुर्वल इत्युक्ते देवदत्तस्य प्रावल्यमप्युक्तमेव यथा तथाऽन्तरङ्गापेक्षया वहिरङ्गस्य दुर्वलत्वे ज्ञातेऽन्तरङ्गस्य वलवत्त्वमपि ज्ञातमेवेति किं पुनरुक्तेनान्तरङ्गस्य वलवत्त्वेनेति वाच्यम्, पूर्वन्यायेन यत्र वहिरङ्गं जातमन्तरङ्गं च कर्त्तव्यं तत्र वहिरङ्गस्यासत्त्वमिव ज्ञेयमिति रीत्याऽन्तरङ्गस्य प्रवृत्तिः साधिता, अनेन च यत्रान्तरङ्ग-वहिरङ्गयोः समकालमेव प्राप्तिस्तत्राप्यन्तरङ्गमेव प्रवर्त्तते वलवत्त्वादित्युच्यते इति विशेषात्। वस्तुतस्तु पूर्वोक्तन्यायस्य [ *असिद्धं वहिरङ्गमन्तरङ्गे* इत्यस्य ] व्याख्यायामन्तरङ्गे कर्त्तव्ये जातं समकालप्राप्तिकं च वहिरङ्गमसिद्धमित्यस्यार्थस्य प्रदर्शितत्वेनास्यांऽपि न्यायस्यार्थः पूर्वन्यायेनैव क्रोडीकृत इति नास्य न्यायस्य पृथक्कथनमावश्यकम्। अत एव "विप्रतिषेधे परं कार्यम्" [ पा० सू० १. ४. २. ] इति सूत्रे महाभाष्येऽन्तरङ्गस्य वलवत्त्वं प्रस्तुत्य वहूनि तस्य प्रयोजनानि प्रदर्श्य "यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या" इत्युपसंहृत्य "यदि सन्ति प्रयोजनानीत्येषा क्रियते। ननु चेयं च कर्त्तव्या *असिद्धं वहिरङ्गलक्षणमन्तरङ्गलक्षणे* इति। किं प्रयोजनम्?, पचावेदम्, पचामेदम्, असिद्धत्वाद् वहिरङ्गलक्षणगुणस्यान्तरङ्गलक्षणमैत्त्वं मा भूदिति। उभे तर्हि कर्त्तव्ये, नेत्याह—अनयैव सिद्धम्। इहापि 'स्योनः, स्योना' इति, असिद्धत्वाद् वहिरङ्गलक्षणस्य गुणस्यान्तरङ्गलक्षणो यणादेशो भविष्यति। यद्यसिद्धं वहिरङ्गलक्षणमन्तरङ्गलक्षणे इत्युच्यते—'अक्षद्यूः, हिरण्यद्यूः' असिद्धत्वाद् वहिरङ्गलक्षणस्योठोऽन्तरङ्गलक्षणो यणादेशो न प्राप्नोति। नैष दोषः—'असिद्धं वहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्युक्त्वा 'नाजानन्तर्ये वहिष्ट्वप्रक्लृप्तिः' इति। सा तर्ह्येषा परिभाषा कर्त्तव्या?, न कर्त्तव्या, आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येषा परिभाषेति, यदयं "षत्वतुकोरसिद्धः" [ पा० सू० ६. १. ८६. ] इत्याह। इयं तर्हि परिभाषा कर्त्तव्या "असिद्धं वहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति। एषा च न कर्त्तव्या आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येषा परिभाषेति, यदयं "वाह ऊठ्" [ पा० सू० ६. ४. १३२. ] इत्यूठं शास्ति" इत्येवं पूर्वस्य न्यायस्योभयार्थसाधकत्वं स्थापितम्। *अन्तरङ्गं वहिरङ्गाद् बलीयः* इतीदृशन्यायस्योपदर्शितवहुप्रयोजनसत्त्वेन तत्करणमावश्यकमिति यद्यपि प्रतिभाति, तथापि यत्रान्तरङ्गवहिरङ्गयोर्युगपत्प्राप्तिस्तत्र प्रकृतन्यायेन कार्यनिर्वाहेऽपि यत्र वहिरङ्गं प्रवृत्तमन्तरङ्गं च प्रवर्तयितुमिष्टं तत्रानेन न्यायेन लक्ष्यसिद्ध्यसम्भवात् तदर्थम् *असिद्धं वहिरङ्ग[ लक्षण ]मन्तरङ्ग[ लक्षणे ]* इति न्यायोऽपि स्वीकर्तव्य एवेति सिद्धान्तिनोक्ते उभयोरपि कर्तव्यत्वमापतितमिति परेणाक्षिप्तेऽनेनैव [ *असिद्धं वहिरङ्गमन्तरङ्गे* इत्यनेनैव ] सकललक्ष्यसिद्धिरिति सिद्धान्तितम्। तत्र कैयटः—"इयं हि व्यापिका पूर्वोक्तप्रयोजननिष्पादनात्। शास्त्रासिद्धत्वाश्रयणाद् वहिरङ्गलक्षणं न तावत् प्रवर्तते, अन्तरङ्गलक्षणे तु प्रवृत्ते यत्र निमित्तसद्भावस्तत्र वहिरङ्गलक्षणप्रवृत्तिः" इति। तथा च पूर्वोक्तन्यायस्य [ *असिद्धं वहिरङ्गमन्तरङ्गे* इत्यस्य ] अन्तरङ्गे कर्तव्ये वहिरङ्गमसिद्धं, तद् वहिरङ्गं कृतं चिकीर्षितं वेत्यन्यदेतत्। इत्येवमर्थवर्णनेन सकलेष्टसिद्धौ न पृथगन्तरङ्गवलवत्त्वबोधकस्य न्यायस्यावश्यकतेति पूर्वोक्तभाष्यसन्दर्भाशयः। एतेन तस्य न्यायस्य [ *असिद्धं, वहिरङ्गमन्तरङ्गे* इत्यस्य ] आवश्यकत्वे स्थिरीकृते तत्रापतितान् दोषान् *न स्वरानन्तर्ये* इति न्यायज्ञापनेन निरस्यान्ते *असिद्धं वहिरङ्गम्०* इत्यस्यापि ज्ञापकसिद्धत्वमेवेति न तदर्थमपूर्ववचनकरणावश्यकतेति शेषभाष्येण प्रतिपादितम्। स्वमते चोभयविधलक्ष्याणां स्पष्टतया संग्रहाय न्यायद्वयमपि स्वीकृतमिति विज्ञेयम् ॥ ४२ ॥

## *निरवकाशं सावकाशात्* ॥ ४३ ॥

सि०—*येन नाप्राप्ति०*न्यायेन यद्यपि निरवकाशत्वमेव बाधकत्वबीजमुक्तम्, यत्कर्तृकावश्यप्राप्तौ विधीयमानस्य हि तेन व्याप्तावकाशतया निरवकाशत्वात्, तथापि तेन सर्वथा निरवकाशत्वे एव बाधकत्वमित्यायाति, अनेन च कचिच्चारितार्थ्यसम्भवेऽपि बाध्यमानशास्त्रापेक्षयाऽल्पावकाशत्वे बाधकत्वमिति कथ्यते । तथा चात्र 'निर्'शब्दोऽल्पार्थपरः, सावकाशपदे च सहशब्दोऽधिकार्थपरः, तथा चाल्पविषयं शास्त्रं बहुविषयशास्त्राद् बलवदित्यर्थः। तथा चाल्पावकाशं शास्त्रं बह्ववकाशशास्त्रं प्रबाध्य पूर्वं प्रवर्त्तेत इति पर्यवस्यति। यथा "एद् बहु-स्-भोसि" [ १. ४. ४. ] इत्यस्य बह्वर्थे सकारादौ स्यादौ प्रवर्त्तमानत्वेन "भिस ऐस्" [ १. ४. २. ] इत्यस्य च विशिष्य भिस्येव प्रवर्त्तमानत्वेन पूर्वस्य [ एत्त्वविधायकस्य ] परोल्लिखित[ भिस ऐस्विधायक ]शास्त्रापेक्षया दुर्बलत्वम्, तस्य [ एत्त्वविधायकस्य ] बहुविषयत्वात्। तथा च 'वृक्षैः' इत्यादौ ऐसेव प्रवर्त्तते, न त्वेत्त्वं भवति, एत्त्वस्य हि 'वृक्षेभ्यः, एभिः, एभ्यः' इत्यादौ सावकाशत्वम्, ऐसश्च सर्वत्रैत्त्वेन व्याप्तावकाशत्वमेव, तेन चैत्त्वस्य परत्वेऽपि निरवकाशैस्विधायकशास्त्रदृष्ट्या दुर्बलत्वमेव । यदि हि वृक्षैरित्यादावप्येत्त्वमेव प्रवर्तेत तर्हि ऐस्विधायकस्य वैयर्थ्यमेव स्यात्, कृतं च तच्छास्त्रं स्वसार्थक्यायैतन्न्यायमाक्षिपति, तथा चैतत्सूत्रमेवैतन्न्यायं ज्ञापयति । अयं च न कापि बाध्यः, निरवकाशस्यापवादत्वेन सर्वतः प्राबल्यात् ॥ ४३ ॥

## *निरवकाशं सावकाशात्* ॥ ४३ ॥

त०—*येन नाप्राप्ति*न्यायस्यैवायं प्रपञ्च इत्युपपादितं वृत्तौ। तथा च तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽचारितार्थ्यमित्येवंरूपद्वितीयबाधबीजस्थलेऽपि यद्यपि पूर्वन्यायस्य प्राप्तिरस्ति तथापि तद्बाधबीजस्य तेन शब्दतो न सङ्ग्रह इति विशिष्य न्यायान्तरेण तदिह कथ्यते। लोके हि द्विधा व्यवहारा दृश्यन्ते, केचिदसम्भवे एव बाधकाः, केचित् सत्यपि सम्भवे बाधकाः, यथा 'सर्वे ब्राह्मणा भोज्यन्तां, माठर-कौण्डिन्यौ परिवेविषाताम्' इत्युक्ते ब्राह्मणत्वेन माठर-कौण्डिन्ययोः प्राप्तं भोजनं परिवेषणेन विशिष्य विहितेन बाध्यते, तत्र भोजन-परिवेषणयोर्युगपदसम्भवे एव बाधकत्वमिति; अन्यत्र च 'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्याय' इति व्यवह्रियते, तत्र यद्यपि तक्रदानस्य दधिदानोत्तरं ततः पूर्वं वा सम्भवोऽस्ति तथापि विशिष्य विहितत्वेन येन नाप्राप्तौ विहितत्वेन वा तक्रदानं दधिदानस्य बाधकं भवति । तथा च *येन नाप्राप्ति*न्यायः सर्वथा निरवकाशत्वे एव बाधक इति नास्ति। अयं च न्यायोऽसम्भवे एव बाधकत्वप्रदर्शक इति पूर्वन्यायादस्य विशेषः । यद्यपि पूर्वन्यायेनाप्येतल्लक्ष्याणि सिद्ध्यन्ति, तथापि बाधकत्वस्य वैचित्र्यप्रदर्शनार्थोऽयं न्याय इत्यवगन्तव्यम् ॥ ४३ ॥

## *वार्णात् प्राकृतम्* ॥ ४४ ॥

सि०—वर्णाः—अकारादयः, तत्सम्बन्धिकार्यं वार्णम्, प्रकृतिः—प्रत्ययविधावुद्देश्यत्वेनाश्रीयमाणो वर्णसमुदायरूपः शब्दः, तत्सम्बन्धिकार्यं प्राकृतम्, तथा च वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यककार्यापेक्षया प्रकृतित्वावच्छिन्नोद्देश्यककार्यं बलवदिति न्यायार्थः । अत्र प्रकृतिपदेन धातुरेव गृह्यते न तु नाम, तत्कार्याणां वार्णेष्वेवान्तर्भावादिति केचित्, तन्न—तादृशसङ्कोचे मानाभावात्, "स्वरितो वाऽनुदात्ते पदादौ" [ पा० सू० ८. २. ६. ] इत्यादिसूत्रे भाष्यादौ 'कुमार्यै' इत्यादिनामप्रयोगविषयेऽप्येतत्प्रवृत्तिचर्चायाः कृतत्वाच्च । स्वमते चात्र ज्ञापकम् 'ऊवतुः' इत्यादिप्रयोगसिद्ध्यर्थं यत्नान्तराकरणमेवेति पूर्वे व्याख्यातारः, तदपि न समीचीनम्—तादृशरूपसिद्ध्यर्थं यत्नाकरणेन तथाविधरूपस्यैवानिष्टत्वानुमानस्य युक्तत्वात्, सति हि तादृशरूपस्येष्टत्वेऽवश्यमाचार्यैस्तदर्थं यत्नः कृतो भवेत्, न च कृतः, ततस्तस्यानिष्टत्वमेवेत्यपि कश्चिदुद्भावयेत्। अतश्च तदर्थं यत्नाकरणमस्य न्यायस्य ज्ञापकमिति न किञ्चिदेतत् । पाणिनीये महाभाष्ये च षष्ठाध्यायप्रथमाह्निकान्ते "दाश्वान् साह्वान् मीढ्वांश्च" [ पा० सू० ६. १. १२. ] इति सूत्रव्याख्यावसरेऽस्य न्यायस्य ज्ञापकसिद्धत्वं स्पष्टमेवोक्तम्। ज्ञापकं च तत्र "अभ्यासस्यासवर्णे" [ ६. ४. ७८. ] इति पाणिनीये सूत्रेऽसवर्णग्रहणम्। स्वमतेऽपि "पूर्वस्यास्वे स्वरे य्वोरियुव्" [ ४. १. ३७. ] इति सूत्रस्थम् 'अस्वे स्वरे' इति वचनं ज्ञापकं भवितुमर्हति, तथाहि—'इयेष' इत्यादौ 'इ+इष्+अ' इति स्थितौ "लघोरुपान्त्यस्य" [ ४. ३. ४. ] इति गुणः "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घश्च समकालमेव प्राप्नुतः, तत्र दीर्घस्यान्तरङ्गत्वेन पूर्वं प्रवृत्त्याऽस्वस्वरपरत्वाभावेनास्य प्राप्तिरेव नेति तस्य वैयर्थ्यं स्पष्टमेवेति व्यर्थीभूतं तदिमं न्यायं ज्ञापयति। ज्ञापिते चास्मिन्न्याये गुणस्य प्रकृत्युद्देश्यकविधित्वेन बलवत्त्वात् तस्य पूर्वं प्रवृत्तावस्वस्वरपरत्वं भवतीति तस्य सार्थक्यं भवति। 'अस्वस्वर'ग्रहणं हि 'ईषतुः' इत्यादौ गुणादेरप्राप्त्या तत्रेयुवोरप्रवृत्त्यर्थमेव कृतं स्यात्, तत्रापि च पूर्वं समानदीर्घप्रवृत्त्याऽस्वस्वरपरत्वमसंभवमेवेति न्यायज्ञापनं विना न तस्य सार्थक्यम्, इति प्राचीनमतम् ।

नवीनास्तु—"एतन्न्यायाभावे "पूर्वस्यास्वे स्वरे०" [ ४. १. ३७. ] इति संपूर्णसूत्रमेव व्यर्थम्, न च 'इयाय, इयेष' इत्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च

रूपातिदेशेनापहारे—द्वित्वे कृते पुनः प्राप्ते गुण-वृद्धी बाधित्वाऽन्तरङ्गत्वात् समानदीर्घापत्तेः । न च ए-ऐ-ओ-औशब्देभ्य आचारक्विबन्तेभ्यः परोक्षायामियाद्यर्थं सूत्रमावश्यकमिति वाच्यम्, उक्तभाष्यादिप्रामाण्येन तेषामनभिधानात् । एवं च सम्पूर्णसूत्रस्यैव ज्ञापकतोचिता न केवलम् 'अस्वस्वर'ग्रहणस्य । यद्यपि षाष्ठप्रथमाह्निकान्तस्थे महाभाष्ये—"यदयम् "अभ्यासस्यासवर्णे" [ ६. ४. ७८. ] इत्यसवर्णग्रहणं करोति" इति ग्रन्थेनासवर्णपदसमानार्थकस्य 'अस्वस्वरे' इत्यस्यैव ज्ञापकता लभ्यते, तथापि "नह्यन्तरेण गुण-वृद्धी असवर्णपरोऽभ्यासो [ द्वित्वे पूर्वः ] भवति" इति तदुपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता समायाति । न च *निमित्ताऽपाये नैमित्तिकस्याप्यपायः* इति न्यायसमानफलकेन *अकृतव्यूहाः शाब्दिकाः* इति न्यायेनेयेपेत्यादौ समानदीर्घाप्राप्तिः, यदि दीर्घो न स्यात् तर्हि गुणः स्यादिति संभावनायाः सत्त्वेन निमित्तविनाशशङ्कया सवर्णदीर्घाप्राप्त्या चास्य सूत्रस्य सार्थक्यसत्त्वेन कथं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम्, *निमित्ताऽपाये०* इति न्यायस्यासत्त्वात्, सत्त्वे वा पूर्वोक्तज्ञापकतापरभाष्यादिप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तन्न्यायप्रवृत्तिस्वीकाराच्च" इत्याद्याहुः । अयं च न्यायो वार्ण-प्राकृतशास्त्रयोः समानस्थानिताकत्व एव प्रवर्तते, समानस्थानिताकत्वं च वार्णशास्त्रीयस्थानितावच्छेदकधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतस्थानिकत्वम् । अयमाशयः—वार्णशास्त्रीयस्थानितावच्छेदकधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्मः प्राकृतशास्त्रीयस्थानितावच्छेदकधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मश्च एको यत्र तत्र समानस्थानिताकत्वमिति । यथा—'इयाय' इत्यत्र वार्णशास्त्रं "समानानां तेन दीर्घः" [ १. २. १. ] इति तदीया स्थानिता पूर्वपरोभयेति त्रितयनिष्ठा, स्थानितावच्छेदकीभूतो धर्मो यथा पूर्वत्वं परत्वं द्वित्वं च, तथा परत्वमपि तादृशपरत्वप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदको धर्म इकारवृत्तिस्वव्यक्तित्वरूपः, तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिर्नामित्वप्रतियोगिताका, तादृशपर्याप्तिप्रतियोगिभूतो धर्मो नामित्वम्, तद्धर्मावच्छिन्नस्थानिताकत्वं "नामिनोऽकलिहलेः" [ ४. ३. ५१. ] इति सूत्रस्येति लक्षणसमन्वयः । यत् तु—समाननिमित्तकत्वरूपसमानाश्रयत्व एवायं न्यायः प्रवर्तेत इति केचिदाहुः, तन्न—ज्ञापितेऽपि इयायेयेपेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च, इयायेत्यादौ हि परेकारनिमित्तकत्वं दीर्घस्य, प्रत्ययनिमित्तकत्वं वृद्धेरिति तयोः समाननिमित्तत्वाभावः सुतरामेवेति किमधिकेन परिष्करणेनेति ॥ ४४ ॥

## *वार्णात् प्राकृतम्* ॥ ४४ ॥

त०—पूर्वन्यायैर्बाह्यधर्मनित्यत्वादिनिमित्तकं बलवत्त्वमुक्तम्, अनेन न्यायेनाभ्यन्तरनिमित्तकं बलवत्त्वं व्याख्यायते । तत्र वार्णादित्यस्य वर्णत्वावच्छिन्नोद्देश्यताकादित्यर्थः, प्राकृतमित्यस्य प्रकृतित्वव्याप्यधर्मावच्छिन्नोद्देश्यताकमित्यर्थः । अयं च न्यायः प्राकृत-वार्णयोः समानकार्यित्व एव प्रवर्तते, समानकार्यित्वं च वार्णशास्त्रीयस्थानिता समानाधिकरणस्थानिताकत्वं प्राकृतशास्त्रे । यथा—वेंग्धातोः परोक्षाया अतुसि 'ऊवतुः' इति भवति, तत्र 'उ+उ+अतुस्' इति स्थिते दीर्घशास्त्रीयस्थानितोभयेकारनिष्ठा, सा च परोकारनिष्ठाऽपि, उभयोः पृथगेव स्थानित्वात्, तत्समानाधिकरणा स्थानितोवादेशनिरूपिता, तन्निरूपकत्वमुवादेशशास्त्रे इति लक्षणसमन्वयः । पर्याप्त्यनिवेशाद् दीर्घीयस्थानितोभयोकारसमुदायनिष्ठा, उवादेशशास्त्रीयस्थानिता च परोकारनिष्ठेति समानस्थानिकत्वस्य न क्षतिः । ननु त्वं स्त्रीत्यत्र 'त्व+अद्+अम्' इति स्थितेऽन्तरङ्गत्वादकारलोपे कृते "शेषे लुक्" [ २. १. ८. ] इत्यस्य शेषस्य [ मन्तादवशिष्टस्य ] लुगित्यर्थे शेषस्य लोपेऽदन्तत्वाभावादाप् न भवतीति सिद्धान्तकौमुदीग्रन्थो विरुध्येत, शेषलोपीयाकारलोपीयस्थानितयोरपर्याप्त्याऽकारनिष्ठत्वेन समानस्थानिताकत्वेनानेन न्यायेन पूर्वमकारलोपे आपो दुर्वारत्वादिति चेत् ? न—वार्णशास्त्रीयस्थानितासमानाधिकरणपर्याप्तस्थानिताकत्वस्यैव समानस्थानिताकत्वपदार्थतयाऽदोषात्, ऊवतुरित्यादौ वार्णदीर्घशास्त्रीयस्थानितापर्याप्तिः परोकारेऽपि, तत्रैवोवादेशस्थानितायाः पर्याप्तेः सत्त्वात्, त्वमित्यादावलोपीयस्थानितापर्याप्तिः परोकारे, तत्र शेषलोपस्थानितापर्याप्तेरभावात् । यत् तु समाननिमित्तकत्वरूपसमानाश्रयत्वे एवैषेति, तन्न—न्यायस्वीकारेऽप्यूवतुरित्याद्यसिद्धेः, तत्र दीर्घस्य परोकारनिमित्तकत्वात्, उवादेशस्य चाकारनिमित्तकत्वात्, तयोः समाननिमित्तकत्वाभावात् । व्याख्यानादिह प्रकृतिपदेन धातुरूपप्रकृतिरेव गृह्यत इत्युक्तं वृत्तौ । पाणिनीयतन्त्रे च सामान्यतो नाम-धातूभयोरेव प्रकृतित्वेन ग्रहणम् "स्वरितो वाऽनुदात्ते पदादौ" [ पा० सू० ८. २. ६. ] इति सूत्रे महाभाष्ये 'कुमार्यै' इत्यादावस्य न्यायस्य प्रवर्तितत्वात्, तेन च नाम्नोऽपि प्रकृतिपदेन ग्रहणमिति स्पष्टमेव । धातोस्तु प्रकृतित्वेन ग्रहणमिति चैतन्न्यायज्ञापकेनैव लब्धमित्युभयग्रहणमुचितम् । अन्यच्चास्य ज्ञापकादिविषये वृत्तावेव विवेचितमिति नेह विव्रियत इति ॥ ४४ ॥

## *य्वृद् य्वृदाश्रयं च* ॥ ४५ ॥

सि०—सस्वरान्तस्थायाः स्थाने विधीयमाना इकारोकारर्कारा य्वृदितिशब्देन व्यवह्रियन्ते । तच्च स्वतो वर्णस्य स्थाने विधीयमानत्वाद् वार्णमेव, तदाश्रितं च दीर्घादिकार्य-

मपि वर्णाश्रितत्वाद् वार्णमेव । तस्य च पूर्वन्यायरीत्या प्राकृत-कार्यापेक्षया दौर्बल्यमुचितमित्यनेन न्यायेन तस्य प्राबल्यं बोध्यते । ग्वृतस्तदाश्रयस्य च कार्यस्य पूर्वन्यायेन येन केनाऽपि यथाकथञ्चिद् यद् दौर्बल्यं प्राप्तं तदनेन निवार्यते सामान्यतो ग्वृतस्तदाश्रयस्य च कार्यस्य बलवत्त्वं बोधयता । प्रकृताऽपेक्षया त्वेवं व्याख्यातव्यम्-ग्वृत् तदाश्रयं च कार्यं वार्णमपि प्राकृताद् बलवत् । यथा-उपपूर्वकात् 'श्वि'धातोः क्त्वाप्रत्यये तस्य यबादेशे "ह्रस्वस्य तः पित्कृति" [ ४. ४. ११३. ] इति तागमो "यजादि-वचेः०" [ ४. १. ७९. ] इति ग्वृचेत्युभयोः प्राप्तौ तागमः परः ह्रस्वान्तप्रकृत्याश्रितत्वात् प्राकृतश्चेति पूर्वन्यायानुसारं बलवानपि ग्वृता बाध्यत इति सस्वरान्तस्थायाः स्थाने ग्वृति उकारे कृते पुनः प्राप्तोऽपि तागमो ग्वृदाश्रयेण "दीर्घमवोऽन्त्यम्" [ ४. १. १०३. ] इति दीर्घेण बाध्यते, ततश्च ह्रस्वाभावात् तागमस्य प्राप्तिरेव नेत्युपशूयेति रूपं सिद्ध्यति । अयं च न्याय ईदृशलक्ष्यानुरोधादेवावलम्ब्यते, नान्यत् किञ्चनात्र ज्ञापकमिति प्राञ्चः । नवीनास्तु नास्य न्यायस्यावश्यकतेति भाष्यादिग्रन्थैः प्रमाणयन्तीति प्रपञ्चितं विवरणे । लक्ष्यानुसारेणास्य स्वीकृतत्वपक्षे चास्य स्थिरत्वमेव न चञ्चलत्वमिति ॥ ४५ ॥

## *ग्वृद् ग्वृदाश्रयं च* ॥ ४५ ॥

त०—ग्वृतः, तदाश्रयस्य-तमाश्रित्य विधीयमानस्य च दीर्घादेः कार्यस्य, प्राबल्यबोधकोऽयं न्याय इति तावत् स्पष्टमेव । तत्रेदं विचार्यते-प्राबल्यप्रयोजकं रूपमिह किं विवक्षितम्? ग्वृत्त्वमिति चेत्? किं तत् जातिरुपाधिर्वा?, न तावज्जातिः-क्वचिदेकत्रानेकत्र वैवंरूपेणाश्रितत्वाभावात्, एकैकशः क्वचिदित्वं क्वचिदुत्वं क्वचिदृत्वं च तिष्ठति नैकत्रेति नैतज्जातिः, न वोपाधिः, तस्यापि क्वचिदेकत्राश्रितत्वनियमात् । तथा च बलवत्ताप्रयोजक-रूपानिर्णयान्न ग्वृतो बलवत्त्वं व्यवस्थापयितुं शक्यते इति चेत्? सत्यम्-स्वमते सस्वरान्तस्थायाः स्थाने विधीयमानानामिकारादीनां प्रत्येकं ग्वृदिति संज्ञेत्यवधारणात्, तथा च ग्वृत्त्वं प्रत्येकवृत्ति रूपमिति तेन रूपेण बलवत्त्वं नियन्तुं शक्यत एव । परमते चान्तस्थायाः स्थाने प्रयुज्यमानानामेषां सम्प्रसारणमिति संज्ञा, यथा-"इग् यणः सम्प्रसारणम्" [ १. १. ४५. ] इति पाणिनीयसूत्रेण विधीयते तद्वदिति भावः । पाणिनीयनये चैतन्न्यायस्थाने *सम्प्रसारणं तदाश्रयं च कार्यं बलवत्* इति न्यायः पठ्यते, स च भाष्यकारेणान्यथा तदीयलक्ष्यसिद्ध्या खण्डितः "लिट्यभ्यासस्योभयेषाम्" [ ६.१.१७.] इति सूत्रव्याख्यावसरे । तथाहि-तत्रैकदेशिवार्तिकम्-"अभ्याससम्प्रसारणं हलादिशेषाद् विप्रतिषेधेन" भाष्यम्-"अभ्यासस्य [ द्वित्वे पूर्वस्य ] सम्प्रसारणं भवति, हलादिशेषाद् [ व्यञ्जनस्यानादेर्लुचः ] विप्रतिषेधेन । अभ्याससंप्रसारणस्यावकाशः-इयाज, उवाप, हलादिशेषस्यावकाशः-विभिदतुः, विभिदुः, इहोभयं प्राप्नोति-विव्याध, विव्यधिथ । अभ्याससम्प्रसारणं भवति पूर्वविप्रतिषेधेन" इति । ततो विप्रतिषेधखण्डकवार्त्तिकम्-"न वा सम्प्रसारणसम्प्रसारणाश्रयबलीयस्त्वादन्यत्रापि" इति । भाष्यम्-"न वा वक्तव्यः । किं कारणम्? सम्प्रसारणसम्प्रसारणाश्रयस्य बलीयस्त्वादन्यत्रापि । संप्रसारणं सम्प्रसारणाश्रयं च बलीयो भवतीति वक्तव्यमन्यत्रापि, नावश्यमिहैव वक्तव्यम्" इति । ततोऽन्यानि तत्प्रयोजनानि प्रदर्शितान्यन्यथा साधितानि च । अत्रैव पुनरेवं शङ्कितं-"तदेतदनन्यार्थं सम्प्रसारणं तदाश्रयं च बलीयो भवतीति वक्तव्यम्, पूर्वविप्रतिषेधो वा वक्तव्यः, उभयं न वक्तव्यम्, उक्तमेवोभयेषां ग्रहणस्य प्रयोजनम्, उभयेषामभ्यासस्य सम्प्रसारणमेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।" इति । अयमाशयः-ग्वृतस्तदाश्रयस्य च कार्यस्य क्वचित् परत्वात् क्वचिन्नित्यत्वात् क्वचिच्चान्तरङ्गत्वादेव सिद्ध्या नान्यत्र तस्य न्यायस्यावश्यकताऽस्ति, केवलं विव्याध विव्यधिथेत्यादिस्थले ग्वृतो व्यञ्जनस्यानादेर्लुचश्च युगपत्प्राप्तौ सत्यां पूर्वं लुचः प्रवृत्तिश्चेदिष्टस्य यकारस्य स्थाने ग्वृन्न स्यादिति दोषः प्राप्नोति, सोऽपि पाणिनीयमते "लिट्यभ्यासस्योभयेषाम्" [ ६. १. १७. ] इति सूत्रे उभयेषां ग्रहणेन यथा साध्यते तथा स्वमतेऽपि परत्वादेव व्यवस्थापयितुं शक्यते । उपशूयेत्यादौ च यद्यपि पूर्वैर्व्याख्यातृभिस्तागमस्य प्राकृतकार्यत्वं ह्रस्वान्तप्रकृत्याश्रितत्वात् ग्वृतश्च सस्वरान्तस्थाश्रितत्वाद् वार्णकार्यत्वमुक्तं तथापि तागमस्यैव केवलं ह्रस्वरूपस्वराश्रितत्वाद् वार्णकार्यत्वं ग्वृतश्च यजादिरूपप्रकृतिमुद्दिश्य विहितत्वात् प्राकृतकार्यत्वमिति पूर्वन्यायेनैव व्यवस्था सुशकेति नास्य न्यायस्यावश्यकत्वमिति युक्तमुत्पश्यामः । ग्वृति कृते दीर्घ-तागमयोः प्राप्तौ दीर्घस्यानैमित्तकत्वेनान्तरङ्गत्वात् प्रवृत्तौ तागमप्राप्तिरेव नेत्युपशूयेत्यस्य सिद्धिरित्येवंप्रकारेण सर्वेष्टसिद्धौ नास्य न्यायस्यावश्यकतेति ॥ ४५ ॥

## *उपपदविभक्तेः कारकविभक्तिः* ॥ ४६ ॥

सि०—*बलवन्नित्यमनित्यात्* [ ४१ ] इति न्याये पठितं बलवत्पदं तदग्रिमन्यायेष्वनुवर्तमानमिह विशेष्यानुरोधात् स्त्रीत्वविशिष्टत्वेन योजनीयमित्युपपदविभक्तेः कारकविभक्तिर्बलवतीति सम्बन्धः । उप समीपे उच्चारितं पदम्-उपपदं, तन्निमित्ता विभक्तिः-उपपदविभक्तिः, क्रियाजनकार्थकविभक्तित्वं कारकविभक्तित्वम् । "शक्तार्थ-वषड्-नमः-स्वस्ति-स्वाहा-स्वधाभिः" [ २.२.६८. ] इत्यादिसूत्रस्य 'नमः' इत्यादिपदानां हि *स्वं रूपम्०* इति न्यायेन स्वरूपमात्रबोधकत्वम्, तेन च स्वरूपेण सह देवादीनां स्वद्योत्यक्रियाकर्मत्वं सम्बन्धः,

क्रियया सह च कर्मत्वमेव सम्बन्ध इति क्रियासम्बन्धस्यान्तरङ्गत्वेन तत्सम्बन्धमूलिकाया विभक्तेरन्तरङ्गत्वमिति तन्मूलकमेव तस्या बलवत्त्वमित्यरङ्गबलवत्त्वबोधकन्यायमूलोऽयं न्याय इति नात्र ज्ञापकान्तरापेक्षा । सिद्धे चात्र न्याये नमस्यति देवानित्यादौ "शक्तार्थ०" [ २. २. ६८. ] इत्यादिसूत्रप्राप्तचतुर्थीविभक्त्यपेक्षया कर्मत्वनिमित्तकद्वितीयाविभक्तेर्बलवत्त्वात् सैव भवति न तु चतुर्थी । "क्रुद्-द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः" [ २. २. २७. ] इति सूत्रे 'यस्मै कोपः' इत्यनिर्दिश्य 'यं प्रति' इति निर्देशेन चास्य न्यायस्य दुर्बलत्वमिति प्राचीनाः । तदाशयश्चेत्थम्-अत्र तावत् कुप्यतिना योगादनेनैव सूत्रेण यदः सम्प्रदानसंज्ञासम्भवाच्चतुर्थी प्राप्नोति, प्रतिना योगात् "भागिनि च प्रतिपर्यनुभिः" [ २. २. ३७. ] इति द्वितीया च; यदि चायं न्याय ओजस्वी स्यात् तदोपपदविभक्तिं द्वितीयां बाधित्वा कारकविभक्तेश्चतुर्थ्या भवने यस्मै प्रति कोप इति निर्दिश्येत, चतुर्थ्यागमनादनु प्रतिशब्दस्य व्यर्थीभूतत्वाद् *निमित्ताभावे नैमित्तिकस्याप्यभावः* इति न्यायेन तत्प्रयोगस्यापि निवृत्तौ 'यस्मै कोपः' इति वा निर्दिश्येत, परमेतस्यानोजस्वित्वाच्चतुर्थीं बाधित्वा द्वितीयैवाजनीत्यतो यं प्रतीति निर्दिष्टमिति । अत्रेदं ब्रूमः-अत्र यच्छब्दार्थं प्रति वास्तविककोपाभावेन न सम्प्रदानसंज्ञा प्राप्नोति, अन्यथा 'मनसा क्रुद्ध्यति, शिष्यस्य क्रुध्यति विनयार्थम्, भार्यामीर्ष्यति मैनामन्यो द्राक्षीत्' इत्यादावपि सम्प्रदानत्वे चतुर्थ्यापत्तेः । तथा चात्र चतुर्थ्यप्राप्त्या प्रतिशब्दयोगे द्वितीया विहितेति नास्य न्यायस्य प्रसर इति नैतेन निर्देशेनास्य दुर्बलत्वं साधनीयम्, सति च क्वचिदप्रवृत्तिप्रयोजने उपायान्तरमन्वेषणीयमिति॥४६॥

## *उपपदविभक्तेः कारकविभक्तिः* ॥ ४६ ॥

त०—नमस्यति देवानित्यत्र 'नमः करोति' इति व्युत्पत्त्या 'नमः'पदार्थस्य कृगर्थत्वेन नमःपदार्थेऽन्वयविवक्षायां चतुर्थी कृधात्वर्थफलेऽन्वयविवक्षायां कर्मणि द्वितीयेति विषयभेदादुभयोर्विभक्त्योर्व्यवस्थासंभवात् कथं चतुर्थ्यापत्तिरिति चेत्? न—"शक्तार्थ-वषड्-नमः-स्वस्ति०" [ २. २. ६८. ] इत्यादिसूत्रस्योद्देश्यतावच्छेदककुक्षौ सम्बन्धविशेषानुक्त्या क्रियाकर्मभावसम्बन्धविवक्षायामपि तत्प्रवृत्तेरत्र चतुर्थ्यापत्तेर्न्यायं विना वारयितुमशक्यत्वात् । न चैवं चतुर्थ्या अपि क्रियाजनकार्थविभक्तित्वरूपकारकविभक्तित्वेन परत्वाच्चतुर्थ्यापत्तिर्न्यायसत्त्वेऽपि दुर्वारेति वाच्यम्, क्रियाजनकत्वमात्रार्थकविभक्तेरेव कारकविभक्तित्वस्वीकारेण "शक्तार्थ-वषड्-नमः-स्वस्ति०" [ २. २. ६८. ] इत्यादिसूत्रविहितविभक्तेः 'देवाय नमः' इत्यादौ क्रियाजनकत्वरूपार्थबोधकत्वाभावेन तन्मात्रार्थकत्वरूपकारकविभक्तित्वाभावात्, "कर्मणि" [ २. २. ४०. ] इति सूत्रविहितद्वितीयायास्तु कदाऽप्यर्थान्तराबोधकत्वेन कारकविभक्तित्वस्य सुवचत्वात् । अत्र च क्रियाजनकत्वेन विवक्षितोऽर्थो ग्राह्यः, तेन मातुः स्मरतीत्यादौ वस्तुतो मात्रादेः क्रियाजनकत्वेऽपि न क्षतिः । प्रथमाया अपि कारकविभक्तित्वमिति "सहयुक्तेऽप्रधाने" [ पा० सू० २. ३. १९. ] इति सूत्रे भाष्ये ध्वनितम्, तत्रैव चायं न्यायो वचनरूपेण पठितः । तथाहि-तत्रत्यं भाष्यं-"किमुदाहरणम्?, तिलैः सह माषान् वपतीति, तिलैर्मिश्रीकृत्य माषा उप्यन्ते, तत्र 'करणे' इत्येव सिद्धम् । इदं तर्हि पुत्रेण सहागतो देवदत्त इति, अप्रधाने कर्तरि तृतीया यथा स्यात् । एतदपि नास्ति प्रयोजनम्, प्रधाने कर्तरि लादयो भवन्तीति प्रधानकर्ता केनाभिधीयते, यश्चाप्रधानं सिद्धा तत्र 'कर्तरि' इत्येव तृतीया । इदं तर्हि पुत्रेण सहागमनं देवदत्तस्येति, षष्ठ्यत्र बाधिका भविष्यति । इदं तर्हि पुत्रेण सह स्थूलः पुत्रेण सह पिङ्गल इति । इदं चाप्युदाहरणं तिलैः सह माषान् वपतीति । ननु चोक्तं तिलैर्मिश्रीकृत्य माषा उप्यन्ते, तत्र 'करणे' इत्येव सिद्धमिति । भवेत् सिद्धं यदा तिलैर्मिश्रीकृत्योप्येरन्, यदा तु खलु कस्यचिन्माषबीजावाप उपस्थितः, तदर्थं च क्षेत्रमुपार्जितं, तत्रान्यदपि किञ्चिदुप्यते, यदि भविष्यति भविष्यतीति, तदा न सिद्ध्यति" । इति । अयमाशयः-'पुत्रेण सह स्थूलः' इत्यादिवद् यत्र तिलानां माषवापेन सह वाप इत्येतावन्मात्रं विवक्षितं न तु तिलैर्मिश्रीकरणं तत्र तिलानां करणत्वाभावात् तृतीयाविधानार्थं सूत्रमिदमावश्यकम् । एकक्षेत्रे च वापात् कालभेदेऽपि सहभावो न विरुद्ध इति । अथात्र सूत्रे 'अप्रधाने' ग्रहणस्य फलं विवेचितम्-"सहयुक्तेऽप्रधानवचनमनर्थकमुपपदविभक्तेः कारकविभक्तिबलीयस्त्वादन्यत्रापि" [ वार्त्तिकम् ], "सहयुक्तेऽप्रधानवचनमनर्थकम्, किं कारणम्? उपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वाद्, अन्यत्रापि *उपपदविभक्तेः कारकविभक्तिर्बलीयसी* इति प्रथमा भवति। एवमत्रापि *उपपदविभक्तेः कारकविभक्तिर्बलीयसी* इति प्रथमा भविष्यति । क्वान्यत्र? गाः स्वामी व्रजतीति" [ भाष्यम् ]। अयमाशयः-पाणिनीये नये "सहार्थे" [२.२.४५.]इत्यस्य सूत्रस्य स्थाने "सहयुक्तेऽप्रधाने" [ २. ३. १९. ] इति सूत्रमारभ्यते, तत्राप्रधानवचनं प्रधाननिवृत्त्यर्थं क्रियते, प्रधानस्य चान्तरङ्गत्वात् कारकविभक्तिर्भविष्यतीति नार्थस्तन्निवृत्त्यर्थेनाप्रधानवचनेन । शिष्येण सहोपाध्यायस्य गौरित्यत्रापि गवा सम्बन्धोऽन्तरङ्ग इत्युपाध्यायात् षष्ठ्यैव भविष्यति न तृतीया। गाः स्वामी व्रजतीत्यत्रापि व्रजिक्रियायां गवां कर्मत्वात् तन्निबन्धनाद्द्वितीया "स्वामीश्वराधिपति०" [ २. २. ९८. ] इति प्राप्ते षष्ठी-सप्तम्यौ प्रबाध्य प्रवर्तत इति । इत्थं च प्रधाने कारकविभक्तिः प्रथमैव भविष्यतीत्यप्रधाने एव पारिशेष्यादनेन तृतीया स्यादिति विनाप्यप्रधानवचनं सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । अनेन च भाष्यसन्दर्भेण प्रथमाया अपि कारकविभक्तित्वं स्पष्टमेव । उक्तभाष्याच्चास्य न्यायस्य

वाचनिकत्वमेव न तु ज्ञापकसिद्धत्वमित्यपि लभ्यते। वस्तुतस्तु प्रधाननिमित्तकत्वेन कारकविभक्तीनां बलवत्त्वम्, तन्मूलकोऽयं न्यायः। नमस्यतीत्यादावपकृष्टत्वप्रकारकबोधानुकूलव्यापारात्मकनमस्कारघटकबोधान्वयमात्रं चतुर्थ्याऽपेक्ष्यते, बोधापेक्षया प्रधानीभूतव्यापारनिमित्तकत्वं द्वितीयायाः प्रधानीभूतव्यापारजन्यफलाश्रयस्य कर्मत्वादिति द्वितीया बलवती। न च कर्तृप्रत्ययस्थले व्यापारस्य प्राधान्यवत् कर्मप्रत्ययस्थले 'नमस्यन्ते देवाः' इत्यादौ वैयाकरणमते फलस्यैव प्राधान्येन साम्यमेवेति वाच्यम्, शाब्दबोधीयविशेष्यत्वरूपप्राधान्यस्य बोधे सत्त्वेऽपि जन्यत्वेनाप्रतीयमानत्वलक्षणप्राधान्यस्य व्यापारे एव तत्रापि सत्त्वात्। अत एव प्रधानक्रियानिमित्तकर्मत्वं तत्र सिद्धम्, तदर्थकत्वेन च प्रथमाया अपि प्रधाननिमित्तकत्वेन चतुर्थ्यपेक्षया बलवत्त्वम्। अत एव सहार्थे तृतीयाविधायकसूत्रेऽप्रधानग्रहणाभावे पुत्रेण सहागतः पितेत्यादौ कारकविभक्तित्वेन प्रथमायास्तृतीयाबाधकत्वेऽपि पुत्रेण सहागतस्य पितुर्धनमित्यादौ षष्ठीं बाधित्वा न तृतीयापत्तिः साहित्यरूपसम्बन्धस्य पित्रनुयोगिकस्य पित्रपेक्षया विशेष्यत्वेन प्रधानीभूतधनानुयोगिकसम्बन्धाऽपेक्षयाऽप्राधान्यात्, तन्निमित्तकषष्ठ्याः साहित्यसम्बन्धनिमित्तकतृतीयापेक्षया बलवत्त्वम्। अस्य न्यायस्य वाचनिकत्वे तु षष्ठ्याः कारकविभक्तित्वाभावेन तृतीयाबाधकत्वानापत्त्याऽप्रधानग्रहणप्रत्याख्यानासङ्गत्यापत्तेः। न चैवं "तत्र च दीयते कार्यं भववत्" [५. १. ९६.] इति पाणिनीयसूत्रस्थभाष्यविरोधः, तथाहि—तत्रत्यभाष्याशयः—प्रकृतसूत्रे दीयते ग्रहणं कार्यग्रहणं च किमर्थम्? यन्मासे दीयते, यन्मासे कार्यं तदपि तत्र भवं भवतीति "तत्र भवः" [पा० सू० ४. ३. ५३.] इत्यनेनैव सिद्धेरित्याशङ्का, तत्र भव इत्यत्रौपश्लेषिकाधिकरणे सप्तमी, तत्र च दीयते इत्यत्र च सामर्थ्याद् "यस्य च भावेन भावलक्षणम्" [पा० सू० २. ३. ३७.] इति सप्तमीति तेन सप्तमी यत्र तत्र प्रत्ययार्थे दीयते ग्रहणमिति। कैयटेन चोपपदविभक्तेरिति न्यायेनोपश्लेषिकाधिकरणे सप्तमीति स्पष्टमेवोक्तम्। एतच्च भाष्यमस्य न्यायस्य वाचनिकत्वे एव संगतं स्यान्नान्यथेति तद्विरोध इति वाच्यम्, यदि सर्वत्र शास्त्रे सत्सप्तम्यैव स्यात् तर्हि "तस्मिन्निति निर्दिष्टे पूर्वस्य" [पा० सू० १. १. ६६.] स्वमते "सप्तम्या पूर्वस्य" [७. ४. ११५.] इति परिभाषासूत्रं व्यर्थं स्यात्, अस्य हि औपश्लेषिकसप्तमी लिङ्गम्, तस्माद् व्यर्थीभूतमिदम् 'असति बाधकेऽस्मिन् शास्त्रेऽधिकरणसप्तम्येव' इति ज्ञापयति। तथा च तत्र भव इत्यत्र ज्ञापकादेवाधिकरणसप्तमीति न तदर्थमस्य न्यायस्य वाचनिकत्वाश्रयणमावश्यकमिति न तत्रत्यभाष्यविरोधः। "तत्र च दीयते" [५. १. ९६.] इत्यत्र तु सामर्थ्यात् सत्सप्तमी। अत एव भाष्ये औपश्लेषिकाधिकरणं विज्ञास्यत इत्येवोक्तं, नन्वेतन्न्यायोपन्यासः। कैयटकृतो न्यायोपन्यासस्तु पूर्वोक्तज्ञापकमूलक एवेति विज्ञेयम्। अत्र केचित्—"नमस्यति देवानित्यत्र नमःपदस्य समुदायैकदेशत्वेनानर्थकत्वात् "शक्तार्थ०" [२. २. ६८.] इति सूत्रे चार्थवत एव नमःशब्दस्य ग्रहणाच्चतुर्थ्या अप्राप्तिरिति नात्रास्य न्यायस्य प्रसर इत्याशङ्क्य न्यायानां स्थविरयष्टिप्रायत्वेन यत्र तैर्विना कार्यं न निर्वहेत् तत्रैव तेषामालम्बनीयत्वेन *अर्थवद्ग्रहणे नानर्थकस्य* इति न्याय इह नाश्रीयते" इत्याहुः, तन्नातिचारु—यतः सति क्यनि नमस्येति समुदायस्य धातुत्वेऽपि क्यनः पूर्वं विद्यमानं नमःशब्दस्यार्थवत्त्वं केनापह्रियताम्? वृत्तिषु व्यपेक्षापक्षस्यापि सर्वसम्मतत्वात्, एकार्थीभावपक्षेऽपि भूतपूर्वकमर्थवत्त्वमादाय चतुर्थीप्रवृत्तिसंभवात्। किञ्च वाक्यसंस्कारपक्षे क्यन उत्पत्तितः पूर्वमेव तत्समकालमेव वा देवपदार्थेन सह सम्बन्धात् तस्मिन् समये नमःपदयोगस्य दुरपह्नवत्वेन तत्रैव चतुर्थीप्रवृत्तिसम्भवादिति विभावनीयं सुधीभिरिति ॥ ४६ ॥

## *लुबन्तरङ्गेभ्यः* ॥ ४७ ॥

सि०—अर्थानुरोधादपिरत्राध्याहार्यः, बलवदिति चानुवर्तत एव, तच्च लुपः स्त्रीत्वेन स्वमते व्यवहारात् स्त्रीलिङ्गेन विपरिणमनीयम्। तथा चान्तरङ्गेभ्योऽपि विधिभ्यो बहिरङ्गाऽपि लुब् बलवती, तानपि प्रबाध्य प्रवर्तत इत्यर्थः सम्पद्यते। अपिशब्दाध्याहारेणान्तरङ्गबाधिकाया अस्याः [लुपः] अन्तरङ्गापेक्षया दुर्बलयोः पर-नित्ययोर्बाधकत्वं सुतरामिति लभ्यते, अपवादबाधकत्वं तु न तस्य निरवकाशत्वेन प्राबल्यात्, तद्बाधकत्वस्येष्टत्वे लुबपवादादपीत्येव न्यायस्वरूपं स्वीकृतं स्यात्; अपवादस्यान्तरङ्गापेक्षयाऽपि प्राबल्येन तद्बाधकत्वे तदपेक्षया दुर्बलानां पर-नित्या-ऽन्तरङ्गाणां बाधकत्वं स्वत एव सिद्ध्येत, न च तदिष्टमिति लुबन्तरङ्गेभ्य इत्येव न्यायस्वरूपं स्वीकृतम्। फलमस्य यथा—गर्गस्य वृद्धापत्यानीत्यर्थे "गर्गादेर्यञ्" [६. १. ४२] इति यञि तस्य "बहुष्वस्त्रियाम्" [६. १. १२४.] इति लुपि—गर्गा इति भवति, अत्र बहिर्भूतबहुवचनविभक्त्यपेक्षतया लुब् बहिरङ्गा, प्रकृत्याश्रिता च "वृद्धिः स्वरेष्वादेः" [७. ४. १.] इति वृद्धिरन्तरङ्गा, साऽत्र लुपः पूर्वं न प्रवर्ततेऽनेन न्यायेन लुप एव प्राबल्यबोधनात्, सत्यां च लुपि ञ्णित्प्रत्ययरूपनिमित्ताभावाद् वृद्धिर्न भवति। अयं च न्यायः "त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्" [२. १. ११.] इति सूत्रे प्रत्ययोत्तरपदग्रहणेन प्रकाश्यते, तथाहि-तत्र त्याद्यधिकारेण 'त्वदीयः, मत्पुत्रः' इत्यादौ 'युष्मद्+अस्+ईयस्, अस्मद्+अस+पुत्र+स' इति स्थिते "ऐकार्थ्ये" [३. २. ८.] इत्यैकार्थ्यविवक्षायामन्तवर्तिन्या विभक्तेर्लुप "त्व-मौ

प्रत्ययोत्तरपदे चैकस्मिन्" [२. १. ११.] इति त्व-मादेशौ च प्राप्नुतः, तत्र लुपः पदद्वयापेक्षैकार्थ्यापेक्षितया बहिरङ्गत्वेन विभक्तिमात्राश्रितत्वेनान्तरङ्गयोस्त्व-मादेशयोस्तदपेक्षया [लुबपेक्षया] बलवत्वात् त्व-मादेशयोः सतोर्लुपि त्वदीय इत्यादिसिद्धौ निर्बाधायां तत्सिद्ध्यर्थं प्रकृतसूत्रे कृतं प्रत्ययोत्तरपदग्रहणं व्यर्थं सत्-'अन्तरङ्गेभ्योऽपि विधिभ्यो लुब् बलवती' इति विज्ञापयति, ततश्च पूर्वमेव स्यादेर्लुपि निमित्ताभावात् त्व-मादेशौ न स्यातामिति तत्सिद्ध्यर्थं प्रत्ययोत्तरपदग्रहणस्य स्वांशे चारितार्थ्यम्। अस्य च न्यायस्य केनापि बाधाभावात् प्रायः स्थिरत्वमेवेति ॥ ४७ ॥

*लुबन्तरङ्गेभ्यः* ॥ ४७ ॥

त०—नन्वत्र "त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन्" [२. १. ११.] इति सूत्रस्थप्रत्ययोत्तरपदग्रहणं ज्ञापकमिति यदुक्तं तन्न शोभनम्, तदभावे हि स्यादौ प्रत्यये युष्मदस्मदोर्मान्तस्य यथासंख्यं त्वमौ स्त इत्येवार्थः स्यात्, तथा च 'युष्मद्+अस्+ईयस्' इत्याद्यवस्थायां परत्वात् त्व-मादेशौ प्रबाध्य "तव मम ङसा" [२. १. १५.] इति तवादेशः स्यादिति त्वदीय इत्याद्यसिद्धिः, सति च प्रत्ययोत्तरपदग्रहणे तत्सामर्थ्यात् परमपि तवाद्यादेशं प्रबाध्य त्व-मावादेशौ भवत इति प्रत्ययोत्तरपदग्रहणस्य सति सार्थक्ये ज्ञापकत्वासम्भव इति चेत्? न-तथा सति 'प्रत्ययोत्तरपदे' इत्यंशे मन्तस्येत्यसम्बन्धो वृत्त्यादिषु कृतो व्यर्थः सन् ज्ञापक इत्यदोषात्। अयमाशयः-तव-ममादेशबाधनार्थं यदि प्रत्ययोत्तरपदं ग्रहणं क्रियत इत्यास्थीयते तदा तस्य तदपवादत्व[तवाद्यादेशापवादत्व]मायाति। तथा च *उत्सर्गसमानदेशा अपवादाः* इति न्यायेन तवाद्यादेशानां मन्तदेशत्वेनास्यापि मन्तदेशत्वसिद्धौ तदंशे [प्रत्ययोत्तरपदांशे] मन्तपदसम्बन्धो व्यर्थः सन् न्यायमिमं ज्ञापयतीत्यास्थेयम्। ज्ञापिते चास्मिन् न्याये तवाद्यादेशापेक्षया लुबः प्राबल्येन स्यादेर्लुपि तवादीनां प्राप्त्यभावादुभयोर्विरोधाभावेन नोत्सर्गापवादत्वमिति मन्तसमुदायस्यादेशार्थं तदंशे [प्रत्ययोत्तरपदांशे]ऽपि मन्तपदसम्बन्ध आवश्यक इति तस्य चारितार्थ्यम्। न च स्वमते *उत्सर्गसमानदेशा अपवादाः* इति न्याय एव नास्ति, तथा च मन्तस्यादेशविधानार्थमेव तत्सार्थक्यमिति न ज्ञापकत्वसंभव इति वाच्यम्, तस्य न्यायस्यौचित्यसिद्धतयाऽवश्यस्वीकर्तव्यत्वात्। न च प्रत्ययोत्तरपदग्रहणं न केवलं तवाद्यादेशबाधकमपि त्वात्वादिबाधकमपि, तथा चात्वादीनामन्त्यस्य स्थाने विधानादुक्तन्यायेनास्यापि कदाचिदन्त्यस्थानित्वं स्यादिति तद्वारणाय मन्तसम्बन्ध आवश्यक इति वाच्यम्, ज्ञापकतापरन्यासादिग्रन्थप्रामाण्यात् तद्विषये बाध्यविशेषचिन्तापक्षस्यैवाश्रयणात्। न च तव-ममाद्यादेशविधायकसूत्रेषु 'मन्त'पदसम्बन्धो वृत्तौ न कृत इति नास्ति 'मन्त'देशत्वमुत्सर्गस्येति तदपवादस्य 'प्रत्ययोत्तरपदे' इत्यंशस्यापि न मन्तदेशत्वमिति भ्रमितव्यम्, 'मन्तपदासम्बन्धे हि ततः पूर्वस्य "युष्मदस्मदोः" [२. १. ६.] इत्यस्यापि सम्बन्धो न स्यात्। तथा च कस्यैते आदेशा इत्यपि न निश्चीयेत।

ज्ञापितश्चायं न्याय एवमेव "प्रत्ययोत्तरपदयोश्च" [पा० सू० ७. २. ९८.] इति सूत्रे महाभाष्ये, तथाहि—"किमर्थमिदमुच्यते न "त्वमावेकवचने" [पा० सू० ७. २. ९७] इत्येव सिद्धम्, न सिद्ध्यति, किं कारणम्? एकवचनाभावात्। एकवचन इत्युच्यते, न चात्रैकवचनं पश्यामः। प्रत्ययलक्षणेन, "न लुमताङ्गस्य" [पा० सू० १. १. ६३] इति प्रत्ययलक्षणप्रतिषेधः। एवं तर्हि इदमिह सम्प्रधार्यं-लुक् क्रियतामादेशाविति, किमत्र कर्तव्यम्? परत्वादादेशौ, नित्यो लुक्-कृतयोरप्यादेशयोः प्राप्नोत्यकृतयोरपि। अन्तरङ्गावादेशौ। एवं तर्हि सिद्धे सति यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन् बाधित्वा बहिरङ्गो लुग् भवतीति। किमेतस्य ज्ञापने प्रयोजनम्? गोमान् प्रियो यस्य-गोमत्प्रियः, यवमत्प्रियः। गोमानिवाचरति-गोमत्यते, यवमत्यते। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति। नैतदस्ति ज्ञापकम्, अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्? येऽन्ये एकवचनादेशाः प्राप्नुवन्ति त्वद्बाधनार्थमेतत् स्यात्, तद्यथा-तव पुत्रः-त्वत्पुत्रः, मम पुत्रो-मत्पुत्रः, तुभ्यं हितं-त्वद्धितं, मह्यं हितं-मद्धितमिति यत् तर्हि मपर्यन्तग्रहणमनुवर्तयति, यद्यत्रान्ये एकवचनादेशा स्युर्मपर्यन्तानुवृत्तिरनर्थिका स्यात्" इति। अयमाशयः प्रत्यये उत्तरपदे च परतस्त्वमादेशविधायकेनानेन सूत्रेण न प्रयोजनम् एकवचने परतस्त्वमादेशस्य पूर्वसूत्रेण विहितत्वात् तेनैव सिद्धेरिति व्यर्थं सदिदं सूत्रं न्यायममुं ज्ञापयति। तेन 'गर्गाः' इत्यादौ वृद्ध्यभाववद् गोमान् प्रियो यस्य स गोमत्प्रिय इत्यादावेकपदाश्रयत्वेनान्तरङ्गाः सुलोपादयः स्युः, पदद्वयाश्रयणाद् बहिरङ्गो लुगिति स न स्यादिति प्रत्ययलक्षणेन नुमादिषु कृतेषु गोमान् प्रिय इत्यादिरूपापत्तिरपि न; अनेन न्यायेन बहिरङ्गस्यापि लुकः प्राबल्यबोधनात्; किन्तु तव पुत्र इति विग्रहे त्वत्पुत्र इत्यादौ तवाद्यादेशा मा भूवन्नित्येतदर्थमस्य सूत्रस्य सार्थक्येन न ज्ञापकत्वमिति मपर्यन्तस्या[मन्तस्येत्यस्या]नुवृत्तिरिह ज्ञापिकेति। अत्र "यत् तर्हि मपर्यन्तग्रहणमनुवर्तयति" इति भाष्यग्रन्थस्य व्याख्यायां विसंवादो दृश्यते, तथाहि, कैयटः—केचिद् व्याचक्षते-'यद्यादेशान्तराणां त्व-मौ बाधकौ स्यातां तदा मपर्यन्तग्रहणानुवृत्तिमन्तरेणोत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्य त्वमौ सिद्धाविति किं तदनुवृत्त्या? अनुवृत्त्या तु ज्ञाप्यते-

प्रागेव लुकि कृते विभक्त्यभावादसत्स्वादेशान्तरेषु त्व-मौ विधीयेते' इति । एतच्चायुक्तम्—नायं नियोगः *उत्सर्गसमानदेशा अपवादाः* इति । श्नमकज्बहुचां भिन्नदेशानामप्यपवादत्वदर्शनात् । ततश्चासत्यां मपर्यन्तानुवृत्तावादेशान्तराणामपि बाधकौ त्वमौ सर्वादेशौ स्यातामनेकाल्त्वादिति सप्रयोजना मपर्यन्तानुवृत्तिः । तस्मादन्यथा व्याख्यायते—तव-ममादय आदेशाः स्थानिप्रकृत्यर्थमिहानुवर्त्तन्ते, तत्र तवादीनां प्रसङ्गे सिद्धयोस्त्वमयोर्मपर्यन्तानुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति । ततश्च तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्ज्ञापनाय भवति । केवला हि मपर्यन्तानुवृत्तिर्लाघवाय स्यात्, गरीयसी हि तवाद्यनुवृत्त्या स्थानिप्रतीतिः । ततो ज्ञापनाय न प्रभवेत् । तस्मात् तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्यथोक्तार्थज्ञापनायालम्" इति । नागेशेन च-*उत्सर्गसमानदेशा अपवादाः* इति न्यायस्यासम्भवे एव बाधकत्वमिति वार्तिकानुसारित्वेन तन्मतानुसारमेव प्रकृतन्यायस्य ज्ञापकसिद्धत्वम् । 'सत्यपि सम्भवे बाधनं भवतीति' भाष्यकृन्मते च* उत्सर्गसमानदेशा अपवादाः* इत्यस्यास्वीकारात्, प्रकृतन्यायो वाचनिक एव श्नमकज्बहुचां भिन्नदेशानामपवादत्वदर्शनेन *उत्सर्गसमानदेशा अपवादाः* इति न्यायस्यानियतत्वं तु न स्थापनीयं तेषामुत्सर्गभिन्नदेशत्वस्य कारणान्तरप्रयोज्यत्वात् । तथाहि—'श्नम्' रुधादिधातुभ्यो विहितः शवपवादोऽपि न शव्वत् प्रकृतिप्रत्यययोर्मध्ये भवति, किन्तु मित्त्वात् [मकारानुबन्धकरणात्] "मिदचोऽन्त्यात् परः" [पा० सू० १. १. ४७.] इति पाणिनिपरिभाषासूत्रानुसारमन्त्यस्वरात् परो भवति, 'अकच्' प्रत्ययः 'क'प्रत्ययापवादोऽपि कप्रत्ययवत् प्रकृतेः परो न भवति, किन्तु "अव्ययसर्वनाम्नामकच् प्राक् टेः" [पा० सू० ५. ३. ७१.] इति तद्विधायकसूत्रे 'प्राक् टेः' इत्युक्तत्वादन्त्यस्वरादिसमुदायात् पूर्वं भवति, एवं 'बहुच्' प्रत्ययः कल्पबादिप्रत्ययानामपवादभूतोऽपि "विभाषा सुपो बहुच् पुरस्तात् तु" [पा० सू० ५. ३. ६८.] इति विधायकसूत्रे पुरस्तादिति कथनेन प्रकृतेः पूर्वं भवतीति सर्वत्र विशेषवचनादेवापवादानामुत्सर्गभिन्नदेशत्वमिति न तेनोत्सर्गा-ऽपवादयोः समानदेशत्वनियमे व्याघातः ।" इत्येवंरूपेण कैयटोक्तस्य चिन्त्यत्वं साधितमित्यास्तां विस्तरः ॥ ४७ ॥

## *सर्वेभ्यो लोपः* ॥ ४८ ॥

सि०—विशेष्यानुरोधेन पूर्वतोऽनुवृत्तं बलवदिति पदं पुंलिङ्गेन विपरिणमयितव्यम्, तथा च सर्वेभ्यो विधिभ्यो लोपविधिर्बलवानिति न्यायार्थः सम्पन्नः । लोपपदेन चादर्शनवाचिना लुप्-लुकोः सामान्येन ग्रहणप्राप्तावपि लुपः पूर्वन्यायेन बलवत्त्वस्योक्तत्वादत्र लोपपदेन लुगेव गृह्यते पारिशेष्यात् । यथा क्विबादीनाम् "अप्रयोगीत्" [१. १. ३७.] इति सूत्रेण 'एति—अपगच्छतीति इत्' इति सार्थकसंज्ञाकरणाद् यददर्शनं तदपि लोपशब्देन "न वृद्धिश्चाविति क्ङिल्लोपे" [४. ३. ११.] इति सूत्रे गृह्यते, तथाऽस्मिन् न्यायेऽपि लुग्लोपेत्संज्ञादीनां सर्वेषां ग्रहणं वेदितव्यम् । तथा च 'अबुद्ध' इत्यत्र "धुड्-ह्रस्वात्०" [४. ३. ७०.] इत्यनेन सिचः सर्वविधिभ्यः पूर्वमेव लोपकरणात् "ग-ड-द-बादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये" [२. १. ७७.] इति सूत्रेणादेश्चतुर्थत्वं न । न च सिचो लोपेऽपि स्थानिवद्भावेन चतुर्थत्वमादेः स्यादेवेति शङ्कनीयम्, सकारस्य वर्णमात्रत्वेन तदाश्रये विधौ स्थानिवद्भावाप्राप्तेः । एवं शं-सुखं, तत्र तिष्ठतीत्यर्थे 'शंस्थाः' इत्यत्र क्विपः पूर्वमेवेत्संज्ञारूपेऽदर्शने जाते स्थाधातोराकारस्य "ईर्व्यञ्जनेऽयपि" [४. ३. ९७.] इति ईर्न भवति, ईत्वविधायकसूत्रेऽयपीति पर्युदासेन व्यञ्जनलाभे सत्यपि 'व्यञ्जने' इति पदं साक्षाद् व्यञ्जनग्रहणायेति व्याख्यानात् । ज्ञापकं त्वस्य "सस्तः सि" [४. ३. ९२.] इत्यत्र विषयसप्तमीव्याख्यानम्, सीत्यत्र निमित्तसप्तम्यां स्वीकृतायां तु वसेरद्यतन्यां तामि 'अवात्ताम्' इत्यादौ सिजुत्पत्त्यनन्तरं "सस्तः सि" [४. ३. ९२.] इति तादेशे सिद्धे पश्चात् सिचः "धुड्-ह्रस्वात्०" [४. ३. ७०.] इत्यनेन लोपेऽवात्तामिति रूपसिद्धिर्यद्यपि सम्भवति, तथापि यद् विषयसप्तमीत्वेनाचार्यैर्व्याख्यानं कृतं तस्यायमेवाशयो यत्—लोपविधेः सर्वविधिभ्यो बलवत्त्वमिति सिजुत्पत्त्यनन्तरमेव "धुड्-ह्रस्वाद्०" [४. ३. ७०.] इति लोपः प्रसज्येतेति सकारपरत्वाभावेन "सस्तः सि" [४. ३. ९२.] इति तादेशो न स्यात् । न च स्थानिवद्भावेन निर्वाहः, 'सि' इति वर्णमात्रस्य निमित्तत्वेनाश्रयाद् वर्णाश्रये विधौ च स्थानिवद्भावपर्युदासात् । तथा च तादेशविधानार्थमिह विषयसप्तम्याश्रयणमावश्यकमिति विषयसप्तमीत्वेन व्याख्यानमस्य न्यायस्य ज्ञापकं साध्वेव । विषयसप्तम्यां स्वीकृतायां च वसेरद्यतनीतामि 'अवात्ताम्' इत्यादौ सिचो विषयतायामेव "सस्तः सि" [४. ३. ९२.] इति तत्वे पश्चात् सिचि तस्य लोपेऽपि स्थानिवद्भावेन "व्यञ्जनानामनिटि" [४. ३. ४५.] इति वृद्धिः सिद्धा । अत्र च [वृद्धौ] सिजिति समुदायस्यैव निमित्तत्वेनाश्रयणात् समुदायस्य च वर्णरूपत्वाभावान्न स्थानिवद्भावनिषेधाशङ्का, यद्यपि लोपशब्देन लुपोऽपि संग्रहः सम्भवतीति पूर्वन्यायोऽप्यनेन न्यायेन गतार्थः स्यात् तथाऽप्याचार्यैरयं न्यायः पृथगुक्त इति नात्र लोपशब्देन लुपो ग्रहणम् । उत्तरन्यायबाध्यमानत्वाच्चास्य दुर्बलत्वम् ॥ ४८ ॥

*सर्वेभ्यो लोपः* ॥ ४८ ॥

त०—लोप-लुप्-लुचामित्संज्ञायाश्चार्थतो भेदाभावेऽपि फलतः क्वचिद् भेदात् तत्सम्बन्धव्यवहारस्य भेदः । प्रत्ययलोपादिषु सत्सु स्थानिवद्भावेन तत्प्रत्ययनिमित्तककार्यसम्पादनेऽपि लुपि सति "लुप्यय्वृल्लेनत्" [ ७. ४. ११२. ] इति निषेधात् कार्यं न भवतीति लुपो विशेषः, अत एव गोमानित्यादौ सेर्लुकि स्थानिवद्भावेन तन्निमित्तो दीर्घो भवति, गोमत् कुलमित्यादौ तु न भवति । पाणिनीये तन्त्रे च लुप्-लुकोः समानत्वमेव । यत्र स्थानिवद्भावनिषेधो नेष्टस्तत्र लोप एव विधीयते न तु लुग् लुव् वेत्यन्यदेतत् । पाणिनीये नये च प्राचीनैरयं न्यायो ज्ञापकसिद्धत्वेनोक्तोऽपि नवीनैर्नागेशादिभिर्न स्वीक्रियते, भाष्यानुक्तत्वादिति स्पष्टं परिभाषेन्दुशेखरे । यद्यपि स्वमतेऽपि 'अवुद्ध' इत्यत्र "गडदवादेः०" [ २. १. ७०. ] इत्यतः "धुड्-ह्रस्वात्०" [ ४. ३. ७०. ] इत्यस्य परत्वेन परत्वादेव सिचो लोपे चतुर्थस्य नापत्तिः, अवात्तामित्यादौ च "सस्तः सि" [ ४. ३. ९२. ] इत्यस्य लोपापेक्षया परत्वेन पूर्वमेव तादेशे पश्चात् सिचो लुकि कार्यं सिद्ध्यति, एवं 'शंस्थाः' इत्यत्राऽपि "ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इत्यत्र साक्षाद् व्यञ्जने इति व्याख्यानात् क्विपश्च विधानसमकालमेवेत्संज्ञायां नेत्वप्राप्तिरिति न्यायं विनापि सर्वेष्टसिद्धिः सम्भवति, तथाप्याचार्यैः "सस्तः सि" [ ४. ३. ९२. ] इत्यत्र कृतस्य विषयसप्तमीत्वेन व्याख्यानस्य फलान्तराभावेन तथास्थीयते, स्वीकृते चात्र न्याये 'अवुद्ध' इत्यादयोऽप्यस्य न्यायस्योदाहरणानि भवितुमर्हन्तीति तथा व्याख्यातपूर्वम् । न च तत्राधिकं विवदितव्यम्—'नासूया तत्र कर्तव्या यत्रानुगमः क्रियते' इति न्यायात् । उत्तरन्यायवाध्यत्वेनास्य दुर्बलत्वमित्युक्तं वृत्तौ प्राचामनुसारेण । वस्तुतस्तु बाधकबाध्यत्वं न दुर्बलत्वप्रयोजकमिति विवेचितमेव पूर्वमनेकत्रेति नात्र पुनरुच्यते ॥ ४८ ॥

## *लोपात् स्वरादेशः* ॥ ४९ ॥

सि०—बलवदित्यनुवर्तमानं पुंलिङ्गतया विपरिणमनीयमिति समानं पूर्वेण । लोपशब्दोऽपि लुग्वाची पूर्ववदेव, तदपवादत्वादस्य, उत्सर्गस्यापवादशास्त्रव्यापकत्वनियमात् । तथा च सर्वविधिभ्यो बलवतो लोपादपि स्वरादेशो बलवानिति न्यायार्थो लभ्यते । यथा श्रीर्देवताऽस्येत्यर्थे "देवता" [ ६. २. १०१. ] इत्यणि परमपि "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इति ईकारलुचं बाधित्वा "वृद्धिः स्वरेष्वादेः०" [ ७. ४. १. ] इत्यादिस्वररूपस्यैकारस्य वृद्धिर्भवति, तत आयादेशे—श्रायमिति रूपं सिध्यति । एतन्न्यायाभावे तु परत्वादीकारलोपे वृद्ध्यप्राप्तेरिदं रूपं न सिद्ध्येत् । अस्य ज्ञापकं तु वृद्धिसूत्रस्येकारलोपसूत्रात् प्राक् पाठः । यद्ययं न्यायो नाभीष्टः स्यादाचार्याणां तर्हि वृद्धिसूत्रमेव परतः पठेयुः । यत्र चास्य न्यायस्य प्रवृत्तिर्नेष्टा तत्र * नानिष्टार्था शास्त्रप्रवृत्तिः * इत्यग्रिमन्यायेन व्यवस्थोन्नेयेत्यग्रे स्फुटीभविष्यत्येव, तन्न्यायव्याख्यावसरे । ततश्चास्य न्यायस्यानित्यत्वमित्यपि स्फुटमेवेति ॥ ४९ ॥

*लोपात् स्वरादेशः* ॥ ४९ ॥

त०—यद्यपीकारलोपविधायकसूत्रस्य वृद्धिविधायकसूत्रात् प्राक् पाठेन 'लोपाद् वृद्धिर्बलीयसी' इत्येवं ज्ञापयितुं शक्यम्, तावताऽपि श्रायमित्यादिप्रयोगाणां सिद्धिः सम्भवतीति न सामान्यतः स्वरादेशस्यैव लोपापेक्षया बलवत्त्वज्ञापनयोग्यता, नवा तत्प्रयोजनम्, तथा चाग्रे *नानिर्दिष्टार्था शास्त्रप्रवृत्तिः* इति न्यायव्याख्यावसरे 'चिकीर्ष्यते' इत्यादावल्लोपापेक्षया दीर्घस्य प्राबल्येऽनेन न्यायेन प्राप्ते तद्बाधनायास्याप्रवृत्तिकल्पनाऽपि न करणीया भवतीति साम्प्रतं प्रतिभाति, तथापि 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति सिद्धान्तेन सामान्यत एव ज्ञापनं क्रियते । वस्तुतस्तु ज्ञापनस्थले ज्ञापितार्थेन ज्ञापकस्य स्वांशे चारितार्थ्यं फलमन्यत्रेति सरणिर्दृश्यते, यदि केवलं स्वांशे चारितार्थ्यमेव भवेत् तदापि न तस्य सार्थक्यं स्वीक्रियते, तन्मात्रार्थत्वे वरं तदकरणमेव । इह चान्यत्र फलं यद्यपि लभ्यते किन्तु स्वांशे चारितार्थ्यं नास्ति, नहि ज्ञापितेऽस्मिन् न्याये वृद्धेः पूर्वं पाठस्य किमपि फलं निर्देष्टुं शक्यते । तथा च नैवं पाठस्य ज्ञापकत्वसंभावनेत्यन्यदेव किञ्चिदस्य न्यायस्य ज्ञापकमन्वेषणीयम् 'स्पर्धे' [ परः, ७. ४. ११९. ] इति सूत्रेऽनुवृत्तस्य परशब्दस्येष्टवाचित्वेन स्पर्धे सति यदिष्टं तद् भवतीति व्याख्यानेन क्वचित् पूर्वस्यैवेष्टत्वेन बलवत्त्वमिति महाभाष्योक्ता, स्वयमपि तत्रतत्राश्रितारीतिर्वाऽवलम्बनीया । तथा च श्रायमित्यादौ पूर्वपठिताया वृद्धेरेवेष्टत्वेन सैव भविष्यतीति नार्थोऽनेन न्यायेन । पाणिनीये च वृद्धिरेव परस्तात् पठ्यत इति नास्य न्यायस्यावश्यकता स्वीक्रियते, तदुक्तं सिद्धान्तकौमुद्यां दीक्षितेन "साऽस्य देवता" [ ४. २. २४. ] इति प्रकरणे—"यस्य" [ ६. ४. १४८. ] इति लोपात् परत्वादादिवृद्धिरिति । तथा च स्वमतेऽपि पूर्वोक्तरीत्या निर्वाहसम्भवे न्यायं विज्ञाप्य पश्चादनित्यत्वाश्रयणादिकष्टकल्पनाया नावश्यकतेति विभावनीयं सूरिभिरिति । किञ्चैतस्मिन् सामान्यतो ज्ञापितेऽश्वपतेरिदमाश्वपतम्, गणपतेरिदं गाणपतमित्याद्यपि न सिद्ध्येत्, तत्रापि "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति वृद्धिः प्राप्नोतीति विशेषत एव ज्ञापनमुचितम्—*लोपादादिवृद्धिर्बलवती* इतिरूपेण । पाणिनीये च "नामिनोऽकलिहलेः" [ ४. ३. ५१ ] इति सूत्रस्थानीयस्य "अचो ञ्णिति" [ पा०

सू० ७. २. ११२. ] इति सूत्रस्य यद्यपि लोपापेक्षया परत्वमस्ति, तथापि 'आदिवृद्धिरन्त्योपधावृद्धी बाधते' इत्यनुशतिकादिगणे पुष्करसच्छब्दपाठेन ज्ञापितत्वाद् दोषापहारः । तथा च सामान्यतः स्वरादेशबलवत्वज्ञापने दोषसद्भावाद् विशेषतोऽपि ज्ञापने स्वांशे चारितार्थ्याभावाच्च नायं न्यायो ज्ञापनमर्हतीत्येव विचारसरणावधिरोहतीति ॥ ४९ ॥

## *आदेशादागमः* ॥ ५० ॥

सि०—विशेष्यानुरोधेन बलवानिति सम्बध्यते । आदेशाऽऽगमयोः समकालप्राप्तयोरतुल्यबलयोरपि सतोरादेशापेक्षयाऽऽगमस्यैव बलवत्त्वविधायकोऽयं न्यायः । तथा च अर्पयतीत्यत्र ऋधातोर्णौ "नामिनोऽकलिहलेः" [ ४. ३. ५१. ] इति वृद्धिः "अर्त्ति-री-व्ली-ह्री-क्नुयि-क्ष्माय्यातां पुः" [४. २. २१.] इति प्वागमश्च प्राप्तुत इत्यनेनादेशरूपवृद्ध्यपेक्षया प्वागमस्य बलवत्त्वबोधनात् प्वागमे कृते "पुस्पौ" [ ४. ३. ३. ] इति गुणरूप आदेशो भवति । अस्य वाचनिकत्वमेव, ज्ञापकान्तराभावात् । अर्पयतीत्यादिसिद्ध्यर्थं यत्नान्तरस्याकरणादस्य च न्यायस्याचार्यैर्न्यायेषु पठितत्वादाचार्यवचनमेवात्र प्रमाणम् । क्वचिच्चलक्ष्यानुरोधादयं नाश्रीयते, यथा द्वयोः कुलयोरित्यत्र द्विशब्दादोसि "आ द्वेरः" [ २. १. ४१. ] इत्यदादेशे "अनाम्-स्वरे नोऽन्तः" [ १. ४. ६४. ] इति नागमे च प्राप्ते परत्वादन्तरङ्गत्वाच्चादादेश एव भवति, न नागमः । एतच्च "अनाम्स्वरेनोऽन्तः" इति सूत्रन्यासेऽपि स्पष्टमुक्तम् । न च तत्रानेन न्यायेन नागमं प्रसज्य परत्वादन्तरङ्गत्वाच्च तत्समाधानं कृतमिति नेदं स्वतो न्यायाप्रवृत्तिस्थलमिति वाच्यम्, न्यायस्यास्य वाचनिकत्वेन शास्त्रान्तरसाधारण्येन शास्त्रान्तरव्यवस्थानुसारमेव प्रवृत्त्यप्रवृत्तिनिरूपणमस्येति न्यासग्रन्थस्याशयात् । तथा च तेन न्यासग्रन्थेनास्य न्यायस्यानित्यत्वमेव दृढीभवति । न्यायानां स्थविरयष्टिप्रायत्वेन गत्यन्तराभाव एवाश्रयणमित्यपि तस्य न्यासस्याशयो वर्णयितुं शक्यते । इह चानाश्रयणेनैव लक्ष्यसिद्धिरिति बोध्यम् ॥ ५० ॥

### *आदेशादागमः* ॥ ५० ॥

त०—यद्यप्यर्पयतीत्यत्रान्यत्र वा प्वागमस्थले सर्वत्र वृद्धेः प्राप्तौ सत्यामेव प्वागमो विधीयत इति *येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति* इति न्यायेन वृद्ध्यादेशस्य बाधक एव प्वागम इति, वृद्ध्यादेशे कृतेऽकृते च प्वागमस्य प्राप्तिः स्थानिवद्भावेनेति कृताकृतप्रसङ्गित्वेन नित्यत्वमपि प्वागमस्येति च तद्विधानार्थं नास्य न्यायस्यावश्यकता, तथापि *मित्रवदागमः* *शत्रुवदादेशः* इति स्वभावसिद्धन्यायानुगृहीतोऽयं न्याय इत्याचार्यैर्न्यायमध्ये पठितः, प्राप्तिसत्त्वेनेहाप्याश्रयितुं युक्त इत्यवधेयम् । यद्यपि *समासान्तागमसंज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि* इति पूर्वव्याख्यातन्यायानुसारमागमस्याप्यनित्यत्वमिति कथयितुं शक्यते, तथापि तस्यापि न्यायस्यानित्यत्वमिति तन्न्यायव्याख्यावसर एवोक्तत्वेन, अस्य च कृताकृतप्रसङ्गित्वप्राप्तनित्यत्वस्य न व्याघातः । अपवादत्वं चाप्यस्येत्युक्तमेवेति न न्यायस्यास्यावश्यकता तथापि समाश्रयणीय इत्युक्तमेव । पाणिनीये च तन्त्रे नायं न्यायो दृश्यते, परत्वादिनैव तत्र व्यवस्था कृता, अस्ति चागमशास्त्रानित्यत्वबोधको न्यायस्तत्रापि प्राचीनैः समाश्रितः, परं तु नागेशादिभिर्भाष्यानुक्तत्वात् खण्डित इति नासौ प्वागमदौर्बल्यबोधनायालम्, अनाश्रयणे च प्रकृतन्यायस्य द्वयोः कुलयोरित्यादीनामाञ्जस्येन सिद्धिरिति ॥ ५० ॥

## *आगमात् सर्वादेशः* ॥ ५१ ॥

सि०—बलवानिति विशेष्यानुरोधेन सम्बध्यत इति समानं पूर्वेण । पूर्वन्यायेन सामान्यत एवादेशापेक्षयाऽऽगमस्य प्राबल्यं बोधितमिति 'तिसृ'रूपसर्वादेशस्य नागमापेक्षया दौर्बल्यं प्राप्तमिति तद्वारणायायं न्याय आश्रित इति पूर्वन्यायापवादत्वमस्य न्यायस्य । अत्र च ज्ञापकम् "ऋतो रः स्वरेऽनि" [ २. १. २. ] इति सूत्रस्थमनीति पदम्, तेन हि तिस्रादिऋतो रादेशविधौ नकारविषयवर्जनं क्रियते, न च तिस्रादीनां कदापि नकारादिस्वरपूर्वत्वं सम्भवति, 'प्रियतिसृणः कुलात्' इत्यादौ हि पूर्वं स्यादौ प्रत्यये परे पूर्वन्यायबलात् तिस्रादेशापेक्षया नागमस्य बलवत्त्वेन नागमे कृते तद्व्यवधानाच्च स्यादिप्रत्ययपरत्वाभावेन तिस्रादेशाप्राप्तेः । न चागमस्य स्वाङ्गत्वेन * स्वाङ्गमव्यवधायि * इति न्यायेन कथं तत्कृतं व्यवधानमिति वाच्यम्, नागमो हि 'प्रियत्रि' इति समुदायस्याङ्गम्, तिस्रादेशश्च तदवयवभूतत्रिशब्दस्य विधेय इति तन्निरूपितस्वाङ्गत्वस्य नागमेऽभावेन व्यवधायकत्वाक्षतेः, तथा च नकारादिस्वरविषये तिस्रादेरभावेन व्यावर्त्त्यालाभादनीति नकारपर्युदासो व्यर्थः सन् न्यायममुं ज्ञापयति । ज्ञापिते चात्र न्याये सर्वादेशस्य तिसृरूपस्य नागमापेक्षया पूर्वं प्रवृत्तौ तत्सम्बन्धिन ऋकारस्य रादेशाभावायानीति पर्युदासस्य सार्थक्यम् । ननु नागमापेक्षया तिस्रादेशस्य परत्वेन परत्वादेव तिस्रादेशः स्यादिति नार्थोऽनेन न्यायेनेति वाच्यम्, नागमस्य तिस्रादेशात् पूर्वं तस्मिन् कृते च प्राप्तिरिति तस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात् * परान्नित्यं बलवत् * इति न्यायाद् नागम एव स्यादिति तद्वारणस्य न्यायं विनाऽसम्भवात् । कृते च तिस्रादेशे यद्यपि परत्वाद् रादेशः प्राप्नोति तथापि 'अनि' इति विषयसप्तम्याश्रयणाद् रादेशप्राप्तिसमये नागमस्य प्राप्तिरस्तीति तद्विषयतायां रादेशाप्रवृत्तिर्भवति । अयं च न्यायः केनापि न बाध्यते इति स्थिर एव ॥ ५१ ॥

### *आगमात् सर्वादेशः* ॥ ५१ ॥

त०—पूर्वन्यायेनागमसामान्यस्यादेशसामान्यापेक्षया बलवत्त्वमुक्तम्, अनेन च न्यायेनादेशविशेषस्य सामान्यत आगमापेक्षया बलवत्त्वं बोध्यत इति पूर्वन्यायापवादोऽयमिति प्राचां रीतिमनुसृत्य व्याख्यातम् । अत्रेदं विचार्यते—'प्रियतिसृणः' इत्यादौ नागमात् पूर्वं तिस्रादेशसिद्धिरेतन्न्यायप्रयोजनम्, तत्र पाठकृतपरत्वेन तिस्रादेशः सिद्ध एव । न च पूर्वन्यायेनादेशापेक्षयाऽऽगमस्य प्राबल्यं बोधितमिति न परत्वमिह व्यवस्थापकं स्यादिति वाच्यम्, तस्य न्यायस्यानित्यत्वस्य पूर्वन्यायव्याख्यावसरे न्यासग्रन्थाशयमनुरुध्य प्रदर्शितत्वात् । न च कृताकृतप्रसङ्गित्वेन नागमस्य नित्यत्वमिति नित्यस्य परशास्त्रापेक्षया बलवत्त्वमिति नागम एव पूर्वं स्यान्न तिस्रादेश इति वाच्यम्, तदा नास्य न्यायस्य पूर्वन्यायापवादत्वं स्यात्, किन्तु *परान्नित्यं बलवत्* इति न्यायापवादत्वमेव वक्तव्यम्, न च तावतैव निस्तारः, तस्मिन् न्याये बाधितेऽपि पूर्वन्यायप्राप्तागमबलवत्त्वस्य निवृत्त्यर्थं तदनित्यत्वाश्रयणमपि कर्त्तव्यं स्यात्, तथा च पूर्वन्यायापवादतया तदग्रे लेखनमप्रासङ्गिकं स्यादिति न कोऽपि पन्थाः समीचीन इति चेत्? सत्यम्—पूर्वन्यायापवादत्वमेवास्तु; न्यासग्रन्थे 'द्वयोः कुलयोः' इत्यत्र पूर्वन्यायाप्रवृत्त्युक्त्यैकदेशादेशविषयेऽनित्यत्वसिद्धावपि सर्वादेशविषयेऽनित्यत्वस्यासिद्धत्वात् । न च नित्यत्वान्नागमः स्यादिति वाच्यम्, शब्दान्तरप्राप्त्या नागमस्यानित्यत्वात् । *कृताकृतप्रसङ्गिनित्यत्व*वत् *शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति* इत्यस्यापि न्यायस्य भाष्यकृदादिसम्मतत्वात् । पूर्वं हि 'प्रियत्रि' इत्यस्य नागमः प्राप्तः पश्चात् 'प्रियतिसृ' इत्यस्येति शब्दान्तरप्राप्तिः स्पष्टा तस्य । वस्तुतस्तूक्तरीत्या नित्यत्वस्याव्यवस्थापकत्वानिर्णयेऽपि तिस्रादेशस्यान्तरङ्गत्वमेव तस्य पूर्वप्रवृत्तौ व्यवस्थापकत्वं भविष्यति । न च कथं तस्यान्तरङ्गत्वमिति शङ्क्यम्, नाम्यन्तस्य नपुंसकस्य हि आमूवर्जे स्यादौ स्वरे परे नागमो विहित इति तस्याधिकापेक्षत्वेन बहिरङ्गत्वम्, तिस्रादेशस्य च त्रिशब्दस्यादिप्रत्ययोभयमात्रनिमित्तत्वात् । तथा च द्वयोः कुलयोरितिवत् परत्वादन्तरङ्गत्वाच्च व्यवस्थायाः कर्तुं शक्यत्वेऽपि न्यायाश्रयणं प्रपञ्चार्थमेवेति विभावनीयम् ॥ ५१ ॥

---

## *परान्नित्यम्* ॥ ५२ ॥

सि०—बलवत्त्वप्रयोजकं तत्तत्प्रातिस्विकरूपमुक्त्वा सम्प्रति प्रकारान्तरेण बलवत्त्वं दर्शयितुमुपक्रमत एतदादिन्यायेन । तत्र "स्पर्धे" [ ७. ४. ११९. ] इति परिभाषया पाठकृतपरत्वस्य बलवत्त्वं प्रतिपादितमिति तदपेक्षयापि नित्यस्य बलवत्त्वबोधकोऽयं न्याय इति तत्परिभाषाऽपवादत्वमस्य । अत्र ज्ञापकं च ओणेॠदित्करणम्, तद्धि मा भवान् ओणिणदित्यत्र प्राप्तस्योपान्त्यह्रस्वत्वस्य निषेधार्थं कृतम्; ह्रस्वविधायके "उपान्त्यस्यासमानलोपिशास्वृदितो ङे" [ ४. २. ३५. ] इति सूत्रे ॠदितः पर्युदासेन तत्रोपान्त्यह्रस्वो न भवति, किन्तु तत्र कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वमेव "स्वरादेर्द्वितीयः" [ ४. १. ४. ] इति द्वित्वे ओकारस्योपान्त्यत्वाभावेन ह्रस्वाप्राप्तेस्तन्निवारणार्थमॄदित्करणं व्यर्थमेव, व्यर्थं सद् ॠदित्करणम् 'अनित्योऽप्युपान्त्यह्रस्वो द्वित्वात् प्रागेव स्यात्' इति ज्ञापयति । तेन च स्वांशे चारितार्थ्यं द्वित्वात् प्राक् प्राप्तस्योपान्त्यह्रस्वस्य निवृत्त्या । फलं च मा भवान् अटिटदिति सिद्धिः, तथा हि-तत्रापि 'आटि' इति ण्यन्तस्य ङपरे णौ ह्रस्वात् पूर्वं यदि द्वित्वं स्यात् तर्हि आकारस्योपान्त्यत्वाभावे ह्रस्वाप्राप्तौ मा भवान् आटिटदिति रूपं स्यात्, ज्ञापिते चोपान्त्यह्रस्वस्य द्वित्वात् प्राक् प्रवर्तने रूपं मा भवानटिटदिति सिद्ध्यति । एतन्न्यायाभावे तु परत्वादेव द्वित्वात् पूर्वमुपान्त्यह्रस्वः प्रवर्ततैवेति मा भवान् ओणिणदित्यत्रोपान्त्यह्रस्वव्यावृत्त्यर्थमोणेॠदिकरणं सार्थकमेवेति ज्ञापकत्वासम्भवः । तथा चैतन्न्यायाशङ्कयैवौणेॠदित्करणं कृतमित्येतन्न्यायस्य सत्त्वमनुमापयति । मा भवान् ओणिणत् मा भवान् अटिटदित्युभयत्रोपान्त्यह्रस्वकृतविशेषस्य स्फुटप्रतिपत्तये भवानिति पदं मध्ये प्रयुक्तमिति । उदाहरणं चास्य युष्मानस्मान् वा आचक्षाणेनेति विग्रहे 'युष्या, अस्या' इति, अत्र पराभ्यामपि त्वमाभ्यां प्राक् "टाङ्योसि यः" [ २. १. ७. ] इति मस्य यत्वं सिद्धम्, तथा हि—अत्र युष्मदस्मद्भ्यां णिजि "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इति 'अद्'भागस्य लुकि धातुत्वात् क्विपि "अप्रयोगीत्" [ १. १. ३७. ] इति तल्लुकि "णेरनिटि" [ ४. ३. ८३. ] इति णिज्लुकि नामत्वेन टाप्रत्यये "त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन्" [ २. १. ११. ] इति त्व-मादेशौ "टाङ्योसि यः" [ २. १. ७. ] इति यत्वं च समकालमेव प्राप्नुतः, तत्र यद्यपि त्व-मादेशौ परौ तथापि यादेशस्य कृताकृतप्रसङ्गित्वेन नित्यत्वाद् यादेश एव भवति । यद्यपि त्व-मादेशात् पूर्वं 'युष्म अस्म्' एतयोर्मस्य यादेशः, त्व-मादेशयोः कृतयोस्तु तयोरकारस्येति शब्दान्तरप्राप्त्या यादेशस्य न नित्यत्वमिति कथयितुं शक्यते तथापि क्वचित् कृताकृतप्रसङ्गित्वमात्रेणापि नित्यत्वमिति पक्षमाश्रित्योदाहरणसंगतिरास्थेया । इति प्राचां वृत्तिकृतामाशयः । स्वमतं तु विवरणे स्पष्टम् ॥ ५२ ॥

---

### *परान्नित्यम्* ॥ ५२ ॥

त०—नित्यमपि द्विर्वचनं प्रबाध्योपान्त्यह्रस्वः प्रथमं स्यादिति ज्ञापनार्थं कृतेनोणेॠदित्करणेनायं न्यायो ज्ञाप्यत इति वृत्तौ प्रदर्शितम् । तत्रेदं विचार्यते—ओणेॠदित्करणस्य वैयर्थ्यं कथम्?

साम्प्रतं नास्त्ययं न्यायः, द्वित्वात् परत्वादुपान्त्यह्रस्वे प्राप्ते तन्निवारणायोणेर्ऋदित्करणमर्थवदिति कथं तज्ज्ञापयिष्यति? । किञ्चासत्यस्मिन् न्याये 'मा भवानटिटत्' इत्यत्रापि परत्वाद् द्वित्वं प्रबाध्योपान्त्यह्रस्व एव स्यादिति तत्सिद्धौ निराबाधायाम् 'अनित्योऽप्युपान्त्यह्रस्वो द्वित्वात् प्रागेव, इति ज्ञापनस्यापि नावश्यकता, तद् विनापि क्षत्यभावादिति कथमस्य न्यायस्य ज्ञापनं सम्भाव्यते। यदि चोपान्त्यह्रस्वो बहिरङ्गः, ङपरे णौ विधानेनाधिकापेक्षत्वात्, द्वित्वं तु केवलं ङमेव निमित्तत्वेनाश्रयतीत्यन्तरङ्गमित्यन्तरङ्गत्वाद् द्वित्वे कृते नोपान्त्यह्रस्वप्राप्तिरिति तस्य [ओणेर्ऋदित्करणस्य] वैयर्थ्यमित्युच्यते, तावतापि *परान्नित्यम्* इत्यत्र तस्य ज्ञापकत्वं कथं सेत्स्यति । बहिरङ्गोऽप्युपान्त्यह्रस्वो द्वित्वात् प्रागेवेति ज्ञापयितुं शक्नोति, तावतैव 'मा भवानटिटत्' इत्यस्यापि सिद्धिः सम्भवति। इत्थं च नायं न्यायो ज्ञापकसाध्य इत्येव विचारपथमवतरति । ननु तर्हि परापेक्षया नित्यस्य बलवत्त्वं यत् प्रसिद्धं तस्य को हेतुरिति चेत्? अत्रोच्यते–कृताकृतप्रसङ्गित्वमेव तस्य बलवत्त्वे हेतुरिति। तथा च तत्रानुमानप्रयोगः–'नित्यं शास्त्रं बलवत् कृताकृतप्रसङ्गित्वात्' इति। नन्वेवमन्तरङ्गशास्त्रापवादशास्त्रापेक्षयाऽपि तस्य बलवत्त्वं स्यादिति चेत्? न–'बहिरङ्गत्वोत्सर्गत्वरहितत्वे सति' इति पक्षविशेषणदानेनादोषात् । तथा च बहिरङ्गोत्सर्गशास्त्रभिन्नं नित्यं शास्त्रं बलवदिति समायाति। न च कृताकृतप्रसङ्गित्वमस्तु बलवत्त्वं माऽस्त्विति व्यभिचारशङ्कायां तन्निवर्त्तकोऽनुकूलस्तर्को नास्तीति वाच्यम्, अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैवाभावकल्पनमुचितमित्यस्यैव तर्कस्य व्यभिचारशङ्कानिवर्त्तकत्वात् । अयमाशयः–अनित्यशास्त्रस्य हि कदाचिदभावः क्लृप्त एव, यदि नित्यत्वेनाभिमतं शास्त्रं प्रवृत्तं तदा तस्य प्रवृत्त्यभावात्। नित्यत्वेनाभिमतं च शास्त्रमक्लृप्ताभावकं तस्यानित्यशास्त्रे कृतेऽकृते च प्राप्तत्वादिति यस्य कदाचिदभावः सिद्ध एव तस्यैवाभावः कल्पनीयो लाघवात्, यस्य चासिद्धोऽभावस्तस्याभावकल्पने गौरवमिति लाघवानुगृहीतोऽयं तर्कः । न चानित्यशास्त्रस्य परत्वे तस्य च "स्पर्धे" [७.४.११९.] इति शास्त्रेण बाधबोधनात् कृताकृतप्रसङ्गित्वरूपहेतोर्बाधितत्वमिति वाच्यम्, अनेनानुमानेन नित्यस्य प्राबल्यबोधने कृते तुल्यबलत्वाभावेन तुल्यबलयोरेकत्र समावेशरूपस्पर्धाभावेन "स्पर्धे" [७.४.११९.] इति शास्त्रस्याप्राप्तेः। न च नित्यस्य बलवत्त्वमनुमितम्, परस्य च बलवत्त्वं "स्पर्धे" [७.४.११९.] इति शास्त्ररूपप्रमाणसिद्धमित्यनुमितापेक्षया श्रुतस्य बलवत्त्वेन कृताकृतप्रसङ्गित्वरूपहेतोर्बाधादुक्तानुमानासिद्धिरिति वाच्यम्, स्पर्धसिद्ध्यर्थं सूत्रस्यानुमानापेक्षायाः सत्त्वेन पूर्वं सूत्राप्रवर्त्तताद्धेतोरबाधितत्वादित्यास्तां विस्तरेण । परिष्काररसिकास्त्वेवं परिष्कुर्वन्ति–स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत्, उभयत्र वैशिष्ट्यं स्वप्रवृत्तिप्राक्कालिकप्राप्तिकत्व-स्वप्रवृत्त्युत्तरकालिकप्राप्तिकत्व-स्वनिष्ठान्तरङ्गानिरूपकत्व-स्वनिष्ठापवादत्वानिरूपकत्वैतच्चतुष्टयसम्बन्धेनेति सम्बन्धद्वयेन कृताकृतप्रसङ्गित्वं संगृहीतम्, तृतीयचतुर्थाभ्यां च सम्बन्धाभ्यां नित्यापेक्षयाऽन्तरङ्ग-बहिरङ्गयोर्बलवत्त्वं च संगृहीतम्, अत्र च केवलं पक्ष-साध्ययोर्निर्देशः, हेतुस्तु कृताकृतप्रासङ्गित्वरूप एव, तत्र चापतिता दोषाः पूर्ववत् परिहार्याः। अथास्य 'युष्या, अस्या' इति यदुदाहरणमुक्तं प्राचीनैस्तत्र विचार्यते–युष्मानस्मान् वाऽऽचक्षाणेनेति विग्रहे त्व-मादेशयोः प्राप्तिरेव नास्तीति कुतस्ताभ्यां सह यादेशस्य बलाबलविचारः, त्व-मादेशौ हि एकत्वार्थप्रतिपादकयोरेव युष्मदस्मदोर्भवत इति स्पष्टमुक्तं वृत्त्यादिषु, ततश्चात्र कस्यचन परशास्त्रस्याप्राप्त्या स्वत एव यादेशेनैव भवितव्यमिति नेदमुदाहरणं संगच्छते। तथा च 'तुदति' इत्याद्येव तदुदाहरणमुचितम्, अत्र हि परमपि "लघोरुपान्त्यस्य" [४.३.४.] इति गुणं प्रबाध्य नित्यत्वात् "तुदादेः शः" [३.४.८१.] इति शप्रत्यय एव भवति, सति च तस्मिन् "शिदवित्" [४.३.२०.] इति ङिद्वद्भावान्न गुणः। तथा च न्यायस्य साफल्यमिति ॥ ५२ ॥

## *नित्यादन्तरङ्गम्* ॥ ५३ ॥

सि०—नित्यादपि बहिरङ्गशास्त्रादनित्यमप्यन्तरङ्गशास्त्रं बलवत्। अस्य न्यायस्य सूचकश्च "आशीः" [३.३.१३.] इति सूत्रनिर्देश एव। तथा हि–तत्र "आशिस्"शब्दात् सौ तस्य लोपे सो रुत्वे विसर्गः "पदान्ते" [२.१.६४.] इति दीर्घश्च प्राप्नुतः, विसर्गश्च कृतेऽकृते च दीर्घे भवतीति कृताकृतप्रसङ्गित्वेन नित्यः, स च परमपि दीर्घं बाधित्वा प्रवर्त्तेत यद्ययं न्यायो न स्यात्, सति चास्मिन् न्याये पूर्वव्यवस्थितनिमित्तत्वेनान्तरङ्गत्वाद् दीर्घ एव भवति, ततो विसर्गे कृते च दीर्घस्याप्राप्तेर्नासौ निर्देशः सिद्ध्येत। एतन्न्यायाभावे च नित्यत्वात् पूर्वन्यायसहकारेण विसर्गो दुर्वार इत्यनुपपद्यमानो दीर्घनिर्देशोऽयं न्यायं ज्ञापयति। फलं च प्रेजुः प्रोपुरित्यादौ यज्-वपोः परोक्षायामुसि *य्वृद् य्वृदाश्रयं च* इति न्यायात् प्रथमं य्वृति ततो द्वित्वे पदद्वयापेक्षत्वेन बहिरङ्गं नित्यमप्येत्वमोत्वं च प्रबाध्य एकपदाश्रयत्वेनान्तरङ्गत्वाद् दीर्घ एव भवति, तत एत्वमोत्वमिति सिद्ध्यतीष्टं रूपमिति। अयं चाग्रेतनेन न्यायेन बाध्यमानत्वादनित्यः ॥ ५३ ॥

### *नित्यादन्तरङ्गम्* ॥ ५३ ॥

त० पूर्वव्यवस्थितस्थानिकत्वरूपमन्तरङ्गत्वमादाय दीर्घस्येह विसर्गापेक्षया बलवत्त्वं स्वीकृत्य "आशीः" [३.३.१३.] इति निर्देशसिद्धिराश्रिता, नन्वङ्गपदेन स्थानिनिमित्तादिसकल-

संग्रहाद् दीर्घनिमित्तस्य रेफस्य, दीर्घस्थानिनः, पदान्तत्वस्य च दीर्घे समाश्रयणात्, विसर्गे च रेफस्य पदान्तत्वस्य चेति द्वयस्यैव समाश्रयणाद् विसर्गापेक्षया दीर्घस्यैवाधिकापेक्षत्वेन वहिरङ्गत्वौचित्यम्, तथा च नास्य निर्देशस्य संगतिरित्युच्यते चेत् ?, न–अधिकापेक्षत्वेन वहिरङ्गत्वस्य *असिद्धं वहिरङ्गमन्तरङ्गे* इति न्यायव्याख्यावसरे प्रतिषिद्धत्वात् । वस्तुतस्तु नात्र ज्ञापकापेक्षा, वहिरङ्गापेक्षयाऽन्तरङ्गस्य प्राबल्यं पूर्वन्यायेन–*असिद्धं वहिरङ्गम्* इत्यनेनैव सिद्धमिति तदेव नित्यादप्यन्तरङ्गस्य वलवत्त्वे बीजं भविष्यतीत्यलं ज्ञापकान्वेषणेन ॥ ५३ ॥

## *अन्तरङ्गाच्चानवकाशम्* ॥ ५४ ॥

सि०—अनवकाशत्वं च तदप्राप्तियोग्येऽचारितार्थ्यमेव, तथा च यदप्राप्तियोग्ये यस्याचारितार्थ्यं तस्मादन्तरङ्गादपि, तद् वहिरङ्गमपि वलवदिति न्यायार्थः । अत्र च ज्ञापकं तत्तदनवकाशशास्त्रकरणमेव । यदि हि व्यापकानां शास्त्राणां प्रवृत्तिः स्यात् तर्हि व्याप्यभूतानामवकाशाभावात् तत्प्रणयनवैयर्थ्यमेव स्यादिति प्रणयनसार्थक्याय तस्य वलवत्त्वमाश्रीयते । यथा–"त्वमहं सिना प्राक् चाकः" [२. १. १२.] इति सूत्रेण "त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन्" [२. १. ११.] इत्यस्य प्राप्तिविषयभूत एव त्वमहमादेशौ विधीयेते, तत्र यदि "त्व-मौ प्रत्ययोत्तरपदे०" [२. १. ११.] इति सूत्रमन्तरङ्गत्वात् प्रवर्तेत तर्हि त्वमहमोरवकाशाभावेन तयोर्विधानं व्यर्थमेव स्यात् । त्व-मादेशयोरन्तरङ्गत्वं तु प्रकृतिमात्रादेशत्वात्, त्वमहमादेशौ तु सिना सह प्रकृतेः स्थाने भवत इति प्रकृति-प्रत्ययोभयापेक्षाविति वहिरङ्गौ । तथा चानवकाशत्वात् तौ त्व-मादेशौ वाधेते इति तेन चायं न्यायः फलति । तथा च नात्र ज्ञापकत्वमस्य, किन्तु स्वत एव वाधकत्वम् । प्रकृतन्यायस्तु *येन नाप्राप्ते यो विधिरारभ्यते स तस्य वाधको भवति* इति न्यायमूलक एव । उदाहरणं चास्य 'त्वम्, अहम्' इति स्पष्टमेव ॥ ५४ ॥

## *उत्सर्गादपवादः* ॥ ५५ ॥

सि०—उत्सर्गः-सामान्यशास्त्रम्, अपवादः-विशेषशास्त्रम्, तथा च सामान्यशास्त्रापेक्षया विशेषशास्त्रं वलवदिति न्यायार्थः । अस्य ज्ञापकं च "पुंनाम्नि घः" [५. ३. १३०.] इति घप्रत्ययेन सिद्धौ "गोचर-संचर-वह-व्रज-व्यज-खला-पण-निगम०" [५. ३. १३१.] इति सूत्रेण गोचरादीनां निपातनम्, तद्धि "व्यञ्जनाद् घञ्" [५. ३. १३२.] इति सूत्रेण प्राप्तस्य घञो वाधनार्थं क्रियते, अयं च घञ् व्यञ्जनान्ताद्धातुसामान्यात् क्रियत इत्युत्सर्गः, निपातनं च विशेषतस्तत्तच्छब्दानां क्रियत इति विशेषः, परन्तु "पुंनाम्नि घः" [५. ३. १३०.] इति घश्च घञोऽपि सामान्यविहितः, व्यञ्जनान्तादव्यञ्जनान्तात् सर्वस्मादेव विधानात्, स च घञा बाधिष्यत इत्याशङ्कया घान्ता इमे निपात्यन्ते । तच्चैतन्न्यायाभावे व्यर्थमेव स्यादिति स्वसार्थक्याय न्यायमिमं ज्ञापयतीति प्राचीनाः । वस्तुतस्तु पूर्वन्यायेनापि घञोऽनवकाशतयैव बाधकत्वं प्राप्तमिति तद्वारणायैव निपातनमिदमित्यपि कल्पयितुं शक्यते । न च पूर्वन्यायेनान्तरङ्गापेक्षयाऽनवकाशस्य वलवत्त्वं बोध्यते, नोत्सर्गापेक्षयेति वाच्यम्, अन्तरङ्गादपि शास्त्रादनवकाशशास्त्रं बलवदित्येव तस्य तात्पर्यात् । यदा चान्तरङ्गादपि च व्यापकशास्त्रादनवकाशस्य बलवत्त्वं तेन बोधितं तर्हि का कथा अन्तरङ्गत्वादिबलवत्त्वप्रयोजकहेतुरहितादुत्सर्गशास्त्रादिति कैमुतिकन्यायेनैवानवकाशस्य सर्वबाधकत्वौचित्यात् । अस्ति च सर्वत्र पुंसि नाम्नि घप्रत्ययप्रसङ्गे "व्यञ्जनाद् घञ्" [५. ३. १३२.] इत्यस्यानवकाशत्वं सुस्थम् । फलं चास्य 'आपचन्त्यस्मिन्नित्यापाकः' इत्यत्र पुंनाम्नि घं प्रबाध्य व्यञ्जनान्तत्वनिमित्तो घञेव भवतीति । वस्तुतस्तु नैतौ न्यायौ मूलतः पृथगिति प्रतिपादयिष्यते विवरणे । तथा च यथा पूर्वन्याये न ज्ञापकापेक्षा तथेहापीति ॥ ५५ ॥

## *अन्तरङ्गाच्चानवकाशम्* ॥ ५४ ॥
## *उत्सर्गादपवादः* ॥ ५५ ॥

त०—एतौ न्यायौ सहैव विव्रियेते, उभयोरपि समानफलत्वान्मतान्तरेणैकरूप्याच्च । वाधकत्वबीजानि *येन नाप्राप्तौ यो विधिरारभ्यते स तस्यैव वाधको भवति* इति न्यायव्याख्यावसरे प्रदर्शितान्येव । तानि चानवकाशेष्वपवादेषु च समानतयैव लगन्ति, अनवकाशत्वमपि केनचिच्चारितार्थ्यविघातरूपमेव, एतावान् विशेषः–अनवकाशस्थले तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्यरूपं वाधकत्वबीजं न भवति, उत्सर्गापवादस्थले तु तदप्राप्तियोग्येऽचारितार्थ्ये सति कृते चारितार्थ्येऽपि वाधकत्वं भवति । चर्चितं चेदं परिभाषेन्दुशेखरे नागेशेन, तत्र च वाध्यसामान्यचिन्तापक्षो वाध्यविशेषचिन्तापक्षश्चेति पक्षद्वयमुक्तम् । तथाहि–"येन नाप्राप्ते" इत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थः, तदा स्वविषये यद् यत् प्राप्नोति तद् वाध्यं, विध्यन्तराप्राप्तविषयत्वाभावात् । इयमेव वाध्यसामान्यचिन्तेति व्यवह्रियते, अनवकाशत्वेन वाधकत्वेऽप्येषा वक्तुं युक्ता, यद्युदाहरणमस्ति, विनिगमनाविरहात् । यदि तु येनेत्यस्य लक्षणेनेत्यर्थः कार्येणेत्यर्थो वा तदा वाध्यविशेषचिन्ता । अनवकाशत्वेनऽवाधेऽप्येतद्वाधेन सार्थकमुत तद्वाधेनेत्येवं विशेषचिन्ता संभवति, यद्युदाहरणमस्ति ।" इति । एतद्ग्रन्थस्य चायमाशयः–यद् *येन नाप्राप्त*न्यायेना-

नवकाशत्वेन वा बाधे उभयोः पक्षयोः बाध्यसामान्यचिन्ता-बाध्यविशेषचिन्तापक्षयोः सम्भवे सत्यपि *येन नाप्राप्त*-न्यायेन बाधे यथोभयोः पक्षयोः स्पष्टतयोदाहरणानि मिलन्ति तथाऽनवकाशत्वेन बाधे न मिलन्ति, *येन नाप्राप्त*न्यायेनाऽवकाशे सत्यसति च बाधः, अनवकाशत्वेन बाधे चावकाशाभाव एवेत्युभयोः पक्षयोः पार्थक्यमिति विवेकः । तथा च *अन्तरङ्गाच्चानवकाशम्* इति न्यायो न *येन नाप्राप्त* न्यायेन गतार्थः । *उत्सर्गादपवादः* इति न्यायश्च *येन नाप्राप्त०* न्यायसूचितबाधकत्वस्यैवानुवादक इति तस्यैव प्रपञ्चः । पाणिनीयेऽपि परिभाषेन्दुशेखरीयमुद्रितपुस्तकेषु *अन्तरङ्गादप्यपवादो बलीयान्* इति न्यायः *येन नाप्राप्त०* न्यायश्च क्वचित् स्वातन्त्र्येण पृथगुल्लिखितौ, क्वचिच्च पूर्व एव न्यायो लिखितो *येन नाप्राप्त०*न्यायश्च तत्र बीजप्रदर्शकत्वेन वर्णितः, व्याख्यानं चोभयोः सहैवोपलभ्यते । स्वमते च *येन नाप्राप्त०* न्याय एवकारघटित उपलभ्यते, तस्मिन् तन्त्रे च एवकारो न पठ्यते । तथा च स्वमते बाध्यविशेषचिन्तापक्ष एव, तन्मते चोभौ पक्षौ सम्मतौ—बाध्यविशेषचिन्तापक्षो बाध्यसामान्यचिन्तापक्षश्च । तथा च स्वमते *येन नाप्राप्त०*न्यायात् पृथक् *उत्सर्गादपवादः* इति न्यायलेखनस्यावश्यकताऽस्त्येव । तथा च *अन्तरङ्गाच्चानवकाशम्* इत्यस्याप्यावश्यकत्वमेव, पाणिनीयतन्त्रे च नास्य न्यायस्य पृथक् सत्तोपलभ्यते, अपवादत्वेनानवकाशस्यापि सङ्ग्रहात् । स्वमतेऽपि तत् कर्त्तुं शक्यते, किन्तूभयोरपवादत्वयोर्विद्यमानं सूक्ष्ममन्तरं [ भेदं ] ग्राहयितुं पृथगुपन्यासो युक्त एवेत्यलमधिकगवेषणया ॥ ५५ ॥

## *अपवादात् क्वचिदुत्सर्गोऽपि* ॥ ५६ ॥

सि०—पूर्वन्यायेनोत्सर्गादपवादस्य बलवत्त्वे बोधिते लक्ष्यानुरोधात् क्वचिदस्य वैपरीत्यमप्याश्रयणीयमित्यनेन न्यायेनोच्यते । क्वचिदिष्टस्थलेऽपवादशास्त्रादुत्सर्गशास्त्रमपि बलीयो भवतीति न्यायार्थः । एतच्च लक्ष्यानुरोधादेवाचार्येण वचनरूपेण पठितं, नातोऽत्र ज्ञापकापेक्षा । अस्य च न्यायस्य स्वीकारादेव 'मखः, मठः' इत्यादयः प्रयोगाः सिद्ध्यन्ति, तथाहि—मखन्ति—स्वर्गं गच्छन्त्यनेनेत्यर्थे "मख गतौ" इत्यस्माद्धातोः, मठन्ति—निवसन्ति छात्रादयोऽस्मिन्नित्यर्थे "मठ निवासे" इत्यस्माद्धातोश्च क्रमशः करणाधिकरणयोरर्थयोः "व्यञ्जनाद् घञ्" [ ५. ३. १३२. ] इति घञ् प्राप्तः, स च "पुंनाम्नि घः" [ ५. ३. १३०. ] इत्यस्यापवादभूतस्तथापि प्रकृतन्यायबलेन घ एव भवति, न तु घञ् इति । अस्य च क्वचिदित्युक्त्या इष्टस्थलमात्रे प्रवृत्तिरिति न लक्ष्यानुरोधेनानित्यताश्रयणावश्यकत्वम्, अनित्यताया एतन्न्यायस्वरूप एवान्तर्भावात् ॥ ५६ ॥

### *अपवादात् क्वचिदुत्सर्गोऽपि* ॥ ५६ ॥

त०—ननु कृते चारितार्थ्ये सति यो बाधकः स एवापवादशब्दशक्यः, अत्र च तस्योत्सर्गेण बाध्यत्वेऽपवादत्वमेव नास्तीति कथमत्रापवादशब्दप्रयोग इति चेत्? न—अपवादशब्दोऽत्र बाधकत्वेनान्यत्र व्यवहृतशास्त्रपरः, तथा च यत् प्रति यस्य बाधकत्वं क्वचिद् दृष्टं तदपि तेन क्वचिद् बाध्यत इति न्यायतात्पर्यात् । पाणिनीये तन्त्रेऽपि *क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते* इति न्याय एतन्न्यायसमानविषय इव दृश्यते । यश्च कश्चन भेदः स तद्व्याख्यायां परिभाषेन्दुशेखरे स्पष्टः । तस्यायमाशयः—अपवादशब्दोऽत्र बाधकपरः, क्वचिदित्यस्य च सर्वथा निरवकाशस्थले इत्यर्थः । तथा च सर्वथानिरवकाशरूपबाधकस्थलेऽप्युत्सर्गशास्त्रं प्रवर्त्तत इति न्यायार्थः । तथा च उत्सर्गशास्त्रे कृतेऽपवादशास्त्रस्य चारितार्थ्ये सति क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्त्तत इति फलतीति । स्वमते च *अपवादात् क्वचिदुत्सर्गोऽपि* इत्युक्त्या तत्रोत्सर्गशास्त्रस्यैव बलवत्त्वं बोध्यते, न त्वपवादशास्त्रस्य तत्र प्रवृत्तिरिति लभ्यते । अनयोर्युक्तायुक्तत्वविचारश्च न संभवति, उभयोः स्वप्रक्रियानुसारं प्रवृत्तत्वात्, तदनुसारमुभयोः साधुत्वाच्चेति संक्षेपः ॥ ५६ ॥

## *नानिष्टार्था शास्त्रप्रवृत्तिः* ॥ ५७ ॥

सि०—अर्थशब्दोऽत्र चतुर्थ्यर्थः, अनिष्टायेयमित्यर्थेऽर्थशब्देन सह "तदर्थार्थेन" [ ३. १. ७२. ] इति सूत्रेण चतुर्थ्यन्तानिष्टशब्दस्य तत्पुरुषसमासः, तस्य च विशेष्यलिङ्गता "ङेऽर्थो वाच्यवत्" [ १२४ ] इति लिङ्गानुशासनसूत्रेण शिष्टेति शास्त्रप्रवृत्तेर्विशेष्यतया तस्य स्त्रीत्वम् । अयं च नित्यसमासः, 'अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा' इति तल्लक्षणात्, अत्र च अनिष्टायेति कथनेनैवार्थशब्दार्थोऽप्युक्त इति तदर्थकवाक्यासम्भवेन विग्रहासम्भवात्, वृत्त्यर्थावबोधकवाक्यस्यैव विग्रहवाक्यत्वात् । तथा चानिष्टाय शास्त्रस्य प्रवृत्तिर्न भवतीति न्यायार्थः । शास्त्रशब्देन चेह शासनकरणमुच्यते, तच्च स्वमते सूत्रं न्यायश्चेत्यनयोरिष्टसिद्ध्यर्थमेव प्रवृत्तिर्नानिष्टसिद्ध्यर्थमिति भावः । नात्र ज्ञापकापेक्षा, किन्तु साध्वनुशासनेऽस्मिन् शास्त्रे साधूनामेवानुशास्यत्वेन शिष्टैः प्रयुक्तानामेव लक्ष्यत्वात्, शिष्टैरप्रयुक्ताश्चासाधवोऽलक्ष्या इति तत्र शास्त्रप्रवृत्तेरनौचित्यमेवैतन्न्यायमूलम् । तत्र सूत्रस्यानिष्टार्थाऽप्रवृत्तिर्यथा—नयतेर्गित्वात् फलस्य कर्तृगामित्वविवक्षायाम् "ईगितः" [ ३. ३. ९५. ] इत्यात्मनेपदसिद्धावपि "कर्तृस्थामूर्त्ताप्यात्" [ ३. ३. ४०. ] इत्यनेन नयतेर्यदात्मनेपदविधानं तन्नियमार्थम्, नियमस्वरूपञ्चेदम्—कर्तृस्थामूर्त्ताप्यादेव नयतेरात्मनेपदं स्यात्, यथा 'श्रमं विनयते' इत्यत्र, अत्र च शमयतीत्यर्थः । नियमानुरोधेन, च कर्तृस्थामूर्त्ताप्यत्वाभावे फलवत्कर्त्तर्यपि न स्यात्, यथा-

चैत्रस्य मन्युं विनयति, गडुं विनयति, बुद्धा विनयतीति, अयं च नियमः शमयतिक्रियार्थस्यैव नयतेर्ज्ञेयो न त्वन्यार्थस्य शिष्टप्रयोगानुरोधात्। ततश्चैवं व्यवस्था सिद्ध्यति–शमयतिक्रियार्थान्नयतेर्यद्यात्मनेपदं स्यात् तदा कर्तृस्थामूर्त्ताप्यत्वसद्भावे एव, न तु तदभावे फलवत्कर्तृविवक्षायामपीति। ततश्च शमयतिक्रियातोऽन्यार्थे वर्तमानान्नयतेः फलवत्कर्तृत्वविवक्षाऽविवक्षाभ्यामात्मनेपद-परस्मैपदे सर्वत्र सिद्धे, यथा–अजां ग्रामं नयति नयते वा। एवमन्यत्रापि शिष्टप्रयोगानुरोधेन सूत्रस्याप्रवृत्तिर्विज्ञेया, यथा–'श्रीआदिनाथ' इत्यादिशिष्टप्रयोगस्थले यत्वस्याप्रवृत्तिरिति। न्यायस्य यथा–*लोपात् स्वरादेशः*इति न्यायः 'चिकीर्ष्यते' इत्यादौ न प्रवर्त्तते, एतच्च तन्न्यायव्याख्यावसर एव प्रतिपादितम्। अयमपि च न्यायोऽनैकान्तिक इति "इदमदसोऽक्येव" [१. ४. ३.] इत्यत्रानिष्टनियमापोहार्थमेवकारप्रयोगः सार्थकः, तथाहि–प्रकृतसूत्रस्य नियामकत्वमेवकारं विनापि सिद्धम्, यतः 'इमकैः, असुकैः' इत्यत्र "भिस ऐस्" [१. ४. २.] इत्यनेनैव ऐसि सिद्धे पुनरनेनैसो विधानं नियमार्थमेव, सिद्धे सत्यारभ्यमाणस्य विधेर्नियमार्थत्वस्वाभाव्यात्, किन्तूभयथा नियमसंभावना, तथाहि–इदमदस एवाकि भिस ऐस्, न त्वन्यशब्देभ्य इत्येकः, इदमदसोऽक्येव सति भिस ऐस्, न त्वकोऽभावे इति द्वितीयः, तत्राद्यो नेष्टः, तकैर्विश्वकैरित्यादौ भिस ऐस्भावापत्तेः, द्वितीय इष्टः, एभिरमीभिरित्यादौ भिस ऐसोऽदर्शनात्। ततश्चाभीष्टनियमसिद्ध्यर्थमेवाक्येवेत्येवकारः पठितः। यदि चायं न्याय ऐकान्तिकः स्यात् तर्हि न्यायबलादेवाभीष्टनियमसिद्धौ तदर्थमेवकारपाठो न कर्त्तव्य एव, पश्यति त्वाचार्योऽस्य न्यायस्यानैकान्तिकत्वमित्येतदर्थमेवकारं पठतीति ॥ ५७ ॥

इति न्यायसमुच्चयस्य प्रथमोल्लासे कलिकालसर्वज्ञेन
भगवता श्रीहेमचन्द्रसूरीश्वरेण समुच्चितानां
सप्तपञ्चाशतो न्यायानां तपोगच्छाधिपति-
सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीम-
द्विजयनेमिसूरीश्वरपट्टालङ्कारेण
'व्याकरणवाचस्पति-शास्त्र-
विशारद-कविरत्न'इति पदा-
लङ्कृतेन विजयलावण्य-
सूरिणा विरचिता
न्यायार्थसिन्धु-
नाम्नी वृत्तिः ॥

## *नानिष्टार्था शास्त्रप्रवृत्तिः* ॥ ५७ ॥

त०—उत्सर्गापवादशास्त्रैर्हि सकलमिदं शब्दशास्त्रं व्याप्तम्, तत्र लक्ष्यैकचक्षुष्कैराचार्यैर्यथासम्भवं प्रयुक्तानां शब्दानामर्थाववोधनाय शास्त्रमात्रप्रक्रियानिर्वाहकः प्रकृतिप्रत्ययादिविभागस्तत्तदर्थविभागश्च कल्पितः, तदनुसारीणि च लक्षणानि निर्मितानि, परमतिमहतः शब्दप्रयोगविषयस्य सम्यक्तया लक्षणैरनुशासनं दुष्करमिवेति समाकलय्य स्वशास्त्रादावेवास्य विषयस्यानैकान्तिकत्वं दर्शितं "सिद्धिः स्याद्वादात्" [१. १. २.] इति सूत्रेण, तदेवानैकान्तिकत्वमनेन न्यायेनाप्यनूद्यते। एतेन च यथासम्भवमिष्टप्रयोगानुसारमेव शास्त्रप्रवृत्तिरिति प्रतिपाद्यते। अन्येष्वपि हि वैयाकरणतन्त्रेष्वीदृशस्य वचनस्योपलब्धिर्दृश्यते। पाणिनीयतन्त्रेऽपि "यथालक्षणमप्रयुक्ते" इति भाष्यकारेण तत्र तत्रोद्घोष्यते, तस्य च द्विविधा व्याख्या क्रियते स्वयमेव–"अप्रयुक्ते शब्दे लक्षणानुसारमेव व्यवस्था कार्या" इति "नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात्" इति च। तत्र द्वितीयव्याख्यायामप्रयुक्तशब्दोऽनिष्टप्रयोगपरः, तथा चानिष्टप्रयोगसाधनाय शास्त्रप्रवृत्तिर्नोचितेति तदभिप्रायः। एतन्न्यायबलादेव "कर्तृस्थामूर्त्ताप्यात्" [३. ३. ४०.] इत्यत्र शमयतिक्रियार्थादेव नयतेरित्यर्थो लभ्यते। यद्यपि बृहद्वृत्तावेतदर्थं नायं न्याय आहृतः, तत्र हि–'शमयतिक्रियावचनादेव नयतेरात्मनेपदं दृश्यते न प्रापणार्थात्' इत्युक्तम्, तथापि तस्यापि ग्रन्थस्यैतन्न्यायसहकारेणैव तादृशार्थो लभ्यत इति तात्पर्यमेषितव्यम्। प्रकृतबृहद्वृत्तिग्रन्थेन च शमयतिक्रियातोऽन्यार्थान्नयतेः फलवत्कर्तृविवक्षायामपि नात्मनेपदमित्येव लभ्यते। तथाहि-तत्र शमयतिक्रियातोऽन्यार्थे सर्वं परस्मैपदविषयमेवोदाहरणं प्रदत्तम्, "यथा शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम्। विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः ॥" इति [किरातार्जुनीये द्वितीयसर्गे], अत्र "विजितक्रोधरया जिगीषवः गरीयसीम् अदूषितायतीं फलनिष्पत्तिं विगणय्य पौरुषं शिवमौपयिकं नयन्ति" इत्यर्थेऽभिधेये पौरुषस्योपायभावप्राप्तेः फलं कर्तृगाम्येवेति, तथापि नात्मनेपदमित्यभिप्रायः, 'यथा च कोपं शमं नयति, मन्युं नाशं नयति, प्रज्ञां प्रवृद्धिं नयति, बुद्धिं क्षयं नयति' इत्याद्युदाहरणेष्वपि फलवत्कर्तृत्वं स्पष्टमेवेति ॥ पाणिनीये तन्त्रे त्वेतादृशस्थले फलवत्कर्तृत्वाविवक्षया परस्मैपदं साधितम्। अस्यानैकान्तिकत्वं यदुक्तं वृत्तौ तत् प्राचामनुसारेण, वस्तुतस्तु नास्यानैकान्तिकत्वमेष्टव्यम् "इदमदसोऽक्येव [१. ४. ३.] इति सूत्रे एवकारसार्थक्याय हि न्यायस्यास्यानित्यत्वमिष्यते, नायं न्यायः कृतस्य वचनस्यानर्थक्याय यतेत, स्वयमेवानिष्टार्थवारणाय प्रवृत्तत्वात्। किञ्च शास्त्रस्यैवानिष्टप्रवृत्तिभयं

वारयति, शास्त्रत्वं च सूत्रन्याययोरेव स्वमते इति प्रतिपादितं पूर्वम्, ततश्च नियमस्यानिष्टार्थत्ववारणं नानेन कर्तुं शक्यत इतीष्टनियमबोधनाय सार्थक्यमेवकारस्येति तेन नास्य न्यायस्यानित्यत्वं साधयितुं शक्यते। किञ्च तत्र "नेदमसोरकि" इत्यपि न्यासः कर्तुं शक्यते, इदमदसोरकि सति भिस ऐस् नेत्यर्थेनैवेष्टसिद्धेरिति तदर्थमेवकारस्यानुपयुक्तत्वमेवेति न तेन न्यायानित्यत्वज्ञापनमुचितम्। न च तथैव न्यासः कुतो न कृतः, तथा सति सार्धमात्रालाघवमपीति वाच्यम्, विधिप्रकरणत्वेन तन्निर्वाहाय विधेरेवाश्रयणीयत्वौचित्यात्। न च नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति नियमेऽकृतेऽपि निषेध एव फलतीति वाच्यम्, विधिमुखेनापि प्रवृत्तेः स्वीकारात्, अत्र तथैवाश्रयणात्। यद्यपि विधेरिह सिद्धत्वेन निषेध एव शास्त्रतात्पर्यमिति तन्मुखेनैव प्रवृत्तिरुचिता, तथापि शब्दतो निषेधाप्रतीतेर्विधिकरणत्वाव्याघातादित्यास्तां विस्तरेणेति ॥ ५७ ॥

इति न्यायसमुच्चयस्य सिन्धुकलिते प्रथमोल्लासे कलिकालसर्वज्ञेन भगवता श्रीहेमचन्द्रसूरीश्वरेण समुच्चितानां सप्तपञ्चाशतो न्यायानां तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण 'व्याकरण-वाचस्पति-शास्त्रविशारद-कविरत्न' इति पदालङ्कृतेन विजयलावण्यसूरिणा विरचितं तरङ्गाभिधं विवरणम् ॥

क्वचित् प्राच्यः पन्थाः क्वचिदपि च नव्यो बुधपथः,
क्वचित् स्वातन्त्र्याध्वा क्वचिदपि च तेषां समुदयः।
श्रितोऽस्मिन् शिष्याणां मतिविकसनार्थं शुभधिया,
बुधैर्बुद्ध्वा तत्त्वं तदनुगतमर्प्यं श्रितजने ॥ १ ॥
सूरीन्द्रं हेमचन्द्रं कलिसकलविदं संस्मरामोऽभिरामं,
धीमन्तं हेमहंसं गणिमणिममलं तं कथं विस्मरामः।
न्यायानामर्थसार्थं निजमतघटितं धारयन्तीं यदीयां,
मञ्जूषां प्राप्य जाता वयमिह प्रभवः साधु सिन्धौ तरङ्गे ॥ २ ॥

## [ अथ न्यायसमुच्चये द्वितीयोल्लासः ]

अथान्येऽपि तत्र तत्राचार्यैः कण्ठतोऽभिप्रायतश्च व्यवहृता वाचकश्रीहेमहंसगणिना च समुच्चिता ये न्यायास्ते व्याख्यायन्ते-

### *प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम्* ॥ १ ॥

सि०—यस्मात् प्रत्ययो विधीयते स शब्दः प्रकृतिः, स च द्विविधः-धातुरूपो नामरूपश्च, तस्य ग्रहणं यत्र तच्छास्त्रं प्रकृतिग्रहणम्, तत्र स्वार्थिकप्रत्ययान्तानामपि स्वस्याः प्रकृतेरर्थ एव ज्ञाप्यो येषां ते स्वार्थिकाः, ते च ते प्रत्यया अन्ते येषां तेषामपि, [ प्रकृतीनामिति योग्यतया सम्बन्धनीयम्, ] ग्रहणं भवतीति न्यायार्थः। केवलप्रकृतिग्रहणे प्रत्ययान्तस्य ग्रहणं न प्राप्नोति स्वरूपभेदादिति तत्प्राप्त्यर्थोऽयं न्यायः। अत्र च ज्ञापकं—सर्वादिगणे नियमार्थं डतर-डतमप्रत्ययोपादानम्, तथाहि—तदुपादानेऽयमाशयः—डतर-डतमौ प्रत्ययौ, प्रत्ययस्य च केवलस्य *न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलप्रत्ययः* इति महाभाष्यादिसम्मतरीत्या प्रयोग एव नास्तीति कुतस्तयोः संज्ञासंभवः?, ततश्च प्रत्ययः प्रकृतिं विनाऽनुपपद्यमानः प्रकृतिमाक्षिपति, *येन विना यदनुपपन्नं तत् तेनाक्षिप्यते* इति न्यायात्, ततश्च येभ्यो यत्-तत्-किमन्यैक-शब्देभ्यः स्वार्थिकौ डतर-डतमौ संभवतस्ते यदादिशब्दा डतर-डतमान्ता इह डतर-डतमाभ्यां संगृह्यन्ते, तेन यतरस्मै यतरस्मादित्यादिषु स्मायादयः सिद्धाः, किन्तु सूरिभिरस्य डतर-डतमयोरुपादानस्य नियमार्थत्वमुक्तम्। तथाहि—"सर्वादेः स्मै-स्मातौ [ १. ४. ७. ] इति सूत्रे बृहद्वृत्तिः—"डतर-डतमौ प्रत्ययौ, तयोः स्वार्थिकत्वात् प्रकृतिद्वारेणैव सिद्धे पृथगुपादानमत्र प्रकरणेऽन्यस्वार्थिकप्रत्ययान्तानामग्रहणार्थम्, अन्यादिलक्षणदार्थं च" इति। नियमाकारश्चायम्—'यदि सर्वादीनां स्वार्थिकप्रत्ययान्तानां प्रकृतिसर्वादित्वद्वारेण सर्वादित्वं स्यात् तदा डतर-डतमान्तानामेव स्यान्न त्वन्यस्वार्थिकप्रत्ययान्तानाम्' इति, तेन प्रकृष्टार्थे स्वार्थिकतममपि सर्वतमाय सर्वतमादित्येव भवति, न तु स्मायादयो भवन्ति। इत्थं चान्यस्वार्थिकप्रत्ययान्तानां सर्वादित्ववारणाय क्रियमाणस्य डतर-डतमग्रहणस्य तदैव तदर्थत्वं स्याद् यदि तेषामन्यस्वार्थिकप्रत्ययान्तानामत्र ग्रहणं केनापि प्राप्तं स्यात्, न च सा प्राप्तिः प्रकृतन्यायमन्तरेण सम्भवतीति प्रकृतन्यायं विनानुपपद्यमानं डतर-डतमयोर्नियामकत्वं प्रकृतन्यायं ज्ञापयतीति स्वीकार्यम्। तत्र धातुरूपप्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तग्रहणस्योदाहरणं यथा—"विनिमेय-द्यूतपणं पणि-व्यवहोः" [ २. २. १६. ]

इत्यत्र पणीत्युक्तेः केवलस्यैव पणेर्ग्रहणं यद्यपि प्राप्नोति, तथापि प्रकृतन्यायसाहाय्येन स्वार्थिकायप्रत्ययान्तरस्यापि ग्रहणं भवति, तेन शतस्य शतं वा अपणिष्टेत्यादाविव शतस्य शतं वा अपणायीदित्यादावपि "विनिमेय-द्यूत०" [ २. २. १६. ] इत्यनेन व्याप्यस्य वा कर्मसंज्ञा भवति। नामरूपप्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तग्रहणं यथा–ग्रामात् परस्मिन् देशे वसतीत्यादौ केवलपरशब्दयोगे इव ग्रामात् परस्ताद् वसतीत्यादावपि ग्रामशब्दात् "प्रभृत्यन्यार्थ०" [ २. २. ७५. ] इति दिग्योगलक्षणा पञ्चमी सिद्धा, परस्तादित्यत्र च "परावरात् स्तात्" [ ७. २. ११६. ] इति सूत्रेण स्वार्थिकः स्तात्प्रत्ययो भवति। अयं च न्यायः कमेर्णिङो ङित्करणेनानित्य इति ज्ञायते, अन्यथा कमेर्ङित्त्वेन ण्यन्तस्यापि प्रकृतिग्रहणेन ग्रहणादात्मनेपदे सिद्धे तदर्थं कृतस्य णिङो ङित्त्वस्य वैयर्थ्यं स्यादेव, ततश्च व्यर्थीभूतं तदस्य न्यायस्यानित्यत्वं ज्ञापयतीति कमेर्ण्यन्तादात्मनेपदनित्यतायै तस्य स्वांशे चारितार्थ्यम्, फलं च पणायतीत्यादौ पणधातोरिदित्त्वेऽपि नात्मनेपदमिति विशेषश्च प्रतिपादयिष्यते ॥ १ ॥

अथान्येऽपि तत्र तत्राचार्यैः कण्ठतोऽभिप्रायतश्च व्यवहृता वाचकश्रीहेमहंसगणिना च समुच्चिता ये न्यायास्तेषां विवरणं क्रियते–

## ※प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम्※ ॥ १ ॥

त०—यद्यपि प्रतीयतेऽर्थोऽनेनेति व्युत्पत्त्या प्रत्ययस्यापि वोध्योऽर्थः कश्चिदभिप्रेय एव, न चायादीनां कश्चिदर्थः शास्त्रे पठ्यते, न चानर्थकस्य प्रत्ययत्वं, तथापि तेषां प्रकृत्यर्थ एव विधानमिति। तथाहि—"सुपि स्थः" [ पा० सू० ३. २. ४. ] इत्यादिसूत्रेषु महाभाष्ये पठ्यते–'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे' इति। प्रत्यय इति त्वन्वनर्था संज्ञा कृता, न चान्यस्य कस्यचनार्थस्योपस्थितिरस्ति, तथा चोपस्थितत्वात् प्रत्यासन्नत्वाच्च प्रकृत्यर्थ एव तेषां विधानमिति तदाशयः। तथा च स्व-स्वप्रकृत्यन्तरार्थप्रत्यायकत्वं प्रत्ययत्वमिति फलति। यतश्च स्वार्थिकाः प्रत्यया विधीयन्ते तस्य प्रत्ययान्तस्यापि प्रकृतिवद् व्यवहारो भवति, न च स व्यवहारो वचनं विना सेत्स्यतीत्ययं न्याय आश्रीयते। स्वार्थिकाः प्रत्ययाश्च द्विधा-केचिदाख्यातीयाः केचित् तद्धितीयाश्च, आयादयः प्रथमे, कारादयस्तमवादश्चान्ये। तत्रायादीनां कारादीनां च सामान्यतः प्रकृत्यर्थमात्र एव विधानम्। तथाहि-सूत्राणि "गुपौ-धूप०" [ ३. ४ १. ] "कमेर्णिङ्" [ ३. ४. २. ] "ऋतेर्ङीयः" [ ३. ४. ३. ] इत्यादीनि आख्यातेषु; "वर्णा-ऽव्ययात् स्वरूपे कारः" [ ७. २. १५६. ] "रादेफः" [ ७. २. १५७. ] "नाम-रूप-भागाद् धेयः" [ ७. २. १५८. ] इत्यादीनि च तद्धितेषु। न चायादिषु सन्नपि समाविष्टः, स च "गुप्-तिजोः गर्हा-क्षान्तौ सन्" [ ३. ४. ५. ] "कितः संशय-प्रतीकारे" [ ३. ४. ६. ] इति सूत्राभ्यामर्थविशेषेषु विहितः, जुगुप्सते, तितिक्षते, विचिकित्सति, चिकित्सतीत्यादौ च ते तेऽर्थाः प्रकृतितः पृथगवभासन्तेऽपीति कथमायादीनां सर्वेषां स्वार्थिकत्वमित्युक्तमिति वाच्यम्, यतो धातूनामनेकार्थत्वेन गर्हादीनां धात्वर्थत्वमेव, न तूपाधिविशेषत्वम्, गर्हाद्यर्थे वर्त्तमानाद् गुप्यादेरेयं प्रत्ययो विधीयत इत्यर्थाश्रयणात्, तथा च संशयाद्यर्थानां प्रकृत्यर्थत्वमेव न तूपाधिविशेषत्वम्, उपाधिर्हि प्रकृत्यर्थभिन्नः सन् प्रकृत्यर्थविशेषको भवति। तमवादयस्तद्धितास्तु प्रकृत्यर्थादधिकं प्रकृष्टाद्यर्थमुपाधिमपेक्षन्त इत्यायादितः कारादितश्च भिन्नाः, यथा–बहूनां मध्ये प्रकृष्ट आढ्यः [ आढ्यतमः ] इत्यर्थे "प्रकृष्टे तमप्" [ ७. ३. ५. ] इत्यादि, परन्तु तत्रापि प्रकृष्टादयोऽर्था प्रकृत्यर्थविशेषणीभूता अपि प्रकृतित एवावसीयन्ते, प्रत्ययानां तत्र द्योतकतामात्रम्, समुच्चयाद्यर्थानां द्योतकत्वं यथा चादीनाम्। एवं च तद्धितस्वार्थिकेषु द्विविधत्वम्–प्रकृत्यर्थमात्रनिष्ठत्वं, प्रकृत्यर्थोपाधिद्योतकत्वं चेति ॥ अत्र शतस्य शतं वा अपणायीदिति यदुदाहरणमुक्तं तत् स्वमताभिप्रायकम्। पाणिनीयमते तु पणेर्व्यवहारे आयप्रत्ययो न भवति, तदाह दीक्षितः–"पनिसाहचर्यात् पणेरपि स्तुतावेवायप्रत्ययः" इति। तस्यायमाशयः–पनिः स्तुत्यर्थ एव, पणिस्तु स्तुति-व्यवहारोभयार्थः, तत्र स्तुत्यर्थेन पनिना साहचर्यात् पणेरपि स्तुत्यर्थकादेवायप्रत्ययो भवतीति। तथा च तन्मते धातूदाहरणं मृग्यम्। यत्तु पणायतीत्यनुदाहृत्य अपणायीदित्युदाहरणं शिलायप्रत्ययस्य नित्यत्वेन केवलस्य पणेस्तत्रासम्भवेन सूत्रे [ विनिमेयद्यूत०" २. २. १६. इत्यत्र ] पणिग्रहणेऽपि सूत्रसार्थक्यायैवायप्रत्ययान्ते परे प्रवृत्तिरिति शङ्कावारणायेति प्राचीनाः, तन्न–पूर्वोदाहृतेन शतस्य शतं वा अपणिष्टेत्यनेनैवायप्रत्ययस्य वैकल्पिकत्वेऽवगते तादृशशङ्काया अनुत्थितेः। तथा चार्थागतं प्राकरणिकमेवोदाहरणं नान्याभिप्रायकमिति विज्ञेयम्। वस्तुतस्तु नैतादृशे विषये न्यायस्यावश्यकताऽस्ति, यत्र हि प्रकृतिः परत्वेन निमित्तीक्रियते, यतस्तत्र प्रत्ययान्तस्य भिन्नत्वेऽपि प्रकृतिभागस्य तच्छब्दत्वं न व्याहन्यते। न च तत्र विशिष्टरूपोपादानसत्त्वेनार्थवत एव तद्रूपस्य ग्रहणं, प्रत्ययसम्बन्धे च न केवलप्रकृतेरर्थवत्त्वं वृत्तावेकार्थीभावाभ्युपगमादिति वाच्यम्, प्रत्ययान्तेन प्रकृतिभिन्नार्थानभिधानात्। यत्र हि प्रकृतिमात्रप्रत्ययान्तयोरर्थे भेदस्तत्र तन्न्यायावसरेऽप्यत्र तदभावात्। तथापि स्वार्थिकप्रत्ययान्तानां सर्वत्र प्रकृतिमात्र-

ग्रहणेऽपि ग्रहणं भवतीत्येतावतोऽर्थस्यान्यत्राप्युपयुज्यमानस्य साधनाय न्यायस्यावश्यकतामाकलय्य प्रकृतिपरतो विधीयमानकार्येष्वपि तत्प्राप्त्या तदुदाहरणत्वेनेहोपन्यस्तः पणायतेः प्रयोगः । एवं ग्रामात् परस्तादित्यादावपि बोध्यम् । अत्रैतन्न्यायानित्यत्वमाश्रित्य तस्य फलत्वेन पणायतीत्यादौ य आत्मनेपदाभाव उदाहृतो वृत्तौ स प्राचामनुरोधेन । वस्तुतस्तु पणायतीत्यादावात्मनेपदाभावो बृहद्वृत्तावित्थं साधितः—"अनुबन्धस्याशवे आयप्रत्ययाभावपक्षे चरितार्थत्वादायप्रत्ययान्ताभ्यां पणि-पनिभ्यामात्मनेपदं न भवति" इति, एवं च न्यायानित्यत्वफलं कथमिदमुच्यते?। किञ्चैवं तदनित्यत्वे ज्ञापकमपि दुर्लभम्, कमेर्णिङो ङित्त्वस्यैव हि प्रकृतन्यायानित्यत्वज्ञापकत्वमिष्यते, तस्य चोक्तयुक्त्या सार्थकत्वेन ज्ञापकत्वासंभवात् । अयमाशयः—यथा पणायतीत्यत्र पणेरनुबन्धस्याशवि आयप्रत्ययाभावे चारितार्थ्येनायप्रत्ययान्तान्नात्मनेपदमित्युच्यते, तथा कमेर्ङित्त्वस्याप्यशवि णिङभावपक्षे चारितार्थ्यसम्भवेन न तेन ण्यन्तादात्मनेपदं साधयितुं शक्यत इति णिङो ङित्त्वस्य चारितार्थ्यसत्त्वेन ज्ञापकत्वासम्भव इति । अथास्य न्यायस्य ज्ञापकं यदुक्तं-नियमार्थं सर्वादिगणे डतर-डतमोपादानमिति, तदपि विचार्यते-डतर-डतमयोरुपादानस्य नियमार्थत्वकथनपरो बृहद्वृत्तिग्रन्थ उदाहृतः पूर्वं वृत्तौ, तत्र हि नियमार्थत्वोपपत्तिरित्थमुच्यते—"तयोः स्वार्थिकत्वात् प्रकृतिद्वारेणैव सिद्धे" इति । तदुपपादनपरो न्यासग्रन्थश्चायम्—"स्वार्थिकत्वात् प्रकृत्यविशिष्टतया यत्तदादिप्रकृतिद्वारकमेव सर्वादित्वं भविष्यति, किमनयोरुपादानेन" इति । एतद्विचारे डतर-डतमयोर्नियमार्थत्वाय प्रकृतन्यायस्योपयोग इति विषये नाचार्यसम्मतिरित्यायाति, अर्थभेदाच्छब्दभेद इति हि मन्यन्ते शाब्दिकाः, तत्र स्वार्थिकप्रत्यये कृते नार्थभेद इति शब्दैक्याध्यवसायादेव तत्र कार्यं भविष्यतीति न तयोर्ग्रहणमावश्यकमिति नियमार्थावेव ताविति । तथा च तत्र सर्वादित्वं स्वभावत एवेत्याचार्याशयः । अग्रे चोपसर्जनप्रतिषेधविषयकवृत्तिग्रन्थव्याख्यावसरे न्यासकृता "अथवा सर्वमादीयतेऽभिधेयत्वेन गृह्यतेऽनेनेति अन्वर्थाश्रयणात् सर्वेषां यानि नामानि तानि सर्वादीनि" इति यदुक्तं तेनाऽपि स्वार्थिकप्रत्ययान्तानां सर्वादित्वमनुमतं भवति । वस्तुतस्त्वन्वर्थसंज्ञाश्रयणे गणपाठस्यानर्थक्यमिति सर्वनामत्वे सति सर्वादिगणपठितत्वमपि सर्वादित्वप्रयोजकमिति डतर-डतमयोरिह गणे पाठाभावे तदन्तानां सर्वादित्वप्रयुक्तं कार्यं न स्यादिति तयोः पाठस्य सार्थक्येन नियमार्थत्वाभावः । अत एवाचार्यैरपि प्रयोजनान्तरमुक्तं तस्य—"अन्यादिलक्षणदार्थं च" इति । तदाशयश्च न्यासे इत्थं विवृतः—"डतर-डतमान्तानां "पञ्चतोऽन्यादेरनेकतरस्य दः" [ १.४.५८. ] इत्यन्यादित्वाद् दादेशो यथा स्यादित्येवमर्थं च डतर-डतमग्रहणम्, नहि 'अन्य, अन्यतर, इतर, डतर, डतम' इत्यपाठे पञ्चतोऽन्यादेरुच्यमानो दादेशो लभ्येत" इति । तथा च सत्यस्मिन् प्रयोजने वैयर्थ्याभावात् कथं ज्ञापकत्वं स्यात् । यद्यपि तदग्रे नियमार्थत्वाभावमाशङ्क्य समर्थितमपि तथापि तन्नातीव हृदयंगममिति तस्माद् ग्रन्थादेवात्रगम्यते । तथाहि—तत्रत्यो ग्रन्थः "ननु च सत्यस्मिन् प्रयोजने कथं स्वार्थिकप्रत्ययान्तानां सर्वादित्वाभावार्थं स्याज्ज्ञापकमिदम्? अन्यथाऽनुपपद्यमानं ज्ञापकं भवति, न च सत्यस्मिन् प्रयोजनेऽस्यान्यथाऽनुपपत्तिरस्ति; न च दादेशमात्रार्थत्वे दादेशविधावेव डतर-डतमग्रहणं कर्त्तव्यम्, गणे तु करणात् स्वार्थिकप्रत्ययान्तानां सर्वादित्वाभावार्थमपि भवतीति वाच्यम्, गणे करणमसंज्ञायामिति विशेषणार्थं स्यात्, गुरुश्च "अन्यान्यतरेतरडतरडतमस्य" इति निर्देशः स्यादिति; उच्यते—यथेदं दादेशार्थमन्यादिपञ्चके भावाद् भवति तथा स्मै-स्मादादेशाद्यर्थमपि स्यात्, सर्वादित्वात्, तथा हि—यदि स्वार्थिकप्रत्ययान्तानां सर्वादित्वं स्यात्, तदा स्मै-स्मादादेशार्थं डतर-डतमोपादानमनर्थकं [ स्यात् ], अतः स्वार्थिकप्रत्ययान्तानां सर्वादित्वं न भवतीति तदुपादानं स्वार्थिकप्रत्ययान्तानां सर्वादित्वाभावार्थं विज्ञायत इति" इति । अस्यायमाशयः—'डतर-डतमयोः पाठः सर्वादावन्यादिपञ्चके च, तत्रान्यादिपञ्चके पाठो दादेशसम्पादनेन चरितार्थोऽपि सर्वादिपाठो व्यर्थः सन्नुक्तमर्थं ज्ञापयतीति । तत्रेदमुच्यते—यदि सर्वाद्यन्तर्गतान्यादिपञ्चके पाठः सार्थकः, तावताऽपि सार्थकत्वसिद्धावधिकप्रयोजनाभावेऽपि ज्ञापकत्वानवकाश एव । अवश्यं हि सर्वादौ क्वचिदन्यादिपञ्चकं पठनीयमिति तन्मध्यपतिताविमावपि पठितौ स्मै-स्मादादेशविधानार्थमपि भविष्यतः, अन्येषां स्वार्थिकप्रत्ययान्तानां च पाठाभावादेव न तदादेशप्राप्तिः, न च स्वार्थिकप्रत्ययान्तत्वेन प्रकृतिद्वारेण भविष्यति, तथा सति अन्वर्थसंज्ञाबलादेव सर्वेषां सर्वादिकार्यं भविष्यतीति किमनेन पाठेन कृतं स्यात्, यतश्च पाठः क्रियते ततश्च तत्पठितानुपूर्वी तत्पठितशब्दप्राधान्यवत्तदन्तानुपूर्वी च ग्राह्येति नान्येषां स्वार्थिकप्रत्ययान्तानां सर्वादिकार्यमिति । किञ्चाचार्यवचनानुरोधेन तस्य कथंचिन्नियमार्थत्वस्वीकारेऽपि न नियमार्थत्वकथनस्य प्रकृतन्यायज्ञापकत्वसम्भव इति पूर्वमावेदितमेवेति । यदि चास्ति किञ्चिन्न्यायस्यानन्यथासिद्धं प्रयोजनं तर्हि वाचनिकमेवेदं स्वीकार्यमिति ॥ १ ॥

## *प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव* ॥ २ ॥

सि०—यत्र क्वचित् तादृशानुपूर्वी गृह्यते या प्रत्ययेऽप्रत्यये च सम्भवति, तत्र तादृशानुपूर्वीविशिष्टः प्रत्यय एव ग्राह्यो न त्वप्रत्यय इति न्यायार्थः । न्यायाभावेऽव्यवस्थयोभयोर्ग्रहणे प्राप्ते व्यवस्थार्थोऽयं न्यायः । अत्र पूर्वन्यायाद् 'ग्रहणम्' इति पदमनुवर्त्तते, तेन चोक्तार्थलाभः । अयं च न्यायो यत्र तत्र शास्त्रकारैर्वचनरूपेण पठित इति वाचनिक एव, तत्र तत्र तेषां

शब्दानां प्रत्ययपरत्वेन व्याख्यानमूलक एव चेति नात्र ज्ञापकविन्यासः । तथा चैतन्न्यायसत्त्वादेव "कालात् तन-तर-तम-काले" [ ३. २. २४. ] इति सूत्रे तर-तमौ प्रत्ययावेव ग्राह्यौ, न तु तरतीति तरः, ताम्यतीति तमः, इत्यजन्ते नाम्नी, तथा च तयोः परतो न सप्तम्या अलुक् । अस्य च व्याख्यानमूलकत्वाद् यत्राचार्यैः प्रत्ययत्वेन व्याख्यानं न कृतं तत्र प्रत्ययाऽप्रत्यययोरुभयोर्ग्रहणम्, तेन "स्त्रीदूतः" [ १. ४. २९. ] इत्यादौ "नारी" [ २. ४. ७६. ] इत्यादिङीप्रत्ययान्तवत् 'तरी' इत्याद्याः प्रत्ययरहिता अव्युत्पन्नाः शब्दा अपि ईदन्तत्वेन ग्राह्याः । यद्यपि 'तरी' इत्यादयोऽपि शब्दाः "तॄ-स्तॄ-तन्द्रि०" [उणा० ७११.] इत्यादिभिरुणादिसूत्रैर्व्युत्पाद्यन्त इति तत्रापीकारस्य प्रत्ययत्वं सम्भवति, तथापि *उणादयोऽव्युत्पन्नानि नामानि* इति न्यायमाश्रित्य तत्रेकारस्य प्रत्ययत्वाभाव उक्तः । अस्य व्याख्यानमूलकत्वेनास्थैर्यादेव "धातोरिवर्ण०" [२. १. ५०.] इति सूत्रे 'स्वरे प्रत्यये' इति प्रत्ययग्रहणं सार्थकम्, अन्यथा न्यायेनैव प्रत्ययार्थे लब्धे तस्य वैयर्थ्यमेव स्यात् ॥ २ ॥

### *प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव* ॥ २ ॥

त०—अयं न्यायः "अङ्गस्य" [पा० सू० ६. ४. १.] इति सूत्रे महाभाष्ये वचनरूपेण पठितः । न च तत्र ज्ञापकं किमप्युपन्यस्तमिति तन्मतेऽपीयं वाचनिक एव । किञ्च वर्णग्रहणेऽयं न्यायो न प्रवर्तते, तेन "ईश्च्वावर्णस्याऽनव्ययस्य" [४. ३. १११.] इत्यादौ न प्रत्ययग्रहणम् । यद्यपि तत्रानव्ययस्येति पर्युदासादेव सदृशग्राहकात् प्रत्ययभिन्नस्य ग्रहणमिति कथयितुं शक्यते, तथापि "अवर्णस्येवर्णादिनैदोदरल्" [१. २. ६.] इत्यादौ वर्णग्रहणेऽप्रवृत्तिर्व्याख्येया । स्पष्टं चेदं तत्रैव कैयटेऽपि, इति प्राचीनमतम् । नवीनास्तु न्यायमिमं न स्वीकुर्वन्ति, तथा हि—"तित्स्वरितम्" [पा० सू० ६. १. १८६.] इति सूत्रे कैयट आह— "*प्रत्ययाऽप्रत्यययोः प्रत्यये संप्रत्ययः* [प्रत्ययस्यैव ग्रहणम्] इति परिभाषा तु भाष्य-वार्तिककाराभ्यां न क्वचिदाश्रिता" इति । यद्यपि पूर्वोदाहृते "अङ्गस्य" [६. ४. १.] इति सूत्रे महाभाष्ये तस्य न्यायस्य चर्चा कृताऽस्ति, तथापि तत्सूत्रप्रत्याख्यानपरेणैकदेशिनैव तत्र तदाश्रयणमिति कैयटाशय इति नागेशेन तत्रैव [६. १. १८६.] सूत्रे स्फोरितम् । तथाहि—"न क्वापि लक्ष्यसिद्ध्यर्थमाश्रितेत्यर्थः । "अङ्गस्य" [पा० सू० ६. ४. १.] इति सूत्रे भाष्ये तु 'तत्प्रत्याख्यानायैकदेशिनोपन्यस्ता, न तु सिद्धान्तिना इत्याशयः' इति । एवं च "तिति प्रत्ययग्रहणं कर्तव्यम्" इति "तित्स्वरितम्" [पा० सू० ६. १. ८६.] इति सूत्रे वार्तिकमपि सार्थकम्, अन्यथा न्यायेनैव सिद्धं वार्तिकस्य वैयर्थ्यं स्पष्टमेव । परे तु—तत्र तत्रेष्टप्रत्ययमात्रग्रहणसाधनाय न्यायोऽयमाश्रणीय एव, पूर्वोक्तवार्तिकं तु न्यायप्राप्तार्थानुवादरूपमेव, यत्र च न प्रत्ययमात्रग्रहणमिष्टं तत्राचार्यव्याख्यानमेव शरणीकरणीयमिति न्यायमिमं स्थापयन्ति । तथा च यथालक्ष्यमस्याश्रयणमनाश्रयणं च सिद्ध्यतीति । अयमत्र निष्कर्षः—न्यायस्वीकारे यत्र प्रत्ययग्रहणं नेष्टं तत्रास्यानित्यत्वं भाष्यकारादिव्याख्यानं च शरणीकरणीयम्, न्यायास्वीकारे च यत्र प्रत्ययमात्रग्रहणमिष्टं तत्र व्याख्यानं शरणीकरणीयमित्युभयोः पक्षयोर्दोषसाम्यात् स्थितस्य न्यायस्य स्वीकार एव युक्त इति प्राचीनपक्षरक्षणोत्सुकानां विचक्षणानामभिप्रायः ॥ २ ॥

## *अदाद्यनदाद्योरनदादेरेव* ॥ ३ ॥

सि०—यत्र हि अदादिषु अनदादिषु च पठितो धातुः सामान्येनोपादीयते न च किञ्चिद् व्यावर्तकमाश्रीयते तत्रोभयोर्ग्रहणे प्राप्ते तन्निवारणार्थोऽयं न्यायः । पूर्ववदत्राऽपि ग्रहणमिति पदमनुवर्तनीयम् । तथा चोभयथा संभाव्यमानधातोरुपादानेऽनदादेरेव धातोर्ग्रहणमित्यर्थः । अस्य ज्ञापकं च—"शासस्हनः शाध्येधिजहि" [४. २. ८४.] इति सूत्रेऽस्तेरादादिकस्य ग्रहणसिद्ध्यर्थं शास्-हन्-साहचर्यबलग्रहणम्, तद्ध्येतन्न्यायबलादसत्यस्त्योर्ग्रहणवारणार्थमेव कृतमित्यनुमीयते । अयं च न्यायः "उपान्वध्याङ्वसः" [२. २. २१.] इत्यत्र वस्तेराच्छादनार्थस्य व्युदासेन वसतेर्ग्रहणं व्यवस्थापयति । अयं चाचार्यव्यवहारमात्रमूलक इति यत्राचार्यैः विशेषाददादेरपि ग्रहणमिष्टं तत्र न प्रवर्तते, यथा—"ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा" [४. २. ७६.] इत्यत्र भौवादिकस्येवादादिकस्यापि ऋधातोर्ग्रहः । वस्तुतस्तु ऋणमित्यस्यार्थविशेष एव नियन्त्रितत्वात् तत्र कस्यापि ग्रहणे विशेषाभावेन न तत्रानित्यत्वफलमिति तत्रत्यबृहद्वृत्तिग्रन्थबलादेवावसीयते । विस्तृतं चैतद्विवरणे ॥ ३ ॥

### *अदाद्यनदाद्योरनदादेरेव* ॥ ३ ॥

त०—"द्विधा हि धातवो लुग्विकरणा अलुग्विकरणाश्च, तत्रादादयो लुग्विकरणा अन्येऽलुग्विकरणाः" इति परेषां मतम् । स्वमते चादादिभ्यो विकरणं विधाय तस्य पुनर्लुग्विधानमिति गौरवमाकलय्य "कर्तर्यनद्भ्यः शव्" [३. ४. ७१.] इति विकरणविधायकसूत्रेऽदादयः पर्युदस्ताः । तथा च स्वमते विकरणभाविनोऽविकरणाश्चेति रूपेणैव विभागः । तत्र विकरणभाविनोऽनदादयः, विकरणाभाववन्तश्चादादय इत्युच्यन्ते । सूत्रपठिताः कतिपये धातवोऽदादिषु पठिता अन्यत्र च, तत्र कस्य कुत्र ग्रहणमिति नियमाय न्यायोऽयमाश्रीयते । अत्र ज्ञापकं प्राचीनोक्तरीत्योपस्थापितं "शासस्-हनः शाध्येधिजहि" [४. २. ८४.] इति सूत्रेऽस्तेरादादिकस्य परिग्रहार्थं साहचर्याश्रयणम् ।

तत्रेदं विचार्यते-कस्याप्येकस्यैव ग्रहणमिह कार्यं, तत् कस्येति निर्णयाभावे प्राप्ते तन्निर्णयार्थमेव साहचर्यमाश्रितमिति कुतो नाश्रीयते ?, एतन्न्यायबलात् तदाश्रयणमनुमायैतन्न्यायानुमानस्य निर्मूलत्वात्, अत एव "गम-हन-विद्लृ-विश-दृशो वा" [४.४.८४.] इति सूत्रे लाभार्थस्य तौदादिकस्य विदेर्ग्रहणार्थमनुबन्धसहितपाठः, अन्यथाऽनेन न्यायेनैव तौदादिकस्यैव ग्रहणे सिद्धे तदर्थमनुबन्धनिर्देशो व्यर्थः स्यात्; सत्ता-विचारार्थयोस्तु आत्मनेपदित्वादेव क्सोरभाव इति तद्ग्रहणस्य संभावनैव नास्ति । यत्तु कैश्चित् प्रकृतन्यायेनानदादेर्ग्रहणे सिद्धेऽपि निरनुबन्धन्यायेन साहचर्यन्यायेन च हन्साहचर्याज्ज्ञानार्थकस्यादादेरपि ग्रहणं स्यादिति परस्परविरुद्धन्यायद्वयाप्रवृत्तयेऽनुबन्धनिर्देश इति व्याख्यातम्, तथाहि तेषां ग्रन्थः-"अथ विद इत्युक्तेऽपि *अदाद्यनदाद्य०* इति न्यायाल्लाभार्थस्यैव ग्रहणं भविष्यति, सत्ताविचारणार्थयोरनदादित्वेऽप्यात्मनेपदित्वात् क्सोरसंभवात्, नैवम्-निरनुबन्धपरिभाषया तौदादिकस्य ग्रहणाऽसम्भवात्, उभे ह्येते वचने परस्परविरोधिनी नैवात्र प्रवर्त्तेते, तस्माद् येन प्रकारेण निर्विशङ्कं लाभार्थस्य ग्रहणं सम्पद्यते स प्रकारो वृत्तौ दर्शित इति । अथ विशिना साहचर्याल्लाभार्थस्यैव ग्रहणं भविष्यति, किम् लृकारकरणेन ? नैवम्-यथा विशिना साहचर्यं तथा हन्तिनाऽपि साहचर्यशङ्का स्यात्, ततश्चादादेरेव ग्रहः स्यात्" इति [ प्रकृतसूत्रलघुन्यासे ], तत्रेदमुच्यते-त्रयो हि न्याया अत्रावसरप्राप्ताः-*अदाद्यनदाद्योरनदादेरेव* इति, *निरनुबन्धग्रहणे न सानुबन्धस्य* इति,*साहचर्यात् सदृशस्यैव* इति च । तत्र *निरनुबन्धग्रहण*न्यायश्च *निरनुबन्धग्रहणे सामान्येन* इति न्यायान्तरेण सत्प्रतिपक्षोऽतो दुर्बलः । *साहचर्य*न्यायेन च पूर्वसाहचर्यस्य परसाहचर्यस्य च प्राप्तौ परसाहचर्यस्य बलवत्त्वेन *अदाद्यनदाद्योरनदादेरेव* इति न्यायानुगृहीतत्वेन चानदादेरेव ग्रहणसिद्धावनुबन्धोच्चारणस्यैतन्न्यायानित्यत्वेऽसत्त्वे वा तात्पर्ये बाधाभावात् । यद्यपि शास्त्रकृद्भिरयं न्यायस्तात्पर्येण क्वचिद् गृहीतः परं कण्ठतः प्रायः क्वापि न पठित इति नवीनाः । तथाहि-'एतन्न्यायस्थानीय*लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य* इतिन्यायव्याख्यावसरे प्रोक्तं नागेशभट्टेन-"ध्वनिता चेयं परिभाषा "यस्य विभाषा" [पा० सू० ७. २. १५.] इत्यत्र भाष्ये । तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य 'यदुपाधेर्विभाषा तदुपाधेर्निषेधो "विभाषा गम-हन-विद-विशाम्" [पा० सू० ७. २. ६८.] इति शविकरणस्य ग्रहणं लुग्विकरणश्चायम्' इत्युक्तम् । तत्र चो हेतौ, यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं, न तु हन्तिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः । अत एव परिभाषायां 'लुग्विकरणस्यैव' इति नोक्तम् । कण्ठतस्तु एषा भाष्ये क्वापि न पठिता । "गाति-स्था०" [पा० सू० २. ४. ७७.] इति सूत्रे "पिबतेर्ग्रहणं कर्तव्यम्" इति वार्तिककृता, 'सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणम्' इति भाष्यकृता चोक्तम्" इति । तथा च व्यवहारेणायं न्यायः परिगृहीतः, किन्तु स्वरूपेण क्वचिदपि नोक्त इति प्रतिभाति । कैयटेन च "स्वरति-सूति-सूयति-धूञूदितो वा" [पा० सू० ७. २. ४४.] इति सूत्रे स्पष्टमुक्तोऽयं न्यायः, तत्र चास्य ज्ञापकमपि तेनोक्तम्-"सूङिति वक्तव्ये सूति-सूयत्योः पृथग्ग्रहणमस्य ज्ञापकम्" इति । तथा च यथा तत्र ज्ञापकसिद्धोऽयं न्यायः स्वीक्रियते तथा स्वमते किमपि दृढतरं ज्ञापकं न प्रतिभाति, वृत्त्युक्तज्ञापकस्य चान्याशयत्वसंभवस्योक्तत्वात् पूर्वोक्तकैयटग्रन्थस्यापि साहचर्यपरिभाषामाश्रित्य तत्रैव नागेशेन खण्डितत्वात् तन्मतेऽपि ज्ञापकत्वस्य दुरुपपादत्वाच्च । तथा चाचार्यप्रवृत्तिरेवैतन्न्यायमूलमिति ॥ ३ ॥

## *प्राकरणिका-ऽप्राकरणिकयोः प्राकरणिकस्यैव* ॥ ४ ॥

सि०—प्राकरणिकं प्रकरणप्राप्तम्, प्रकरणेनाधिकारेण चरतीत्यर्थे "चरति" [६. ४. ११.] इतीकणि प्राकरणिकशब्दव्युत्पत्तेः । तथा च प्राकरणिकपदेन स्वप्रकरणपठितप्रत्ययादीह ग्राह्यम्, अन्याधिकारोक्तं तु प्रकृते विवक्षितापेक्षयाऽप्राकरणिकम् । तत्र यत्रोभयोर्ग्रहणं सम्भाव्येत, तत्र प्राकरणिकस्यैव ग्रहणं न्याय्यमिति न्यायार्थः । अस्य च ज्ञापकम्—"द्रेरञणोऽप्राच्यभर्गादेः" [६. १. १२३.] इति सूत्रे "शकादिभ्यो द्रेर्लुप्" [६. १. १२०.] इति सूत्राद् द्रेरित्यनुवर्त्तमानेऽपि पुनर्द्रेर्ग्रहणम्, तद्धि एतन्न्यायबलात् प्राकरणिकस्यैव द्रेरञणोऽनेन लुब् भविष्यति नाप्राकरणिकस्येति शङ्कया द्विविधस्यापि द्रेरञणो लुब् भवेदित्येवमर्थं कृतम्, एतन्न्यायाभावे तु बाधकाभावादुभयविधस्यापि द्रेर्ग्रहणे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अयमाशयः-"द्रेरञणोऽप्राच्यभर्गादेः" [६. १. १२३.] इति सूत्रमपत्याधिकारेऽस्ति, तत्र प्रकरणे च "राष्ट्र-क्षत्रियात् सरूपाद् राजा-ऽपत्ये द्रिरञ्" [६. १. ११४.] इति द्रिसंज्ञा विधीयते, अन्या च द्रिसंज्ञा "पूगादमुख्यकाञ्ञो द्रिः" [७. ३. ६०.] इत्यायुधजीविसङ्घाधिकारेऽस्ति, सा चापत्याधिकारस्थसूत्रस्याप्राकरणिकी, अधिकारद्वयस्यापि अञणप्रत्यया अत्र सूत्रे ग्राह्याः, तच्च विना विशेषप्रयत्नं न संभवति, तदर्थं द्रेरिति पुनः पठ्यते । तेन मद्रस्यापत्यं स्त्रीत्यर्थे "पुरु-मगध-कलिङ्ग-शूरमस-द्विस्वरादण्" [६. १. ११६.] इत्यनेनाणि तस्य च द्रिसंज्ञकत्वात् "द्रेरञणः" [६. १. १२३.] इति लुपि *प्रत्ययलोपेऽपि तल्लक्षणं कार्यं विज्ञायते* इति

न्यायाल्लुप्तेऽप्यणि "अणञेय०" [ २. ४. २०. ] इति ङ्यां मद्रीति सिध्यति, अत्रापत्यार्थस्य स्वप्रकरणपठितद्रिसंज्ञकस्य यथा "द्रेरञणः" [ ६. १. १२३. ] इति लुब् भवति तथैव पर्शुर्नाम काचित्, तस्या अपत्यानि बहवो माणवका इत्यर्थे "पुरुमगध०" [ ६. १. ११६. ] इत्यणि "शकादिभ्यो द्रेः" [ ६. १. १२०. ] इति तल्लुपि च पर्शवः, तेषां स्त्रीत्वविशिष्टः शस्त्रजीविसंघ इत्यर्थविवक्षायां "पर्श्वादेरण्" [ ७. ३. ६६. ] इति द्रिसंज्ञकेऽणि तस्यापि "द्रेरञणः" [ ६. १. १२३. ] इत्येव लुब् भवति, ततश्च "उतोऽप्राणिनश्चायुरज्वादिभ्य ऊङ्" [ २. ४. ७३. ] इत्यूङि पर्शूरिति भवति, एतदर्थमेव पुनर्द्रेर्ग्रहणम्, तच्चैतन्न्यायाभावे सार्थक्यमप्रतिपद्यमानं न्यायमिमं सूचयतीति सुस्थम्। एतन्न्यायफलं च "इञ इतः" [ २. ४. ७१. ] इति ङीविधायकसूत्रे "यञो डायन् च वा" [ २. ४. ६७. ] इत्यतः प्रारब्धात् तद्धिताधिकारात् तद्धितीय एवेञ् ग्राह्यः प्रकृतन्यायात्, न तु "प्रश्नाख्याने वेञ्" [ ५. ३. ११९. ] इति कृदधिकारस्थसूत्रोक्तः, तेन सुतङ्गमेन निर्वृत्ता "सुतङ्गमादेः०" [ ६. २. ८५. ] इतीञि-'सौतङ्गमी' इत्यत्र ङीर्भवति, किन्तु 'चैत्र ! कां त्वं कारिमकार्षीः' इति प्रश्ने 'सर्वां कारिमकार्षम्' इत्याख्याने च प्रयुक्तात् "प्रश्नाख्याने वेञ्" [ ५. ३. ११९. ] इति कृत्सूत्रोक्तेञन्तात् कारिशब्दान्न भवति, प्रकृतन्यायेन कृदधिकारस्थस्य ङीविधायकसूत्रे ग्रहणवारणात्। अस्य च ज्ञापकसिद्धत्वेनासार्वत्रिकत्वात् क्वचिद्प्रवृत्तिरपीति जॄष्धातोरद्यतनीदिप्रत्यये 'अजरत्' इत्यादौ "ॠदिच्छ्वि" [ ३. ४. ६५. ] इत्याख्यातप्रकरणस्थेऽङ्प्रत्यये कृते तत्र यथा "ॠवर्णदृशोऽङि" [ ४. ३. ७. ] इति गुणो भवति तथैव जरणं जरेत्यादौ "षितोऽङ्" [ ५. ३. १०७. ] इति कृत्प्रकरणस्थेऽङि कृतेऽपि भवतीति। यद्यप्याख्यातकृत्प्रकरणयोरुभयोरपि धातोरेव सम्बन्धित्वेन तयोरैक्यमेवेत्यपि मतमस्ति, तथापि तत्र तत्र शास्त्रकृद्भिर्भेदेनाऽपि व्यवहारस्य कृतत्वाद् भेदपक्षमादायैवानित्यत्वफलदानमिति विज्ञेयम्। विवेचितमेतद् विस्तरतो विवरणे ॥ ४ ॥

*प्राकरणिका-ऽप्राकरणिकयोः प्राकरणिकस्यैव* ॥४॥

**त०**—एक एव शब्दोऽनेकेष्वर्थेषु शक्तश्चेत्? कुत्र तेन कोऽर्थो ग्राह्य इत्यस्य विषयस्य निर्णयाय सामान्यतः "संयोगादयः" कारणत्वेन गृहीता अभियुक्तैः, तथाहि-तेषां वचनम्—

"संयोगो विप्रयोगश्च, साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं, शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः, कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे, विशेषस्मृतिहेतवः ॥" इति,

शब्दार्थस्य-शब्दवाच्यस्यार्थस्य, अनवच्छेदे-अनिर्णये सति, संयोगादयः, विशेषस्य-अन्यतराद्यर्थस्य, स्मृतौ-समुपस्थापकत्वे, हेतवः-कारणानि, इति तदीयः संक्षिप्तोऽर्थः; एतेषामुदाहरणानि च तत्र तत्राकरग्रन्थेषु दत्तानि। तथा च प्रकरणस्याभिधानियामकत्वमिति सकलविचारसम्मतः पन्थाः, तमेवाश्रित्य स्वमतेऽप्ययं न्यायः पठ्यते। तथा च स्वतः सिद्धोऽयमर्थ इति नात्र ज्ञापकापेक्षा, तथापि "द्रेरञणः" [ ६. १. १२३. ] इति सूत्रस्थबृहद्वृत्तिग्रन्थे-"द्रावनुवर्त्तमाने पुनर्द्रिग्रहणं भिन्नप्रकरणस्यापि द्रेर्लुबर्थम्" इति लेखनस्य प्रकृतन्यायसूचकत्वमिति मन्यन्ते प्राचीनाः। केचित् तु-सामान्यनियमोऽयं 'प्रकरणस्यार्थविशेषनियामकत्वम्' इति, तदाश्रित्यैव वृत्तिग्रन्थस्यापि साङ्गत्यसिद्धौ न पृथङ् न्यायकल्पनावश्यकत्वमित्याहुः। अस्यानित्यत्वफलं च प्राचां रीत्या "ॠवर्णदृशोऽङि" [ ४. ३. ७. ] इति सूत्रे कृत्प्रकरणाऽऽख्यातप्रकरणयोरुभयोरपि पठितस्याङो ग्रहणेन जरेत्यादिसिद्धिरित्युक्तम्, तदपि नातिसमीचीनम्-पूर्वोक्तरीत्याऽस्य ज्ञापकसिद्धत्वाभावेनानित्यत्वाभावात्। न च तर्हि कथमुभयोरङोर्ग्रहणं गुणविधायके सूत्रे इति वाच्यम्, अस्य न्यायस्य शब्दार्थनिर्णायकत्वस्यैव युक्तत्वेन, अत्र च नार्थत्वेनाङो ग्रहणमपि तु स्वरूपेणेति दोषाभावात्। अयमाशयः-यत्र हि 'अनेन शब्देन कोऽर्थो ग्राह्यः' इति संशयस्तत्र प्रकरणानुसारमर्थनिर्णयः कर्तव्य इत्यत्रैवास्य न्यायस्य तात्पर्यम्, अत्र च अङ् स्वरूपेणैव गृह्यते न तु तद्वाचकपदान्तरेणेति प्रकृतन्यायप्रसराभावः। 'द्रि'संज्ञादौ तु प्रत्ययविशेषास्तच्छब्देन प्रतिपाद्यन्त इति तेषां भेदाद् भवति संशय इह के द्रिसंज्ञया ग्राह्या इति तत्र निर्णयाय प्रवृत्तोऽयं न्यायः पुनर्द्रिग्रहणेन वारित आचार्येणेति साध्वेव, इह च तद्भिन्नविषयत्वात्। किञ्च अङ्विधायकसूत्रयोरुभयोर्धातोरेवाङ्विधायकत्वेन समानप्रकरणत्वं स्पष्टमेव। प्रथमाङ्विधायकसूत्रसमीपे गुणविधायकसूत्रं च पठितमपि न, किन्तु पृथगेव गुणप्रकरणे, इति नेह द्रिसंज्ञावत् प्राकरणिकत्वशङ्काऽपि। एवञ्च संख्या-संभद्रान्मातुर्मातुर्च" [ ६. १. ६६. ] इति सूत्रन्यासोक्तमाख्यातकृत्प्रकरणयोरैक्यमपि सम्यगेव। स्वकथितन्यायानित्यत्वफलस्य समर्थनाय तस्य पक्षान्तरत्वसाधनप्रयासोऽपि नावश्यक इति युक्तं प्रतिभाति। किञ्च न तत्रत्यन्यासग्रन्थेन 'आख्यातकृत्प्रकरणयोर्भेदपक्षः साधयितुं शक्यते, तथाहि-तत्रत्यग्रन्थः-"नन्वत्र ञ्णिति तद्धिते "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति वृद्धिः कथं न भवति? उच्यते-तक्रकौण्डिन्यन्यायेन ञ्णिति तद्धिते "वृद्धिः स्वरे०" [ ७. ४. १. ] इत्यादेरेव वृद्धिः, न तु "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इत्यन्तस्य, यद्वा आख्यात-कृत्प्रकरणमेकमेव, तत्साहचर्यादत्र प्रकरणे यत् सूत्रं तद्विहितप्रत्ययो गृह्यते, अयं तु भिन्नप्रकरणविहितः" इति। अस्यायमाशयः-परिच्छेत्तृवाचकयोर्मात्रोरभिप्रायेण द्वयो-

मातुरपत्यमित्यर्थे "सम्बन्धिनां सम्बन्धे" इति [७. ४. १२१.] इति परिभाषाबलात् "संख्या-संभद्रान्मातुर्मातुर्च" [६. १. ६६.] इति सूत्रे जननीवाचकस्य मातृशब्दस्यैव ग्रहणेनात्र तदग्राह्या "ङसोऽपत्ये" [६. १. २८.] इत्यनेनैवाणि आदिस्वरस्य "वृद्धिः स्वरेष्वादेः" [७. ४. १.] इति वृद्धौ द्वैमात्र इति रूपं भवतीति बृहद्वृत्तिग्रन्थतात्पर्यम्, तत्रादिस्वरवृद्धौ सत्यामपि "नामिनोऽकलि-हलेः" [४. ३. ५१.] इत्यन्तस्वरस्यापि वृद्धिः कुतो नेत्युक्तमिति शङ्का, तत्र परत्वादादिवृद्धौ कृतायां *सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव* इति न पुनरन्त्यवृद्धिरिति यदि कश्चिदुत्तरं ब्रूयात्, स चासम्भवे एव "स्पर्धे" [७. ४. ११९.] इति सूत्रेण बाधः, इह चास्ति सम्भवो यत्-स्वरेष्वादेरन्त्यस्य च वृद्धिः स्यादिति प्रतिवक्तव्यः स्यादिति, सत्यपि सम्भवे बाधसाधकेन तक्रकौण्डिन्यन्यायेन तदुत्तरं दत्तम् । स च न्यायः *सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्याय* इति । अयं च सत्यपि सम्भवे बाधं बोधयति। तथाहि-ब्राह्मणेषु कौण्डिन्योऽपि समाविष्ट एव, तस्मै च दधिदानोत्तरं ततः पश्चाद् वा तक्रदाने सम्भवत्यपि तक्रदानं दधिदानस्य बाधकमिति स्वीक्रियते, तथा प्रकृतेऽपि आदिस्वरवृद्धेः पूर्वं पश्चाद् वाऽन्त्यस्वरस्यापि वृद्धिर्यद्यपि सम्भवति तथाऽप्यादिवृद्ध्याऽन्त्यवृद्धिर्बाध्यते इति । यश्च माठर-कौण्डिन्यन्यायमाश्रित्यासम्भवे एव बाधकत्वमिति स्वीकरोति तन्मतेन समाधानान्तरमाह-यद्वेत्यादिना, माठरकौण्डिन्यन्यायस्वरूपं च *सर्वे ब्राह्मणा भोज्यन्ताम्, माठर-कौण्डिन्यौ परिवेविषाताम्* इति, अत्र ब्राह्मणान्तर्गतयोर्माठर-कौण्डिन्ययोर्भोजनं परिवेषणेन बाध्यते, नहि सम्भवति यत्-माठर-कौण्डिन्यौ परिवेषणं भोजनं च सह कुरुत इति, तथा चासम्भव एव बाध्यबाधकभाव इत्याग्रहग्रहिलानां सन्तोषायेह पक्षान्तरमाश्रितं-यद्वेति । अस्यायमाशयः-"नामिनोऽकलि-हलेः" [४. ३. ५१.] इति सूत्रमाख्यात-कृत्प्रकरणयोर्मध्ये पठ्यते, तयोश्च प्रकरणयोरैक्यमेव । तथा चाख्यातप्रकरणस्थे ञ्णिति प्रत्यये कृत्प्रकरणस्थे च तस्मिन् "नामिनोऽकलि-हलेः" [४. ३. ५१.] इति सूत्रं प्रवर्त्तते, तद्धितप्रकरणं तु दूरव्यवहितमिति तत्प्रकरणस्थे ञ्णिति प्रत्यये तत् सूत्रं न प्रवर्त्तिष्यत इति । अयं च ग्रन्थः प्रकृते तद्धितप्रकरणेन सह "नामिनोऽकलि-हलेः" [४. ३. ५१.] इति सूत्रप्रकरणस्य पार्थक्यमात्रं बोधयितुं प्रवृत्तो न तु तयोः प्रकरणस्यैक्यमिह बोधयितुं तस्य तात्पर्यम्, तयोरैक्योपादानं तु "नामिनोऽकलि-हलेः" [४. ३. ५१.] इति सूत्रस्योभयोः प्रकरणयोः प्रवृत्तत्वाद् भिन्नप्रकरणेऽपि तत्प्रवृत्तिरिति सम्भवच्छङ्कापनोदनमात्रपरम् । तथा च नानेन ग्रन्थेन न्यासकारस्योभयपक्षे सम्मतिः प्रदर्शयितुं शक्यते, प्रकृतग्रन्थस्य परस्परविरुद्धलौकिक[पूर्वप्रदर्शित]न्यायद्वयनिमित्तकफलभेदमात्रवारणाय प्रवृत्तत्वात् । अथवा तक्रकौण्डिन्यन्यायस्य येन नाप्राप्तविषये प्रवृत्तिः, न चान्तवृद्ध्या सहादिवृद्धेर्येन नाप्राप्तविषयत्वमिति तस्य न्यायस्य नात्र प्रवृत्तिरिति शङ्कया वा न्यासकारेण पक्षान्तरमाश्रितमिति स्वीकरणीयम् । अयमाशयः-नाप्राप्ते [अवश्यप्राप्ते] दधिदाने विधीयमानं तक्रदानं दधिदानस्य बाधकं भवति *येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति* इति न्यायात्, अत्र चान्त्यवृद्धौ प्राप्तायामप्राप्तायां चादिवृद्धिविधानम्-यथा सुश्रुतोऽपत्यं सौश्रुत इति, अत्र हि नान्त्यवृद्धिर्न वोपान्त्यवृद्धिः प्राप्तेति येन नाप्राप्तविषयत्वाभावान्न तन्न्यायप्रवृत्तिरिति प्रकरणभेदमाश्रित्य समाधानमपि सम्यगेव । स्पष्टश्चायमर्थो "वृद्धिः स्वरेष्वादेः" [७. ४. १.] इति सूत्रस्थानीये "तद्धितेष्वचामादेः" [पा० सू० ७. २. ११७.] इति सूत्रे महाभाष्ये, तथा हि-"तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणवृद्धिप्रतिषेधः" [आक्षेपवार्तिकम्], तद्धितेष्वचामादिवृद्धावन्त्योपधालक्षणाया वृद्धेः प्रतिषेधो वक्तव्यः-'क्रौष्टः, ग्रागतः' इति । ननु चाचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते, कथमन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्? असति खल्वपि संभवे बाधनं भवति । अस्ति च सम्भवो यदुभयं स्यात् । "लोकविज्ञानात् सिद्धम्" [वार्तिकम्] सत्यपि सम्भवे बाधनं भवति, तद्यथा-सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्यायेति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति, एवमिहापि सत्यपि सम्भवेऽचामादिवृद्धिरन्त्योपधालक्षणां वृद्धिं बाधिष्यते । विषम उपन्यासः, नाप्राप्ते दधिदाने तक्रदानमारभ्यते, तत्प्राप्ते आरभ्यमाणं बाधकं भविष्यति, इह पुनरप्राप्तायामन्त्योपधालक्षणायां वृद्धावचामादिवृद्धिरारभ्यते-'सुश्रुत्सौश्रुत' इति । "पुष्करसद्ग्रहणाद्वा" [वार्तिकम्], अथवा यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽचामादिवृद्धावन्त्योपधालक्षणा वृद्धिर्न भवतीति" इति । अयमाशयः-यत्र तद्धितञ्णित्प्रत्ययनिमित्तका आदिस्वरस्य वृद्धिः क्रियते तत्र तन्निमित्तैव क्वचिदन्त्यस्य "नामिनोऽकलि-हलेः" [४. ३. ५१.] इति वृद्धिः प्राप्नोति, यथा-क्रोष्टुरपत्यं 'क्रौष्टः' इति; क्वचिदुपान्त्यलक्षणा वृद्धिः "ञ्णिति" [४. ३. ५०] इति च वृद्धिः प्राप्नोति । [अत्रेदं स्मरणीयम्-पाणिनीयतन्त्रे इयमुपान्त्यवृद्धिर्धातोरेव न विधीयते, किन्तु सामान्येन; स्वमते तु तत्र प्रकरणे धातोरेव प्रकृतत्वात् तथा विवरणं कृतम्, तदग्रिमे सूत्रे च नाम्नोऽपि वृद्धिरेष्टव्यैव, अन्यथा कलि-हलिवर्जनं व्यर्थमापद्येत, ततश्च तत्पूर्वसूत्रस्यापि नाम्नि प्रवृत्तौ बाधकाभावः, नामसु तद्धितवृत्त्यादावादिवृद्ध्या बाधितत्वान्न प्रवृत्तिरिति त्वन्यत्] इत्थं च यथालक्ष्यमुभयोरपि वृद्ध्योः प्राप्त्या तत्प्रति-

षेधार्थमुपायः कर्त्तव्य इति शङ्कायां—विशेषविहिता पराचादिवृद्धिरन्त्योपान्त्यवृद्धी बाधिष्यते इति चेदुत्तरं दीयेत, तर्हि भिन्नविषयत्वादेव बाध्यबाधकभावाभाव इति प्रत्युत्तरं स्यात् । यदि एकस्यैव स्थानिनः सर्वा वृद्धयः प्राप्ताः स्युस्तर्हि बाध्यबाधकभावः सम्भवेदपि, इह चाद्यन्तोपान्त्यानां यथायथं स्थानित्वमिति विषयभेदादसंभवाभावेन नास्ति बाध्यबाधकभाव इति । अथ च लोके यथा तक्रकौण्डिन्यन्यायादिविषये सत्यपि संभवे विषयभेदेऽपि बाध्यबाधकभाव इष्यते तथाऽत्रापि सत्यपि संभवे बाध्यबाधकभावोऽस्त्विति शङ्क्यते चेत्? तदापि न निस्तारः, *येन नाप्राप्ते*न्यायेन हि यस्य शास्त्रस्य स्वविषयेऽवश्यमेव प्राप्तिस्तदेव शास्त्रं तेन बाध्यते इति निर्णीयते; अत्र च सुश्रुतोऽपत्यं सौश्रुत इत्यादावन्त्योपान्त्यलक्षणयोर्वृद्ध्योरप्राप्तावप्यादिवृद्धिर्विधीयत इति नात्र येन नाप्राप्तत्वमिति नास्ति बाध्यबाधकभावः । तत श्च 'कौष्ट्रः, जागतः' इत्यादिलक्ष्येष्वन्त्योपान्त्यवृद्धिर्दुर्वारैवेति चेत्? अत्र प्रतिविधानम्, तथाहि—अनुशतिकादिगणे उभयपदादिस्वरवृद्धिविधानार्थं पुष्करसच्छब्दः पठ्यते, तत्फलं तु पुष्करसदोऽपत्यं पौष्करसादिरित्यत्र बाह्वादित्वादिञि उभयपदादिस्वरस्य वृद्धिरेव । यदि चादिवृद्धौ सत्यामपीहोपान्त्यवृद्धिः स्यात् तदाऽपि गणपाठफलं सिद्धमेवेति वृथैव तत्र गणे तस्य पाठः स्यादिति स व्यर्थीभूतोऽसति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायाद् 'आदिवृद्धिरन्त्योपधा-[ अन्त्योपान्त्य ]लक्षणां वृद्धिं बाधते' इति ज्ञापयति । तथा च ज्ञापकादेव 'कौष्ट्र' इत्यादौ नान्त्योपान्त्यवृद्धिरिति स्वमते चैनयोर्वृद्ध्योर्भिन्नप्रकरणत्वेनैव समाधानं कर्तुं शक्यमिति ज्ञापकाश्रयणं न कृतम् । एवं च येन नाप्राप्तविषयत्वाभावादेव तक्रकौण्डिन्यन्यायेन समाधानेऽरुचौ सत्यां यद्वाख्यात-कृत्प्रकरणमेकमेवेति समाधानान्तरं न्यासकारेण दत्तं, न तु भेदपक्षं भेदाभेदपक्षं चाश्रित्येति तेन रूपेण तदाशयवर्णनमत्र न युक्तमिति विस्तराद् विरमामः । वस्तुतस्तु "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति सूत्रस्य नाख्यातप्रकरणमात्रविषयत्वम्, आख्यातमिति हि त्याद्यन्तस्य [ तिङन्तरस्य ] संज्ञा, तत्राख्यातप्रकरणविषयत्वमित्यस्य त्यादि[ तिङ् ]सम्बन्धिञ्णित्प्रत्ययविषयत्वमित्यर्थः स्यात्, न च तन्मात्रविषयत्वमस्य, तथा सति कलि-हलिवर्जनं वृथैव स्यात्, कलिं हलिं वाऽचक्षण इत्यर्थे "णिज् बहुलं नाम्नः०" [ ३. ४. ५२. ] इति णिचि तस्य त्यादित्वा[तिङ्त्वा]-भावात् तत्र वृद्धेरप्राप्तौ तद्वर्जनं वृथैव स्यात् । न च मास्तु णिचस्त्यादि[ तिङ् ]प्रत्ययत्वं , किन्तु त्याद्य[तिङ]न्तप्रकरणमध्यपतितत्वं त्वस्त्येवेति वाच्यम्, एवं सति "संयोगात्" [ ३. १. ५२. ] इत्यादिसूत्राणां त्यादिप्रकरणपठितानामुभयत्र प्रकरणे प्रवृत्तिर्न स्यात् । किञ्च नेदृशे विषये प्रकृतन्यायस्य प्रसरः, यतश्च यत्र शब्दो वाच्यत्वेनानेकमर्थमुपस्थापयति तत्र कोऽर्थो ग्राह्य इति संशयेऽयं न्यायो निर्णायकः; इह च न ञ्णितीति पदं वाच्यत्वेन 'अञ् अण्' इत्यादिप्रत्ययानुपस्थापयति, किन्तु ञित्त्वेन णित्त्वेन च लिङ्गेनेत्यस्य रूढपदत्वाभावादेतद्विषये प्रकृतन्यायस्य न प्रवृत्तिरिति । एवं सति 'द्वैमात्रः, कौष्ट्रः, जागतः' इत्यादिषु वृद्धिवारणाय कोऽभ्युपाय इति चेत्? अत्रोच्यते—स्वमतेऽपि "अनुशतिकादीनाम्" [ ७. ४. २७. ] इति पूर्वोत्तरपदयोरादिस्वरवृद्धिविधायकसूत्रस्थे गणपाठे पुष्करसच्छब्दपाठस्य 'आदिवृद्धिरन्त्योपान्त्यवृद्धी बाधते' इति ज्ञापनार्थत्वस्य संग्राह्यत्वेन दोषाभावात् । न च स्वमते "ञ्णिति" [ ४. ३. ५०. ] इति सूत्रे धातोरुपान्त्यस्यातो वृद्धिरिति व्याख्याततत्वेन पुष्करसदोऽपत्यं—पौष्करसादिरित्यत्र तस्याप्राप्त्योत्तरपदादिस्वरवृद्धेरप्राप्त्या कथं पाठस्य वैयर्थ्यमित्याशङ्कनीयम्, यतो धातोरिति तत्र न प्रकृतं, किन्तु पूर्वसूत्राणां प्रायो धातुविषयत्वेन धातोरित्यापातायातमिति तस्य धातुमात्रविषयत्वकल्पनानौचित्यात् । उक्तं च धातोरित्यंशस्य परिशेषलब्धत्वमिति सति संभवे नामविषयेऽपि प्रवृत्तौ बाधकाभावाच्च ॥ ४ ॥

## *निरनुबन्धग्रहणे सामान्येन* ॥ ५ ॥

**सि०**—यत् किञ्चित् वस्तु, निरनुबन्धं—कार्यविशेषहेतुभूतानुबन्धशून्यं, तत्सहितं च प्रयुज्यते निर्दिश्यते वा शास्त्रे, तस्य निरनुबन्धस्योच्चारणे—तथाभूतमेवोच्चार्य विधीयमाने कार्ये, सामान्येन—तद्रूपं समानतया यत्र वर्त्तते तेन रूपेणैव, ग्रहणम् । तथा चानुबन्धस्याप्रयोगितया तद्रहितं रूपमुभयत्र—निरनुबन्धोच्चारिते सानुबन्धोच्चारिते च तिष्ठतीति तयोरुभयोर्ग्रहणं भवति तत्रेति भावः । अस्य च सूचकम्—"अरोः सुपि रः" [ १. ३. ५७. ] इति रुसम्बन्धिभिन्नस्य रस्य सुपि परे विसर्गबाधनाय रविधायके सूत्रे रुवर्जनमेव, तद्धि "रः पदान्ते विसर्गस्तयोः" [ १. ३. ५३. ] इति सूत्रेण निरनुबन्धस्य रेफस्य स्थाने विधीयमानस्य विसर्गस्य रुसम्बन्धिरेफे प्रवृत्त्यभावेन व्यर्थं सत् प्रकृतन्यायं ज्ञापयति । तथा च तत्रोभयो रेफयोर्ग्रहणे प्रसक्ते रुसम्बन्धिभिन्नरेफस्य सुपि विसर्गवारणाय तस्य स्वांशे चारितार्थ्यम् । फलं च 'स्वः' इत्यत्र प्राकृतस्य [ स्वाभाविकस्य ] रेफस्य, 'कः' इत्यादौ रुसम्बन्धिनश्च तस्य विसर्गसिद्धिः । अयं च न्यायोऽसार्वत्रिकः *निरनुबन्धग्रहणे न सानुबन्धस्य* इति पूर्वव्याख्यातन्यायेन सत्प्रतिपक्षत्वात् ॥५॥

## *निरनुबन्धग्रहणे सामान्येन* ॥ ५ ॥

**त०**—वस्तुतस्तु *निरनुबन्धग्रहणे न सानुबन्धस्य* इति न्यायस्य पूर्वं ज्ञापकसिद्धस्य वर्णितत्वेन तत्प्रतिपक्षभूतोऽयं न्यायो नात्मानं लब्धुमीष्टे, एकस्मिन्नेव विषये विरुद्धस्य न्यायद्वयस्यानौ-

चित्यात्। ननु चोभयोरपि ज्ञापकसिद्धत्वेन कस्यचिन्नित्यमित्यत्र विनिगमकाभावेनोभयोरपि स्वीकार आवश्यक इति वाच्यम्, एकस्य ज्ञापकेन पूर्वं स्थिरीकृतेऽर्थे तद्विरुद्धेनान्येन तदनित्यत्वज्ञापनस्यैवौचित्यात्। अत एव च "अरोः सुपि रः" [ १. ३. ५७. ] इति सूत्रे न्याससारसमुद्धारे-"स्वर्जनाल्लाक्षणिकन्यायो निरनुबन्धन्यायश्चानित्यः" इत्येवोक्तम्, न तु स्वर्जनस्य प्रकृतन्यायज्ञापकत्वमुक्तम्, तथा च वृत्तौ प्रकृतन्यायज्ञापनकथनं प्राचां वृत्तिकृतामनुरोधेनैव। केचित्तु-'रु'शब्दे उकारस्यानुबन्धत्वं नास्ति, कार्यार्थमेवानुबन्धकरणस्य शास्त्रकारशैलीसिद्धत्वेन 'रु'शब्दे उकारस्य कार्यान्तराभावादुच्चारणमात्रार्थत्वेन तस्यानुबन्धत्वाभावात् प्रकृतन्यायविषयत्वाभावः, इति वदन्ति, तन्न चारु-"अतोऽति रोरुः" [ १. ३. २०. ] "रोर्यः" [ १. ३. २६. ] इत्यादौ विशेषणार्थत्वस्य संभवेनोच्चारणमात्रार्थत्वाभावात्। उच्चारणार्थस्याऽपि प्रयोगाभावेनाप्रयोगित्वरूपेत्त्व[ इत्संज्ञकत्व ]सत्त्वादित्संज्ञायोग्यत्वरूपानुबन्धत्वाव्याघातात्। उकारस्य विशेषणत्वफलं च 'प्रातरत्र' इत्यादौ 'भ्रातर्गच्छ' इत्यादौ चोत्वस्याभावः। तथा च "रः पदान्ते०" [ १. ३. ५३. ] इत्यत्र निरनुबन्धग्रहणपरिभाषायाः प्राप्तिर्न वारयितुं शक्यत इति प्रकृतज्ञापकेन तदनित्यत्वज्ञापनमावश्यकमेवेति ॥ ५ ॥

## ※साहचर्यात् सदृशस्यैव※ ॥ ६ ॥

सि०—सह-अव्यभिचरितं यथा स्यात् तथा, चरति-व्यवहरतीति सहचरस्तस्य भावः साहचर्यमव्यभिचरितत्वं, तस्मात्, सदृशस्य-स्वनिरूपितसादृश्यवत एव ग्रहणं, न तु विसदृशस्येति न्यायार्थः। एकत्र निर्दिष्टेषु पदार्थेषु कश्चन सर्वथा न व्यभिचरति, कश्चन च केनचिदंशेन व्यभिचरत्यपि, तत्र यः सर्वथा व्यभिचारहीनः स एव ग्राह्य इत्याशयः। स्वरूपतोऽविशेषात् तादृशस्यान्यस्यापि ग्रहणे प्रसक्ते सहचरितव्यक्तिसादृश्यवत एव ग्रहणमिति नियमार्थोऽयं न्यायः। अयं च न्यायो लोकसिद्ध एव, लोकेऽपि हि 'राम-लक्ष्मणौ' इत्युक्ते लक्ष्मणसाहचर्याद् दशरथापत्यत्वेन सदृशस्य दाशरथेरेव रामस्य ग्रहणम्, 'राम-कृष्णौ' इत्युक्ते च कृष्णसहचरितस्य बलरामस्यैव ग्रहणम्, अतश्च नात्र ज्ञापकापेक्षा। यत् त्वविशेषोक्तिरेवैतन्न्यायबोधिकेति, तन्न चारु-अविशेषोक्तेः सामान्यग्रहणसाधकत्वेऽपि विशेषग्रहणसाधकत्वे व्यापाराभावात्। फलं त्वस्य "क्त्वा-तुमम्" [ १. १. ३५. ] इत्यव्ययसंज्ञाविधायकसूत्रे कृत्प्रत्यययोः क्त्वा-तुमोः साहचर्यात् कृत एवाम्प्रत्ययस्य ग्रहणं, न तु स्यादिप्रत्ययस्याम इति।

"अस्य चास्थिरत्वम्, तेन "वत्तस्याम्" [ १. १. ३४. ] इत्यत्र न केवलं वत्तसिसाहचर्यात्तद्धितस्यैवामो ग्रहणम्, अपि तु परोक्षास्थानिकस्यामोऽपि, तेनेदमनयोरतिशयेन किमित्यर्थे किंशब्दात् "द्वयोर्विभज्ये च तरप्" [ ७. ३. ६. ] इत्यनेन तरपि "किन्त्याद्येऽव्ययादसत्वे तयोरन्तस्याम्" [ ७. ३. ८. ] इति तरपोऽन्तस्यामादेशे च तस्य यथाऽव्ययत्वेन ततो विहितस्य सेः "अव्ययस्य" [ ३. २. ७. ] इति लुब् भवति तथैव 'पाचयांच ुषा' इत्यत्र परोक्षास्थानजस्याप्यामोऽग्रे टाग्रा लुप् सिद्धः" इति प्राञ्चः ॥

"वत्तस्याम्" [ १. १. ३४. ] इति सूत्रस्थबृहन्न्यासन्यासग्रन्थयोस्तु प्रकृतन्यायसहकारेणैव परोक्षास्थानिकस्यामो ग्रहणं स्यादेरामोऽग्रहणं च साधितम्। तथाहि-बृहन्न्यासे-'आम्' इति षष्ठीबहुवचनस्य, तद्धितस्य, परोक्षास्थाननिष्पन्नस्य चाविशेषात् त्रयाणां ग्रहणं प्राप्नोति, द्वयोरत्र चेष्यते, अतिव्याप्त्युपहतत्वादलक्षणमेतदित्याह-वत्तसीत्यादि। अयमर्थः-वत्-तसी अविभक्ती, तत्साहचर्यादामोऽप्यविभक्तेरेव ग्रहणम्, 'दरिद्राञ्चकृवद्भिः' इत्यत्र कसुस्थाननिष्पन्नस्य पचतितरामित्यस्य च ग्रहणं, तावेव हि तयोर्वत्तस्योरविभक्तित्वेन हितौ, अत आह-तद्धितस्येत्यादि, रूपापेक्षया त्वेकवचनम्। अत एव "किन्त्याद्येऽव्यय०" [ ७. ३. ८. ] [ इत्यादिना ] इत्यत्रादिशब्द आम्विधायकसूत्रपरिग्रहार्थ उक्तः।" इति। न्यासेऽपि 'वत्तसि'-साहचर्याद् 'आम्' इति तद्धितस्य "किन्त्याद्येऽव्यया०" [ ७. ३. ८. ] इत्यादिना विहितस्यामो ग्रहणम्" इति बृहद्वृत्तिग्रन्थव्याख्यानावसरे "तद्धितस्येत्युपलक्षणम्, ततः "धातोरनेकस्वरात्०" [ ३. ४. ४६. ] इत्यादिना विहितस्यामो ग्रहणम्, तेन पाचयाञ्चकृवेत्यादौ टालोपे पदत्वादनुस्वारसिद्धिः। न चोपलक्षणात् षष्ठीबहुवचनस्यापि ग्रहणं किं न स्यादिति वाच्यम्, यतो य आम् आमेव भवति स गृह्यते, अयं तु नाम् साम् वा भवतीति" समाधाय "यद्वा वत्तसी अविभक्ती तत्साहचर्यादामोऽप्यविभक्तेरेव ग्रहणम्, ततो दरिद्राञ्चकृवद्भिरित्यत्र कसुस्थाननिष्पन्नस्य पचतितरामित्यत्र "किन्त्याद्येऽव्यया०" [ ७. ३. ८. ] इति विहितस्य च ग्रहणं भवति, यत एतावेव तयोर्वत्तस्योरविभक्तित्वेन हितौ इति व्युत्पत्त्या तद्धितावित्यभिधीयेते" इति बृहन्न्यासोक्तरीत्यैवोभयग्रहणं साधितम्। एतयोर्ग्रन्थयोश्चायमाशयः-बृहद्वृत्तिग्रन्थे तद्धितशब्दस्तत्सदृशपरः, सादृश्यं चाविभक्तित्वेन, सदृशग्राहित्वं च साहचर्यनिबन्धनमिति स्पष्टमेवैतन्न्यायोपयोगः कृत इति प्रतीयते। ततश्च तत्र परोक्षास्थाननिष्पन्नस्यामो ग्रहणसिद्ध्यर्थमेतन्न्यायानित्यत्वाश्रयणं प्राचां वृत्तिकृतां किंमूलकमिति नोपलभामहे। न च बृहद्वृत्तिग्रन्थस्य'तद्धित'-शब्दस्य तद्धितत्वेन प्रसिद्धप्रत्ययपरत्वाश्रयणे परोक्षास्थाननिष्पन्नस्य ग्रहणं न स्यादित्यर्थमनित्यत्वाश्रयणमावश्यकमेवेति वाच्यम्, तथा सति षष्ठीबहुवचनग्रहणवारणायोपायान्तर-

रणस्यावश्यकतया वरमाचार्यवर्णितरीतेरेवाश्रयणमित्यदोषात्। तथा चैतदर्थं न्यायानित्यत्वाश्रयणमनावश्यकमित्येव युक्तः पन्थाः ॥ ६ ॥

## *साहचर्यात् सदृशस्यैव* ॥ ६ ॥

त०—अयं च न्यायो लोकसिद्ध एवेति वृत्तौ सूचितम्। लोकेऽपि हि साहचर्यस्यान्यतरार्थपरिग्रहकारणत्वं प्रसिद्धम्।

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥" [वाक्यपदीये]

इति हरिकारिकोक्तरीत्या शब्दार्थस्य संदेहे सति संयोगादिमध्यपतितस्य साहचर्यस्य स्वसदृशग्राहकतया निर्णायकत्वं प्रसिद्धम्। तत्र साहचर्यपदं च सादृश्यार्थत्वेन व्याख्यातम्, सहचरणं सदृशयोरेव, तयोरेव च सहविवक्षेति तयोरेव सहप्रयोगः। तथा च परस्परसादृश्येनापि युगपदेव परस्परसदृशग्रहणम्; यथा–वृत्त्युदाहृते 'रामलक्ष्मणौ' इत्यादौ रामसादृश्येन लक्ष्मणो दाशरथिर्न तु दुर्योधनात्मजः, लक्ष्मणसादृश्येन च रामो दाशरथिरेव न जामदग्न्य इति युगपदेव नियमनमिति न परस्पराश्रयत्वम्। बोधितश्च सदृशानामेव प्रयोगे सहभावः "पञ्चम्यपाङ्परिभिः" [पा० सू० २. ३. १०.] इति सूत्रस्थपरिशब्दो वर्जनार्थ एवेति साधनावसरे "कर्मप्रवचनीययुक्ते द्वितीया" [पा० सू० २. ३. ८.] इति सूत्रे महाभाष्ये—"यद्यपि तावदयं परिर्दृष्टापचारो वर्जने चावर्जने च। अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव, तस्य कोऽन्यो द्वितीयः सहायो भवितुमर्हति–अन्यदतो वर्जनार्थात्। तद्यथा–अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः" इति। तथा च सहप्रयोगः सहभावो वा सदृशानामेवेति सादृश्येन सदृशस्यैव ग्रहणमिति "क्त्वातुमम्" [१. १. ३५.] इत्यादौ क्त्वादिना सादृश्यात् कृत एवामो ग्रहणम्, "वत्तस्याम्" [१. १. ३४.] इत्यादावविभक्तित्वेन सादृश्याच्च षष्ठीबहुवचनस्य न ग्रहणम्, तद्धितत्वेन प्रसिद्धप्रत्ययत्वेन सादृश्यग्रहणे च 'पातयांचकुषा' इत्यादौ कसोः स्थाने "धातोरनेकस्वरात्०" [३. ४. ४६.] इति विहितस्यामो ग्रहणं न स्यादिति तस्यानव्ययत्वेन ततः परस्याष्टाविभक्तेर्लुप् न स्यात्। अथाव्ययसंज्ञाया विभक्तिलोपमात्रफलत्वे मास्तु सा, यतोऽस्य नामत्वाभावेन विभक्तेरप्राप्तिरेव, ततश्चाव्ययसंज्ञया नामत्वं प्रसाध्य विभक्तिरुत्पाद्या, तस्याश्च पुनर्लुब् विधेयेति मास्तु विभक्तिः, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति चेत्? अत्रोच्यते–विभक्त्युत्पत्तौ तल्लोपे च पदत्वेन "तौ मुमो०" [१. ३. १४.] इत्यनुस्वारानुनासिकयोः पाक्षिकयोरेव फलत्वात्, अन्यथा पदत्वाभावेन "म्नां धुड्वर्गे०" [१. ३. ३९.] इत्यनेनान्त्य एव स्यादिति रूपद्वयं यदिष्यते तन्न स्यात्। ननु चाव्ययत्वाभावे स्याद्यन्तत्वनिमित्तं पदत्वं मास्तु, कसोः परोक्षावद्भावेन त्याद्यन्तत्वनिमित्तं पदत्वं तु भविष्यत्येवेति व्यर्थमेवाव्ययसंज्ञार्थमिह प्रयत्नकरणमिति चेत्? न–कसोः परोक्षावद्भावेऽपि तत्स्थानिकस्यामः परोक्षावद्भावाभावात्, अतिदेशप्राप्तधर्मस्यादेशे सुलभत्वेऽपीह "वेत्तेः कित्" [३. ४. ५१.] इति किद्विधानेन परोक्षास्थाननिष्पन्नस्यामः परोक्षावद्भावाभावसाधनात्, अन्यथा "वेत्तेरवित्" [३. ४. ५१.] इति न्यासे आमोऽवित्करणादवित्परोक्षायाश्च "इन्ध्यसंयोगात् परोक्षा किद्वत्" [४. ३. २१.] इत्यनेन कित्त्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। तथा च व्यर्थीभूतं कित्त्वविधानमामः परोक्षावद्भावो नास्तीति ज्ञापयति, ततश्च त्यादिविभक्त्यन्तनिमित्तं पातयामीत्यस्य पदत्वं न स्यादिति तदर्थमस्याव्ययत्वमावश्यकमेव। आमः परोक्षावद्भावाभावज्ञापनाच्च विदाञ्चकारेत्यादौ "द्विर्धातुः परोक्षा०" [४. १. १.] इति द्वित्वमपि विदो नाभूत्। यद्यपि "वेत्तेरवित्" इति करणे मात्रागौरवं प्रक्रियागौरवं चास्ति, तथाहि–'कित्' इत्यस्योच्चारणे मात्रात्रयम्, 'अवित्' इत्यस्योच्चारणे च चतस्रो मात्राः, किञ्च, प्रथममामोऽवित्त्वमेतेन साध्यं, ततश्च तस्य कित्त्वमिति साक्षात्किद्विधानापेक्षया प्रक्रियागौरवमपि, तथापि विदाञ्चकारेत्यादौ विदो गुणाभावसाधनरूपफलमुखतया न्यासान्तरस्य तत्राप्रस्तुतत्वेन लाघवगौरवचर्याया अनुत्थानात्। कृते च प्रकृते न्यासे ज्ञापिते चास्मिन्नर्थे यदि लाघवमपि भवति तर्हि सोऽपि गुण एव। किञ्च परोक्षाविषयेऽवित्किच्छब्दौ पर्यायाविव, यतोऽवित्परोक्षाया "इन्ध्यसंयोगात् परोक्षा किद्वत्" [४. ३. २१.] इति किद्भावो निश्चित एव। तथा च पर्यायशब्दानां लाघवगौरवचर्चायाः शास्त्रकारशैलीविरुद्धत्वादिहापि तच्चर्चाया अभाव एव। यच्च प्रक्रियागौरवमुद्भावितं तदपि न–न ह्यविद्भावे कृते तस्य कित्त्वविधानस्य कर्त्तव्यता तिष्ठति, शास्त्रेण ["इन्ध्यसंयोगात् परोक्षा किद्वत्" इत्यनेन] एकत्र स्वविषयसंस्कारे स्थिरीकृते विनैव व्यापारान्तरमन्यत्र तद्बोधोदयात्। पर्यायशब्दानां लाघव-गौरवचर्याया अनादरादेव 'क्लीब'शब्दस्य 'नपुंसक'शब्दस्य च तत्र तत्र पर्यायेण व्यवहार आचार्यैः कृतः, यथा–"क्लीबे" [२. ४. ९७.] इति, "नपुंसकस्य शिः" [१. ४. ५५.] इति च, ततश्चेदृशे विषये न लाघवगौरवचर्चा। "अवित्'करणापेक्षया कित्करणे लाघवं यथोक्तार्थबोधनेऽपि समर्थं, तथैव "अनवर्णा नामी" [१. १. ६.] इत्यत्र संज्ञाया एकवचनान्तत्वोपन्यासेन संज्ञ्यपेक्षया वचनभेदं कुर्वताऽऽचार्येणान्योऽर्थोऽपि बोधितः, स चायं–"यत्र नामिनः कार्यं क्रियते तत्र यदा कार्यात् कार्यी स्वरो न्यूनः स्यात् तदैव नामिसंज्ञा-

प्रवृत्तिर्नान्यथा, तेन ग्लायति म्लायतीत्यादौ न गुणः। अत एव तत्र [ धातुपाठे ] आह–ऐकारोपदेशवलान्नामित्वाभावाद् गुणाभाव इति। न च सन्ध्यक्षराणां द्विमात्रत्वात् प्रयत्नाधिक्याभावादाधिक्याभाव इति वाच्यम्, यतो विश्लिष्टावर्णत्वेनाधिकयोरैकारौकारयोः प्रश्लिष्टावर्णत्वेन न्यून एकार ओकारश्च भवति"। अयमाशयः–एकारोच्चारणेऽकारस्य विश्लेषो नावगम्यते, तदुच्चारणे च विवृततर एवास्य प्रयत्नः, ऐकारोच्चारणे तु अकारो विश्लिष्ट एव प्रतिभासते, अतिविवृततरश्चास्य प्रयत्न इति तयोर्मात्रैक्येऽप्येकारापेक्षया ऐकारस्याधिक्यमिति। ननु यदि कार्यिस्वरस्य न्यूनत्व एव नामिसंज्ञा ततो नयतीत्यादौ गुणो न स्यात्, तत्रेकारस्य द्विमात्रत्वेन गुणेन एकारेऽपि द्विमात्रत्वस्यैव लाभेन साम्यादिति चेत्? न–तत्र समत्वेऽपि एकारस्य प्रश्लिष्टावर्णत्वेनाधिक्यं गुणस्येति संज्ञाप्रवृत्तौ बाधकाभावात्। न चैतदर्थं न वचनभेदस्यावश्यकता, किन्तु ग्लैधात्वादवैकारोपदेशवलाद् गुणस्य बाध इति वाच्यम्, आयादीनामपि बाधप्रसङ्गात्। वस्तुतस्तु–आयादेशं प्रति ऐकारस्य निमित्तत्वात् तस्य बाधो न युक्तिमान् *यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमस्ति न स विधिर्बाध्यते* इति न्यायात्, तथापि स्वस्वरूपविघातमात्ररूपबाधपक्षमादाय तथोक्तमिति न दोषः। अत एव बाऽरुचेर्बृहन्न्यासे पक्षान्तरमुक्तम्–"यद्वा अविद्यमानमवर्णं येष्विवर्णवर्जनात् सन्ध्यक्षरेषु त्ववर्णभागस्यापि सद्भावात् नामिसंज्ञाभावः" इति। इत्थं व्याख्यायां यद्यपि "नाम्यन्तस्था०" [ २. ३. १५. ] "न नाम्येकास्वरात्०" [ ३. २. ९. ] "व्यञ्जनादेर्नाम्युपान्त्याद्वा" [ २. ३. ८७. ] इत्यादिषु नामिसंज्ञाप्रदेशेषु सन्ध्यक्षरस्याग्रहणाद् दोषो भवति तथापि प्रथमे–नामिनोऽन्ते तिष्ठन्तीति व्युत्पत्त्या नाम्यन्तस्थाः सन्ध्यक्षराण्युच्यन्ते, द्वितीयेऽपि–नाम्येकस्वरादित्यस्यावृत्त्या नामी एकदेशेन स्वरो यस्येति व्याख्यानात् सन्ध्यक्षराणां संग्रहः, तृतीयेऽपि–प्रवेपणमित्यादौ सन्ध्यक्षरेषु पूर्वभागस्यावर्णत्वात्, उत्तरभागस्य च नामिरूपत्वान्नाम्युपान्त्यत्वाक्षतिरिति समाधेयमिति स्पष्टम् "अवर्णो नामी" [ १. १. ६. ] इति सूत्रे बृहन्न्यासे। प्रकृतमनुसरामः–तथा च "वेत्तेः कित्" [ ३. ४. ५१ ] इत्यत्राविदः परोक्षायाः किद्वद्भावविधायकसूत्रव्यापकतासिद्ध्यर्थं "वेत्तेरवित्" इति न्यासस्य न्यायप्राप्तत्वेऽपि परोक्षास्थानिकस्यामो न परोक्षावद्भाव इत्यर्थज्ञापनद्वारा विदाञ्चकारेत्यादौ द्वित्वाभावादिसाधनाय क्रियमाणो "वेत्तेः कित्" इति न्यासो लघुभूतो न च प्रक्रियागौरवमिति तेन रूपेण [ परोक्षावद्भावेन ] प्रातयामित्यस्य त्याद्यन्तत्वनिमित्तकपदत्वासंभावनायाऽनुस्वारान्त्यवर्णसहितरूपद्वयलाभार्थमव्ययसंज्ञासिद्ध्येऽविभक्तित्वेन सादृश्यमादाय परोक्षास्थानिकस्यामो ग्रहणायेह [ "वत्तस्याम्" १. १. ३४. इति सूत्रे ] प्रकृतन्यायप्रवृत्तिरेव बृहन्न्यासादिग्रन्थानुकूलेति तदर्थं प्रकृतन्यायानित्यत्वाश्रयणमनुचितमिति। यदि च 'पातयांचकृषा, पातयाञ्चकृषा' इतिरूपद्वयस्याभिधाने दृढतरप्रमाण एव तदर्थमयं यत्न आवश्यकः, केचिदन्ये वैयाकरणा अत्राव्ययत्वं नेच्छन्ति, तन्मते च रूपैक्यमेवेति तेन मतेन सहैक्याय स्वमतेऽपि रूपैक्यमेव स्वीकार्यमित्युच्यते तदा "वत्तस्याम्" [ १. १. ३४. ] इति सूत्रे तद्धितत्वेन प्रसिद्धप्रत्ययत्वेन सादृश्यमेव ग्राह्यमिति नास्यामः संग्रहस्यावश्यकत्वम्; किन्तु प्रकृत[ "वत्तस्याम्" ]सूत्रस्थबृहन्न्यासग्रन्थपर्यालोचनया स्वमते रूपद्वयस्यैवेष्टत्वमिति तस्यास्यामः संग्रह आवश्यक एवेति प्रतीयते॥ ६॥

## ※वर्णग्रहणे जातिग्रहणम्※ ॥ ७ ॥

सि०—'प्रत्युच्चारणं शब्दो भिद्यते' इति शब्दविदां सम्प्रदायेऽपि क्वचिच्छ्रूयत एव, महाभाष्ये च यत्र तत्रैतद् दृश्यते, तथा चैक एवाकारः प्रत्युच्चारणं भिन्न एव, ह्रस्वत्वादिकृतभेदवानपि; एवमन्येष्वपि वर्णेषु कालभेदाद् देशभेदाद् गुणभेदाच्च भेद इत्येकस्य कस्यचिद् ग्रहणेऽन्यस्य ग्रहणं न प्राप्नोतीति न्यायोऽयमाश्रीयते। तथा च वर्णग्रहणे–वर्णत्वव्याप्यजात्यवच्छिन्नग्रहणे, जातिग्रहणं–जात्यवच्छिन्नसकलव्यक्तिग्रहणमिति न्यायार्थः। तथा च न कालगुणस्वरादिभेदकृतो वर्णभेदः। अत्र च न ज्ञापकापेक्षा, लोकेऽपि जातिपक्षाश्रयेण व्यवहारस्य प्रसिद्धत्वात्। तथाहि–देवः पूज्य इत्यादौ जातिविवक्षयैव सकलदेवानां पूज्यत्वं सिद्ध्यति। यत् तु प्राञ्चः–एतन्न्यायसाध्यलक्ष्यसिद्ध्यर्थं यत्नान्तराकरणमेव एतन्न्यायज्ञापकमिति, तन्न युक्तम्–आचार्यैर्यत्नाकरणेनैतन्न्यायसाध्यलक्ष्याणामनभिधानस्यैव स्वीकर्त्तव्यत्वापत्तेः। आचार्योच्चारितेन हि केनचिल्लिङ्गेन तदनुक्तोऽपि न्यायादिः शक्यते स्वीकर्त्तुम्, न तु गमकाभावेऽपि स्वतः प्रयोगान् परिकल्प्य, तत्सिद्ध्यर्थं यत्नान्तरानुमानं युक्तम्, उक्तश्चायमर्थः पूर्वमपि। न्यायस्य कण्ठेनानुक्तत्वेऽपि वर्णग्रहणेषु जातिग्रहणरूपन्यायार्थस्याचार्येण "औदन्ताः स्वराः" [ १. १. ४. ] इति सूत्रबृहन्न्यासे स्पष्टमुक्तत्वात्, तथाहि–"इह काल-शब्दव्यवधानाभ्यां भेदो दृष्टः, यथा–असंहितायाम् "अइउवर्णस्यान्ते०" [ १. २. ४१. ] इत्यत्र कालव्यवायः "दृतिः" इत्यादौ शब्दव्यवायस्तकारेण ऋकारेकारयोर्व्यवधानात्। एकत्वे तु व्यवायो न दृष्टः, यथा 'अ' इति केवलोऽकार उच्चार्यते। तथोदात्तानुदात्तस्वरितसानुनासिकनिरनुनासिकादिगुणभेदाच्च भेदः। तस्मात् कालादिव्यवायादुदात्तादिगुणभेदाच्च, नानात्वमकारादीनामपि। [ तथा च ] यद्गुणविशिष्टस्य वर्णसमाम्नाये पाठस्तद्गुणविशि-

ष्टस्य संज्ञाव्यवहारः, तेन भिन्नगुणस्य दण्डाग्रमित्यादौ दीर्घाद्यभावः [ स्यादिति चेद् ? ] उच्यते—जात्याश्रयणाददोषः, तथाहि—उदात्तादिभेदभिन्नेष्वकारादिष्वत्वादिजातेर्विद्यमानत्वात् तेषामपि संज्ञाव्यवहारः" इति । तथा च न्यायस्वरूपमनुच्चारयताऽऽचार्येण न्यायार्थस्य स्वतः सिद्धत्वमिति स्पष्टमेवाऽऽवेदितमिति नात्र ज्ञापकापेक्षा । न्यायफलं तु दण्डाग्रमिति आचार्यसंमतमेव, तत्रापि हि कालभेदादकारस्यान्यत्वे स्वस्वराभावेन दीर्घो न स्यात् । एवं 'जंहम्म्यते' इत्याद्यपि, तथाहि—"मुरतोऽनुनासिकस्य" [ ४. १. ५१. ] इति सूत्रेणाकारपुरःस्थैकानुनासिकान्तस्य 'रंरम्यते' इत्यादौ यथा म्वागमो भवति तथैवाकारपुरःस्थाऽनेकानुनासिकान्तस्य हम्मतेरपि, जातिपक्षाश्रयणेनाकारपुरःस्थानुनासिकत्वजात्यवच्छिन्नान्तस्य म्वागमविधानात् । अत्र "अस्यास्थैर्याच्च क्वचिद् वर्णग्रहणे जातिग्रहणं स्याच्च न स्याच्च, यथा सुपूर्वस्य "घिणुङ् ग्रहणे" इत्यस्योदित्त्वान्नागमे तस्य "तवर्गस्य श्रवर्ग०" [ १. ३. ६०. ] इति णत्वे विण्णूरूपाद्धातोः "मन् वन्०" [ ५. १. १४७. ] इति वनि "वन्याङ् पञ्चमस्य" [ ४. २. ६५. ] इति पञ्चमजातिग्रहणाण्णद्वयस्याप्याङादेशे आङो ङित्त्वेन गुणाभावाद् यत्वे—सुध्यावा इति स्यात्, जातिग्रहणाभवने त्वन्त्यस्यैव णस्य आत्वे तथा च णकारयोगरूपनिमित्तनिवृत्त्या *निमित्ताभावे०* इति न्यायादाद्यणस्य णत्वनिवृत्तौ सुधिनावा इत्यपि स्यात् । अस्थैर्यप्रतिष्ठापकं त्वस्य काष्ठतक्षि कुलानीत्यादौ नागमार्थं "धुटां प्राक्" [ १. ४. ६६. ] इति बहुवचनम्, तथाहि—बहुवचनं किलानेकधुट्रूपजातिग्रहणसिद्ध्यर्थं न्यस्तम्, एतन्न्यायस्थैर्ये च 'धुट्' इत्येकवचनेनापि बहवो धुटो लभ्येरन्निति किमर्थं बहुवचनं प्रयुज्येत ? ।" इति प्राचीनाः । तत्रेदमुच्यते—नायं न्यायो नियमरूपः, तेन वर्णग्रहणे सर्वत्र जातिग्रहणमेवेति नियमानाश्रयणात्, क्वचिद् व्यक्तिपक्षमाश्रित्य प्रयोगनिर्वाहसम्भवान्न्यायानित्यत्वस्याश्रयणे फलाभावात् । यद्यप्यनियमे नियमकारित्वं न्यायानां स्वभावसिद्धं तथापि यत्र लोकव्यवहारसाधारणः शास्त्रव्यवहारस्तत्रलोकवदेव व्यवस्थोचिता । तथाहि—लोके घटो द्रव्यमित्युक्ते घटत्वावच्छिन्नेषु सकलघटेषु द्रव्यत्वं विज्ञायते, घटमानयेत्युक्ते च घटत्वावच्छिन्नसकलघटानयनासम्भवादेका घटव्यक्तिरेवानयनकर्मतां प्राप्नोति, तथा यत्र जातिपक्षेण लक्ष्यसिद्धिस्तत्र जातिपक्षाश्रयणं, यत्र च व्यक्तिपक्षेण लक्ष्यसाधनं तत्र तदाश्रयणमित्यस्याञ्जस्येन सकलार्थसाधकस्य मार्गस्यैवेहाश्रयणमिति न न्यायानित्यत्वं ज्ञापकेन साधनीयम् । अत एवानयोः [ जाति-व्यक्तिपक्षयोः ] शास्त्रे लक्ष्यानुसारं सम्मतत्वमिति "औदन्ताः स्वराः" [ १. १. ४. ] इति सूत्रे बृहन्न्यासेऽपि स्पष्टमुक्तम्, तथाहि—पूर्वप्रदर्शितरीत्या जातिग्रहणेन सकलवर्णसंग्रहमुक्त्वा "यद्येवं दीर्घपाठोऽपि व्यर्थः, सामान्याश्रयणेनैव तस्य लब्धत्वात्, उच्यते—व्यक्तिरप्यस्तीति 'जाति-व्यक्तिपक्षाभ्यां च शास्त्रं प्रवर्त्तते' इति ज्ञापनार्थम्" इति । तथा चोभयोः पक्षयोर्व्यवस्थितत्वमेव शास्त्रप्रवृत्ताविति लभ्यते । यच्चास्य न्यायस्यानित्यत्वे ज्ञापकमुपन्यस्तं "धुटां प्राक्" [ १. ४. ६६. ] इति सूत्रस्थं बहुवचनं, तदपि व्यक्तिपक्षेण प्राप्तस्यैकधुड्व्यक्तेरेव परिग्रहस्य बाधानायात्र जातिपक्ष एवाश्रयितव्य इति बोधनाय चेति तदपि नास्माकं प्रतिकूलम् । ननु च यद्यप्युभयोर्जाति-व्यक्तिपक्षयोर्व्यवस्थितत्वेन शास्त्रप्रक्रियानिर्वाहकत्वं तथाप्येकत्र [ वर्णविषये ] जातिपक्षस्य न्यायेन वा स्वोक्त्या वा लोकदृष्टान्तेन वा ग्रहणे निर्णीते तद्विषय एव पुनर्व्यक्तिपक्षाश्रयणस्यायुक्तत्वं विनाप्रमाणमिति निर्णीतजातिग्रहणविषये वर्णग्रहणे, पुनर्जातिपक्षाश्रयणबोधकप्रकृत[धुटां प्राक्]सूत्रस्थबहुवचनेन तत्पक्षाश्रयणस्य [ जातिपक्षाश्रयणस्य ] अनित्यत्वं बोध्यते इति न्यायानित्यबोधनमेव फलितमिति मदुक्ते न्यायानित्यत्वे को भवताममर्ष इति चेत् ? न—नहि कश्चिदमर्षः, केवलमन्यन्यायसाधारण्येनास्यापि न्यायस्य ज्ञापकमात्रसिद्धत्वम्, अथ च ज्ञापकेनैवास्य स्थानविशेषेऽप्रवृत्तिर्बोधनीयेति न युक्तम्, अस्य न्यायस्य लोकसिद्धार्थानुवादकत्वेन विशिष्टनियमत्वाभावादित्येतावदेव मया बोधनीयम् । प्रकटीभूते चास्मिन्नर्थे यदि लोकव्यवहारतः शास्त्रीयव्यवहारस्य प्रमाणसिद्धत्वव्यवस्थापनाग्रहेण न्यायज्ञापनन्यायानित्यत्वादिज्ञापनादि च व्यवह्रियते, व्यवह्रियतां नाम न कापि क्षतिरिति ॥ अत्र च न्याये 'वर्णग्रहणे' इत्युपलक्षणम्, तेन वर्णसमुदायग्रहणेऽपि क्वचिज्जात्याश्रयणं सिद्धम्, यथा—चोरयन्तं प्रायुक्तेत्यर्थेऽचूचुरदित्यत्र णिजातिराश्रिता । तथाहि—'चोरि' इति स्वार्थण्यन्तात् पुनर्हेतुमण्णावद्यतनीदिप्रत्यये "णि-श्रि०" [ ३. ४. ५८. ] इति ङः, अत्र ङात् पूर्वं णिद्वयमस्तीति यो णिर्ङपरस्तद्व्यवहितपूर्वो धातुर्नास्ति, यश्च णिर्धातोरनन्तरो नासौ ङपरः, परेण णिना व्यवधानादिति "उपान्त्यस्यासमान०" [ ४. २. ३५. ] इत्यादिनोपान्त्यस्य ह्रस्वो न प्राप्नोति, "णेरनिटि" [ ४. ३. ८३. ] इति णिलोपे कृते तु समानलोपित्वं भवतीति तथापि न ह्रस्वप्राप्तिरिति "उपान्त्यस्यासमान०" [ ४. २. ३५. ] इति सूत्रे 'ङपरे णित्वजात्याश्रये परे' इत्यर्थस्याश्रयणान्न दोषो भवति । एवमर्थे समाश्रिते च पूर्वणिलोपे कृतेऽपि नासमानलोपित्वक्षतिर्णित्वजात्याश्रयस्य निमित्तत्वेन ग्रहणात्, णेरन्यस्य समानस्य लोप एव हि समानलोपित्वमाश्रीयते, तच्च यथा—कलिमाख्यदचकलदित्यादौ कलिशब्दसम्बन्धिन इकारस्य "त्यन्त्यस्वरादेः" [ ७. ४.

५३.] इति लोपे समानलोपित्वं भवतीति तत्र "असमानलोपे सन्वल्लघुनि ङे" [४.१.६३.] इति सन्वत्त्वं तन्निमित्तं च "सन्यस्य" [४.१.५९.] इतीत्यादिकं न भवति, प्रकृतेऽचूचुरदित्यत्र च णौ समानलोपित्वाभावेनोपान्त्यह्रस्वत्वे तदनु च द्वित्वे "लघोर्दीर्घोऽस्वरादेः" [४. १. ६४.] इति दीर्घे सति रूपं सिद्ध्यति। केचित् तु—"उपान्त्यस्यासमान०" [४. २. ३५.] इत्यत्रापि वर्णग्रहणमेव, णौ सर्वत्र वर्णमात्रस्यावशिष्यमाणत्वादिति वर्णसमुदायग्रहणाभावेन नोपलक्षणतया वर्णग्रहणस्य व्याख्यानस्येदं फलम्" इति कथयन्ति, तन्न—शास्त्रे समुच्चारितस्य रूपस्य गृह्यमाणत्वव्यवहारौचित्यात्, शास्त्रे च णित्वेन ग्रहणं न तु वर्णत्वेन, णित्वं च न वर्णव्याप्यो धर्मः, यथा—इट्त्वस्य वर्णव्याप्यधर्मत्वाभावेन वर्णविधित्वाभावात् तदाश्रये विधौ स्थानिवद्भावो भवति, अन्यथा 'अग्रहीत्' इत्यत्रेटो दीर्घत्वे तस्य स्थानिवद्भावो न स्यादिति "इट ईति" [४. ३. ७१.] इति सिज्लोपो न स्यात्, परमिडाश्रयस्य सिज्लोपस्य वर्णविधित्वाभावेन स्थानिवद्भावो भवत्येव; एवमेवेहापि णिग्रहणं न वर्णग्रहणम्, अपि तु वर्णसमुदायग्रहणमेवेति वर्णग्रहणपदस्योपलक्षणतया वर्णसमुदायग्रहणपरत्वेऽपि स्वीकृत एवात्र प्रकृतन्यायप्रवृत्तिः संभाव्यते, नान्यथेति, विशेषो विवरणे स्पष्टीकृतः ॥ ७ ॥

## *वर्णग्रहणे जातिग्रहणम्* ॥ ७ ॥

**त०**—*प्रत्यर्थं शब्दनिवेशः* इति न्यायाद् यावन्तः पदार्था विशिष्टगुणक्रियादिविषयतया विवक्षितास्तावतां शब्दानामेकैकार्थबोधनविरतानां प्रयोगः कर्तव्यो भवति। तथा च यत्रानेकगुणवन्तो भिन्नाः पदार्था बुबोधयिषितास्तत्रैकशब्दप्रयोगे कृतेऽनेकेषां पदार्थानां ग्रहणं नैव प्राप्नोति, तथा च यत्र कश्चिद् वर्णमुच्चार्य किमपि कार्यं विधीयते तत्र तस्यैव तद्गुणकस्यैव कार्यं स्यान्नान्येषां देशकालगुणभिन्नानां वर्णानामिति तत्सिद्ध्यर्थमयं न्याय इति वृत्तौ प्रतिपादितम्, प्रदर्शितश्च तत्र वर्णभेदप्रकारः, स्वीकृते चात्र न्याये तज्जातीयसकलवर्णग्रहणसिद्धिः। अयं च न्यायो न नवीनः, किन्तु लोकप्रसिद्धजाति-व्यक्तिपक्षद्वयमध्येऽन्यतरपक्षपरिग्रहमात्रप्रतिपादकः। अयं च जाति-व्यक्तिपदार्थवादीनां संक्षिप्त आशयः-तत्र जातिवादिन आहुः—जातिरेव शब्देन प्रतिपाद्यते व्यक्तीनामानन्त्यात् सम्बन्धग्रहणासम्भवात्। व्यक्तयो हि न केनचिदियत्तया परिच्छेत्तुं शक्यन्ते, तत्परिच्छेदाभावे च तया तया व्यक्त्या सह तस्य तस्य शब्दस्य वाच्यवाचकरूपः सम्बन्धो न ग्रहीतुं शक्यते। सा च जातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते, प्रतिघटव्यक्ति 'घटः, घटः' इत्येवमेकरूपमेव ज्ञानं दृश्यत इति सर्वासु व्यक्तिष्वनुगतं किमपि घटत्वं सामान्यमस्तीति निश्चीयत इति यावत्, तत्र गवादयः शब्दा भिन्नद्रव्यसमवेतां जातिमभिदधति। प्रत्यात्मं भिन्नेषु गवादिव्यक्तिषु समवायेन वर्तमानां गोत्वादिजातिमभिधया वृत्त्या प्रतिपादयन्ति गवादयः शब्दाः, तस्यां जातौ शब्दशक्यत्वेन गृहीतायां तत्समवायात् तदवच्छिन्नं द्रव्यमविनाभावाच्छब्दजन्यप्रतीतिविषयो भवति। शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते, गुणे तु शुक्लं रूपमित्यादौ तत्सम्बन्धात् [तादृशजातिसमवायात्] प्रत्ययः [ज्ञानम्], द्रव्ये 'शुक्लः पटः' इत्यादौ सम्बन्धिसम्बन्धात् [तादृशगुणत्वजातिसम्बन्धिगुणसमवायात्] प्रत्यय उत्पद्यते। संज्ञाशब्दानामप्युत्पत्तिप्रभृत्याविनाशात् पिण्डस्य कौमार-यौवनाद्यवस्थाभेदेऽपि स एवायमित्यभेदप्रत्ययनिमित्ता डित्थत्वादिका जातिरेव वाच्या। क्रियास्वपि 'पठति, पठतः, पठन्ति' इत्यादिष्वभिन्नप्रत्ययस्यानुगमात् तत्रापि जातिरस्ति सैव वाच्या। इत्थं च जाति-गुण-संज्ञा-क्रियेति चतुर्विधशब्दानां जातिरेव वाच्या, व्यक्तिस्तु जात्यविनाभावादाक्षिप्ता कार्यान्वयमती भवतीति। व्यक्तिवादिनस्तु—"शब्दस्य व्यक्तिरेव वाच्या, आनुभविकत्वादनुपपत्तिप्रतिसन्धानं विनापि प्रतीयमानत्वात्, क्रियाद्यन्वयस्य तत्रैव सम्भवात्, तस्या एव प्राधान्येन प्रतीयमानत्वाच्च। जातेस्तु शक्यतावच्छेदकत्वेनाश्रयणान्नानन्त्यादिदोषावकाशः" इत्याद्याहुः। विस्तृतं चैतद् वैयाकरणसिद्धान्तमञ्जूषायां नागेशभट्टेन। तथा च "स्मृतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ" इति न्यायाद् व्याकरणशास्त्रे उभयोरेव पक्षयोः परिग्रहः। तदुक्तं महाभाष्येऽपि पस्पशाह्निके—"किं पुनराकृतिः पदार्थ आहोस्विद् द्रव्यम्? उभयमित्याह, कथं ज्ञायते?, उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" [पा० सू० १. २. ५९.] इत्युच्यते। द्रव्यं पदार्थं मत्वा "सरूपाणाम्" [पा० सू० १. २. ६४.] इत्येकशेष आरभ्यते" इति। अयमाशयः—सकलशास्त्रव्यवस्था एकतरपक्षाश्रयणेन न सिद्ध्यतीति पक्षद्वयाश्रयणमेव युक्तम्। एतच्चाचार्यपाणिनिनाऽपि सूचितमेवोभयपक्षाभिप्रायकसूत्रे कुर्वता, तथाहि—"जात्याख्यायाम्०" [१. २. ५९.] इति प्रथमेन सूत्रेण जातौ वाच्यायां तस्या एकत्वेनैकवचनस्य प्रयोगे प्राप्ते बहुवचनं विधीयते, यथा—'सम्पन्ना व्रीहयः' इति। व्यक्तिमेव पदार्थं यदि मन्येत, तर्हि व्रीहिव्यक्तिबाहुल्याद् बहुवचनं स्वभावत एव सिद्धमिति व्यर्थमेव सूत्रं स्यात्। एवं व्यक्तिं पदार्थं मत्वा एकशेष आरभ्यते, अन्यथा जातौ पदार्थे तस्या एकत्वादेकशब्दस्यैव प्रयोगे सिद्धे एकशेषविधानस्य वैयर्थ्यमेव स्यात्, व्यक्तौ पदार्थे तु व्यक्तीनां बहुत्वेन प्रतिव्यक्ति शब्दप्रयोगः स्यादित्येकशेष आवश्यकः। न च जातिपक्षेऽपि भिन्नार्थानां समानरूपाणामेकशेषार्थं सूत्रस्या-

वश्यकत्वम्, अन्यथा 'अक्षा भुज्यन्तां भज्यन्तां दीव्यन्ताम्' इत्यादौ विभीतक-शकटाङ्ग-देवनाङ्गवाचित्वेनानेकार्थस्याक्षशब्दस्यैकशेषो न स्यादिति वाच्यम्, तावतीष्वक्षत्वजातिषु काञ्चिदेकां जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वे परम्परयाऽत्र व्यक्तिप्रत्यय इति स्वीकारेणादोषात्। जातौ न जातिरिति नैयायिकानां मतं, न वैयाकरणानाम्, अनवस्थाभिया हि जातौ जातिर्न स्वीक्रियते तैः, किन्तु नास्माकं सर्वेषां जातौ जातेरस्तित्वमित्याग्रहः, यत्र क्वचिदवच्छेदकतया साऽवश्यस्वीकरणीया तावतैव विश्रामात्। विस्पष्टं चेदं सर्वं "सरूपाणाम्" [पा० सू० १. २. ६४.] इति सूत्रे भाष्य-कैयटयोः। प्रकृतमनुसरामः– तथा च जाति-व्यक्तिपक्षयोर्व्याकरणशास्त्रे यथालक्ष्यं व्यवस्थितरूपेण स्वीकार इति वर्णग्रहणेषु जातिपक्ष एवाश्रयणीय इति प्रकृतन्यायप्रयोजनम्। उक्तश्च वर्णग्रहणेषु जातिग्रहणपक्षः "अइउण्" [पा० सू० १.] इति सूत्रव्याख्यानावसरे महाभाष्यकृताऽपि। तत्र पूर्वं व्यक्तिवादिमतेनाकारादीनां वर्णानां भेदं संसाध्य पक्षान्तरेण [जातिपक्षेण] समाधानमुक्तम्। इत्थमेव लक्ष्यानुरोधादुभयोः पक्षयोः परिग्रहः, लोकेऽपि तथा दर्शनात्, प्रदर्शितश्च लौकिकव्यवहारे पक्षद्वयपरिग्रहो वृत्तावेव, तथैव विशिष्टवर्णसमुदायरूप'णि'ग्रहणेऽपि जातिपक्षाश्रयणेन निर्वाहः, व्याकरणे सर्वत्रोभयपदार्थत्वस्याचार्यैरुक्तत्वेऽपि यत्र येन पक्षेण लक्ष्यसिद्धिस्तस्यैवाश्रयितुमभिमतत्वात्। एवं चात्रत्यवर्णग्रहणस्य वर्णसमुदायरूपोपलक्षणपरत्वेन व्याख्यानं नावश्यकम्, "जातिव्यक्तिभ्यां च शास्त्रं प्रवर्त्तते" इत्याचार्यवचनेन विनाऽपि तथा–व्याख्यानं 'णि'ग्रहणस्य जातिपरतया व्याख्यातुं शक्यत्वात्। अत एव "उपान्त्यस्यासमान०" [४. २. ३५.] इति सूत्रव्याख्यायां–"वदति स्म वीणा, तां प्रायुक्त परिवादकः, तमप्यन्यः प्रायुक्त–अवीवदद् वीणां परिवादकेनेति तु णिजात्याश्रयणात् सिद्धम्। इत्युक्तं बृहद्वृत्तौ, न तु तत्रास्य न्यायस्य चर्चा कृता। "उपान्त्यस्यासमान०" [४. २. ३५.] इति सूत्रस्थानीये "णौ चङ्युपधाया ह्रस्वः" [पा० सू० ७. ४. १.] इति सूत्रे महाभाष्ये च अवीवदद् वीणां परिवादकेनेत्यादिसिद्धये "णेर्णिच्युपसंख्यानं कर्त्तव्यम्" इति वचनमेवारब्धम्, तत्र जातिपक्षाश्रयणेन निर्वाहश्च नागेशेन खण्डितः, तथाहि–"यत्तु–ण्याकृतिर्निर्देष्टव्येति, तन्न–जातेः पौर्वापर्याभावेन 'चङ्पर' इति विशेषणेनात्र व्यक्तिपक्षस्यैवाश्रयणात्" इति। अयमाशयः–'ङपरे णौ' इत्यस्य 'ङपरे णित्वे' इत्यर्थो जातिपक्षाश्रयणे स्यात्, न च णित्वरूपया जात्या ङस्य पौर्वापर्यं सम्भवतीत्येतादृशस्थले जातिपक्षाश्रयणं न युक्तमिति तदर्थं वचनमेवारब्धव्यम्। अत्र जातिपक्षाश्रयणवादिनस्तु जातिपक्ष इत्यस्य जात्या व्यक्तिनिर्देश इति तज्जातीयानेकव्यक्तिपरिग्रह इति तासां व्यक्तीनां पौर्वापर्यमादाय लक्ष्यसिद्धिरिति वदन्ति ॥ ७ ॥

## *वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते* ॥ ८ ॥

सि०—द्विधा हि वर्णा दृश्यन्ते–समुदायरूपा अवयवरूपाश्च, तत्र समुदायरूपाः सन्ध्यक्षरत्वेन प्रसिद्धाः दीर्घादयश्च; अवयवरूपाश्च प्रत्येकमकारादयो ह्रस्वा व्यञ्जनानि च; एवम्–ऋकार-लृकारावपि वर्णसमुदायत्वेन प्रसिद्धौ, ऋकारमध्ये हि अर्धमात्रो रेफोऽग्रे पश्चाच्च तुरीयः स्वरभागोऽस्ति; एवम्–लृकारेऽपि लकारः स्वरभागश्च। यत्र च द्विमात्रिकौ ॠकार-ॡकारौ तत्र रेफद्वयं लद्वयं च, शिष्टः स्वरांश इति त्वन्यत्। स्पष्टं चैतत् "लृत ऋ-लृ ॠ-ॡभ्यां वा" [१.२.३.] इति सूत्रे बृहद्वृत्तावपि, प्राचां च प्रातिशाख्यकारादीनां मतमेतत्। तत्र ये समुदायरूपा वर्णास्तेषामवयवाः पार्थक्येन गृह्यन्ते न वेति सन्देहे लोकेऽवयवानां पार्थक्येन ग्रहणं न दृष्टमिति तत्सामान्यादिहापि न ग्रहणमिति प्राप्तेऽयं न्याय आरभ्यते, ततश्च समुदायरूपस्य वर्णस्यैकदेशोऽपि वर्णग्रहणेन–स्वतन्त्रवर्णत्वेन गृह्यते इति सिद्धं भवति, तेन प्रलीयमानमित्यादौ यथा "स्वरात्" [२. ३. ८५.] इति प्राप्तं णत्वं "रषृवर्णान्नो ण०" [२. ३. ६३.] इति सूत्रेऽलचटतवर्गेत्यादिपर्युदासान्न भवति तथा प्रक्लृप्यमानं पश्येत्यादावपि लकारव्यवधानमाश्रित्य णत्वं न भवति। अस्य च न्यायस्य प्रक्लृप्यमानमित्यादिलक्ष्यानुरोधादेवाश्रयणम्। किञ्चाग्रे समुदाह्रियमाणबृहद्वृत्तिग्रन्थेनापि क्वचिद् वर्णैकदेशस्य वर्णग्रहणेन ग्रहणमिति विज्ञायते। तथा हि–वर्णैकदेशस्य वर्णग्रहणेन ग्रहणात् 'कृतः कृतवान्' इत्यादौ "रदादमूर्च्छमदः क्तयोर्दस्य च" [४. २. ६९.] इति सूत्रेण तस्य नादेशमुद्भाव्य तत्रोक्तम्–ऋकारैकदेशरूपस्य रेफस्य रेफरूपवर्णग्रहणेनाग्रहणात् क्तस्य तो नत्वं न, "रेफात् परेण स्वरभागेन व्यवधानाद् वा" इति, यदि च क्वापि वर्णैकदेशो वर्णग्रहणेन न गृहीतः स्यात् तर्हि प्रकृते नत्वप्राप्तिशङ्कैव नोदेतीति किं तस्य समाधानेन?। प्रकृतग्रन्थेन च पक्षद्वयेऽपि [वर्णैकदेशस्य वर्णग्रहणेन ग्रहणेऽग्रहणे च] प्रकृते नत्वाभाव उपपादितः। तथाहि–यदि वर्णैकदेशो वर्णग्रहणेन न गृह्यते तर्हि रेफात् परत्वाभावेनैवात्र नत्वाप्राप्तिः, अथ यदि गृह्येत इत्युच्यते तर्हि तदीयः स्वरभागश्च प्रकृतस्वरविलक्षण एव, स च मध्ये पतित इति तथापि न नत्वप्राप्तिरिति। एतेनान्यत्र सति प्रयोजने तस्य [वर्णैकदेशस्य] वर्णग्रहणेन ग्रहणं भवितुं शक्नोतीति स्पष्टमेवावेदितं भवति, "रषृवर्णा०" [२. ३. ६३.] इत्यत्र रेफात् पृथगृकारस्य ग्रहणाच्चाग्रहणपक्षोऽपि सूत्रकाराभि-

मत इत्यायाति । वस्तुतस्तु-अग्रहणपक्ष एव शास्त्रकर्तां विशेषसम्मत इत्यादिकं विवरणे विशेषतो विवेचितम् । यद्यपि "रषाभ्यां नोणः समानपदे" [ पा० सू० ८. ४. १. ] इति सूत्रयता, क्षुभ्नादिगणे णत्वप्रतिषेधार्थं च 'नृनमन' 'तृप्नोति' ग्रहणे कुर्वता च पाणिनिना ग्रहणपक्ष एव सूचितो भवति, तथापि भाष्यकारादीनामग्रहणपक्ष एवेष्ट इति स्पष्टं तत्रैव ॥८॥

***वर्णैकदेशोऽपि वर्णग्रहणेन गृह्यते* ॥ ८ ॥**

त०—अयमर्थः पातञ्जले महाभाष्ये विशदय्य विवेचितः, तत्राग्रहणपक्ष एव च सिद्धान्तितः, तथा हि-प्रत्याहाराह्निके तृतीयमाहेश्वरसूत्रविचारप्रसङ्गे-"इदमत्र विचार्यते-य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद् वा नवा? इति । कुतः पुनरियं विचारणा? इह समुदाया अप्युपदिश्यन्ते, अवयवा अपि, अभ्यतरश्च समुदायेऽवयवः, तद्यथा-वृक्षः प्रचलन् सहावयवैः प्रचलति, तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा।" इति । अयमाशयः-आकारादयो वर्णा वनादिवत् संघातरूपाः, अनादिरूपप्रत्यभिज्ञानात् क्रमेणोपलम्भाच्च, ऐचः [ 'ऐ औ' इत्येतयोः ] प्लुते तदवयवोरिदुतोः प्लुतः "प्लुतावैच इदुतौ" [ पा० सू० ८. २. १०६. ] इति सूत्रेण विहितः, तथा च तेषु प्रागकारः पश्चादिदुताविति विज्ञायते । स्वमतेऽपि "प्रश्नार्चाविचारे०" [ ७. ४. १०२. ] इत्यनेन सन्ध्यक्षरस्यादिभूतोऽकार एव प्लवते । सर्वथा तेषां समुदायरूपत्वम् 'ए ऐ तु कण्ठतालव्यौ' इत्यादिशिक्षावचनैश्च, अवयवक्रमकृत एव स्थानक्रमस्तत्र प्रतीयत इत्यवगन्तव्यम्, न ह्येकस्य वर्णस्य स्थानक्रमेणोत्पत्तिरतः संघातरूपास्ते इति सिद्धम् । एवं ऋकार-लृकारयोरपि रेफ-लकारसदृशावयवौ, तत्र केवलवर्णकार्यमवयवेषु भवति न वेति विचारः । तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेजा[ सन्ध्यक्षरा ]दिसंज्ञां न लभन्ते, अवयवपरे च निर्देशे समुदायो न संज्ञाभाक्, यथा महेश्वरकृतसूत्रेषु हयवरेत्यादावनच्कस्य हलो [ अस्वरस्य व्यञ्जनस्य ] दुःखेनोच्चार्यत्वात् तैः सह निर्दिष्टोऽप्यकारोऽन्यत्र [ "अइउण्" सूत्रादौ ] प्राधान्येन निर्देशात् 'हला'दिसंज्ञां न लभत इति दध्यत्रेत्यादावनच्क एव [ अस्वर' एव यादेशः ] यणादेशः प्रवर्तते, तत्रावयवानामसत्यामप्येजादिसंज्ञायाम् एजादिस्थानीया अयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान् निर्वर्तयन्ति । एवं स्थिते 'अग्न इन्द्रः' इत्यादौ यत्रावयवकार्यं [ दीर्घः ] समुदायकार्यं [ अयादेशः ] च प्राप्नोति, तत्रान्तरङ्गत्वात् तत्र च साक्षादुक्तत्वात् प्रत्यक्षत्वाच्चावयवकार्य[दीर्घ]प्रसङ्गः, अवयवावगतिपूर्वकत्वाद्धि समुदायकार्यस्य समुदायकार्यं बहिरङ्गम् । अयादीनां चावकाशः-अग्न आयाहीति, तत्र यथा-दधीन्द्र इत्यादौ दधिशब्दस्थ-इकारो दीर्घत्वं प्रतिपद्यते, एवमेकारस्थोऽपीकारः 'अग्न इन्द्र' इत्यादौ सवर्णदीर्घत्वं प्रतिपद्येतेति ग्रहणपक्षाशङ्काबीजम् । अग्रहणपक्षाशङ्काबीजं तु-तिरोहितत्वादवयवानां समुदायकार्ये च पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद् वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्त्तनमिति कैयटाशयः । ततः "कश्चात्र विशेषः" इति प्रक्रम्य ग्रहणपक्षस्वीकारे सन्ध्यक्षरे समानाक्षरविधिप्रतिषेधस्य, दीर्घे ह्रस्वाश्रयविधिप्रतिषेधस्य, स्वरद्वयनिमित्तकविधिप्रतिषेधस्य च वक्तव्यत्वमाक्षिप्य, लोकदृष्टान्तेनाव्यपवृक्तावयवनिबन्धनकार्याभावं प्रसाध्य सन्ध्यक्षरेषु चावयवस्य पृथङ्निर्दिष्टावयवान्तरेभ्यो भेदं चाश्रित्य ग्रहणपक्षोक्तदोषोद्धारेण स पक्षः समर्थितः । अयमाशयः-सन्ध्यक्षरादीनामाकारादीनां चावयवा यदि पृथग् गृह्येरँस्तर्हि तत्र समानदीर्घत्वादीनि प्राप्नुवन्ति, यथा-'अग्ने इन्द्रम्, वायो उदकम्, एतयोः समानदीर्घत्वम् । एवम्-आलय्य प्रलय्येत्यादौ ह्रस्वाश्रयतागमः, तथा वाचा तरतीत्यादौ द्विस्वरनिमित्त इकण् च प्राप्नोतीति तेषां प्रतिषेधो वक्तव्य इति दोष आपतित इति न शङ्क्यम्, यतो यथा 'तैलं न विक्रेतव्यम्, घृतं न विक्रेतव्यम्' इति निषेधानुसारं सर्षपेभ्यो गोभ्यश्च पृथग्भूतस्य तैलस्य घृतस्य च विक्रयो न क्रियते, किन्तु तैलसहिताः सर्षपादयो घृतसहिता गावश्च कामं विक्रीयन्ते, तथाऽवयवानां पार्थक्येऽपि समुदायस्थितावयवेष्ववयवाश्रयो विधिर्न भविष्यतीति दोषाभावेन ग्रहणपक्षो निर्दुष्टः । यदि च सन्ध्यक्षरेषु 'ऐ औ' इत्यनयोरकारेकारयोरकारोकारयोर्व्यपवर्गस्य स्पष्टमुपलभ्यमानत्वेन तत्र तदाश्रयकार्यप्रसङ्गशङ्का चेत्? तर्हि सन्ध्यक्षरेषु प्रतीयमानयोरवयवयोः स्वतन्त्रतद्वर्णापेक्षया प्रयत्नभेदात् तयोः पार्थक्येन तत्र समानाश्रयविध्यादीनामभाव इति । तदेवम्-आकारादिस्थस्यावयवस्य भेदेनागृह्यमाणत्वादग्रहणम्, सन्ध्यक्षरेषु प्रयत्नभेदादग्रहणम्, ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद् गृह्यत इति विवेकः । इत्थं ग्रहणपक्षं प्रतिपाद्य-"अथवा पुनर्न गृह्यन्ते" इति समुदायैकदेशानां पार्थक्येनाग्रहणपक्ष उत्थाप्य सिद्धान्तितः । तत्रेदमस्य पक्षस्योत्थानबीजम्-वस्तुतः सन्ध्यक्षरादीनि नरसिंहवद् भिन्नान्येव, यथा-नरसिंहे न नरत्वव्यवहारो न वा सिंहत्वव्यवहारः, किन्तु विलक्षणजातीयत्वव्यवहारः, तथा सन्ध्यक्षरादीनामपि । सादृश्यात् सन्ध्यक्षरावयवेषु अकारादयः प्रत्यभिज्ञाततया पृथगुपलभ्यमाना अपि न सन्त्येव, सन्ध्यक्षराणां चाक्षरसमुदायरूपत्वप्रसिद्धिरपि भ्रान्तिमूलैवेति । तथा च भ्रान्त्यैव ग्रहणपक्षः समुपस्थापितो न तात्त्विक इति भावः । अग्रहणपक्षे च ऋकारस्थस्य रेफस्याऽपि पार्थक्येनाग्रहणे आनृधुरित्यादौ नागमार्थं तत्र ऋकारग्रहणस्य कर्त्तव्यत्वं स्यात्, णत्वार्थं च ऋकारग्रहणं णत्वविधौ कर्त्तव्यं स्यात्, कृपधातो रेफस्य लादेशार्थं च ऋकारग्रहणं कर्त्तव्यं स्यादिति

दोषानुद्भाव्य तत्र तत्र ज्ञापकादिना कार्यं प्रसाध्याग्रहणपक्षः समर्थित इति । स्वमते च—आनृधतुरित्यादौ नागमार्थम् "अनातो नश्चान्त ऋदाद्यशौसंयोगस्य" [ ४. १. ६९. ] इति सूत्रे ऋदादिग्रहणं क्रियत एव, णत्वार्थं च "रषृवर्णात्०" [ २. ३. ६३. ] इति सूत्रे ऋकारग्रहणमपि क्रियते, कृप्धातोर्ऋकारस्य च लृकार एव विधीयते "ऋ-र-लृ-लं कृपोऽकृपीटादिषु" [ २. ३. ९९. ] इति सूत्रेण । तथा चाग्रहणपक्ष एव सूत्रकाराभिमत इति प्रतिभाति । यच्च "रदादमूर्च्छ-मदः" [ ४. १. ६९. ] इति सूत्रवृत्तौ—"रेफात् परेण स्वरभागेन व्यवधानाद् वा" इति समाधानान्तरमुक्तं तदपि ग्रहणवादिमतसाधारण्येन प्रयोगसाधुत्वसमर्थनायैव, न तु तेन ग्रहणपक्ष आचार्यस्य सम्मत इति प्रतिपादयितुं शक्यं, तत्र तत्र ऋकारपाठादिवैयर्थ्यप्रसङ्गात् । तथा च केवलं प्रक्लृप्यमानमित्यत्र णत्वाभावमात्रप्रयोजन एव ग्रहणपक्षपरोऽयं न्यायः समाश्रीयत इति परिशिष्यते । तत्र च स्पष्टत एव लश्रुतेर्विद्यमानत्वाद् विनाऽपि न्यायं णत्वाभावः सेत्स्यत्येवेति नार्थोऽनेन न्यायेन, विशेषस्य कस्यापि विधानाभावादिति प्रतिभाति ॥ ८ ॥

## *तन्मध्यपतितस्तद्ग्रहणेन गृह्यते* ॥ ९ ॥

**सि०**—तदिति प्रकृते गृह्यमाणमुच्यते, तथा च चिकीर्षितविधिशास्त्रगृह्यमाणशब्दमध्यपतितः—शास्त्रेण तन्मध्यपातित्वेन विहितः प्रत्ययादिः, तद्ग्रहणेन—तद्ग्राहकेण शब्देन, गृह्यते—बोध्यते इति न्यायार्थः । यथा नदी काचिद् गङ्गां प्रविष्टा गङ्गाग्रहणेनैव गृह्यते, यथा वा देवदत्तामध्यस्थो गर्भो देवदत्ताग्रहणेनैव गृह्यते लोके तथा शास्त्रेऽपि गृह्यमाणशब्दमध्यपतितो वर्णादिस्तच्छब्देनैव गृह्यते न तु भिन्नत्वेनेति भावः । तथा च धात्वादेर्मध्ये आदिप्रत्यय एकस्मिन्ननेकस्मिन् वा पतिते तस्य धातुत्वादिव्यवहारः स्यादेव, न तु प्रत्ययस्य मध्ये पाते तस्य खण्डितत्वबुद्ध्या कपालदशामापन्नस्य कलशादेर्जलाहरणादाविव धात्वादेर्धातुत्वनिमित्तककार्यादौ योग्यत्वाभावः, अनेन न्यायेन तत्र खण्डितत्वबुद्धेरजननात् । इत्थं च लोकदृष्टान्तेन सिद्धोऽप्ययं न्यायो ज्ञापकेनापि साध्यते, तथाहि—"त्वमहं सिना प्राक् चाकः" [ २. १. १२. ] इति सूत्रे 'प्राक् चाकः' इति वचनमेवास्य न्यायस्य ज्ञापकम् । तथा हि—युष्मदस्मदोः सौ "त्यादि-सर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्" [ ७. ३. २९. ] इत्यकि 'युष्मकद् अस्मकद्' इत्येतयोः स्थाने त्वमहमादेशौ मा भूतामिति प्राक् चाक इत्युच्यते, यदि चाकि सति तयोर्भिन्नत्वेन ग्रहणं स्यात् तदा तयोस्त्वमहमादेशौ स्वत एवाप्राप्ताविति तद्वारणाय 'प्राक् चाकः' इति व्यर्थमेव, व्यर्थीभूतं च तदेतन्न्यायं ज्ञापयति, ज्ञापिते चात्र न्यायेऽक्सहितस्यादेशवारणार्थं 'प्राक् चाकः' इति सार्थकम् । फलं चास्य 'अरुणत्' इत्यत्रैकस्मिन् श्नेऽन्तःपतितेऽपि धातुत्वानपायात् ततः प्रागडागमः; अतृणोदित्यत्र च श्ने इति चान्तःपतितेऽपि तद्ग्रहणेनैव ग्रहणात् ततः पूर्वमडागमश्च सिद्धः, श्नप्रत्ययात् पूर्वं तु नाडागमः कर्तुं शक्यते *कृतेऽन्यस्मिन् धातुकार्ये पश्चाद् वृद्धिस्तद्बाध्योऽट् च* इति न्यायात्; तथा च धातुकार्ये आदौ कृते एवाडागमो न ततः पूर्वमिति तेषु कृतेषु धातोः स्वरूपस्य भज्यमानत्वेन न्यायं विनाऽडागमो न स्यात् । यद्यपि तन्न्यायव्याख्यावसरेऽदः पश्चात् प्रवृत्त्यंशस्यानित्यत्वं वक्ष्यते, तथा च तेनैव पूर्वमडागमे पश्चात् आदौ प्रकृते दोषाभावस्तथापि "त्वमहं सिना०" [ २. १. १२. ] इत्यत्रत्य 'प्राक् चाको'ग्रहणस्य सार्थक्याय ज्ञापितस्यास्य न्यायस्य 'सर्वके' इत्यादौ जश इकारविधानम्, 'उच्चकैः' इत्यादावव्ययसंज्ञाविधानमित्यादिबहुफलसत्त्वेन प्रकृतेऽपि *कृतेऽन्यस्मिन्०* इत्यादिन्यायस्य स्वाभाविकप्रवृत्त्या पूर्वं आदौ कृतेऽपि रूपसिद्ध्यर्थमुदाहरणं न दोषायेति ध्येयम् । विशेषश्च विवरणे स्पष्टः ॥ ९ ॥

## *तन्मध्यपतितस्तद्ग्रहणेन गृह्यते* ॥ ९ ॥

**त०**—अक् तद्धितप्रत्ययः आदय आख्यातविषयाः प्रत्ययाश्च प्रकृतेर्मध्ये भवन्ति, तेषु कृतेषु च प्रकृतेः सखण्डत्वप्रतीत्या तत्र तत्र तत्तच्छब्दैर्विधीयमानानि कार्याणि न स्युः, यथा—'सर्वके' इत्यत्र 'सर्वे' इत्यर्थे [ स्वार्थे ] सर्वशब्दात् "त्यादिसर्वादेः०" [ ७. ३. २९. ] इत्यकि तत्र तद्धितान्तत्वान्नामत्वे पुनर्जसि "जस इः" [ १. ४. ९. ] इति जस इकारादेशो न स्यात्, उच्चैरित्यव्ययादकि—उच्चकैरित्यत्र सेर्लुग् न स्यात्, अरुणदित्यादौ श्ने विहिते धातुरूपापायात् तस्याडागमो न स्यात्, अभिनस्त्वमित्यादौ "सेः स-द्-धां च रुर्वा" [ ४. ३. ७९. ] इति रुश्च न स्यात्, तथा चैषां कार्याणां सिद्ध्यर्थमयं न्यायः स्वीक्रियते । "येन विधिस्तदन्तस्य" [ १. १. ७२. ] इति पाणिनीये सूत्रे महाभाष्ये प्रकरणवशादेषां कार्याणामभावमाशङ्क्य तत्र "तदन्तान्तग्रहणम्" इति समाधाय व्याख्याय च तदन्तान्तपदं प्रकृतसर्वलक्ष्यानुकूलम्, तत्र क्लिष्टकल्पनां काश्चिदालोक्य—"तदेकदेशविज्ञानाद् वा सिद्धम्" इति वार्तिकमुक्तम्, व्याख्यातं च—"तदेकदेशविज्ञानाद् वा पुनः सिद्धमेतत्, तदेकदेशभूतस्तद्ग्रहणेन गृह्यते, तद्यथा—गङ्गा यमुना देवदत्तेति, अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गा-यमुनाग्रहणेन गृह्यते, तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ।" इति । पुनः शङ्कितम्—"विषम उपन्यासः, इह केचिच्छब्दा अकृतपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्याशब्दाः परिमाणशब्दाश्च, पञ्च

सप्तेति, एकेनाप्यपाये न भवन्ति, द्रोणः खारी आढकमिति नैवाधिके भवन्ति, न न्यूने । केचिद् यावदेव तद् भवति तावदेवाहुः–य एते जातिशब्दा गुणशब्दाश्च–तैलं घृतमिति, खार्यामपि भवन्ति द्रोणेऽपि । शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये । इमाश्चापि संज्ञा अक्तपरिमाणानां द्रव्याणां क्रियन्ते, ताः केनाधिकस्य स्युः" इति । अयमाशयः–परिच्छिन्नपरिमाणवाचकाः शब्दा यथा न्यूनेऽधिके च न प्रवर्तन्ते, तथा धात्वादयोऽपि शब्दाः परिच्छिन्न[ नियतानुपूर्वीक ]शब्दमात्रवाचका इति भिन्नानुपूर्वीके शब्दे कथं प्रवृत्ताः स्युः । गङ्गादयश्च शब्दास्तैलादिशब्दवज्जातिप्रवृत्तिनिमित्तका इति न्यूनेऽधिके च प्रवर्तेते, इति न तेन दृष्टान्तेनायमर्थः साधयितुं शक्यते इति । ततः "एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–तदेकदेशभूतं तद्ग्रहणेन गृह्यते" इति । इत्येवं ज्ञापकं स्वमतानुसारमुपन्यस्य न्यायोऽयं साधितः, तत्र तन्मध्यपतितशब्दस्य स्थाने तदेकदेशभूत इति पदं न्यायशरीरे निवेशितमेतावानेव विशेषः । तदेकदेशभूतपदं च तन्मध्यपतितसमानार्थकमिति कैयटादिभिर्व्याख्यातम् । तत्रानेकदोषपरिहाराय तन्मध्यपतितत्वमित्थं परिष्क्रियते–तद्विशिष्टत्वं तन्मध्यपतितत्वं, वैशिष्ट्यं च स्वघटकपूर्वत्वस्वघटकपरत्व-स्वपर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसम्बन्धेन । यथा–अतृणेदित्यादौ श्नादेः धातुविशिष्टत्वमस्ति, यतः स्वं–धातुः, तद्घटको हकारः, तत्पूर्वत्वमप्यस्ति, एवं–स्वं–धातुः, तद्घटकः 'तृ' इति शब्दः, तत्परत्वमप्यस्ति, तथा स्वं–धातुः, तत्पर्याप्ता या मुख्योद्देश्यता–रुधादिगणपठितधातुत्वावच्छिन्ना, तन्निरूपिता विधेयता 'श्न'निष्ठा, तदाश्रयत्वमपि तत्रेति सम्बन्धत्रयेण धातुविशिष्टत्वं तत्रेति तन्मध्यपतितत्वं सिद्धम् । तृतीयसम्बन्धनिवेशेन जनं रातीति 'जनरा' इति शब्दस्यापि मध्यस्थनकारत्वेऽपि जराशब्दत्वं प्रकृतन्यायेन न भवतीति न तस्य जरसादेशः, तत्रत्यनकारस्य स्वपर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वाभावादिति कैयटादिमतम् । नवीनास्तु–तृतीयसम्बन्धस्य किमपि न फलमिति कथयन्ति, 'जनरा' शब्दे हि जराशब्दत्ववारणं यत् तस्य फलमित्युक्तं तन्न चारु, अव्यवहितोत्तरत्वसम्बन्धेन जविशिष्टरात्वस्यैव जरात्वपदार्थतया तस्य प्रकृते कस्मिन्नपि क्षणेऽसत्त्वेन तन्मध्यपतितत्वाभावेन न्यायेन कथमप्यानयनासम्भवात् । अत एव "हु-झल्भ्यो हेर्धिः" [ पा० सू० ६. ४. १००. ] इति सूत्रे महाभाष्ये–'भिन्धकि' इत्यत्राकचि कृते धित्वं न प्राप्नोतीति निर्दिश्यमानहिशब्दाभावादेव शङ्कितं, न तु तन्मध्यपतितत्वाभावात्, अत एव तत्र महाभाष्यव्याख्यावसरे–यद्येवमित्यस्य 'यदि निर्दिश्यमानस्यादेशाः' इत्येव कैयटेनापि व्याख्यातम्, अन्यथा [ तृतीयसम्बन्धनिवेशे ] तन्मध्यपतितत्वाभावादेव धित्वाप्राप्त्या निर्दिश्यमानपरिभाषा[ न्याय ]स्वीकारस्य तच्छङ्काकारणत्वोक्तेरसङ्गत्यापत्तेः । अयमाशयः–भिद्धातोः पञ्चम्या मध्यमपुरुषैकवचने 'भिन्धि' इति रूपं भवति, तत्र हेः "हु-धुड्भ्यो हेर्धिः" [ ४. २. ८३. ] इति धिर्भवति, तत्र 'भिन्द्-हि' इत्यवस्थायां "त्यादि-सर्वादेः०" [ ७. ४. २९. ] इत्यक्, अनेन धित्वं च प्राप्नोति, तत्र परत्वादकि कृते धित्वस्याप्राप्त्या 'भिन्धकि' इति रूपं न स्यादिति भाष्यकृतः शङ्का । तद्बीजं केचिन्निर्दिश्यमानहिशब्दाभावं कथयन्ति, केचित् तन्मध्यपतितत्वाभावम् । तत्र तन्मध्यपतितत्वाभाववादिनां मत एव तन्मध्यपतितत्वलक्षणे तृतीयसम्बन्धनिवेशः, तथा सति "त्यादि-सर्वादेः०" [ ७. ४. २९. ] इत्यादिना त्यादि-सर्वादेरको विधानेन 'भिन्द् हि'पर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयस्यैवाकः सत्त्वेन, 'हि'पर्याप्तमुख्योद्देश्यतानिरूपितविधेयताश्रयत्वाभावेन तन्मध्यपतितन्यायेन 'हकि'शब्दस्य हिशब्दत्वासम्भव इति । अन्ये तु निर्दिश्यमानहिशब्दाभावादेव धित्वं न प्राप्नोतीति भाष्याशये निश्चिते तदर्थं तृतीयसम्बन्धनिवेशक्लेशो व्यर्थ एव । "अज्ञातार्थापेक्षतया बहिरङ्गोऽक्, अन्तरङ्गं धित्वमिति पूर्वं धित्वे ततोऽक्" इति नवीनाः । अथवा "हेर्धिः" इत्युभयोरपि स्थान्यादेशयोरिकार उच्चारणार्थः, वर्णमात्रस्यैव स्थानित्वमादेशत्वं चेति कृतेऽप्यकि हकारस्य धुटः परस्य सत्त्वेन तस्य च हिशब्दावयवत्वस्यापि सत्त्वेन धादेश इति समाधानमुक्तं भाष्ये । एवं च अरुणदित्यादौ *कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये०* इति न्यायस्यानित्यत्वेन प्रवृत्त्या कथंचिद्वारणसंभवेऽपि 'अभिनस्त्वम्' इत्यादौ सत्वार्थमेतन्न्यायाश्रयणस्यावश्यकत्वमेवेति स्वीकृते न्यायेऽरुणदित्यादावपि *कृतेऽन्यस्मिन्०* इति न्यायस्य स्वाभाविक्या प्रवृत्त्या पूर्वं श्नादौ कृते पश्चादेतन्न्यायसहायेनाडागम इति न किमपि हीयते । अस्य च न्यायस्य लोकज्ञापकोभयसिद्धत्वादनित्यत्वं न दृश्यते ॥ ९ ॥

## *आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते* ॥ १० ॥

सि०—आगमाः–आगमत्वेनात्र शास्त्रे प्रसिद्धा अवयवत्वावच्छिन्नविधेयताश्रयत्ववन्तः, यद्गुणीभूताः–यस्य गुणाः–यद्गुणाः, अयद्गुणा यद्गुणा सम्पन्नाः–यद्गुणीभूताः, गुणशब्दो लक्षणयाऽवयवबोधकः, च्विप्रत्ययार्थं आहार्यज्ञानम्, भूधात्वर्थोऽविवक्षितः, क्तप्रत्ययार्थो विषयताश्रयः; तथा च आगमा यन्निरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितविषयताश्रयाः, [ गृह्यन्तेऽनेनेति ग्रहणम्, तस्य ग्रहणं तद्ग्रहणं, तेन तद्ग्रहणेन, ग्रहधात्वर्थो बोधः, जनकत्वमनप्रत्ययार्थः, बोधान्वयिविषयत्वं तत्पदोत्तरषष्ठ्यर्थः, गृह्यन्त इत्यत्रत्यग्रहधात्वर्थबोधान्वयिजन्यत्वं तृतीयार्थः, बोधस्य च विषयताश्रयवर्त-

मानार्थैकदेशविषयतायामन्वयो निरूपितत्वसम्बन्धेन, तथा च ] तन्निरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावन्निरूपितजन्यत्वविशिष्टबोधनिरूपितविषयताश्रया इति न्यायार्थः । 'यद्गुणीभूताः' इति हि 'तद्ग्रहणेन गृह्यन्ते' इति विधेयांशे हेतुभूतम्, यतस्तद्गुणीभूताः तदवयवत्वेन शास्त्रेण बोधिता अतस्तद्ग्रहणेन गृह्यन्ते इति भावः । विशेषो विवरणे स्पष्टः । लोकेऽपि हि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणाच्छास्त्रेऽप्यवयवत्वेन बोधकाद्यन्तशब्दाभ्यां विहितानामवयवत्वस्य सिद्धतया तद्विशिष्टस्यैव तद्ग्रहणेन ग्रहणस्यौचित्यात् । तथा च यत् कार्यं तदवयवरहितस्योक्तं तत् कार्यं तस्मिन्नवयवे सत्यपि तस्य भवतीति फलति । आगमा इत्यत्र बहुवचनं च लक्ष्यबहुत्वानुरोधेन, तथा च यत्रैको द्वौ त्रयो वा आगमाः स्युस्ते सर्वेऽपि तद्ग्रहणेन गृह्यन्ते । तत्रैकागमविशिष्टस्योदाहरणं यथा—प्रण्यपतदिति, अत्राडागमसहितस्यापि पतेः पतिग्रहणेन ग्रहणात् तस्मिन् परे ने "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इति नेर्नो णः सिद्धः । आगमद्वयविशिष्टस्य यथा-प्रण्यपनीपदिति, अत्र प्रनिपूर्वस्य पतेर्यङ्लुपि दिवि "व्यञ्जनादेः०" [ ४. ३. ७८. ] इति तल्लुकि आदावटो न्यश्च्यान्ते विधानादागमद्वयसहितस्यापि पतेः पतिग्रहणेन ग्रहणात् तस्मिन् परे "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इति नो णः सिद्धः । अत्र यद्यपि द्वित्वेन यः पकारोऽधिको जनितस्तस्य च नागमत्वमिति तद्विशिष्टस्य ग्रहणमनेन न्यायेन न संभवतीति कथमत्र णत्वमिति शङ्कितुं शक्यते, तथापि तस्य द्विःप्रयोगमात्रत्वेन स्वाङ्गत्वाव्यतिरेकादग्रिमन्यायेन [*स्वाङ्गमव्यवधायि*इत्यनेन ] ग्रहणान्न दोषः । आगमत्रयविशिष्टस्य यथा–'प्रण्ययंयंसीत्' इति अत्र प्रनिपूर्वस्य यमेर्यङ्लुपि अद्यतनीदिप्रत्ययेऽडागम-स्वागम-सागमेत्यागमत्रयसहितस्यापि यमो धातुत्वेन तस्मिन् परे "अकाखाद्यषान्ते पाठे वा" [ २. ३. ८०. ] इति नेर्नो णः सिद्धः । अस्य न्यायस्यार्थ औचित्यसिद्ध एवेति नात्र ज्ञापकापेक्षा, तथा हि–"अड् धातोरादिर्ह्यस्तन्यां चामाङा" [ ४. ४. २९. ] इत्यादिसूत्रे आदिशब्दः, "अनाम्स्वरे नोऽन्तः" [ १. ४. ६४. ] इत्यादिसूत्रेऽन्तशब्दश्चावयववाचिनौ, तथा चाभ्यां शब्दाभ्यां विधीयमान आगम उद्देशभूतस्य शब्दस्यावयवत्वेन बोध्यते, अवयवस्य च समुदायग्रहणेन ग्रहणमिति सर्वसम्मतमेव, न ह्येकद्वित्रिशाखानामाधिक्ये न्यूनत्वे वा वृक्षो वृक्षत्वं जहाति । अत एवोक्तं पूर्वं यद्गुणीभूता इति कथनं हेतुगर्भमिति । अत एव "क्सुष्मतौ च" [ २. १. १०५. ] इति सूत्रेण सेटः क्सोरुषादेशः सिद्ध्यति, तेन हि यथा बभूवुषीत्यादावनिटः क्सोरुषादेशो भवति तथैव पेचुषीत्यादौ "वस्येकस्वरातः क्सोः" [ ४. ४. ८२. ] इत्यनेनेटि कृते सेटोऽपि क्सोरुषादेशो भवत्येव, अन्यथा तत्रेटः श्रवणप्रसङ्गात् तदर्थं तल्लोपाय सेट एवोषादेशाय वा यत्नः करणीयः स्यात् । न चेटो निमित्तस्य क्सोरुषादेशेनापहारे नैमित्तिकस्येटोऽप्यपहारः स्यात् *निमित्ताभावे नैमित्तिकस्याऽप्यभावः* इति न्यायादिति वाच्यम्, तस्य न्यायस्यानित्यत्वात् स्थानिवद्भावेन निमित्तसद्भावाद् वा । "उपसर्गात् सुग्-सुव-सो-स्तु-स्तु-भोऽट्यप्यद्वित्वे" [ २. ३. ३९. ] इति सूत्रेऽट्यपीति करणेनायं न्यायोऽनित्यः; तेन "वे स्कन्दोऽक्तयोः" [ २. ३. ५१. ] इति षत्वविधायकसूत्रे स्कन्द्ग्रहणेनाट्सहितस्य स्कन्दोऽग्रहणाद् व्यस्कन्ददित्यादौ षत्वं न भवतीति प्रतीयते, तथाहि–एतन्न्यायसत्त्वेऽट्सहितानामपि सुगादीनां तद्ग्रहणेनैव ग्रहणाद् 'अट्यपि' इति व्यर्थमेवेति तेनास्यानित्यत्वे ख्यापिते व्यस्कन्ददित्यत्राडागमसहितस्य तस्य स्कन्द्धातुत्वेनाग्रहणात् षत्वं न भवतीति प्राञ्चः । वस्तुतस्तु 'अट्यपि' इत्यनेनास्य न्यायस्यानित्यत्वं साधयितुं न शक्यते, यतः "उपसर्गात् सुग्०" [ २. ३. ३९. ] इत्यादिसूत्रे उपसर्गात् परत्वं न धातोर्विशेषणमपि तु सकारस्य, तथाहि–उपसर्गस्थान्नाम्यादेः परस्य सुनोत्यादेः सः षो भवतीति तदर्थः, अटि कृते चाकारेण व्यवधानात् सकारस्य नाम्यादेरव्यवहितत्वं नास्तीति षत्वाप्राप्तौ षत्वार्थमट्यपीत्यावश्यकमेव । एवं च व्यस्कन्ददित्यत्र षत्वस्य स्वत एवाप्राप्तिरिति न तदर्थं न्यायानित्यत्वमाश्रयणीयम् । यदि च क्वचिदनित्यत्वाश्रयणमावश्यकमेव तर्हि "अतो म आने" [ ४. ४. ११४. ] इति सूत्रेण मागमविधानसामर्थ्यादेव तस्यानित्यत्वमिति कल्पनीयम् । तथाहि–'शयिष्यमाण' इत्यादौ मागमे विहिते तस्य चाकारग्रहणेनैव ग्रहणात् "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घे शयिष्याण इत्येव प्रयोगः स्यादिति मागमस्य वैयर्थ्यं स्पष्टमेव, व्यर्थं च सत् तदस्य न्यायस्यानित्यत्वं ज्ञापयितुमलम् । न च मागमसामर्थ्याद् दीर्घ एव बाध्यतां, न तु न्यायानित्यत्वं ज्ञाप्यतामिति वाच्यम्, साक्षाच्छास्त्रबाधकल्पनापेक्षया न्यायानित्यत्वकल्पनस्यैवौचित्यात् । *आगमोऽनुपघाती* इत्ययं न्यायोऽपि दृश्यते, स च नैतन्न्यायसमानार्थः, किन्तु यथा आदेशः स्थानिन उपघातं कृत्वैव भवति तथागमो नेत्येव बोधयति । यत् तु–एतन्न्यायसमानार्थत्वेन तन्न्यायव्याख्यानं कृत्वा तस्यात्रैवान्तर्भाव इति प्रोक्तं प्राचीनैः, तन्न चारु–शब्दशक्त्योभयोः समानार्थत्वस्याभानात् । एवं हि प्राचां ग्रन्थः–"आगमोऽनुपघातीत्यपि न्यायोऽस्ति, यथा भवानित्यत्र नागमे कृते अतुरन्तुरूपो जातस्तथापि नागमस्यानुपघातित्वात् "अभ्वादेरत्वसः सौ"

[ १. ४. ९०. ] इत्यनेनात्वन्तलक्षणो दीर्घः स्यादेव, परं सोऽप्यत्रैवान्तर्भावनार्हः समानफलत्वात् । तथाहि–अनुपघातीत्यस्य तावदयमर्थो यत्–स्वव्यवधानहेतुकं यथाप्राप्तकार्याणामुपघातमागमो न करोतीति । यदि चागमानामवयवत्वेनावयविग्रहणेन ग्रहणं सिद्धं तदाऽव्यवधायित्वादनुपघातित्वं स्फुटमेव" इति । अत्रेदमुच्यते–भवानित्यादौ नास्य [*आगमोऽनुपघाती* इति न्यायस्य ] फलम्, यतो नागमविधायक–"ऋदुदितः" [ १. ४. ७०. ] इति सूत्रापेक्षया दीर्घविधायकस्य "अभ्वादेरत्वसः सौ" [ १. ४. ९० ] इत्यस्य परत्वात् पूर्वं दीर्घे कृते पश्चान्नागमे न्यायोपयोगाभावात् । न च कृताकृतप्रसङ्गित्वेन नागमस्य नित्यत्वं नित्यस्य च *परान्नित्यम्* इति न्यायबलेन परापेक्षया बलवत्त्वमिति नागम एव दीर्घात् पूर्वं स्यादिति वाच्यम्, नागमे कृतेऽत्वन्तत्वविघातेन दीर्घस्यानवकाशतया नागमापवादत्वस्य कल्पयितुं शक्यत्वेन, नित्यशास्त्रापेक्षयाऽप्यपवादशास्त्रस्य बलवत्त्वात् पूर्वं दीर्घस्यैव प्रवृत्तेः । आगमस्य व्यवधायकत्वाभावे चानेन न्यायेन साधिते मागमादीनां "अतो म आने" [ ४. ४. ११४. ] इत्यादिसूत्रविहितानां वैयर्थ्यमेव स्यादिति नायं न्यायोऽव्यवधायकत्वसाधकोऽपि तु स्वभावसिद्धमागमानामनुपघातित्वं *मित्रवदागमः* इत्यादिन्यायवदनुवदति, न तु किमपि नवीनं विदधातीति मन्तव्यमिति ॥ १० ॥

### *आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते* ॥ १० ॥

**त०**–अत्र गुणपदं लक्षणयाऽवयवबोधकमित्युक्तं वृत्तौ, तत्र 'लक्षणा' इति कः पदार्थ इति चेत्? येन केनचिच्छब्देन सर्वार्थस्य बोधानुदयेन तत्पदजन्यतदर्थविषयकशाब्दबोधं प्रति तत्पदजन्यतदर्थविषयकवृत्तिज्ञानाधीनतदर्थविषयकोपस्थितिः कारणमिति नियमः स्वीक्रियते, वृत्तिश्च पद-पदार्थयोः सम्बन्धः, स च सम्बन्धो द्विविधः–शक्तिर्लक्षणा च । शक्तिश्च बोधकतारूपा, लक्षणापि यद्यपि वैयाकरणैरप्रसिद्धा शक्तिरेवेति स्वीक्रियते तथापि व्यवहाराय तल्लक्षणभेदः स्वीक्रियत एव । तथा हि–तल्लक्षणमाहुः—

"मुख्यार्थबाधे मुख्यार्थासन्नत्वे लक्ष्यतेऽपरः ।
रूढेः प्रयोजनाद् वार्थो, यत् सोक्ता लक्षणा बुधैः ॥" इति

'गङ्गायां घोषः' इत्यादौ गङ्गापदमुख्यार्थस्य प्रवाहरूपस्य घोषाधारत्वं बाधितमिति तदर्थस्य सामीप्यसम्बन्धेनासन्नस्तीररूपोऽर्थः शैत्य-पावनत्वप्रतीतिरूपप्रयोजनाल्लक्ष्यते इति लक्षणसमन्वयः । रूढेरुदाहरणं च 'कर्मणि कुशलः' इत्यादि, अत्र हि कुशलशब्दस्य कुशग्राहिरूपो मुख्योऽर्थः प्रकृते बाधित इति विवेचकत्वादिसाधर्म्येणासन्नं निपुणत्वरूपमर्थं रूढेर्लक्षयति । प्रकृते च गुणशब्दस्तावत् स्वाश्रयव्यापिषु रूपादिषु रूढः, अत्र च स्वाश्रयैकदेशनिष्ठेष्ववयवेषु प्रयुज्यमानस्य तस्य मुख्यार्थस्य बाधः स्पष्टः, स्वाश्रयसमवायित्वरूपसाधर्म्येण गुणा अवयवानामासन्ना इति तेन सम्बन्धेनागमपदमवयवरूपमर्थं लक्षयति । अत्र चागमरूपाणामवयवानामात्यन्तिकं स्वाश्रयसमवायित्वद्योतनं प्रयोजनम् । यथा घटग्रहणे तद्गतरूपादीनां ग्रहणं स्वभावसिद्धं तथाऽऽगमाश्रयभूतस्य धात्वादेर्ग्रहणे तन्निष्ठानामवयवानामपि गुणवद् ग्रहणं भवत्येवेति गुणपदोक्त्या व्यज्यते । आद्यन्तशब्दाभ्यां विधानाच्चागमानामवयवत्वं स्फुटमिति वृत्तौ प्रतिपादितमेव । कैश्चिदत्र न्यायस्वरूपे एकस्तच्छब्दोऽधिकः पठ्यते । तथाहि–तेषां मते *यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते* इति न्यायस्वरूपम्, युक्तं चैतद्, एवं स्वीकृते हेतुद्वयं लभ्यते–'यतो यस्यागमा अतस्तद्गुणीभूताः, यतश्च तद्गुणीभूता अतस्तद्ग्रहणेन गृह्यन्ते' इति । तथा च तेषां मते वाक्यार्थस्वरूपमिदम्–यतो यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रया अतस्तन्निरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितविषयताश्रयाः, यतस्तथाभूता अतस्तद्विशिष्टास्तन्निरूपितविषयितावद्बोधजनकपदजन्यबोधनिरूपितविषयताश्रया इति । स्वमते च यथा वाक्यार्थस्वरूपं तथा तद्वृत्तौ प्रदर्शितमेव । तन्मते च 'यतस्तथाभूता अतस्तद्विशिष्टाः' इति पदसमुदायोऽध्याह्रियते स्पष्टप्रतिपत्तये । तद्घटकवैशिष्ट्यं च स्वघटितत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व-स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन, सम्बन्धघटकवैशिष्ट्यं च–स्वेतरत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवाघटितत्वैतदुभयसम्बन्धेन । अत्रेत्थं न्यायार्थसमन्वयो बोध्यः–प्रण्यपतदित्यादावकरो यतो धातुत्वेन 'पत्'निष्ठोद्देश्यतानिरूपितादिशब्दबोधितावयवत्वावच्छिन्नविधेयताश्रयः, अतः 'पत्'-निरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितविषयताश्रयः, यत एवंभूतोऽतस्तदकारविशिष्टोऽपत्'शब्दः', 'पत्'निरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावत् पदं "नेर्मा-दा०" [ २. ३. ७९. ] इति सूत्रघटकं पत्पदं, तन्निरूपितजन्यत्वविशिष्टो बोधोऽपत्पदजन्यः, तन्निरूपितविषयताश्रयो [ 'अपत्' इति ] भवति । अकारवैशिष्ट्यम् 'अपत्'शब्दे कथमिति चेत्? इत्थम्–स्वम्–अकारः, तद्घटितत्वम् 'अपत्'शब्दे, पुनः स्वम्–अकारः, तन्निष्ठविधेयनिरूपितोद्देश्यताश्रयो धातुत्वेन 'पत्'शब्दः, तद्घटितत्वमपि 'अपत्'शब्दे, पुनः स्वम्–अकारः, तद्विशिष्टो'ऽपत्'-घटकभिन्नः, यतः स्वेतरत्वमकारे नास्ति, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवाघटितत्वमपि 'अपत्'शब्दे नास्ति, अपि तु तदुभयमुदासीनस्यैवेति तदघटितत्वं 'पत्'शब्दस्येति 'पत्'ग्रहणेन ग्रहणसिद्धिः ॥ यद्यप्यनेन न्यायेनागमविशिष्टस्यागमिवाचकशब्दग्राह्यत्वं बोध्यते तथापि शक्ति-लक्षणाभ्यामुपस्थितस्यैव शाब्द-

बोधविषयतया 'पत्'शब्दादावडागमविशिष्टा'ऽपद्' आदिशब्द-निरूपितशक्तिर्लक्षणयोरभावेन कथम् 'अपत्' इत्यस्य 'पत्' पदेन बोध इति चेत् ? अत्रोच्यते–ग्राह्यत्वाभ्यनुज्ञाने यद् विना ग्राह्यत्वं न भवति तदप्यभ्यनुज्ञातमेवेत्यदोषात् । यद्वा आगमि-बोधक'पत्'शब्दादीनां स्वशक्यविशिष्टे लक्षणाऽनेन न्यायेन बोध्यते । स्वस्मिन् शक्यार्थवैशिष्ट्यं च स्वघटितत्व स्वविशिष्टा-घटितत्वैतत्सम्बन्धाभ्याम्, तत्र वैशिष्ट्यं च स्वेतरत्व-स्वनिष्ठो-द्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयेतरत्वोभयसम्बन्धेन, स्वम्–आगमिबोधकं पदादिपदम्, तच्छक्यं 'पत्' इति शब्द-स्वरूपं, तद्घटितत्वम् 'अपत्' शब्देऽस्ति, स्वविशिष्टाघटितत्व-मप्यस्ति, यतः स्वेतरत्वं न 'पत्'शब्दे नवा स्वनिष्ठोद्देश्यतानिरू-पितावयवत्वावच्छिन्नविधेयताश्रयेतरत्वमित्युभयसम्बन्धेन स्ववि-शिष्टमुदासीनमेव किञ्चिदिति तदघटितत्वमस्य [ 'अपत्'शब्दस्य ] सिद्धम्, ततश्च 'पत्'शब्देना'ऽपत्'शब्दस्य लक्षणयैव बोध उभयोरुक्तलक्ष्यतावच्छेदकाक्रान्तत्वात् ॥ अत्रेदं विचार्यते- शब्द-नित्यत्ववादिनां मते शब्दानां कूटस्थत्वम्–अपायोपजनविकार-रहितत्वमिति स्वीक्रियते । तथा चादेशस्थले यथा बुद्धिविपरिणामः कल्प्यते, यथा–"समानानां तेन दीर्घः" [ १. २. १. ] इत्यादौ समानानां समानेन सह प्रयोगप्रसङ्गे दीर्घः प्रयोक्तव्य इति, एवम्–आगमस्थलेऽप्यनागमकानां प्रयोगप्रसङ्गे सागमकाः प्रयो-क्तव्या इत्येव बुद्धिविपरिणाम इत्याशयेन महाभाष्ये–अनागमकानां सागमका आदेशा इत्युक्तम्; तथा चागमस्थलेऽपि स्थान्यादेश-भावकल्पनैवेति स्थानिवद्भावेनैव सिद्धे न्यायोऽयं न स्वीकार्य इति केषाञ्चिन्मतमपास्तं वेदितव्यम्; स्थानिवद्भावविधायके सूत्रे तु नानेनार्थापत्तिकल्पितेन "अनागमकानां सागमका आदेशाः" इति वाक्येन बोधितस्य स्थान्यादेशभावस्य ग्रहणम्, अपि तु साक्षात्सूत्रबोधितस्थान्यादेशभावस्यैवेत्यागमस्थले तादृशस्थान्या-देशभावस्याभावेन स्थानिवद्भावेनागमविशिष्टस्यागमिग्रहणेन ग्रह-णस्य साधयितुमशक्यत्वम् । स्पष्टश्चायमर्थो "दा धा घ्वदाप्" [ पा० सू० १. १. २०. ] इति सूत्रे महाभाष्ये । तथाहि–अनेन सूत्रेण दाधो'र्घु'संज्ञा विधीयते "अवौ दाधौ दा" [ ३. ३. ५. ] इत्यनेन दासंज्ञावत्, तत्रेयं पूर्वपक्षिणा शङ्का कृता–'प्रनिदारयति' इत्यादौ दृधातोर्णिचि वृद्धौ कृतायां 'दा'शब्दोऽस्ति, तस्यापि 'घुत्वं' [ दात्वं ] कथं नेति ? । तदाह–"समानशब्द-प्रतिषेधः" [ वार्तिकम् ], समानशब्दानां प्रतिषेधो वक्तव्यः–प्रनिदारयति, प्रनिधारयति । दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति" इति । समाधानवार्त्तिकम्–"समानशब्दाप्रतिषेधोऽर्थव-द्ग्रहणात्" इति । "समानशब्दानामप्रतिषेधः, अनर्थकः प्रति-षेधोऽप्रतिषेधः । घुसंज्ञा कस्मान्न भवति ?, अर्थवद्ग्रहणात्, अर्थवतोर्दा-धोर्ग्रहणम्, न चैतावर्थवन्तौ" इति भाष्यम् । अय-माशयः–'घु'संज्ञा[ 'दा'संज्ञा ]विधायकसूत्रे विशिष्टरूपोपादान-सत्त्वेन *अर्थवद्ग्रहणे नानर्थकस्य* इति न्यायोपस्थित्याऽर्थवतोरेव दा-धोः सा संज्ञा स्यात्, इह च वृद्धौ कृतायां 'दार्' 'धार्' इति समुदायस्यार्थवत्त्वं, न तु तदवयवयोर्दा-धोः, *समुदायो ह्यर्थ-वाँस्तस्यैकदेशोऽनर्थकः* इति न्यायात्, इति न घुसंज्ञाप्राप्तिरिति । अत्र शङ्कते–"यद्येवमिहापि तर्हि न प्राप्नोति–प्रणिदापयति प्रणिधापयति । अत्रापि नैतौ दा-धावर्थवन्तौ" इति । अयमा-शयः–यदि समुदायस्यैवार्थवत्त्वम्, अर्थवतोरेव च दा-धोर्ग्रहणं तर्हि प्रणिदापयति प्रणिधापयतीत्यादौ दा-धाभ्यां णिचि प्वागमे दाप्-धापोरेवार्थवत्त्वं, न केवलयोर्दा-धोरिति घुसंज्ञा[दासंज्ञा]-ऽभावे नेर्णो णो न स्यादिति । तत्र समाधानवार्त्तिकम्–"न वा ह्यर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते, यथाऽन्यत्र" इति । "न वैष दोषः । किं कारणम् ? अर्थवत आगमस्तद्गुणीभूतोऽर्थ-वद्ग्रहणेन गृह्यते, यथाऽन्यत्र, तद्यथा–अन्यत्राप्यर्थवत आगमो-ऽर्थवद्ग्रहणेन गृह्यते । क्वान्यत्र ? लविता चिकीर्षितेति" इति । अत्र कैयटः–"लब्धात्मकस्य भावस्य निमित्तवशादुपचयापचयौ व्यपदेशहानिं न कुरुतः, यथा देवदत्तस्याङ्गाधिक्या-ऽङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दा-धोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्त्तयति नाप्यर्थवत्त्वमित्यदोषः" । अयमाशयः–प्वागमात् पूर्वमत्र दा-धोर्घुसंज्ञा [ दासंज्ञा ] निमित्तान्तरानपेक्ष-त्वेनान्तरङ्गत्वात् प्रवृत्ता, सा च सत्यपि प्वागमे न हीयते, यदि च कार्यकालपक्षे यदा कार्यं तदा संज्ञेति मतमाश्रीयते तदा-प्यर्थवतोर्दा-धोरेव प्वागम इति दा-धोरेव ग्रहणेन गृह्यत इति न तस्यार्थवत्त्वव्याघातकत्वमिति घुसंज्ञा [ दासंज्ञा ], णत्वविधान-रूपकार्यकालेऽपि सुसाध्येति । पुनराक्षिपति–"युक्तं पुनर्यन्नित्येषु शब्देष्वागमशासनं स्यात् ?, न, नित्येषु नाम शब्देषु कूटस्थैरवि-चालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः, आगमश्च नामा-पूर्वः शब्दोपजनः" इति । अयमाशयः–'वियदादिवद् वर्णाः प्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलय-कालिकनाशवन्तश्च' इति पक्षे नित्येषु शब्देष्वपायोपजनविरोधा-दागमोऽपि विरुद्ध इत्यागमद्वारेण 'दा'शब्दस्य स्थाने 'दाप्'शब्द आदेशो विधीयत इति स्वीकार्यमिति 'दाप्'शब्द एवार्थवान् न दाशब्द इति तस्य घुसंज्ञा न प्राप्नोतीति । प्रतिबन्दीमाह–"अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः" इति । अयमाशयः–शब्दानां नित्यत्वस्वीकारे आगम इवादेशोऽपि न युक्त एव, तत्रापि स्थानिनमपनीयादेशः क्रियत इति पूर्ववदनित्यत्वप्रसङ्गः । तथा च

"यश्चोभयोः समो दोषः परिहारोऽपि तादृशः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥"

इति न्यायाद् यथा प्रणिदापयतीत्यादावागमेऽनित्यत्वं

तथैवादेशस्वीकारेऽपीति न किमपि वैशिष्ट्यमिति । तत्रादेशपक्षं समर्थयति–"वाढं युक्तम्, शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपत्तिर्युक्ता" इति । अत्र कैयटः–"प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची, ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते । आगमस्त्ववस्थितस्यापूर्वः क्रियमाणो नित्यत्वं विरुणद्धि" । अयमाशयः–आदेशस्थले 'स्थाने' विधीयमानः शब्दो न पूर्वशब्दस्य निवृत्तिं प्राह, किन्तु तादृशशब्दप्रयोगे प्राप्ते शब्दान्तरस्य प्रयोग इति प्रसङ्गरूपप्रयोगार्थकः स्थानेशब्दः । तथा च तत्र स्थले आदेशबुद्धेरुन्मज्जनं स्थानिबुद्धेर्निमज्जनमित्येव स्वीक्रियत इति पूर्वशब्दस्य प्रयोगं विहाय शब्दान्तरस्य प्रयोगः क्रियत इत्येव तात्पर्यमिति न नित्यत्वहानिः । आगमस्थले तु तस्मिन् शब्दे एव किञ्चिदधिकमासज्यत इति वर्णवृद्धिरूपोपजनसत्त्वादनित्यत्वं स्पष्टमित्यादेशागमयोर्भेद इति । ततः स्वसिद्धान्त उपसंहृतः–"आदेशास्तर्हीमे भविष्यन्त्यनागमकानां सागमकाः । तत् कथम् ?

"सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥"

इति । इमे–आगमत्वेन व्यवह्रियमाणा अपि, तथा विधीयमाना अपि, आदेशाः–आदेशसदृशाः, भविष्यन्ति । आद्यन्तशब्दाभ्यां विधीयमाना इडादय आगमाः स्तादेरशित इडित्यर्थे वृत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनया केवल'तव्य'बुद्धौ प्रसक्तायामिकारादिस्तव्यः साधुरिति बोधः, तेनात्राप्यादेशस्थल इव बुद्धिविपरिणामस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः । *आगमा यद्गुणीभूताः* इति न्यायस्य चात्रापि पक्षे स्वीकार आवश्यक एवेति प्रणिदापयतीत्यादौ न दोषः । ये त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति तेऽतत्त्वविदः 'अनागमकानां सागमका आदेशाः' इति कथनस्यासंगत्यापत्तेः । आगमस्थले निरवयवकबुद्धिनिमज्जन-सावयवकबुद्ध्युन्मज्जनेनागमव्यवहारस्यापि निर्बाधत्वात् । अनागमकानामित्यादि न मम मतमपि तु पाणिनेरेवेत्युक्तम्–सर्वे सर्वपदादेशा इत्यादिना । अयमाशयः–शास्त्रेऽवयवयोः स्थान्यादेशभावश्रवणेऽपि नित्यतानुपपत्तिमूलकः समुदाययोरपि स्थान्यादेशभावः कल्प्यते । एवमागमस्थलेऽवयवत्वेन विधानेऽप्यर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवत्वसावयवत्वबुद्ध्योर्विपरिणाममात्रेणादेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति । यथा चादेशस्थले उक्तरीत्या कल्प्यमानस्थान्यादेशभावेन श्रुतस्य स्थान्यादेशभावस्य न त्यागः, तथा सति [ श्रुतस्थान्यादेशभावत्यागे सति ] स्थानिवद्भावविधायकसूत्राणामानर्थक्यापत्तिः स्यात्, तथैवागमस्थले सूत्रे श्रूयमाणावयवावयविभावस्य न त्याग इति प्रकृतन्यायप्रवृत्तिरव्याहतैव । ईदृशस्थान्यादेशभावस्थले [ अनागमकानां सागमका आदेशा इति कल्पितस्थान्यादेशभावस्थले ] स्थानिवद्भावस्य न प्रवृत्तिः स्थानीवेति श्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावस्थले एव तत्प्रवृत्तेः, न त्वत्र केवलानुमानिके, इत्यादिना विचारेण विवृतं नागेशेन ॥ केचित् तु न्यायमिमं न मन्यन्ते –"स्थानीवावर्णविधौ" [ ७. ४. १०९. ] इति सूत्रे सर्वोऽपि [ श्रौतः कल्पितश्च ] स्थान्यादेशभावो गृह्यत इति तेनैव प्रकृतन्यायार्थसिद्धिः । न चैवम् 'अपिबत्' इत्यादावडागमसहितस्य धातोः पिबादेशः स्यादिति वाच्यम्, *कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये०* इति न्यायेनादोषात् । अथवा *निर्दिश्यमानस्यादेशा भवन्ति* इति न्यायेनादोषः, निर्दिश्यमानत्वं च षष्ठीप्रकृतिविशिष्टत्वम्, वैशिष्ट्यं च स्वजन्योपस्थितिविषयत्व-स्वजन्योपस्थितिविषयसमभिव्याहृतवर्णाघटितत्वैतदुभयसम्बन्धेन, 'श्रौति-कृवु०' [ ४. २. १०८. ] इति सूत्रस्थषष्ठीप्रकृतिविशिष्टत्वं 'पा'शब्दस्यैव न त्वपाशब्दस्येत्यदोषात्, तथाहि–स्वजन्योपस्थितीयविषयताश्रयत्वमस्ति पाशब्दस्य, स्वजन्योपस्थितीयविषयताश्रयः 'पा' इति, तत्समभिव्याहृतोऽकारः, तद्घटितत्वमपाशब्दस्य, तदघटितत्वं पाशब्दस्येति लक्षणसमन्वयात् । तथा च 'अनागमकानां सागमका आदेशाः' इति भाष्यमतेऽस्य न्यायस्य नावश्यकत्वमिति विस्तरेण प्रतिपादयन्ति । तन्मतविवेचनादिकमिह न प्राकरणिकमिति त्यज्यते, विस्तृतेप्सुभिरन्यत्र समवलोकनीयम् । यत् तु "उपसर्गात् सुग्–सुव०" [ २. ३. ३९. ] इति सूत्रस्थस्य 'अट्यपि' इत्यंशस्य प्रकृतन्यायानित्यत्वज्ञापनस्य स्थापनाय न्यायसंग्रहमञ्जूषान्यासे प्रतिपादितम्–"ननु 'शिड्नान्तरेऽपि' इत्यधिकारेणाऽन्यव्यवधानस्याननुमतत्वादटा व्यवधाने षत्वाप्राप्तेरट्यपीति तत्रोक्तमस्ति, तत् कथमिदमनित्यत्वख्यापकमुक्तम् ? उच्यते–अस्यानित्यत्वाभावे सुगादीनां ग्रहणेनाट्सहितानामपि तेषां ग्रहणसिद्धेरटा व्यवधानमिति वक्तुमपि न शक्यम्, इत्यतो युक्तमेवेदम्; तस्मादीयमत्रभावना–अभ्यषुणोदित्यादौ सुगः षत्वं तावत् सूरेरिष्टम्, तच्च 'शिड्नान्तरेऽपि' इत्यधिकारेणाऽन्यव्यवधानानुमत्यभावादडागमव्यवधाने निषिषिधानम्, तदनु *आगमा यद्गुणीभूता* इति न्यायेन पुनः प्रसृतम्, परं न्यायानामनित्यत्वात् सूरेर्विश्वासो न, तेनाडागमव्यवधानेऽपि षत्वार्थमट्यपीत्युक्तम् ।" इति । अत्रेदमुच्यते–"उपसर्गात् सुग०" [ २. ३. ३९. ] इति सूत्रवृत्त्यादिपर्यालोचनयाऽट्यपीत्यस्य सार्थक्येन प्रकृतन्यायानित्यत्वज्ञापने सामर्थ्याभावः । तथाहि–प्रकृतसूत्रार्थः

"अद्वित्वे···[एषां]सकारस्योपसर्गस्थान्नाम्यन्तस्थाकवर्गात् परस्य षो भवति, अट्यपि–अडागमे सत्यपि, अड्व्यवधानेऽपीत्यर्थः" इति, पुनश्च "शिड्नान्तरेऽपीत्यधिकारादटा व्यवधाने न

प्राप्नोतीत्यप्यपीति ग्रहणम् ।" इति, तथा च सूत्रार्थानुसारं सकारस्योपसर्गस्थनामिनोऽव्यवहितपरत्वमिह षत्वनिमित्तम्, तच्चाटा व्यवधाने बाधितमिति तद्बाधाभावायाप्यपीति सार्थकमिति बृहद्वृत्तिग्रन्थाशयः । अत्र यदि धातोरुपसर्गस्थनामिनः परत्वं निमित्तं स्यात् तर्हि धातोरेवाडागतो विहित इति तस्यानेन न्यायेन धातुग्रहणेनैव ग्रहणे प्राप्तेऽप्यपीत्यस्य वैयर्थ्यं प्रसज्येत, किन्तु सकारस्योपर्गस्थनामिनः परत्वमिष्यते, न चाडागमः सकारस्यावयवः समुदायावयवत्वात् तस्येति, तद्व्यवधाननिवृत्त्यावेतन्न्यायोपयोगाभावात् षत्वप्राप्त्यर्थमप्यपीत्यावश्यकमेवेति न तेनैतन्न्यायानित्यत्वम् । तस्यानित्यत्वफलस्याभिधाने–"अतो म आने' [ ४. ४. ११४. ] इति मागमविधानमेव तज्ज्ञापकमित्यावेदितं वृत्तौ । तत्र केचिदाहुः–"अनेन मागमविधानेन वर्णग्रहणेऽस्य न्यायस्य न प्रवृत्तिरित्येव ज्ञाप्यते, न तु सामान्यतोऽनित्यत्वं ज्ञाप्यते" इति, तन्न चारु–'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति लौकिकन्यायानुमोदितेन 'संभवति सामान्यापेक्षज्ञापने विशेषापेक्षज्ञापनमन्याय्यम्' इति न्यायेन विशेषज्ञापनस्यासंभवात्, महाभाष्ये वर्णग्रहणेऽपि प्रकृतन्यायस्य सञ्चारितत्वाच्च । तथाहि–"ङमो ह्रस्वादचि ङमुण् नित्यम्" [ पा० सू० ८. ३. ३२. ] इति सूत्रे महाभाष्ये 'ह्रस्वात् परस्य ङमः [ ङ-ण-नानां ] पदान्तस्य ङमुट् [ ङ-ण-ना आदिभूताः ] भवति' इत्यर्थे समाश्रिते 'कुर्वन्नास्ते' इत्यादौ पूर्वनकारस्य णत्वं प्राप्नोतीति शङ्कायां पदान्तस्य नस्यायं नागमो विहित इति *आगमा यद्गुणीभूताः०* इति न्यायेन तस्य पदान्तत्वान्न णत्वमित्युक्तम् । वर्णग्रहणे प्रकृतन्यायाप्रवृत्तौ तु तत्र वर्णस्यैव ग्रहणात् प्रकृतन्यायप्रवृत्तिर्भाष्यकृत्कृता कथं संगच्छेत ? । अयमत्र सारः–"अतो म आने" [ ४. ४. ११४. ] इति सूत्रेण धातोर्विहिते आनेऽतो 'मोऽन्तः' विधीयते, स चाकारस्यैवावयव इति तद्ग्रहणेन ग्रहणात् "समानानां तेन दीर्घः" [ १. २. १. ] इति मकारसहितस्याऽऽकारस्य स्थाने दीर्घे कृते मागमो न श्रूयेतेति तस्य वैयर्थ्यं स्पष्टमेवेति तदस्य न्यायस्यानित्यतां ज्ञापयतीति स्वमतम् । तत्र कश्चिदाह–अनेन ज्ञापकेन न्यायस्य वर्णग्रहणेऽप्रवृत्तिरेव ज्ञाप्यते, तावताऽपि स्वस्य चारितार्थ्यसम्भवात्, अस्ति हि "समानानां तेन दीर्घः" [ १. २. १. ] इति सूत्रे वर्णग्रहणमिति तत्रैतन्न्यायस्याप्रवृत्त्या मागमस्य वर्णग्रहणेनाग्रहणात् तस्य [ मागमस्य ] श्रवणं सिद्धमिति । तत्रेदमुच्यते–सामान्यत एवानित्यत्वज्ञापने सम्भवति वर्णग्रहणेऽप्रवृत्तिरूपं विशेषं कुतो ज्ञापयेत् ? । न च सामान्यतोऽनित्यत्वज्ञापने फलाभाव इति वाच्यम्, 'दिदीये' इत्यादौ दीङः परस्य स्वरादेङ्कित आदौ यकारागम इति वादिनां पाणिनीयानां मते तस्यानेन न्यायेन 'दी'ग्रहणेन ग्रहणे तत्र "योऽनेकस्वरस्य" [ २. १. ५६. ] इति यादेशापत्तेः । वर्णमात्रग्रहणे तदप्रवृत्तौ नात्र निर्वाहः, नात्र वर्णस्यागमोऽपि तु धातोरेव । किञ्च पूर्वोपदर्शितस्य "ङमो ह्रस्वादचि ङमुण् नित्यम्" [ पा० सू० ८. ३. ३२. ] इति सूत्रस्य भाष्यमपि न संगच्छेत, तत्र हि 'कुर्वन्नास्ते' इत्यादौ "ह्रस्वान्ङ्णनो द्वे" [ १. ३. २७. ] इति नकारस्य द्वित्वस्थाने नकारागम एवादौ विधीयते, तत्रादिभूतस्य नकारस्य ' रषृवर्णात्०" [ २. ३. ६३. ] इति णत्वं पूर्वनकारस्य पदान्तनकारागमत्वादनेन न्यायेन पदान्तत्वमाश्रित्य वारितमिति वर्णग्रहणेऽपि प्रवृत्तिः स्पष्टमङ्गीकृता, सा विरुध्येतेति । तथा च मागमेन न्यायानित्यत्वमेव ज्ञाप्यते न तु वर्णग्रहणेऽप्रवृत्तिरिति ॥ १० ॥

## *स्वाङ्गमव्यवधायि* ॥ ११ ॥

सि०—स्वमङ्गं स्वाङ्गं, तच्चाङ्गिनो व्यवधायकं-कार्योपरोधकं न भवति । परोक्षादौ धात्वादेर्द्विरुक्तं द्विप्रयोगरूपतया स्वमङ्गमेव, तादृशाङ्गेन तस्य धातोः किमपि कार्यं न व्यवधीयते, नहि देवदत्तः स्वावयवैर्व्यवधीयते, स्वाङ्गत्वेन द्वित्वादिविधानस्य हि फलमेतद् न्यायेन प्रकाश्यते, तथा च नापूर्वमिदं वचनम् । तथाऽपि यदि ज्ञापकापेक्षा तर्हि ज्ञापकमपि निर्दिशन्ति प्राञ्चः, तथाहि–"प्रमापकं त्वस्य "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इति सूत्रस्य "द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा" [ २. ३. ८१. ] इति सूत्रानन्तरोपन्यासं, तत्र द्वित्वेऽपीत्यस्यानुवर्तनं चाकृत्वा "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इति सूत्रे ङ्मादिधातूनां सामान्यनिर्देशः, तथाहि नेर्णत्वं तावत् प्रणिपततीत्यादिवत् प्रणिपपातेत्यादावपीष्टम्, तच्च तदैव सिध्यति यदि "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इति सूत्रं "द्वित्वेऽप्यन्तेऽप्यनितेः०" [ २. ३. ८१. ] इति सूत्रस्यानन्तरं क्रियते, तत्र च द्वित्वेऽपीत्यनुवर्त्त्येत । एवं हि द्वित्वेऽप्यद्वित्वेऽपि च ङ्मादिधातुषु परेषु निर्विवादं नेर्णः सिध्यति, यत् तु तथा न कृतं किन्तु सामान्येन ङ्मादिधातव एव पठितास्तज्ज्ञायते–प्रणिपततीत्यादिवत् प्रणिपपातेत्यादावपि "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इत्यनेनैव णत्वं सेत्स्यति, द्वित्वजस्य पस्य धातोः स्वाङ्गत्वात् *स्वाङ्गमव्यवधायि* इति न्यायसद्भावादित्याशयैव इति । अत्रेदमुच्यते–पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति सिद्धान्ते धातोः पूर्वमुपसर्गयोगे उपसर्गनिमित्तककार्यस्य चात एवान्तरङ्गत्वात् पूर्वं नेर्णत्वे कृते पश्चाद् द्वित्वादौ प्रणिपपातेत्यस्य सिद्धा तदर्थमिह "नेर्ङ्मा-दा०" [ २. ३. ७९. ] इति सूत्रस्य "द्वित्वेऽप्यन्तेऽप्यनितेः०" [ २. ३. ८१. ] इति सूत्रानन्तरं पाठस्य, तत्र द्वित्वेऽपीत्यनुवर्तनस्य वाऽप्रयोजनत्वात् तदभावस्यैतन्न्यायज्ञापकत्वायोगात् । प्राणिणिषतीत्यादौ परस्यापि नकारस्य णत्वसिद्धये द्वित्वेऽपीति कथनं तु–अदुरुप-

सर्गान्तःस्थाद्रादेरनन्तरस्यैकस्य नकारस्य णत्वे कृते वचनस्य कृतार्थत्वात् *लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते* इति न्यायाच्च परस्य नस्य णत्वं न स्यादिति तस्याऽपि णत्वविधानार्थम्, इह च [ प्रणिपपातेत्यादौ ] धातूपसर्गयोगस्य पूर्वमेव जातत्वेन नेर्नस्य णत्वे कृते पश्चाद् द्वित्वादिकार्ये न्यायप्रयोजनाभावात् । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति मतान्तरेऽपि द्वित्वस्य द्विःप्रयोगरूपतया तज्जातस्य पकारस्यान्यत्वबुद्ध्यनुत्पादकत्वात् । एवं चात्र न्यायोपयोगस्य कथञ्चित्सम्भवेऽपि नैवं सूत्रपाठस्य न्यायज्ञापकत्वमुचितम् । न्यायस्यास्य च स्वत एव सिद्धत्वमित्युक्तं प्राक्, एतत्फलं च संचस्कारेत्यत्र पूर्वं धातोरुपसर्गयोगे तन्निमित्तकत्वेनान्तरङ्गत्वात् "संपरेः कृगः स्सट्" [ ४. ४. ९१. ] इति स्सटि तदवसरप्राप्तेऽपि "स्सटि समः" [ १. ३. १२. ] "लुक्" [ १. ३. १३. ] इति सूत्रे बाधित्वा परत्वान्नित्यत्वाद्धातुमात्राश्रितत्वेनान्तरङ्गत्वाच्च णवि तदाश्रिते च द्वित्वादिकार्ये 'संचस्कृ' इति स्थिते धात्वङ्गेन द्वित्वजचकारेण समो व्यवधाने सति तदव्यवधानरूपस्य स्सटो निमित्तस्य नाशात् *निमित्ताभावे नैमित्तिकस्याऽप्यभावः* इति न्यायेन स्सटोऽपि निवृत्तिः प्राप्ता, साऽनेन न्यायेन स्वाङ्गस्याव्यवधायकत्वं बोधयता वार्यते इति । यदि च लोके निमित्तकारणनाशात् कार्यनाशावश्यम्भावादर्शनेन*जातः संस्कारो न निवर्त्तते*इति न्यायान्तरदर्शनेन च सत्यपि व्यवधाने स्सटो न निवृत्तिः,*निमित्ताऽभावे०*इति न्यायस्य चानियतत्वस्योक्ततयाऽत्र दोषाभावेन नेदमनन्यथासिद्धं फलमित्युच्यते, तदा पूर्वं धातुः साधनेन युज्यते इति सिद्धान्तपक्षे प्रणिपपातेत्याद्येवास्य फलमिति बोध्यम् । यत् तु–स्वाङ्गमिति किमित्याशङ्क्य पराङ्गस्य व्यवधायकत्वस्वीकारः, तत्फलं चात्र द्वित्वे कृते सम्-स्सटोर्व्यवधानात् "स्सटि समः" [ १. ३. १२. ] "लुक्" [ १. ३. १३. ] इति सूत्रयोरप्रवृत्तिरित्युक्तं तदनर्थकम्, स्वाङ्गमित्यस्याभावे न्यायस्वरूपस्यैवालाभान्न्यायवैयर्थ्यमेवामया भङ्ग्या चोदितं स्यात्, तथा सति न्यायोदाहरणासिद्धिरेव तत्र दोषत्वेन कथनीया स्यात्, नातिव्याप्तिरूपो दोषः, अतिव्याप्त्यपेक्षयाऽव्याप्तेर्बलवत्त्वात् । यदि च स्वाङ्गमिति किमित्यस्य स्वग्रहणं किमर्थमित्याशयः, तथा च 'अङ्गमव्यधायीति न्यायस्वरूपमस्तु' इति तदर्थः, तदा कथञ्चिदेतद् युज्येताऽपि, किन्तु निरुपपदस्याङ्गशब्दस्य स्वाङ्गपर्यवसायित्वमेवेति स्वशब्दाभावेऽपि स्वाङ्गमित्येवार्थः प्रतीयेतेति स्पष्टार्थमेव स्वग्रहणमित्येव वक्तव्यं, न पराङ्गव्यावृत्त्यर्थमिति युक्तमुत्पश्यामः । अस्य च न्यायस्यानैकान्तिकत्वमपि प्रदर्शितं तैरेव, तथाहि–"अस्य च व्यभिचारित्वात् "वेः स्कन्दोऽक्तयोः" [ २. ३. ५१. ] इति षत्वविधायकसूत्रे द्वित्वसहितस्य स्कन्दोऽग्रहणाद् विचिस्कन्त्सतीत्यादौ न षत्वम् । सव्यभिचारत्वप्रतिष्ठापकं तु प्रतितष्ठावित्यादौ द्वित्वव्यवधानेऽपि षत्वार्थं "स्था-सेनि-सेध-सिच-सञ्जां द्वित्वेऽपि" [ २. ३. ४०. ] इति सूत्रे द्वित्वेऽपीत्युक्तिः, सा हि द्वित्वे कृते सति तस्य स्वाङ्गत्वेऽपि एतन्न्यायस्य सव्यभिचारत्वाद् व्यवधायित्वं भविष्यतीत्याशङ्कया कृता ।" इति । एतस्यार्थस्य दार्ढ्याय च स्वोपज्ञन्यासेऽपि तैरित्थमुक्तम्–"ननु 'शिड्नान्तरेऽपि' इत्यधिकारात् प्राग्वदत्राऽपि द्वित्वेन व्यवधाने षत्वाप्राप्तेर्द्वित्वेऽपीति तत्रोक्तमस्ति, तत् कथमिदमनित्यत्वख्यापकमुक्तम्? उच्यते–अस्यानित्यत्वाभावे द्वित्वेन व्यवधानमिति वक्तुमपि न शक्यम्, इत्यतो युक्तमेवेदम् । तदियमत्र भावना–प्रतितष्ठावित्यादौ तावत् स्थाधातोः षत्वं सूरेरिष्टम्, तच्च 'शिड्नान्तरेऽपि' इत्यधिकारेणान्यव्यवधानानुमत्यभावाद् द्वित्वव्यवधाने निपिपिधानम्, तदनु*स्वाङ्गमव्यवधायि*इति न्यायेन पुनः प्रसूतम्, परं न्यायानामनित्यत्वात् सूरेर्न विस्रम्भः, तेन द्वित्वव्यवधानेऽपि षत्वार्थं द्वित्वेऽपीत्युक्तम्" इति । अत्रेदमुच्यते–"वेः स्कन्दोऽक्तयोः" [ २. ३. ५१. ] इति सूत्रे वेः परत्वं धातोर्विशेषणमुत सकारस्य ?, तत्र न तावत् प्रथमः–स्कन्देरित्यस्य स्वयमेव सकारविशेषणत्वात्, स्कन्देरिति पदं हि सकारं विशिनष्टि न तु कार्यभाक्, कार्यभागत्र सकारः, स एव च प्राधान्यमर्हति, तमेव च वेः परत्वेनापि विशिनष्टि सूत्रकृत् । तथा च सकारस्य वेरव्यवहितस्य षत्वं विधेयमिति विचिस्कन्त्सतीत्यादौ षत्वप्राप्तिर्न्यायेनापि दुरुसाध्येति तदभावाय [ षत्वाभावाय ] न्यायानित्यत्वाश्रयणमनर्थकमेव । 'शिड्नान्तरेऽपि' इत्यधिकारादपि सकारोपसर्गयोर्मध्य एव व्यवधानराहित्यं लभ्यमिति तथापि न षत्वप्राप्तिः । यदि च धातोर्विशेषणं स्याद् वेरिति तदा तत् कथञ्चित् संगच्छेत, न तु तदित्यावेदितमेव । एवं च "स्था-सेनि-सेध०" [ २. ३. ४०. ] इति सूत्रे द्वित्वेऽपीति वचनमपि सार्थकमेव, द्वित्वे सति तकारेण व्यवधानान्नामिपरत्वमपि सकारे नास्ति, किमु वक्तव्यमुपसर्गस्य नामिपरत्वम् । अत एव सूत्रप्रयोजनवर्णनमुखेन द्वित्वेऽपीत्यस्य प्रयोजनमपीत्थमेव स्फोरितं बृहद्वृत्तौ, तथा हि–"सेनेरषोपदेशार्थं, स्था-सञ्जोरवर्णान्तव्यवधानेऽपि विध्यर्थं, सिच्-सञ्ज्-सेधां षणि नियमबाधनार्थं, सर्वेषामड्व्यवधाने पदादौ च षत्वार्थं वचनम्" इति । अत्रैव स्था-सञ्जोरिति प्रतीकमादाय न्यासे "उपसर्गस्थस्य नामिनोऽवर्णान्तेन द्विर्वचनेनेत्यर्थः" इत्युक्तम्, तथा चावर्णान्तेन व्यवधानं सकारस्यैवेत्येव सर्वेषामभिमतमिति प्रतिभाति । सकारस्य च न स्वाङ्गभूतो द्वित्वजो वर्ण इति न तत्र न्यायेन सिद्धिरिति तदर्थं द्वित्वेऽपीति कथनमावश्यकमेवेति न तदस्य न्यायस्यानित्यत्व-

ज्ञापने समर्थम्। तथा च सत्यनैकान्तिकत्वावंश्यकत्वेऽन्यदेव ज्ञापकसिद्धत्वादिकं हेतुतयोपादेयं, किन्त्वनित्यफलं किमपि न पश्यामः, न चाऽस्य ज्ञापकसिद्धत्वमपि, स्वाङ्गस्याव्यवधायकत्वस्य सर्वलोकसिद्धत्वात्। अस्यैव च न्यायस्य प्रपञ्चभूतः पूर्वोऽपि न्यायः, आगमानामप्याद्यन्तशब्दाभ्यां विधानेनावयवत्वाविशेषात्। तथा च यद्यप्यनेनैव न्यायेन तस्य गतार्थता सम्भवति, तथाप्यस्याप्रसिद्धतया पूर्वन्यायस्य च सकलतन्त्रप्रसिद्धतया तदुपन्यासः पृथक् कृत इति ॥ ११ ॥

*स्वाङ्गमव्यवधायि* ॥ ११ ॥

त०—संचस्कारेत्यादावन्तरङ्गत्वात् ससटि कृतेऽपि द्वित्वादिना चकारस्य व्यवधानात् समोऽव्यवहितस्य कृगोऽभावात् *निमित्तापाय*न्यायेन उत्पन्नोऽपि ससट् विनङ्क्ष्यति, प्रणिपपातेत्यादौ द्वित्वादौ कृते रूपान्तरत्वात् पतौ परे विधीयमानं नेणत्वं न स्यादिति च दोषद्वयस्यैवंभूतस्य चान्यस्यापि दोषस्य निवारणाय न्यायोऽयं स्वीक्रियते। अयं चौचित्यमूलकत्वेन न ज्ञापकापेक्षेत्यादि वृत्तौ प्रतिपादितम्। पाणिनीयास्तु न्यायमिमं न मन्यन्ते, संचस्कारेत्यत्र ससटो धातूपसर्गरूपपदद्वयनिमित्तकत्वाद् वहिरङ्गत्वमित्यन्तरङ्गत्वात् पूर्वं द्वित्वादिषु कृतेषु द्वित्वस्य द्विःप्रयोगरूपत्वपक्षे पूर्वखण्डस्यापि 'कृ'धातुत्वं स्वत एव, स्थाने द्विर्वचनं [एकस्य कृगः स्थाने द्वित्वेन कृद्वयमादिश्यत इति] पक्षेऽपि च स्थानिवद्भावेन चकारस्यादौ ससट् मा भूदेतदर्थं पाणिनिना "सुट् कात् पूर्वः" [६. १. १३५.] इति सूत्रं क्रियते, तत्र कात् पूर्व इति कालावधारणार्थं देशनिरूपणार्थं वेति विवादे उभयपक्षेऽपि दोषाभावः समर्थितः। तथा च कालावधारणार्थपक्षे 'कात् पूर्वः सुट् कर्तव्यः' कार्यान्तराच्च प्राग् भवन् कात् पूर्वो भवतीति पूर्वं ससटि ततो द्वित्वादौ *निमित्तापाये०* इति न्यायस्य चासद्भावात् सकारश्रवणं निर्बाधं भवति। देशनिरूपणार्थत्वपक्षे च सत्यपि द्वित्वादौ ककारात् पूर्व एव सुट् स्यान्न चकारादिति कात् पूर्वग्रहणेन क्रियत इति कात् पूर्वग्रहणं समाधाय, पुनः पूर्वं ससटि सत्यपि द्वित्वे एतद्दृष्ट्या तस्य वहिरङ्गासिद्धतया सकारस्य श्रवणं तन्निमित्तकार्यं च न स्यादिति शङ्कामुत्थाप्य तेनैव प्रसङ्गेन 'कात् पूर्व'ग्रहणमपि खण्डितं तत्रैव सूत्रे, तच्च प्रकरणं स्वमतेऽप्युपयुक्तमिति प्रदर्श्यते। तथाहि—"उपदेशिवद्वचनं च" [वार्त्तिकम्] उपदेशिवद्भावश्च वक्तव्यः, किं प्रयोजनम्? "लिटि गुण-चङि दीर्घप्रतिषेधार्थम्" [वार्तिकम्], लिटि गुणार्थं चङि दीर्घप्रतिषेधार्थं च, लिटि गुणार्थं तावत्—संचस्करतुः संचस्करुः, चङि दीर्घप्रतिषेधार्थं च—समचिस्करत्। लिटि गुणार्थेन तावन्नार्थः, वक्ष्यत्येतत् संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यं कृत्रर्थम्' इति। चङि दीर्घप्रतिषेधाऽर्थे नापि नार्थः। पदमितीयं भगवतः कृत्रिमा संज्ञा। युक्तमिह द्रष्टव्यं किमन्तरङ्गं किं वहिरङ्गमिति, धातूपसर्गयोः कार्यं यत् तदन्तरङ्गम्। कुत एतत्? पूर्वं धातुरुपसर्गेण युज्यते, पश्चात् साधनेनेति। नैतत्सारम्—पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण, साधनं हि क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टि, अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम्; सत्यमेवमेतत्, यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते, अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते—पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति, तस्य 'आस्यते गुरुणा' इत्यकर्मकः 'उपास्यते गुरुः'इति केन सकर्मकः स्यात्। एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति। कात् पूर्वग्रहणं चापि शक्यमकर्तुम्" इति ॥ अयमाशयः—संचस्कारेत्यादौ कात् पूर्वग्रहणेन निर्वाहेऽपि 'संचस्करतुः, संचस्करुः' इत्यादौ ससटः पदद्वयनिमित्तकत्वाद् गुणदृष्ट्या असिद्धत्वेन संयोगादित्वाभावात् "ऋतश्च संयोगादेर्गुणः" [पा० सू० ७. ४. १०.] इति संयोगादित्वनिबन्धनो गुणो न स्यात्, [स्वमते चैतद्दोषपरिहारायैव "स्कृ-च्छृतोऽकि परोक्षायाम्" [४. ३. ८.] इति सूत्रे स्कृग्रहणं क्रियत इति तत्रैव वृत्तौ स्पष्टीकृतम्] अतश्च तस्य ससट उपदेशिवद्भावो वक्तव्यः। तथा चोपदेशावस्थायामेव [प्रत्ययोत्पत्तेः पूर्वमेव] सस विधानेन तदानीं धातोः पदत्वासिद्ध्या न पदद्वयनिमित्तकत्वं ससट इति न तस्य वहिरङ्गत्वम्, किन्तु यथा वहिर्भूतोपसर्गनिमित्तत्वं ससटस्तथा वहिर्भूतपरोक्षानिमित्तकत्वं गुणस्येति साम्यमेवेति। तत्रोत्तरपक्षवादिना, वार्त्तिकोक्तोपदेशिवद्भावखण्डनं कृतम्, तथाहि—उपदेशिवद्भावस्य फलद्वयमुच्यते—संचस्करतुरित्यादौ गुणः समचिस्करदित्यादौ "लघोर्दीर्घोऽस्वरादेः" [४. १. ६४.] इति दीर्घाभावश्च, तत्र गुणार्थं गुणविधायकसूत्रे—["ऋतश्च संयोगादेर्गुणः" पा० सू० ७. ४. १०. इत्यत्र] 'संयोगोपध [संयोगोपान्त्य]-ग्रहणं कर्तव्यं कृत्रर्थम्' इति वार्तिकेन तत्र गुणस्य साधितत्वादुपदेशिवद्भावो नावश्यकः। दीर्घाभावार्थमपि नावश्यकः, ससटः पदद्वयाश्रयत्वं दीर्घस्य चैकपदाश्रयत्वमिति हि दीर्घस्यान्तरङ्गत्वेन तद्दृष्ट्या ससटोऽसिद्धत्वात् संयोगाभावेन लघुत्वात् "लघोर्दीर्घोऽस्वरादेः" [४. १. ६४.] इत्यस्य प्राप्तिरुद्भाव्यते, तत्र ससटो यदि पदं निमित्तं स्यात् तदा पदद्वयाश्रितत्वं स्यात्, न च पदस्य [पदसंज्ञकस्य] ससट् विधीयतेऽपि तु धातोरेव, धातुश्च न पदं त्याद्यन्तस्यैव पदत्वादिति पदद्वयनिमित्तत्वाभावात् ससटो वहिरङ्गत्वाभावेन नासिद्धत्वमिति लघुत्वाभावाद् दीर्घाभाव इति। किञ्चात्र ससट एवान्तरङ्गत्वमपि, तथाहि—धातूपसर्गयोः कार्यस्य पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वमिति स्वीकार्यम्, यतः पूर्वं

धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति पक्ष एव श्रेयान्, यतः 'आस्यते गुरुणा' इत्यादि प्रयोगेऽकर्मकस्यापि 'आस्' धातोः 'उपास्यते गुरुः' इत्यादिप्रयोगे सकर्मकत्वमुपसर्गसम्बन्धादेव । ततश्चोपसर्गार्थमन्तर्भाव्यैव धातुः साधनेन युज्यत इत्युपसर्गसम्बन्ध एव पूर्वमुचितः, सति चोपसर्गसम्बन्धे तन्निमित्तककार्यस्य पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वमिति स्सटोऽसिद्धत्वस्य शङ्कैव नेति तदर्थमुपदेशिवद्भावस्य वचनं नावश्यकम् । स्वीकृते चास्मिन् पक्षे कालावधारणार्थं देशविशेषावधारणार्थं वा 'कात् पूर्वः' इति स्सटूविधायकसूत्रे यत् पाणिनिना कृतं तदपि न कर्त्तव्यमित्यपरमनुकूलम्, यतः पूर्वमुपसर्गयोगे तन्निमित्तस्य स्सटः पूर्वमेव प्रवृत्तिरिति संचस्कार समस्करोदित्यादौ ककारात् पूर्वमेव नियतः स्सट् स्यात् । द्वित्वेनाटा चोपसर्गस्य व्यवधानेऽपि जातस्य स्सटो न निवृत्तिः, *निमित्तापाय०* इति न्यायस्यानित्यत्वादसत्त्वाद्वेति । नास्य न्यायस्याप्यत्रोपयोगः, प्रणिपपातेत्यादावपि पूर्वमेव नेर्णत्वे *निमित्तापाये०* इति न्यायस्य चानाश्रयणान्न दोषः । एवं रीत्या दोषाभावे सिद्धेऽपि लोकसिद्धतयैवेष न्यायः स्वीकार्यो न ज्ञापकेन साधनीयः । अस्य न्यायस्य प्रपञ्चभूत एव पूर्वन्यायः [ *आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते* इति ] इत्युक्तं वृत्तौ, तत्रेदं विचारणीयम्–आगमानां गुणीभूतत्वं तु 'आदिः' 'अन्तः' इत्यादिशब्दैर्विधानाच्छास्त्रेणैव सिद्धम् । द्वित्वनिष्पन्नस्य चकार-पकारादेरङ्गत्वं केन साधनीयम्, द्वित्वं हि न तदवयवत्वेन विधीयते येन तदङ्गं स्यात्, अपि तु धातुरेव द्विरुच्यते, "द्विर्धातुः परोक्षा-ङे०" [ ४. १. १ ] इति सूत्रस्य तथैव स्वरसात् । तथा च स एव धातुः पुनरुच्यत इति न तयोः परस्परमङ्गाङ्गिभावः समुचितः, किञ्च प्रकृतो धातुः पूर्वं परस्ताद्वेति विवेकासम्भवेनोभयोरपि तत्त्वमभ्युपेयमेव, तथा च प्रणिपपातेत्यादौ द्वित्वे पूर्वस्यापि *एकदेशविकृतमनन्यवत्* इति न्यायेन 'पत्'रूपत्वमक्षतमिति दोषाभावः । तथा च न तत्र स्वाङ्गत्वमूलकमव्यवधायकत्वमेष्टव्यमिति न तत्र न्यायप्रयोजनम् । संचस्कारेत्यादौ चैवंरीत्या नोपसर्गधात्वोरानन्तर्यक्षतिः । यदि चैकस्य धातोः स्थाने धातुद्वयमादिश्यत इति पक्षः स्वीक्रियते तदाऽपि स्थानिवद्भावेन कार्यमिति ज्ञेयम् । विवेचितौ च स्थानेद्विर्वचनद्विःप्रयोग-द्विर्वचनपक्षौ महाभाष्ये "एकाचो द्वे प्रथमस्य" [ पा० सू० ६. १. १. ] इति सूत्रे साधुतया, तथा हि–"अथ यस्य द्विर्वचनं विधीयते किं तस्य स्थाने भवति, आहोस्विद् द्विः प्रयोग इति । कश्चात्र विशेषः ? "स्थाने द्विर्वचने णिलोपवचनं समुदायादेशत्वात्" [ वार्तिकम् ], स्थाने द्विर्वचने णिलोपो वक्तव्यः–आटिटत्, आशिशत् । किं कारणम् ? समुदायादेशत्वात् । समुदायस्य समुदाय आदेशः, तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययसमुदायस्य नष्टो णिर्भवतीति "णेरनिटि" [ पा० सू० ६. ४. ५१. ] इति णिलोपो न प्राप्नोति । इदमिह संप्रधार्यम्–द्विर्वचनं क्रियतां णिलोप इति, किमत्र कर्त्तव्यम् ? परत्वाण्णिलोपः । नित्यं द्विर्वचनं कृतेऽपि णिलोपे प्राप्नोत्यकृतेऽपि, अनित्यं द्विर्वचनम्, अन्यस्य कृते णिलोपे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । नित्यमेव द्विर्वचनम्, कथं ? रूपस्य स्थानिवत्त्वात् । "यच्च सन्यङन्तस्य द्विर्वचने" [ वार्तिकम् ], यच्च सन्यङन्तस्य द्विर्वचने चोद्यं तदिहापि चोद्यम् । किं पुनस्तत् ? 'सन्यङन्तस्येति चेदशः सन्यनिटः······' इत्यादि, अस्तु तर्हि द्विःप्रयोगो द्विर्वचनम् । "द्विःप्रयोग इति चेण्णकारपकारादेशादेरेत्ववचनं लिटि" [ वार्तिकम् ], द्विःप्रयोग इति चेण्णकार-पकारादेशादेरेत्वं लिटि वक्तव्यम्–'नेमतुः, नेमुः, सेहे, सेहाते, सेहिरे, अनादेशादेरिति प्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशः, तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स आदेशादिर्भवति । द्विःप्रयोगेऽपि सति द्विर्वचने न दोषः । वक्ष्यति तत्र लिड्ग्रहणस्य प्रयोजनम्–लिटि य आदेशादिस्तदादेरेवेति । "इड्वचनं च यङ्लोपे" [ वार्तिकम् ], इट् च यङ्लोपे वक्तव्यः–बेभिदिता, बेभिदितुम् । एकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदायं आदेशः, तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स भवति य एकाजुपदेशेऽनुदात्तः । द्विःप्रयोगे चापि द्विर्वचने न दोषः, एकाज्ग्रहणेनाङ्गं विशेषयिष्यामः–एकाचोऽङ्गादिति । ननु चैकैकमत्राङ्गम् । समुदाये या वाक्यपरिसमाप्तिस्तयाङ्गसंज्ञा भविष्यति । कुत एतत् ? शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति । "इड्दीर्घप्रतिषेधश्च" [ वार्तिकम् ], इटो दीर्घत्वस्य च प्रतिषेधो वक्तव्यः, 'जरीगृहिता जरीगृहितुम्' 'ग्रहोऽलिटि दीर्घः" [ पा० सू० ७. २. ३७. ] इति दीर्घत्वं प्राप्नोति । स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो ग्रहिः । द्विःप्रयोगे चापि द्विर्वचने न दोषः–ग्रहिणाऽङ्गं विशेषयिष्यामः–ग्रहेरङ्गादिति । ननु चैकैकमप्यत्राङ्गम्, समुदाये या वाक्यपरिसमाप्तिस्तयाङ्गसंज्ञा भविष्यति । कुत एतत् ? शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति । "पदादिविधिप्रतिषेधश्च" [ वार्तिकम् ], पदादिलक्षणविधेः प्रतिषेधो वक्तव्यः, सिषेच, सुष्वाप । "सात्पदाद्योः" [ पा० सू० ८. ३. १११. ] इति षत्वप्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति न दोषः– समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स पदादिर्भवति ॥ द्विःप्रयोगे चापि द्विर्वचने न दोषः । सुप्तिङ्भ्यां पदं विशेषयिष्यामः–सुप्तिङन्तं पदम्, यस्मात् सुप्-तिङ्विधिस्तदादि सुबन्तं तिङन्तं च । ननु चैकैकस्मादप्यत्र सुप्तिङ्विधिः ? । समुदाये या वाक्यपरिसमाप्तिस्तया

पदसंज्ञा भविष्यति । कुत एतत्? शास्त्राहानेः, एवं हि शास्त्रमहीनं भवति ।

"तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिराद्या ।
आदिग्रहणं च कृतं समुदायपदत्वमेतेन ॥

अयमाशयः–पाणिनीये नये "एकाचो द्वे प्रथमस्य" [पा० सू० ६. १. १.] "अजादेर्द्वितीयस्य" [पा० सू० ६. १. २.] "लिटि धातोरनभ्यासस्य" [पा० सू० ६. १. ८.] इति त्रिसूत्र्यां लिटि [परोक्षायां] परेऽनभ्यास [अकृतद्विर्वचन]-धात्ववयवस्य प्रथमस्यैकस्वरस्य द्वित्वं स्यात्, स्वरादेस्त्वादिभूतात् स्वरात् परस्य द्वितीयस्यैकस्वरस्य द्विः स्यादित्यर्थो भवति । तत्रेदं शङ्क्यते– किमिदं स्थाने द्विर्वचनम्?–एकस्य स्थाने द्वावेकस्वरावादेशौ भवत इति, आहोस्विद् द्विः प्रयोगमात्रम् । अस्ति चोभयोः पक्षयोः संभवः; तथाहि–कैयटः–"तत्र 'द्वे' इत्येतत् संख्येये वर्तते, तच्च संख्येयं शब्दानामन्वाख्येयत्वेन प्रस्तुतत्वात् शब्दरूपं वा स्यात् तत्सम्बन्धि वोच्चारणम् । तत्र यदा शब्दस्वरूपं संख्येयं तदा 'एकाचः' [एकस्वरस्य] इति स्थाने योगा षष्ठी "षष्ठी स्थाने योगा" [पा० सू० १. १. ४९.] इति परिभाषोपस्थानात् । तदा स्थाने द्विर्वचनमित्येष पक्षो भवति, यथा–"अस्तेर्भूः" [पा० सू० २. ४ ५२.] ["अस्ति-ब्रुवोर्भू-वचावशिति" [४. ४. १.] इति । यदा तूच्चारणं संख्येयं तदा तस्य क्रियारूपत्वात्, क्रियायाः शब्दस्य च स्थान्यादेशभावायोगात् 'एकाचः' [एकस्वरस्य] इति कर्मणि षष्ठी विज्ञायते उच्चारणशब्दाध्याहारेण, शेषलक्षणा वा, यथा मातुः स्मरतीति द्विःप्रयोगो द्विर्वचनमित्येष पक्षो भवति । तत्र गुणदोषपरीक्षार्थो विचारः क्रियते" इति । तत्र स्थाने द्विर्वचनपक्षे–'आटिटत्, आशिशत्'इत्यादौ स्वरादेर्द्वितीयस्यैकस्वरस्य 'टि' 'शि' शब्दस्य स्थाने 'टिटि, शिशि'शब्दादेशे प्रकृतिप्रत्यययोः सम्प्रमुग्धत्वात्–विशिष्यागृह्यमाणत्वात् [को णिः क आदेश इत्यनिर्णयादिति यावत्] णेर्लोपो न प्राप्नोति । न च स्थानिवद्भावेन णित्वम्, णिमात्रस्य द्वित्वाभावात्, समुदायस्य 'टि'शब्दादेर्द्वित्वविधानात् । यदि च पूर्वं णिलोप एव क्रियतामित्युच्यते, तदा द्विर्वचनस्य कृतेऽकृते च णिलोपे प्राप्तेर्नित्यत्वेन द्विर्वचनमेव स्यादिति णिलोपानापत्तिरिति णिलोपार्थं यत्नः कर्तव्यः स्यादिति तत्परिहाराय द्विःप्रयोगपक्ष एव स्वीकार्य इति चेदुच्यते- [एतदेव च स्वमतम्, यतो हि स्वमते "द्विर्धातुः परोक्षा-ङे०" [४. ४. १.] इति सूत्रे धातुरिति प्रथमान्ततया निर्दिश्यते, तथा च षष्ठीविभक्त्यभावात् स्थाने द्विर्वचनपक्षस्य स्वमते नास्ति शङ्का] तत्राप्ययं दोषः 'नेमे, सेहे' इत्यादौ णकारस्य स्थाने नकार आदिश्यते षकारस्य स्थाने सकार इत्यादेशादित्वेन "अनादेशादेरेकव्यञ्जनमध्येऽतः" [४. १. २४.] इत्येत्वं न स्यात्, स्थाने द्विर्वचनपक्षे तु द्वित्वे कृते सति आदेशादिस्थानेऽनादेशादेरादेशान्न दोषो भवति [स्वमते चात्र द्वित्वं निषिध्यत इति सर्वथा आदेशादित्वमस्त्येव], यदि च परोक्षया आदेशादित्वस्य विशेषणादत्र न दोषः परोक्षानिमित्तस्यादेशस्याभावादित्युच्यते, तदा बेभिदितेति यङ्लुपि इडभावो दोषो बोध्यः । द्विःप्रयोगरूपत्वेन स्वाभाविकैकस्वरत्वाविधानात् "एकस्वरादनुस्वारेतः" [४. ४. ५६.] इतीट्प्रतिषेधात् यदि चात्रेड्विधानसमयस्थितमनेकस्वरत्वं श्रूयमाणमेव गृह्यत इत्युच्यते तदाऽपि 'जरीगृहिता' इत्यादौ "गृह्णोऽपरोक्षायां दीर्घः" [४. ४. ३४.] इति दीर्घः प्राप्नोति, स्थाने द्विर्वचनपक्षे चान्य एव धातुरिति न भवति । यदि चात्र समुदायस्य ग्रहिरूपत्वाभावाददोष इत्युच्यते, तदा 'सिषेच' इत्यादौ द्वितीयसकारस्य पदादित्वात् 'पदान्तःस्थस्य' इत्युच्यमानं षत्वं न प्राप्नोति, द्वितीयस्यापि सिचस्त्याद्यन्तत्वनिमित्तपदत्वात्, स्थाने द्विर्वचनपक्षे च समुदायस्य स्थाने 'सिच् सिच् अ' इत्यादिसमुदायरूप आदेश इति प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य [प्रकृतिज्ञानस्य प्रत्ययज्ञानस्य चाभावादिति भावः] स पदादिर्न भवतीति षत्वं सिद्ध्यति । इत्थमयमपि दोषो द्विःप्रयोगरूपद्विर्वचनपक्षे परिह्रियते–द्विःप्रयोगे उच्चारणभेदाच्छब्दभेदे सत्यपि 'सिच् सिच् णव्' इत्यस्यैव पदसंज्ञा, तस्यैव त्याद्यन्ततदादित्वात् त्याद्यन्ततदादेरेव च पदत्वात्, तथा च द्वितीयसिचः पदत्वाभावेन तदीयसकारस्य पदादित्वाभावात् पदान्तःस्थत्वं सूपपन्नमिति तस्य षत्वं भवत्येवेति । इत्थं च यद्यप्युभयोः पक्षयोर्दोषोद्धारः संभवति, तथापि द्विःप्रयोगरूपद्विर्वचनपक्षस्यैव भाष्यकृता सिद्धान्तरूपेणाश्रयणादत्र च पक्षे न किमपि कञ्चिदवयविनमुद्दिश्य विधीयते इति कस्याप्यङ्गाङ्गिभाव इति नैतद्विषयेऽस्य न्यायस्योपयोगस्तन्मते इति कृतमधिकेनेति ॥ ११ ॥

## *उपसर्गो न व्यवधायी ॥ १२ ॥

सि०—प्रादीनामुपसर्गत्वं धातोः प्राक् प्रयोज्यत्वं च सामान्यत एव "धातोः पूजार्थस्वति-गतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च" [३. १. १.] इति सूत्रेणानुशिष्टम्, किन्तु तस्य व्यवहिता-व्यवहितप्रयोगविषये न किमपि नियमितं, तथापि 'धातोः प्राक्' इति निर्देशे पञ्चम्याऽव्यवहितपूर्वत्वमेव गम्यत इति तदव्यवहित एव प्रयोग उपसर्गाणाम्, तथापि तेषां पदत्वेन पदान्तरेण सहाख्यातस्य व्यवधायकत्वं प्राप्तम्, तत्राव्यवधायकत्वसाधकोऽयं न्यायः । न च 'धातोः प्राक्' इत्यत्र धातोरिति षष्ठ्यन्तत्वमाश्रित्य प्राक् पदस्य च पूर्वावयववाचित्वमाश्रित्य धातोराद्यवयवत्वेन तेषां *स्वाङ्गमव्यवधायि* इति पूर्वोक्तन्यायेनैवाव्यवधायकत्वं

सिद्धमिति वाच्यम्, प्राक्शब्दस्य दिग्वाचकत्वेन दिक्शब्दयोगलक्षणपञ्चम्या एव तत्र प्रतिपदोक्तत्वेन प्राबल्यात्, प्राक्शब्दस्य पूर्वावयववाचकत्वस्य क्वाप्यदर्शनाच्च । अस्य च ज्ञापकम्—"गायोऽनुपसर्गाट्टक्" [ ५. १. ७४. ] इति सूत्रेऽनुपसर्गादित्युपसर्गवर्जनम्, तस्य हि साम संगायतीत्यर्थे सामसंगाय इत्यत्र टकोऽप्रवृत्त्यर्थत्वम्, यदि चोपसर्गस्य व्यवधायकत्वं स्यात् तर्हि सामसंगाय इत्यत्र कर्मणो व्यवहितत्वाद् गायतेः कर्मणः परत्वाभावाट्टकः प्राप्तिरेव नेति तद्वारणायोपसर्गपरत्ववर्जनं वृथैव स्यात्, वृथाभूतं च तदिमं न्यायं ज्ञापयति, ज्ञापिते चास्मिन् न्याये उपसर्गस्याव्यवधायकत्वे सिद्धे सामसंगाय इत्यत्रापि टकः प्राप्तिरिति तद्वारणयोपसर्गवर्जनं सार्थकम् । तथा चास्या[ टको ऽ ]प्राप्तौ "कर्मणोऽण्" [ ५. १. ७२. ] इत्येव भवतीति सामसंगाय इति सिध्यति । फलं चास्य "उक्षां प्रचक्रुर्नगरस्य मार्गान्" [भट्टि० स० ३।५] इत्यादिकविप्रयोगाणां साधुत्वमेव । एतन्न्यायाभावे न ह्यत्र "गुरुनाम्यादेः०" [ ३. ४. ४८. ] इति परोक्षाया आमादेशे कृते 'कृभ्वस्ति चानुतदन्तम्' इति परोक्षान्ततयाऽनुप्रयुज्यमानस्य कृगो मध्यस्थितेनोपसर्गेणाम्प्रकृतितोऽव्यवधानम्, अन्वित्यव्ययेन हि पश्चादर्थेन ततोऽव्यवहितस्यैव [ आम्प्रकृतिसन्निहितस्यैव ] कृगः प्रयोगस्यौचित्यं प्रतिभाति । यदि च मध्ये प्रशब्द उपसर्गः कविना प्रयुक्तस्तर्हि तस्य व्यवधायित्वेनानुप्रयुज्यमानत्वं कृगो न स्यात्, स्वीकृते चात्र न्याये प्रशब्दस्याव्यवधायकत्वेन कृगोऽव्यवधानादनुप्रयुज्यमानत्वं सिध्यति । "अयं च न्यायोऽनैकान्तिकः, तेन समागच्छतीत्यत्र सम आङा व्यवधानात् "समो गमृच्छि-प्रच्छि-श्रु-वित्-स्वरत्यर्ति-दृशः" [ ३. ३. ८४. ] इत्यात्मनेपदं न भवति" इति प्राञ्चः । वस्तुतस्तु—उपसर्गस्यान्यं प्रत्यव्यवधायकत्वेऽनेन न्यायेनोच्यमाने उपसर्गाणां परस्परं व्यवधायकत्वमपाकर्तुं न शक्यते, तथा चोपसर्गस्याङोऽन्यं प्रत्यव्यवधायकत्वेऽपि स्वसजातीयमुपसर्गं प्रति व्यवधायकत्वं स्यादेवेति नात्रात्मनेपदप्राप्तिरिति न तदर्थमस्य न्यायस्यानित्यत्वमाश्रयणीयम् । किञ्च कर्मण्यसत्येवात्मनेपदं भवति, समागच्छतीत्यत्र कर्मणो विवक्षायां परस्मैपदं निराबाधमेवेति ॥ १२ ॥

---

## *उपसर्गो न व्यवधायी* ॥ १२ ॥

त०—धातोः प्राक् प्रयुज्यमानः प्रादिरुपसर्गसंज्ञां लभते, स च न कस्यचिदवयवः, पदत्वं च तस्य सिद्धमेव । तथा च न तस्य धात्वन्तर्गतत्वम् । एवं च "उक्षां प्रचकुर्नगरस्य मार्गान्" एवं—"विभरां प्रचकारासौ" इति च भट्टिकविप्रयोगे आमन्तादनुप्रयुज्यमानस्य कृगः प्रेण व्यवधानं प्राप्नोति, 'अनुशब्दस्य पूर्वदेश-कालव्यावर्त्तकत्वेन पश्चाच्छब्दपर्यायत्वे लोकप्रसिद्धेऽपि 'काशीतः पश्चिमे प्रयागो मथुरा पुष्करं द्वारका' इत्यत्र देशे, 'चैत्रतः पश्चाद् वैशाखो ज्येष्ठः श्रावणः' इत्यादौ काले च पश्चाच्छब्दस्य यद्यपि व्यवहिताव्यवहितसाधारणत्वं प्राप्तं, तथापि 'अनु' इत्यस्योच्चारणसामर्थ्याद्व्यवहितत्वेन प्रयुज्यमानत्वमेव कृभ्वसामिति प्रतीयते । अत्र च प्रेण व्यवधानादसाधुत्वं स्यादित्ययं न्याय आश्रीयते । तथा च नात्र व्यवधानमिति सिद्ध्यति । भट्टिकाव्यव्याख्याता जयमङ्गलाकारस्तु—अनुशब्दोच्चारणसामर्थ्यादव्यवहित एव प्रयोगे विधेये प्रशब्दव्यवधानं नोचितमिति 'उक्षान् प्रचकुर्नगरस्य मार्गान्' 'प्रविभरां चकारासौ' इत्येवंरूपेण पाठं परिकल्पितवान् । "कृञ्चानु प्रयुज्यते लिटि" [ पा० सू० ३. १. ४०. ] इति सूत्रस्थमहाभाष्यग्रन्थपर्यालोचनया तु भिन्नार्थसत्त्वप्रधानशब्दव्यवधानमेव निवर्त्तनीयमनुप्रयोगसामर्थ्यादिति लभ्यते, उपसर्गस्य च धात्वर्थद्योतकत्वेन भिन्नार्थत्वाभावादसत्त्वप्रधानत्वाच्च न व्यवधायकत्वम् । तथाहि—तत्रत्यग्रन्थः—"किमर्थमिदमुच्यते ? अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम्, आमन्तमव्यक्तपदार्थकं, तेनापरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति, "विपर्यासनिवृत्त्यर्थं वा" [ वार्तिकम् ], विपर्यासनिवृत्त्यर्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते, ईहांचक्रे, चक्रे ईहामिति मा भूत् । "व्यवहितनिवृत्त्यर्थं च" [ वार्तिकम् ], व्यवहितनिवृत्त्यर्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते, अन्वेव च कृञोऽनुप्रयोगो यथा स्यात्—ईहांचक्रे, व्यवहितस्य मा भूत्—'ईहां देवदत्तश्चक्रे' इति ।" इति । इत्थं चेमं ग्रन्थं कैयटो व्याचख्यौ—"अन्तरेणापि सूत्रारम्भमनुप्रयोगः सिद्धः कालसंख्या-साधनप्रत्यक्त्वादिप्रतिपादनाय लिट्परस्य कृञः । आमन्ताद्धि कालविशेष एवावसीयते, न त्वर्थान्तरम्, तत्र समानार्थस्य धातोरनुप्रयोगो न भविष्यति, ओषामुवोषेति, उत्तरेणैव सर्वार्थाभिव्यञ्जनादामन्तस्यानर्थक्यप्रसङ्गात् । नापि भिन्नार्थस्य—ईहां पपाचेति, आमन्तसम्बद्धसाधनाद्यसंप्रत्ययात् । कृञ् तु सामान्यवचनः, सामान्य-विशेषवाचिनोश्च प्रयोगोऽर्थविशेषप्रतिपादनेऽनुगुण इति भावः" इति । अयमाशयः—परोक्षास्थानिकामन्तेन कारक-संख्यादीनां क्षमते । मतान्तरे च कालस्यापि बोधो नैव जायत इति तद्बोधनाय विनाऽपि वचनं परोक्षापरस्य कृञोऽनुप्रयोगो भविष्यत्येव । न च कृञ एव कुतोऽनुप्रयोगो भविष्यति, समानार्थस्यैव, भिन्नार्थस्यैव वा धातोः परोक्षापरस्यानुप्रयोगः कुतो न भविष्यति ?, तत्र समानार्थस्य यथा—ओषामुवोषेति, भिन्नार्थस्य यथा—ईहां पपाचेति वाच्यम्, उवोषेत्यनेनैव ओषामित्यस्यापि गतार्थत्वात् समानार्थस्याप्रयोगात्, भिन्नार्थेन तु आमन्तधातुसम्बद्धकारकादीनामसंप्रत्ययाच्च । तथा च ईहधातुर्विशेषवाची कृञ् च क्रियासामान्यवाची ततोऽनुप्रयुज्यते, इति सामान्य-

विशेषवाचिनोर्नीलो घट इत्यादाविव प्रयोगः स्वभावादेव भविष्यतीत्यनुप्रयोगविधानं नावश्यकमिति "किमर्थमिदमुच्यते" इति भाष्यप्रश्नाशयः । ततो 'अनुप्रयोगो यथा स्यात्' इति ग्रन्थं व्याचख्यौ—"यद्यप्यामन्तात् सकलार्थाभिव्यक्तिर्न भवति तथापि प्रकरणवशाद् भविष्यति, तस्मादनुप्रयोगसिद्ध्यर्थमिदं [ अनुप्रयोगविधानं ] वक्तव्यमिति भावः" इति । पुनरप्यनुप्रयोगस्यान्यथासिद्धत्वमाह भाष्यकृद्—"नैतदस्ति प्रयोजनम्" इत्यादिना । तस्य व्याख्यानम्—"पूर्वोक्तानामर्थानां [ कालसाधनादीनां ] प्रकरणादिवशादशक्त्या प्रतिपत्तिरिति तदर्थाभिधानायानुप्रयोगः सिध्यत्येवेति भावः" इति कैयटेन कृतम् । ततोऽनुप्रयोगवचनस्य बहुशः प्रयोजनानि मध्ये प्रतिपाद्य खण्डयित्वा चाह भाष्यकृत्–विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेत्यादिना । तस्यायमाशयः–आमन्तेनापरिसमाप्तस्यार्थस्य प्रतिपादनाय कृभ्वस्तां प्रयोगे सिद्धेऽपि देशनियमार्थमनुप्रयोगविधानम्, अनुशब्दस्य पश्चादर्थत्वात्, तेनामन्तस्य पश्चादेव कृञ् प्रयुज्यते न तु पूर्वं नापि व्यवहितमित्यर्थलाभ इति । अनेन च भाष्येण यद्यपि सामान्यत एव व्यवहितप्रयोगो निषिद्धः, तथापि 'ईहां देवदत्तश्चक्रे' इत्येवं व्यवहितप्रयोगस्य भाष्यकृता व्यावर्त्यत्वेन प्रदर्शनात्, अग्रे "यथाविध्यनुप्रयोगः पूर्वस्मिन्"[ पा० सू० ३. ४. ४. ] इति सूत्रे तत्खण्डनपरभाष्यव्याख्यानावसरे–"अत एव लुनीहि लुनीहीत्येवायं लुनाति"इति भाष्यप्रयोगे [ अनुप्रयुज्यमानस्य ] व्यवहितप्रयोगः संगच्छते"इति नागेशव्याख्यानेन चानुप्रयोगस्थले द्रव्यवाचकेनैव व्यवधानं व्यावर्त्तनीयमिति शिवदत्तादिभिष्टिप्पण्यां [ ३. १. ४०. ] निर्णीतम् । तत्र च वैदिकप्रयोगादीनामुदाहरणेन "उक्षां प्रचकुर्नगरस्य मार्गान्"-इत्यादिकविप्रयोगा अपि भाष्यानुकूला इति साधितम् । "विपर्यासनिवृत्त्यर्थं, व्यवहितनिवृत्त्यर्थं च" इति वार्त्तिकाभ्यां च "तं पातयां प्रथममास पपात पश्चात्" "प्रभ्रंशयां यो नहुषं चकार" [ रघुवंश० स० १३. ३६ ] इत्यादिव्यवहिताः "नारेश्चकार गणयामयमत्र पातान्"इत्यादिविपर्यस्ताः प्रयोगाश्च व्यावर्त्याः । तेऽपि च छन्दोवत् कवयः कुर्वन्तीति वदता भाष्यकृता साधुत्वेन गृहीता इति केचित् । वस्तुतस्तु–उक्षां प्रचकुरित्यादयोऽपि प्रयोगाः "तं पातयां प्रथममास"इत्यादिकविप्रयोगा इव छान्दसा एव, व्यवहितप्रयोगस्याक्षरानुगुणत्वात् । तथा चेदृशस्थले उपसर्गस्य व्यवधायकत्वमेव । "गायोऽनुपसर्गाट्टक्" [ ५. १. ७४. ] इत्यादावुपसर्गवर्जनं चोपसर्गार्थस्य धात्वर्थान्तर्भावेणोपसर्गस्य च तद्व्यञ्जकत्वेन धात्वङ्गभूततया तस्य [ कर्मणः ] सोपसर्गधातुं प्रत्येव कर्मत्वादव्यवधायकत्वमाश्रित्यैव, अनुप्रयोगस्थले चानुप्रयुज्यमानस्य सामान्यार्थकस्यैव सूत्रविधेयत्वेन सोपसर्गस्य तस्यानुप्रयुज्यमानत्वासम्भवादुपसर्गस्य व्यवधायकत्वमेवोचितम् । 'लुनीहि लुनीहीत्येवायं लुनाति' इत्यादिभाष्यप्रयोगेषु व्यवहितत्वेनानुप्रयुज्यमानस्य प्रयोगश्च तत्राव्यवहितप्रयोगस्यानिष्टत्वसूचक एव, न तु सर्वत्रानुप्रयुज्यमानस्य व्यवहितप्रयोगे साधुत्वसूचक इत्यवधेयम् ॥ १२ ॥

## *येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्* ॥ १३ ॥

सि०—येनेति कर्तरि तृतीया, न व्यवधानमव्यवधानम्, न अव्यवधानम्—नाव्यवधानम्, नैकधेत्यादाविव निषेधार्थो 'न'शब्दो न तु नञ्, तेन समासोऽसमस्तमेव वा पदम् । तथा च नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वेन यत्कर्तृकमवश्यव्यवधानं प्राप्नोति, तेन व्यवहितेऽपि [ तत्कर्तृकव्यवधानसद्भावेऽपि, कार्यं ] स्यादिति न्यायार्थः । निमित्त-कार्यिणोरव्यवधानमेव कार्यविधावपेक्षितम्, तत्र यत्र वचने निमित्त-कार्यिणोरव्यवधानमसंभवि तत्र व्यवहितेऽपि कार्यं भवति वचनप्रामाण्यात् । तथा च तादृशं वचनरूपं सूत्रमेवेह ज्ञापकम्, यथा "स्वरादुतो गुणादखरोः" [ २. ४. ३५. ] इति सूत्रेण स्वरात् परो य उत् तदन्ताद् गुणवचनात् खरुवर्जात् स्त्रियां ङीर्वा विधीयते, तत्र स्वरात् परत्वमुतः केवलं 'तितउ'शब्दे दृश्यते, किन्तु स न गुणवाची किन्तु द्रव्यवाची, ये च गुणवचनत्वेन महाभाष्याद्यनुसारं बृहद्वृत्त्यादौ परिभाषिताः शब्दास्तेषु न कोऽपि तादृश इति विधेर्वैयर्थ्यमेवायाति, किञ्चैवं खरुवर्जनमपि न युज्यते, खरुशब्देऽपि स्वरात् परस्योकारस्यासत्त्वात् तत्र प्राप्तेरेवाभावेन निषेधस्यानौचित्यादिति विधिवर्जनाभ्यामुभाभ्यां स्वसार्थक्यायायं न्यायो विज्ञाप्यते । तथा चैकव्यञ्जनव्यवधानेऽपि 'पटु-मृदु'प्रभृतीनां शब्दानामत्र उद्देश्यकोटौ ग्रहणात् ततो ङीविधानेन सूत्रस्य सार्थक्यं खरुवर्जनस्य च । फलं चान्यत्रापि भेत्तेत्यादौ "लघोरुपान्त्यस्य" [ ४. ३. ४. ] इति गुणसिद्धिः, अन्यथा 'अक्ङिति' इति सप्तम्या "सप्तम्या पूर्वस्य" [ ७. ४. १०६. ] इति परिभाषासूत्रस्योपस्थानाद् क्ङिद्वर्जप्रत्ययाऽव्यवहितपूर्वस्यैव लघोर्नामिन उपान्त्यभूतस्य गुणः स्यादिति भेत्तेत्यादौ क्वापि गुणो न स्यात् । एतन्न्यायाच्चोपान्त्यस्य विधीयमानविधावन्त्येनैकेन वर्णेन व्यवधानस्यावश्यंभावित्वेन तेन व्यवहितेऽपि गुणप्रवृत्तौ बाधकाभावः । नाव्यवधानमिति नञ्द्वयोपादानमवर्जनीयव्यवधानग्रहणार्थमेव, तेन च यत्राव्यवधानेऽपि सूत्रप्रवृत्तिः संभाव्यते तत्र नास्य न्यायस्य प्रसरः, यथा "ज्युंङ् गतौ" इत्यस्माद्धातोर्णिगि सनि च जुज्यावयिषतीति रूपं भवति, अत्र निमित्तभूताया अवर्णान्ताया अन्तस्थाया जका-

रेण व्यवधानाद् द्वित्वे पूर्वस्योकारस्य "ओर्जान्तस्था पवर्गेऽवर्णे" [ ४. १. ६०. ] इति इत्वं न भवति, यतोऽव्यवहिते 'यियविषति' इत्यादिलक्ष्यस्थे उकारे सूत्रस्य [ "ओर्जान्तस्थापवर्गेऽवर्णे" इत्यस्य ] चारितार्थ्यसत्त्वेन व्यवहितप्रवृत्तेरवर्जनीयत्वाभावेनावश्यव्यवधानमिह नास्ति, ततश्च जुज्यावयिषतीत्यत्र व्यवहितान्तस्थाया ग्रहणं न भवतीति नात्रेत्वप्रवृत्तिः । इमं चार्थं प्राचीना येन नाव्यवधानमिति किमित्येवं रीत्या पदकृत्यप्रदर्शनेन सूचयन्ति, तच्च न चारु–'येन नाव्यवधानम्' इतीयतोंऽशस्याभावे न्यायस्वरूपं किं स्यात् ?, व्यवहितेऽपि स्यादित्येतावदेव । तथा च सर्वस्य शास्त्रस्य व्यवहितेऽपि प्रवृत्तिः स्यात्, न च तदिष्टं न चापि तत्र किमपि मानम् । तथा च न्याय एव किमर्थं इति तस्य प्रश्नस्याशयोऽवधारणीयः, तथा चैतन्न्यायलक्ष्यासिद्धिरेव तत्र दोषत्वेन प्रदर्शनीयाऽव्याप्तिदोषस्यातिव्याप्तिदोषापेक्षया प्राबल्यात् । यदि च समुदायद्वाराऽवयवे प्रश्नः 'नञ्द्वयोपादानं किमर्थम्' इतिरूपस्तदा साध्वेव, तथा सति प्रागुक्तास्मदाशयस्यैव स्थैर्यात् । अयं च शास्त्रसामर्थ्याक्षिप्त इति नानैकान्तिकः ॥ १३ ॥

## *येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्* ॥१३॥

त०—यत्रोपान्त्यस्य कार्यं विधीयते तत्र निमित्तस्य सप्तम्या निर्दिष्टस्याव्यवधानं न संभवतीति किं तत्र "सप्तम्या पूर्वस्य" [ ७. ४. १०५. ] इति परिभाषाशास्त्रबाध उत विधिवैयर्थ्यमेव ?, "स्वरादुतो गुणादखरोः" [ २. ४. ३५. ] इत्यादौ स्वरात् परत्वमुकारस्य गुणवाचकशब्देष्वदृष्टमिति विधिवैयर्थ्यम्, तथा च भेत्तेत्यादौ "लघोरुपान्त्यस्य" [ ४. ३. ४. ] इत्यादीनामप्रवृत्तिरथ वा परिभाषाबाधात् निन्दितेत्यादावपि प्रवृत्तिः, उप्रत्ययस्य च मृद्वीत्यादावप्रवृत्तिरथ वा "पञ्चम्या निर्दिष्टे परस्य" [ ७. ४. १०४. ] इति परिभाषाबाधात् पाण्डुर्भूमिरित्यादावपि प्रवृत्तिरित्यव्याप्त्यतिव्याप्तिरूपदोषद्वयनिरासायायं न्यायः समाश्रीयते तत्तच्छास्त्रप्रणयनसामर्थ्यात्, तथा च न दोषः । अन्यैरपि न्यायोऽयं समाश्रीयत एव, परं न्यायमध्ये न पठितः परिभाषेन्दुशेखरादौ । दीक्षितादिना च "पुगन्तलघूपधस्य च" [ पा० सू० ७. ३. ८६. ] इति सूत्रव्याख्यावसरे ज्ञाप्यत्वेन निर्दिष्ट एव । 'येन नाव्यवधानं तेन व्यवहितेऽपि' इति कथनेन तेन तदन्येन च व्यवहितेऽपि कार्यमिति तु न शङ्कनीयम्, अवश्यव्यवधायकव्यवधान एव प्रवृत्तेरिष्टत्वेन तेनैव व्यवहित इत्यर्थस्यापि सामर्थ्यलब्धत्वात्, अन्यथा भेत्तेत्यादाविव भिनत्तीत्यादावपि गुणः स्यात् । तेनैव व्यवहित इत्युक्तेश्च तदन्येन व्यवधाने न प्रवर्तते । 'तेनैव व्यवहिते' इत्ययमर्थश्च न नवीनोऽपि तु नाव्यवधानमिति नञ्द्वयोपादानलभ्यः । स्पष्टं चेदं तत्रैव [ सिद्धान्तकौमुद्यां ] ध्वनितं दीक्षितेन । एवं च येन नाव्यवधानमिति नञ्द्वयोपादानस्यैव सार्थक्यप्रदर्शनं यदि प्राचीनानामभिप्रेतं स्यात् तर्हि भिनत्तीत्यादौ गुणव्यावृत्तिरेव प्रदर्शनीया स्यान्न तु जुज्यावयिषतीत्यादाविस्वाप्रवृत्तिरिति विभावनीयं सूरिभिरिति । एतन्न्याये "स्वरादुतो गुणादखरोः" [ २. ४. ३५. ] इति सूत्रस्य तत्रत्यखरुवर्जनस्य च ज्ञापकत्वोपन्यसनं दिङ्मात्रप्रदर्शनाय । एवंभूतानां शास्त्राणां प्रणनयनेनाचार्यस्येयं शैली लक्ष्यते यत्–"सप्तम्या पूर्वस्य" [ ७. ४. १०५. ] इत्यादिशास्त्रेपु सविशेषणस्योद्देश्यस्याव्यवहितत्वं निमित्तेन लक्ष्यते । तथा चोपान्त्ये हि अन्त्यं विशेषणत्वेन स्वरूपमध्यप्रविष्टमिति तद्व्यवधानं न गण्यते स्वस्वरूपस्याव्यवधायकत्वस्य *स्वाङ्गमव्यवधायि* इति न्यायेनैव लाभात् । एवं "स्वरादुतो गुणात्०" [ २. ४. ३५. ] इत्यादावेकस्मिन् गुणवाचके शब्दे स्वरात् परत्वं स्वरूपस्योकारस्य कथ्यमानं स्वरान्तरसमानकालिकमात्रावद्वर्णाव्यवधायकत्वं लक्षयतीति व्यञ्जनद्वयव्यवधाने मात्राकालव्यवधानान्न प्रवृत्तिरिति, ततश्च न्यायोऽयं नापूर्वार्थज्ञापक इत्यलम् ॥ १३ ॥

## *ऋकारापदिष्टं लकारस्यापि* ॥ १४ ॥

सि०—ऋकारेण अपदिश्यते इति ऋकारापदिष्टं कर्मणि क्तः, तथा च ऋकारमुच्चार्य विधीयमानं कार्यं लृकारस्यापि भवतीति शेषः । अयं च न्यायः "दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत्" [ ७. ४. ९९. ] इति सूत्रे लृग्रहणेन ज्ञाप्यते । तथाहि–ऋकारवर्जस्य स्वरस्यानेन प्लुतो विधीयमान लृकारस्यापि स्वभावत एव सिद्ध इति लृकारस्य पुनस्तत्र ग्रहणं तस्य ऋकारवर्जनेन वर्जितत्वं द्योतयति, तच्च तदैव संभवति यदाऽयं न्यायः स्वीकृतः स्यादित्येतन्न्यायं विना सार्थक्यमलभमानम् लृकारग्रहणमेतन्न्यायज्ञापकम् । उक्तं चैतत् प्रकृतसूत्रे बृहद्वृत्तावपि । तथाहि–"लृकारग्रहणमनृदिति प्रतिषेधनिवृत्त्यर्थम् । अथ ऋतः प्रतिषेधे लृकारस्य कः प्रसङ्गः ? उच्यते–इदमेव ज्ञापकमृवर्णग्रहणे लृवर्णस्यापि ग्रहणं भवतीति, तेनाचीक्लृपदित्यादौ ऋवर्णकार्यम् लृवर्णस्यापि सिद्धं भवति" इति । अयमाशयः–ऋकारवर्जनेन लृकारवर्जनमेतन्न्यायेनैव लभ्यमिति स्वसार्थक्याय लृकारग्रहणमेतन्न्यायं ज्ञापयत्येव, तथा चाचीक्लृपदित्यत्र पूर्वमनैमित्तिकत्वात् पूर्वम् "ऋर लृलं कृपोऽकृपीटादिषु" [ २. ३. ९९. ] इति ऋत लृत्वे पश्चाद् द्वित्वे पूर्वस्य "ऋतोऽत्" [ ४. १. ३८. ] इति ऋकारस्य विधीयमानमत्त्वं लृकारस्यापि भवतीति प्रोक्तं रूपं सिद्ध्यति, अन्यथा न सिद्ध्येत् । अत्र यद्यपि वृत्तौ पठ्यमानन्यायस्वरूपादत्र पठ्यमानस्य न्यायस्य स्वरूपे भेदः, तथापि लृवर्णस्य क्वाऽपि

कृपेरादेशादन्यत्र तथाविधप्रयोगाभावादत्र च कार्यमात्रमेव लृकारस्य विधेयं न तु निमित्तत्वादिकमिति मत्वा लृकारापदिष्टमिति विशेषरूपेण कथितम् । दृश्यते चैवमपि पूर्वैरस्य न्यायस्योल्लेखः, तथाहि-"ऋर लृलं कृपोऽकृपीटादिषु" [ २. ३. ९९. ] इति सूत्रन्यासे-"दूरादामन्त्र्यस्य०" [ ७. ४. ९९. ] इत्यत्र ऋद्वर्जितस्य स्वरस्य प्लुतत्वं वदन् स्वरद्वारेणैव सिद्धे पुनरपि यत लृकारग्रहणं करोति, तदेव ज्ञापयति—ऋत्प्रतिषेधप्रसङ्गे लृतोऽपि प्रतिषेध इति ऋकारापदिष्टं कार्यम् लृकारस्यापीति" इति । तथा च तत्र न कोऽपि फले भेद इति ज्ञेयम् ॥ १४ ॥

## *ऋकारापदिष्टं कार्यं लृकारस्यापि* ॥ १४ ॥

त०—अन्ये वैयाकरणा ऋकार-लृकारयोः स्वसंज्ञामाहुः, तथा च तेषां मते ऋकारमुद्दिश्य विधीयमानं कार्यम् लृकारस्य स्वभावत एव सिद्धम् । स्वमते चैतयोः स्थानभेदात् स्वसंज्ञकत्वं नास्ति । अत एव सर्वत्र लृकारस्य कृते पृथगेवादेशादयो विहिताः, निमित्तत्वं च तस्य स्वातन्त्र्येणैवोच्यते । तथाहि—"अवर्णस्येवर्णादिनैदोदरल्" [ १. २. ६. ] इति सूत्रे लृकारस्याल् विहितः । "लृत्याल् वा" [ १. २. ११. ] इत्यत्र लृकारस्य निमित्तत्वमादेशश्च पृथगेवोच्येते । लॄकारश्च दीर्घोऽपि स्वमतेऽस्त्येवेति क्लॄकार इत्यादौ लृकारस्य लॄकार एव, न तु परमतवत् ऋकारः । एवं च स्वसंज्ञाफलत्वेन परैरभिमतानि कार्याणि स्वमते विशिष्यैव विहितानीति नास्ति स्वसंज्ञाफलम् । किन्तु 'अचीक्लृपत्' इत्यादौ ऋत लृत्वस्यान्तरङ्गत्वात् पूर्वं प्रवर्तने तत्र "ऋतोऽत्" [ ४. १. ३८. ] इत्यस्य प्रवृत्त्यर्थमयं न्याय आश्रीयते । तत्रेदं विचार्यते—नह्येकमुदाहरणं योगारम्भं प्रयोजयतीति भाष्योक्तदिशैकस्य कृपेर्ऋकारस्य स्थाने विहितस्य लृकारस्य "ऋतोऽत्" [ ४. १. ३८. ] इत्यत्र संग्रहाय एतावतः प्रयत्नस्यापेक्षया "ऋतोऽत्" [ ४. १. ३८. ] इति सूत्र एव "लृतोऽत्" इति लृकारर्कारयोरुभयोरुच्चारणं कार्यं "दूरादामन्त्र्यस्य०" [ ७. ४. ९९. ] इति सूत्रे च लृकारग्रहणं न कार्यम् । किं वा पाणिनीयतन्त्रवत् "ऋ-र लृ-लं कृपोऽकृपीटादिषु" [ २. ३. ९९. ] इति सूत्रमसत्काण्डे पठनीयम् । तथा च लृकारादेशस्य परद्ध्याऽसत्त्वेन ऋकारबुद्ध्यैव कार्योत्पत्तौ न्यायस्य तज्ज्ञापकस्य च "दूरादामन्त्र्य०" इति सूत्रस्थस्य लृकारग्रहणस्य नावश्यकत्वमिति । यद्यप्येवं सिध्यति तथापि साभिप्रायकाचार्यवचनविरुद्धं भवतीति यथान्यासमेव स्वीकृत्य वचनमिदमाश्रयणीयमेव । एवं च सति "ऋ-लृति ह्रस्वो वा" [ १. २. २. ]इत्यत्रोभयोर्ग्रहणस्य वैयर्थ्यमायातीति न्यायस्यास्यानित्यत्वमप्येष्टव्यम् । तत्फलं च स्वमते लॄकारस्यापि दीर्घस्य सत्त्वात् 'गम्लृ' इत्यस्यानुकरणरूपस्य गम्लृशब्दस्यापि गम्लृना-मित्यादौ ऋवर्णात् परत्वेन विहितत्वं णत्वं न भवतीति । एवं कृप्यमानं पश्येत्यत्र णत्वं न भवति । यद्यपि *वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते* इति मते प्रक्लृप्यमानं पश्यतीत्यत्र लकारव्यवधानेन णत्वाभाव इति तन्न्यायव्याख्यावसरे निरूपितं तथापि ऋकारापदिष्टविधित्वेन तस्य लृकारे प्राप्तिः स्यादेवेत्यनित्यत्वादेव स वारणीय इत्यलम् ॥ १४ ॥

## *सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि* ॥ १५ ॥

सि०—सकारेणापदिश्यते इति सकारापदिष्टं, सकारमुच्चार्य विधीयमानं कार्यं, तदादेशस्य-तमुद्दिश्य विहितस्य, शकारस्यापि भवतीति शेषः । उभयोः स्थानभेदेन भिन्नत्वादेकस्य [ सस्य ] ग्रहणे परस्य [ शस्य ] ग्रहणाप्राप्तेस्तत्प्राप्तये न्यायोऽयमाश्रीयते । *साम्प्रतिकाभावे भूतपूर्वगतिः* *भूतपूर्वकस्तदुपचारः* इति वा न्यायस्यैवायं प्रपञ्चः, यतो यः किल पूर्वं सकारः स शकारतामापन्नोऽपि सकार एव गणनीय इति भूतपूर्वक एव तदुपचार इति समायाति । अत्र च ज्ञापकं "ड्नः स्सः सोऽश्चः" [ १. ३. १८. ] इति सूत्रे 'अश्चः' इत्येवंरूपेण श्चसंयोगावयवस्य शकारस्य त्सादेशवर्जनमेव । तदुक्तं प्रकृतसूत्रे बृहद्वृत्तौ—'अश्चः' इति किम् ? षट् श्च्योतन्ति, भवान् श्चोतति । श्चुतेः सोपदेशत्वात् शकारस्य सकारापदिष्टं कार्यं विज्ञायते" इति । कथं कृत्वा ज्ञापकमिति चेत् ? उच्यते—भवान् श्च्योततीत्यत्र शस्य त्सादेशाभावार्थं श्चवर्जनमिति कथितमेव, तत्र च सकाराभावादेव त्सादेशाप्राप्तेस्तद्वर्जनस्य वैयर्थ्यमेव, तथा च तद्वर्जनं व्यर्थं सत् सकारापदिष्टं कार्यं तदादेशभूतस्य शकारस्यापीति विज्ञापयति, तथा च भवान् श्च्योततीत्यत्रापि प्राप्नोतीति तद्वारणार्थं श्चवर्जनं स्वांशे चरितार्थम् । फलं चास्य "षस्च गतौ" इत्यस्य धातोः षस्य "षः सोऽष्ट्यै-ष्ठिव-ष्वष्कः" [ २. ३. ९८. ] इति सादेशे, तस्य "सस्य शषौ" [ १. ३. ६१. ] इति शकारे, यङ्लुपि, अनद्यतन्यां दिवि, "व्यञ्जनाद् देः०" [ ४. ३. ७८. ] इति तल्लुकि, एतन्न्यायबलात् "संयोगस्यादौ स्कोर्लुक्" [ २. १. ८८. ] इति सकारादेशस्य शस्यापि लुकि, चस्य कत्वे च 'असासक्' इति रूपस्य सिद्धिः । ननु प्रकृतज्ञापकेन सकारस्यापदिष्टं कार्यं शकारस्यापीति सामान्यत एव ज्ञाप्यताम्, तदादेशस्येति कुतो लभ्यत इति चेत् ? *भूतपूर्वकस्तदुपचारः* इति न्यायानुग्रहादिति गृहाण । अयमाशयः—सामान्यतः सकारापदिष्टं कार्यं शकारस्यापीति ज्ञापनेऽपूर्ववचनमेवेदमाश्रयणीयं भवति, तदादेशस्येति विशेषसन्निवेशे

च *भूतपूर्वकास्तदुपचारः* इति न्यायलभ्य एवार्थ इह 'अश्चः' इत्यस्य सार्थक्याय समाश्रित इति प्रतीयते, तथा च नापूर्ववचनज्ञापनमिति लाघवम्। फलं चास्य 'भवान् शेते' इत्यादौ स्वाभाविकस्य शकारस्य सकारापदिष्टकार्यत्सादेशाभावः; तथा च न तदंशे ज्ञापकान्तरान्वेषणं कार्यम्। प्राञ्चस्तु–'अश्चः' इत्यस्यैव तदंशज्ञापनसामर्थ्यमपि वर्णयन्ति, तथाहि–तेषां ग्रन्थः–'अश्चः' इत्यनेन तावत् श्च्युत्यादीनां श्चो वर्ज्यते, न त्वन्यः कश्चिदसंभवात्, तस्मिंश्च श्चे शः सकारादेश एवास्ति, "सस्य शषौ" [ १. ३. ६१. ] इत्यनेन तस्य कृतत्वात्, ततश्च सकारादेशस्यैव श्चस्य शकारस्य सकारकार्यं ज्ञापयता श्चवर्जनेनाखण्डोऽप्ययं न्यायो ज्ञापित एव" इति। अत्रेदमभिदध्महे–वस्तुगत्या 'अश्चः' इत्यनेन श्च्योतत्यादिशकारवर्जनलाभेऽपि शब्दतस्तदलाभेन तस्योक्तार्थज्ञापकत्वायोगात्, 'अश्चः' इति शब्देनोपस्थापितस्यैवार्थस्य ज्ञापकत्वौचित्येनार्थिकार्थस्य ज्ञापनसामर्थ्याभावात्; तस्य शाब्दबोधाविषयत्वात्, शब्दोपस्थित एवाऽर्थः शाब्दबोधे भासते इति पदवाक्यविवेचकानां सिद्धान्ताच्च, तस्मादुक्त एव तदंशलाभोपाय इति प्रतिभाति। यद्यपि पूर्वोदाहृतबृहद्वृत्तिग्रन्थे 'शकारस्य सकारोपदिष्टं कार्यं विज्ञायते, इत्येवोक्तं, न तु 'तदादेशस्य' इति, तथापि 'भवान् शेते' इत्यादौ त्सादेशाभावाय तावानंशोऽपि न्याये समावेशनीय एव। न्यासग्रन्थे चायमर्थः पृथगेवोल्लिखितः, तथाहि–तत्र बृहद्वृत्तिस्थ–'पद श्च्योतन्ति' इति प्रत्युदाहरणप्रतीकमादाय व्याख्याय च तत् "दन्त्यापदिष्टं कार्यं तालव्यस्यापि भवति, परं दन्त्यस्थाननिष्पन्नस्य, न तु सर्वस्य" इति पृथगेव तदंशपूरणं दृश्यते। सर्वथा च तस्यावश्यकत्वमेव, वृत्तौ च तदनुक्तिः स्वयमूहनीयत्वव्यञ्जनायेति स्वीकार्यम्। यदि च श्च्योतत्यादिस्थितस्य 'श्चः' एवेदमनुकरणम् 'अश्चः' इत्यत्रेति समाश्रीयते तदा प्राचीनोक्तं तस्यैव तदादेशस्येत्यंशस्यापि ज्ञापकत्वं सम्यगेवेति ॥ १५ ॥

## *सकारापदिष्टं कार्यं तदादेशस्य शकारस्यापि* ॥ १५ ॥

त०—अत्र प्रक्रियाभेदेनास्य न्यायस्य केचन वैयाकरणा अनावश्यकत्वमपि मन्यन्ते। तथाहि–सकारस्थानीयस्य शकारस्य कार्यं यद्यपि सर्वेषां सकारवदिष्टमेव, तथापि तैः सूत्राणां पाठ एवं तथा विहितो येन सकारमुद्दिश्य विधीयमानकार्यापेक्षया तदादेशस्य शकारस्यासत्त्वं भवतीति सकारबुद्ध्यैव तत्र कार्यं भवति। स्वमतेऽपि यद्यपि "सस्य शषौ" [ १. ३. ६१. ] इति सूत्रे "र्हादर्हस्वरस्यानु नवा" [ १. ३. ३१. ] इति सूत्राद् 'अनु' इति पदमनुवर्त्तमानमस्ति, तथा च तत्र प्राप्यमाणकार्येभ्यः पश्चादेव शकारादेशस्य प्रवृत्तिरिति 'आसासक् मूलवृट्, मधुक्' इत्यादौ शकारादेशात् पूर्वमेव परत्वात् सकारस्य "संयोगस्यादौ स्कोर्लुक्" [ २. १. ८८. ] इति लुकि रूपसिद्धौ तत्र तादृशेषु अन्येषु वा लक्ष्येषु प्रकृतन्यायस्योपयोगो नास्ति तथापि 'अश्चः' इति ज्ञापकनिर्देशेनानुमीयमानोऽयं प्रकृतलक्ष्येष्वपि यदि प्रवर्त्तेत तर्हि न कापि क्षतिरिति समादृतः। नन्वेवमस्य न्यायस्य फलान्तराभावेन तज्ज्ञापकम् 'अश्चः' इति पदमेव परित्यज्यतामिति चेत्? न–'आचार्याः कृत्वा न निवर्त्तन्ते' इति न्यायादत्र कृतस्य तस्य पदस्यादृष्टार्थत्वसंभावनया परित्यागानर्हत्वात्। ननु श्च्योतत्यादिषु यत्र सकारस्य शकारादेशो विधीयते तत्र सर्वत्र तालव्य एव पठ्यताम्, अलं तस्य शकारादेशविधानेन तस्य पुनरश्च इत्यनेन कार्यवर्जनेन चेति चेत्? अत्रोक्तं बृहद्वृत्त्यादिषु–"तेन मधु श्च्योततीति क्विप्, मधुश्च्युतमाचष्टे इति णावन्त्यस्वरादिलोपे पुनः क्विपि णिलोपे सौ तल्लुकि च यलोपे "संयोगस्यादौ स्कोर्लुक्" [ २. १. ८८. ] इति शलोपे चस्य कत्वे–'मधुग्' इति सिद्धम्" इति। तथा चोपदेशे सकाराभावे शकारपाठे च 'मधुट्' इति प्रयोगापत्तिरिति तत्रोपदेशे सकारपाठ आवश्यकः। तथा च तत्स्थानीयस्य तस्य भूतपूर्वगत्या कदाचित् त्सादेशो मा भूदित्येतदर्थमश्च इति वर्जनमावश्यकमेव। भूतपूर्वगतिश्च न्यायान्तरसिद्धैव, अयं च न्यायस्तस्यैव प्रपञ्च इत्यावेदितमेव पूर्वम्। तथा चैतज्ज्ञापकाभावेऽपि सकारादेशस्य शकारस्य सकारापदिष्टकार्यशङ्काऽस्त्येवेति तन्निराकरणाय क्रियमाणम् 'अश्चः' इति वर्जनं विशिष्य प्रकृतन्यायस्वरूपं ज्ञापयतीति सर्वमुपपन्नम्। न्यासकारस्तु धात्वादिषु दन्त्यपाठस्यैव प्रकृतन्यायज्ञापकतामाह, तथाहि–तद्ग्रन्थः "ङ्नः सः त्सोऽश्चः" [ १. ३. १८. ]इति सूत्रे–ननु तर्हि उपदेशावस्थायामेव तालव्यः पठनीयः, किं दन्त्यपाठेनेति? सत्यम्–दन्त्यं पठन्नेवं ज्ञापयति–*दन्त्यापदिष्टं कार्यं तालव्यस्यापि भवति* परं दन्त्यस्थाननिष्पन्नस्य, न सर्वस्य; तेन 'भवान् शेते' इत्यादौ त्सो न भवति"इति। अत्रेदं विचारमर्हति–पूर्वोदाहृतवृत्तिग्रन्थेन 'अश्चः' इति वर्जनस्य ज्ञापकता लभ्यते, प्रकृतन्यासग्रन्थेन च धातुषु दन्त्यपाठस्येति किमत्र ज्याय इति, तत्रेदमनुरूपं प्रतिभाति यद्–दन्त्यपाठस्य फलान्तराभावेन दन्त्यत्वनिमित्तककार्यसिद्धिरेव फलं, तच्च प्रकृतन्यायज्ञापनेनैव लभ्यमिति दन्त्यपाठस्य ज्ञापकत्वमपि साध्वेव। परं वृत्तिग्रन्थानुकूल्याय तत्र 'अश्च' इति निर्देशं कुर्वंश्च' इत्यधिकं योजनीयम्। तथा च धातुषु दन्त्यं पठंस्तस्य दन्त्यकार्यविशेषवर्जनं च कुर्वन्नाचार्यः प्रकृतन्यायं ज्ञापयतीति समुदायार्थः फलति। दन्त्यत्वनिमित्तं कार्यं च वृत्तौ 'मधुग्' इत्यस्य सिद्धिरूपं प्रदर्शितमेव। तच्चेत्थं न्यासकारेण समर्थितम्–ननु 'मधुग्' इत्यत्र "स्वरस्य परे०" [ ७. ४. ११०. ] इति सूत्रेण

णिलोपरूपस्य स्वरादेशस्य स्थानिवत्त्वात् शलोपो न प्राप्नोति ? न च वाच्यं-न "सन्धि०"[ ७. ४. १११. ]इत्युपतिष्ठते इति, 'अस्क्लुकि' इति वचनाद् यथा सुपूर्वात् कुस्मयतेः सुकुरित्यत्र, [ इति चेत् ? ] न–'अस्क्लुकि' इत्यत्र नञ्निर्दिष्टत्वेन *नञा निर्दिष्टमनित्यम्* इति न्यायात् स्थानिवत्त्वाभाव इति"इति । अयं च न्यायो व्याकरणशास्त्रकार्यार्थमेव । आलङ्कारिकास्तु–श्लेषालङ्कारे स-शयोरैक्यं सामान्येनैव मन्यन्ते, न तत्र 'तदादेशस्य' इत्यंशो योज्यते । तथाहि—

"आदौ धनभवे येन, घृतमेधायितं तथा ।
जज्ञे यथोर्वीशस्यश्रीः श्रीनाभेयः स वः श्रिये ॥

इत्यादौ उर्वीशस्य–राज्ञः, श्रीः, उर्वी–महती, सस्यश्रीः–धान्यसम्पत्तिरित्यर्थद्वयलाभाय श्लेष आदृतः, स च सशयोरैक्य एव संगच्छेतेत्यलम् ॥ १५ ॥

## *ह्स्वदीर्घापदिष्टं कार्यं न प्लुतस्य* ॥ १६ ॥

सि०—ह्रस्वश्च दीर्घश्च ह्रस्व-दीर्घौ, ताभ्यामपदिश्यत इति ह्रस्वदीर्घापदिष्टं, कार्यं, प्लुतस्य–ह्रस्वस्थानिकस्य प्लुतस्य ह्रस्वापदिष्टं, दीर्घस्थानिकस्य प्लुतस्य दीर्घापदिष्टं च कार्यं, न स्यादिति न्यायार्थः । यद्यपि मात्रा-कालभेदेन पृथक् २ संज्ञा "एक-द्वि-त्रिमात्रा ह्रस्व-दीर्घ-प्लुताः" [ १. १. ५. ] इति सूत्रेण विहिता, इति ह्रस्वशब्दमुच्चार्य दीर्घशब्दमुच्चार्य च विधीयमानं कार्यं स्वत एव प्लुते न प्राप्नोति, तथापि भूतपूर्वावगतिमाश्रित्य प्राप्तिरिति तद्वारणार्थोऽयं न्यायः । "अत्र च ज्ञापकम्–ह्रस्वांशे–"ह्रस्वान्ङणन०" [ १. ३. २७ ] इति सूत्रे ह्रस्वादिति सामान्योक्तिरेव । तथाहि–अप्लुतरूपाद्धस्वात् तावत् ङणनां द्वित्वमिष्टम्, प्लुतरूपात् तु नेष्टम्, तथापि सूत्रे ह्रस्वादिति सामान्येन यदूचे तदेतन्न्यायाशयैव।" इति प्राञ्चः, तन्न चारु–सामान्येनोक्ते विशेषस्य प्लुतरूपस्य ग्रहणं नेष्टमित्यस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वात्, स्वयं चाचार्येण तादृशार्थाकथनात् । तथा च ज्ञापकान्तरमन्वेषणीयम्, दीर्घांशज्ञापकेनैव वैकदेशानुमत्या वा संपूर्णन्यायज्ञापनमास्थेयम् । दीर्घांशे ज्ञापकं च "अनाङ्माङो दीर्घाद्वा छः" [ १. ३. २८. ] इत्यनेनैव प्लुतादपि सिद्धेऽपि दीर्घस्थाननिष्पन्नात् प्लुतात् परस्य छस्य द्वित्वविकल्पार्थं "प्लुताद्वा" [ १. ३. २९. ] इति सूत्रकरणम् । तथाहि–आगच्छ भो इन्द्रभूते३ च्छत्रमानय, आगच्छ भो इन्द्रभूते३ छत्रमानयेत्यत्र छस्य द्वित्वविकल्पो भूतपूर्वावगत्या पूर्वसूत्रेणैव यदि सिद्धः स्यात् तर्हि पुनरिदं सूत्रं व्यर्थं स्यात्; व्यर्थीभूतं च तदिमं न्यायं ज्ञापयति, तथा च दीर्घस्थानिकस्य प्लुतस्य दीर्घापदिष्टकार्याभावबोधनात् पूर्वसूत्रेण प्लुतात् परस्य च्छस्य द्वित्वं न सिद्धमिति तदर्थं सूत्रमिदमात्मांशे चरितार्थम् । फलं च ह्रस्वांशस्य हे राज३–न्निहेति, अत्र परत्वान्नित्यत्वाच्च "दूरादामन्त्र्यस्य०" [ ७. ४. ९९. ] इत्यनेन प्लुते कृते तस्मात् परस्य नस्य "ह्रस्वान्ङणन०" [ १. ३. २७. ] इति न द्वित्वम् । दीर्घांशे च हे गो३-त्रात ! हे गो३त्रात ! इत्यत्र "अदीर्घाद् विराम०" [ १. ३. ३२. ] इति सूत्रेण दीर्घस्थाननिष्पन्नप्लुतात् परस्य तकारस्य प्रकृतन्यायबलेन दीर्घापदिष्टकार्याभावाद् द्वित्ववर्जनाभावेन विकल्पेन द्वित्वसिद्धिरिति । अयं च न व्यभिचारी । न चास्याप्यनित्यत्वमेषणीयमेव, अन्यथा हे बटो३ एहीत्यादौ 'बटु+स' इति स्थितौ परत्वात् पूर्वमुकारस्य प्लुतत्वे विहिते पश्चादस्य न्यायस्य नित्यत्वात् "ह्रस्वस्य गुणः" [ १. ४. ४१. ] इति गुणो न भविष्यतीति वाच्यम्, आमन्त्र्यमात्रापेक्षत्वेन गुणस्यान्तरङ्गत्वात् प्लुतस्य तु दूरादामन्त्र्यापेक्षत्वेन बहिरङ्गत्वात् *परादन्तरङ्गं* [ बलवत् ] इति न्यायात् पूर्वं गुणस्यैव प्रवृत्तौ प्रकृतन्यायविषयाभावात्, ततश्च न तदर्थमनित्यत्वमाश्रयणीयमिति ॥ १६ ॥

## *ह्स्वदीर्घापदिष्टं कार्यं न प्लुतस्य* ॥ १६ ॥

त०—वस्तुतस्तु न्यायोऽयं नाश्रयणीयः फलाभावाज्ज्ञापकाभावाच्च । फलं तावदिह 'हे राज३न्निह' इत्यत्र "ह्रस्वान्ङणनः०" [ १. ३. २७. ] इति नकारस्य द्वित्वनिषेधाभावः, आगच्छ हे इन्द्रभूते३ च्छत्रमानयेत्यत्र छस्य द्वित्वविकल्पार्थं कृतस्य "प्लुताद्वा" [ १. ३. २९. ] इति सूत्रस्य सार्थक्यं गो३त्रातेत्यत्र तकारस्य द्वित्वविकल्प इति चोक्तम् । एतानि च फलानि न्यायं विनाऽपि सिद्धान्येव, यतो हे राज३न्निहेत्यत्र पदान्तरसम्बन्धिस्वरापेक्षद्वित्वापेक्षयाऽन्तरङ्गत्वात् परत्वाच्च प्रथमं प्लुते कृते पश्चाद्ध्रस्वाभावाद् द्वित्वाप्राप्तेः । न च भूतपूर्वावगत्या ह्रस्वत्वमाश्रित्य नकारस्य द्वित्वप्राप्तिरिति वाच्यम्, साम्प्रतिकाभावे हि *भूतपूर्वकस्तदुपचारः* इत्याश्रीयते, तथा च यत्र साम्प्रतिकतद्धर्मलाभाभावेन शास्त्रप्रवृत्तिविरहादिष्टलक्ष्यासिद्धिरित्यालोक्यते तत्रैव तन्न्यायेन कार्यजननं, न तु दोषापादनाय तन्न्यायाश्रयणम्, अन्यथा 'देवानिह' इत्यादौ ह्रस्वस्य दीर्घे विहितेऽपि भूतपूर्वकमुपचारमाश्रित्य ह्रस्वात् परत्वमादाय नकारस्य द्वित्वं स्यादित्यादि बह्वनिष्टं प्रसज्येत । अत एव च–"ह्रस्वान्ङ-ण-नः०" [ १. ३. २७. ] इति सूत्रे शब्दमहार्णवन्यासे 'राज३न्निह' इति ह्रस्वग्रहणव्यावर्त्त्यत्वेन प्रदर्शितप्रयोगव्याख्यावसरे–"राजन्"शब्दादामन्त्र्यसेर्लुकि "नामन्त्र्ये" [ २. १. ९२. ] इति नलोपप्रतिषेधात्, अन्तरङ्गत्वात् परत्वाच्च प्लुते कृते ह्रस्वाभावाद् द्वित्वं न भवति" इत्येवोक्तं, न तु न्यायः समाश्रितः । तथा च दीर्घ-प्लुतयोर्भेदं वास्तविकं प्रदर्शनायाचार्येण

"प्लुताद्वा" [ १. ३. २९. ] इति सूत्रव्याख्यायां शब्दमहार्णवन्यासे 'दीर्घात्' इत्यनुवृत्तस्य पदस्य कथं प्लुतादित्यनेनान्वय इति प्रदर्शनावसरे प्रतिपादितम्–"दीर्घादित्यनुवृत्तावपि द्विमात्रत्रिमात्रयोर्विरोधात् सामानाधिकरण्यासम्भवेऽपि 'मञ्चाः क्रोशन्ती'–त्यादिवत् स्थानोपचारात् तद्व्यपदेशाद् विशेषण-विशेष्यभावः, तथा चाभिधीयते–'सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधना-ऽधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राज-सक्तु-चन्दन-गङ्गा-शाटका-ऽन्न-पुरुषेष्वतद्भावेऽपि तद्वदुपचारः" [ न्या० सू० ] । दीर्घोऽस्यास्ति स्थानित्वेनेत्यभ्रादित्वादति वा दीर्घशब्देन प्लुतोऽभिधीयते" इति । तथा च दीर्घ-प्लुतयोर्भेदो दृढ इति दीर्घकार्यं प्लुते न सम्भवतीति तदाशयः स्पष्टमायाति । तथा च दीर्घ-प्लुतयोः स्वाभाविकभेदसत्त्वाद् दीर्घापदिष्टकार्यस्य प्लुतेऽभावात् प्लुतात् परस्य छस्य द्वित्वं पूर्वसूत्रेण न प्राप्नोतीति तदर्थं "प्लुताद् वा" [ १. ३. २९. ] इत्यस्यावश्यकत्वमेवेति न तत्सार्थक्याय न्यायावश्यकता । यत् तु–"ननु किमर्थमिदम् ? यतो दीर्घत्वमाश्रित्य "अनाङ्माङो०" [ १. ३. २८. ] इत्यनेनैव द्वित्वं वा भविष्यति, सत्यम्–इदमेव ज्ञापकं–*दीर्घापदिष्टं कार्यं न प्लुतस्य* इति, ह्रस्वकार्यं च न, यथा–आगच्छ भो देवदत्त३ इति प्लुतात् प्रथमं सेर्लुक् "अदेतः" [ १. ४. ४४. ] इत्यनेन, अन्यथा प्रथमं न कुर्यात् यदि पश्चादपि स्यात्" इत्युक्तं लघुन्यासे "प्लुताद् वा" [ १. ३. २९. ] इति सूत्रे, तदपि न विचारचारु इति प्रतिभाति, यतो 'दीर्घत्वमाश्रित्य' इत्यत्र हेतुरनुक्तः, यदि च *भूतपूर्वकस्तदुपचारः* इति न्यायबलमेव हेतुरिति कथ्यते तर्हि तत्पूर्वं प्रतिषिद्धमेव, अन्यथा स्थानिवद्भावादीनामपि नावश्यकता स्यात्, बहुदोषापाताच्च । आचार्यैरेतत्सूत्रव्याख्यायामेव दीर्घ-प्लुतयोर्भेदप्रदर्शनेन तन्न्यायस्येहानाश्रयणस्य स्पष्टं सङ्केतितत्वाच्च । आगच्छ भो देवदत्त३ इत्यादौ प्रथमं सेर्लुक्करणेन नायं न्यायः सूच्यते, अपि तु ह्रस्व-प्लुतयोः स्वाभाविको भेद एवेति कुतो न साध्यते, एवं च "प्लुताद् वा" [ १. ३. २९. ] इति सूत्रस्य सार्थक्ये स्वतः सिद्धे दीर्घांशेऽपि ज्ञापकमत्र नास्ति, ह्रस्वांशे ज्ञापकाभावश्च वृत्तौ प्रतिपादित एव । एवं हे गो३त्रातेत्यादौ तकारस्य द्वित्वविकल्पोऽपि दीर्घ-प्लुतयोर्भेदं स्वाभाविकमाश्रित्यैवेति न तदपि न्यायप्रयोजनमिति फल-ज्ञापकयोरभावान्नायं न्यायोऽपूर्ववचनत्वेन स्वीकार्योऽपि तु स्वतः सिद्धमेवार्थमनुवदतीति न्यायसङ्ग्रहे संग्रहीतुमनर्ह इति प्रतिभाति १६

## *संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययमात्रस्यैव ग्रहणं, न तदन्तस्य* ॥ १७ ॥

**सि०**—"प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति परिभाषाबलात् प्रत्ययग्रहणे तदन्तविधिर्भवति, स चाविशेषात् संज्ञाविधावुत्तरपदाधिकारस्थे विधावन्यत्र च सममेव प्राप्तः, तत्र संज्ञाविधावपि तदन्तग्रहणे "स्यादिर्विभक्तिः" [ १. १. १९. ] इत्यादावपि तदन्तविधिसत्त्वात् स्याद्यन्तस्यैव विभक्तिसंज्ञा स्यादिति प्रकृतेर्विभक्तौ विधीयमानं कार्यं न स्यादपि तु विभक्त्यन्ते परे विभक्तिनिमित्तकं कार्यं स्यात्, यथा–काष्ठगृहं युष्मत्पुत्राणामित्यादौ गृहमिति स्याद्यन्तस्य विभक्तित्वे तन्निमित्तं काष्ठशब्दस्य पदत्वम्, तदनु ततः परस्य 'युष्मद्'शब्दस्य पुत्राणामिति स्यादिविभक्तिसहितस्य वसादेशः स्यादित्येवमादयो दोषाः प्रसज्येरन्निति तद्वारणायायं न्यायः समाश्रीयते । तत्र चांशद्वयं-संज्ञाधिकारे [ संज्ञाविधायके शास्त्रे ] प्रत्ययग्रहणे, प्रत्ययमात्रस्यैव ग्रहणं, न तदन्तस्येत्येकः, अपरश्चोत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तस्येत्येवंरूपः । तत्र प्रथमस्य संज्ञाविधायकशास्त्रघटकप्रत्ययबोधकं पदं तदन्तबोधकं नेत्येव साधारणतयाऽर्थो लभ्यते, तथा च "स्यादिर्विभक्तिः" [ १. १. १९. ] इति सूत्रे प्रत्ययबोधकं स्यादिपदं न तदन्तबोधकमिति न स्याद्यन्तस्य त्याद्यन्तस्य च विभक्तिसंज्ञा । अत्रांशे ज्ञापकं च "तदन्तं पदम्" [ १. १. २०. ] इति सूत्रेऽन्तग्रहणम् । तथाहि–प्रकृतसूत्रे बृहन्न्यासग्रन्थः–"ननु अन्तग्रहणं किमर्थम् ? न चासत्यन्तग्रहणे स्यादेरेव पदसंज्ञा स्यात्, ततश्च 'अग्निषु' इत्यादौ पदमध्ये विधीयमानं षत्वं पदादौ न स्यादिति वाच्यम्, "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति परिभाषया तदन्तविधेर्लब्धत्वादिति; उच्यते–पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधार्थम्, तेन पूर्वसूत्रे तदन्तस्य विभक्तिसंज्ञा न भवति, अन्यथा 'शेषाय युष्मद्वृद्धिहिताय नमः' इत्यत्रैव 'ते-मे' आदिप्रसङ्ग इति" । अयमाशयः–"तदन्तं पदम्" [ १. १. २०. ] इत्यत्र तत्पदेन "स्यादिर्विभक्तिः" [ १. १. १९. ] इति पूर्वसूत्रप्रक्रान्ता विभक्तिः परामृश्यते, अन्तग्रहणाभावे च 'सा पदम्' इति निर्देशः स्यात्, किञ्च तथा सति पृथक् सूत्रकरणमप्यनावश्यकं स्यात् "स्यादिर्विभक्तिः पदं च" इति न्यासेनैवोभयसंज्ञाविधानसंभवात्, तथा सति [ केवलं विभक्तेः पदसंज्ञायाम् ] 'अग्निषु' इत्यादौ 'सु' इत्येतस्यैव पदत्वे सकारस्य पदमध्यस्थत्वाभावेन षत्वानापत्तिरिति दोषः स्यात्, अतश्च पृथक् सूत्रं विधाय तत्र "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति परिभाषासूत्रसाहाय्येन स्याद्यन्तस्य त्याद्यन्तस्य च पदत्वे 'अग्निषु' इत्यादौ दोषाभावेन 'अन्त'ग्रहणं व्यर्थमेवेति तद् व्यर्थीभूतं 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तं न गृह्यते' इति ज्ञापयति । तथा च पदसंज्ञायामपि तदन्ताग्रहणे 'अग्निषु'

इत्यादौ दोषापत्तिरिति तदर्थमन्तग्रहणं स्वांशे चरितार्थम् ।
फलं चान्यत्रापि संज्ञाविधाने तदन्ताग्रहणे न स्याद्यन्तस्य
त्याद्यन्तस्य च विभक्तिसंज्ञेति 'शेषाय युष्मद्वृद्धिहिताय नमः'
इत्यत्र शेषायेति पदात् परस्य युष्मदो वृद्धिहितायेति चतु
र्थ्यन्तेन सह 'ते'आदेशो नेति । उत्तरपदाधिकारे प्रत्ययग्रहणे
न तदन्तस्येत्यंशे तु "न वा खित्कृदन्ते रात्रेः" [ ३. २.
११७. ] इति सूत्रस्थमन्तग्रहणं ज्ञापकम्, तदुक्तं तस्मिन्नेव
सूत्रे बृहद्वृत्तौ–"इदमेवान्तग्रहणं ज्ञापकम्–इहोत्तरपदाधि-
कारे प्रत्ययग्रहणे प्रत्ययस्यैव ग्रहणं न तदन्तस्य" इति, अय-
माशयः–कृतः प्रत्ययत्वेन "न वा खित्कृति रात्रेः" इत्युक्तेऽपि
"प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति परिभाषया
'कृदन्ते' इत्यर्थलाभसम्भवेऽन्तग्रहणं व्यर्थमेव, व्यर्थीभूतं च
तत् उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाभावं ज्ञापयति,
तथा च तदन्तार्थलाभार्थमन्तग्रहणं सार्थकम् । फलं चास्य
"कालात् तरतनतम०" [ ३. २. ५४ ] इत्यादौ प्रत्ययमात्रस्यैव
ग्रहणं न तु तदन्तस्येति । तेन पूर्वाह्णे भवः–पूर्वाह्णेतनः पूर्वा-
ह्णेतन इत्यत्रेव परमे पूर्वाह्णेतने इति विग्रहे समासे तदन्ते परे
[ तनान्ते परे ] सप्तम्या अलुक् न भवति; उत्तरपदाधिकारश्च
"न नाम्येकस्वरात् खित्युत्तरपदेऽमः" [ ३. २. ९. ]
इति सूत्रादनुवर्त्तमानः । वस्तुतस्तु प्रकृतन्याये प्रत्यय-
ग्रहणपदं प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छि-
न्नविषयताप्रयोजकपदपरं, तथा च 'कृत्'पदादौ प्रत्ययवृत्ति-
श्रावणप्रत्यक्षविषयताया अभावेन तदवच्छेदकधर्मावच्छिन्न-
विषयताप्रयोजकपदस्य कृतीत्यादेः प्रत्ययग्रहणत्वाभावेन न
तत्रानेन न्यायेन तदन्तविधिनिषेधः सम्भवतीति "न वा खित्कृ-
दन्ते रात्रेः" [ ३. २. ११७. ] इति सूत्रे 'कृति' इत्यु-
क्तेऽपि कृदन्तार्थलाभ इति तत्रान्तग्रहणं व्यर्थमेव । न चैवं
"प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इत्यत्रापि प्रत्यय-
पदस्य प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्न-
परत्वेऽत्र तदन्तविधिः कथं स्यादिति वाच्यम्, तत्र स्वरूपत
एव प्रत्ययस्य ग्रहणात् केवलस्य कृतः प्रयोगाभावेन कृद्रूपोत्त-
रपदस्याभावाच्चेति प्रकृतन्यायज्ञापकत्वमन्तग्रहणस्य न युक्तम्,
किन्तु "हृदयस्य हृल्लासलेखाण्ये" [ ३. २. ९४. ] इति
सूत्रस्थं लेखग्रहणमेव ज्ञापकमत्रेति बोध्यम्, तथाहि–तत्र
सूत्रे बृहद्वृत्तौ–"अणूसन्निधानाल्लेखशब्दोऽणन्तो गृह्यते, तेन
घञन्ते न भवति, हृदयस्य लेखः–हृदयलेखः" इत्युक्त्वा
"अणीत्येव सिद्धे लेखग्रहणं ज्ञापकम्–उत्तरपदाधिकारे प्रत्य-
यग्रहणे तदन्तग्रहणं न भवति" इति स्पष्टमेव 'ज्ञापकान्तर-
मुक्तम् । सति चैतस्मिन् ज्ञापके "न वा खित्कृदन्ते रात्रेः"
[ ३. २. ११७. ] इति सूत्रेऽन्तग्रहणं सार्थकमेव, कृदन्तार्थ-

लाभस्याऽसंभवात् । यदि चात्र न्यायेऽपि "प्रत्ययः प्रकृत्यादेः"
[ ७. ४. ११५. ] इत्यादाविव प्रत्ययत्वेन बोधकमात्रपरं
प्रत्ययपदं, न तु प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मा-
वच्छिन्नपरमित्याश्रीयते, तदा तदन्तविधेः सिद्धत्वादन्तग्रहणं
[ "नवा खित्कृदन्ते रात्रेः" इत्यत्र ] व्यर्थमेव, व्यर्थं च सत्
तदेव ज्ञापकं कुतो नाश्रीयते ? इत्युच्यते, अत एव चाचार्यै-
रपि तत्सूत्रे 'इदमेवान्तग्रहणं ज्ञापकम्' इत्येवंरूपेणैवकारो-
ऽवधारणार्थः प्रयुक्त इति चेत् ? तर्हि लेखग्रहणस्यैतद्द्वारैव
सार्थक्यमस्तु, कृतं तस्यापि ज्ञापकत्ववर्णनेनेति विभावनीयं
सुधीभिरिति । नन्वेवं ज्ञापितेऽस्मिन् न्याये "खित्यन-
व्ययारुषो मोऽन्तो ह्रस्वश्च" [ ३. २. १११. ] इति सूत्रे
तदन्तविध्यभावापत्तौ 'ज्ञंमन्यः' इत्यादौ तदप्रवृत्तिः स्यादिति
वाच्यम्, केवलस्य खितः प्रयोगासम्भवेन तत्र सूत्रसार्थक्याय
प्रकृतन्यायाप्रवृत्तिस्वीकारात्, तदुक्तं "हृदयस्य हृल्लास०"
[ ३. २. ९४. ] इति सूत्रे बृहद्वृत्तावेव–"खित्यनव्यय०"
[ ३. २. १११. ] इत्यादौ त्वसंभवात् तदन्तग्रहणमिति ।
आदिपदेन "तत्पुरुषे कृति" [ ३. २. २०. ] "नेन्-सिद्धस्थे"
[ ३. २. २९. ] इत्यादीनां संग्रहः । तथा च "तत्पुरुषे
कृति" [ ३. २. २०. ] इत्यत्रापि केवलस्य कृतः प्रायः प्रयो-
गाभावात् 'कृदन्ते' इत्यर्थलाभः, तेन 'स्तम्बेरमः' इत्यादि-
सिद्धिः । परत्र [ "नेन्-सिद्धस्थे" ३. २. २९. ] इत्यत्र
'इन्प्रत्ययान्ते' इत्यर्थलाभश्च, केवलस्येन उत्तरपदत्वासम्भ-
वेनैव; तथा च 'स्थण्डिलवर्त्ती' इत्यादौ "तत्पुरुषे कृति"
[ ३. २. २०. ] इति प्राप्तायाः सप्तम्या अलुपोऽनेन निषेधः ।
एवं च प्रकृतन्यायानित्यत्वस्थलानीमानीति फलति । अनित्यत्वं
हि क्वचिदप्रवृत्तिरूपमेव, तच्च ज्ञापकवशाद् भवत्वसंभवाद्
भवतु कारणान्तराद् वा तत्राग्रहाभावात् । वस्तुतस्तु–असं-
भवोऽपि न्यायानित्यत्वज्ञापकत्वेन स्वीकर्त्तुं शक्यत एवेति न
कोऽपि विभेदः ॥ १७ ॥

## *संज्ञोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययस्यैव ग्रहणं, न तदन्तस्य ॥ १७ ॥

त०—अत्र न्यायेंऽशद्वयं–संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रह-
णनिषेधकः; उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणनिषेधकश्च,
तत्र प्रथमांशस्य संज्ञाविधायकशास्त्रघटकं प्रत्ययबोधकं पदं
तदन्तबोधकं नेत्यर्थकत्वमित्येव शब्दमर्यादया लभ्यते, तच्च
वृत्तौ प्रदर्शितमेव, परन्त्वस्मिन्नर्थे नामसंज्ञाविधायकशास्त्रघटकं
प्रत्ययबोधकं विभक्तिपदं तदन्तबोधकं न स्यात्, तथा च
"अधातु-विभक्ति-वाक्यमर्थवन्नाम" [ १. १. २७. ] इति सूत्रस्यार्थे
विभक्त्यन्तवर्जमित्यर्थो न लभ्येत, किन्तु विभक्तिवर्जमित्येव,
ततश्च विभक्त्यन्तस्य नामसंज्ञायां तदवयवस्य स्यादेर्लुगापत्तिः,

तद्वारणाय यदि संज्ञानिष्ठविधेयतया साक्षान्निरूपिता योद्देश्यता, तत्प्रयोजकं प्रत्ययबोधकं पदं तदन्तबोधकं नेत्यर्थः, तथा च नामसंज्ञाया उद्देश्यता न साक्षात्प्रत्ययत्वेनावच्छिन्ना किन्तु अर्थवत्त्वावच्छिन्नेति प्रत्ययबोधकविभक्तिपदस्य संज्ञानिष्ठविधेयतया साक्षान्निरूपितोद्देश्यताप्रयोजकत्वाभावान्न दोष इत्युच्यते, तदा "आ तुमोऽत्यादिः कृत्"[ ५. १. १. ]इति सूत्रेऽत्यादिपदस्यापि कृत्संज्ञानिष्ठविधेयतया साक्षादवच्छिन्नोद्देश्यताप्रयोजकत्वाभावात् तत्र त्यादिपदे तदन्तार्थनिषेधानापत्त्या तदन्तबोधापत्तौ तस्य च धातुविहितत्वाभावेन तत्पदस्य वैयर्थ्यापत्तिरिति चेत्? अत्रोच्यते-संज्ञानिष्ठविधेयतया साक्षान्निरूपिता प्रत्ययत्वव्याप्यधर्मेण साक्षादवच्छिन्ना योद्देश्यता, तत्प्रयोजकशास्त्रघटकं प्रत्ययबोधकं पदं तदन्तबोधकं नेत्यर्थः । नामसंज्ञाविधायकसूत्रे विधेयतया साक्षान्निरूपिताया उद्देश्यतायाः प्रत्ययत्वेन साक्षादवच्छिन्नत्वाभावान्न दोषः, कृत्संज्ञाविधायकसूत्रे च कृत्संज्ञानिष्ठविधेयतया साक्षान्निरूपिताया उद्देश्यतायाः प्रत्ययत्वेन साक्षादवच्छिन्नतया [ धातोर्विधीयमानस्त्यादिवर्जः प्रत्ययः कृत्संज्ञ इत्यर्थे ]तत्प्रयोजकशास्त्रघटकत्वात् 'अत्यादि'पदघटितत्यादिपदे न तदन्तविधिरिति । एतन्न्यायज्ञापनानन्तरमित्थं बृहन्न्यासेऽत्र विचारितम्-यद्येवं कृत्तद्धितयोः केवलयोरेव नामसंज्ञा स्यान्न तदन्तयोः, ततश्च 'छिद्, भिद्' इत्यत्र क्विबन्तस्य न स्यात् । अर्थवत्त्वाद् भविष्यतीति न वाच्यम्, अधात्विति निषेधात् । नापि प्रत्ययलक्षणेन प्राप्नोति, यतः प्रत्ययनिमित्तं यत् कार्यमन्यस्य विधीयते तत् प्रत्ययलोपे भवति, न तु प्रत्ययस्यैव यत् कार्यं तदपि, नह्यसत् कार्यित्वेन वचनशतेनापि शक्यमाश्रयितुम् । केवलस्य च तस्य नामसंज्ञायाम् 'औपगव' इत्यत्र षष्ठ्या ऐकार्थ्याभावाल्लुप् न स्यात्, तदन्तविधौ तु दोषानवकाशः; उच्यते-प्रत्ययस्य संज्ञिनस्तदन्तस्य संज्ञा न भवति, न तु प्रत्ययस्य या संज्ञा विधीयते तस्यास्तदन्तायां अन्या संज्ञा न भवतीति, यतोऽर्थवतो नामसंज्ञा, कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्तद्धिता वा । ननु यार्थवत्ता लौकिक्याश्रीयते, सा पदस्यैव, न कृत्तद्धितान्तस्यापि, तस्यैव लोके प्रयोगात्, अन्वय-व्यतिरेकगम्या त्वर्थवत्ता केवलानामपि कृत्तद्धितानामस्ति, ततः किमुच्यते-न केवलाः कृतस्तद्धिता वेति; एवं तर्हि अर्थवद्ग्रहणसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स इहाश्रीयते इत्यदोष इति । अस्यायमाशयः-यद्यपि स्वमते कृदन्ततद्धितान्तानां न विशिष्य नामसंज्ञाविधानसूत्रं, किन्तु "अधातु-विभक्ति-वाक्यमर्थवन्नाम"[ १. १. २७ ]इति सूत्रे विभक्तिवर्जनाच्छेषप्रत्ययान्तानां नामसंज्ञासिद्धिरुक्ता । तथाहि-तत्सूत्रे बृहद्वृत्तौ-विभक्त्यन्तवर्जनाचाऽऽबादिप्रत्ययान्तानां नामसंज्ञा भवत्येवेत्युक्त्वा क्रमशस्तद्धितान्ताः कृदन्ताश्च शब्दाः समुदाहृताः । बृहन्न्यासेऽपि विभक्त्यन्तेत्यादिग्रन्थावतारायेत्थमुक्तम्-"येषां प्रत्ययवर्जनं सामान्येन तैराबादिप्रत्ययस्य नामत्वाभावात् स्याद्युत्पत्तौ यत्नान्तरं विधेयम्, इह तु विभक्तिवर्जनाच्छेषप्रत्ययान्तस्य नामत्वं भवत्येव, विशेषनिषेधस्य शेषाभ्यनुज्ञाहेतुत्वादित्याह-विभक्त्यन्तेत्यादि"इति । इत्थं च विभक्त्यन्तवर्जनाच्छेषप्रत्ययान्तानां साधारण्येनार्थवत्त्वमादायैव नामसंज्ञा, न तु कृदन्तत्वेन तद्धितान्तत्वेन वा, तेन रूपेणोद्देश्यताया उपस्थापकपदाभावात्; विभक्त्यन्तवर्जनस्य च पर्युदासरूपत्वेन सादृश्यग्राहकत्वाद् विभक्तिभिन्नतत्सदृशप्रत्ययान्तस्यार्थवतो नामसंज्ञाविधानार्थत्वं न तु विभक्त्यन्तस्य नामसंज्ञाप्रतिषेधार्थत्वं विधि-निषेधसंभवे विधेरेव बलीयस्त्वात्; तथा च निषेधरूपस्य 'अधातु'इति धातुवर्जनस्य तदंशे[ प्रत्ययान्तांशे]ऽप्रवृत्त्या-तत्र [कृदन्ते क्विबन्तादौ ] नामसंज्ञेति तत्सूत्रव्याख्यायामग्रे प्रतिपादितम्, तथाहि-[ धातुवर्जने स्वीकृते ] "एवं तर्हि 'छिद्, भिद्' इत्यादीनां कथं नामसंज्ञा, यतो *न क्विबन्ता धातुत्वं जहति* इति 'अधातु' इति प्रतिषेधेन भवितव्यम्, नैवम्-'अविभक्ति' इति पर्युदासात् तत्सदृशप्रत्ययग्रहणात् पर्युदासे च विधिप्रतिषेधयोर्विधेरेव बलीयस्त्वात् 'अधातु' इति प्रतिषेधाप्रवृत्तौ नामत्वसिद्धिः"इति । तथा च न स्वमते कृदन्ते तद्धितान्ते वा कृदन्तत्वेन तद्धितान्तत्वेन वा नामसंज्ञा, किन्तु विभक्तिभिन्नप्रत्ययान्तत्वेन, सा च कृदन्तेषु तद्धितान्तेषु यथा तथैवाऽऽबाद्यन्तेष्वपीति न कोऽप्यत्र विशेषः, तथाप्यन्यत्रार्थवत्त्वेनापि सा संज्ञा संभविनी, इह च 'अधातु'इति निषेधस्य पर्युदासप्राप्तविधिवशादेवाप्रवृत्तिदर्शनरूपविशेषात् तस्यैव प्रत्ययान्तत्वार्थाभावप्रयुक्तदोषस्थलत्वेन ग्रहणमिति सन्तोष्टव्यम् । प्रकृतमनुसरामः-संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावे प्रकृतन्यायेन सिद्धे प्रत्ययस्यैव संज्ञा स्यान्न प्रत्ययान्तस्य, तथा च 'छिद्, भिद्' इत्यादौ प्रत्ययत्वाभावेन, 'अधातु' इति पर्युदासप्रभावादर्थवत्त्वमादायापि नामसंज्ञाप्रवृत्त्यभावेन नामसंज्ञा न स्यात् । नापि *प्रत्ययलोपे प्रत्ययलक्षणम्* इति न्यायेन साधयितुं शक्या, प्रत्ययनिमित्तस्यैव कार्यस्य प्रत्ययलक्षणेन लाभात्, प्रत्ययस्थानिककार्यं तु न लब्धुं शक्यते, असतः कार्यित्वस्य वचनेन साधयितुमशक्यत्वात् । यत्र च तद्धितस्थले प्रत्ययस्य विद्यमानत्वं तत्रापि 'औपगवः' इत्यादिषु लक्ष्येषु केवलस्य प्रत्ययस्य नामसंज्ञायामप्यैकार्थ्याभावादुपगुशब्दादुत्पन्नायाः षष्ठ्या लुप् न स्यात् । तदन्तविधौ तु समुदायस्य नामत्वे तदन्तर्गतत्वात् षष्ठ्या लुप् सिद्ध्यतीति; अत्रोच्यते-संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नेत्यस्य 'यत्र प्रत्ययत्वेन प्रत्ययस्य संज्ञाविधानं तत्र तदन्तग्रहणं न'इत्येवार्थो न तु 'प्रत्ययद्वारकं यत्र संज्ञाविधानं तत्र तदन्तग्रहणं न'इति । तथा च पदादिसंज्ञासु

प्रत्ययत्वेन स्यादेरेव संज्ञाविधावुद्देश्यत्वमिति तत्र न तदन्तविधिः, इह च प्रत्ययस्य नामसंज्ञायां पर्युदासद्वाराऽपि संज्ञाविधावुद्देश्यत्वमिति तदन्तग्रहणे बाधकाभावात्, यतोऽर्थवतः संज्ञाविधानेन तस्यैव तत्र साक्षादुद्देश्यत्वमर्थवत्त्वं च न प्रत्ययमात्रे इति तल्लाभाय तदन्तविधेस्तत्सामर्थ्यादेवाश्रयणात्, यतः कृदन्ते तद्धितान्ते च समुदायेऽर्थवत्ता, न केवलं कृत्सु तद्धितेषु वा प्रत्ययेषु । नन्विह अर्थवत्ता लौकिकी समाश्रीयते शास्त्रीया वा?, तत्र नाद्या, यतः कृदन्त-तद्धितान्तसमुदायेऽपि लौकिक्या अर्थवत्ताया अभाव एव, पदस्यैव लोकेऽर्थबोधकतादर्शनात् । न द्वितीया, तस्या अन्वय-व्यतिरेकाभ्यां कृत्तद्धितादिप्रत्ययेष्वपि स्वीकारात् । अयमाशयः—वास्तविकमर्थबोधकत्वं वाक्यस्यैव किन्तु वाक्यस्यानन्तत्वेन तदर्थानुशासनस्य कर्तुमशक्यत्वेन तेषु पदविभागः कल्पितः, तेषु पदेष्वप्यर्थबोधसौकर्यायान्वय-व्यतिरेकाभ्यां प्रकृति-प्रत्ययादिविभागस्तदर्थविभागश्च कल्पितः, तं कल्पितमर्थमादायैव प्रत्ययेषु कर्तृ-कर्मादिवाचकताऽपत्याद्यर्थवाचकता च व्यवह्रियते शास्त्रकारैः । तथा च शास्त्रकृत्कल्पितोऽर्थः प्रत्ययादीनामप्यस्त्येवेति कथमुच्यते—न केवलाः कृतस्तद्धिता वा अर्थवन्त इति; अत्रोच्यते-अर्थवद्ग्रहणसामर्थ्यादिह लोकेऽर्थबोधकं यत् पदं तस्य योऽर्थस्तस्य प्रत्यासन्नो यः स्यादिप्रकृतेरर्थः प्रसिद्धतरः प्रत्ययान्तेषु दृश्यते तादृशेनार्थेन युक्त एवाऽर्थवानिह गृह्यते; कृत्तद्धितप्रत्ययेषु तु तादृशार्थस्य न सत्त्वम्, यतस्तेषु कल्पितमर्थवत्त्वम्, इति तत्र तदन्तविधिं विनाऽनिर्वाह इति । उक्तश्चायमर्थो महाभाष्ये—"सुप्तिङन्तं पदम्" [पा० सू० १. ४. १४.] इति सूत्रे, व्याख्यातश्च कैयटादिभिस्तत्तरीत्यैव । द्वितीये न्यायांशे बृहद्वृत्तिग्रन्थानुसारं ज्ञापकद्वयमुपलभ्यत इति वृत्तौ प्रतिपादितमेव । तत्र किञ्चित् पुनर्विचार्यते—"हृदयस्य हृल्लासलेखाण्ये" [३. २. ९४.] इत्यत्र लेखग्रहणमणन्तलेखशब्दपरमित्युक्त्वाऽणन्तत्वेनैव तस्य ग्रहणे सिद्धे तद्वैयर्थ्यमुद्भाव्य प्रकृतन्यायज्ञापकत्वमुक्त्वाऽपि यदन्ते "नवा खित्कृदन्ते रात्रेः" [३. २. ११७.] इत्यत्रान्तग्रहणस्यैव ज्ञापकत्वमिति कथनं तत् परस्परविरुद्धमिव प्रतिभाति, तथापि तत्र लेखग्रहणस्य शब्दस्वरूपविशेषणपरत्वमाश्रित्य "विशेषणमन्तः" [७. ४. ११३.] इति परिभाषाबलात् तदन्तपरतया 'हृत्परमलेखः' इत्यादौ कृदादेशविधानार्थमावश्यकत्वमिति केषांचिन्मतं समर्थयितुं तस्य ज्ञापकत्वाभावेऽपि "नवा खित्कृदन्ते रात्रेः" [३. २. ११७.] इति सूत्रोक्तस्यान्तग्रहणस्यान्यार्थतया व्याख्यातुमशक्यत्वेन तस्यैव ज्ञापकत्वमिति प्रकटितम्, सति चास्य ज्ञापकत्वे लेखग्रहणस्य सर्वथा सार्थक्यमेवेति न कोऽपि दोषः । नन्वेतस्मिन् न्यायांशे ज्ञापिते "खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च [३. २. १११.] इति सूत्रे खित्प्रत्ययान्ते उत्तरपदे इत्यर्थालाभाज्जंमन्य इत्यादौ कथं मोऽन्तादेश इति चेत्? न-केवलं खित्प्रत्ययमात्रस्योत्तरपदत्वाभावात् सूत्रस्य वैयर्थ्यापत्त्या तत्र तदन्तग्रहणमित्यस्यार्थस्य वृत्तावेवावेदितत्वात् । किञ्चात्र सूत्रेऽव्ययवर्जनमपि तदन्तार्थज्ञापकम्, यतः खित्प्रत्ययो धातोर्विधीयते, खितीति सप्तम्या चाव्यवहितपूर्वस्य विधिरिति प्रतीयते, न च खित्प्रत्ययादव्यवहितपूर्वमव्ययं सम्भाव्यते, ततश्चाव्ययवर्जनं व्यर्थमेवेति व्यर्थीभूतं तदत्र तदन्तविधिं ज्ञापयिष्यतीति न कोऽपि दोषः । उक्तश्चायमर्थः "हृदयस्य हृल्लेखयदण्लासेषु" [पा० सू० ६. ३. ५०] इति सूत्रे महाभाष्येऽपि, तत्र हि प्रकृतसूत्रस्थलेखग्रहणेनोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययस्वरूपस्यैव ग्रहणं न तदन्तस्येति ज्ञापयित्वाऽन्ते शङ्कितम्—"यद्येतज्ज्ञाप्यते "खित्यनव्ययस्य" [पा० सू० ६. ३. ६६.] इति खित्येवानन्तरस्यानव्ययस्य ह्रस्वत्वं प्राप्नोति । खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा खिदन्ते उत्तरपदे भविष्यति । ननु चायमस्ति 'स्तनन्धय'इति । अत्राऽपि शपा व्यवधानम् । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद् व्यवधानमेव । अथवैतज्ज्ञापयत्याचार्यः—खित्यनव्ययस्य न भवतीति, यदयमनव्ययस्येति प्रतिषेधं शास्ति, नहि खित्यनन्तरमव्ययमस्ति ।" इति । तथा च सूत्रसामर्थ्यस्य श्रयितुमशक्यत्वेऽपि अनव्ययस्येति प्रतिषेधसामर्थ्यादेव तत्र तदन्तग्रहणमिति भाष्याशयः । एवमेतन्न्यायसत्त्वे "घञ्युपसर्गस्य बहुलम्" [३. २. ८६.] इति सूत्रेऽपि सूत्रारम्भसामर्थ्यादेव तदन्तरविधिरित्यास्थेयम्, अन्यथा घञ्रूपस्योत्तरपदस्य तस्मिन् परे वोपसर्गस्याभावात् सूत्रवैयर्थ्यं स्यादेव । न च 'अ'शब्दादाचारक्विबन्ताद् घञि तत्र धातुरूपस्य प्रत्यये परतो "लुगस्यादेत्यपदे" [२. १. ११३.] इति लुकि कृते घञ्रूपस्योत्तरपदस्य संभव इति वाच्यम्, तत्रोपसर्गस्य दीर्घप्रयोजनभावात् । अयमाशयः—तत्रोपसर्गो यदि नाम्यन्तस्तर्हि "ह्रस्वोऽपदे वा" [१. २. २२.] इति ह्रस्वः स्यात्, यदि चाकारान्तस्तदा तेन सह दीर्घे कृते घञ्निमित्तकस्य दीर्घस्य प्रयोजनाभावः सुतरामेवेति । तथा च सूत्रवैयर्थ्यपरिजिहीर्षयाऽत्र तदन्तविधिरास्थेय इति न कोऽपि दोष इति ॥ १७ ॥

## *ग्रहणवता नाम्ना न तदन्तविधिः* ॥ १८ ॥

**सि०**—"नडादिभ्य आयनण्" [६. १. ५३.] इत्यादिसूत्रेषु 'नडादि'शब्दे बहुव्रीहिः, नड आदिर्येषां तेभ्य इत्यर्थात्, बहुव्रीहौ चान्यपदार्थं विशेष्यम्, तच्चेह योग्यत्वाद् नामरूपमेव । तथा च नडादिभ्यो नामभ्य आयनण् इति फलति । विशेषणं च तदन्तस्य बोधकमिति "विशेषणमन्तः"

[ ७. ४. ११३. ] इति परिभाषया लभ्यते, ततश्च नडादिपदस्यापि तदन्तबोधकतया नडाद्यन्तेभ्यो नामभ्य आयनण् इत्यर्थः स्यात् । केवलान्नडादिशब्दाच्च व्यपदेशिवद्भावेनायनण् सिद्ध्यति । इत्थं च सूत्रनडस्यापत्यमित्यर्थेऽस्य प्रवृत्तौ सौत्रनाडायन इति स्यात्, इष्यते तु "अत इञ्" [ ६. १. ३१ ] इति इञि, अनुशतिकादित्वादुभयपदवृद्धौ—सौत्रनाडिरिति, तदर्थमयं न्यायः समाश्रीयते । तथा च "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषाबाधनार्थमेवायं न्याय इति समायाति । न्यायार्थश्च—ग्रहणवन्नामप्रयोज्यं तदन्ते विधानं न भवतीति । अत्र प्राचीनैर्न्यायावतरणार्थमेवं लिखितम्-सौत्रनाडिरित्यत्रायनण्वारणार्थत्वमुपन्यस्य "ननु काऽत्र न्यायापेक्षा ? 'सूत्रनड' इत्यस्य नडादिभ्योऽन्यत्वेनायनणः प्राप्तेरेवाभावात्, उच्यते-गवेन्द्र इत्यत्रवद् 'गवेन्द्रयज्ञ' इत्यत्रेन्द्रयज्ञशब्देऽपि परे इन्द्ररूपावयवप्राधान्यविवक्षया "इन्द्रे" [ १. २. ३०. ] इत्यनेनाव आदेशो यथा स्यात् तथात्र नडरूपावयवप्राधान्यविवक्षायां सूत्रनडशब्दादप्यायनण् प्राप्नोति, परमेतन्न्यायेन निषिद्धत्वादेव न स्यात् । इत्थं चावयवप्राधान्यविवक्षा यदि क्रियते तदैवास्य न्यायस्यावकाशः स्यात्, अन्यथा तु नामग्राहमुक्तं कार्यं तदन्तस्य क्वापि प्राप्नोत्येव नेति निरवकाशत्वमेवास्य न्यायस्य प्रसज्येत । ततश्च नामग्राहमुक्तस्य कार्यस्यावयवप्राधान्यविवक्षया, तन्नामान्तस्यापि प्राप्तौ तन्निषेधार्थोऽयं न्यायः" इति । अत्रेदमुच्यते—यदोपरिवर्णितप्रकारेण तदन्तात् प्रत्ययप्राप्तिः परिभाषारूपानुशासनसिद्धा तदाऽवयवप्राधान्यविवक्षारूपाऽनिर्धारितहेतुमाश्रित्य न्यायप्रयोजनवर्णनं नोचितम् । अत एव "मालेपीकेष्टकस्यान्तेऽपि भारि-तूल-चिते" [ २. ४. १०२. ] इति सूत्रे बृहद्वृत्तावत्रत्यान्तग्रहणस्य प्रकृतन्यायज्ञापकत्वकथनपरग्रन्थस्य व्याख्यायां तु लघुन्यासे "मालादिभिः प्रकृतस्य नाम्नो विशेषणात् तदन्तलाभात् केवलस्य च व्यपदेशिवद्भावात् ह्रस्वसिद्धौ किमर्थमन्तग्रहणमित्याशङ्कायामाह—इदमेवेति" इत्युक्तम् । एवं च "विशेषणमन्तः" [ ७. ४. ११३. ] इति न्यायबाधनार्थमेवेदं ज्ञापनमिति स्पष्टमेव, एवं चावयवप्राधान्यविवक्षा व्याख्यानभूतस्तदीयन्यासग्रन्थोऽपि चिन्त्य एव, प्रकृतविषये तादृशविवक्षाया अनाश्रयणात् । यच्च "इन्द्रे" इति [ १. २. ३०. ] इति सूत्रे 'इन्द्रस्थे स्वरे परे' इति वृत्तिग्रन्थेनावयवप्राधान्यविवक्षासाधनं तत् तु न युक्तम्, तत्रावादेशस्य निमित्तभूतः स्वर एव तदधिकारात्, स च इन्द्रशब्दस्थो ग्राह्य इति स्वत एव तस्य प्राधान्यं, न तु विवक्षाधीनम् । 'इन्द्रे' इति 'स्वरे' इत्यनुवृत्तस्य विशेषणमेव, सप्तम्या चेन्द्रशब्दस्य तादृशस्वराधिकरणत्वमेव कथ्यते, "तदादाविति वक्तव्यम्" इति तत्रत्यन्यासग्रन्थोऽपि वृत्त्यभिप्रायवर्णनरूप एव नापूर्वबोधकः, इन्द्रशब्दादिभूते स्वरे इति तत्तात्पर्यात् । इह च [ न्यायसंग्रहवृत्तिग्रन्थे ] 'इन्द्ररूपावयवप्राधान्यविवक्षया' इति कथनस्य इन्द्रयज्ञशब्दे इन्द्ररूपस्य तदेकदेशभूतस्य शब्दस्यैव प्राधान्यमिति तात्पर्यं स्फुटमेव प्रतिभातीति महानेव भेद उभयोः [ न्यासग्रन्थेन सहास्य वृत्तिग्रन्थस्य ], तत् कथं न्यासग्रन्थः स्वकीयन्यायसंग्रहन्यासे स्ववृत्तिग्रन्थमूलभूततया प्राचीनैरुपवर्णित इति विवेचयन्तु सूरयः । एतन्न्यायज्ञापकं च "मालेपीकेष्टकस्यान्तेऽपि भारितूल-चिते" [ २. ४. १०२. ] इतिसूत्रस्थमन्तेऽपीति पदमिति प्रकृतसूत्रे बृहद्वृत्तौ प्रतिपादितम् । तथाहि—तत्रान्तेऽपीति पदं मालभारीत्यत्रेवोत्पलमालभारीति प्रयोगेऽपि ह्रस्वप्रवृत्त्यर्थं कृतम्, तच्च "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया मालाशब्दस्य शब्दस्वरूपविशेषणतामाश्रित्य मालान्तस्याऽपि ग्रहणेनैव सिद्धमिति तदर्थं कृतमन्तेऽपीति व्यर्थमेव, व्यर्थं तदिमं न्यायं ज्ञापयति । तथा च मालेति नामग्रहणे तदन्तस्य ग्रहणं न प्राप्नोतीति तदर्थमन्तेऽपीत्यस्य स्वांशे चारितार्थ्यम् । फलं च 'नाडायन' इत्यत्रेव सूत्रप्रधानो नडः सूत्रनडस्तस्यापत्यं सौत्रनाडिरित्यत्र "नडादिभ्य आयनण्" [ ६. १. ५३. ] इति आयनण् न भवति, किन्तु "अत इञ्" [ ६. १. ३१. ] इत्येवेत्युक्तमेव । अयं च न्यायस्तरलः "केवलसखिपतेरौः" [ १. ४. २६. ] इति सूत्रे केवलग्रहणात् । तथाहि—सखिपतिशब्दयोर्नामत्वेन तद्ग्रहणे तदन्तविधेरभावात् केवलयोरेव तयोः कार्यं स्यादिति केवलग्रहणं व्यर्थं सदस्य न्यायस्यानित्यतां ज्ञापयति, तथा च कदाचित् समस्तयोः [ समासान्तस्थितयोः ] सखि-पत्योरपि ग्रहणं स्यादिति तन्निवारणाय केवलग्रहणस्य चारितार्थ्यम् । फलं चानित्यत्वस्य "प्रियासृजोऽसावपृणद् द्विडस्रा" [ द्व्याश्रये सर्गे २ श्लो० ६७ ] इत्याचार्यप्रयोगे "दन्त-पाद नासिका०" [ २. १. १०१. ] इति सूत्रेणान्तस्थितस्याप्यसृक्शब्दस्यासनादेशो विकल्पेनेति, अन्यथा तत्रापि नामग्रहणस्य सत्त्वात् तदन्तस्याग्रहणेऽसनादेशो न स्यादिति । एतन्न्यायस्वीकारादेव "पूर्वमनेन सादेश्चेन्" [ ७. १. १६७. ] इति सूत्रे सादेश्चेति चरितार्थम्, अन्यथा पूर्वशब्दादिव कृतपूर्वशब्दादिभ्योऽपि तदन्तविधिना "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया इन्प्रत्ययसिद्धेः सादेश्चेत्यंशस्य वैयर्थ्यमेव । पाणिनीये नये चैतत्समानविषययोः "पूर्वादिनिः" [ पा० सू० ५. २. ८६. ] "सपूर्वाच्च" [ पा० सू० ५. २. ८७. ] इति सूत्रयोर्मध्ये द्वितीयस्यैतन्न्यायज्ञापकत्वमाश्रीयते, अत एवायं न्यायः प्रत्ययविधिविषय एवेति ते वर्णयन्ति, विवेचयिष्यते

चैतद्विवरणे ॥ *उपपदविधिषु न तदन्तविधिः* इत्थमप्येतन्न्यायसमानविषयमेव न्यायान्तरं केचित् पठन्ति । अस्यायमर्थः—यत्र किञ्चित् पदमुपपदत्वेन पठ्यते तत्र तदन्तविधिना तदन्तस्य पदस्य ग्रहणं न भवति, यथा—"क्षेम-प्रिय-मद्र-भद्रात् खाण्" [ ५. १. १०५. ] इति सूत्रे क्षेमादयः शब्दाः कर्मभूता उपपदत्वेन पठ्यन्ते, तेषु स्वरूपस्यैव ग्रहणं न तदन्तस्येति योग-क्षेमौ करोति तच्छीलेत्यर्थे योगक्षेमकरीत्येव भवति, न तु तत्र खाणौ भवतः, इति योगक्षेमंकरा—योगक्षेमकारीति न भवति । अस्यापि ज्ञापकान्तरमुदाहरन्ति, यथा "नग्न-पलित-प्रियाऽन्ध-स्थूल-सुभगाढ्य-तदन्ताच्च्यर्थेऽच्वेर्भुवः खिष्णु-खुकञौ" [ ५. १. १२८. ] इति सूत्रे तदन्तग्रहणमत्र ज्ञापकमिति, तद्धि अनग्नो नग्नो भवतीति नग्नंभविष्णुर्नग्नंभावुक इतिवत् अननग्नोऽनग्नो भवतीति विग्रहे अनग्नंभविष्णुरनग्नंभावुक इत्यादिप्रयोगसिद्ध्यर्थमेव कृतम् । तच्च तदन्तविधिनैव सिद्धमिति व्यर्थं सदुपपदविधिषु न तदन्तविधिरिति ज्ञापयति । सति च प्रकृते न्याये तस्याऽपि नामग्रहणत्वेन तत्र तदन्तविधेरभावे तदन्तग्रहणस्य सार्थक्येन तन्न्यायस्य [ उपपदविधिषु तदन्तविधिर्नेत्यस्य ] प्रयोजनाभाव एव, विशेषस्यास्य सामान्येऽन्तर्भावात् । एवं *ग्रहणवता नाम्ना न तदादिविधिः* इत्यपि व्याकरणे न्यायान्तरमस्तीति सोदाहरणज्ञापकसद्भावादवगम्यते । अत्र च ज्ञापकं द्वारादिगणे तदादिविधिप्रतिपादकं "न्यग्रोधस्य च केवलस्य" [ ७. ४. ७. ] इति सूत्रम् । फलं च "न्यङ्कोर्वा" [ ७. ४. ८. ] इत्यनेनैकारविकल्पो यथा नैयङ्कवमित्यादौ भवति तथा न्याङ्कुचर्मणमित्यादौ न भवतीति प्राचीनाः प्रतिपादयन्ति । तथाहि—तेषां ग्रन्थः—"ग्रहणवता नाम्ना न तदादिविधिरित्यपि न्यायः सोदाहरणज्ञापकोऽर्थतो व्याकरणे दृश्यते । तथाहि—न्यङ्कुशब्दस्यौणादिकस्याव्युत्पत्तिपक्षे न्यङ्कोर्मृगविशेषस्येदं नैयङ्कवं न्याङ्कवमित्यत्र यथा "न्यङ्कोर्वा" [ ७. ४. ८. ] इत्यनेन न्यङ्कुशब्दस्य यकारात् प्रागैकारो विकल्पेन स्यात् तथा न्यङ्कुचर्मण इदं न्याङ्कुचर्मणमित्यत्रावयवप्राधान्यविवक्षया प्राप्तोऽपि "न्यङ्कोर्वा" [ ७. ४. ८. ] इत्यैकारविकल्पो न स्यात्, एतन्न्यायेन निषेधात् । ज्ञापकं चास्य "द्वारादेः" [ ७. ४. ६. ] इत्यत्र द्वारादीनां तदादिविधेरवयवप्राधान्यविवक्षया प्राप्तस्याप्येतन्न्यायेन निषिद्धत्वात् तत्प्रतिप्रसवकरणार्थं "न्यग्रोधस्य केवलस्य" [ ७. ४. ७. ] इति सूत्रकरणम् । तथाहि—द्वारे नियुक्त इति वाक्ये "तत्र नियुक्ते" [ ६. ४. ७४. ] इत्यनेनेकणि दौवारिक इत्यत्र "द्वारादेः" [ ७. ४. ६. ] इत्यनेन केवलस्य द्वारशब्दस्य वकारात् प्रागौकारो यथा स्यात्, तथा द्वारपालस्यापत्यं दौवारपालिरित्यत्र द्वारशब्दादिकस्य द्वारपालेति समुदायस्यापि वकारात् प्रागौकार इष्टः, स चावयवप्राधान्यविवक्षया सिध्यन्नेवाभूत्, परं *ग्रहणवता नाम्ना न तदादिविधिः* इति न्यायेन निषिद्धः, ततो द्वारादीनां तदादिविधिरपि स्यात्; न्यग्रोधस्य तु तदादिविधिर्न स्यात्, किन्तु केवलस्यैव स्यादित्यनया रीत्या द्वारादीनां तदादिविधिभवनज्ञापनार्थं "न्यग्रोधस्य केवलस्य" [ ७. ४. ८. ] इति सूत्रं कृतम्" इति, एतदग्रेऽपि चायमेव ग्रन्थो विवृतः । तत्रेदमुच्यते—द्वारादीनां तदादिविधिज्ञापनार्थं "न्यग्रोधस्य केवलस्य" [ ७. ४. ८. ] इति सूत्रस्थं केवलग्रहणमित्येतावदेव बृहद्वृत्त्यादिग्रन्थेभ्योऽवसीयते, न तावताऽस्य न्यायस्य सत्त्वमनुमीयते । यदि तदादिविधिस्तत्र केनापि प्रमाणेन सिद्धः स्यात् तदादिविधिज्ञापनार्थं कृतेन प्रयत्नेन तदादिविधिनिषेधकप्रकृतन्यायसत्ता विज्ञाप्येतापि, न चैतदस्ति, नहि केनापि वचनेनात्रावयवप्राधान्यविवक्षाऽनुमन्यते, वक्तुरिच्छारूपायाश्च तस्याः शास्त्राव्यवस्थापकत्वात् । तथा च *स्वं रूपं०* इति न्यायेन द्वारादिपठितशब्दानां स्वरूपत एव ग्रहणं स्यान्न तदादीनामिति द्वारपालशब्दस्य तत्र ग्रहणं न स्यादिति तद्ग्रहणायात्रत्यकेवलग्रहणेन "श्वादेः०" [ ७. ४. १०. ] इति सूत्रेण वा द्वारादिषु तदादिविधिर्ज्ञाप्यते इत्येव तत्रत्यग्रन्थस्याशयः । सम्पूर्णसूत्रस्य ज्ञापकता च प्रागुक्तप्राचीनग्रन्थसम्बद्धा न तत्र प्रतीयते, सम्पूर्णसूत्रस्य नियमार्थत्वविध्यर्थत्वयोस्तत्र पक्षान्तरेण प्रतिपादनात् । तथाहि—तत्रत्यो ग्रन्थः—[ "द्वारादेः" ७. ४. ६. इति सूत्रबृहद्वृत्तौ ] "श्वादेरिति" [ ७. ४. १०. ] इति प्रतिषेधाद् द्वारादिपूर्वाणामपि भवति—द्वारपालस्यापत्यं दौवारपालिः," इति । तत्र च न्यासकारेणेत्थं व्याख्यातम्—"श्वन्शब्दोऽपि द्वारादिस्तत्र तदादेः कार्यप्रतिषेधात् तत्प्राप्तिर्विज्ञायते इत्यर्थः" इति । एताभ्यां च ग्रन्थाभ्यां द्वारादिपूर्वाणां स्वत एव कार्यप्राप्त्यभाव इति श्वादेः कार्यस्य प्राप्तिरेव नेति तत्र निषेधोऽनुपपद्यमानस्तदादिविधिद्वारा कार्यप्राप्तिं ज्ञापयतीति स्पष्टमवगम्यते । तत्र तदादेः कार्यं केनचिन्न्यायेन प्रतिषिद्धमिति नावद्योत्यते, अग्रे च "न्यग्रोधस्य केवलस्य" [ ७. ४. ७. ] इति सूत्रबृहद्वृत्तौ न्यग्रोधशब्दस्य व्युत्पन्नत्वाऽव्युत्पन्नत्वपक्षयोः सूत्रार्थं वर्णयित्वोदाहृत्य च "केवलस्येति किम्? न्यग्रोधमूले भवा न्याग्रोधमूलाः शालयः, न्यग्रोधाः सन्त्यस्मिन् ऋश्यादित्वाच्चातुरर्थिकः कः—न्यग्रोधकम्, तत्र भवो न्याग्रोधकः" इत्येवं समासघटक प्रत्ययान्तघटकयोर्न्यग्रोधशब्दयोः केवलग्रहणव्यावर्त्यत्वेन प्रदर्श्य "इदमपि द्वारादीनां तदादिविधेर्ज्ञापकम्" इत्युक्तम् । न्यासकृता च इदमपीति प्रतीकमुपादाय—"न केवलं 'श्वादेः' इति निषेधः, किन्तु केवलग्रहणम-

पीत्यर्थः, तथा च केवलग्रहणमात्रस्यैव ज्ञापकत्वमुक्तम्। किञ्च तदग्रे सूत्रस्य पक्षभेदेन नियमार्थत्वविध्यर्थत्वप्रतिपादनपर-बृहद्वृत्तिग्रन्थव्याख्यानावसरे "नन्वेतत् सूत्रमपि किमर्थं कृतमित्याह-न्यग्रोहतीति। अयमर्थः-यदा व्युत्पत्तिपक्ष आश्रीयते तदा न्यक्शब्दसाधनकाले या निशब्दात् प्रथमा तदपेक्षया निशब्दसम्बन्धिन इकारस्य पदान्तत्वात् तत्स्थानप्रादुर्भावाद् यस्यापि पदान्तत्वे "य्वः पदान्तात्" [ ७. ४. ५. ] इत्यनेनैवैदागमे सिद्धे सतीदं सूत्रं नियमार्थम्। अव्युत्पत्तिपक्षे तु यस्यापदान्तत्वात् "य्वः पदान्तात्" [ ७. ४. ५. ] इति न सिद्ध्यतीति विध्यर्थमिदम्" इति। तथा चोभयोः पक्षयोः सूत्रस्य सार्थक्यं प्रदर्शयता सम्पूर्णसूत्रस्य द्वारादिषु तदादिविधिज्ञापकत्वकथनं न तदनुकूलमिति प्रकटितमेव। द्वारादिषु हि सर्वेऽव्युत्पन्नाः प्रायोऽपदान्तवकारयकारा एव शब्दाः पठिता इति व्युत्पत्तिपक्षे सम्भावितपदान्तयकारस्य न्यग्रोधशब्दस्य तत्र पाठकल्पना तदनुगता च संपूर्णस्य सूत्रस्य द्वारादौ तदादिविधिज्ञापकत्वकल्पना च किम्मूलेति चिन्त्या। न चैतस्य न्यायस्य [ *ग्रहणवता नाम्ना न तदादिविधिः* इत्यस्य ] अभावे न्यङ्कुचर्मण इदं न्याङ्कुचर्मणमित्यत्रापि "न्यङ्कोर्वा" [ ७. ४. ९. ] इत्यनेन विकल्पेनैदागमः स्यादिति वाच्यम्, तदादेः प्राप्त्यभावात्। न चावयवप्राधान्यविवक्षया प्राप्तिरिति वाच्यम्, अवयवप्राधान्यविवक्षाया अनिरुक्तेः, क्वेयमवयवप्राधान्यविवक्षाऽऽश्रीयते सूत्रे वा लक्ष्ये वा?, सूत्रे इति चेत्? तत्र न्यङ्कुशब्दस्यावयवो यो यकारस्तस्यैव प्राधान्यं विवक्षितं न तु शब्दस्य, तथा च तस्य यथा न्यङ्कुशब्दे सत्त्वं तथा न्यङ्कुचर्मशब्देऽपीति भवतामाशयः, तथा च नायं तदादिविधिः, तथा च तदादिविधिनिषेधार्थेन न्यायेनावयवप्राधान्यविवक्षया प्राप्तस्य कार्यस्य निषेद्धुमसामर्थ्यमेव। अथ प्रयोगे न्यङ्कुचर्मशब्दे न्यङ्कुशब्दस्यैव प्राधान्यमिति तदीय एव यकारोऽत्र विज्ञायत इति चेत्? हन्तैतावता कथं सूत्रप्राप्तिरिह स्यात्, तथाहि-"न्यङ्कोर्वा" [ ७. ४. ९. ] इति सूत्रार्थ एवं भवति-'ञ्णित्तद्धितप्रत्ययाव्यवहितपूर्वत्वविशिष्टन्यङ्कुशब्दावयवयकारात् प्रागैकारो भवति' इति, न चास्ति न्यङ्कुचर्मन्शब्दाद् विहिते प्रत्यये न्यङ्कुशब्दस्याव्यवहितपूर्वत्वमिति तत्रावयवप्राधान्यविवक्षया प्राप्तिः कथमीर्यत इति त एव विदन्ति। अस्मन्मते तु तत्र स्वत एव नैदागमप्राप्तिरिति तदर्थमपूर्वन्यायकल्पनाऽनावश्यकीति किमधिकं विवेचकेषु। स्वतोऽप्यस्य न्यायस्य क्वाप्यपठितत्वमिति स्वीकृतं तैरन्ते इति *ग्रहणवता नाम्ना न तदन्तविधिः* इत्येक एवेदृशोऽयं न्याय इति पर्यवस्यति। विशेषश्च विवरणे विवेचितः॥ १८॥

## *ग्रहणवता नाम्ना न तदन्तविधिः* ॥ १८॥

त० —ग्रहणवतेत्यत्र तृतीयायाः प्रयोज्यत्वमर्थः, तथा च ग्रहणवन्नामप्रयोज्यं तदन्ते विधानं नेत्यर्थ इत्युक्तं वृत्तौ। तत्र किमिदं ग्रहणवत्त्वमिति चेत्? अत्र केचित्-आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वं तदित्याहुः, तन्न-तथा सति नडादेः["नडादिभ्य आयनण्" ६. १. ५३.]इति सूत्रे आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन ग्रहणवत्त्वोपपत्तावपि "दोरीयः" [ ६. ३. ३२. ]"द्विस्वरादनद्याः"[ ६. १. ७१ ]इत्यादिसूत्रेषु 'दु'पदस्य द्विस्वरपदस्य चानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वाभावेन निषेधाप्राप्त्या तदन्तविध्यापत्तेः। तद्दोषपरिहाराय नामत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वं ग्रहणवन्नामत्वमित्युच्यते चेत्? तथाप्युक्तदोषाणां तादवस्थ्यमेव, दुत्व-द्विस्वरत्वादीनां नामत्वव्याप्यत्वाभावात्। तन्निरासाय यदि नामत्वव्याप्यविषयताप्रयोजकत्वमेव तत्त्वमित्युच्यते, नामभ्य एव तद्धितप्रत्ययानां विधानात् तद्धितप्रकरणान्तर्गतानां दु-द्विस्वरादिशब्दानां नामत्वव्याप्यविषयताप्रयोजकत्वेन प्रकृतदोषोद्धारादिति, तथा सति "अत इञ्"[ ६. १. ३१. ]इत्यादावपि नामसम्बन्धस्यावश्यकत्वेनोक्तरीत्या अत्त्वावच्छिन्नविषयताया नामत्वव्याप्यत्वेन तदन्तविधिनिषेधापत्तौ 'अदन्तात् षष्ठ्यन्तान्नाम्नः' इत्यर्थानापत्तौ दाक्षिरित्यादीनामसिद्ध्यापत्तिः; इति चेत्? अत्रोच्यते-वर्णत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वे च सति नामवृत्तिविषयताप्रयोजकत्वं ग्रहणवन्नामत्वमिति। न चैवं द्विस्वरपदस्यापि वर्णत्वव्याप्यस्वरत्वावच्छिन्नविषयताप्रयोजकत्वेन निषेधानापत्तौ द्विस्वरान्तादपि प्रत्ययविधानं स्यादिति वाच्यम्, धर्मितानवच्छेदकस्यैव वर्णत्वव्याप्यधर्मस्य ग्रहणेनादोषात्, द्विस्वरपदे द्विस्वरत्वस्य द्वित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वस्य सत्त्वात्। नन्वेवम्-"अस्-तपो-माया-मेधा-स्रजो विन्"[ ७. २. ४७. ] इत्यादौ 'अस्'पदस्यापि ग्रहणवन्नामत्वापत्त्या निषेधप्रवृत्त्या यशस्वीत्यादिप्रयोगाणामसिद्ध्यापत्तिरिति चेत्? न-प्रत्ययस्याप्यसः सत्त्वेन प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वाभावाददोषात्। परे तु-"एवं सति बहूनां प्रत्ययानां द्विस्वरत्वेन द्विस्वरग्रहणस्याऽपि प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाप्रयोजकत्वाभावेन तत्रापि निषेधानापत्तिरिति कथञ्चिदस्य न्यायस्यानित्यत्वमाश्रित्यैव-"अस् तपो-माया०"[ ७. २. ४७. ]इत्यादौ निर्वाहः कार्यः" इति वर्णयन्ति। "विशेषणमन्तः"[ ७. ४. ११३. ]इति परिभाषाप्राप्ततदन्तविधेरयं प्रतिषेध इत्यावेदितं वृत्तौ न्यासादिग्रन्थोपन्यासेन। पाणिनीये नये च "विशेषणमन्तः"[ ७. ४. ११३. ]इति परिभाषास्थाने "येन विधिस्तदन्तस्य"[ पा० सू० १. १. ७२. ]इति संज्ञासूत्रे पठ्यते, तत्र च

समासे प्रत्ययविधौ च तदन्तविधिप्रतिषेधाय 'समास-प्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जम्'' इति वार्तिकं पठ्यते, तत्रत्यप्रत्ययांशानुवादभूतोऽयं न्याय इति नागेशभट्टः प्राह परिभाषेन्दुशेखरे, अत एव चायं न्यायः प्रत्ययविधिविषय एवेति तन्मतम् । अत एव च "येन विधिस्तदन्तस्य"[ पा० सू० १. १. ७२. ] इति सूत्रे महाभाष्ये प्रत्ययविधिभिन्ने "अप्तृन्तृच्स्वसृनप्तृ०" [ पा० सू० ६. ४. ११. ]इत्यादिसूत्रे गृह्यमाणनाम्नाऽपि तदन्तविधिं स्वीकृत्य स्वसा परमस्वसेत्युदाहृतमिति तेनापि प्रकृतन्यायस्य प्रत्ययविधिमात्रविषयत्वमिति गम्यते । तथा च पूर्वोक्त[ "समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जम्"इति ] वार्त्तिकस्थप्रत्ययग्रहणेनैव गतार्थत्वाशयेनैवायं न्यायस्तत्र सूत्रे महाभाष्ये विशिष्य न पठितः । "असमासे निष्कादिभ्यः" [ पा० सू० ५. १. २०. ]इति सूत्रव्याख्यायां महाभाष्येऽयं न्यायः पठ्यते, तत्रैव चास्य क्वचिदप्रवृत्तिरपि विज्ञाप्यतेऽसमासग्रहणसामर्थ्यात् । अयं च तत्रत्यो ग्रन्थः–"असमास इति किमर्थम् ? परमनिष्केण क्रीतं–परमनैष्किकम् । नैतदस्ति, निष्कशब्दात् प्रत्ययो विधीयते, तत्र कः प्रसङ्गो यत् परमनिष्कशब्दात् स्यात्, नैव प्राप्नोति, नार्थः प्रतिषेधेन । तदन्तविधिना प्राप्नोति । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्राप्नोति" । अत उत्तरं पठति–"निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य"[ वार्तिकम् ], निष्कादिष्वसमासग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्यः–"पूर्वत्र तदन्तविधेः प्रतिषेधो न भवतीति" । इति । तत्र पूर्वत्रेति पदं न्यायव्युत्पादनमात्रं न तु विवक्षितार्थम् । एतत्सूत्रेऽसमासग्रहणेनेतः पूर्वं ग्रहणवता नाम्ना न तदन्तविधिरिति न्यायो नास्तीवेति गम्यत इति तात्पर्यात् । तथा च परसूत्रविषयाण्यप्युदाहरणानि महाभाष्ये तत्रैव प्रदत्तानि । स्वमते च "मालेषीकेष्टकस्यान्तेऽपि" [ २. ४. ११२. ]इति स्यान्तेऽपीत्यंशेन प्रत्ययविधिभिन्नविषयेण ज्ञापनात् प्रत्ययाप्रत्ययविधिसाधारणोऽयं न्याय इत्यास्थीयते तथा च यत्र प्रत्ययविधिभिन्ने प्रत्ययविधौ वाऽस्याप्रवृत्तिरिष्टा तत्र "केवलसखि-पतेरौः"[ १. ४. २६. ]इति सूत्रस्थकेवलग्रहणादस्यानित्यत्वमाश्रयणीयमिति वृत्तौ प्रदर्शितमेव। यद्यपि स्वमतेऽपि "पूर्वमनेन सादेश्चेन्"[ ७. १. १६७. ]इति सूत्रस्थेन सादेश्चेत्यंशेन न्यायोऽयं ज्ञापयितुं शक्यते, तथाहि–प्रकृतन्यायाभावे 'पूर्वमनेन'इत्येतावदुक्तावेव कृतपूर्वादीनामपि तदन्तविधिना ग्रहणे सिद्धे तदर्थं कृतस्य सादेश्चेत्यंशस्य वैयर्थ्यं स्पष्टमेव । ज्ञापिते चास्मिन् न्याये पूर्वशब्दस्य नामग्रहणत्वेन तत्र तदन्तविधेरभावात् सादेः प्रत्ययो न प्राप्नोतीति तद्ग्रहणं सार्थकम् । ज्ञापिते चास्मिन् न्याये "मालेषीकेष्टकस्यान्तेऽपि०"[ २. ४. १०२. ] इति सूत्रेऽन्तग्रहणस्य स्वत एव चारितार्थ्यम्, किन्तु तथा सति [ सादेरित्यनेनास्मिन् न्याये ज्ञापिते सति ]प्रकृतन्यायस्य प्रत्ययविधिविषयत्वसंभावनया "मालेषीकेष्टकस्य०"[ २. ४. १०२. ]इति सूत्रस्थानेऽपीत्यस्य वैयर्थ्यं स्यादिति प्रत्ययविधिभिन्नविषयेणान्तेऽपीति पदेनैव ज्ञापनमुचितमास्थितम् । यत्र प्रत्ययविधिभिन्नेऽस्य न्यायस्य प्रवृत्तिरनिष्टा तत्रानित्यत्वाश्रयणेन निर्वाहः कार्यः । अनित्यत्वज्ञापकं यदुक्तं "केवलसखि-पतेरौः" [ १. ४. २६. ]इति सूत्रे केवलग्रहणं, तदपि प्रकृतन्यायस्य प्रत्ययविधिविषयत्वाभाव एव। यदि चास्य प्रत्ययविधिविषयत्वमेवेत्याश्रीयते तदा "मालेषीकेष्टकस्यान्तेऽपि"[ २. ४. १०२. ] इतिसूत्रस्थमन्तेऽपीति स्पष्टार्थमेव, "केवलसखि-पतेरौः"[ १. ४. २६. ]इति सूत्रस्थं केवलग्रहणं च सार्थकमेव । अनित्यत्वज्ञापनस्यावश्यकत्वे च "पुरुषहृदयादसमासे"[ ७. १. ७०. ] इतिसूत्रस्थमसमासे इति तज्ज्ञापकमास्थेयम्, तथाहि—पुरुषहृदयग्रहणस्य नामग्रहणत्वेन *ग्रहणवता०*इति न्यायप्राप्तौ तदन्तविधिनिषेधे परमपुरुषादिसमासात् प्राप्त्यभावेन तद्वारणार्थम् 'असमासे' इति पदं व्यर्थमेव, व्यर्थं च तदस्य न्यायस्यानित्यत्वं ज्ञापयितुमलम् । एवं च "दन्त-पाद-नासिका०" [ २. १. १०१. ]इति सूत्रे चास्य न्यायस्य प्रत्ययविधिविषयत्वस्वीकारे तदन्तविधिर्निर्बाध एवेति "प्रियासृजोऽसावपृणद् द्विडस्रा"इति द्व्याश्रयकाव्य[ स० २, श्लो० ६७ ]प्रयोगोऽपि सङ्गत एव । अस्य न्यायस्य प्रत्ययविधिमात्रविषयत्वे सामान्यतो नामग्रहणविषयत्वे वोभयथाप्युपपदविधिषु प्रवृत्तेरबाधाद् *उपपदविधिषु न तदन्तविधिः* इति न्यायोऽपि तेन गतार्थ एवेति न तस्य पृथगुल्लेख आवश्यकः ॥ *ग्रहणवता नाम्ना न तदादिविधिः* इति न्यायसंग्रहप्राचीनवृत्त्युपस्थापितो न्यायश्च निर्मूल एवेति प्रतिपादितं वृत्तावेव । तदुपपादनपरो न्यासग्रन्थः केवलमिह किञ्चिद् विवेच्यते–तत्र हि न्यङ्कुशब्दस्यौणादिकत्वेनोणादीनां च व्युत्पत्त्यव्युत्पत्तिपक्षयोः समयोः शास्त्रकाराभिमतत्वेन व्युत्पत्तिपक्षे "य्वः पदान्ताद्०" [ ७. ४. ५. ] इति नित्यमैदागमे प्राप्तेऽव्युत्पत्तिपक्षे चाप्राप्ते "न्यङ्कोर्वा" [ ७. ४. ८. ] इत्यनेन विकल्पेनैदागमो विधीयत इति प्राप्ताप्राप्तविभाषेयमिति प्रतिपाद्य, 'नैयङ्कवम्, न्याङ्कवम्' इति रूपद्वयं च तत्प्रयोजनत्वेनोक्त्वा न्याङ्कुचर्मणमित्यत्र तत्प्रवृत्तिवारणाय प्रकृतन्यायः समाश्रितः । तस्मिन् विषये च न्यङ्कुशब्देऽव्युत्पत्तिपक्ष एवाश्रीयते, अन्यथा व्युत्पत्तिपक्षे "य्वः पदान्तात्" [ ७. ४. ५. ] इति नित्यमैदागमः स्यादव्युत्पत्तिपक्षे च न स्यादितीहापि रूपद्वयसत्त्वे न्यायाश्रयणस्यानावश्यकत्वापात इति न्यायसन्देहापादकत्वेन व्युत्पत्तिपक्षस्येहानाश्रयणमेवेति प्रतिपादितम् । तथाहि- तत्रत्यन्यायसद्भावोपपादनग्रन्थः–"व्युपत्तिपक्षाश्रयणे यकारस्य पदान्तगत्वेन "य्वः पदाद्०" [ ७. ४. ५. ] इत्यैदागमे–

नैयङ्कुचर्मणमित्यपि रूपभवनेन रूपद्वयस्यापि भवनात्, न ज्ञायते-एतन्न्यायसद्भावाद् न्यङ्क्वादिशब्दप्रयोगे "न्यङ्क्वोर्वा" [ ७. ४. ८. ] इत्यस्य प्रवृत्तौ निषिद्धायामपि व्युत्पत्त्यव्युत्पत्तिपक्षाभ्यां द्वैरूप्यं जातम्, आहोस्विदेतन्न्यायाभावात् केवलन्यङ्कुशब्दप्रयोग इव न्यङ्क्वादिशब्दप्रयोगेऽपि पक्षद्वयेऽपि प्रत्येकं "न्यङ्क्वोर्वा" [ ७. ४. ८. ] इत्यस्यैव प्रवृत्त्या द्वैरूप्यं जातमिति । अव्युत्पत्तिपक्षस्यैवाश्रयणे तु यकारस्य पदान्तगत्वाभावेन "य्वः पदान्तात्०" [ ७. ४. ५. ] इत्यैदागमाभवनाद् "न्यङ्क्वोर्वा" [ ७. ४. ८. ] इत्यस्य त्वेतन्न्यायनिषिद्धत्वेनाप्रवृत्त्या नैयङ्कुचर्मणमिति रूपस्य कथमप्यभवनेन न्याङ्कुचर्मणमित्येकमेव रूपमव्युत्पत्तिपक्षे स्यात्, इत्येवमेतन्न्यायसद्भावः फलेन निश्चिक्ये ॥ इति । अत्रेदमुच्यते-अत्रैकं रूपमिष्टं रूपद्वयं वेति पूर्वं केनचित् प्रमाणेन निर्धारणीयम्-तदस्ति न वा ?, अस्ति चेत् तदाऽव्युत्पत्तिपक्ष एवाश्रीयताम्, "न्यङ्क्वोर्वा" [ ७. ४. ८. ] इत्यस्य चेह प्रवृत्तिः स्वत एव न स्यात्, ञ्णित्तद्धिताव्यवधानाभावात् । "य्वः पदान्तात्०" [ ७. ४. ५. ] इत्यत्र च न य्वो ञ्णित्तद्धितप्रत्ययाव्यवधानं निमित्तमसंभवात्, तस्य चेह न्याङ्कुचर्मणमित्यत्राव्युत्पत्तिपक्षाश्रयणेनैव प्रवृत्त्यभाव इति । यदि च नैयङ्कुचर्मणमित्येवैकं रूपमिष्टं तर्हि व्युत्पत्तिपक्ष एवाश्रीयताम् । उभयविधं रूपमिष्टं चेत् पक्षद्वयमाश्रीयतामिति सर्वथा निर्वाहे सति न्यायाश्रयणमनावश्यकमेवेति न्याङ्कुचर्मणमिति रूपसिद्धिरूपेण फलेनायं न्यायो निश्चिक्ये इति कथनं निर्मूलमेव प्रतिभाति । न चैवं रीत्या 'नैयङ्कवम्, न्याङ्कवम्' इति रूपद्वयस्यापि पक्षद्वयाश्रयणेन सिद्धौ "न्यङ्क्वोर्वा" [ ७. ४. ८. ] इति सूत्रमपि किमर्थमनुष्ठीयते इति वाच्यम्, पक्षद्वयेऽपि रूपद्वयस्य साधुत्वलाभाय सूत्रसार्थक्यात् । कैश्चिच्च वैयाकरणैरत एवेदृशं सूत्रं नारभ्यतेऽपि, सर्वथा निर्मूलोऽयं न्याय इति प्रतिभाति, ततश्च तदर्थक्लिष्टकल्पना व्यर्थेति ॥ १८ ॥

## ❋अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति❋ ॥ १९ ॥

सि०—'अन् इन् अस् मन्' इत्येवमादयः शब्दा विधिसूत्रेषु पठ्यन्ते, तेषां च विशिष्टरूपोपादानविषयत्वात् तत्र ❋अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्❋ इति न्यायोपस्थित्याऽर्थवतामेव तेषां ग्रहणं स्यान्नानर्थकानामिति स्थिते तत्रानर्थकानामपि ग्रहणार्थं तन्न्यायापवादभूतोऽयं न्यायः पठ्यते। अस्यार्थः—'अन् इन् अस् मन्' एषां ग्रहणं येषु तानि शास्त्राणि—अनिनस्मन्ग्रहणानि, प्रयोजककर्तृभूतानि, अर्थवता—सार्थकेन स्वगृहीतरूपेण, अनर्थकेन—समुदायैकदेशतयाऽर्थपर्याप्तिरहितेन च तेन तेन रूपेण, तदन्ते विधिः—तदन्तविधिः, तम्, अन्नन्तादिषु विधानं, प्रयोजयन्ति—प्रवर्त्तयन्तीति । अत्र च "अभ्वादेरत्वसः सौ" [ १. ४. ९०. ] इति सूत्रस्थमभ्वादेरिति पदमेकदेशानुमत्या ज्ञापकमित्युक्तं तत्रैव सूत्रे बृहद्वृत्तौ। तथाहि—"अभ्वादेरिति किम् ? पिण्डं ग्रसते—पिण्डग्रः, चर्म वस्ते—चर्मवः ❋अर्थवद्ग्रहणे नानर्थकस्य❋ इत्येव सिद्धे 'अभ्वादेः' इति वचनम् ❋अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति❋ इति न्यायज्ञापनार्थम्, तेनात्रापि भवति—खरणाः खुरणाः" इति। अयमाशयः-"अभ्वादेरत्वसः०" [ १. ४. ९०. ] इत्यत्रास् सार्थक एव ग्रहीष्यते, स च 'अप्सराः' इत्यादावस्ति, 'पिण्डग्रः' इत्यादौ च 'ग्रस्' धातोरवयवभूतोऽस् समुदायैकदेशतयाऽनर्थक इति तस्येहास्ग्रहणेन ग्रहणं न स्यात्, ❋समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः❋ ❋अर्थवद्ग्रहणे नानर्थकस्य❋ इति न्यायाभ्यामिति तद्वर्जनार्थमिहाभ्वादेरिति पदं व्यर्थमेवेति व्यर्थीभूतं तदेकदेशानुमत्या [ स्थालीपुलाकन्यायेन ] संपूर्णन्यायमिमं ज्ञापयति । तथा चानर्थकस्याप्यसो ग्रहणे 'पिण्डग्रः, चर्मवः' इत्यादावपि दीर्घः स्यादिति तद्वारणाय अभ्वादेरिति वर्जनमावश्यकम् । फलं चास्य न्यायस्यांशे 'खरणाः, खुरणाः' इति, 'अत्र खरस्येव नासिका यस्य खुर इव नासिका यस्येति चार्थे बहुव्रीहिसमासे "खर-खुरान्नासिकाया नस्" [ ७. ३. १६०. ] इति नसादेशे—खरणाः खुरणाः इति भवति, अत्र 'नस्'शब्दावयवस्यासोऽनर्थकत्वेऽपि प्रकृतन्यायबलेन तस्यापि तदन्तविधिप्रयोजकत्वे स्थितेऽसन्तत्वनिबन्धनो दीर्घोऽत्र सिद्धः । न च स्त्रियमस्यतीत्यर्थे 'स्त्र्यस्'शब्दस्यासन्तस्य दीर्घवारणार्थमभ्वादेरित्यस्य चारितार्थ्येन ज्ञापकत्वासम्भव इति वाच्यम्, यत एतावन्मात्रफलत्वे "अनसोऽत्वसः सौ" [ १. ४. ९०. ] इत्येव न्यासः कृतः स्यात्, येनास्धातुवर्जनं स्फुटमेव विशिष्य प्रतीयेतेति सामान्येन भ्वादिवर्जनवैयर्थ्यस्य तादवस्थ्यमेव स्यात्, यतश्च तथा न्यासमकृत्वा सामान्येन "अभ्वादेः" इति भ्वादिवर्जनमकारि तत् 'पिण्डग्रस्' इत्यादिवारणार्थमेव, तत्र चार्थवद्ग्रहणन्यायेनैव सिद्धिरिति तद्वैयर्थ्यं न्यायज्ञापनं विनाऽपनोदयितुमशक्यमेव । अथोदाहरणानि, तत्र अन् अर्थवान् यथा—'राजन्'शब्दे, अत्र हि राजिधातोः "उक्षि-तक्षि०" [ उणा० ९००. ] इत्यौणादिकेऽनि अन्मात्रस्य प्रत्ययत्वेन सार्थक्यम्, तस्य च पुंसि राजेति रूपम्, स्त्रियां च "स्त्रियां नृतोऽस्वस्रादेर्ङीः" [ २. ४. १. ] इति ङ्यां राज्ञीति । अनर्थकोऽन् यथा—अश्धातोः "पप्यशौभ्याम्" [ उणा० ९०३. ] इत्यौणादिके तनि—अष्टन् शब्दः, तस्य प्रियशब्देन सह बहुव्रीहौ प्रियाष्टा इति, इत्थं च "अनोऽस्य" [ २. १. १०८. ] इति सूत्रे उभयोरप्यनोर्ग्रहणे यथा सार्थकस्य राज्ञीत्यत्रानोऽकारस्य

लोपो भवति, तथा प्रियाष्टः पश्येत्यत्रानर्थकस्यापीति। एवम्-इन् सार्थको यथा-दण्डोऽस्यास्तीत्यर्थे दण्डशब्दात् "अतोऽनेकस्वरात्" [ ७. २. ६. ] इति इन्प्रत्यये दण्डीति । अनर्थको यथा-स्रगस्यास्तीत्यर्थे "अस्तपोमायामेधास्रजो विन्" [ ७. २. ४७. ] इति विनि स्रग्वीति, अत्र विन्प्रत्ययैकदेशभूतस्येनोऽनर्थकत्वं स्पष्टमेव, तथापि "इन्-हन्-पूष०" [ १. ४. ८७. ] इति सूत्रे उभयोरेवेनन्तत्वेन ग्रहणाद् दीर्घः सिद्ध्यति । अस् सार्थको यथा-आप्नोतेः "आपोऽप्साप्०" [ उणा० ९६४. ] इत्यौणादिके असि धातोरप्सरादेशे च-'अप्सराः' इति, अत्र प्रत्ययत्वेनासः सार्थकत्वम् । अनर्थकोऽस् यथा-'खरणाः खुरणाः' इत्यत्रोक्तमेव । मन् सार्थको यथा-"स्यतेरीच्च वा" [ उणा० ९१५. ] इति मनि स्यतेरात ईत्वे च-सीमेति । अनर्थकश्चासौ यथा महतो भाव इत्यर्थे "पृथ्वादेरिमन् वा" [ ७. १. ५८. ] इति इमनि-महिमेति, महिमानमतिक्रान्तेत्यर्थे स्त्रियाम्-अतिमहिमेति, उभयत्राऽपि "मनः" [ २. ४. १४ ] इति ङीनिषेधः । "अभ्वादेरत्वसः सौ" [ १. ४. ९०. ] इति सूत्रस्थबृहन्न्यासरीत्या च अनिनादिवदतुरप्यनर्थकोऽपि तदन्तविधिं प्रयोजयतीति गम्यते । तथाहि-तत्रत्यो ग्रन्थः-"ननु *अनिनस्सन्* इत्यत्रातोरनिर्दिष्टत्वादनर्थकेन तदन्तविधेरप्रयोगाद् *अर्थवद्ग्रहणे नानर्थकस्य* इति न्यायात् 'कियान्' इत्यत्रैव दीर्घः प्राप्नोति न 'गोमान्' इत्यादाविति, नैष दोषः-अतुरनर्थकोऽपि तदन्तविधिं प्रयोजयति, मत्वादीनामुकारानुबन्धसामर्थ्यात्, अन्यथा तेषामपि शतृवद् ऋकारमेवानुबन्धं कुर्यात्" इति । अयमाशयः-'अन् इन् अस् मन्' एषां चतुर्णामिह न्याये समावेशादेषामेवानर्थकानां तदन्तविधिप्रयोजकता नान्येषामिति परिशेषन्यायाल्लभ्यते, तथा च अतुरिह सूत्रे निर्दिष्टः सार्थक एव यत्र स्यात् तत्रैवात्वन्तप्रयुक्तो दीर्घः स्यान्नान्यत्र, स च सार्थकः कियानित्यादावेव, तत्र हि किं प्रमाणमस्येत्यर्थे "इदं-किमोऽतुरिय् किय् चास्य" [ ७. १. १४८ ] इति अतुप्रत्यये किमः कियादेशे च-कियानिति भवति, तत्रातोः प्रत्ययरूपत्वेन सार्थकत्वम् । अनर्थकश्चातुर्यथा-गोमानित्यादौ, तत्र हि गावोऽस्य सन्तीत्यर्थे "तदस्यास्त्यस्मिन्निति मतुः" [ ७. २. १. ] इति मतुर्भवति, अत्र हि अतुः प्रत्ययैकदेश इति तस्यानर्थकत्वेन तत्र तदन्तविधेरभावादत्वन्तत्वाभावप्रयुक्तो दीर्घाभावः स्यादित्यतोऽतुरप्यनर्थकस्तदन्तविधिं प्रयोजयतीति स्वीक्रियते, तत्र च मानं मत्वादीनामुकारानुबन्धकरणमेव, उकारानुबन्धस्यैतदेव फलं यदतुग्रहणेनायमपि गृह्येत, नान्तादेशाद्यर्थं च शतृवदृकार एवानुबध्येतेति । ततः पुनस्तत्रैव [ प्रकृतसूत्रीयबृहन्न्यास एव ] शङ्कयित्वा समाहितम्-"ननु तथापि *तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं न* इति [ स एवानुबन्धो यस्यासौ तदनुबन्धकः, स चासावन्यश्चानुबन्धो यस्य सोऽतदनुबन्धकः ] न्यायाद् यत्तदेतदो डावादेर्ग्रहणाप्रसङ्गः, क्तवतोरपि ककरानुबन्धसद्भावाद् ग्रहणाभावः, नैष दोषः-आनन्तर्यलक्षणेऽनुबन्धानुबन्धवतोः सम्बन्धे 'डावत्-क्तवत्'शब्दस्य डकारककारावनुबन्धौ प्रत्ययस्य न त्वतुशब्दस्य, अथवा डकारककारा-वनुबन्धौ प्रत्ययस्य न त्वतुशब्दस्य, ततश्च प्रत्ययैकदेशग्रहणादव्यापार एव पूर्वोक्तन्यायस्येति" इति । अयमर्थः-ज्ञापितेऽप्यतुशब्दस्यानर्थकस्यापि तदन्तविधिप्रयोजकत्वे यत्रातोरुकारमात्रानुबन्धकत्वं तत्रैवैतज्ज्ञापकसिद्धतदन्तविधिलब्धं कार्यं स्यात्, यत्र चाधिकानुबन्धकत्वं तत्र न स्यात् *तदनुबन्धकग्रहणे नातदनुबन्धकस्य* इति न्यायात्, तथा च "यत्तदेतदो डावादिः" [ ७. १. १४९. ] इति सूत्रविहितो डावादिरतुः, अनुबन्धानामनेकान्तत्वपक्षे स्वसमीपेऽनुबन्धे स्वावयवत्वारोपस्य स्वीकारात्, एकान्तत्वपक्षे च साक्षादेव डकारस्य तदनुबन्धत्वादधिकानुबन्धत्वमतोः, एवं क्तवतुप्रत्यये पक्षद्वयेऽपि ककारस्याधिकस्यानुबन्धत्वमिति पूर्वोक्तन्यायेन तस्याप्यतुग्रहणेनाग्रहणे 'यावान्, तावान्, एतावान्, गतवान्' इत्यादावत्वन्तत्वप्रयुक्तो दीर्घो न स्यादिति दोषोऽस्त्येवेति, अत्रोच्यते-उभयत्रपक्षे डकार-ककारावनुबन्धौ प्रत्ययस्य, इह चोक्तरीत्या [ अतुशब्दस्यानर्थकस्यापि ग्रहणरीत्या ] अतुशब्दस्य न प्रत्ययत्वमपि तु तदेकदेशपरत्वमपीति प्रत्ययमात्रग्रहणे प्रवर्त्तमानस्य पूर्वोक्तन्यायस्य [ *तदनुबन्धग्रहणे नातदनुबन्धकस्य* इति न्यायस्य ] इह विषय एव नेति नोक्तदोष इति ॥ १९ ॥

## *अनिनस्सन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति* ॥ १९ ॥

त०—तदन्तविधिरित्यस्य ते-अनादयोऽन्ता येषां ते तदन्ताः, तेषु विधिस्तदन्तविधिरित्यर्थः । अर्थवता अनर्थकेनेत्यभेदे तृतीया, तत्पदार्थे तस्यान्वयः । अथवा लक्ष्यस्थम् 'अन्'-शब्दादिकं कर्तृ स्वान्ते विधिं प्रयुङ्क्ते करोति, तं सूत्रस्थानि अनादीनि प्रयोजयन्तीति विवक्षया प्रयोज्यकर्त्तरि तृतीया बोध्या । एतद्व्युत्पत्त्यनुसारमेव वृत्तावर्थः संक्षिप्य लिखितः । "अभ्वादेरत्वसः सौ" [ १. ४. ८०. ] इति सूत्रेऽभ्वादेरिति पदैनैकदेशानुमत्या न्यायोऽयं ज्ञाप्यते इत्युक्तं वृत्तौ । तस्यायमाशयः-न्याया हि सिद्धस्वरूपा एव, तेषां स्वशास्त्रे प्रवृत्तेरभ्यनुज्ञानार्थं ज्ञापकमाश्रीयते । तथा च यत्र न्यायेऽनेकेंऽशाः सन्ति तत्र यद्येकोऽपि स्वशास्त्रस्थेन केनापि वचनेन सूच्यते तर्हि तदीयः सर्वोऽप्यंशः स्वानुमतो बोध्यः । अत्र च विषये स्थालीपुलाक-

न्यायोऽनुग्राहकः, स चायं न्यायो लौकिकः, लोके यथा स्थालीस्थमेकं पुलाकं भक्तसिक्थं सिद्धं दृष्ट्वा सर्वे पुलाकाः सिद्धाः [ पक्वाः ] इति विज्ञायन्ते तथा कस्मिंश्चिद् वचनेंऽशतः प्रमाणिते सर्वं प्रमाणितं स्वीक्रियते । पाणिनीये तन्त्रे च "येन विधिस्तदन्तस्य" [ पा० सू० १ १. ७२. ] इति सूत्रशेषे महाभाष्ये वार्तिकरूपेण पठितोऽयं न्यायः, तथा च तन्मते वाचनिकत्वमेवास्य न ज्ञापकसिद्धत्वम् । नवीनाश्च "कार्मस्ताच्छील्ये" [ पा० सू० ६. ४. १७२. ] इति सूत्रेण 'कार्मं' इति निपातनेनैकदेशानुमत्या न्यायमिमं ज्ञापयन्ति । तेषामयमाशयः-'कर्मन्'-शब्देऽनोऽनर्थकत्वेन तत्र "अन्" [ पा० सू० ६. ४. १६७. ] इति सूत्रेणानो लोपाभावस्य प्राप्तस्याभावो निपातनेन विधीयते, तत्र यदि अन् सार्थक एव गृह्येत तर्हि 'कर्मन्'शब्दस्यान्नन्तत्वाभावेन लोपस्य प्राप्तिरेव नेति तदभावविधानार्थं निपातनमिदं व्यर्थमेवेति व्यर्थं तदिमं न्यायमेकदेशानुमत्या ज्ञापयतीति । परं तु "अन्" [ पा० सू० ६. ४. १६७. ] इति सूत्रे विशेष्यासत्त्वेनान्शब्दस्य स्वरूपमात्रबोधकत्वं, न तदन्तबोधकत्वमिति तत्रास्य न्यायस्य प्रयोजनाभावेन न तेन ज्ञापनं युक्तमिति परे वाचनिकमेवामुं मन्यन्ते । नागेशश्च भाष्ये वचनरूपेणायं पठित इति स्वीकृत्य अर्थवद्ग्रहणन्यायानित्यत्वमूलकममुं न्यायमाह । सर्वथा सर्वांशेऽत्र ज्ञापकमलभ्यमिति स्थालीपुलाकन्यायेन ज्ञापितमथवा वाचनिकमेवेमं सर्वे स्वीकुर्वन्तीति हृदयमिति ॥ १९ ॥

## *गा-मा-दाग्रहणेष्वविशेषः* ॥ २० ॥

सि०—*स्वं रूपं शब्दस्याशब्दसंज्ञा* इति न्यायेन शब्दस्य स्वरूपमात्रबोधकत्वे निर्णीते स्वरूपस्यापि वाह्यनिमित्तभेदात् क्वचित् कस्यचिदेव बोध इष्ट इति तद्व्यवस्थार्थं *लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्* *अदाद्यनदाद्योरनदादेव ग्रहणम्* *कृत्रिमाऽकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्* इत्यादिन्याया उक्ताः, तेषामपि क्वचिदप्रवृत्तिबोधकोऽयं न्यायः । 'गा मा दा' इति धातुरूपत्रयस्य ग्रहणं येषु तानि गा-मा-दाग्रहणानि सूत्राणि तेषु लक्षणप्रतिपदोक्तन्यायादिकृतो विशेषो नाश्रीयतेऽपि तु सामान्येनैव तद्रूपाणां सर्वेषां धातूनां ग्रहणं भवतीति न्यायार्थः । तथा च गाग्रहणे "गांङ् गतौ" "गैं शब्दे" इत्येतौ द्वावपि ग्राह्यौ, माग्रहणे "मांक् माने" "मांङ्क् मान-शब्दयोः" "मेंङ् प्रतिदाने" इत्येते त्रयोऽपि, दाग्रहणे चाविशेषेणाग्रे प्रतिपाद्यमानाः षडपि दारूपाश्च गृह्यन्ते । अत्र च न्यायस्य त्र्यंशत्वाज्ज्ञापकत्रयं क्रमशः प्रकटयिष्यते । तत्र गांशे ज्ञापको "गायोऽनुपसर्गाट्टक्" [ ५. १. ७४. ] इति सूत्रे गातिं निषेद्धुं 'गाय' इति निर्देशः, अन्यथा "गोऽनुपसर्गाट्टक्" इत्युक्तेऽपि *कृत्रिमाकृत्रिम*-न्यायेन कृत्रिमस्य गायतेरेव ग्रहणादकृत्रिमस्य गातेर्ग्रहणाभावे सिद्धे 'गाय' इति गुरुनिर्देशो वृथैव स्यात् । ज्ञापिते चास्मिन् न्यायेऽविशेषादुभयोरपि ग्रहणं स्यादिति गातेर्ग्रहणवारणाय 'गाय' इति निर्देशः सार्थकः । फलं चास्य गातेर्गायतेर्वा यङ्लुपि आशीःक्याति, आमं गीतं वा जागेयादित्यत्रोभयोरपि "गा-पा-स्था-सा-दा-मा-हाकः" [४. ३. ९६.] इत्येकारः सिद्धः, अन्यथा गायतेर्गारूपस्य लाक्षणिकत्वाद् गातेरकृत्रिमत्वाच्च *लक्षणप्रतिपदोक्त*न्यायेन *कृत्रिमाकृत्रिम*न्यायेन च ग्रहणं न स्यात् । अत्रांशे क्वचिदेतन्न्यायप्रवृत्त्यभावोऽपि, यथा "गस्थकः" [ ५. १. ६६. ] इत्यत्र ग इति सामान्यग्रहणेऽपि गायतेरेव ग्रहणम् ॥ १ ॥ माग्रहणेऽविशेषस्यानुज्ञापकं च "ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इत्यस्य वृत्तौ-"मा इति मां-मांङ्-मेंङां ग्रहणम्" इत्युक्तिः, सा चैतन्न्यायमनुरुध्यैव युक्ता, अन्यथा *अदाद्यनदाद्योरनदादेरेव* *कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव* इति न्यायाभ्यां माग्रहणे मेंङ एव ग्रहणं प्राप्नोति न तु मात्योः । यदि *लक्षण-प्रतिपदोक्त*न्याय आश्रीयते तर्हि मात्योरेव ग्रहणं स्यान्न तु मेङः । तथा च त्रयाणां ग्रहणोक्तेरेतन्न्यायानुसरणं विनाऽयुक्तत्वमेव स्यात् । अनुज्ञाते चात्रांशे माग्रहणे "दो-सो-मा-स्थ इः" [ ४. ४. ११. ] इति सूत्रे सर्वेषामेवाविशेषेण ग्रहणे मात्योर्मेङश्च क्तेऽनेनेत्वे-मितः, मितवानिति सिध्यति । अस्याप्यंशस्यास्थिरत्वात् "मि-मी-मा-दामित् स्वरस्य" [ ४. १. २०. ] इत्यत्र माग्रहणेन सर्वेषां ग्रहणार्थं बहुवचनरूपो यत्नः सकलः । अस्यास्थिरत्वे हि मा इति सामान्यग्रहणेऽप्यविशेषात् सर्वेषां ग्रहणं स्यादेवेति तदर्थं बहुवचनरूपो यत्नो व्यर्थ एव स्यात् ॥ २ ॥ दांशे ज्ञापकं च-"दा-द्धे-सि-सद-शदोरुः" [५. २. ३६. ] इत्यत्र धयतेः पृथगुक्त्या दाशब्देनेह दासंज्ञां प्रति नाग्रह इत्येव वक्तुं शक्येऽपि षडपि दारूपा ग्राह्या इत्युक्तिः, अयमाशयः-धयतेः पृथगुक्त्या दासंज्ञां प्रति नाग्रहः, तस्यापि दासंज्ञया ग्रहीतुं शक्यत्वादिति वक्तुं शक्यते, न तु सर्वेऽपि दारूपा ग्राह्या इति, तथा ग्रहणे *अदाद्यनदाद्योरनदादेरेव* इत्यादिबहूनां न्यायानां बाधकत्वात् । यच्च तयोक्तं तदेतन्न्यायानुरोधेनैवेति तदंशेऽपि [ दांशेऽपि ] न्यायोऽयमाचार्याणामभिमत इत्यनुमीयते । तथा च "प्राज्ज्ञश्च" [५ १. ७९] इत्यत्र ज्ञारूपसाहचर्याद् दारूपमेव प्रत्याग्रहो न तु दासंज्ञां प्रतीत्येतावन्मात्रं संसाध्य पश्चात् षण्णामपि दारूपाणामेतन्न्यायबलेन ग्रहणमभिलक्ष्य षड्भ्योऽपि तेभ्यो डो विहितः । यथा-"डुदांग्क् दाम् वा-धनप्रदः । दों-वृक्षप्रदः । देंङ्-पुत्रप्रदः, दांवक्-केदारप्रदः । दैव्-भाजनप्रदः" इति । एतन्न्यायांशाभावे तु *अदाद्यनदाद्योः०* इति न्यायादन्येषां चतुर्णां ग्रहणं स्यान्न तु दांक्-दांवकोः । यदि च *लक्षण-

प्रतिपदोक्तयोः०* इति न्याय आश्रीयते तर्हि 'दों दैंङ् दैंव्'-वर्जानां त्रयाणामेव ग्रहणं स्यात्, *कृत्रिमाकृत्रिम*न्यायाश्रयणे चैषामेव [ दों, दैंङ्, दैंव्, इत्येषामेव ] ग्रहणं स्यान्न तु दाम्-दांग्-दांव्काम्। स्वीकृते च दाग्रहणेऽविशेषग्रहणे सर्वेषामेव दारूपत्वेन ग्रहणं भवति। यत्र च 'दा' इति संज्ञा समाश्रीयते, तत्र तु तत्संज्ञकानामेव ग्रहणमित्यन्यत् ॥ २० ॥

## *गा-मा-दा-ग्रहणेष्वविशेषः* ॥ २० ॥

त०—अत्र चांशत्रयमित्युक्तं, तत्र चाद्यांश एव वस्तुतो ज्ञापकसिद्धः, अंशद्वयं तु वृत्त्यनुमतमेव, न तु तत्र ज्ञापकं किञ्चित्। तथा चैकदेशानुमतिद्वारा ज्ञापितस्यास्य न्यायस्य "ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इति सूत्रस्था वृत्तिः [ 'मा' इति मां-मेंङ्-माङां त्रयाणां ग्रहणमिति ] तन्न्यायलब्धार्थानुवादिका तदनुज्ञापिका वा, न तु ज्ञापिका, तत्र सिद्धवत्कृत्य तथा प्रदर्शनात्। "प्राज्ज्ञश्च" [ ५. १. ७९. ] इत्यत्र षण्णां ग्रहणं तु न वृत्त्या कण्ठत उक्तम्, तत्र हि "इह पूर्वसूत्रे च दारूपं गृह्यते, न संज्ञा ज्ञा-ख्यासाहचर्यात्" इत्येवोक्तम्, दारूपत्वेन सर्वेषां ग्रहणं, षण्णामुदाहरणं च तत्र न दृश्यते, तथापि प्रकृतन्यायेन तथोदाहर्तुं शक्यत इति न तावता तेन न्यायज्ञापनं समाश्रयितुं शक्यते। तथा चैकदेशे एव ज्ञापकमिति बोध्यम्। "गस्थकः" [ ५. १. ६६. ] इति सूत्रे गायतेरेव ग्रहणेन प्रकृतन्यायस्यानित्यत्वमित्युक्तं वृत्तौ, तदपि फलितार्थकथनमेव, न तु न्यायानित्यत्वे ज्ञापकम्। तत्र हि—"गाङः प्रत्यये शिल्पी न गृह्यते इति गायतेर्ग्रहणम्" इत्येवोक्तम्, न चैतावता न्यायानित्यत्वमाचार्यशब्दलभ्यम्, तथापि प्रकृतन्यायेनाविशेषादुभयोर्ग्रहणे प्राप्ते एकस्यैवग्रहणमिति प्रकृतन्यायाप्रवृत्तिफलमेवेति तेन न्यायानित्यत्वमनुमातुं शक्यत इति प्राचीनानामाशयः। वस्तुतस्तु तावता न न्यायस्यानित्यत्वमाचार्याभिमतमिति प्रतिपादयितुं शक्यते, प्रत्युत तत्रापि न्यायप्रवृत्तिस्वीकार एव, गाङो गत्यर्थत्वेन ततः समुत्पन्नेन प्रत्ययेन शिल्पी नाभिधातुं शक्यते, गमने शिल्पविषयाभावादिति गायतेरेव ग्रहणं, न तु गाङः, अन्यथाऽनित्यत्वमेवास्य न्यायस्योक्तं स्यात्। लघुन्यासकृता च शिल्पी न गम्यते इति प्रतीकमुपादाय—"शब्दशक्तिस्वाभाव्यात्" इत्युक्तं, न तु न्यायाप्रवृत्तिचर्चा कृता। तथाप्यप्रवृत्तिस्थलत्वेन तदुपदर्शयितुं शक्यत इत्येतावन्मात्रेण वृत्तौ तदुल्लेखः कृतः। "प्राज्ज्ञश्च" [ ५. १. ७९. ] इत्यत्र दासंज्ञां प्रत्याग्रहो न कार्य इत्युक्तिश्च वृत्तिकृतां *स्वं रूपं०*इति परिभाषया शब्दसंज्ञया संज्ञिन एव ग्रहणं प्रत्याग्रहो न कार्य इत्याशयका। तथा च स्वरूपग्रहणमेव, स्वरूपग्रहणे च स्वीकृते प्रकृतन्यायबलात् तत्राविशेषेण सर्वेषां ग्रहणं भविष्यति, तथा च तदुदाहरणस्थलमिदं न तु ज्ञापकमित्यावेदितमेव पूर्वम्। दारूपत्वं यद्यपि "दींङ् क्षये" इत्यस्यापि 'यवक्ङिति' भवति, तथा च सप्त संख्या भवति, न षडेव, तथापि तस्याकर्मकत्वेन कर्मणः परत्वं न संभवति "प्राज्ज्ञश्च" [ ५. १. ७९. ] इत्यत्र च कर्मणः परत्वमाश्रीयते इति तस्येह ग्रहणासम्भव इति षडेव दारूपा धातव उदाहृताः॥२०॥

## *श्रुता-ऽनुमितयोः श्रौतो विधिर्बलवान्* ॥ २१ ॥

सि०—श्रुतः—सूत्रे साक्षादेव शब्देनोच्यमानः, अनुमितः—कयाऽपि परिभाषया, केनापि प्रकरणेन वाऽधिकारवशाल्लब्धः, तयोः श्रुतानुमितयोरिति सम्बन्धे षष्ठी विध्यपेक्षा, अग्रे विधेर्निर्धार्यमाणत्वात्, विध्योरिति पदमर्थप्राप्तम्, तत्र च निर्धारणे षष्ठी। श्रुतस्यायं विधिरित्यर्थे श्रुतशब्दात् "तस्येदम्" [ ६. ३. १६०. ] इत्यणि श्रौत इति साधुः। ततश्चायमर्थः पर्यवस्यति—श्रुतानुमितसम्बन्धिनोर्द्वयोर्विध्योः संभवतोर्मध्ये श्रुतसम्बन्धी विधिर्बलवत्त्वेनातिशयितो भवति, तथा च स एव विधीयते इति। अयं च न्यायो न्यायान्तरमूलकः, स च न्यायो जैमिनीयः "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति। 'श्रुतिः, लिङ्गं, वाक्यं, प्रकरणं, स्थानं, समाख्येति षट् प्रमाणानि अर्थनिर्णयायाश्रीयन्ते, तेषु परं प्रति पूर्वस्य बलीयस्त्वमर्थविप्रकर्षकृतम्' इति तदीयः सामान्योऽर्थः, व्याख्यास्यते चायं न्यायो विवरणे। अनेन न्यायेन लिङ्गापेक्षया श्रुतेः प्रत्यक्षश्रवणस्य बलवत्त्वं निर्णीतमेव। लिङ्गं चानुमानसाधकमेव, परिभाषया प्राप्तो ह्यर्थः लिङ्गानुमित एव, परिभाषा हि केनचिल्लिङ्गेनैव स्वकीयमर्थं विधिशास्त्रेषु बोधयन्ति। यद्यपि प्रकरणप्राप्तोऽर्थोऽनुमितार्थभिन्नः, अत एव लिङ्गाद् भेदेन प्रकरणस्य प्रमाणेषु निर्देशस्तथापि स्वमते श्रुतभिन्नतयाऽनुमितोऽर्थः सङ्कलित इत्यवगन्तव्यम्, तथा च नात्र ज्ञापकापेक्षा। प्राचीनैश्चात्र न्याये ज्ञापकमित्थं प्रदर्शितम्—"सत्ताकरं चास्य [ "ऋतां क्ङितीर्" ४. ४. ११६. इति ] सूत्रे "ऋतामृतः" इत्यकृत्वा ऋतामित्येव निर्देशः। तथाहि—ऋतामित्यस्य तावदृदन्तानामिति व्याख्या, इर् चादेशोऽनेकवर्णः, ततश्च "अनेकवर्णः०" [ ७. ४. १०७. ] इति सर्वस्य ऋदन्तधातोरिर् प्राप्नोति, इष्यते तु ऋमात्रस्यैव, तथा च "अनेकवर्णः०" [ ७. ४. १०७. ] इति परिभाषाया अवकाशनिरासाय "ऋतामृतः" इति निर्देष्टुं युक्तम्, यत् तु ऋतामित्येव निर्दिष्टं तदेतन्न्यायाशयात्, श्रुतस्य ऋत एवेर् भावी, न त्वनुमितस्य ऋदन्तस्येत्याशयेव" इति। अस्यायमाशयः—"ऋतां क्ङितीर्" [ ४. ४. ११६. ] इति सूत्रेण ऋकारस्यैवेरिष्टः, तदर्थं च यत्नान्तरं न कृतं, प्रकृतसूत्रन्यासे

च "विशेषणमन्तः" [ ७. ४. ११४. ] इति परिभाषाबलेन ऋकारान्तस्य समुदायस्य स्थानित्वम्, आदेशश्चानेकवर्ण इरिति "अनेकवर्णः सर्वस्य" [ ७. ४. १०७. ] इति परिभाषया सर्वस्य स्थाने स्यादिति तन्निवारणायास्य न्यायस्य सत्ताऽऽवश्यकीति न्यायमिममाक्षिपति, 'येन विना यदनुपपन्नं तेन तदाक्षिप्यते' इति न्यायात्" इति। अत्रेदं वक्तव्यं-यावदाचार्यस्य [ सूत्रकृतः ] किमपि तादृशं वचनं प्रमाणतया नोपन्यस्यते येन ऋकारमात्रस्येरादेशोऽभिमत इति तावत् केवलमनेन [ ऋतामिति ] निर्देशेन न्यायो ज्ञापयितुं न शक्यते, न्यायेन विना तादृशनिर्देशस्यानुपपद्यमानत्वविरहात्। तथा च न्यायज्ञापनाय "किरो लवने" [ ४. ४. ९३. ] इत्यादयो निर्देशा एवोपन्यसनीया यद्यवश्यं ज्ञापकनिर्देशाग्रहः स्यात्, तथा हि- "ऋतां क्ङितीर्" [ ४. ४. ११६. ] इति प्रकृतनिर्देशे सति 'किरः' इत्यादयो निर्देशा नोपपद्यन्ते, तथा निर्देशे समस्तस्य धातोरिरादेशप्रसङ्गादिति तथा निर्देशोऽनुपपन्नः सन् ऋकारमात्रस्यादेशलाभाय प्रकृतन्यायं ज्ञापयितुं प्रभवेत्। ज्ञापिते चास्मिन् न्याये श्रुतस्य ऋकारस्यैवेर्विधिर्भवति, न त्वनुमितस्य ऋदन्तस्य, ऋदन्तस्यानुमितत्वं च "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषालभ्यत्वेनैव, सा हि परिभाषा विशेषणरूपं लिङ्गमभिलक्ष्य तादृशमर्थं बोधयतीति तल्लभ्यस्यार्थस्यानुमितत्वम्, ततोऽनुमितस्य ऋदन्तस्य सम्बन्धी विधिः श्रुतस्य ऋकारस्य सम्बन्धिनो विधेरपेक्षया निर्बल इति न भवति, किन्तु ऋकारस्यैव भवतीति स निर्देशः [ 'किरः' इति निर्देशः ] उपपद्यते। एवं 'तीर्णम्' इत्यादयोऽपि प्रयोगाः सिध्यन्ति। अयं च न्यायोऽनित्य इति प्राचीना आहुः। अनित्यत्वफलं चेत्थं वर्णयन्ति-"अस्य चासार्वत्रिकत्वात् "मनोरौ च वा" [ २. ४. ६१. ] इत्यत्र वाशब्दो ङीप्रत्यये पूर्वाधिकारादनुवृत्ते सम्बध्यते, न त्वौकारे श्रुते, तेन मनोर्भार्या धवयोगे "मनोरौ च वा" [ २. ४. ६१. ] इति वा ङ्यां, ङीयोगे औदैतोश्च-मनावी, मनायी, मनुरिति त्रैरूप्यं सिद्धम्, औ चेत्यस्य वाशब्दसम्बन्धने तु ङीप्रत्ययस्य नित्यमेव भवनात्-मनावी, मनायी, मन्वी इति त्रैरूप्यं स्यात्" इति। अस्यायमाशयः-"मनोरौ च वा" [ २. ४. ६१. ] इति सूत्रे औकार एव श्रुतो ङी च प्रकरणलब्धत्वादनुमितः, तत्सम्बन्धिविधिना सह वाशब्दार्थस्य सम्बन्धो न स्याद् यदि प्रकृतन्यायोऽनित्यो न स्वीक्रियेत। तथा च ङीविधानं नित्यमेव स्यात्, औकारैकारविधानमेव विकल्पे न स्यादिति प्रकृतन्यायस्यानित्यत्वमाश्रित्य ङ्यां सहापि विकल्पार्थसम्बन्धोऽभिमेय इति तदभावोऽपि [ङ्या अभावोऽपि] पक्षे सिध्यतीति। अत्रेदमुच्यते-श्रौतसम्बन्धानुमितसम्बन्धयोर्विध्योः परस्परविरोधे प्राप्ते हि तन्निर्णयाय श्रौतविधेर्बलवत्त्वबोधनाय न्यायोऽयं प्रवर्तेत, इह च श्रौतौकारविधानस्यानुमितङीविधानस्योभाभ्यामर्थाभ्यां विकल्पार्थसम्बन्धस्य च परस्परविरोधाभावेन प्रकृतन्यायप्रवृत्तेरेवाभावान्नास्ति न्यायानित्यत्वाश्रयणफलमिति। प्रत्युत "मनोरौ च वा" इत्यत्र चकारेण पूर्वानुवृत्तैकारेण सह ङ्यपि समुचीयत इति औकारैकाराभ्यां सहैव ङ्यपि समुचित इति सन्नियोगशिष्ट इति*सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः* इति न्यायेनौकारैकारादेशाभावे ङ्याः प्रवृत्तिर्नैव स्यादिति तदर्थं न्यायानित्यत्वाश्रयणमनावश्यकमेवेति। किञ्च न लक्ष्यदर्शनमात्रेणानित्यत्वं भवति, किन्तु तज्ज्ञापनार्थमपि प्रमाणमपेक्ष्यते, इत्यनित्यत्वज्ञापकप्रमाणानुपन्यासादप्यनित्यत्वमाश्रयितुमयुक्तमिति। *निर्दिश्यमानस्यैवादेशाः स्युः* इत्यपि न्यायान्तरमन्यैः स्वीक्रियते, तत्फलं चेत्थं वर्ण्यते यथा-"यस्वरे पादः०" [ २. १. १०२. ] इत्यत्र पाद इत्यस्य पादन्तस्येत्यर्थः, स चार्थोऽधिकारलब्धस्य 'नाम्नः' इति पदस्य विशेषणसामर्थ्याल्लब्धः "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषासामर्थ्यात्, ततश्च पदादेशस्यानेकवर्णत्वात् "षष्ठ्यान्त्यस्य" [ ७. ४. १०६. ] इति परिभाषां बाधित्वा "अनेकवर्णः सर्वस्य" [ ७. ४. १०७. ] इति परिभाषया पादन्तस्य नाम्नः सर्वस्य पद्भावः प्राप्नोति, इष्यते तु 'पाद्' इत्येतावत एव, तच्च प्रकृतन्यायसाध्यम्, तस्यैव [ पाच्छब्दस्यैव ] सूत्रे निर्देशात्। यथा द्वौ पादावस्येत्यर्थे बहुव्रीहौ द्विपादिति "पात् पादस्याहस्त्यादेः" [ ७. ३. १४८. ] इत्यनेन पादस्य पाद्भावात्, ततष्टायां 'द्विपदा' इति, अत्र "यस्वरे पादः०" [ २. १. १०२. ] इत्यनेन 'पाद्' इत्येतावन्मात्रस्य पदादेशः। किन्त्वयमपि न्यायः [ *निर्दिश्यमानस्यादेशाः स्युः*इति ] प्रकृतन्यायान्तर्भूत एव न तु पृथग्भूतः, तदर्थस्याप्यनेन संग्रहात्। कथमिति चेत्? इत्थम्-"यस्वरे पादः०" [ २. १. १०२. ] इत्यत्र पाद इति श्रूयते, 'नाम्नः' इति पदं च पूर्वाधिकारानुवृत्तम्, तच्च विशेष्यम्, 'पादः' इति च विशेषणमिति तद्विशेष्यबलादिह "विशेषणमन्तः" [ ७. ४. ११३. ] इति न्यायात् पादन्तस्येत्यर्थो लभ्यत इति तत्कृतं पदादेशविधानमनुमितेन सम्बद्धमिति प्रकृतन्यायेन श्रौतविधेर्बलवत्त्वबोधनादेव श्रुतस्य पाद एवादेशः सेत्स्यतीति तदर्थोऽनेन संगृहीत इति तदंशभूत एवायं न्याय इति स्वीकर्त्तव्यम्। अंशत्वं चास्य [ निर्दिश्यमानन्यायस्य ] तद्व्याप्यतया। तथाहि-प्रकृतन्यायः [ श्रुतानुमितन्यायः ] आदेशविधौ प्रत्ययादिविधौ च सर्वत्र प्रवर्त्तते, निर्दिश्यमानन्यायश्च केवलमादेशविधावेवेति तस्य व्यापकत्वमस्य व्याप्यत्वमिति तदंशभूतत्वमस्य स्पष्टमेवेति प्राचीनाः। वस्तुतस्तु न तेन न्यायेनास्य [ निर्दिश्यमानन्या-

यस्य ] गतार्थता सम्भवति, भिन्नविषयत्वात्, यत्र हि श्रुतस्यानुमितस्य च स्वातन्त्र्येण पृथगुपस्थितिस्तत्रैव श्रुतानुमितन्यायावसरात्, "ऋतां क्ङितीट्" [ ४. ४. ११६. ] इत्यादौ हि ऋदन्तानां धातूनामृकारस्य च पृथगुपस्थितिर्नास्ति, ऋतामित्यनेन हि पदेन धातुविशेषणभूतेनैवार्थ उपस्थाप्यते, न तु स्वातन्त्र्येण ऋकार इति तत्रोभयोर्विध्योः प्राप्त्यभावेन स्पर्धाभावाद् बलाबलविचारस्यायुक्तत्वात् प्रकृतश्रुतानुमितन्यायाप्रवर्त्तनात्; तत्र हि *निर्दिश्यमानस्यादेशाः स्युः*इति न्यायस्यैव विषयात्, अत्र हि ऋकारस्य स्वातन्त्र्येणार्थोपस्थापकत्वाभावेऽपि निर्दिश्यमानत्वाक्षतेः। ननु तर्हि *श्रुतानुमित*न्यायस्य विषयः क इति चेच्छृणु-"त्रि-चतुरस्तिसृ-चतसृ स्यादौ" [ २. १. १. ] इत्येवमादीनि सूत्राणि तन्न्यायप्रवृत्तियोग्यानि, तथाहि-तत्र स्त्रियामिति पूर्वानुवृत्तं पदं श्रुताभ्यां त्रि-चतुर्शब्दाभ्यामेव सम्बन्ध्यते, न तु 'त्रिचतुर्'शब्दयोर्विशेषणत्वमहिम्ना लब्धेन तदन्तेन स्यादिप्रकृतिना, अत एव प्रियास्तिस्रो यस्य स 'प्रियतिसा पुमान्' इत्यादौ तिस्रादेशो भवति, प्रियास्त्रयो यस्याः सा स्त्री-'प्रियत्रिः' इत्यादौ तिस्रादेशो न भवति। अत एव तस्य सूत्रस्येदं व्याख्यानम्-'त्रि-चतुर्' इत्येतयोः स्त्रीलिङ्गे वर्त्तमानयोस्तत्सम्बन्धिन्यसम्बन्धिनि वा स्यादौ, इत्यादि। तत्र च स्त्रियामित्यनुवर्त्तते इति प्रतीकमुपादाय न्यासकारेणोक्तम्-"एतच्च श्रुतत्वात् त्रिचतुर इत्यस्यैव विशेषणम्" इति। तथा चेदृशोऽर्थ एव प्रकृतन्यायप्रवृत्तिः, तत्र हि श्रुतस्य 'त्रिचतुरः' इत्यस्य, अनुमितस्य तदन्तस्य च स्यादिप्रकृतित्वदर्शनादुभयोः स्वातन्त्र्येण स्त्रियामित्यनेन सम्बन्धयोग्यतास्ति, न तथेह ऋदन्तानामृकारस्य च पृथक् २ आदेशसम्बन्धयोग्यताऽस्तीति विभावनीयं सुधीभिरिति शिष्टं विवरणे स्पष्टम् ॥ २१ ॥

## *श्रुता-ऽनुमितयोः श्रौतो विधिर्बलवान्* ॥ २१ ॥

त०—अयं न्यायो जैमिन्युक्त-"श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" [ पूर्वमीमांसायां तृतीयाध्याये ३यपादे १४ चतुर्दशं सूत्रम् ] इति सूत्ररूपन्यायमूलकः। इदं च सूत्रं किञ्चित् प्रकृतार्थोपयोगितयाऽन्यत्र चोपयुज्यमानतया संक्षेपेण व्याख्यायते-श्रुति-लिङ्गादीनि षट् प्रमाणानि मीमांसायां विनियोजकानि [ अङ्गाङ्गित्वरूपविनियोगबोधकानि ] कथ्यन्ते। तत्र यत्रैकस्य वस्तुनः प्रमाणाभ्यां पदार्थद्वयसम्बन्धो बोध्यते, स चासंभवः, एकस्य युगपत् पदार्थद्वयेन सम्बन्धासम्भवात्, तत्रैकेनापरस्य बाधोऽवश्यं वक्तव्यः। स च बलवता दुर्बलस्य भवतीति स्थिते दौर्बल्यबोधकमिदं जैमिनिसूत्रम्। अत्र पारदौर्बल्यमित्यत्र परमेव पारमित्यर्थात् परशब्दः स्वार्थिकाण्प्रत्ययान्तः। श्रुति-लिङ्गादीनां समवाये-एकत्रोपनिपाते, परस्य-एतत्सूत्रपठितेषु परस्य[ पूर्वपठितापेक्षया ] दौर्बल्यं दुर्बलत्वमित्यर्थः। तत्र निरपेक्षो रवः-श्रुतिः १, स्वकरणीये सम्बन्धबोधे प्रमाणान्तरापेक्षाहीनः शब्द इह श्रुतिशब्देनोच्यते; शब्दसामर्थ्य-लिङ्गम् २, शब्दस्यार्थप्रकाशनसामर्थ्यं लिङ्गमित्यर्थः, यदाहुः-"सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते।" इति; परस्पराकाङ्क्षावशात् क्वचिदेकस्मिन् विषये पर्यवसितानि पदानि-वाक्यम् ३; परस्पराऽऽकाङ्क्षा-प्रकरणम् ४; समानदेशत्वं-स्थानम् ५, अयमेव क्रमोऽप्युच्यते; योगिकः शब्दः-समाख्या ६; इति हि तेषां षण्णां स्वरूपम्। एषामुदाहरणादीनि विरोधस्थलादीनि च मीमांसान्यायप्रकाशादौ विलोकनीयानि। इह च सूत्रव्याख्यामात्रस्यापेक्षितत्वात् तन्मात्रमुच्यते। तदिदं श्रुत्यादिलक्षणं कारिकयेत्थं सङ्गृहीतं चक्रवर्त्तिभट्टाचार्येण—

"अभिधातुं पदेऽन्यस्मिन् निरपेक्षो रवः श्रुतिः।
सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते ॥
संहत्यार्थं ब्रुवद् वृन्दं पदानां वाक्यमुच्यते।
प्रधानवाक्यस्याङ्गोक्त्याऽऽकाङ्क्षा प्रकरणं मतम् ॥
स्थानं समानदेशत्वं, समाख्या यौगिको रवः ॥" इति।

पूर्वस्य बलीयस्त्वं परदौर्बल्यकृतम्, तत्र परदौर्बल्ये कारणमुक्तम्-अर्थविप्रकर्षादिति; तस्यायमाशयः-साक्षाद्विनियोजिका श्रुतिः, सा हि अङ्गत्वेन विनियोगाय न किञ्चिदन्यदपेक्षते, लिङ्गादीनि श्रुतिं कल्पयित्वा विनियोजकानीति यावत्, तैः क्रमशः श्रुतिः कल्प्यते तावत् श्रुत्या विनियोगः क्रियतेऽर्थेन सह सन्निकर्षात्, लिङ्गादीनि तु क्रमशोऽर्थाद् विप्रकृष्टानि-लिङ्गं श्रुत्यन्तरितम्, वाक्यं द्व्यन्तरितम्, प्रकरणं त्र्यन्तरितम्, स्थानं चतुरन्तरितम्, समाख्या तु पञ्चान्तरितेति क्रमाद्दुर्बलत्वं परेषाम्। तदेतदुक्तम्—

"एक-द्वि-त्रि-चतुष्पञ्चवस्त्वन्तरकारितम्।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥
बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥"इति।

इदं सर्वं जैमिनीयन्यायमालाविस्तरे मीमांसान्यायप्रकाशे च स्पष्टम्। प्रकृतमनुसरामः-श्रुतिबोधितसम्बन्धस्य लिङ्गादिबोधितसम्बन्धादनुमितरूपात् प्राबल्यं यन्मीमांसकादिसमयसिद्धं तदेवानेन न्यायेनानूद्यते, न तु कश्चिदपूर्वोऽर्थः प्रकाश्यत इति नास्त्यत्र ज्ञापकान्तरापेक्षेति। यद्यप्येतन्न्यायानुसारं लिङ्गरूपप्रमाणागत एवार्थोऽनुमितः, प्रकरणप्राप्तश्च तस्मात् पृथक्, तथापि अनुमितपदं श्रुतिभिन्नप्रमाणप्राप्तार्थपरमिति स्वीकर्त्तव्यं, तदुक्तं वृत्तावपि। यच्च ज्ञापकमिहोपन्यस्तं प्राचीनैः, तच्च द्विधा खण्डितमेव वृत्तावेव। सत्येव ज्ञापकापेक्षणे वृत्तिनिर्दिष्टज्ञापका-

न्तरमेवानुसर्त्तव्यं न्यायस्य स्वमतसिद्धत्वप्रतिपादनाय ॥ अथ *निर्दिश्यमानस्यादेशाः स्युः *इति न्यायो विचार्यते । अस्य फलं तु वृत्तावुक्तमेव, ज्ञापकं च नोक्तमस्य न्यायस्य प्रकृतन्यायेऽन्तर्भावस्य करिष्यमाणत्वात् । यदि च वृत्तिशेषदर्शितदिशाऽस्य न्यायस्य न प्रकृतन्यायगतार्थत्वं तर्हि ज्ञापकमप्यत्र अन्वेषणीयमेव । तच्चेत्थं लभ्यते–"यस्वरे पादः०"[ २.१.१०२. ]इत्यादौ 'पाद्'शब्दस्तदन्तस्योपस्थापकोऽपि, ततः परा स्थानार्था विभक्तिः स्वप्रकृतिमेव स्वार्थेन योजयति, ततश्च विधेयेन सह षष्ठीप्रकृतेरेव सम्बन्धो न तु तदन्तस्यानुच्चारितस्य "उच्चारित एव शब्दः प्रत्यायको नानुच्चारितः"इति न्यायसहकारात् । अथवा 'पादः' इत्यादौ सर्वत्र स्थानिनस्तन्त्रेण निर्देशः, तथा च पादन्तस्य पाद आदेशो भवतीत्यर्थेन*निर्दिश्यमानस्यादेशा भवन्ति*इति न्यायः फलतः सेत्स्यति । अथवा "किरो लवने"[ ४. ४. ९३. ] इत्यादयो निर्देशा एव प्रकृतन्यायज्ञापकाः, अन्यथा "ऋतां क्ङितीर्" [ ४. ४. ११६. ]इत्यनेन ऋदन्तस्य सम्पूर्णस्य स्थाने इरादेशे निर्देशासंगतिः स्पष्टैव । न च पूर्वमिदं ज्ञापकं *श्रुताऽनुमितयोः*इति न्याये योजितमिति वाच्यम्, "ऋतां क्ङितीर्" [ ४. ४. ११६. ]इत्यस्य *श्रुतानुमित*न्यायज्ञापकापेक्षया प्रकृतज्ञापकस्योपन्यस्तत्वात् । वस्तुतस्तु "ऋतां क्ङितीर्" [ ४. ४. ११६. ]इत्यत्र *श्रुतानुमित*न्यायस्य न प्रसरोऽपि तु *निर्दिश्यमान*न्यायस्यैवेति वृत्तिशेषे निर्णीतत्वेनास्य[ 'किरो लवने' इति निर्देशस्य ]प्रकृतन्यायज्ञापकत्वस्यैवौचित्यात् । तथा च *निर्दिश्यमान*न्यायं विनाऽनुपपद्यमानः 'किरः' इत्यादिनिर्देशस्तन्न्यायस्य ज्ञापनायालमिति स एव ज्ञापकत्वेनादरणीयः । अत्र निर्दिश्यमानं–सूत्रे उच्चार्यमाणम्–उच्चार्यमाणसजातीयमेव, उच्चार्यमाणावयवरूपमेव वेति बोध्यम् । सूत्रे उच्चार्यमाणस्य कार्ययोगित्वाभावादुच्चार्यमाणसजातीयपर्यन्तानुधावनम् । यत्र "षष्ठ्यान्त्यस्य"[ ७. ४. १०६. ]इति परिभाषादिबलादुच्चार्यमाणसजातीयस्यापि कार्यं न भवति तदर्थमुच्चार्यमाणावयवरूपमेव वेति पक्षान्तरोपादानमिति विवेकः । उच्चार्यमाणसाजात्यं तु समानानुपूर्वीकत्वमेव, तथा च सूत्रोच्चार्यमाणसमानानुपूर्वीकस्यैव क्वचित् तदवयवरूपस्यैव वा आदेशो न तु प्रमाणान्तरेण प्रतीयमानस्येति फलति । तथा च प्रतीयमानस्य कार्याभावबोधकोऽयं न्यायः, तथा च निर्दिश्यमानत्वं शास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्योपस्थितिविषयताश्रयत्वमिति फलति । "य-स्वरे पादः०" [ २. १. १०२. ]इत्यादौ पादन्तस्येत्यर्थो "विशेषणमन्तः" [ ७. ४. ११३. ]इति शास्त्रसहकारेणैवोपतिष्ठतीति तत्सहकारेण लब्धोऽर्थो न निर्दिश्यमानोऽपि तु 'पादः' इति षष्ठीप्रकृति'पाद्' इत्यानुपूर्वीरूप एव निर्दिश्यमान इति तस्यैवादेशो भवति, एवम् *आगमा यद्गुणीभूताः*इति न्यायेन लब्धोऽर्थोऽपि न निर्दिश्यमान इति तन्न्यायसहकारेणाऽऽगमसहितपिबतेः पिबतिग्रहणेन ग्रहणे तस्य [आगमसहितस्य] पिबादेशो न भवति। यत्र च ह्रस्वस्योच्चारणे दीर्घस्यापि कार्यं भवति तत्र स्वसंज्ञाबोधकशास्त्रसहकारेण दीर्घस्योपस्थितिरिति शास्त्रान्तरासहकारेणोपस्थितिविषयत्वाभावात्, तादृशस्थले दीर्घस्य निर्दिश्यमानत्वं न स्यात्, यथा-"इश्वाववर्णस्यानव्ययस्य" [ ४. ३. १११. ] इत्यादाविति न शङ्क्यम्, तत्र वर्णग्रहणाज्जातिपक्षाश्रयणाद् वा दोषाभावात् । ननु शास्त्रान्तरसहकारेणोपस्थितिविषयस्य निर्दिश्यमानत्वाभावे देवीमत्वतीत्यर्थे देवीशब्दस्यान्तस्य "सर्वादिविष्वग्देवाड्डद्रिः क्वयञ्चौ" [ ३. २. १२२. ] इति डद्र्यादेशो न स्यात्, तत्र हि क्वयञ्चाविति सप्तम्या निर्देशादव्यवहितपूर्वस्य "सप्तम्या पूर्वस्य" [ ७. ४. १०५. ] इति परिभाषाबलाद् बोधे सूत्रे देवशब्दे श्रूयमाणायाः पञ्चम्याः षष्ठीप्रकल्पने देवशब्देन च देवीशब्दस्योपस्थितिः*नामग्रहणे लिङ्गविशिष्टस्यापि* इति न्यायरूपशास्त्रान्तरसहकारेणैवेति शास्त्रान्तरासहकारेणोपस्थितिविषयत्वाभावादिति चेत् ? अत्रोच्यते–षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम्, वैशिष्ट्यं च स्वजन्योपस्थितिविषयत्व-स्वजन्योपस्थितिविषयपूर्ववर्णाघटितत्वैतदुभयसम्बन्धेन, तथा चात्र पक्षे शास्त्रान्तरासहकारेण षष्ठीप्रकृतिजन्योपस्थितिविषयतायाः परित्यागेन प्रकृते दोषाभावः । "विशेषणमन्तः" [ ७. ४. ११३. ] *आगमा यद्गुणीभूताः०* इति शास्त्रद्वयसहकारेणोपस्थितस्य तदन्तरूपस्यागमसहितरूपस्य वार्थस्य व्यवच्छेदायैव हि शास्त्रान्तरासहकारेणेति निवेशितमासीत्, तस्य चार्थस्य प्रकृतपरिष्कारेणैव व्यवच्छेदस्य कृतत्वात्, तथा हि–'द्विपदा' इत्यादौ तदन्तविधिना 'द्विपाद्' इति समुदायस्य पदादेशः प्राप्तः स वारणीयः, तत्र षष्ठीप्रकृतिविशिष्टत्वं 'पाद्' इत्यस्यैव, न तु द्विपादित्यस्य, षष्ठीप्रकृतिपाद्शब्दजन्योपस्थितिविषयः 'पाद्' इति, तत्पूर्ववर्णो द्विशब्दघटकेकारः, तदघटितत्वाभावाद्, इति न तस्य निर्दिश्यमानत्वम्; एवम् 'अपिबद्' इत्यत्र *आगमा यद्गुणीभूताः०* इति न्यायवशाद् यद्यपि "श्रौति-कृवु-धिवु०" [ ४. २. १०८. ] इति सूत्रघटकषष्ठीप्रकृतिविशिष्टत्वम् 'अपा'इत्यस्यापि तथापि तत्र वैशिष्ट्यघटकद्वितीयसम्बन्धाभावान्न पिबादेशः, तथा हि–पाशब्दः षष्ठीप्रकृतिः, तज्जन्योपस्थितिविषय'पा'शब्दपूर्ववर्णाडागमविहिताकारघटितत्वेन तदघटितत्वाभावात् । तथा च "विशेषणमन्तः" [७.४. ११३.] *आगमा यद्गुणीभूताः०* इत्युभयशास्त्रसहकारेणोपस्थितार्थस्य व्यवच्छेदः प्रकृतपरिष्कारेण सिद्ध इति शास्त्रान्तरासहकारेणोपस्थितिविषयत्वनिवेशे फलाभावेन *नामग्रहणे लिङ्गविशिष्टस्यापि* इति न्यायसहकारेणोपस्थितिविषयदेवीशब्दस्य निर्दिश्यमानत्वे बाधाभावात् तस्याप्यन्तस्य डद्र्यादेशः सिद्ध इति । अपरे तु–एवं निर्दिश्यमानत्वपरिष्कारेऽपि 'सजुषः सजूः–सजूःसजूः' इत्यादौ

"सजुषः" [ २. १. ६२. ] इति सूत्रनिर्दिष्टषष्ठीप्रकृतिविशिष्टत्वं पूर्वस्य सजूःशब्दस्य न स्यात्, पूर्वोक्तवैशिष्ट्यनियामकद्वितीयसम्बन्धाभावादिति तद्दोषपरिहाराय 'षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम्' इत्यत्र वैशिष्ट्यनियामकसम्बन्धद्वयमित्थमाहुः—स्वजन्यशाब्दबोधीयविषयताश्रयत्व-स्वजन्यशाब्दबोधीयविषयताश्रयाघटितत्वोभयसम्बन्धेनेति, तथा चोभयोः पृथगेव निर्दिश्यमानत्वमिति न दोषः । अन्ये तु—देवीमञ्चति—'देवद्र्यङ्' इत्यत्र दोषवारणाय निर्दिश्यमानत्वमन्यथैव परिष्कुर्वन्ति—षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम्, वैशिष्ट्यं च स्वजन्योपस्थितिविषयत्व-स्वजन्योपस्थितिविषयताश्रयविशिष्टवर्णाघटितत्वैतदुभयसम्बन्धेन, तत्र सम्बन्धघटकवैशिष्ट्यं च—स्वसमभिव्याहृतत्व-स्वप्रकृतिकस्त्रीप्रत्ययेतरत्वोभयसम्बन्धेन, देवीत्यत्र स्वं—देवशब्दः, तज्जन्योपस्थितिविषयताश्रयो देवः, तद्विशिष्टत्वमीकारस्य नास्ति, स्वसमभिव्याहृतत्वसत्त्वेऽपि स्वप्रकृतिकस्त्रीप्रत्ययेतरत्वाभावादिति। नन्वेवमपि 'जराया जरा—जराजरा, जराजरसौ' इत्यत्रोपस्थितीयविषयताश्रयः पूर्वो जराशब्दः, तद्विशिष्ट उत्तरजराजकारः, तद्घटितत्वादुत्तरस्य निर्दिश्यमानत्वाभावेन जरसादेशो न स्यात्, न च प्रकृतिवैशिष्ट्यघटकद्वितीय[ स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वरूप ]सम्बन्धस्य स्थाने स्वजन्योपस्थितीयविषयताश्रयावधिकपूर्ववर्णाघटितत्वरूपसम्बन्धस्य निवेशादुत्तरस्य जराशब्दस्य निर्दिश्यमानत्वमक्षतमिति वाच्यम्, त्रिशब्दादाचारक्विबन्तात् कर्तरि क्विपि तागमे ततः षष्ठ्या बहुवचने आमि त्रितामित्यादावुपस्थितीयविषयताश्रयस्त्रिशब्दः, तदवधिकपूर्वो वर्ण उदासीनः, तदघटितत्वं त्रिशब्दस्येति तस्य निर्दिश्यमानत्वेन त्रयादेशापत्तेः । अथ स्वजन्योपस्थितीयविषयताश्रयत्व-स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वं तत्त्वम्, वैशिष्ट्यं च स्वावधिकपूर्वत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदन्यतरसम्बन्धेन, 'जराजरसौ निर्जरसौ' इत्यादौ समुदायस्य 'व्याघ्रपात्पदः' इत्यादौ पूर्वपाच्छब्दस्य च निर्दिश्यमानत्वाभावाय स्वावधिकपूर्वत्वरूपप्रथमसम्बन्धनिवेशः, त्रितामित्यादौ तागमविशिष्टे निर्दिश्यमानत्वाभावाय उद्देश्यताघटितो द्वितीयसम्बन्ध आदृत इति सर्वमवदातम् । नन्वेवमपि प्रतिषिञ्चतीत्यादौ नागमविशिष्टस्य *तन्मध्यपतित*न्यायेन 'सिच्'धातुत्वेऽपि सिज्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयो नागमः, तद्घटितत्वेन स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वरूपद्वितीयसम्बन्धाभावेन निर्दिश्यमानत्वाभावात् "स्था-सेनि-सेध-सिच०" [ २. ३. ४०. ] इति षत्वानापत्तिरिति चेत्? न—सम्बन्धघटकद्वितीयसम्बन्धस्थाने स्वसमभिव्याहृतत्व-स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदुभयसम्बन्धेन स्वविशिष्टत्वस्य निवेशनीयत्वात्, नागमस्य सिच्समभिव्याहृतत्वविरहात् पूर्वपरयोरेव समभिव्याहृतपदार्थत्वादिति चेत्? मैवम्—'व्याघ्रपदः सुपदः' इति समुदाये उपस्थितीयविषयताश्रयपरपाच्छब्दावधिकपूर्ववर्णघटितत्वेन पूर्वस्य पदादेशाभावापत्त्याऽव्यवहितपूर्वत्वं सम्बन्धघटकं वक्तव्यम्, तथा च अस्नात्वा कालकं स्नात्वाकालकं कृत्वा स्नात्वाकालकीकृत्येत्यत्र मयूरव्यंसकादित्वात् [ ३. १. ११६ ] स्नात्वाकालक इत्यत्र समासः, पश्चाच्च्व्यन्तस्य गतिसमासे पूर्वक्त्वाप्रत्ययस्यापि "अनञः क्त्वो यप्" [ ३. २. १५४. ] इति यबादेशविधायकसूत्रघटितषष्ठीप्रकृतिक्त्वाविशिष्टत्वाद् निर्दिश्यमानत्वेन यबादेशापत्तिः, यतः स्वजन्योपस्थितीयविषयताश्रयत्वमप्यस्ति, स्वजन्योपस्थितीयविषयताश्रयः परः क्त्वा, तदव्यवहितपूर्ववर्णाघटितत्वेन तद्विशिष्टवर्णाघटितत्वं चास्ति, ततश्चात्र [ स्नात्वाकालकीकृत्येत्यत्र ] क्त्वान्तसमासावयवक्त्वापदीयनिर्दिश्यमानत्वाद् यबादेशापत्तिरिति चेत्? अत्रोच्यते—मयूरव्यंसकादौ स्नात्वाकालकेति निपातनेन, 'अनञः' इति पर्युदासेन नञ्भिन्नपूर्वपदात् परस्योत्तरपदस्थस्यैव क्त्वो यबादेश इत्याश्रयणेन वा दोषाभाव इति । तदुक्तम्—"मयूरव्यंसकादयश्च" [ पा० सू० २. १. ७२. ] इति सूत्रे महाभाष्येऽपि—"समासनिपातनाद्वा, अवश्यमत्र समासार्थं निपातनं कर्त्तव्यम्, तेनैव यत्नेन ल्यबपि [ यबपि ] न भविष्यति । अनञो वा परस्य, अथवा अनञः परस्य ल्यपा [ यपा ] भवितव्यम्" इत्यादि । ननु "विशेषणमन्तः" [ ७. ४. ११३. ] इति परिभाषया *आगमा यद्गुणीभूताः* इति न्यायेन चोपस्थितस्यार्थस्य स्थानित्वालाभायैवायं न्यायः समाश्रीयते, तत्रेदं वक्तव्यमिमे शास्त्रे लक्षणाग्राहके, न शक्तिग्राहके; आद्यं शास्त्रघटकस्याभेदेन विशेषणतात्पर्यकस्य पदस्य तदन्तत्वावच्छिन्ने, अन्त्यं च तत्तच्छास्त्रघटकपदस्य स्वशक्यविशिष्टे लक्षणां ग्राहयति, वैशिष्ट्यं च स्वेतरत्व-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्बन्धेन स्वविशिष्टाघटितत्वस्वघटितत्वोभयसम्बन्धेन, ततश्च षष्ठीप्रकृतिशक्यत्वं निर्दिश्यमानत्वमिति स्वीकार्यम्, 'द्विपदा' इत्यत्र 'अपिबत्' इत्यत्र च न विशिष्टस्य तत्त्वमिति न दोषः । *नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* *तन्मध्यपतितस्तद्ग्रहणेन गृह्यते* *स्वं रूपम्०* इति न्यायाः "स्थानीवावर्णविधौ" [ ७. ४. ११०. ] इति परिभाषा चैतत् सर्वं शक्तिग्राहकमित्येतेषां सहकारेणोपस्थितस्यार्थस्य शक्यार्थत्वेन सर्वत्र निर्दिश्यमानत्वसिद्धिः । जराया जरसौ—जराजरसौ इत्यत्र पूर्वजराशब्दस्य निर्दिश्यमानत्वेऽपि स्वरादिस्याद्यव्यवहितपूर्वत्वाभावान्न दोषः, व्याघ्रपात्पदः स्नात्वाकालकीकृत्येत्यत्र पूर्वोक्तरीत्या *अन्त्यबाधेऽन्त्यसदेशस्य* इति न्यायेन वा दोषाभावः । न च पतिरिवाचरति—पतित्, वृषलः पतित् यस्याः सा

वृषलपतित्, पूताः क्रतवो यया सा पूतक्रतुः, सा इवाचरति-पूतक्रतुत्, इत्यादौ "सादेः" [२. ४. ५९.] "पूतक्रतु-वृषाकप्यग्नि०" [२. ४. ६०.] इति सूत्राभ्यां पतिशब्द-पूतक्रतुशब्दयोर्नकारैकारावादेशौ स्याताम्, आगमरहितयोस्तयोर्निर्दिश्यमानत्व[षष्ठीप्रकृतिशक्यत्व]सत्त्वादिति वाच्यम्, पूर्वोक्तेषु सर्वेष्वपि परिष्कारेष्वेतद्दोषवारणायोपायान्तरानुसरणस्यावश्यकत्वात् । तथाहि–पूतक्रतुदित्यत्रोपसर्जनत्वान्नैकारः, वृषलपतिदित्यत्र "पत्युर्नः" [२. ४. ४८.] इति सूत्रे पतिशब्दे इकारान्तरस्याऽपि प्रश्लेषेणात्राऽपि ["सादेः" २. ४. ५९. इत्यत्रापि] इकारान्तपतिशब्दस्यैव ग्रहणेन वृषलपतिदित्यादाविकारान्तत्वाभावेन दोषाभावान्मुधैव विस्तृता परिष्कारकल्पनेति चेत्? न–इष्टत्वात्, इति पूर्वोक्तपरिष्कारकल्पनाऽऽग्रहरहिता । अनेन न्यायेन च स्वस्वनिमित्तसन्निधापितानां "षष्ठ्यान्त्यस्य" [७. ४. १०६.] "अनेकवर्णः सर्वस्य" [७. ४. १०७.] इत्यादिपरिभाषाणां न विरोधोऽपि तु समावेश एव, तथा च 'अष्टाभिः' इत्यादौ "वाष्टन आः स्यादौ" [१. ४. ५२.] इति सूत्रेऽस्य न्यायस्य "षष्ठ्यान्त्यस्य" [७. ४. १०६.] परिभाषायाश्चोपस्थितौ निर्दिश्यमानाष्टन्शब्दान्त्यस्याकार इत्यादिरीत्या समावेशः, विरोधे सति हि बाध्य-बाधकभावो भवति । न च मास्तु विरोधः, अङ्गाङ्गिभावस्तु स्यादेवेति वाच्यम्, उभयोरपि विधिशास्त्रोपकारकत्वेन गुणशास्त्रत्वात्, 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इति न्यायेन तदयोगात् ॥ इत्थञ्चानेकफलत्वेन *श्रुतानुमित*न्यायविभिन्नविषयत्वेन न्यासकारादिभिः पृथक् पृथक् लक्ष्यभेदेनोच्चारितत्वेन च पृथगेवायं न्यायः स्वीकार्य इति संक्षेपः ॥ २१ ॥

## *अन्तरङ्गानपि विधीन् यबादेशो बाधते* ॥ २२ ॥

सि०—बहिरङ्गोऽपीति शेषः । यबादेशः "अनञः क्त्वो यप्" [३. २. १५४.] इति सूत्रेण विधीयते, तदर्थश्च नञोऽन्यस्मादव्ययात् पूर्वपदात् परं यदुत्तरपदं तदवयवस्य क्त्वो यप् स्यादिति । एवं च यबादेशे पूर्वपदमुत्तरपदं चापेक्षितमिति पदद्वयापेक्षत्वेन बहिरङ्गः, तदपेक्षयैकपदमात्रापेक्षाणि कार्याण्यन्तरङ्गाणीति तानि यबादेशापेक्षया बलवन्तीति स्थितौ यबादेशस्य बलवत्त्वविधायकोऽयं न्यायः समाश्रीयते । अन्तरङ्गानपीत्यपिशब्दात् पर-नित्ययोः सङ्ग्रहः, योऽन्तरङ्गं परान्नित्याच्च बलवन्तमपि बाधते तस्य परनित्यबाधः कैमुतिकन्यायसिद्ध एव। अत्र ज्ञापकं च "यपि चादो जग्ध्" [४. ४. १६.] इति सूत्रे यपि चेति वचनम्, अत्र चकारेण तादौ कितीति समुच्चीयते, तत्र 'प्रजग्ध्य' इत्यादौ क्त्वाप्रत्ययस्यापि तादित्वेन तादिनिमित्तको जग्धादेशः पूर्वैकपदापेक्षत्वादन्तरङ्गत्वात् प्रवर्त्तिष्यते, पश्चाच्च यबिति यपि चेत्यस्यानुक्तावपि यपि जग्धादेशः सिद्ध एवेति यपि चेत्यस्य वैयर्थ्यं स्पष्टमेव, व्यर्थीभूतं च तत् न्यायमिमं ज्ञापयति । तथा च ज्ञापिते न्याये पूर्वं यबादेश एव स्यात्, ततश्च तादिकित्प्रत्ययाभावेन जग्धादेशो न स्यादिति तद्विधानार्थं यपि चेत्यस्य सार्थक्यम् । फलं चास्य न्यायस्य 'प्रशम्य' इत्यादौ "अहन्पञ्चमस्य क्विति" [४. १. १०७.] इति दीर्घत्वं प्रकृत्याश्रितत्वादन्तरङ्गमपि बाधित्वा पूर्वं यपि कृते पश्चाद् धुडादिप्रत्ययाभावान्न दीर्घत्वमिति, तदुक्तमभियुक्तैः—

"तादौ किति जग्धि सिद्धे यपि चेति यदुच्यते ।
ज्ञापयत्यन्तरङ्गाणां यपा भवति बाधनम् ॥" इति ।

स्पष्टं चेदं "यपि चादो जग्ध्" [४. ४. १६.] इति सूत्रे बृहद्वृत्तौ । तथाहि–"एकपदाश्रयत्वेनान्तरङ्गत्वाद् यबादेशात् प्रागेव जग्धादेशे सिद्धे यप्ग्रहणम् *अन्तरङ्गानपि विधीन् यबादेशो बाधते* इति ज्ञापनार्थम्, तेन प्रशम्य, प्रपृच्छ्य, प्रदीव्य, प्रखन्य, प्रस्थाय, प्रपाय, प्रदाय, प्रधाय, प्रपच्येत्यादौ दीर्घत्वं शत्वमूत्वमात्वमित्वमीत्वं हित्वमिद्त्वं यपा बाध्यते" इति । प्रशम्येत्यत्र दीर्घत्वाभावाः पूर्वमेवोपपादितः, शत्वं प्रपृच्छ्येत्यत्र, ऊत्वं प्रदीव्येत्यत्र, आत्वं प्रखन्येत्यत्र, इत्वं प्रस्थायेत्यत्र, ईत्वं प्रपायेत्यत्र प्रदायेत्यत्र च, हित्वं प्रधायेत्यत्र, इद्त्वं प्रपच्येत्यत्र, यबादेशेन बाध्यत इति योजनीयम् । अत्र च स्थानिवद्भावेन स्थानिवृत्तिधर्मस्य कित्त्वादेर्लाभेऽपि धुडादित्वादेर्वर्णमात्रवृत्तिधर्मत्वेन तदाश्रये विधौ स्थानिवद्भावाप्रवृत्तिरवर्णविधाविति तत्रोक्तत्वात् । यद्यपि "ईर्व्यञनेऽयपि" [४. ३. ९७.] इति सूत्रे 'अयपि' इत्युक्तेः प्रपाय प्रदायेत्यादावीत्वं न प्राप्तं, तथा च नैतेऽस्य न्यायस्योदाहरणे तथापि तस्य 'अयपि' इति वचनस्यैतन्न्यायेन गतार्थत्वेऽपि क्वचिदनुबन्धघटितधर्मानयनेऽवर्णविधाविति न प्रवर्त्तेत इति ज्ञापनार्थत्वम्, तेनानुभूयेत्यादौ गुणनिषेधादिसिद्धिरिति स्पष्टं विवरणे ॥ २२ ॥

## *अन्तरङ्गानपि विधीन् बहिरङ्गो यबादेशो बाधते* ॥ २२ ॥

त०—"ईर्व्यञनेऽयपि" [४. ३. ९७.] इति सूत्रेऽयपीति वचनस्यैतन्न्यायसत्त्वे नावश्यकत्वम्, यतः क्ङिति अशिति इत्वं विधीयते, यप् च न स्वतः कित्, स्थानिद्वाराऽस्य कित्त्वं तु न लभ्यम्, कित्त्वं हि ककारेत्संज्ञकत्वम्, ककारश्च वर्ण इति वर्णविधित्वेन स्थानिवद्भावाभावाद् यपः कित्त्वस्य लब्धुमशक्यत्वात्; तथा च व्यर्थं सत् तद् 'अनुबन्धघटितधर्मानयने 'अवर्णविधौ' इति प्रतिषेधो न प्रवर्त्तते इति ज्ञापयति, तेनानु-

भूयेत्यत्र यपः क्त्वेन गुणो न, प्रोह्येत्यत्र य्वृत्, प्रमथ्येत्यत्र नलोपश्चेत्यादिसिद्धिः । केचित् तु–अयपीति वचनाकरणलाघवार्थं "यपि चादो जग्ध्" [ ४. ४. १६. ] इति सूत्रे यपि चेत्यनेन प्रकृति-प्रत्ययमात्रनिमित्तकं कार्यं यव्विषये न भवतीति ज्ञापयन्ति, न त्विमं न्यायम् । तेषामयमाशयः–प्रजग्ध्येत्यादौ जग्धादेशात् पूर्वं यपः प्रवृत्त्यर्थमेवेदं ज्ञापनं क्रियते, तच्चोक्तज्ञापनेनापि लभ्यं, प्रशम्येत्यादयोऽपि प्रयोगाः सिद्ध्यन्त्येव, सर्वत्र प्रकृतिप्रत्यय-निमित्तकार्याभावस्यैवेष्टत्वात् । विशेषश्चायं लभ्यते यत् "ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इति सूत्रेऽयमपीति न कर्तव्यं भवतीति । परमेतन्न युक्तम्–अधील्येत्यादौ तागमस्याप्यभावापत्तेः, तस्यापि प्रकृति-प्रत्ययमात्रनिमित्तकार्यत्वात् । यदि च क्त्वाश्रयाण्यनुबन्धकार्याणि यब्विषये न भवन्तीति ज्ञाप्यतामित्युच्येत तर्हि अनुभूयेत्यादिप्रयोगेषु गुणनिषेधादिकार्याणि न स्युः । वस्तुतस्तु "यपि चादो जग्ध्" [ ४. ४. १६. ] इति सूत्रे यपिग्रहणं व्यर्थं सत् स्वप्रवृत्तिविरोधिप्राप्तेर्बाधेन चारितार्थ्ये सति स्वप्रवृत्त्युत्तरप्राप्तिबाधे न समर्थमिति स्थानिवद्भावेन य्वुत्तरप्राप्तित्ववारणाय "ईर्व्यञ्जनेऽपि" [ ४. ३. ९७. ] इति सूत्रेऽयपीत्यस्यावश्यकत्वमेव । अनेन न्यायेन चान्तरङ्गनिमित्तविनाशकस्यैव यपः प्राबल्यं बोध्यते, न तूदासीनस्य; तेन प्रेष्य गत इत्यादौ प्रपूर्वकादिष्धातोर्ण्यन्तात् क्त्वाप्रत्यये णिनिमित्तकोपान्त्यगुणात् पूर्वं न यप्, अन्यथा पूर्वं यपि "लघोर्यपि" [ ४. ३. ८६. ] इति णेरयादेशः स्यात्, सिद्धान्ते त्वत्र यपोऽन्तरङ्गगुणनिमित्तविनाशकत्वाभावेन न प्राबल्यमिति पूर्वं गुणे ततो यपि लघोरभावेऽयादेशो न भवति । व्याघ्रभूतिराचार्योऽप्येतन्न्यायज्ञापनमनेन [ यपि चेत्येतत्स्थानीयेन "अदो जग्धिर्ल्यप् तिकिति" पा० २. ४. ३६. इति सूत्रस्थल्यप्ग्रहणेन ] मन्यते, तदुक्तं तत्रैव सूत्रे महाभाष्ये–"जग्धिविधिर्ल्यपि यत्तदकस्मात् सिद्धमदस्तिकितीति विधानात् । हिप्रभृतींस्तु सदा बहिरङ्गो ल्यप् हरतीति कृतं तदुविद्धि" स्वयं च भाष्यकृतायमर्थ एवमुपनिबद्धः–जग्धौ सिद्धेऽन्तरङ्गत्वात्तिकितीति, ल्यबुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् , इति । स्थानिवद्भावेन प्राप्तित्ववारणार्थं कृतम्–"ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इत्यत्रायपीति च वर्णविधावप्यनुबन्धघटितधर्मानयने स्थानिवत्त्वज्ञापकमपीति पूर्वं प्रतिपादितमेवेति सर्वं सुस्थम् ॥ २२ ॥

## *सकृद् गते स्पर्धे यद् बाधितं तद् बाधितमेव* ॥ २३ ॥

सि०—सकृद्–एकवारं, गते–जाते, स्पर्धे–तुल्यबलविरोधे [ द्वयोः शास्त्रयोर्यथासम्भवं लब्धावकाशयोरेकत्र लक्ष्येऽसम्भवन्नुपनिपातस्तुल्यबलविरोधः, स एव स्पर्ध इत्युच्यते ] सति यच्छास्त्रं केनापि बलवत्त्वनिमित्तेन बाधितं चेत् तत् बाधितमेव भवति, न स्वबाधकसूत्रप्रवृत्त्यनन्तरं पुनः प्रवर्तेत इति न्यायार्थः, बाधकस्य शास्त्रस्य सर्वथैव तत्प्रवृत्तिबाधकत्वमिति भावः । अयं च न्यायः "स्पर्धे" [ ७. ४. ११८. ] इति सूत्रस्य नियमार्थतामूलको लौकिकन्यायमूलकश्च, तस्य नियमार्थत्वं तावदित्थम्–स्पर्धस्थले उभे अपि शास्त्रे प्रामाणिके, तत्र यथा तृच्-णकौ प्रत्ययौ धातोः पर्यायेण भवतस्तथोभयोरपि शास्त्रयोः [ पूर्व-परयोः ] पर्यायेण प्रवृत्तिः स्वत एव सिद्धेति परप्रवृत्तिविधायकमिदं सूत्रम् [ "स्पर्धे" ७. ४. ११९. ] इति नियमार्थमेव भविष्यति–परमेव भवति, न पूर्वमिति; यथा तुल्यबलयोः स्वामिनोरेकः प्रेष्यः पर्यायेण द्वयोः कार्यं करोति, यदा युगपत् तमुभौ विरुद्धदिक्क्रिययोः कार्ययोः प्रेषयतस्तदोभयोः कार्यं कर्तुमशक्नुवन् यस्तत्र [ स्वामिद्वयमध्ये ] कथमपि निर्बलतया ज्ञायते तस्य कार्यं न करोति किन्तु सबलस्यैव, तथैव परत्वेन बलवदेव शास्त्रं प्रवर्त्तते न निर्बलमिति लोकन्यायोऽप्यत्रानुकूलः । प्राञ्चश्चात्र न्याये ज्ञापकान्तरमाहुः, तच्चेत्थम्–"स्फातिदं चास्य "उदच उदीच्" [ २. १. १०३. ] इति सूत्रे णिवर्जनम्, तद्धि उदञ्चमाचष्टे इति णौ–उदयतीति रूपसिद्ध्यर्थम्, तच्च उदीचादेशकरणादनु यदि "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इत्यन्त्यस्वरादिलुक् प्रवर्तेत तदाऽपि सिध्यत्येव, परं विशेषविहितत्वेनान्त्यस्वरादिलोपात् प्रागेवोदीचादेशे पश्चाच्चैतन्न्यायादन्त्यस्वरादिलुकोऽप्रवृत्तेरुदीचयतीत्येव स्यात्, न तु उदयतीति ततो णिवर्जनं कृतम् । तथा चोदीचादेशं विनान्त्यस्वरादिलुकैवोदयतीति सिद्धम्" । अत्रेदमुच्यते–यदि उदीचादेशस्य विशेषविहितत्वमिष्यते तर्हि विशेषविधेः सामान्यविध्यपेक्षया बलवत्त्वेन तुल्यबलत्वाभावात् स्पर्धाभावेन प्रकृतन्यायविषयत्वस्येहोपपादयितुमयुक्तत्वेन नानेनैतन्न्यायज्ञापनं युक्तम् । यदि च प्रतिपदोक्तत्वेनोदीचादेशस्य बलवत्त्वमित्युच्यते तदापि तुल्यबलत्वाभाव एव । यद्यपि लघुन्यासेऽप्यत्र विषयेऽयं न्यायः प्रचारितः, तथाहि–तत्रत्यो ग्रन्थः–"ननु णिवर्जनं किमर्थम् ? न च वाच्यं णिवर्जनाभावे [ उदञ्चमाचष्टे उदयतीत्यत्र ] उदीचादेशः स्यात्, यतो भवतु उदीचादेशः, तथापि "त्र्यन्त्यस्वरादेः" [ ७. ४. १०३. ] इति लोपे उदयतीति भविष्यति । अत्रोच्यते–विशेषविहितत्वात् लुकं बाधित्वा प्रथममेवोदीचादेशः स्यात्, ततश्च *सकृद्गते स्पर्धे०* इति न्यायात् पश्चादपि न स्यात्" इति । तथापि न तेन ग्रन्थेन ज्ञापकताऽस्य णिवर्जनस्य लभ्यते, किन्तु पूर्वोक्तरीत्या "स्पर्धे" [ ७. ४. ११८. ] इत्यस्य नियमार्थत्वेनैतन्न्यायसिद्धौ सत्यां लब्धावकाशत्वमात्रेण तुल्य-

बलत्वमाश्रित्य स्पर्धं कल्पयित्वा न्यायप्रसारेण णिग्रहणस्य सार्थक्योपपादनं न्यासकृतां स्थितस्य गतेश्चिंतनीयत्वादिति विभाव्यम् । तत्रान्तरे च "उदच उदीच्" [ २. १. १०३. ] इत्येतत्स्थानीये सूत्रे णिवर्जनं न दृश्यते, ते हि उदीचयतीत्येव रूपमिच्छन्ति, तथा हि–अत्र णिवर्जनाभावे उदीचादेशेऽपि अन्त्यस्वरादिलोपो न भवति "नैकस्वरस्य" [ ७. ४. ४३. ] इति निषेधात् । न च कथमस्यैकस्वरत्वमिति वाच्यम्, तन्मते "उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते" इति स्वीकारात् । तथा चात्रापि "उदिति पूर्वपदमुपसर्गभूतमेव, तच्च धातुसंज्ञाप्रयोजके णिप्रत्यये चिकीर्षिते पृथक्करिष्यत इति 'अच्' इत्येतन्मात्रमेव णिप्रकृतिरिति, तच्चैकस्वरमेवेत्यन्त्यस्वरादिलुकोऽप्रवृत्तिः । यद्यपि स्वमतेऽपि "न प्रादिरप्रत्ययः" [ ३. ३. ४. ] इत्यनेन प्रादेर्धात्ववयवत्वं निषिध्यत इत्यत्रापि 'अच्' इत्यस्यैव धातुत्वम्, ततः पूर्वमेवाडागमो न तूदः, तथापि णिप्रकृतित्वं समुदायस्यैव स्वीक्रियते न तूपसर्गरहितस्येति लभ्यते "उदच उदीच्" [ २. १. १०३. ] इति सूत्रे उदयतीति प्रयोगदर्शनात् । तथा चैतद्विषये पाणिनीयतन्त्रेण सह फलभेद इति प्रतीयते, विशेषो विवरणे व्यक्तः । एतन्न्यायफलं तु द्वयोः कुलयोरित्यादौ नान्तादेशाभावः, तथा हि–अत्र 'द्वि+ओस्' इति स्थिते*आदेशादागमः*इति न्यायात् "अनाम्स्वरे०" [ १. ४. ६४. ] इति नोऽन्तागमः प्रथमं प्राप्तः, स च परत्वादन्तरङ्गत्वाच्च "आद्वेरः" [ २. १. ४१. ] इत्यनेन बाधितः, तस्मिन् कृते "एद् बहुस०" [ १. ४. ४. ] इत्येत्वे च विहिते यद्यपि पुनर्नागमस्य प्राप्तिरस्ति, किन्तु प्रकृतन्यायप्रवृत्त्या न भवति । अत्र हि नागमस्यात्वस्य च परस्परं पृथगेवावकाश इति तुल्यबलत्वेन स्पर्धस्य सत्त्वात् परत्वान्नागमे बाधिते पुनः प्रवृत्तौ प्रकृतन्यायसञ्चारस्यौचित्यात् । अत्र *आदेशादागमः*इति न्यायस्य तद्बाधस्य चोल्लेखः प्राचामनुरोधेन । वस्तुतस्तु "अनाम्स्वरे० [ १. ४. ६४. ] इति सूत्रस्थन्यासग्रन्थानुकूलं परत्वादन्तरङ्गत्वाच्चात्वस्य प्रवृत्तिरित्येतन्मात्रमेवोल्लेख्यम् । स्वयमेव *आदेशादागमः*इति न्यायस्य वृत्तौ तन्न्यायानित्यत्वफलतया द्वयोः कुलयोरित्युदाहृतत्वादत्र तन्न्यायचर्चा नावश्यकी, किन्तु परत्वादन्तरङ्गत्वादत्वमित्येतावदेव लेख्यम् । यदि हि स न्यायः प्रवृत्तस्तर्हि परत्वादिकमादेशस्य बलवत्त्वे प्रयोजकं न स्यात्तन्न्यायेन, परनित्यान्तरङ्गत्वादिप्रयुक्तबलवतोऽप्यादेशादागमस्य बलवत्त्वप्रतिपादनादिति बोध्यम् । वस्तुतस्तु परत्वमेवात्र व्यवस्थापकम्, अन्तरङ्गत्वं तु बहिरङ्गत्वसापेक्षं, बहिरङ्गत्वं च "अनाम्स्वरे नोऽन्तः" [ १. ४. ६४. ] इत्यस्य स्वरादित्वमात्राश्रयणनिमित्तं वक्तव्यं, तच्च



स्यादिविशेषणभूतमेवेति स्यादितो नाधिकम्, स्यादिनिमित्तकत्वं चात्वस्यापीति द्वयोः समत्वात् । अभ्युच्चायकतयाऽन्तरङ्गत्वमपि कथञ्चित् स्वीक्रियते चेत्? अस्तु । अयं च न्यायोऽनैकान्तिकः*पुनः प्रसङ्गविज्ञान*न्यायस्यापि लक्ष्यानुरोधात् तन्त्रान्तरपरिगृहीतत्वाच्चाभ्युपेयत्वात् । तथा च प्रियतिसृणः कुलस्येत्यत्र*आगमात् सर्वादेशः*इति न्यायेन प्रथमं बाधितोऽपि नागमस्तिस्रादेशे कृतेऽपि भवति, पुनः प्रसङ्गविज्ञानात् । *पुनः प्रसङ्गविज्ञानम्* इत्यस्य सिद्धिमित्थं वर्णयन्ति–यथा लोके तुल्यबलयोः स्वामिनोरेकः प्रेष्यो भवति, स तयोः कार्यं पर्यायेण करोति, यदा तमुभौ प्रेषयतो नानादिक्षु च कार्ये तदोभयोः कार्यं न करोति यौगपद्यासंभवात्, किन्त्वेकस्य करोति, पश्चाद् यदि द्वितीयस्य कार्यस्याप्यवसरो भवति तदा तस्यापि कार्यं करोति, तथैव शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवादप्रतिपत्तौ प्राप्तायां "स्पर्धे" [ ७. ४. ११८. ] इति सूत्रं परविध्यर्थम् [ न तु नियमार्थम् ], तत्र कृते यदि पूर्वस्यापि प्राप्तिरस्ति तदा तदपि भवत्येवेति पुनः प्रसङ्गविज्ञानसिद्धिः । स्पष्टं चेदं विप्रतिषेधे परम्" [ पा० सू० १. ४. २. ] इति सूत्रे महाभाष्ये । तथा हि–अस्यैव सूत्रस्य [ "विप्रतिषेधे परं कार्यम्" पा० सू० १. ४. २. इत्यस्य ] नियमार्थत्वेन *सकृद्गते विप्रतिषेधे यद् बाधितं तद् बाधितमेव*इति न्यायस्य सिद्धिः, विध्यर्थत्वेन च *पुनः प्रसङ्गविज्ञानात् सिद्धम्*इत्यस्य न्यायस्य सिद्धिरिति पूर्वोक्तलोकन्यायादिभिः सप्रपञ्चमुक्त्वा "किं पुनरियता सूत्रेणोभयं लभ्यम्?" इत्याक्षेपे सति समाधानभाष्यम्–"लभ्यमित्याह । कथम्? इह भवता द्वौ हेतू व्यपदिष्टौ–'तृजादिभिस्तुल्यं पर्यायः प्राप्नोति' च, अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात् इति च । तद् यदा तावदेष हेतुः–'तृजादिभिस्तुल्यं पर्यायः प्राप्नोति' इति, तदा "विप्रतिषेधे परम्" इत्यनेन किं क्रियते? नियमः, विप्रतिषेधे परमेव भवतीति । तदेतदुपपन्नं भवति–*सकृद्गते विप्रतिषेधे यद् बाधितं तद् बाधितमेव भवति*इति, यदा त्वेष हेतुः–अप्रतिपत्तिस्तुल्यबलत्वात्' इति तदा "विप्रतिषेधे परम्" इत्यनेन किं क्रियते? द्वारम्, विप्रतिषेधे परं तावद् भवति, तस्मिन् कृते यदि पूर्वमपि प्राप्नोति तदपि भवति । तदेतदुपपन्नं भवति*पुनः प्रसङ्गविज्ञानात् सिद्धम्*इति । विशेषश्च विवरणे स्पष्टः ॥ २३ ॥

## *सकृद्गते स्पर्धे यद् बाधितं तद् बाधितमेव ॥२३॥*

त०—स्पर्धविषयोऽयं न्यायः, स्पर्धश्च वृत्तौ व्याख्यात एव । तथा च स्पर्धविषये निर्णायकतयाऽऽख्यातः "स्पर्धे" [ ७. ४ ११९. ] इति परिभाषाया एवायं न्यायः प्रपञ्च इति

तत्त्वम् । तत्रास्याः परिभाषाया नियामिकत्वाश्रयणेन प्रकृतन्यायसिद्धिः, विधायिकात्वाश्रयणे च *पुनः प्रसङ्गविज्ञान* न्यायसिद्धिरिति वृत्तौ प्रतिपादितम् । तत्र यद्यपि स्वमतेऽस्य सूत्रस्य परिभाषासूत्रत्वेन परिभाषायाश्च 'अनियमे नियमकारिणीत्वं परिभाषात्वम्' इति सामान्यलक्षणानुरोधेन नियामिकात्वमेवोचितमिति विधायिकात्वाभावेन *पुनः प्रसङ्गविज्ञान* न्यायः स्वमतेऽनेन सूत्रेण साधयितुमशक्यः, तथापि लक्ष्यानुरोधेनैतन्न्यायानित्यत्वाश्रयणविधया तन्न्यायस्वीकार इति मन्तव्यम् । अत एव तत्र तत्राचार्यैरप्ययं न्यायः [*पुनःप्रसङ्गविज्ञानात् सिद्धम्* इति] समाश्रीयते । वस्तुतस्तु वृत्तिप्रदर्शितमहाभाष्योक्तयुक्त्याऽस्य सूत्रस्य परिभाषासूत्रत्वं विधिसूत्रत्त्वं चावश्यकमेव, प्रदर्शितलोकन्यायानुगृहीतत्वात् । अत्र कैयटेन-"लक्ष्यानुरोधेन व्यक्त्याकृतिपदार्थाश्रयणादनयोः परिभाषयोः [ न्याययोः ] विषयविभागोऽवसेयः" इत्युक्तम् । तस्यायमाशयः-व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिद[ विप्रतिषेधे परं कार्यमिति सूत्रम् ]मिति *सकृद्गत* न्यायसिद्धिः । अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरिति । एतच्च नागेशभट्टो न मन्यते, तथा हि-"व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं [कर्तृ] व्याप्नोति, न जातिपक्षे इत्यत्र मानाभावात्, न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । अत एव "सरूप०" [ पा० सू० १. २. ६४. ] सूत्रे भाष्ये, जातौ पदार्थेऽनवयवेन [ साकल्येन ] विधेः प्रवृत्तौ 'गौरनुबन्ध्य' इत्यादौ सकलगवामनुबन्धनासम्भवात् कर्मणो वैगुण्यमुक्तम्; द्रव्यवादे चासर्वद्रव्यावगते- गौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त' इत्युक्तम् । किञ्च नहि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्षे इत्यत्र मानमस्ति । अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात् स्वविषयत्वं न कल्पयतीति वक्तुं शक्यम्, जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयत्वमेव, नैतद्व्यक्तिविषयत्वमित्यत्र विनिगमकाभावः । तत्र लक्ष्यानुरोधात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्यम्" इति परिभाषेन्दुशेखरे तेनोक्तम् । अस्यायमाशयः-व्यक्तौ पदार्थे [ व्यक्तिपक्षे ] *प्रतिलक्ष्यं लक्षणोपप्लवः* [ यावन्ति लक्ष्याणि तावन्ति सूत्राणि कल्प्यन्त ] इत्यनेन हि कैयटादीनामेषोऽर्थः पर्यवस्यति-"त्रेस्त्रयः" [ १. ४. ३४. ] इत्यादिशास्त्रघटकत्र्यादिपदानां त्रित्वाद्युपलक्षिततत्तद्व्यक्तित्वावच्छिन्ने शक्तिरिति न शक्यतावच्छेदकतत्तद्व्यक्तिभेदेऽपि शक्तिभेद उपलक्षणीभूतधर्मस्यैक्यात् । एकेन पदेनैकतद्व्यक्तित्वावच्छिन्नस्यैव बोधादन्यतद्व्यक्तित्वावच्छिन्ने कार्यं न स्यादिति प्रतिलक्ष्ये लक्षणमुपप्लवते । तथा च स्पर्धस्थले द्वयोस्तद्विषयकोपप्लुतशास्त्रयोः प्राप्तौ परमेवेति नियमयति "स्पर्धे" [ ७. ४. ११८. ] इति परिभाषासूत्रम्, तन्नियमवशाच्च पूर्वमेव तद्विषयस्य पूर्वशास्त्रस्यानुपप्लव इति न तद्वैयर्थ्यशङ्का । जातिपक्षे तु एकेनैव शास्त्रेण स्वोद्देश्यतावच्छेदकाक्रान्तसकललक्ष्यव्याप्तिरिति न प्रतिलक्ष्यं लक्षणोपप्लवावश्यकता, तत्र क्वचिल्लक्ष्ये परस्परं चरितार्थयोर्द्वयोः शास्त्रयोः कस्यापि प्रवृत्तिर्न स्यात् सत्प्रतिपक्षन्यायात्, यथा विरुद्धसाध्यसाधकहेतुमत्पक्षे किमपि साध्यं न सिद्ध्यति, यथा 'शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्' 'शब्दोऽनित्यः कार्यत्वाद्घटवत्' इत्यनुमानयोः, तथा द्वयोरपि शास्त्रयोर्युगपदसम्भवादुभयोरप्यप्रवृत्तौ परविधायकमिदं "स्पर्धे" [ ७. ४. ११८. ] इति सूत्रं न नियामकमिति व्यक्तिपक्षः *सकृद्गति*न्यायसाधकः; जातिपक्षः *पुनः प्रसङ्गविज्ञान*न्यायसाधक इति । तत्रेदमुच्यते-व्यक्तिपक्षे लक्षणोपप्लवद्वारा शास्त्रेण सकलानि लक्ष्याणि व्याप्यन्ते, जातिपक्षे नेत्यत्र न मानम्, प्रत्युत जातिपक्ष एव सकललक्ष्यव्याप्तिर्न व्यक्तिपक्षे इति भाष्यादितः सिध्यति । न ब्राह्मणं हन्यादित्यादौ सकलब्राह्मणकर्मकहननस्यानिष्टसाधकत्वनिर्वाहायैव जातिपक्षाश्रयणस्य सर्वैरादृतत्वात् । किञ्च भाष्ये तृजादिदृष्टान्तेन स्पर्धे द्वयोरपि शास्त्रयोः पर्यायेण प्रवृत्तिरुक्ता, स दृष्टान्तो व्यक्तिपक्ष एव सर्वव्यक्तिविषयो न जातिपक्षे इत्यत्र किं प्रमाणम् ? तथा चोभयोः पक्षयोस्तस्य दृष्टान्तस्य समत्वमेव । किञ्च व्यक्तिपक्षेऽपि स्पर्धस्थलभूतालक्ष्यव्यक्तिस्वभिन्नलक्ष्यव्यक्तिरूपविषयलाभेन चरितार्थयोः शास्त्रयोर्विरोधमवलोक्य तत्र पूर्वशास्त्रस्येव परशास्त्रस्यापि स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । एवं जातिपक्षेऽपि तज्जात्याश्रयस्पर्धविषयलक्ष्यभिन्नव्यक्तिविषयत्वमेव न स्पर्धविषयलक्ष्यविषयत्वमित्यत्रापि न मानम्, तथा च लक्ष्याणामुभयथा दर्शनेन यत्र परस्यैव प्रवृत्तिरिष्टा तत्र णकतृजादिदृष्टान्ताश्रयणेनोभयोः स्वत एव प्रवृत्तौ प्राप्तायां "स्पर्धे" [ ७. ४. ५४. ] सूत्रस्य नियमार्थत्वम्; यत्र चोभयोः प्रवृत्तिरिष्टा तत्र लौकिकद्विस्वामिकैकभृत्यदृष्टान्ताश्रयणेनोभयोरप्रतिपत्तौ प्राप्तायां परविध्यर्थमिदं सूत्रम्, तत्रैकस्य कार्ये कृते द्वितीयस्य कार्यमपि सति प्रसङ्गे यथा संपाद्यते तथेहापि पुनः प्रसङ्गविज्ञानमिति । अत्रेदमाशङ्क्यते-स्पर्धस्थले णकतृजादिवदुभयोः शास्त्रयोः पर्यायेण प्रवृत्तिरिति यदुक्तं तन्न शोभनम्, तथा सति विधेयशून्यस्य कस्यचिल्लक्ष्यस्य साधुत्वाभावाय विधेये क्लृप्तस्योद्देश्यतावच्छेदकव्यापकत्वस्य भङ्गापत्तेः, पक्त्येत्यादौ

धातुत्वरूपोद्देश्यतावच्छेदकाधिकरणे स्वाव्यवहितपरत्वसम्बन्धेन णकाभावस्य सत्त्वात्; न चात्रोक्तसम्बन्धेन व्यापकत्वस्य विधेयद्वये बाधितत्वेनान्यत्र तथानियमस्वीकारेऽपि प्रकृते उद्देश्यतावच्छेदकसामानाधिकरण्यमात्रस्वीकारेण पर्यायेण प्रवृत्तौ बाधकाभाव इति वाच्यम्, तथा सति प्रकृते कदाचिद् विधेयशून्यस्य 'पच्' इत्यस्यापि साधुतापत्तेरिति; अत्रोच्यते–प्रकृते विधेयेऽन्यतरवैयर्थ्यापत्त्योद्देश्यतावच्छेदकं प्रति विधेयतावच्छेदकव्यापकताया अभावेऽप्यन्यतरत्वावच्छिन्नव्यापकताया एव शास्त्रतात्पर्यविषयत्वात्, तस्य चाबाधाद् विधेयशून्यस्य साधुत्वाप्रसक्तेः । व्यापकताघटकाधिकरणस्यान्यतरानधिकरणस्यैव प्रकृते निवेशेन विधेयतावच्छेदकावच्छिन्नव्यापकताभावेऽपि क्षत्यभावाच्च ॥ द्वयोः कार्ययोर्यौगपद्येनासम्भव एव "स्पर्धे" [ ७. ४. ११८. ] इति सूत्रप्रवृत्त्युपयोगि । एतच्च "इको गुणवृद्धी" [ पा० सू० १. १. ३. ] इति सूत्रे कैयटे स्पष्टम्, यथा–'शास्+हि' इति स्थितौ "आशिषि तुह्योस्तातङ्" [ ४. २. ११९. ] इति तातङादेशः, "शासस्-हनः शाध्येधि-जहि" [ ४. २. ८४. ] इत्यनेन प्रकृति-प्रत्ययसमुदायस्य स्थाने शाध्यादेशश्च युगपत् प्राप्नुतः, तत्र तातङादेशः पर इति तत्प्रवृत्तौ शिष्टादिति रूपं, पक्षे च शाधीति, तथा च तातङादेशो हिस्थानिकः, शाध्यादेशश्च प्रकृति-प्रत्ययोभयस्थानिक इति भिन्नस्थानिकत्वेऽपि यौगपद्येनोभयोर्विधानस्यासंभवात् "स्पर्धे" [ ७. ४. ११८. ] इति सूत्रेण व्यवस्था क्रियते । ननु 'शास्+हि' इति स्थिते ह्यन्तशासरूपत्वं "शासस्-हनः शाध्येधि-जहि' [ ४. २. ८४. ] इति सूत्रनिमित्तमप्यस्ति "आशिषि तुह्योस्तातङ्" [ ४. २. ११९ ] इति सूत्रनिमित्तमाशीरर्थवृत्तिहिशब्दत्वमप्यस्तीति युगपदुभयोः प्रवृत्तौ को बाध इति चेत्? न–उभयनिरूपितनिमित्तस्योद्देश्यस्य चैकदाऽसम्भवात्, यद्यपि तातङादेशे कृते तस्य स्थानिवत्त्वात् "शासस्-हनः चाध्येधि-जहि" [ ४. २. ८४. ] इत्यस्य निमित्तमस्ति तथापि तातङ्प्रवृत्त्युत्तरमेव तत्, न तु तत्प्रवृत्तिसमकालमिति युगपदसम्भवः स्पष्ट एव; एवमन्यत्रापि स्पर्धविषयेऽवगन्तव्यम् । लक्ष्यानुरोधादेव चानयोर्न्याययोर्व्यवस्थेति सर्वेषामभिमतम्, किञ्च स्पर्धे न सर्वत्र परशास्त्रस्यैव प्रवृत्तिः, किन्तु क्वचित् पूर्वशास्त्रस्यापि प्रवृत्तिरित्यपि "विप्रतिषेधे परम्" [पा० सू० १. ४. २ ] इति सूत्रे महाभाष्ये स्पष्टम् । तत्र च यत्र यत्र पूर्वशास्त्रप्रवृत्तिः स्पर्धेऽभिप्रेता तत्र तत्र वचनारम्भस्यावश्यकतामुद्भाव्य सूत्रभेदादिना च तत् प्रदूष्य "यथान्यासमेवास्तु । कथं ये पूर्वविप्रतिषेधाः? विप्रतिषेधे परमित्येव सिद्धम् । कथम्? परशब्दोऽयं बह्वर्थः–अस्त्येव व्यवस्थायां वर्त्तते, तद्यथा–पूर्वः पर इति; अस्त्यन्यार्थे वर्त्तते, परपुत्रः परभार्या, अन्यपुत्रोऽन्यभार्येति गम्यते; अस्ति प्राधान्ये वर्त्तते, तद्यथा–परमियं ब्राह्मण्यस्मिन् कुले, प्रधानमिति गम्यते; अस्तीष्टवाची परशब्दः, तद्यथा–परं धाम गतः, इष्टं धाम गत इति गम्यते । तद् य इष्टवाची परशब्दस्तस्येदं ग्रहणं–'विप्रतिषेधे परं यदिष्टं तद् भवति" इति । एवमाचार्यादिव्याख्यानाद् यदिष्टं तच्चेत् पूर्वपठितमेव भवेत् तदपि स्पर्धे प्रवर्तनीयमिति फलति ॥ अथ "उदच उदीच्" [ १. १. १०३. ] इति सूत्रे णिवर्जनमेतन्न्यायज्ञापकतयोक्तं प्राचीनैः, तच्च वृत्तौ विवेचितमपि स्थूणानिखननन्यायेन पुनर्विचार्यते, तथा हि–उदञ्चमाचष्टे उदयतीति सिद्ध्यर्थं णिवर्जनं क्रियते, तच्चैतन्न्यायं विना नोपपद्यते, तथा हि–एतन्न्यायाभावेऽन्त्यस्वरादिलोपं बाधित्वा सर्वादेशे [ उदीचादेशे ] सत्यपि पश्चादन्त्यस्वरादिलोपे सतीष्टरूपसिद्धिरस्त्येवेति णिवर्जनं व्यर्थमेव स्यादिति । अत्र केचित्–यत्र पदद्वयसमुदायरूपान्नाम्नो धातुसंज्ञाप्रयोजकः प्रत्ययश्चिकीर्ष्यते तत्र यदि तस्मिन् समुदाये पूर्वपदमुपसर्गसमानाकारं भवति तर्हि तस्य पृथक्कारः पाणिनीयादिवैयाकरणानामिष्टः, स्वस्यापि च तदनुमतम्, तथाहि–"न प्रादिरप्रत्ययः" [ ३. ३. ४ ] इति सूत्रेण प्रादेर्धात्ववयवत्वं निषिध्यते । तथा च तत्र 'अभ्यमनायत प्रासादीयत्' इत्याद्युदाहरणं दीयते । एवं च धातुसंज्ञाप्रयोजकप्रत्ययोत्पत्तिकाल एव तस्य पृथक्कार उचितः, अन्यथा समुदायात् प्रत्ययोत्पत्तौ समुदायस्यैव क्रियार्थत्वे धातुत्वं स्यादिति तदादावेवाडागमः स्यात्, ततश्च प्रत्ययोत्पत्तेः पूर्वमेवात्रोपसर्गस्योदः पृथक्कारे 'अच्' इत्येकस्वरमेव प्रकृतिस्वरूपं स्थितमिति तत्र "नैकस्वरस्य" [ ७. ४. ४४. ] इत्यस्य प्रवृत्त्याऽन्त्यस्वरादिलोपस्य प्राप्तिरेव नास्तीति सर्वादेशे कृते तत्प्रवृत्तिर्न स्यादेतन्न्यायादिति तत्र सर्वादेशवारणार्थं णिग्रहणं सार्थकमित्युक्तिः कथं सङ्गच्छत इति विचारणीयं सूरिभिः । यदि च "न प्रादिरप्रत्ययः" [ ३. ३. ४. ] इत्यनेन सोपसर्गस्य धातुत्वमेव प्रतिषिध्यते इति साधुत्वनिबन्धनकार्य एवोपसर्गस्य पृथक्कारो न तु नामत्वनिबन्धने प्रत्ययोपत्तौ । तथा च 'उदच्' इत्यस्यैव णिप्रकृतित्वमिति तस्यैकस्वरत्वाभावेनेदं सर्वं सम्यगेवेत्युच्येत तर्हि णिप्रत्ययप्रयुक्तं क्रियावाचित्वमपि समुदायस्यैवेति तस्यैव धातुत्वं स्यान्न त्ववयवस्य, स्वाभाविकधातुस्थले चोपसर्गसहितस्य विशिष्टक्रियावाचकत्वेन धातुत्वेऽपि तद्रहितस्यापि सामान्यक्रियावाचित्वमक्षतमेवेत्युपसर्गपृथक्कारेऽपि न धातुत्वं हीयत इति तत्र विशेषः, अत्र चाख्यातार्थः करोत्यर्थो वा णिर्यतो विधीयेत तस्यैव धातुत्वं स्यादिति णिविधानात् पश्चादुपसर्गपृथक्कारे तस्य धात्ववयवत्वापत्त्याऽऽनर्थक्यप्रसङ्गादिति । एवं चोदञ्चमाचष्टे इत्यर्थे–उदीचयति, अयतन्यादौ–उदैचिनदित्याद्येव रूपमुचितं न तूदयतीत्यादीति युक्तं प्रतिभातीत्यपि विचारणीयमिति । एवं चात्र णिवर्जनमनर्थकमिति न तदस्य न्यायस्य ज्ञापकं भवितुमर्हति, किन्तु "स्पर्धे" [ ७. ४. ११८. ]

३. ५१.] इति वृद्धौ सत्यां पश्चात् ङनिमित्तकद्वित्वादिकार्याणि भवन्ति" इति प्राचीनैरुक्तं न्यासे, तच्च नावश्यकम्, यतः 'अचीकरत्' इत्यत्र वृद्धौ कृतायामपि *णौ यत् कृतं कार्यं तत् सर्वं स्थानिवद् भवति* इति न्यायेन तस्याः स्थानिवद्भावे 'कृ' इत्यस्यैव द्वित्वे "ऋतोऽत्" [४. १. ३८.] इति ऋकारस्याति रूपसिद्धौ बाधकाभावात्, ततश्चासन्देहार्थमेवेत्थं व्याख्यानं युक्तम् । अत्र च न्यायेऽशद्वयम्–'कृतेऽन्यस्मिन् धातु-प्रत्ययकार्ये पश्चाद् वृद्धिः' इत्येकः, कृतेऽन्यस्मिन् धातु-प्रत्ययकार्ये पश्चादट्' इति च द्वितीयः । तत्र प्रथमांशज्ञापकम् "एत्यस्तेर्वृद्धिः" [४. ४. ३०.] इति सूत्रम्, तथा हि-तत् सूत्रम् "इंण्क् गतौ" अधिपूर्वं "इंक् स्मरणे" "असक् भुवि" इत्येतेषां धातूनां ह्यस्तन्यामनि परे इष्टानाम् 'आयन्, अध्यायन्, आसन्' इत्यादिरूपाणां सिद्धये, यत्वा-ऽलुग्भ्यां परत्वात् पूर्वमेव "स्वरादेस्तासु" [४. ४. ३१.] इति वृद्धौ सत्यां सिद्धिसत्त्वेऽपि यत् कृतं तदेतन्न्यायांशसत्त्व एव सङ्गच्छते । एतन्न्यायांशसत्त्वे हि इंण्क्-इंकोः क्रमेण "ह्विणोरप्विति०" [४. ३. १५.] "इको वा" [४. ३. १६.] इति सूत्राभ्यां यत्वस्य, अस्तेः "श्ना-ऽस्त्योर्लुक्" [४. २. ९०.] इत्यलुक एव प्राप्तेस्तत्करणात् पश्चाच्च स्वरादित्वाभावेन "स्वरादेस्तासु" [४. ४. ३१.] इत्यस्याप्राप्त्या वृद्ध्यभावे 'आयन्' इत्यादि न सिद्ध्येदिति यत्वा-ऽलुकोर्बाधनार्थं पुनः "एत्यस्तेर्वृद्धिः" [४. ४. ३०.] इति वृद्धिविधायकं सूत्रं स्वांशे चरितार्थम् । फलं चास्य 'ऐयरुः, अध्यैयत' इत्यादिरूपाणां सिद्धिः । अत्र हि "ऋंक् गतौ" इत्यस्य ह्यस्तन्यां प्रथमपुरुषबहुवचने द्वित्वादिषु कृतेषु "धातोरिवर्ण०" [२. १. ५०.] इतीयादेशे कृते वृद्धिर्भवति, एतन्न्यायांशाभावे तु वृद्धेः कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वं वृद्धौ 'आयरुः' इति रूपं स्यात् । एवम्–'अध्यैयत' इत्यत्र अधिपूर्वस्य "इंङ्क् अध्ययने" इत्यस्य ह्यस्तन्यां प्रथमपुरुषबहुवचने वृद्धेः पूर्वं "धातोरिवर्ण०" [२. १. ५०.] इतीयादेशे पश्चाद् वृद्धौ रूपं सिद्ध्यति । न्यायांशाभावे तु वृद्धेरेव नित्यत्वात् पूर्वं प्रवृत्त्या 'अध्यायत' इति रूपं स्यात् ॥ अनियतश्चायमंशः, तेन संपूर्वस्य "ऋं प्रापणे" "ऋंक् गतौ" वेत्याभ्यामद्यतन्यां "समो गम्यृच्छि०" [३. ३. ८४.] इत्यात्मनेपदे 'समार्ष्ट' इत्यादौ "धुड्ह्रस्वात्०" [४. ३. ७०.] इति प्राप्तात् सिज्लोपात् प्रागेव "स्वरादेस्तासु" [४. ४. ३१.] इति वृद्धौ कृतायां पश्चात् तु धुड्ह्रस्वान्ताभावान्न सिज्लोपः; एतन्न्यायांशनित्यत्वे तु पूर्वं सिज्लोप एव स्याद्, धातु-प्रत्ययकार्यत्वात्, तथा च 'समार्त' इति रूपं स्यात् । द्वितीयांशज्ञापकं तु "अड् धातोः०" [४. ४. २९.] इति सूत्रेऽन्विति पदानुपादानम्, तथा हि-परत्वात् कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च यदि प्रथममडेव क्रियते तदा धातोः स्वरादित्वसम्पत्त्या "लघोर्दीर्घः०" [४. १. ६४.] इत्यस्याप्राप्त्या 'अचीकरत्' इत्यादि न सेत्स्यति, अतश्च सर्वकार्येभ्यः पश्चादड्भवनार्थमड्विधायकसूत्रे 'अनु' इति पदोपादानमावश्यकमेवेति विजानताप्याचार्येण यत् तस्मिन् सूत्रेऽन्विति पदं नोपात्तं, तत् तेन विनाऽपि प्रकृतेन न्यायांशेन कार्यं भविष्यत्येवेत्याशयैव । ततश्चाचार्याभिमतोऽयं न्याय इत्यड्विधायकसूत्रे'ऽनु' इति पदानुपन्यासेन ज्ञाप्यते । तथा च 'अचीकरत्' इत्यादौ परोऽपि कृताकृतप्रसङ्गित्वेन नित्योऽप्यल्पनिमित्तत्वेनान्तरङ्गोऽपि चाडागमो द्वित्व-सन्वद्भावेत्व-दीर्घत्वादिषु धातु-प्रत्ययकार्येषु कृतेषु प्रवर्त्तत इत्यस्वरादित्वात् "लघोर्दीर्घोऽस्वरादेः" [४. १. ६४.] इत्यस्य प्रवृत्तिर्निराबाधा भवति । अयमप्यंशोऽनियतः, तत्र च ज्ञापकम् "उपसर्गात् सुग्-सुव०" [२. ३. ३९.] इति सूत्रेऽट्यपीति वचनम् । तथाहि–अभ्यषुणोदित्यादौ कृतेऽटि तद्व्यवधानेऽपि षत्वं स्यादित्यर्थमेवाट्यपीति तत्र पठ्यते, यदि चायं न्यायांशः स्थिरः स्यात् तर्हि पूर्वमेव षत्वे कृते पश्चादडागमे रूपसिद्धौ निराबाधायामट्यपीति व्यर्थमेव स्यात् । तथा च तत् स्वसार्थक्यायास्य न्यायांशस्यानित्यत्वमुद्भावयति, ततश्चास्याविश्वसनीयतया कदाचित् परत्वादिभिर्हेतुभिरडागमोऽपि पूर्वं प्रवर्त्तेत तदाऽपि षत्वं सिद्ध्येदेतदर्थमट्यपीत्यस्य सार्थक्यम् । यद्यपि "एत्यस्तेर्वृद्धिः" [४. ४. ३०.] इति सूत्रस्थबृहद्वृत्तिग्रन्थेनैतत् सूत्रमेव संपूर्णस्यास्य न्यायस्य ज्ञापकमिति लभ्यते, तथा हि–तत्रत्यो ग्रन्थः–"यत्वे लुकि च स्वरादित्वाभावादुत्तरेण वृद्धिर्न प्राप्नोतीति वचनम् । विपयत्वविज्ञानात् परत्वाद् वा प्रागेव वृद्धौ कुतो यत्वा-ऽलुकोः प्राप्तिरिति चेत्? सत्यम्–इदमेव वचनं ज्ञापकं *कृतेऽन्यस्मिन् धातु-प्रत्ययकार्ये पश्चाद् वृद्धिस्तद्बाध्योऽट् च* भवति, तेन 'ऐयरुः, अध्यैयत' इत्यादावियादेशे सति वृद्धिः सिद्धा, अचीकरदित्यादौ च दीर्घत्वम्, पूर्वमटि तु स्वरादित्वान्न स्यात् ।" इति, युक्तं चैतत्–पूर्वं हि सर्वत्र "अड् धातोः०" [४. ४. २९.] इत्यस्यैव प्राप्तिः स्वरादावस्वरादौ च, "एत्यस्तेर्वृद्धिः" [४. ४. ३०.] "स्वरादेस्तासु" [४. ४. ३१.] इति सूत्रे तु तदपवादे, तथा च यदि केवलवृद्धेरेव पश्चाद्भवनं ज्ञापितं स्यात्, तदाऽडागमो न नियत इति स पूर्वं प्रवर्त्ततेति सोऽप्येतेनैव नियम्यः, उत्सर्गापवादयोस्तुल्ययोगक्षेमत्वात्, "अड् धातोः०" [४. ४. २९.] इत्यादावनुपदस्यानुपादानं चेत्थं न्यायसिद्धौ चित्यमेवेति, तथापि वैचित्र्यायांशद्वये ज्ञापकद्वयमुपन्यस्तमिति विज्ञेयम् ॥ २५ ॥

***कृतेऽन्यस्मिन् धातु-प्रत्ययकार्ये पश्चाद् वृद्धिस्तद्बाध्योऽट् च* ॥ २५ ॥**

त०—यद्यपि अड्विधायकसूत्रे विषयसप्तमी गृहीता, विषयसप्तम्याश्चाश्रयणं तत्परत्वाभावेऽपि तद्विषयत्वसम्भावनायामपि सूत्रप्रवृत्त्यर्थमेव क्रियते, तथापि "अड् धातोः०" [४.४.२९.] इति सूत्रे बृहद्वृत्तौ विषयसप्तम्याश्रयणस्य प्रत्ययव्यवधानेऽपि प्रवृत्त्यर्थत्वस्य व्याख्यानेनाग्रे धातुप्रत्ययादिकार्ये कृत एवाडागम इति ज्ञापयिष्यमाणोऽर्थः सूचित इति विषयसप्तम्याश्रयणसामर्थ्यादप्यडागमस्य पूर्वं प्रवृत्तिः कर्तुमशक्या, फलान्तराभावे हि विषयसप्तमी बलवती स्यात्, प्रत्ययव्यवधाने प्राप्तिरूपे फले लब्धे च तस्याः सामर्थ्यमुपक्षीणम्, ततश्च परत्वादिनिमित्तेनैवाडागमस्य बलवत्त्वेन पूर्वप्रवृत्तिरुपपादनीया, साऽप्यनेन न्यायेन वार्यते। अन्ये वैयाकरणा न्यायमिमं नाश्रयन्ते, तेषां मते हि अड्-वृद्धिविधायकशास्त्रयोर्विषयसप्तम्या पूर्वमेव तयोः प्रवृत्तिरिति 'आयन् आसन्' इत्यादि सिद्धये "एत्यस्तेर्वृद्धिः" [४.४.३०.] इति वृद्धिविधानमपि नावश्यकं भवति, 'ऐयरुः' 'अध्यैयत' इत्यादौ तु 'इय्'विधायकशास्त्रस्य परत्वेन पूर्वं प्रवृत्तिः, ततो वृद्धिरिति रूपसिद्धिः, ङपरे णौ लघोर्दीर्घविधायके चास्वरादेरिति न पठ्यते, तथा चाचीकरदित्यादौ न दीर्घप्रवृत्तिदोषः, एवं च समार्ष्टेत्यादावपि न दोष इति न्यायानित्यत्वफलमपि संगृहीतम्, "उपसर्गात् सुग्-सुव्०" [२.३.३९.] इति सूत्रेऽव्यपीति वचनं च युक्तमेव, तत्र षत्वात् प्रागेवाटः प्रवृत्तेरिति सर्वं समञ्जसं भवति। एतच्च पाणिनीये तन्त्रे "असिद्धवदत्राभात्" [पा० सू० ६.४.२२.] इति सूत्रस्थमहाभाष्यकैयटग्रन्थेनापि प्रतीयते, तथा हि–तत्रायन् आसन् इत्यादिसिद्धये यत्वाल्लुकोरसिद्धत्वाश्रयणखण्डनावसरे–"सर्वेषामेष परिहारः, उपदेश इति वर्तते, तत्रोपदेशावस्थायामेवाडाटौ [तत्र मते स्वरादीनामटः स्थाने 'आट्' विधीयतेऽन्येषामट्] भवतः। अथवा 'आर्धधातुके' [अशिति] इति वर्तते, अथवा "लुङ्-लङ्-लृङ्क्ष्वट्" [पा० सू० ६.४.७१.] इत्यड्विधायकसूत्रे द्विलकारको निर्देशः–लुङादिषु–लकारादिष्विति इत्युक्तम्। तत्र कैयटः–"अन्तरङ्गानपि [अपिना परनित्ययोः संग्रहः] विधीन् बाधित्वा लुङाद्युपदेश एवाडाटौ भवतः। अथवार्धधातुकग्रहणानुवृत्तिसामर्थ्यात् [अशितीत्यस्य सम्बन्धसामर्थ्यात्] अकृतेषु लादेशेषु [तत्र मते वर्तमानादिस्थाने 'लट्' 'लिट्' इत्यादयः सानुबन्धा लकारा एव विधीयन्ते, तेषां स्थाने तिवादय आदेशाः क्रियन्ते इति प्रक्रिया] लावस्थायां लब्धार्धधातुकसंज्ञायामडाटौ भवतः" इत्याह [सर्वे एव लकाराः स्वभावतोऽशितः, आदेशे सति ते यथायथं शितोऽशितश्च पश्चाद् भवन्ति]। अथ यत्र य्वृता स्वरादित्वं भवति तत्र स्वरादित्वनिमित्त आट्, स्वमते वृद्धिः] कथं स्यात्, उपदेशावस्थायामेव यावताऽट् प्रवर्तिष्यते इत्याशङ्कायां भाष्यकृता–अट एव तत्रापि विधानेन पश्चाच्चास्वरादित्वेऽटा सहैव वृद्धिरिति समाहितम्। तत्र कैयटः-"आटश्च" [पा० सू० ६.१.९०.] इति यत् [आगमभूतस्याटः "आडजादीनाम्" पा० सू० ६.४.७२. इत्यादि सूत्रविहितस्य स्वरादिधातौ 'प्रत्यये वा क्वचित्' वृद्धिविधायकं] सूत्रं तत् 'अटश्च' इति क्रियते, अचीत्यधिकाराच्च [स्वरादावित्यधिकारात्] हलि [व्यञ्जने] वृद्ध्यभावः। कथम्? आयन्, आसन्निति, यावतेणस्त्योर्यण्-लोपयोः कृतयोर्वृद्धिर्नास्ति [स्वरादित्वाभावादिति भावः], अन्तरङ्गत्वाद् वृद्धिर्भविष्यतीत्यदोषः। +++++ कृतायां वृद्धौ 'आसन्' इति तपरकरणादाकारलोपाभावः, इणोऽपि वृद्धेरैकारस्य यण् न भविष्यति, "इणो यण्" [पा० सू० ६.४.८१.] 'एः' इति योगविभागादिकारान्तस्येणो यण्विधानात् तदभावाच्चायादेशे कृते आयन् इति भविष्यति" इत्याह॥ एतेन च ग्रन्थेन सर्वेभ्यो धातुप्रत्ययादिकार्येभ्यः पूर्वमेवाडाटस्तन्मते प्रवृत्तिः, आयन्नासन्नित्यादयश्च प्रयोगाः सुसाधा इति स्पष्टमेव। 'ऐयरुः' 'अध्यैयाताम्' इत्यादयश्च प्रयोगा यद्यपि तत्र पक्षे न सिध्यन्ति तथापि तत्र परत्वादियादेशस्य प्रवृत्तिरिति दीक्षितेनेङ्धातौ सिद्धान्तकौमुद्यामुक्तम्। नागेशभट्टश्च "न माङ्योगे" [पा० सू० ६.४.७४.] इति सूत्रव्याख्यायामुद्द्योते–'इङस्तु अध्यैयाताम्' इत्यादेर्लोकेऽनभिधानम्, पक्षयोः फलभेदापत्तेः, इत्याह। एतच्च शब्देन्दुशेखरेऽप्यदादिप्रकरणे 'इङ्'धातुव्याख्यावसरे निरूपितम्। 'ऐयरुः' इति च 'ऋ'–धातोर्जुहोत्यादिस्थस्य छान्दसत्वादेव साधु छन्दसि दृष्टानुविधानात्। यद्यपि 'ऋ' धातुव्याख्यावसरे वै०सिद्धान्तकौमुद्यां जुहोत्यादिगणे–"बहुलं छन्दसि" [पा० सू० ७.४.७८.] इत्येव सिद्धे "अर्ति-पिपर्त्योश्च" [पा० सू० ७.४.७७.] इतीत्वविधानादयं ['ऋ'–धातुः] भाषायामपि" इत्युक्तं,तथापि तस्य भाषायां प्रयोगस्यानभिधानमेवेति नागेशाशयः। एवं वृद्धेरड्वाधिकाया धातुप्रत्ययकार्यात् पश्चात् प्रवृत्तिबोधकोऽस्य न्यायस्यांशो न पाणिनीयैरुपेयते। अटोऽपि तेषां मते पूर्वमेव प्रवृत्तिरित्यावेदितमेव। स्वमते चाचीकरदित्यादौ पूर्वमटि स्वरादित्वापत्त्या "लघोर्दीर्घोऽस्वरादेः" [४.१.६४.] इति सूत्रस्थास्वरादेरिति निषेधापत्त्या दीर्घाभावो मा भूदित्येतदर्थं सोंऽशः स्वीक्रियते, तेषां च मते एतद्विषये "दीर्घो लघोः०" [पा० सू० ७.४.९४.] इति सूत्रेऽस्वरादेरिति न पठ्यते। एतत्फलं हि 'और्णुनवत्' इत्यादौ दीर्घाभाव इति स्वमतम्। तन्मते च दीर्घविधायकं सूत्रं सन्वद्भावविधायकेन "सन्वल्लघुनि चङ्परेऽनग्लोपे" [पा० सू० ७.४.९३.] इति सूत्रेण समानयोगक्षेमम्। तच्च सूत्रं द्विधा व्याख्यायते, तद्व्याख्यानानु-

सारं यत्र सम्पूर्णस्य धातोर्द्वित्वं भवति तत्रैव सन्वद्भावो दीर्घश्च भवतः । अनेकस्वराणाम् 'ऊर्णु-अर्थापि-चकास्'प्रभृतीनां धातूनां च न सम्पूर्णस्य द्वित्वमिति तत्र सन्वद्भावो दीर्घश्च न भवतः । द्वितीयव्याख्यानुसारं चोर्णोतेर्दीर्घोऽर्थापयतेश्च दीर्घ-सन्वद्भावौ स्त एवेति सर्वं कारिकाभिः संगृहीतं सिद्धान्तकौमुद्यां दीक्षितेन, तथा हि—

"संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाच्स्विति माधवः ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।
किन्त्वस्यावयवः कश्चित् तस्मादेकाच्स्विदं द्वयम् ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥
चकास्तौ तूभयमिदं न स्यात् स्याच्च व्यवस्थया ।
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥"

इति "व्याख्याविकल्पस्य कैयटेनैव वर्णनात्" इति । अस्यायमाशयः—अस्मिन् शास्त्रे *कार्यकालं संज्ञा-परिभाषम्* इत्येकः पक्षः, तस्य च 'संज्ञा च परिभाषा चोभे कार्यप्रदेशके' इत्यर्थः, तथा चास्मिन् पक्षे तत्तत्कार्यविधिप्रदेशेषु संज्ञाशास्त्रस्य परिभाषाशास्त्रस्य चोपस्थितिर्भवति । *यथोद्देशं संज्ञा-परिभाषम्* इति च पक्षान्तरम् । उद्देशाः—संज्ञाशास्त्र-परिभाषाशास्त्रयोः पाठप्रदेशाः, तानतिक्रम्य न तिष्ठतीति यथोद्देशम्, संज्ञाशास्त्रं परिभाषाशास्त्रं च स्वप्रदेशे स्थितमेव तत्तद्विध्यपेक्षितं स्वं स्वमर्थं समर्पयतीति तदर्थः, अस्मिन् पक्षे च कार्यप्रदेशेषु संज्ञा-परिभाषाशास्त्रविधेयांशस्यैवोपस्थितिर्न तु कृत्स्नस्य शास्त्रस्येति स्थितिः । सन्वद्भावविधायके "सन्वल्लघुनि चङ्परेऽनग्लोपे" [पा० सू० ७. ४. ९३.] इति सूत्रे, दीर्घविधायके "दीर्घो लघोः" [पा० सू० ७. ४. ९४.] इति सूत्रे च तत्रत्य[पाणिनीयमतस्थ]प्रक्रियानुसारम् 'अङ्गस्य' [प्रत्यये परतः प्रकृतिभूतस्य] 'अभ्यासस्य' [द्वित्वे पूर्वस्य] इति च पदद्वयमनुवृत्तम्, पदद्वयमपि च संज्ञाबोधकम्, तत्र 'अभ्यासस्य' इति संज्ञाबोधकपदसम्बन्धेन अभ्याससंज्ञाविधायकं "पूर्वोऽभ्यासः" [पा० सू० ६. १. ४.] इति सूत्रं कार्यकालपक्षे सन्निहितम्, ततश्च 'अङ्गस्य' इति पदसहितस्य सन्वद्भावविधायकस्य सूत्रस्यार्थ एवं सम्पद्यते—अङ्गस्य ये द्वे उच्चारणे तयोः पूर्वोऽभ्याससंज्ञः, स सन्वद् भवतीति । तत्र कृदन्तस्योच्चारणशब्दस्य योगे 'अङ्गस्य' इति कर्मणि षष्ठी, न त्ववयवषष्ठी कारकविभक्तेर्बलवत्त्वात् । अङ्गं च प्रत्यये परतः कृत्स्नमेव प्रकृतिरूपं न तु तदेकदेशः, ततश्च कृत्स्नमङ्गं यत्र द्विरुच्यते तत्रैव सन्वद्भावो दीर्घश्च भवतः, न त्वेकदेशमात्रस्य द्वित्वे सति । एवं च प्रकृतेरेकस्वरत्व एव कृत्स्नायाः प्रकृतेर्द्वित्वसंभावना तत्रैव च तयोः प्रवृत्तिः, अनेकस्वरासु प्रकृतिषु च न तयोः प्रवृत्तिः, तत्रैकस्वरस्यांशस्यैव द्वित्वविधानादिति माधवस्य मतम् । एवं च 'चकास्'धातोः, अर्थमाचष्ट इत्यर्थेऽर्थशब्दाण्णावात्वे पुगागमे चार्थापिधातोः, ऊर्णोतेश्चेत्येवंविधानामनेकस्वराणां ण्यन्तानां ङे कृत्स्ना प्रकृतिर्न द्विरुच्यत इति न तत्र दीर्घत्वं सन्वद्भावश्च प्रवर्त्तते; किन्त्वस्मिन् माधवाभिप्रेते व्याख्याने समाश्रिते "सन्वल्लघुनि चङ्परेऽनग्लोपे" [पा० सू० ७. ४. ९३.] इति सूत्रे महाभाष्ये 'अजजागरत्' इत्यत्र सन्वद्भावमाशङ्क्य णिपरकलघोर्गकाराकारस्य मध्यस्थितेन 'जा' इत्यनेन व्यवधानात् समाधानं कृतं, तद् विरुध्येत, 'जागृ'-धातोरप्यनेकस्वरत्वेन तत्र माधवव्याख्यानरीत्या सन्वद्भावस्य प्राप्तेरभावेन शङ्का-समाधानयोरुभयोरनालम्बनत्वापत्तेस्तत्र कृत्स्नस्याङ्गस्य [संपूर्णायाः प्रकृतेः] द्वित्वाभावात् । तथा चात्र न कार्यकालपक्षेण व्यवहारो भाष्यकृदभिमत इति यथोद्देशपक्षमाश्रित्याह—वस्तुतोऽङ्गस्यावयव इत्यादि । अयमाशयः—अङ्गस्येत्यवयवषष्ठी, न कर्मषष्ठी, तथा चाङ्गावयवस्य [प्रकृत्यवयवस्य] अभ्याससंज्ञकस्य [द्विरुक्तौ पूर्वस्य] इत्यर्थो लभ्यते । ततश्चोर्णुधातोर्ण्यन्तस्य ङे 'नु' इत्येकदेशे द्विरुक्तेऽपि दीर्घस्य प्रवृत्तिरिति और्णूनवदिति रूपम्, सन्वत्त्वस्य चेह प्रयोजनमेव नास्ति, तत्प्रयोजनभूतस्येत्त्वस्यात्राप्राप्तेः, द्वित्वे पूर्वस्याकारस्याभावात् । अर्थमाचष्ट इत्यर्थे णिचि आत्वे पुगागमे च ङे परे तदेकदेशस्य द्वित्वेऽपि सन्वद्भावदीर्घौ भवत एवेति 'आर्तीथपत्' इति रूपं भवति । परं त्वत्र पक्षे 'चकास्'धातोर्ण्यन्तस्य ङे विशेषः, स चायम्—'लघुनि चङ्परे' इत्ययमंशः कैयटेन द्विधा व्याख्यातः, 'चङ्परे' ['ङपरे'] इत्यनेनान्यपदार्थतया लब्धस्य 'णौ'इत्यस्य सन्निहितं 'लघुनि' इत्येतत् पदं विशेष्यम्, तथा च चङ्परे णौ [ङपरे णौ] यल्लघु तत्परो योऽङ्गावयवोऽभ्यास इत्यादि प्रथमव्याख्यानम् । अङ्गमेव [प्रकृतिरेव] वा णेर्विशेष्यम्, तथा च चङ्परे णौ यदङ्गं [या प्रकृतिः] तस्य योऽभ्यासो लघुपर इत्यादि द्वितीयं व्याख्यानम् [इदं च व्याख्यानद्वयं सिद्धान्तकौमुद्यामपि प्रदर्शितम्] इति पक्षद्वयेन सन्वद्भावो दीर्घश्च 'चकास्' धातोर्ण्यन्तस्य न स्यात् स्याच्च, यतः प्रथमे व्याख्यानेऽत्र तयोर्न प्राप्तिर्ङपरे णौ लघोरभावात्, द्वितीये व्याख्याने चाभ्यासस्य [द्वित्वे पूर्वस्य] लघुपरत्वादुभयोः प्राप्तिरिति 'अचचकासत्' 'अचीचकासत्' इति रूपद्वयम् ॥ प्रकृतमनुसरामः—स्वमते नित्यत्वादटः पूर्वं प्रवृत्तौ स्वरादित्वापत्त्या दीर्घाप्राप्त्याऽचीकरदित्यादिरूपाणामसिद्ध्याऽस्य न्यायस्यान्तिमोंऽश आवश्यक एव, और्णुनवदित्यादौ च दीर्घो मा भूदेतदर्थमत्रास्वरादित्यग्रहणस्यावश्यकत्वात् । 'इय्'विधायकशास्त्रं च ["धातोरिवर्णस्येयुव्०" २. १. ५०.] वृद्धिविधायकशास्त्रस्य ["स्वरादेस्तासु" ४. ३. ३१.] इत्यस्यापेक्षया पूर्वमिति तस्यैतदपेक्षया सर्वथा

निर्बलत्वाद् वृद्धेः पश्चाद्भवनार्थं तदंशस्याप्यशक्यत्वमेवेति 'ऐयरुः' 'अध्यैयत' इत्यादीनां सिद्धिः । तथा च तज्ज्ञापनार्थम् "एत्य-स्त्यैर्वृद्धिः" [ ४. ४. ३०. ] इत्यस्याप्यावश्यकत्वमिति प्रक्रिया-नुसारं स्थितस्य गतेश्चिन्तनीयत्वात् सर्वमुपपन्नम् । अत्र न्याये यद्यपि 'तद्बाध्योऽट्' इत्यसङ्गतमिव प्रतिभाति, तथा हि–योऽट् वृद्ध्या बाध्यः स च स्वरादिधातुविषयकः, तत्र च स बाध्यत एवेति कथं स कृतेऽन्यस्मिन् धातुप्रत्ययकार्ये प्रवर्त्तेत; यश्च न तया बाध्यः स प्रकृतन्यायविषय एव नेति स धातुप्रत्ययकार्यात् पूर्वमपि प्रवर्त्तेतान्तरङ्गत्वान्नित्यत्वाद् वा; तथा चाचीकरदित्यत्र पूर्वमेवाटि स्वरादित्वापत्त्या दीर्घाप्रवृत्तिरूपदोषः स्यादेवेति नानेन न्यायेन तद्दोषवारणमिति 'तद्बाध्योऽट्' इति कथनमसंगतमेव; तथापि 'तद्बाध्य'पदस्योपलक्षणतया स्वरादिषु वृद्धिकृतेन बाधे-नोपलक्षितो व्यञ्जनादिधातुषु प्रवर्त्तमान एवाट् तेन बोध्यते, समानसूत्रविधेयत्वलक्षणसम्बन्धात् तत्र लक्षणेत्यपि वा बोध्यम् । किञ्च तद्बाध्यपदस्य वृद्धिपरिचायकतयाऽप्युपयोग इति वृत्तावा-वेदितमेव । अनेनैव हि पदेन "स्वरादेस्तासु" [ ४. ४. ३१. ] इति विहितैव वृद्धिरिह ग्राह्या, न तु "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति विहिता वृद्धिः, तस्या अड्बाधकत्वा-भावादिति लभ्यते । वस्तुतस्तु "लघोर्दीर्घोऽस्वरादेः" [ ४. १. ६४. ] इत्यत्रास्वरादेरिति वचनसामर्थ्यादेव योऽकृतेऽटि स्वरादिः स एवात्र स्वरादिशब्देन गृहीष्यते, अन्यथा ङविषये सर्वेषामेव धातूनामटाऽवश्यमेव भाव्यमिति स्वरादित्वापत्त्या तस्याऽव्यावर्त्तकत्वं न स्यात् । इत्थं चाकृतेऽटि यः स्वरादि-रित्यर्थाश्रयणेऽचीकरदित्यादौ दोषाभावेनाटो धातु-प्रत्ययकार्यात् पश्चात् प्रवृत्तौ फलाभावेन तदंशस्य नावश्यकत्वमिति प्रतीमः । किञ्च तद्विषये यज्ज्ञापकमुपन्यस्तम् "अड् धातोः०" [ ४. ४. २९. ] इति सूत्रे 'अनु' इति पदानुपादानम्, तच्च प्रयोजना-भावमूलकमेवेति न तज्ज्ञापकं भवितुमर्हति, उपात्तं हि पदं ज्ञापकं भवति, नानुपात्तम्, ज्ञापकत्वं हि ज्ञापनकर्तृत्वम्, असतश्च कर्त्तृत्वे वन्ध्यासुतादीनामपि कर्तृत्वप्रसङ्गादिति । तदं-शस्य ज्ञापनावश्यकत्वे "एत्यस्त्यैर्वृद्धिः" [ ४. ४. १३०. ] इति सूत्रस्यैव ज्ञापकत्वमिति स्वीकरणीयम्, एतच्चात्रत्यबृहद्वृत्तिग्रन्थो-पन्यासेन वृत्तौ स्फुटीकृतमपि, तत्र हि सम्पूर्णन्यायस्यानेनैव ज्ञापनमिति स्पष्टमेवोक्तम् । अस्यांशस्यानावश्यकत्वे च पूर्वोक्त-रीत्या स्वीकृते "उपसर्गात् सुग्-सुव्०" [ २. ३. ३९. ] इति सूत्रेऽव्यपीति सप्रयोजनमेव नित्यत्वात् पूर्वमेवाटः प्रवृत्त्या तद्व्य-वधानेन षत्वाप्राप्तेरिति बोध्यम् । इत्थं चात्र पश्चादड्भवने न किञ्चिद् विनश्यतीति वृत्तिग्रन्थमुपादाय–"नन्वडागमे कृते सति तद्व्यवधानात् प्राकृतषत्वं *निमित्ताभावे०* इति न्यायान्नि-वर्त्तते; उपसर्ग-धात्वोरानन्तर्यं हि षत्वस्य निमित्तम् । अटा व्यवधाने च तयोर्नानन्तर्यं विनष्टमिति कथमुच्यते न किञ्चिद् विनश्यतीति शङ्कामुत्थाप्य, उच्यते–*आगमोऽनुपघाती* इति न्यायादडागमेन व्यवधानं न स्यादिति न्यासोक्तं समाधानमप्य-नावश्यकम्, पूर्वोक्तरीत्या अव्यपीत्यस्य सार्थक्यस्योपपादितत्वेन तद्व्यवधाने षत्वस्य न्यायतः प्राप्तत्वादिति ॥ २५ ॥

## *पूर्वं पूर्वोत्तरपदयोः कार्यं पश्चात्च सन्धिकार्यम्* ॥ २६ ॥

सि०—पूर्वोत्तरपदयोरिति सम्बन्धसामान्ये षष्ठी, तथा चान्तरङ्गत्वादिहेतुयुतादपि सन्धिकार्यात् पूर्वं पूर्वोत्तरपद-सम्बन्धिकार्यं भवति, पश्चात् सन्धिकार्यमिति । पूर्वोत्तरपद-कार्यं च पूर्वपदमुच्चार्योत्तरपदमुच्चार्य च विहितं कार्यमिति न विज्ञेयम्, अन्यथा वृद्धिकार्यस्य पूर्वोत्तरपदकार्यत्वाभावाज्ज्ञा-पनासम्भवः । *अन्तरङ्गं बहिरङ्गात्* इत्यादिबलवत्त्वबो-धकन्यायानामपवादोऽयं न्यायः । अत्रांशे ज्ञापकं च "य्वः पदान्तात् प्रागैदौत्" [ ७. ४. ५. ] इति सूत्रे वृद्धिप्राप्तौ सत्यामित्यर्थाश्रयणम्, तथा हि–अस्य सूत्रस्य तावदयमर्थः– ञिणति तद्धिते प्रत्यये परत इवर्णोवर्णयोर्वृद्धिप्राप्तौ तयोरेव स्थाने यौ य्वौ पदान्तौ ताभ्यां प्राग् यथासंख्यमैदौतौ स्याता-मिति, यथा व्याकरणमधीते वेत्ति वेत्यर्थे "तद्वेत्त्यधीते" [ ६. २. ११७. ] इत्यणि–वैयाकरण इति रूपम्, एवं– स्वश्वस्यायमित्यर्थे "तस्येदम्" [ ६. ३. १६०. ] इत्यणि– सौवश्व इति रूपम् । यदि चायं न्यायांशो न स्यात् तदा व्याकरण-स्वश्वशब्दयोर्निष्पत्तिकाल एव 'वि+आकरण, सु+ अश्व' इत्यवस्थायामेव पूर्वमिकारोकारयोर्यत्ववत्वभवनादिवर्णो-वर्णयोरभावेन तयोर्वृद्धिप्राप्तिर्नास्तीति तयोर्वृद्धिप्राप्तौ सत्या-मित्युक्त्वा विधीयमानावैदौताविह कथं स्याताम् । परमेतेन न्यायांशेन 'वि+आकरण+अण्, सु+अश्व+अण्' वि-सुशब्दयो-रणि वृद्धिरूपं पूर्वपदकार्यमेव पूर्वं प्राप्स्यति न तु यत्व-वत्व-रूपं सन्धिकार्यमिति संभाव्य वृद्धिप्राप्तौ सत्यामिति सूरिणा-ऽनुवर्त्तितम्, तत्प्राप्तौ च सत्यां "य्वः पदान्तात्" [ ७. ४. ५. ] इति सूत्रकरणसामर्थ्याद् वृद्धिं बाधित्वा यत्व-वत्वे एव स्यातां, तत ऐदौतौ चेति स्थितिः । फलं चास्य न्यायांशस्य 'अग्नेन्द्रौ' इति रूपम्, अत्र हि अग्निश्चेन्द्रश्चेत्यर्थे द्वन्द्वे कृते पूर्वपदस्याग्नेरिकारस्य "वेदसहश्रुतावायुदेवतानाम्" [ ३. २. ४१. ] इत्यात्वं द्वन्द्वसमासापेक्षत्वात् "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घापेक्षया बहिरङ्गमपि प्रथमं क्रियते, न त्वन्तरङ्गोऽपि दीर्घः, यदि पूर्वं दीर्घ एव क्रियेत तर्हि पूर्व-पदोत्तरपदोभयावयवजस्य ईकारस्य *उभयस्थाननिष्पन्नोऽन्य-तरव्यपदेशभाक्* इति न्यायेन यदि 'अग्नी' इत्येवं रूपं पूर्व-

पदान्तत्वं व्यपदिश्यते तर्हि तस्य "वेदसहश्रुता०" [ ३. २. ४१. ] इत्यात्वे 'अग्नान्द्रौ' इति रूपं स्यात्, यदि तूत्तरपदादित्वं व्यपदिश्यते तर्हि पूर्वपदस्य 'अग्न' इत्येवंरूपतया तदन्तस्य नस्यात्वे-अगेन्द्राविति स्यादित्युभयथापि दोष एव स्यात्, ततश्च पूर्वमात्वरूपं पूर्वपदकार्यं कृत्वा पश्चात् प्राप्तस्य "अवर्णस्येवर्णादिना०" [ १. २. ६. ] इत्येत्वस्य सन्धिकार्यस्य प्रवर्त्तनादिष्टरूपस्य सिद्धिरिति । उत्तरपदकार्यस्य पूर्वं प्रवृत्तौ ज्ञापकं तु "आतो नेन्द्रवरुणस्य" [ ७. ४. २९. ] इति सूत्रेणोत्तरपदस्य वृद्धिप्रतिषेधनम्, तथाहि-अग्नेन्द्रौ देवते अस्येत्यर्थे "देवता" [ ६. २. १०१. ] इत्यणि-आग्नेन्द्रं सूक्तमित्यत्रैतन्न्यायपूर्वांशेन पूर्वपदकार्यस्य प्रथमप्रवृत्तेः साधितत्वेन "वेदसहश्रुता०" [ ३. २. ४१. ] इत्यनेनाग्नेरिकारस्यात्वे कृते पश्चादणि परे "देवतानामात्वादौ" [ ७. ४. २८. ] इत्युभयपदवृद्धौ प्राप्तायामनेनोत्तरपदस्य वृद्धिर्निषिध्यते । स च व्यर्थ एव, यत इन्द्रशब्दे तावद् द्वौ स्वरौ, तत्र प्रथमः सन्धिनाऽपहृतः, एतन्न्यायाभावे "अवर्णस्येवर्णादिना०" [ १. २. ६. ] इत्येत्वस्यान्तरङ्गत्वात् प्रवृत्तेः, द्वितीयश्चाणि परे परत्वाद् "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इति लुप्यते, ततश्चेन्द्रशब्दस्य स्वररहितत्वाद् वृद्धिप्राप्तेरेवाभावात् तस्य वैयर्थ्यं स्पष्टमेव । तथा च व्यर्थीभूय स निषेधो ज्ञापयति-पूर्वमुत्तरपदकार्ये कृते पश्चात् सन्धिकार्यमिति । तथा चेन्द्रशब्दस्याद्यस्वरस्य वृद्धिप्राप्तिर्निराबाधेति तन्निषेधस्य स्वांशे चारितार्थ्यम् । फलं चास्यांशस्य-परमायमिति, अत्र परमश्चासावयमित्यर्थे कर्मधारयाधिकारस्थे "सन्महत्परमोत्तमोत्कृष्टं पूजायाम्" [ ३. १. १०७. ] इति समासे 'परम+इदम्+सि' इति स्थितौ "अवर्णस्येवर्णादिना" [ १. २. ६. ] इत्येत्वे "अयमियं पुं-स्त्रियोः सौ" [ २. १. ३८. ] इत्ययमादेशे च प्राप्तेऽयमादेशस्य पुंस्त्वबहिर्भूतप्रत्ययादिनिमित्तत्वाद् बहिरङ्गत्वेनान्तरङ्गत्वादेत्वस्यैव प्रवृत्तौ प्राप्तायामनेन न्यायांशेन पूर्वमुत्तरपदकार्यस्यायमादेशस्यैव प्रवृत्तिरिति; यदि त्वन्तरङ्गत्वात् प्रथममेत्वं विधीयेत तदा *उभयस्थाननिष्पन्न* इति न्यायादेकारस्येदंशब्दसम्बन्धितायामेकदेशविकृतस्यानन्यत्वादेदंशब्दस्यायमादेशे परमयमिति रूपं स्यात्, यदि च एत्वस्य पूर्वपदसम्बन्धित्वस्वीकृतिस्तदा 'दम्' इत्यस्यैवावयवे समुदायोपचारेण 'इदम्'शब्दत्वव्यपदेशादयमादेशे 'परमेऽयमिति रूपं स्यात्; उभयथाप्यनिष्टमेव रूपमिति प्रकृतन्यायांशस्य तत्र प्रवृत्त्योत्तरपदसम्बन्धिकार्येऽयमादेशे पूर्वं प्रवृत्ते पश्चात् सन्धिकार्ये परमायमितीष्टरूपसिद्धिः, अयमादेशानन्तरं चैत्वस्याप्राप्त्या "समानानां तेन दीर्घः" [ १. २. १. ] इति दीर्घत्वमेव भवति । अयं च न्यायांशोऽनियतः, तथा च परम इदमस्य तस्येत्यर्थे ङसि 'परमेः' इति रूपं भवति, अस्य न्यायस्य नित्यत्वे तु पूर्वमिकाररूपस्योत्तरपदस्य "ङित्यदिति" [ १. ४. २३. ] इत्येत्वरूपमुत्तरपदकार्यमेव प्रथमं स्यादिति 'परमेः' इत्यनिष्टं रूपं प्रसज्येतेति; एतच्च व्याख्यानं प्राचामनुरोधेन । वस्तुतस्तु वैयाकरण इत्यादावैदागमस्यादिस्वरवृद्धेर्वा न पूर्वपदकार्यत्वम्, पूर्वपदमुच्चार्य विहितकार्यस्यैव पूर्वपदकार्यत्वौचित्यादिति वृद्धिप्राप्तौ सत्यामित्यर्थाश्रयणेनैतन्न्यायपूर्वांशज्ञापनासंभवः । न चैवं परमायमित्यत्रायमादेशस्याप्युत्तरपदकार्यत्वाभावेन तत्रैतन्न्यायाप्रवृत्तावनिष्टं रूपं स्यादिति वाच्यम्, तत्रोत्तरपदमुच्चार्य विहितत्वाभावेऽपि वस्तुत उत्तरपदभूतस्येदंशब्दस्य कार्यविधानात्, "वृद्धिः स्वरेष्वादेः" [ ७. ४. १. ] इति वृद्धिस्तु समुदायावयवस्य स्वरेष्वादिभूतस्य स्वरस्य विधीयते न तु पूर्वपदादिभूतस्य पूर्वपदस्य वेति ततो भेदात् । किञ्चात्र 'वैयाकरण' इत्यादावेतन्न्यायपूर्वांशे स्वीकृते सन्धिकार्यात् पूर्वं स्वरेष्वादिस्वरस्य वृद्धौ 'वै आकरण' इत्यवस्थायामायादेशे ततः पदान्ताद् यकारात् पूर्वस्थस्याकारस्यैकारादेशेऽपि रूपसिद्धौ 'तत्प्राप्तौ सत्याम्' इति वृद्धिप्राप्तिपूर्वकं तद्बाधकरूपत्वमैदागमस्याश्रयितुमनावश्यकम्, इति ज्ञापितेऽपि स्वांशे चारितार्थ्याभाव एवेति विशदतया विवेचितं विवरणे ॥ २६ ॥

## *पूर्वं पूर्वोत्तरपदयोः कार्यं कार्यं पश्चात् सन्धिकार्यम्* ॥ २६ ॥

त०—सन्धिकार्येण पूर्वोत्तरपदयोर्वर्णस्यापहारेण तस्य विकलतापत्त्या तन्निमित्तकार्यस्याभावप्रसङ्गे प्राप्तेऽयं न्याय आरभ्यते । अत्र कार्ये पूर्वपदस्योत्तरपदस्य च हेतुत्वं वस्तुसत्त्वापेक्षयैव, न तु पूर्वं पदत्वोत्तरपदत्वरूपपुरस्कारेण, तथा सति 'परमायं' 'परमाहम्' इत्यादिरूपाणामसिद्धिप्रसङ्गात्, इहापि 'परम+इदम्+सि' 'परम्+अस्मद्+सि' इत्यवस्थायामेवान्तरङ्गत्वादेत्व दीर्घयोः प्राप्त्या तत्प्रवृत्तौ वृत्त्युक्तदिशा रूपासिद्धिः स्यादिति वस्तुत उत्तरपदस्येह कार्यित्वेन प्रकृतन्यायप्रवृत्त्योत्तरपदस्थानिकयोरयमहमादेशयोः प्रवृत्तिः सूपपदा भवति । अत्र हि इदमस्मच्छब्दयोर्वस्तुत उत्तरपदत्वेऽपि तेन रूपेण कार्यित्वं नास्ति, तयोः कार्ययोरुत्तरपदाधिकारस्थत्वाभावात्, सन्धिकार्यमपीहोभयस्थाननिष्पन्नमन्यतरस्थाननिष्पन्नं च साधारण्येन गृह्यते, तेन 'आग्नेन्द्र' इत्यादावुभयस्थाननिष्पन्नेऽपि सन्धिकार्ये यथा प्रवर्त्तते तथा रात्रिमह इत्यादाविकारमात्रस्थानिकयत्वादेशेऽपि प्रकृतन्यायप्रवृत्त्या मागमरूपं पूर्वपदकार्यमेव प्रथमं प्रवर्त्तते । अत्र च न्याये प्राचीनैरंशद्वयं परिकल्प्य ज्ञापकद्वयमुपन्यस्तम्, तदनुसारमेव च वृत्तौ व्याख्यातोऽयं न्यायः ।

सुविचारणे तु न्यायस्यांशद्वयस्य कथञ्चित् स्वीकर्तुं शक्यत्वेऽपि नात्र ज्ञापकद्वयस्य सत्ताऽवसीयते, पूर्वांशज्ञापकस्य "य्वः पदान्तात् प्रागैदौत्" [ ७. ४. ५. ] इति सूत्रे 'तत्प्राप्तौ' इत्यनुवर्तनस्य ज्ञापकत्वायोगात्, येन विना यदनुपपन्नं यस्मिंश्च सति यदुपपद्येत तेनैव तज्ज्ञाप्यमिति स्थितिः, तत्प्राप्तावित्यस्यैकारोकारयोर्वृद्धिप्राप्तावित्यर्थो वर्ण्यते, तत्रेकारोकारयोर्वृद्धिप्राप्तिर्हि सति सम्भावनाविषया, यद्यत्र यत्व-वत्वे न स्यातां तर्हि तत्स्थानिनोरिकारोकारयोर्वृद्धिरेव स्यादिति तात्पर्यात्। तथा च तत्प्राप्ताविति पदमिकारोकारयोरुपलक्षणतया स्वरूपपरिचायकं, न तु विशेषणतया व्यावर्तकम्। तथा च वृद्धिप्राप्तिकालपर्यन्तं तयोरिकारोकारयोः स्थितिर्नावश्यकीति सन्धिकार्ये यत्वादौ कृतेऽपि तत्प्राप्तिपदस्य परिचायकत्वानपनोदेन तेनैतन्न्यायज्ञापनासंभवात्। किञ्च परिनिष्ठितं हि पदं पदान्तरमाकाङ्क्षतीति व्युत्पत्त्या यावद् व्याकरणशब्देन सर्वथा निष्पद्येत तावत् तस्य नामत्वमपि न स्यात्, नामसंज्ञायां च द्वितीयोत्पत्त्या 'व्याकरणमधीते' इत्यादि विग्रहः साध्यः स्यात्, एवं च संहितायाः सत्त्वे तावत्कालं सन्ध्यभावेन स्थातुमशक्यम्, ततश्चानेन न्यायेन तत्रत्यं सन्धिकार्यं वृद्धिप्राप्तिकालपर्यन्तं वारयितुं न शक्यते। किञ्चेयमादिवृद्धिर्न पूर्वपदकार्यं न वोत्तरपदकार्यम्, अपि तु समुदायस्येति वृत्तावेवावेदितम्। इत्थं चात्र न्यायं विनापि निर्वाहे न्यायेन चेकारस्य वृद्धिप्राप्तिसाधनासंभवाच्च नानेन 'तत्प्राप्तौ' इत्यनुवर्तनेनैतन्न्यायज्ञापनमुचितम्। "आतो नेन्द्रवरुणस्य" [ ७. ४. २९. ] इति सूत्रे बृहद्वृत्तौ चास्यैव सूत्रस्य संपूर्णन्यायज्ञापकता प्रदर्शिता, तथा हि–तत्रत्यो ग्रन्थः–"ननु चेन्द्रशब्दस्य द्वौ स्वरौ, तत्राद्यः सन्धिकार्येण ह्रियतेऽपरः "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इत्यतोऽस्वर एवेन्द्रशब्दः, तस्य किं वृद्धिप्रतिषेधेन? सत्यम्–किन्त्वनेनैतज्ज्ञाप्यते *बहिरङ्गमपि पूर्वं पूर्वोत्तरपदयोः कार्यं भवति, पश्चात् सन्धिकार्यम्*, तेन 'पूर्वैषुकामशम' इत्यादि सिद्धं भवति" इति। न चोत्तरपदस्य वृद्धिनिषेधकेनानेन [ "आतो नेन्द्रवरुणस्य" इति सूत्रेण ] कथं पूर्वपदोत्तरपदोभयविषयकं ज्ञापनं कर्तुं शक्यत इति शङ्कनीयम्, *असति बाधके प्रमाणानां सामान्ये पक्षपातः* इति न्यायेन सामान्यतः [ समुदायावयवत्वसामान्येन ] एकदेशानुमत्या वा संपूर्णन्यायस्य ज्ञापनसंभवात्। लघुन्यासकारेण च 'वैयाकरणः' इत्यादावस्य न्यायस्याप्रवृत्तिरपि प्रतिपादिता, सा च "य्वः पदान्ताद्०" [ ७. ४. ५. ] इति सूत्रस्थतत्प्राप्तावित्यनुवर्तनस्य ज्ञापकत्वे कथं संगच्छेत, तथा हि–'वैयाकरणः' इत्यादिप्रयोगानुदाहृत्य "परत्वान्नित्यत्वाच्च वृद्धेः प्रागेव सर्वत्रानेनैदौतौ" इति बृहद्वृत्तिग्रन्थव्याख्यानावसरे तेनोक्तम्–"एतच्च "आतो नेन्द्रवरुणस्य" [ ७. ४. २९. ] इत्यत्र यत् 'पूर्वं सन्धिकार्यं न भवति' इति ज्ञापितं तस्यानाश्रयणेन ज्ञापकज्ञापितत्वात्, तस्य ज्ञापकस्य समाश्रयणे वा पूर्वं यत्व-वत्वाभावे ऐदौतः प्राप्तेरभावात् पूर्वमिवर्णोवर्णयोर्वृद्धौ तत आयावादेशे च य्वः प्रागैदौदिति आत एवैत्त्वौत्त्वे तान्येव रूपाणि अतः पूर्वं वृद्धिरेव स्यात्, न यत्व-वत्वे इत्याग्रहो न कार्यः" इति। अस्यायमाशयः–अत्र न्याये "आतो नेन्द्रवरुणस्य" [ ७. ४. २९. ] इति सूत्रमेव ज्ञापकम्। इह च [वैयाकरण इत्यादौ] न तन्न्यायस्य प्रवृत्तिः, ज्ञापकज्ञापितत्वात्। यदि च तत्प्रवृत्तिरिह स्यात् तर्हि यत्व-वत्वे पूर्वं न प्रवर्त्तेतामिति य्वः पदान्तस्याभावेन ततः प्रागैदौतौ कथं प्रवर्त्तेयाताम्, न्यायप्रवृत्तौ च यत्व-वत्वाभ्यां पूर्वं वृद्धौ कृतायामायावादेशयोः सतोराकारस्य य्वाभ्यां पूर्वस्य स्थाने ऐतौतोः करणेन रूपसिद्धौ तत्प्राप्तौ सत्यामित्युक्तेरानर्थक्यमेवेति। वस्तुतस्तु–इह न्यायस्य प्रवृत्तिचर्चाऽपि नोचिता, वस्तुतः पूर्वपदस्य उत्तरपदस्य वा कार्यित्वविरहादित्यावेदितं पूर्वमपि। अत्र न्यायप्रवृत्तौ पूर्वमिकारोकारयोर्वृद्धावायावादेशे यकार-वकाराभ्यां पूर्वस्याकारस्यैदौदादेशे रूपसिद्धिरिति यदुक्तं न्यासकृता तत्तु न युक्तमित्युत्पश्यामः, यतस्तथा सति य्वाभ्यां प्राच ऐदौदादेशावित्यर्थः कल्पनीयः स्यात्, स च प्रकृतसूत्राक्षरविरुद्धः, तथा च प्रकृतन्यायप्रवृत्ताविह 'वैयाकरणः' इति रूपासिद्धिरेव स्यादिति प्रतिभाति। यदि च "इकारोकारस्थानीयाभ्यां य्वाभ्यां प्राग् यथासंख्यमैदौतौ" इति वृत्त्युक्तया वृद्धिप्राप्ताविति पदं तत्स्वरूपपरिचायकमात्रं, न तु वस्तुतो वृद्धिप्रवृत्तिरिहाभिलषिता, तथा सति इकारस्थानीयस्य यस्य लाभाभावादायादेशयकारो न साक्षादिकारस्थानीयोऽपि तु परम्परयैवेति न्यायप्रवृत्तावपि नात्र पूर्वं वृद्धिः 'तत्प्राप्तौ सत्याम्' इति पदेन तत्प्रवृत्त्यभावस्य स्वरसतो लाभात्। एवं चैतन्न्यायाभावेऽन्तरङ्गत्वाद् यत्व-वत्वयोः प्रवृत्तौ कदापीकारोकारयोर्वृद्धेरप्राप्त्या तत्प्राप्तौ सत्यामिति पदस्योपलक्षणतयाऽपि परिचायकत्वमसंभवमेवेति तत्प्राप्तौ सत्यामित्यर्थाश्रयणादयं न्यायांशो ज्ञाप्यत एवेत्युच्यते तदापि न निर्वाहः, न्यायेन यत्व-वत्वयोर्निरोधापत्तेः सूत्रस्यास्य प्रवृत्त्यसंभवात्। यदि च सूत्रारम्भसामर्थ्याद् यत्व-वत्वयोः प्रवृत्तिरित्युच्यते तदापि न्यायस्यानुपयोग एव। न च 'तत्प्राप्तौ सत्याम्' इति पदस्य सार्थक्यमिति वाच्यम्, तस्येह फलाभावेनानुवृत्तेरेव त्यक्तुं शक्यत्वात्। यदि च यकार-वकाराभ्यां परस्य स्वरेष्वादिभूतस्य स्वरस्य प्राप्तवृद्धिबाधनार्थं तत्प्राप्तौ सत्यामिति पदमावश्यकमित्युच्यते तदा तदर्थमेव तस्य सार्थक्येन ज्ञापकत्वाऽसम्भवात्, यदीह यकार-वकारौ न स्यातां तर्हि तत्स्थानिनोरिकारोकारयोरेव वृद्धिः स्यादिति सम्भावनामात्रेण वा 'तत्प्राप्तौ सत्याम्' इत्यस्य चारितार्थ्यात्। तस्मादिह पूर्वपदमुद्दिश्य कार्यस्य कस्यचनाभावेन वा, सन्ध्यभावे परिनिष्ठितत्वाभावेन व्याकरणादिपदानां पदान्तरेण सम्बन्धस्या-

नुपपद्यमानत्वेन पूर्वं सन्धिप्रवृत्तेरावश्यकतया वा "य्वः पदान्तात्०" [ ७. ४. ५. ] इति सूत्रविषये प्रकृतन्यायस्यानुपयोग एवेति नात्रत्येन 'तत्प्राप्तौ' इत्यनुवृत्तेन पदेनैतन्न्यायांशज्ञापनं युक्तमिति पर्यवस्यति ॥ अथ 'आतो नेन्द्रवरुणस्य' [ ७. ४. २९. ] इत्युत्तरपदवृद्धिप्रतिषेधस्य ज्ञापकत्वं विचार्यते– आग्नेन्द्रं सूक्तमित्यत्र "देवतानामात्वादौ" [ ७. ४. २८. ] इत्युभयपदवृद्धौ प्राप्तायामुत्तरपदस्यानेन वृद्धिर्निषिध्यते, तत्र अग्निश्चेन्द्रश्च देवते यस्येत्यर्थे पूर्वमग्निशब्देन्द्रशब्दयोर्द्वन्द्वे कृते 'अग्नि+इन्द्र+अण्' इति स्थितौ वृद्धेरपेक्षयाऽन्तरङ्गत्वात् समानदीर्घे तत आत्वस्याप्यप्राप्त्या आत्वविषयाभावेन 'न्द्र' इत्यस्याखरत्वेन च वृद्धेरप्राप्तिः, यदि चैकवर्णाश्रयत्वाद् बहिरङ्गत्वाभावेनात्वमेव परत्वात् प्रवर्त्तते ततः सन्धिकार्यमित्युच्यते तदापि 'अग्नेन्द्र' इत्यवस्थायामुत्तरपदस्य 'न्द्र'रूपत्वेन वृद्धेरप्राप्तेः, आद्यस्वरस्य वृद्धौ रूपसिद्धिसत्त्वेन इन्द्ररूपस्योत्तरपदस्य वृद्धिप्रतिषेधो व्यर्थ एव, स चेमं न्यायं ज्ञापयति, ज्ञापिते च पूर्वमुभयपदस्य वृद्धिरेव स्यादिति तद्वारणायोत्तरपदवृद्धिनिषेधश्चरितार्थ इति स्थितिः । 'आग्नेन्द्रः' इत्यादिप्रयोगाश्च तस्य स्वांशे फलोदाहरणभूताः, न्यायस्य फलं तु बृहद्वृत्तौ 'पूर्वैपुकामशमः' इत्युक्तम् । अत्रापि हि पूर्वं सन्धिकार्ये प्रवृत्ते *उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाग्* इति न्यायेन 'एपुकामशमी'-शब्दे उत्तरपदत्वातिदेशेऽपि पूर्वशब्दस्य वैकल्येन दिग्वाचकत्वं न स्यादिति दिगर्थवाचकात् परत्वं न स्यात्, यदि च पूर्वशब्दस्यैव तेन न्यायेन व्यपदेश इत्याश्रीयते तदोत्तरपदमेव विकलं भवेत्, उभयव्यपदेशश्चानेन न्यायेन कर्तुमशक्यः, यदि च *एकदेशविकृत*न्यायेन 'पुकामशमी'शब्दे एव उत्तरपदत्वं प्राग्ग्रामवाचित्वं चाश्रीयते तद 'पु'शब्दोकारस्यैव वृद्धिः स्यादित्यनिष्टं प्रसज्येतेति न्यायोपयोगः ॥ पाणिनीये तन्त्रेऽपि "आतो नेन्द्रवरुणस्य" [ ७.४.२९. ] इत्येतत्सूत्रस्थानीयेन "नेन्द्रस्य परस्य" [ पा० सू० ७.३.२२. ] इति सूत्रेणैवायं न्यायो ज्ञापितो महाभाष्ये, तथा हि–"अन्तादिवच्च" [ पा० सू० ६. १. ८५. ] इति सूत्रे महाभाष्ये–"उत्तरपदवृद्धिश्चैकादेशात्" [ वार्त्तिकम् ], उत्तरपदवृद्धिश्चैकादेशाद् भवति विप्रतिषेधेन । उत्तरपदवृद्धेरवकाशः– पूर्वत्रैगर्त्तकः, अपरत्रैगर्त्तकः, एकादेशस्यावकाशः–दण्डाग्रम्, क्षुपाग्रम्; इहो भयं प्राप्नोति–पूर्वैपुकामशमः, अपरैपुकामशमः, उत्तरपदवृद्धिर्भवति विप्रतिषेधेन" इति वृद्धेः परत्वाद् बलवत्त्वं प्रदर्श्य शङ्कते–"एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात्" [ वार्त्तिकम् ], एकादेशस्तु प्राप्नोति, किं कारणम् ? अन्तरङ्गबलीयस्त्वात्– अन्तरङ्गं बलीयो भवति, तत्र को दोषः ? "तत्र वृद्धिविधानम्" [ वार्त्तिकम् ], तत्र वृद्धिर्विधेया, नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति–'पूर्वोत्तरपदयोस्तावत् कार्यं भवति, नैकादेशः, इति । यदयं "नेन्द्रस्य परस्य" [ पा० सू० ७. ३. २२. ] इति वृद्धिप्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? "इन्द्रे द्वावचौ, तत्रैकः "यस्य" [ पा० सू० ६. ४. १४८. ] इति लोपेन ह्रियते, अपर एकादेशेन, अनच्क इन्द्रशब्दः सम्पन्नः, तत्र को वृद्धेः प्रसङ्गः ?, पश्यति त्वाचार्यः–पूर्वोत्तरपदयोस्तावत् कार्यं भवति नैकादेश इति, ततो "नेन्द्रस्य परस्य" [ पा० सू० ७. ३. २२. ] इति वृद्धिप्रतिषेधं शास्ति ॥ इति स्पष्टाशयं भाष्यम् । एतद्भाष्यैकवाक्यतया क्षमतेऽपि "आतो नेन्द्रवरुणस्य" [ ७. ४. २९. ] इति सूत्रमेव पूर्णस्यास्य न्यायस्यैकदेशानुमत्या ज्ञापकमित्यादर्तव्यमिति ॥ २६ ॥

## *संज्ञा न संज्ञान्तरबाधिका* ॥ २७ ॥

सि०—बाध्य-बाधकभावस्यासमावेशमूलकत्वाद् यत्र द्वयोः [ बाध्यत्वेन बाधकत्वेन चाभिमतयोः ] समावेशः सम्भवति तत्र बाध्य-बाधकभावो न भवतीति स्थितिः, तत्र संज्ञानामेकस्मिन्नपि बह्वीनां समावेशः शक्यत एवेति न्याय[ औचित्य ]सिद्धमेवार्थमनेन न्यायेनाह–संज्ञा न संज्ञान्तरबाधिकेति– संज्ञा–सम्यग्ज्ञायतेऽर्थोऽनया सा, संज्ञान्तरस्य–अन्यस्याः संज्ञायाः, बाधिका–प्रवृत्तिविघातिका, न भवतीति शेषः । पूर्वरीत्यौचित्यसिद्धोऽप्ययमर्थः शास्त्रकारवचनैरप्यनुमातुं शक्यते, तथा हि-प्रादीनां शब्दानां "धातोः पूजार्थ०" [ ३. १. १. ] इत्युपसर्गसंज्ञाविधायकसूत्रमेवात्रार्थे ज्ञापकम्, यदि हि "ऊर्याद्यनुकरण०" [३.१.२.] इत्यव्यवहितोत्तरसूत्रविधीयमानया गतिसंज्ञयोपसर्गसंज्ञायाः परत्वाद् बाधः स्यात् तर्हि बाधस्य नैयत्येन पूर्वसूत्रेणोपसर्गसंज्ञावचनमनर्थकमेव स्यात्, तथा चोपसर्गसंज्ञां सूत्रेण बोधयन् सूत्रकारः संज्ञानां परस्परं बाध्यबाधकभावाभावं सूचयत्येवेति 'प्रस्थः' इत्यादौ 'प्र'शब्दस्य गत्युपसर्गसंज्ञयोः सत्योः "गति-क्वन्यः०" [३. १. ४२. ] इति गतिसंज्ञानिमित्तस्तत्पुरुषसमासः, "उपसर्गादातो डोऽश्यः" [ ५. १. ५६. ] इत्युपसर्गसंज्ञानिमित्तस्ततः पराद् धातोर्डप्रत्ययश्च युगपद्भूताम् । अस्य च न्यायस्यौचित्यमूलकत्वाद् यत्र संज्ञा-फलयोः समावेशासंभवस्तत्र तयोर्युगपद् विधातुमशक्यतया बाध्यमानकार्यप्रयोजिका संज्ञाऽपि न प्रवर्त्तते निष्फलत्वात् संज्ञायाश्च फलवत्त्वौचित्यात्, अत एव "स्पृहेर्व्याप्यं वा" [ २. २. २६. ] इति सूत्रे वाग्रहणं चरितार्थम्, अन्यथाऽस्य न्यायस्य प्रवृत्त्या कर्मसंज्ञा-सम्प्रदानसंज्ञयोर्बाध्यबाधकभावाभावादुभयोरपि तयोः प्रवृत्तेर्विकल्पेन संज्ञाविधानाभावेऽपि विभक्तिद्वयोत्पत्त्या चैत्रं चैत्राय वा स्पृहयतीति रूपद्वयं सिध्यत्येवेति विकल्पस्य वैयर्थ्यं स्यादेव; एवं च सिद्धेऽपि द्वैरूप्ये क्रियमाणो विकल्पो यत्र संज्ञानिमित्तकार्य-

योर्विरोधस्तत्र संज्ञास्वपि बाध्यबाधकभाव इति सूचयति॥ *प्रतिकार्यं संज्ञा भिद्यन्ते* एषोऽपि न्यायाकारः प्राचीनैर्व्याख्यायात्रैव न्याये समावेशितः। इत्थं हि तेषां व्याख्यानम्–"अस्य चेत्थमवतारः–"करणं च" [२. २. १९.] इति सूत्रेण दिवः करणस्य युगपत् कर्म-करणसंज्ञयोर्विधानाद् 'अक्षानक्षैर्वा दीव्यति' इति द्वैरूप्यं सिद्धम्। तथा 'अक्षैर्देवयते मैत्रश्चैत्रेण' इत्यत्राक्षशब्दस्य करणत्वात् तृतीया भवति, कर्मत्वाच्च "गतिबोधाहारार्थ०" [२. २. ५.] इति सूत्रेण प्राप्तं नित्याकर्मकलक्षणमणिक्कर्तुः कर्मत्वं न स्यात्; तथाऽक्षशब्दस्य कर्मत्वादेव देवयतेः "अणिगि प्राणिकर्तृकानाप्याण्णिगः" [३. ३. १०७.] इत्यनेन प्राप्तमकर्मकलक्षणं परस्मैपदं न स्यात्। अत्राह परः–नन्वक्षैर्देवयते मैत्रश्चैत्रेणेत्यादौ संज्ञाद्वययौगपद्यं चरितार्थम्, ततोऽक्षानक्षैर्वा दीव्यतीत्यादौ सत्यपि संज्ञाद्वये परत्वात् करणत्वहेतुका तृतीयैव भवितुमर्हति न द्वितीया। [इति]। अत्रोत्तरम्–सत्यमेतत्, परं *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्यायो यदा प्रयुज्यते तदा द्वितीयाऽपि स्यादेव। तथा हि–अस्य न्यायस्यार्थस्तावदयम्–कार्यं कार्यं प्रति संज्ञाभिधायकानि सूत्राणि भिद्यन्ते। अयं भावः–यद्यपि "करणं च" [२. २. १९.] इति सूत्रे युगपत् संज्ञाद्वयमस्ति, परमक्षानक्षैर्वा दीव्यतीति प्रयोगद्वयं यद् दृश्यते तत्सिद्ध्यर्थं *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्यायेन "करणं च" [२. २. १९.] इति सूत्रमावृत्त्या द्विधा व्याख्यायते, यथा–दिवः करणं कर्म स्यादिति, तथा–दिवः करणं करणं स्यादिति, इयानेव चार्थश्चकारेण सूच्यते, अव्ययानामनेकार्थत्वात्। तत्राद्यव्याख्याने इदं सूत्रं कर्मसंज्ञाया एव विधायकं, न तु करणसंज्ञाया इति कल्प्यते। एवं च सिद्धं निर्बाधमक्षान् दीव्यतीति। यतः स्पर्धे सति परत्वं चिन्त्यते, आद्यव्याख्यानपक्षे च करणसंज्ञाया विधानस्याप्यभावेन तृतीयाप्राप्तेरप्यभावात् केन सह स्पर्द्धं इति। द्वितीयव्याख्या तु अक्षैर्दीव्यतीति प्रयोगस्य तवाप्यभिमतत्वेन निर्विवादैव। एतच्चैवं व्याख्याद्वयमक्षानक्षैर्वा दीव्यतीति प्रयोगद्वयसिद्ध्यर्थमेव कृतम्। ननु क्रियतां व्याख्याद्वयमारोप्यतां च तद्बलादेकस्यापि सूत्रस्य सूत्रद्वयरूपत्वं, परं तस्मिन्नेव सूत्रद्वये विहितयोः कर्म-करणसंज्ञयोर्यः स्पर्द्धः स कथं निवर्तते? तदनिवृत्तौ च पूर्वेण "करणं च" [२. २. १९.] इति सूत्रेण विहितायाः कर्मसंज्ञाया यो बाधः स केन वार्यते? [इति चेत्?] उच्यते–यदा "करणं च" [२. २. १९.] इत्यस्य सूत्रद्वयरूपत्वमारोपितं नासीत् तदा स्पर्द्धं आसीत्, यदा तु तस्य सूत्रद्वयत्वमारोपितं तदाऽनयोः संज्ञयोः स्वस्वसूत्रनिष्ठत्वात् स्पर्द्धो निवर्त्तते, एकस्यापि गृहस्यान्तरा भित्तिप्रक्षेपादिना गृहद्वयरूपकरणे तन्निवासिसपत्न्योरिव, अन्यथा हि सूत्रद्वयारोपयत्नस्य व्यर्थतैवापद्यते, एवं च निवृत्ते स्पर्द्धे कः कस्य बाधां कुर्यादिति। तत्रेदं तत्त्वम्–"करणं च" [२. २. १९.] इति सूत्रेण संज्ञाद्वयविधानमक्षैर्देवयते मैत्रश्चैत्रेणेत्यादौ चरितार्थम्, तेनाक्षानक्षैर्वा देवयतीत्यादावुक्तयुक्त्या तृतीयैव प्राप्नोति, प्रयोगश्च द्वितीयाया अपि दृश्यते, अतस्तत्समर्थनार्थं *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्यायबलं गृहीत्वैकस्यापि "करणं च" [२. २. १९.] इति सूत्रस्य भिन्नभिन्नव्याख्याभ्यां सूत्रद्वयरूपत्वमारोप्य तत्प्रथमसूत्रेण द्वितीयाऽप्यत्रानीयते इति। परमनेनापि *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्यायेन पूर्वोक्तयुक्त्या "करणं च" [२. २. १९.] इति सूत्रस्य भिन्न-भिन्नव्याख्याभ्यां सूत्रद्वयरूपत्वारोपणसामर्थ्यादुभयोरपि संज्ञयोः स्पर्द्धस्याभावोद्भावेन कर्मसंज्ञायाः करणसंज्ञया अबाधनं व्यवस्थापयता *संज्ञा न संज्ञान्तरबाधिका* इति न्यायस्यैवार्थो भङ्ग्यन्तरेण समर्थित इति नासौ पृथग् दर्शितः॥" इति। अत्रेदं विचारणीयम्–*प्रतिकार्यं संज्ञा भिद्यन्ते* इत्यस्य 'प्रतिकार्यं संज्ञाविधायकानि शास्त्राणि भिद्यन्ते' इत्यर्थस्य न्यासग्रन्थसम्मतत्वेऽपि यत् संज्ञासूत्रावृत्तिकरणेन संज्ञयोर्बाध्य-बाधकभावरूपविरोधनिवृत्तिरिति कल्पयित्वेदं सर्वं व्याख्यानं निबद्धं प्राचीनैस्तन्न मनोरमं, संज्ञयोर्बाध्य-बाधकभावस्य मूलं हि विरुद्धविभक्तिद्वयहेतुत्वमेव, न तत् सूत्रावृत्तिकरणमात्रेण निवर्त्तते, विरोधहेतुनिवृत्त्यभावे च विरोधनिवृत्तिः सूत्रावृत्तिकरणसामर्थ्येन कल्प्यमाना न्यायपथं नावतरति। याऽपि एकस्मिन्नपि गृहे भित्तिव्यवधानेन गृहद्वयकरणे सपत्न्योर्विरोधनिवृत्तिरिह दृष्टान्तत्वेनोपात्ता, साऽपि न युक्ता–सपत्न्योर्हि विरोधो नैकगृहत्वनिबन्धनोऽपि तु समानपतिकात्वनिबन्धन एव, नहि तस्य हेतोर्गृहविभागेन निवृत्तिरिति कथं तद्विरोधो गृहविभागेन निवर्त्तेत। तथा च न्यासोक्तसंज्ञासूत्रभेदस्यायमाशयो यत्–यावन्ति संज्ञानिमित्तानि कार्याणि सम्भाव्यन्ते तावन्त्येव संज्ञाविधायकानि सूत्राणि कल्प्यन्ते 'प्रतिलक्ष्यं लक्षणोपप्लवः' इति महाभाष्यादिसिद्धान्तानुसारम्। तथा च–द्वितीयोत्पत्तिसम्पादककर्मसंज्ञाविधायकं "करणं च" [२. २. १९.] इति सूत्रं पृथगेव, अकर्मकत्वप्रयुक्तस्याणिक्कर्तुः कर्मत्वस्य, "अणिगि प्राणिकर्तृकानाप्याण्णिगः" [३. ३. १०७.] इति परस्मैपदस्य च निवर्त्तिके कर्मसंज्ञे च पृथगेवेति तदर्थं कर्मसंज्ञाविधानाय "करणं च" [२. २. १९.] इति सूत्रमपि पृथगेव, ततश्च अक्षैर्देवयते यज्ञदत्तेनेत्यत्राणिक्कर्तुः कर्मत्वाभावेन परस्मैपदाभावेन च द्वितीयोत्पत्तिप्रयोजककर्मसंज्ञायाश्चारितार्थ्याभावेन तस्याः कर्मसंज्ञाया अनवकाशत्वेन तन्निमित्ता द्वितीयाऽप्यवश्यमेवोत्पत्स्यत इत्यक्षान्

देवयतीति प्रयोगोऽपि भविष्यत्येवेति कर्मसंज्ञायाः सावकाशत्वेन द्वितीयैव भवितुमर्हतीति शङ्का निरवकाशेति । ततश्च *संज्ञा न संज्ञान्तरबाधिका* इति न्यायस्य *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्यायेन सह फलैक्येऽपि अर्थात् उभयोर्भेद एव । यथा चायमेवाशयः *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्यायस्य तथा बृहद्वृत्त्यादिग्रन्थसम्मत्या स्फुटीकरिष्यते विवरणे ॥ २७ ॥

## *संज्ञा न संज्ञान्तरबाधिका* ॥ २७ ॥

त०—लोके शास्त्रे च संज्ञानां समावेशः—सहावस्थानमविरोध इति यावत्, दृश्यते । तथा हि–लोके तावदेकस्यैव घटस्य कलशः कुम्भ इत्यादयः संज्ञाः श्रूयन्ते, शास्त्रेऽपि तावदत्रैव व्याकरणे एकस्यैव प्रत्ययस्य प्रत्यय-कृत्-कृत्यादिसंज्ञा भवन्ति, न च तासां विरोधो भवति । युगपदसम्भवे हि विरोधः, यथा—'सर्वे ब्राह्मणा भोज्यन्तां माठर-कौण्डिन्यौ परिवेविषाताम्' इत्यादौ भोजन-परिवेषणयोर्विरोधो युगपदसंभवात्; यथा वा 'सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यादौ दधिदान-तक्रदानयोर्विरोधः फलैक्यात्, तयोर्हि फलमेकमोदनसेकरूपमित्येकेन दध्नौदने सिक्ते तक्रस्योपयोगाभावात् तक्रदानेन विशिष्य विधीयमानेन दधिदानं सामान्यविहितं बाध्यते । इह च भिन्नानां संज्ञानां फलानि अविरुद्धानि भिन्नानीति भिन्नाविरुद्धफलत्वाद् विरोधाभाव इति लोकसिद्धमेव संज्ञानां विरोधाभावमयं न्यायः सूचयति । एकस्यैव प्रादेर्गत्युपसर्गसंज्ञाद्वयविधानमपि प्रकृतन्यायलभ्यार्थानुमोदकमेव न ज्ञापकम्, यत् तु ज्ञापकतयोपन्यस्तं वृत्तौ तद् दार्ढ्योपादनमात्रम् । अयं च न्यायो भिन्नाविरोधिफलत्वमूलकविरोधाभावमूलक इति यत्र फले विरोधस्तत्र च व्यवस्थार्थमन्यैर्वचनमारभ्यते, क्षमते च ज्ञापकवशान्न्यायस्यानित्यतामाश्रित्य कार्यं सञ्चाल्यते, तथा चानित्यत्वसूचकं वृत्तौ समुपन्यस्तं "स्पृहेर्व्याप्यं वा" [२.२.२६.] इति वाग्रहणम् । कैश्चिच्च स्पृहेर्व्याप्यस्य कर्म-संप्रदानोभयसंज्ञयोर्व्यवस्थार्थम् "स्पृहेरीप्सितस्य" [पा० सू० १.४.३६.] संप्रदानसंज्ञा, ईप्सिततमस्य च कर्मसंज्ञेति विभाग आश्रीयते, पठ्यते च बाध्यबाधकभावस्थले निर्णायकम् "आ कडारादेका संज्ञा" [पा० सू० १.४.१.] इति सूत्रम्, तत्र चानेन सूत्रेण स्थलविशेषे तासां बाध्यबाधकत्वे सूचिते परत्वादिभिर्बाधकहेतुभिर्निर्णयः, तथा चोक्तम्–'या पराऽनवकाशा च' इति ।

एतत्सूत्रप्रयोजनप्रतिपादनपरो महाभाष्यग्रन्थश्चेत्थम्–"किमर्थमिदमुच्यते? "अन्यत्र संज्ञानां समावेशान्नियमार्थं वचनम्" [वार्त्तिकम्], अन्यत्र संज्ञानां समावेशो भवति, क्वान्यत्र? लोके व्याकरणे च । लोके तावत्–'इन्द्रः, शक्रः, पुरुहूतः, पुरन्दरः', 'कन्दुः, कोष्ठः, कुसूलः' इत्येकस्य द्रव्यस्य बहवः संज्ञा भवन्ति, व्याकरणेऽपि कर्तव्यं हर्तव्यमित्यत्र प्रत्यय-कृत्-कृत्यसंज्ञानां समावेशो भवति । 'पाञ्चालः, वैदेहः, वैदर्भः' प्रत्यय-तद्धित-तद्राज[द्रि]संज्ञानां समावेशो भवति । अन्यत्र संज्ञासमावेशादेतस्मात् कारणात् आकडारादपि संज्ञानां समावेशः प्राप्नोति, इष्यते चैकैव संज्ञा स्यादिति, तच्चान्तरेण यत्नं न सिद्ध्यति, एवमर्थमिदमुच्यते" इति । अस्यायमाशयः–लोके शास्त्रे च संज्ञानां बाध्यबाधकभावाभावस्योक्तयुक्त्या दृष्टत्वात् सर्वत्र तथा प्राप्तौ विरुद्धफलकसंज्ञानां बाध्यबाधकभावाभावेऽभीष्टलक्ष्याणामसिद्ध्याऽव्यवस्थापत्तेस्तत्र व्यवस्थार्थमुच्यमानमिदं सूत्रं नियमार्थम्, इत ऊर्ध्वं "कडाराः कर्मधारये" [पा० सू० २.२.३८] इत्यतः प्राक् पठितानां संज्ञानां मध्ये एकस्यैकैव संज्ञा स्यादिति । अनेन नियमेन चान्यत्र तासां बाध्य-बाधकभावाभावोऽपि सूचितो भवत्येव । एतन्मध्ये च स्यादिविधिविषयाः कारकविषयाः समासविषया गुरुलघ्वादिसंज्ञाश्च पठ्यन्ते । तासां च परत्वानवकाशत्वादिना व्यवस्था समाश्रीयते । अथ *प्रतिकार्यं संज्ञा भिद्यन्ते* इति मतस्य विचारः प्रस्तूयते–अयमेतन्न्यायसमानार्थको न्याय इति प्राचां मतं वृत्तौ प्रदर्शितम्, इह च तन्न्यायचर्चा बृहद्वृत्त्यादिरीत्या क्रियते, तथा हि–"करणं च" [२.२.१९.] इति सूत्रे बृहद्वृत्तौ चकारफलं–"करणं वेत्येव सिद्धे चकारः संज्ञाद्वयसमावेशार्थः" इति रूपेण प्रदर्श्य लक्ष्ये तत्फलप्रदर्शनायोक्तम्–"तेनाक्षैर्देवयते मैत्रश्चैत्रेणेत्यत्र करणत्वात् तृतीया भवति, कर्मत्वाच्च गत्यादिसूत्रेण नित्याकर्मकलक्षणमणिक्कर्तुः कर्मत्वं [न भवति], देवयतेश्च "अणिगि प्राणि०" [३.३.१०७.] इत्यादिनाऽकर्मकत्वलक्षणं परस्मैपदं न भवति" इति, ततः शङ्कितम्–"अथाक्षान् दीव्यतीत्यत्र सत्यपि संज्ञाद्वयसमावेशे परत्वात् करणत्वनिमित्तया तृतीययैव भवितव्यम्? नैवम्–स्पर्धे हि परः, समानविषययोश्च स्पर्धः, न च द्वितीया-तृतीययोः प्रतिनियतकर्म-करणशक्त्यभिधायिन्योः समानविषयत्वमस्तीति द्वितीयाऽपि भवत्येव । *प्रतिकार्यं संज्ञा भिद्यते* इति वा दर्शनेऽनवकाशत्वात् संज्ञाद्वयस्य विभक्त्योः पर्यायेण प्रवृत्तिरविरुद्धा" इति । अत्र पूर्वस्मिन् पक्षे समानविषययोरेव विरोध इति भिन्नविषयाणां संज्ञानां विरोधाभावेन परया करणसंज्ञया पूर्वस्याः कर्मसंज्ञाया बाधाभाव इति समाधानं *संज्ञा न संज्ञान्तरबाधिका* इति न्यायार्थानुमोदकम् । द्वितीयस्मिन् पक्षे च सत्यपि विरोधेऽनवकाशायाः संज्ञायाः परया संज्ञया बाधाभावः समर्थितः, अनवकाशत्वं चेह द्वयोरेव, तत्र कर्मत्वनिमित्तकेऽणिक्कर्तुः कर्मत्वाभावे परस्मैपदाभावे च प्रस्तुतेऽनवकाशत्वं कथमिति शङ्कायां *प्रतिकार्यं संज्ञा भिद्यन्ते* इति मतान्तरेण समाधानम् । तथा च यावन्ति संज्ञानिमित्तकानि कार्याणि सम्भावितानि तावन्ति संज्ञासूत्राणि

कल्पनीयानि, तथा च द्वितीयोत्पत्तिरूपकार्यार्थं कल्पितस्य दिवः करणस्य कर्मसंज्ञाविधायकस्योपष्ठुतसूत्रस्य द्वितीयोत्पत्तिं विनाऽनवकाशत्वमक्षतमेवेति तदभिप्राय इति स्पष्टमेव प्रतिभाति । न्यासकृताऽपि प्रतिकार्यमिति प्रतीकमुपादाय "एकस्यापि कर्मणः करणस्य वा कार्यं कार्यं प्रतिसंज्ञाऽभिधायिकानि सूत्राणि भिद्यन्ते इत्यर्थः" इति स्फोरयतोक्त एवार्थः प्रतिपिपादयिषितो न तु प्राचां वृत्तिग्रन्थे गृहीतं करणं चेत्यस्य व्याख्याद्वयादिकम्; सूत्रभेदेन विरोधाभावादिकं च । यदि हि सूत्रभेदेन विरोधाभावः स्यात् तर्हि स्वत एव भिन्नानां सूत्राणां कदाऽपि विरोधो न स्यात् । गृहस्यान्तरा भित्तिप्रक्षेपादिना सपत्नीद्वयविरोधाभावदृष्टान्तश्चासिद्ध एवेति प्रतिपादितं वृत्तावपि । किञ्चोक्तरीत्या *संज्ञा न संज्ञान्तरबाधिका* *प्रतिकार्यं संज्ञा भिद्यन्ते* इति न्याययोः प्रकृतेऽभिमतफलसाधकत्वे समानेऽपि न प्रतिपाद्यार्थस्य सादृश्यम्, वृहद्वृत्तौ समानफलकसंज्ञाद्वयस्य बाध्यबाधकभावसत्त्वस्य प्रथमं प्रतिपादितत्वेन तस्यार्थस्यैव मतान्तरेण *प्रतिकार्यं०* इति न्यायेन समर्थनस्य स्पष्टत एव प्रकृतन्यायप्रतिकूलत्वात्। एवं प्राचां न्यायसंग्रहीयन्यासे वृत्युक्तव्याख्यानस्य न्यासानुसारित्वमित्यपि कथनं प्रत्युक्तमेव । किञ्च तत्र स्वमतानुसारिणी या व्याख्या प्रदर्शिता साऽपि न वृहद्वृत्तिग्रन्थाशयमनुगच्छति, तथा हि–तत्रत्यो ग्रन्थः–"सरलाध्वना तु अन्यापि व्याख्याऽस्ति, तथा हि–वृक्षं प्रति विद्योतते विद्युदित्यत्रवदत्र प्रतिशब्दो लक्षणार्थे, ततोऽयमर्थः— कार्यं लक्ष्यीकृत्य तावत् भिन्नभिन्नाः संज्ञाः क्रियन्ते । अयं भावः–एकस्यैवान्यान्यसंज्ञा यत् क्रियन्ते तत् तत्संज्ञाहेतुकान्यान्यकार्यकरणार्थमेव, यथा वारिशब्दे इकारस्य स्वरसंज्ञासद्भावाद् वारीणामित्यत्र "ह्रींदिर्हस्वस्या०" [ १. ३. ३१. ] इति द्वे रूपे नाभूताम्, तत्राहेस्वरस्येति वर्जनात्; ह्रस्वसंज्ञासद्भावाच्च "ह्रस्वापश्च" [ १. ४. ३२. ] इत्यनेनामो नाम्, समानसंज्ञासद्भावाच्च "दीर्घो नाम्यतिसृ०" [ १. ४. ४८. ] इत्यनेन दीर्घः, नामिसंज्ञासद्भावाच्च 'हे वारे ! हे वारि !' इत्यत्र "नामिनो लुग् वा" [ १. ४. ६१. ] इत्यनेनामध्ययस्य लुग्विकल्प इत्यादि । यदि तु अन्यान्यसंज्ञाहेतुकमन्यान्यकार्यं चिकीर्षितं न सिध्येत् तर्हि किमर्थमन्यान्यसंज्ञाः क्रियन्ते ?, ततोऽत्राप्यक्षान् दीव्यतीत्यत्र द्वितीयान्तप्रयोगो यदि न स्यादेव, किन्तु स्पर्धे परत्वात् तृतीयान्तप्रयोग एव यदि स्यात् तदा "करणं च" [ २. २. १९. ] इति सूत्रेण दिवः करणस्य सर्वत्र कर्म-करणसंज्ञाद्वयं किमर्थमाचार्यः कुर्यात् ?, अतः सार्वत्रिकस्य कर्म-करणसंज्ञाद्वयस्य विधानादेवं ज्ञायते–करणसंज्ञाहेतुकतृतीयावदेकवारं कर्मसंज्ञाहेतुकाऽक्षान् दीव्यतीति द्वितीयाऽपि स्यादेव, न तु स्पर्धे परत्वहेतुकस्तृतीयया बाध एव स्यात्, कर्मसंज्ञाविधानस्य द्वितीयाभवनस्यैव मुख्यप्रयोजनत्वात्"

इति । अत्रेदमुच्यते–*प्रतिकार्यं संज्ञा भिद्यन्ते* इत्यस्य 'कार्यमुद्दिश्य संज्ञाभेद' इत्यर्थं इति कथनेन 'भिन्नानि कार्याण्युद्दिश्य स्वरूपतो भिन्नाः संज्ञाः क्रियन्ते' इत्यर्थं एव भवतामभिप्रेतः, स चाकथितोऽपि प्रतीयत एव संज्ञानां कार्यार्थत्वात्, न तावता पूर्वपक्षिणा शङ्कितस्य कर्मत्वस्य चारितार्थ्येन तृतीयया तद्बाधस्य समाधानमायाति, ततश्च तत्समाधानार्थमुपात्तस्यास्य न्यायस्य वैयर्थ्यमेव स्यात्, किञ्च कर्मत्वस्य मुख्यं प्रयोजनं द्वितीयाविधानमेवेति तदेवोद्दिश्य कर्मत्वं विहितमित्यपि कथनं निर्मूलमेव, कर्मत्वनिमित्तकेषु कार्येषु गौणमुख्यतानिर्णायकप्रमाणाभावात्, ततश्च यावन्ति तत्संज्ञाकार्याणि तावन्ति संज्ञाभिधायकवचनानीत्येकस्या अपि संज्ञाया भिन्नभिन्नकार्यार्थत्वेन भिन्नभिन्नतया विधानमित्येवार्थः श्रेयानित्यलमनया प्रसक्तानुप्रसक्तया । तदयमत्र निष्कर्षः–*संज्ञा न संज्ञान्तरबाधिका* इति न्यायस्य संज्ञानां स्वभावतो बाध्य-बाधकत्वाभावमात्रे तात्पर्यम् । कार्यद्वारा विरोधे तु बाध्य-बाधकभावो भवत्येव, तदेव च *प्रतिकार्यं संज्ञाभिद्यन्ते* इति न्यायेन मतेन वा समर्थ्यते । ध्वनितश्चायमर्थो महाभाष्ये "आकडारादेका संज्ञा" [ पा० सू० १. ४. १. ] इति सूत्रे पूर्वप्रदर्शिता-ऽग्रेप्रदर्श्यमानभाष्याभ्यां कैयटादिभिश्चायमर्थः स्फुटीकृतः । तत्रैव सूत्रे 'आकडारात्'–"कडाराः कर्मधारये" [ पा० सू० २. २. ३८. ] इत्यतः प्रागेकस्यैकैव संज्ञेति नियमपक्षः, एतदन्तरे संज्ञाविषये परं कार्यं भवतीति परकार्यविधिपक्षो वेति विचारप्रसङ्गे एका संज्ञेति पक्षे "दिवः कर्म च" [ पा० सू० १. ४. ४३. ] इति दिवः करणस्य कर्मसंज्ञाविधायकसूत्रे 'चकारः' समावेशार्थं कर्तव्यो भवतीति दोषप्रतिपादनायेत्थमुक्तम्–"साधकतमं करणम्" [ पा० सू० १. ४. ४२. ] "दिवः कर्म च" [ पा० सू० १. ४. ४३. ] इति चकारः कर्तव्यः । अक्रियमाणे हि चकारेऽनवकाशा कर्मसंज्ञा करणसंज्ञां बाधेत । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः, यस्य पुनः परं कार्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्धः । कथम् ? पूर्वा तस्य कर्मसंज्ञा, परा करणसंज्ञा । कथम् ? एवं स वक्ष्यति–"दिवः साधकतमं कर्म" ततः "करणम्" करणसंज्ञं च भवति साधकतमम्; दिव इति निवृत्तम् । तत्रारम्भसामर्थ्यात् कर्मसंज्ञा, परत्वाच्च करणसंज्ञा" इति । अस्य भाष्यस्याशयः कैयटेनेत्थं स्फोरितः–"अक्षैर्देवयते देवदत्तो यज्ञदत्तेनेत्यत्रोभयोः कर्म-करणसंज्ञयोः समावेश इष्ट इति तदर्थं चकारः सूत्रे पठनीयः । + + + + यद्येवमक्षान् दीव्यतीति द्वितीयाप्रयोगो न स्यात्, तृतीयया परत्वाद् बाधितत्वात्, विभक्तिद्वयं चेष्यते । कर्मसंज्ञा च सावकाशाऽकर्मकव्यपदेशव्यावृत्यर्थत्वात्, करणसंज्ञाऽपि 'देवना अक्षाः' इति ल्युडर्था [ अनडर्था ] । अत्राहुः–कार्यकालं संज्ञा-परिभाषमिति पक्षोऽत्राश्रीयते, तेन

"कर्मणि द्वितीया" इत्यत्र कार्ये यत् कर्मसंज्ञाया उपस्थानं तदनवकाशमिति द्वितीया भविष्यति । अक्षाणां देवितेत्यादौ तु कृत्प्रयोगे षष्ठ्या द्वितीयाऽपवादत्वाद् बाध्यते, तृतीया तु परत्वात्" इति ॥ अनेन कैयटग्रन्थेन "करणं च" [ २. २. १९. ] इति सूत्रस्थो बृहद्वृत्तिग्रन्थः समानार्थ एव । यः किल पाणिनीयानां *कार्यकालं संज्ञा-परिभाषम्* इति पक्षः स एव 'प्रतिकार्यं संज्ञा भिद्यन्ते' इत्येवंरूपपरमतत्वेनोद्दिष्टः, ततश्चैतत्कैयटोक्तरीत्यैव तत्रत्यापि व्याख्याऽवगन्तव्या । नागेशभट्टस्त्वत्र विशेषमाह, तथा हि-केचित् तु-"साधकतमगतकर्मत्वशक्तिबोधेऽक्षान् दीव्यतीति प्रयोगे दृढतरं मानं चिन्त्यम्, कार्यकालपक्षेऽपि परत्वात् तृतीयया बाधे न्याय्ये तदनुपस्थितेरेव न्याय्यत्वात्, किञ्च तत्र फलाश्रयत्वविवक्षया कर्तुरिति [ "कर्तुरीप्सिततमं कर्म" पा० सू० १. ४. ४९. ] कर्मत्वं, न च तदा करणत्वमिति न दोषः । किञ्च "क्ङिति च" [ पा० सू० १. १. ५. ] इति सूत्रस्थकैयटरीत्या यथोद्देशपक्षेऽपि प्रधानानुरोधेन स्वात्मभेदकल्पनस्य तुल्यतया विशिष्य 'कार्यकालपक्षे' इत्युक्तिरसंगता । किञ्च कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसंज्ञेति 'अदसो माद्' [ पा० सू० १. १. १२. ] इति सूत्रस्थभाष्योक्तरीत्या "अपादानमुत्तराणि कारकाणि बाधन्ते, गां दोग्धि पयः" इत्यत्रत्यभाषासङ्गतेराकडारस्थसंज्ञानां यथोद्देशपक्षत्वमेवेति च तदुक्त्यसङ्गतिरित्याहुः" इति । अयमाशयः-अक्षनिष्ठा कर्मत्वशक्तिरन्या करणत्वशक्तिरन्या, तत्र यद्यपि दिवः साधकतमस्य संज्ञाद्वयमपि शास्त्रेण बोधितं तथापि तत्तद्विभक्तिसमभिव्याहारे तत्तच्छक्तिबोध एव, तथा च अक्षान् दीव्यतीति प्रयोगेऽक्षेषु सदपि साधकतमत्वं [ करणत्वं ] न भासते, अपि तु क्रियाजन्यफलाश्रयत्वरूपं कर्मत्वमेव भासते । इत्थं च यादृशार्थबुबोधिषया प्रयोगस्तदर्थवाचकविभक्तेरेवोत्पत्तिर्न्याय्या । कैयटोक्तकार्यकालपक्षाश्रयणेनैतत् समाधानं च न साधु, यतो यथोद्देशपक्षेऽपि विधिसूत्रानुरोधेन संज्ञासूत्राणामात्मभेदकल्पनस्य तैरुक्तत्वात् तत्कार्यार्थं कल्पितस्य तस्य संज्ञासूत्रस्य तत्कार्याप्रवृत्तावनवकाशत्वस्य साम्यात् । तथा च यत्र परत्वादिना बाधोऽवतरति तत्र तैस्तद्विषयस्य संज्ञासूत्रस्यात्मभेदकल्पनाभाव एव स्वीक्रियते। तथा च नानयोः पक्षयोरत्र विषये कोऽपि भेदः । किञ्च प्रथमाध्यायचतुर्थपादप्रथमसूत्रादारभ्य द्वितीयाध्यायद्वितीयपादसप्तत्रिंशसूत्रपर्यन्तं तैः 'आकडारम्' इत्युच्यते, तत्र च यथोद्देशपक्ष एवेति कैयटेन स्वयमेव स्वीकृतत्वोक्त्या सह विरोधोऽपि स्फुट एव । एवं च चकारेण संज्ञाद्वयसमावेश एव युक्तोऽर्थतन्त्रा वा व्यवस्थेहाश्रयणीयेति नागेशाशयः । स्वमतेऽपि चकारेण संज्ञाद्वयसमावेश एव बृहद्वृत्तावुक्त इत्यलमधिकेनेति ॥ २७ ॥

## *सापेक्षमसमर्थम्* ॥ २८ ॥

सि०—"समर्थः पदविधिः" [ ७. ४. ११२. ] इति परिभाषासूत्रेण सर्वोऽपि पदसम्बन्धी विधिः समर्थाश्रितः-समर्थपदाश्रित इति बोधितम् । समर्थत्वं च सामर्थ्यवत्त्वम्, सामर्थ्यं च द्विविधम्-व्यपेक्षा एकार्थीभावश्च । तत्र पृथगर्थानां पदानामाकाङ्क्षावशात् परस्परसम्बन्धो व्यपेक्षा । यत्र पदान्युपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानाद् द्व्यर्थान्यर्थान्तराभिधायीनि वा स एकार्थीभावः । तत्र वाक्ये व्यपेक्षा सामर्थ्यं, समासे एकार्थीभाव इति सामान्यतो विवेकः । सर्वं च पदसम्बन्धिकार्यमेतदन्यतरसामर्थ्यवत्पदाश्रितमिति परिभाषार्थः। तत्र व्यपेक्षासामर्थ्यवतः समुदायस्यान्तर्गतयोः पदयोः समासादिविधिः प्राप्नोति, यथा-'ऋद्धस्य राज्ञः पुरुषः, महत् कष्टं श्रितः' इत्यनयोः समुदाययोर्व्यपेक्षासामर्थ्येन समर्थत्वात् तदन्तर्गतयो राज-पुरुषपदयोः कष्ट-श्रितपदयोश्च समर्थत्वानपायात् समासः स्यादिति 'ऋद्धस्य राजपुरुषः, महत् कष्टाश्रितः' इति प्रयोगप्रसङ्ग इति तद्वारणाय न्यायोऽयमाश्रीयते-*सापेक्षमसमर्थम्* इति । अपेक्षा-पदान्तरसम्बन्धाकाङ्क्षा, तया सह विद्यत इति सापेक्षम्, तथाभूतं च पदम्, असमर्थम्-सामर्थ्यरहितं भवतीति तस्य न पदविधियोग्यत्वम् । अयमाशयः-वृत्तौ निविष्टेन हि पदेन प्रधानार्थविशेषणीभूतस्वार्थोपस्थापकेन भवितव्यम्, यच्च पदं पदान्तरमपेक्षते स्वविशेषणाय तच्च स्वयमेव प्राधान्यमनुबुभूषतीरिति कथं तत् प्रधानार्थं स्वार्थं समर्पयेदिति तस्य स्वसमभिव्याहृतपदान्तरेणासामर्थ्यं स्पष्टमेव । तथा च न्यायतः-औचित्यात् सिद्धोऽयमर्थ इति नात्र ज्ञापकापेक्षा । ईदृशेषु प्रयोगेषु समासाभावाय यत्नाकरणमेतन्न्यायज्ञापकमिति तु न युक्तमिति पूर्वमपि बहुशः प्रदर्शितमेव । "समर्थः पदविधिः" [ ७. ४. ११२. ] इत्यस्यैवायं प्रपञ्च इति प्राञ्चः । वस्तुतस्तु तया परिभाषया सहास्य न्यायस्य कः सम्बन्धः ? न कोऽपि, यत्र व्यपेक्षया सामर्थ्यं सिद्धमेव तत्रैवावयवेऽसामर्थ्यस्य बोधकत्वादस्य न्यायस्य ततो भिन्नविषयत्वात् । अत्र सूत्रे बृहद्वृत्तौ च व्यपेक्षैकार्थीभावसामर्थ्ययोर्भेदप्रदर्शनावसरे व्यपेक्षायां विशेषणयोगो भवति, एकार्थीभावे न भवतीति प्रदर्शनेनैवेदृशेषु 'ऋद्धस्य राज्ञः पुरुषः' इत्यादिषु समासाभावः सूचितः, तत्र च मानत्वेन महाभाष्योक्तं वार्त्तिकमुक्तम्, तथा हि-"ननु च राज्ञः पुरुषमानयेत्युक्ते योऽर्थ आनीयते स एव राजपुरुषमानयेत्युक्तेऽप्यानीयते तत् कोऽत्र व्यपेक्षैकार्थीभावयोर्विशेषः ? उच्यते-संज्ञाविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं चयोगश्चेति" इति वाक्य-समासयोर्भेदमुपक्षिप्य उपसर्जनविशेषणांशव्याख्यानमग्रे प्रदर्शितम्, तथा हि-"तथा

वाक्ये उपसर्जनविशेषणं भवति–ऋद्धस्य राज्ञः पुरुषः, समासे न भवति–राजपुरुषः । यथाहुः–"सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणं न प्रयुज्यते ।" इति, विशेषणयोगे हि सापेक्षत्वेनागमकत्वात् सामर्थ्यं न भवतीति" । अनेन ग्रन्थेन व्यपेक्षैकार्थीभावसामर्थ्ययोरयं विशेषो यत्–व्यपेक्षायामेकदेशस्य समासवृत्तिर्न भवति गमकत्वाभावात्, एकार्थीभावे च समासवृत्तिरिति । क्वचित् सति गमकत्वे प्रधानस्य विशेषणसापेक्षत्वेऽपि समासो भवतीति परेण न्यायेन सूचयिष्यते, क्वचिच्चाप्रधानस्याऽपि नित्यसापेक्षस्य वृत्तिर्भवति, यथा–देवदत्तस्य दासभार्येत्यादौ, अत्र हि देवदत्तस्य यो दासस्तस्य भार्येति प्रतीतेर्दासस्य देवदत्तसापेक्षत्वेऽपि नित्यसापेक्षेषु वृत्त्यन्तर्गतपदेनापि सम्बन्धस्यानुज्ञातत्वेन समासो भवतीति नायमैकान्तिको न्यायः–*सापेक्षमसमर्थम्* इति प्रपञ्चितं विवरणे ॥ २८ ॥

## *सापेक्षमसमर्थम्* ॥ २८ ॥

**त०**—पदविधीनां-पदसम्बन्धिनां कार्याणां, पदात् पदे पदस्य पदयोः पदानां वा सम्बन्धिनां विधीनां, समर्थत्वं–समर्थपदाश्रितत्वं परिभाषया सूचितमाचार्यैः "समर्थः पदविधिः" [७. ४. १२२.] इति । तत्र पदविधयश्च परिगणिता वृहद्वृत्तौ–समासनामधातु-कृत्-तद्धितोपपदविभक्ति-युष्मदस्मदादेशप्लुतरूप इति । तथा च यत्रान्यपदापेक्षा केनापि रूपेण भवति स सर्वो विधिरिह पदविधिः, स च व्यपेक्षामेकार्थीभावरूपं च सामर्थ्यमाश्रित्य भवति । उदाहरणानि चास्य वृहद्वृत्तिग्रन्थे प्रपञ्चितान्येवेति तत एव समवलोकनीयानि । व्यपेक्षैकार्थीभावयोः स्वरूपनिरूपणगर्भ साधुत्वान्वाख्यानवाक्यमेवं कल्पितं तत्रैव–"अत्र व्यपेक्षायां सम्वद्धार्थः सम्प्रेक्षितार्थो वा पदविधिः साधुर्भवति । एकार्थीभावे तु विग्रहवाक्यार्थाभिधाने यः शक्तः सङ्गतार्थः संसृष्टार्थो वा पदविधिः स साधुर्भवति, अत्र पदानि उपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा, प्रधानार्थोपादानाद् द्व्यर्थानि अर्थान्तराभिधायीनि वा भवन्ति" इति । अत्र सम्वद्धार्थ इत्यस्य सम्वद्धो झटित्येवान्वितः पदानामर्थः [ प्रतीतिविषयः ] यत्र स इत्यर्थः, संप्रेक्षितार्थ इत्यस्य संप्रेक्षया कष्टकल्पनया संजातः प्रतीतिपथमवरूढोऽर्थो यत्र स इत्यर्थः । तथा च क्लिष्टकाव्यादावपि योजनयाऽर्थानां सम्वन्धः प्रतीयत एवेति तत्रापि व्यपेक्षा सामर्थ्यं स्वीक्रियते । एकार्थीभावे च–संगतार्थ इत्यस्यान्यपदोपस्थितार्थस्यापि यत्र गतार्थत्वमित्यर्थः, संसृष्टार्थ इत्यस्य मिलितार्थ इत्यर्थः । अयमेवो चार्थो विवृतः–अत्र च पदानीत्यादिना वाक्येन, अत्र एकार्थीभावे सामर्थ्ये पदानि उपसर्जनीभूतस्वार्थानि–इतरविशेषणीभूतस्वार्थोपस्थापकानि, न तु पृथक् स्वार्थोपस्थापकानीति तात्पर्यम्, एवं तत्पुरुषादावेकं पदमुपसर्जनीभूतस्वार्थं, वहुव्रीहौ द्वन्द्वे च पदद्वयमपि तथा । तथा चेयमजहत्स्वार्था वृत्तिरिति कथ्यते । जहत्स्वार्थामभिप्रेत्याह–निवृत्तस्वार्थानीति, जहति स्वं स्वमर्थं पदानि यस्यामित्यर्थात् तत्र स्वार्थोपस्थापकत्वाभावान्निवृत्तः स्वार्थो येषां तानीत्यर्थः । उभयसाधारणं हेतुमाह–प्रधानार्थोपादानादिति । अजहत्स्वार्थापक्षे–प्रधानार्थेन स्वोपस्थितिकाले एवोपसर्जनपदार्थस्य विशेषणतयोपादानादित्यर्थः, जहत्स्वार्थापक्षे च प्रधानेन पदेन तदर्थस्याप्युपादानादित्यर्थः । वहुव्रीहिसमासे तु प्रधानं पदं समुदाय इति वोध्यम्, एवं द्वन्द्वेऽपि प्रधानं पदं समुदाय एव, तदर्थेन साहित्येन स्वविशेषणतया समासान्तर्गतपदार्थस्योपादानादुपसर्जनीभूतस्वार्थानि, यद्वा विशेष्यसाहित्यार्थोपस्थापकतया प्रधानेन समुदायेनैव समासान्तर्गतपदार्थस्याप्युपादानान्निवृत्तस्वार्थानि वेति, समाहारेतरेतरयोगयोरुभयोरपि साहित्यं विशेष्यम्, आद्येऽनुद्भूतावयवभेदम्, अन्त्ये समुद्भूतावयवभेदमित्येव तयोः [ समाहारेतरेतरयोगयोः ] भेद इति वोध्यम् । अत्र कैयटे–द्व्यर्थानीत्यस्य स्थाने व्यर्थानीति पाठः समुपलभ्यते, स एव च नागेशेनापि गृहीतः, तस्य च सन्निधानान्निवृत्तस्वार्थानीति जहत्स्वार्थापक्षेण सह सम्वन्धः, तत्र हि पदानां प्रत्येकमर्थराहित्यात् । तथा च जहत्स्वार्थापक्षेऽर्थान्तराभिधायीनीत्यस्यार्थान्तरान्वितस्वार्थाभिधायीनीत्यर्थः, प्रत्येकशक्तिसहकृतसमुदायशक्त्या विशिष्टार्थप्रतिपादकानीति भावः । पदानीति बहुवचनं वहुपदविषयवहुव्रीहि-द्वन्द्वादिसंग्रहाय । 'द्व्यर्थानि' इति वृहद्वृत्तिगृहीतपाठपक्षे च जहत्स्वार्थपक्षे एव द्व्यर्थानीति सम्वध्यते, तथा च तत्र स्वार्थेन सह समुदायार्थरूपप्रधानार्थोपस्थापकानीत्यर्थः । अर्थान्तराभिधायीनीति च समासार्थरूपस्य स्वपदार्थभिन्नस्यार्थस्याभिधायकानीत्यर्थः । ईदृशसामर्थ्यद्वयसहितस्य पदस्य पदयोः पदानां वा यो विधिर्भवति स सर्वस्तद्गतं सामर्थ्यमाश्रित्यैव भवति, असमर्थानां पदान्तरैः सह सम्वद्धुमसामर्थ्यात् । इत्थं च यत्र समुदाये सामर्थ्यं विद्यमानमपि तदवयवे न भवति, तस्य समुदायनिष्ठत्वात्; यत्र वा वृत्त्यन्तर्गततया ग्रहीतुमभिलष्यमाणं पदं तदनन्तर्गतपदेन सह सम्वद्धं तत्रासामर्थ्यमेव स्वीक्रियते, तादृशपदस्य पदयोर्वा गमकत्वाभावात्, स एवार्थोऽनेन न्यायेन प्रकटीक्रियते । एवं चायं न्यायः सापेक्षपदस्य गमकत्वाभावमूलकमेवासामर्थ्यमाहेति नाद्भुतार्थः, अतश्च नात्र ज्ञापकापेक्षेति वृत्तौ निवेदितमेव । "समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषाप्रपञ्चत्वमप्यस्य वृत्तावनूद्य त्यक्तम्, परिभाषाप्रपञ्चत्वमस्य तदा स्याद् यदि परिभाषावोध्यार्थस्यैव प्रकारान्तरेणावान्तरभेदेन वाऽत्र चर्चा स्यात्, किन्तु नास्ति तत् । तथा हि परिभाषया पदविधीनां समर्थाश्रितत्वं वोधितम्, अयं च न्यायः सापेक्षस्या-

सामर्थ्यं बोधयति । तथा च गमकत्वाभावमूलकं सापेक्षेऽसामर्थ्यम्, यत्र च सापेक्षत्वेऽपि गमकत्वं तिष्ठति तत्र सामर्थ्यमिति स एवार्थः परेण न्यायेन प्रकाश्यते । ध्वनितं चास्य न्यायस्य गमकत्वाभावमूलकत्वं "समर्थः पदविधिः" [ पा० सू० २. १. १. ] इति सूत्रे महाभाष्ये, तत्रास्य सूत्रस्य प्रयोजनवर्णनावसरे 'पश्य देवदत्त ! कृष्णं, श्रितो विष्णुमित्रो गुरुकुलम्' इति वाक्यद्वयमध्ये स्थितयोः कृष्ण-श्रितशब्दयोः, एवमन्यत्रापि सामर्थ्याभावे समासव्यावृत्तिं तत्प्रयोजनत्वेन प्रदर्श्य-"अथ क्रियमाणेऽपि समर्थग्रहणे इह कस्मान्न भवति-महत्कष्टं श्रित इति ?, न वा भवति-महाकष्टश्रित इति ?, भवति, यदैतद् वाक्यं भवति-महत् कष्टं महाकष्टं, महाकष्टं श्रितो महाकष्टश्रित इति । यदा त्वेतद् वाक्यं भवति-महत् कष्टं श्रित इति तदा न भवितव्यम् । तदा च प्राप्नोति, तदा कस्मान्न भवति ?, कस्य कस्मान्न भवति, किं द्वयोः, आहोस्विद् बहूनाम् । बहूनां कस्मान्न भवति ? "सुप् सुपा" [ पा० सू० २. १. ४. ] इति वर्त्तते । ननु च भो आकृतौ शास्त्राणि प्रवर्त्तन्ते, तद्यथा "प्रातिपदिकात्" [ पा० सू० ४. १. १. ] इति वर्त्तमानेऽन्यस्माच्चान्यस्माच्च प्रातिपदिकादुत्पत्तिर्भवति । सत्यमेवमेतत् । आकृतिस्तु प्रत्येकं परिसमाप्यते, न समुदाये, यावत्येतत् परिसमाप्यते प्रातिपदिकादिति तावत उत्पत्त्या भवितव्यम्, प्रत्येकं चैतत् परिसमाप्यते, न समुदाये । एवमिहापि यावत्येतत् परिसमाप्यते सुप् सुपेति तावतः समासेन भवितव्यम्, द्वयोश्चैतत् परिसमाप्यते न बहुषु । द्वयोस्तर्हि कस्मान्न भवति ? असामर्थ्यात् । कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति । यदि सापेक्षमसमर्थं भवतीत्युच्यते 'राजपुरुषोऽभिरूपो राजपुरुषो दर्शनीयः' अत्र न प्राप्नोति । नैष दोषः प्रधानमत्र सापेक्षम्, भवति च प्रधानस्य सापेक्षस्यापि समासः ॥" इति । एतावतो ग्रन्थस्यायमाशयः- 'महत् कष्टं श्रितः' इत्यर्थेऽत्र श्रवणक्रियया सामर्थ्यसद्भावात् समासः प्राप्नोति, तथा च कष्ट-श्रितयोः समासे 'महत्कष्टश्रितः' इति त्रयाणामपि पदानां समासे उत्तरपदे विधीयमानस्यात्त्वस्य मध्यमपदे परेऽभावान्महत्कष्टश्रित इत्येव रूपम् । यद्यपि 'महाकष्टश्रितः' इति रूपमपि भवत्येव समस्तम्, तथापि तत्र पूर्वं महच्छब्दस्य कष्टशब्देन समासे ततः श्रितशब्देन समास इति न 'महत् कष्टं श्रितः' इति विग्रहवाक्यार्थाभिधाने तत् समर्थम् । तथा चात्रार्थे समासः कुतो नेति प्रश्नः, तत्र प्रत्याक्षिप्यते-किमत्र भवता द्वयोः समासश्चोद्यतेऽथवा त्रयाणामपि ? तत्रेदमाह-द्वयोरपि श्रितापेक्षया कर्मत्वमिति त्रयाणामपि सामर्थ्यसद्भावात् त्रयाणामपि समासः स्यादिति । अथ यदि-"सुप् सुपा" [ पा० सू० २. १. ४. ] इति स्याद्यन्तः स्याद्यन्तेन समस्यते इत्यर्थबोधकं सामान्यसूत्रमेतत् सर्वसमासविधायकेषु सूत्रेषु प्रायः सम्बध्यते, विहाय विशेषवचनम् । सम्बध्यमानसूत्रे एकत्वस्य विवक्षया एकमेव स्याद्यन्तमेकेन स्याद्यन्तेन समस्यते इति स्वीकृत्य बहूनां समासाभावः समर्थ्यते; तदपि नोचितम्-सूत्राणां जातिपक्षाश्रयणेन प्रवृत्तेः स्वीकारात् स्याद्यन्तजातिपरतया तत्सूत्रस्यानेकस्याद्यन्तानां समासे बाधकाभावात् । यथा च नाम्नो विधीयमानः प्रत्ययो नैकस्मादेव नाम्नो विधीयते, अपि तु प्रत्येकं बहुभ्योऽपि नामभ्यस्तथा बहूनामपि स्याद्यन्तानां समासो भविष्यति, यथा वा 'न ब्राह्मणं हन्यात्' इत्यादौ । अत्रोच्यते-जातेः प्रत्येकं परिसमाप्तत्वान्नामसमुदायाद् यथा न प्रत्ययोत्पत्तिः किन्तु प्रत्येकान्नाम्न एव, एवं स्याद्यन्तसमुदायस्य स्याद्यन्तसमुदायेन न समासोऽपि तु प्रत्येकं स्याद्यन्तस्यैवेति बहूनां समासोऽत्र [ महत् कष्टं श्रित इत्यर्थे ] न भवति । अयं भावः-यथा स्वाङ्गत्व-जनपदत्वादेः प्रत्येकं परिसमाप्त्या स्वाङ्गसमुदाय-जनपदसमुदाययोर्न स्वाङ्ग-जनपदग्रहणेन ग्रहणं तथा प्रकृतेऽपि स्याद्यन्तसमुदायस्य न स्याद्यन्तत्वेन ग्रहणमिति, नन्वेवं द्वयोरेव [ कष्ट-श्रितयोः ] कस्मान्न समासो भवति ?, तत्रोत्तरम्-असामर्थ्यादिति । सामर्थ्याभावश्चात्र कथमिति प्रश्ने-'सापेक्षमसमर्थं भवति' इत्युत्तरम्, सापेक्षस्यासमर्थत्वे युक्तिश्च पूर्वमुपपादितैव । अथ सापेक्षस्यासमर्थत्वे दोषाः प्रदर्शिताः, यथा-'राजपुरुषो दर्शनीयः' इत्यत्र दर्शनीयपदेन विशेष्यमाणस्य पुरुषस्यासामर्थ्यात् समासो न स्यादिति । तत्र च प्रधानस्य सापेक्षत्वेऽपि सामर्थ्यमिति स्वीकृतम्, तत्र युक्तिरुक्ता कैयटेन-प्राधान्यादेवानेकेनोपकारकेणोपकार्यत्वाविरोधादिति । अत्र चाधिकमग्रिमन्यायव्याख्यावसरे वर्णयिष्यते । अन्ते चाप्रधानस्यापि सापेक्षत्वे 'देवदत्तस्य गुरुकुलम्, देवदत्तस्य दासभार्या' इत्यादौ समाससमुदाहृत्य प्रकृतन्यायस्य गमकत्वाभावमूलकत्ववर्णनेन यत्र गमकत्वं तत्र सामर्थ्यं, यत्र न गमकत्वं तत्र न सामर्थ्यमिति व्यवस्थामाश्रित्य 'सापेक्षमसमर्थं भवति' इति खण्डितम् । ततश्च 'महत् कष्टं श्रितः' इत्यत्र समासः कुतो नेति शङ्का पुनरुत्थिता तदर्थं वार्त्तिककृतोक्तम् "सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न, अगुरुपुत्रादीनाम्" इति । तथा च 'कष्ट'शब्दस्य महदिति विशेषणसहितत्वेन न वृत्तिः, वृत्तस्य समासादिवृत्तिगतस्य चाप्रधानस्य राजादेर्ऋद्धस्येत्यादिना विशेषणेन सम्बन्धाभावश्च सिद्धः, 'देवदत्तस्य गुरुपुत्रः, देवदत्तस्य दासभार्या' इत्यादिष्वावृत्तयेऽगुरुपुत्रादीनामित्युक्तम् । भाष्यकृता च तदगमकत्वादिति हेतुना खण्डितम्, तथा हि-"तत् तर्हि वक्तव्यं-सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणं न प्रयुज्यते, अगुरुपुत्रादीनामिति ? न वक्तव्यम्, वृत्तिस्तर्हि कस्मान्न भवति ? अगमकत्वात् । इह समानार्थेन वाक्येन भवितव्यं समासेन च, यश्चेहार्थो वाक्येन गम्यते-महत् कष्टं श्रित इति, नासौ जातुचित् समासेन गम्यते

महत्कष्टश्रित इति, एतस्माद्धेतोर्ब्रूमः–अगमकत्वादिति, न ब्रूमः–अपशब्दः स्यादिति । यत्र च गमको भवति भवति तत्र वृत्तिः, तद्यथा–देवदत्तस्य गुरुकुलं, देवदत्तस्य गुरुपुत्रो देवदत्तस्य दासभार्येति।'' इति। अयमाशयः–सविशेषाणां वृत्त्यभावो, वृत्तस्य च विशेषणयोगाभावः, गुरुपुत्रादीनां वृत्तानामपि विशेषणयोगश्चेति सर्वोऽप्यर्थो न्यायसिद्ध एवेति तदर्थं न किमपि वचनमनुष्ठेयम्। अयं च सर्वोऽर्थो गमकत्वागमकत्वाभावमूलक एव, वाक्येनार्थस्याभिधाने प्राप्ते तदर्थे समासस्य साधुत्वमन्वाचक्षाणं शास्त्रं तस्य समानार्थत्वमप्याक्षिपत्येव, 'महत् कष्टं श्रितः' इति वाक्येन च यन्महत्त्वविशिष्टकष्टकर्मकं श्रयणं प्रतीयते तत् 'महत्कष्टश्रितः' इत्यनेन समासेन न प्रत्याययितुं शक्यते, तेन हि यः कष्टं श्रितः स महत् कर्म करोतीत्यादि प्रतीयेत, क्रियाविशेषणं वा महत्त्वं प्रतीयेत, न तु कष्टविशेषणम्, कष्टस्य समासरूपपदार्थैकदेशत्वेन 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्त्यनुसारं महत्त्वस्य तत्रान्वयासम्भवात्। तथा च समासे सत्यगमकत्वमेव समासाभावे हेतुर्नासामर्थ्यं न वाऽपशब्दत्वापत्तिः। लोके प्रयुज्यमानस्य हि साधुत्वमसाधुत्वं वा विचार्यते–यथा गौः साधुर्गाव्यादिर्वेति। महत्कष्टश्रित इत्ययं महत् कष्टं श्रित इत्येतद्वाक्यार्थे न प्रयुज्यते, प्रयुक्तानां चेदमन्वाख्यानम्, अतो नात्र समासो भविष्यति। देवदत्तस्य गुरुपुत्र इत्यादौ तु देवदत्तस्य गुरोः पुत्र इति वाक्येन योऽर्थः प्रतीयते स एव समासेन प्रतीयत इति तत्र गमकत्वेन समासो भवतीति। इत्थमगमकत्वमूलकमेवासामर्थ्यमिति तत्र व्यवह्रियते, न तु सापेक्षत्वसामान्येन, सापेक्षत्वस्यासामर्थ्यानाधायकत्वादिति समुदितोऽर्थः। ततः शङ्क्यते–''यद्यगमकत्वं हेतुः, नार्थः समर्थग्रहणेन, इहापि 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति योऽर्थो वाक्येन गम्यते नासौ जातुचित् समासेन गम्यते–भार्या राजपुरुषो देवदत्तस्येति, तस्मान्नार्थः समर्थग्रहणेन। इदं तर्हि प्रयोजनम्। अयमस्त्यसमर्थसमासो नञ्समासो गमकः, तस्य साधुत्वं मा भूत्–अकिञ्चित्कुर्वाणम्, अमाषं हरमाणम्, अगाधादुत्सृष्टम्' इति। एतदपि नास्ति प्रयोजनम्। अवश्यं कस्यचिन्नञ्समासस्यासमर्थस्य साधुत्वं वक्तव्यम्–असूर्यम्पश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मणः' इति। अयमाशयः–यदि गमकत्वमेव वृत्तिप्रयोजकं तर्हि ''समर्थः पदविधिः'' [ ७. ४. ११२ ] इति परिभाषया पदविधीनां समर्थाश्रितत्वं किमित्याश्रीयते, यत्र चासामर्थ्यं तत्र वाक्यार्थस्य समासादिनाऽगमनादेव समासाद्यभावो भविष्यति, तथा चेयं परिभाषैव व्यर्था। यदि चासमर्थनञ्समासानां गमकत्वेन लोके प्रयुज्यमानानाम् 'अकिञ्चित्कुर्वाणमित्यादीनामसाधुत्वबोधनाय समर्थग्रहणमित्याख्यायते, यतो गाव्यादिशब्दवदसाधवोऽपि ते प्रयोगा लोके प्रयुज्यन्ते, तेषां च साधुत्वं प्राप्तम्, अकिञ्चित्कुर्वाणमित्यादौ किञ्चिदकुर्वाणम्, माषमहरमाणं गाधादनुत्सृष्टमित्यादिक्रमेण गमकत्वस्य दृष्टत्वात्, तद्वारणाय 'समर्थ'ग्रहणं सार्थकमिति, तदपि नोचितम्। असूर्यम्पश्यानि मुखानीत्यादि–कतिपयासमर्थसमासानां साधुत्वस्य शास्त्रकृतामपि सम्मतत्वेन तेषामेव साधुत्वं नान्येषामित्येवं नियमाय ''सुडनपुंसकस्य'' [ पा० सू० १. १. ४३ ] इत्यत्र प्रसज्यप्रतिषेधेन व्याख्यानस्योक्तत्वात् ततश्च तदन्येषामसाधुत्वमपि तेनैव लब्धमिति नार्थोऽनया परिभाषयेति। तत्परिभाषाभावे च तदुपकारकस्यास्य न्यायस्यापि नातिप्रयोजनीयत्वमिति ध्वनितमेवेत्यलम्॥ २८॥

## *प्रधानस्य तु सापेक्षत्वेऽपि समासः* ॥ २९ ॥

सि०—तुशब्दः पूर्वन्यायादस्य वैलक्षण्यं द्योतयति, पूर्वन्यायेन हि सामान्यत एव सापेक्षस्यासमर्थत्वकथनेन तस्य समासाभावोऽप्युक्तप्राय एव। अयं च तस्य न्यायस्याप्रधानविषयतां द्योतयति तुशब्देन, प्रधानं च प्रकृतधातूपात्तव्यापाराश्रयत्वेनोपात्तं, तस्य, सापेक्षत्वेऽपि स्वविशेषणेन सम्बन्धमभिलष्यत्यपि समासो भवत्येवेति न्यायार्थः। अत्र च यद्यपि गमकत्वमेव हेतुस्तथाऽपि ज्ञापकमपि दृश्यते। तच्च ''उपमेयं व्याघ्राद्यैः साम्यानुक्तौ'' [ ३. १. १०२. ] इति सूत्रे 'साम्यानुक्तौ' इति कथनम्, तद्धि 'पुरुषो व्याघ्र इव शूरः' इत्यादौ पुरुष-व्याघ्रशब्दयोः समासाभावार्थमुपात्तम्, अनेन हि सूत्रेण 'पुरुषव्याघ्र' इत्यादौ समास इष्यते, तत्र व्याघ्रपदस्य स्वसदृशे लक्षणया व्याघ्रपदं व्याघ्रसदृशार्थकम्, तथा च पुरुषो व्याघ्र इवेति तदर्थः, अत्र हि पुरुष-व्याघ्रयोः सामान्यधर्मस्य कस्यचिदनुक्तिरिति समासो भवति। यत्र च सामान्यधर्मस्योक्तिर्भवति तत्र समासो नेष्टः, यथा–पुरुषो व्याघ्र इव शूर इति, अत्र हि पुरुषे व्याघ्रे च सामान्यतया विद्यमानस्य शूरत्वस्य वाचकः शूरशब्द उक्तः, अत्र समासाभावार्थमुपादीयमानं 'साम्यानुक्तौ' इति पदं सति पूर्वस्मिन् न्यायेऽत्र समासाप्राप्त्या व्यर्थमेव, अत्र विशेष्यस्य [ प्रधानस्य ] पुरुषस्य 'शूर' इति विशेषणापेक्षत्वेनासामर्थ्यात् समासाऽप्राप्तिरिति समासवारणार्थं तदनर्थकम्, तच्चेमं न्यायं ज्ञापयति, ज्ञापिते चास्मिन् प्रधानभूतस्य पुरुषस्य सापेक्षत्वेऽपि समासः स्यादिति तद्वारणाय साम्यानुक्ताविति पदं सार्थकम्। फलं च 'राजपुरुषोऽस्ति दर्शनीयः' इत्यादौ प्रधानस्य पुरुषस्य 'दर्शनीय'पदार्थापेक्षत्वेऽपि समासो भवति। प्रधानस्येति कथनाच्च 'ऋद्धस्य राज्ञः पुरुषः' इत्यादावप्रधानस्य राज्ञ ऋद्धस्येति विशेषणापेक्षत्वे न समासः। क्वचिच्चाप्रधानस्यापि सापेक्षस्य

समासो भवति, यथा—देवदत्तस्य दासभार्येति। अत्र हि देवदत्तस्य यो दासस्तस्य भार्येति प्रतीतेर्दासस्याप्रधानस्य देवदत्तस्येति विशेषणपदापेक्षत्वेऽपि समासो भवत्येव गमकत्वात्। तदुक्तं "समर्थः पदविधिः" [ ७. ४. १२२. ] इति सूत्रव्याख्यायां बृहद्वृत्तौ—"यत्र क्वचिद् विशेषणयोगेऽपि गमकत्वम्, तत्र भवत्येव समासः, यथा—देवदत्तस्य गुरुकुलं, यज्ञदत्तस्य दासभार्या। यदाह—

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्त्तते।
स्वार्थवत् सा व्यपेक्षा हि वृत्तावपि न हीयते॥" इति

वाक्यपदीये—'प्रवर्त्तते' इत्यस्य स्थाने 'समस्यते' इति, 'स्वार्थवत्' इत्यस्य स्थाने 'वाक्यवत्' इति च पाठः। तथा च यत्र वृत्तौ न सम्बन्धहानिस्तत्र सापेक्षत्वेऽपि समासोऽप्रधानस्यापि भवतीति। न्यायश्चायं निश्चल एवान्येनाबाध्यमानत्वात्। *"किं हि वचनान्न भवति* इति न्यायस्यायं प्रपञ्च उत्तरन्यायश्चेति प्राञ्चः, तद्व्याख्यानं च तेषाम्—"वचनमिष्टार्थप्रत्यायनं, तद्वचनाभवनापेक्षयैव हि अस्योत्तरस्य च न्यायस्योदाहरणप्रत्युदाहरणेषु समासस्य तद्वितीयभावप्रत्ययस्य च भवनाभवने संजाते स्तः, इत्यतः किं हि वचनादित्यस्यैवायं प्रपञ्च इति" तस्यायमाशयः—इष्टार्थप्रत्यायनायैव सर्वाणि विधिनिषेधवचनानि क्रियन्ते, न तैर्नवीनः शब्द उत्पाद्यते। ततश्चेष्टार्थप्रत्यायकत्वे शब्दस्य तदनुकूलमेव लक्षणानामाशयः कल्पनीयो न तु तद्विरुद्ध इति। तथा च गमकत्वमूलक एवायमपि न्याय इति पर्यवस्यति। एवमुत्तरोऽपि न्यायस्तन्मूल एवेति॥ २९॥

---

## *प्रधानस्य तु सापेक्षत्वेऽपि समासः* ॥ २९॥

त०—"समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषया पदविधीनां समर्थाश्रितत्वे बोधिते पूर्वन्यायेन च सामान्यतोऽसमर्थत्वे सापेक्षस्योक्ते यत्र 'राजपुरुषोऽस्ति दर्शनीयः' इत्यादौ सापेक्षस्यापि समासः प्रयुज्यते तत्र समासोऽप्राप्तः समासस्य पदविधित्वात् पदविधेः समर्थाश्रितत्वात् सापेक्षस्य चासमर्थत्वात्; तत्र समासस्य साधुत्वबोधनार्थमयं न्यायः पठ्यते। सामर्थ्यं हि कार्यानुमेयम्, दाहरूपं कार्यं दृष्ट्वा वह्नौ दाहकत्वशक्तेरनुमानवत्। यत्र समस्तस्यापि विशेष्यस्य विशेषणेन सम्बन्धः सम्यक्तया प्रतीयते तत्र समासस्य वाक्यार्थबोधनसामर्थ्यं दृष्ट्वा तत्र सामर्थ्यं कल्प्यत इति तद्धृदयम्। अत एव 'राजपुरुषो भार्यायाः' इति प्रयोगो न भवति, अत्र पुरुषे राजसम्बन्धो भार्यासम्बन्धश्चैतदुभयं विवक्षितम्, तत्र प्रधानस्य पुरुषस्य भार्यासम्बन्धसापेक्षत्वेऽपि राज्ञा सह समासः स्यात्, प्रकृतन्यायेन प्रधानस्य सापेक्षत्वेऽपि समासस्य बोधितत्वात्। यदि च गमकत्वमेव प्रकृतन्यायमूलमित्याश्रीयते तदा 'राज्ञो भार्यायाश्च पुरुषः' इति वाक्यार्थे राजपुरुषो भार्याया इत्यस्य समासस्यागमकत्वान्न समासः। वस्तुतस्तु—'सामान्यानुक्तौ' इति पदेनोपात्तविशेषणविजातीयविशेषणयोगः प्रधानस्य भवतीति ज्ञाप्यते तथा च 'पुरुषो व्याघ्र इव शूरः' इत्यत्रोपात्तं विशेषणं व्याघ्र इति व्याघ्रसदृशार्थबोधकम्, तद्विजातीयं विशेषणं 'शूरः' इति सामान्यधर्मबोधकं, तेन योगः प्राप्नोति, एवं राजपुरुषो दर्शनीय इत्यत्रापि प्रधानस्य पुरुषस्योपात्तं विशेषणं राजसम्बन्धबोधकं राज्ञ इति षष्ठ्यन्तं पदं, तद्विजातीयविशेषणं च 'दर्शनीयः' इति, तत्सम्बन्धो भवति, 'राजपुरुषो भार्यायाः' इत्यत्र च पुरुषस्य विशेषणं भार्यारूपं षष्ठ्यन्तपदोपस्थाप्यत्वेनोपात्तविशेषणसजातीयमेवेति तद्योगो न स्यादिति न तादृशः प्रयोगो भवति। न केवलं प्रधानस्यैव सापेक्षत्वेऽपि समासो यावदप्रधानस्यापि क्वचित् सापेक्षस्य समासो दृश्यते, यथा—देवदत्तस्य गुरुकुलम्, यज्ञदत्तस्य दासभार्या, इत्यादि। अत्र बृहद्वृत्त्यादौ गमकत्वादेव समास उक्तः। महाभाष्ये तु गुरुकुलेति समुदायस्यैव षष्ठ्यन्तेन सम्बन्धमपेक्ष्य षष्ठ्युपपादिता। यदि च गुरुणैव योगमपेक्ष्य षष्ठीति स्वीक्रियते तर्हि सापेक्षस्याऽसमर्थत्वमेव न स्वीकार्यमित्यप्युक्तम्। तथाहि—तत्रत्यो ग्रन्थः—"यत्र तर्ह्यप्रधानं सापेक्षं भवति तत्र वृत्तिर्न प्राप्नोति—देवदत्तस्य गुरुकुलम्, देवदत्तस्य गुरुपुत्रः, देवदत्तस्य दासभार्येति, नैष दोषः—समुदायापेक्षात्र षष्ठी, सर्वं गुरुकुलमपेक्षते" इति। अयमाशयः—गुरुकुलादिना समुदायेन समुपजनिते व्यतिरेके देवदत्तस्येति षष्ठी, अवयवद्वारकश्च देवदत्तस्य समुदायेन सम्बन्ध इति सामर्थ्यादवयवमपि विशेषणं स्पृशति। तदुक्तं वाक्यपदीये—

"समुदायेन सम्बन्धो येषां गुरुकुलादिना।
संस्पृश्यावयवाँस्ते तु युज्यन्ते तद्वता सह॥" इति।

येषामर्थानां गुरुकुलादिरूपसमुदायेन सम्बन्धस्तेऽप्यर्था अवयवान् संस्पृश्य—तैः सम्बन्धमनुभूय तद्वता युज्यन्ते इति तदर्थः। तथा चावयवानामपि गुर्वादीनां देवदत्तेन सम्बन्धो लभ्यते। पुनः शङ्कते—यत्र तर्हि न समुदायापेक्षा षष्ठी तत्र ते वृत्तिर्न प्राप्नोति—'किमोदनः शालीनाम्, सक्त्वाढकमापणीयानाम्, कुतोभवान् पाटलिपुत्रकः' इति। इह चापि देवदत्तस्य गुरुकुलं, देवदत्तस्य गुरुपुत्रः, देवदत्तस्य दासभार्या' इति। यद्येषा समुदायापेक्षा षष्ठी—स्यान्नैतन्नियोगतो गम्येत—देवदत्तस्य यो गुरुस्तस्य पुत्र इति। किं तर्हि? अन्यस्यापि गुरुपुत्रः, देवदत्तस्य किंचिदित्येषोऽर्थो गम्येत, यतस्तु खलु नियोगतो देवदत्तस्य यो गुरुस्तस्य यः पुत्र इत्येषोऽर्थो गम्यते, अतो मन्यामहे—नैषा समुदायापेक्षा षष्ठीति। अन्यत्र खल्वपि समर्थग्रहणे सापेक्षस्यापि कार्यं भवति। क्वान्यत्र? "इुसोः सामर्थ्ये" [ पा० सू० ८. ३.

४४.] ब्राह्मणस्य सर्पिष्करोतीति, तस्मान्नैतच्छक्यं वक्तुं—सापेक्षमसमर्थं भवतीति ।" इति अयमाशयः—देवदत्तस्य गुरुकुलमित्यादौ कथञ्चित् समुदायापेक्षया षष्ठ्या उपपादनसम्भवेऽपि किमोदनः शालीनामित्यादौ केषां शालीनां किं कलमानां [श्यामशालीनां] किं रक्तशालीनामित्यर्थविवक्षायां समुदायापेक्षत्वासम्भवः, एवं सक्त्वाढकमापणीयानामित्यत्र आपणीयानां विक्रेयाणां सक्तूनामाढकमित्यर्थस्य विवक्षयाऽऽपणीयशब्दस्य सक्तुसापेक्षत्वेन समुदायसापेक्षत्वासंभवः । कुतो भवान् पाटलिपुत्रक इत्यत्र कस्मात् पाटलिपुत्रादागत इत्यर्थस्य विवक्षया समुदायापेक्षाया असम्भवोऽस्त्येव । किञ्च देवदत्तस्य गुरुपुत्र इत्यादावपि समुदायापेक्षया षष्ठीस्वीकारे योऽत्रार्थः सर्वदा प्रतीयते—देवदत्तस्य यो गुरुस्तस्य पुत्र इति, स नियमेन न प्रतीयेत, किन्तु अन्यस्य गुरुपुत्रः, देवदत्तस्य किञ्चिदन्यदित्यप्यर्थः प्रतीयते तथा च विवक्षितार्थस्य नियमतः प्रतीतये तत्र सापेक्षत्वेऽपि सामर्थ्यं वृत्तिश्चाभ्युपगन्तव्येति गुर्वपेक्षयाऽत्र षष्ठी सम्बन्धिशब्दत्वाच्चात्र स्वार्थवदपेक्षाया वृत्तावप्यहानाद् भवत्येव वृत्तिः । तदुक्तं वाक्यपदीयेऽपि—

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते ॥" इति ।

एवं च सापेक्षमसमर्थं भवतीति न वक्तव्यम् । अत एव च ब्राह्मणस्य सर्पिस्करोतीत्यादौ ब्राह्मणापेक्षस्यापि सर्पिषः करोतिनाऽपेक्षामादाय "वेसुसोऽपेक्षायाम्" [२. ३. ११.] इति विकल्पेन षत्वं भवति, अन्यथा [सापेक्षस्यासामर्थ्ये स्वीक्रियमाणे] समानाधिकरणमसमर्थवदिति वचनात् परमसर्पिःकुण्डमित्यत्रेव ब्राह्मणस्य सर्पिष्करोतीत्यत्र सापेक्षमसमर्थवदिति वचनात् षत्वं न स्यात् । तथा चेदृशे स्थले स्वार्थमात्रोपस्थापकवाक्यघटकतादशायामिव वृत्तावपि सामर्थ्यं न हीयते । किमोदन इत्यादयः प्रयोगाश्च नित्यसापेक्षत्वाभावेऽपि महाभाष्यकारादिवचनादेव साधवः । एवं चैतावता ग्रन्थेन गमकत्वे सति वृत्तिर्भवति, तदसत्त्वे च नेति लभ्यते । एवं च "समर्थः पदविधिः" [७. ४. १२२] इति परिभाषा न कमपि नवीनमर्थं विधत्ते इति ॥ अत्र प्रसङ्गाज्जहत्स्वार्थाऽजहत्स्वार्थभेदेन वृत्तेर्द्वैविध्यं पूर्वं कथितं, तस्य विशेषः प्रतिपाद्यते—द्विविधा हि वैयाकरणाः श्रूयन्ते, केचित् कार्यशब्दवादिनोऽन्ये नित्यशब्दवादिन इति । तत्र कार्यशब्दवादिनं प्रति आक्षिपति कश्चित्—"अथ ये वृत्तिं वर्तयन्ति, किं त आहुः" इति [तत्रैव २. १. १.] सूत्रे महाभाष्ये । अयमाशयः—ये एकार्थीभावरूपां वृत्तिं शास्त्रेण निष्पादयन्ति [ये शास्त्रैकगम्यं सामर्थ्यं मन्यन्ते इति भावः], तेषामयमाशयः—स्याद्यन्तं स्याद्यन्तेन सह सामर्थ्यवद् भवति, समर्थं च समाससंज्ञकमिति । समासादौ वृत्तिव्यवहारस्तु वृत्ति-वृत्तिमतोरभेदोपचारात्, तत्र शब्दार्थसम्बन्धस्य स्वाभाविकत्वमते एकार्थीभावरूपा वृत्तिर्लोकत एव सिद्धेति न किञ्चित् तत्र वक्तव्यम् । ये तु शास्त्रनिष्पाद्यां वृत्तिं मन्यते ते शास्त्रविधानयोग्यं तत्स्वरूपं किमाहुः? अत्रोत्तरं—"परार्थाभिधानं वृत्तिरित्याहुः" इति, परस्य शब्दस्य योऽर्थस्तस्य शब्दान्तरेणाभिधानं यत्र सा वृत्तिरित्यर्थः, यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते, एवं च तन्निष्ठशब्दान्तरकरणकपदार्थाभिधायकत्वं तेषां स्वाश्रयत्वेन वृत्तिव्यवहारप्रयोजकं सामर्थ्यमिति फलितम् । तच्च स्वार्थविशेषणकपुरुषार्थोपस्थितौ राजपदशक्तिज्ञानस्य सहकारित्वाद् बोध्यम् । अत्राह—"अथ तेषामेवं ब्रुवतां किं जहत्स्वार्था वृत्तिर्भवत्याहोस्विदजहत्स्वार्था भवति ?, किं चातः ?, यदि जहत्स्वार्था वृत्तिः 'राजपुरुषमानय' इत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, 'औपगवमानय' इत्युक्तेऽपत्यमात्रस्येति । अथाजहत्स्वार्था वृत्तिः, उभयोर्विध्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति । का पुनर्वृत्तिर्न्याय्या" इति । "नित्यशब्दवादिनां मते राजपुरुषादिपदानि 'राज्ञः पुरुष' इति वाक्यविषयपदसरूपावयवानि पदे वर्णवदनर्थकोपलभ्यमानावयवानि, तत्त्वतो निरवयवान्येव केवलमसत्यप्रक्रियाश्रयणेन शास्त्रेणान्वाख्यायन्त इति तेषां मते पदानामर्थस्यैवाभावात् तत्र त्यक्तत्वात्यक्तत्वसन्देहाभावात् कार्यशब्दवादिनामेव मते जहत्स्वार्थाजहत्स्वार्थयोः सन्देहः । तत्रोभयत्र पक्षे दोषः—जहत्स्वार्थपक्षे पुरुषमात्रस्यैवात्र प्राधान्येनोपस्थितेस्तस्यैवानयनं स्याद् राजपुरुषमानयेति कथने । एवं तद्धितवृत्तिस्थले प्रत्ययार्थमात्रस्यैव प्राधान्येनोपस्थितेरपत्यमात्रस्यैवानयनं स्यात्, औपगवमानयेति कथने । अथ तद्दोषपरिजिहीर्षयाऽजहत्स्वार्थावृत्तिराश्रीयते तर्हि समासे राजपुरुषादावुभयोरपि स्वार्थोपस्थापकत्वात् प्लक्षन्यग्रोधावित्यादिद्वन्द्व इव राजपुरुषावित्यादिः द्विवचनान्तप्रयोग एव स्यादिति द्वयोरपि पक्षयोर्दोषदर्शनात् कः पक्षो न्याय्य इति तदाशयः । तत्राह—'जहत्स्वार्था' इति, स्वार्थत्यागं विना स्वार्थतामात्रोपस्थाने व्यग्रस्य पदस्यार्थान्तरोपस्थापकत्वमसंभवीति जहत्स्वार्थैव वृत्तिरुचितेति भावः । तत्र शङ्कते—युक्तं पुनर्जहत्स्वार्था नाम वृत्तिः स्यात्, अग्निना यथा स्वधर्मं औष्ण्यं त्यक्तुमशक्यं तथा शास्त्रबोधितस्यार्थस्य शास्त्रव्यापारं विना स्वेन त्यक्तुमशक्यत्वात् कथं जहत्स्वार्थावृत्तिसंभव इति भावः । समर्थयति—वाढं युक्तम्, एवं हि दृश्यते लोके—पुरुषोऽयं परकर्मणि प्रवर्त्तमानः स्वं कर्म जहाति । तद्यथा—तक्षा राजकर्मणि प्रवर्त्तमानः स्वं तक्षकर्म जहाति, एवं युक्तं यद्राजा पुरुषार्थे वर्त्तमानः स्वमर्थं जह्यात्, उपगुश्चापत्यार्थे वर्त्तमानः स्वमर्थं जह्यात् । अयमाशयः—यथा कदाचित् तक्षा राज्ञा दूतादिकार्ये

नियुक्तः स्वं तक्षणकर्म जहाति तथा शास्त्रेणार्थान्तरे नियुज्यमानः शब्दोऽपि स्वार्थं जह्यादिति युक्तमेवेति । पुनः शङ्कते–"ननु चोक्तं राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, औपगवमानयेत्युक्तेऽपत्यमात्रस्येति ?" इति । समाधत्ते–"नैष दोषः–जहदप्यसौ स्वार्थं नात्यन्ताय जहाति, यः परार्थविरोधी स्वार्थस्तं जहाति। तद्यथा–तक्षा राजकर्मणि वर्त्तमानः स्वं तक्षकर्म जहाति, न तु हिक्कित-श्वसित-कण्डूयितानि, न चायमर्थः परार्थविरोधी विशेषणं नाम, तस्मात् तन्न जहाति ।" इति । अयमाशयः–त्यागमात्रं लक्ष्यीकृत्य जहत्स्वार्थेति नाम, न सर्वथा स्वार्थत्यागेन, सर्वथा स्वार्थत्यागे परोकारोऽपि कर्तुं न शक्यते, तदर्थमेव च स उपादीयते, तथा च प्रयोजनाभावात् तस्योपादानमेव व्यर्थं स्यात्। तथा च य एव धर्मस्तत्र परोपकारविरोधी स एव त्यज्यते, यथा–राजकर्मनियुक्तेन तक्ष्णा तक्षणरूपं कर्म त्यजते, न तु प्राणिमात्रसाधारणं श्वसितादि, तत्त्यागे च प्राणविच्छेदाद् राजोपकारकतैव नश्येत् । राजपदेन परार्थस्य [ पुरुषरूपस्य ] स्वार्थनिरूपितविशेष्यत्वेन बोधने तद्विशेषणत्वेन राजरूपार्थोपस्थितौ राजरूपोऽर्थः स्वरूपेण न विरोधी, किन्तु तस्य स्वगतं विशेष्यत्वमेव विरोधि, अतः स्वार्थं न हास्यति, स्वगतं विशेष्यत्वमेव विरोधिभूतं त्यजतीति न केवलस्य पुरुषस्यानयनमपि तु राजसम्बन्धविशिष्टस्यैवेति । ननु राज्ञः पुरुष इति वाक्यार्थेऽपि राजार्थस्य विशेषणत्वमेवेति कस्तस्य वृत्तौ विशेष इति चेत्? न–वाक्ये स्वविशेषणसम्बन्धप्रतिपत्तौ सामर्थ्याविघातः, वृत्तावुपसर्जनीभूतेन स्वार्थेन प्रधानार्थस्योपस्कारात् स्वविशेषणप्रतिपत्तौ सामर्थ्यहानिर्भवतीति विशेषस्य स्पष्टत्वात्। अयमत्र सारः–पदानां तत्तद्विषयताविशिष्टे शक्तिः, अत एव बोधे विषयतानियमः। एवं च राजपदादेः राजत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नं स्वार्थः; तत्र समासे विशेष्यत्वांशत्याग इति न ऋद्धादिविशेषणान्वयोऽपि । इत्येतावतैव जहत्स्वार्थत्वमिति । वाक्ये च तत्त्यागाभावाद् भवति तस्यापि विशेषणसम्बन्धः । एवं चावयवशक्तिसहकृतसमुदायशक्त्या विशिष्टैकोपस्थितिरिति तत्त्वम् । पुनराह–"अथवाऽन्वयाद् विशेषणं भविष्यति, तद्यथा–'घृतघटस्तैलघटः' इति, निषिक्ते घृते तैले चान्वयाद् विशेषणं भवति–'अयं घृतघटोऽयं तैलघटः' इति ।" इति । अयमाशयः–यथा घृतपूर्णो घटो घृतघटः, तैलपूर्णश्च तैलघटः कथ्यते, तत्र घृते तैले च ततो निःसारितेऽपि घृततैलसम्बन्धस्य गम्यमानत्वात् 'अयं घृतघटोऽयं तैलघटः' इति व्यवहारो भवति तथा राजशब्दः स्वार्थनिमित्तं विशेषं पुरुषरूपेऽर्थे समाधाय स्वार्थं जहाति, न च तन्निमित्तं जातं विशेषदर्शनं पुरुषे निवर्त्तते, यथा–अग्निसंयोगजनितपाकजरक्तरूपादिकमग्निसंयोगे निवृत्तेऽपि न निवर्त्तते तद्वत् । एवं च राजशब्दाद् राजपदार्थप्रतीत्यभावेऽपि तच्छब्दान्वयमात्रेण वाक्ये [ 'राज्ञः पुरुषः' इत्यादौ ] यादृशविशेषणविशिष्टः पुरुषः शब्दात् प्रतीतस्तादृशस्यैवात्राप्युपस्थितिरित्यनुमानात् पुरुषपदस्य राजसम्बन्धविशिष्टपुरुषेऽर्थे शक्तिग्रहो भवति । तथा च वृत्तौ राजरूपार्थस्योपस्थितौ सत्यामपि राजादिपदजन्योपस्थित्यभावेन जहत्स्वार्थत्वमिति बोध्यम् ॥ पुनरपि दृष्टान्तं विघटयन्नाह–"विषम उपन्यासः, भवति हि तत्र या च यादृशी चार्थमात्रा । अङ्ग ! हि भवानग्नौ निष्टप्य घृतघटं तृणकूर्चेन प्रक्षालयतु न गंस्यते स विशेषः" इति । अयमाशयः–घृते तैले च घटान्निःसारितेऽपि तत्सम्बन्धस्य मात्रयाऽपि विद्यमानत्व एव 'अयं घृतघटोऽयं तैलघटः' इति व्यवहारः, यदि चाग्न्यादिसहायेन घटस्य शोधनं क्रियते तदा घृतादिसम्बन्धाज्ञानान्न तथाव्यवहारः, तद्वदिहापि राजपदस्य स्वार्थत्यागे राजसम्बन्धप्रत्यायकाभावाद् 'राजपुरुषमानय' इत्यादौ केवलपुरुषार्थप्रतीतिरेव स्यादिति शङ्कोदेति। तत्समाधानायाह–"यथा तर्हि 'मल्लिकापुटश्चम्पकपुटः' इति, निस्कीर्णेष्वपि सुमनःस्वन्वयाद् विशेषणं भवति–'अयं मल्लिकापुटोऽयं चम्पकपुटः इति'" इति, अयमाशयः–यथा मल्लिकादिपुष्पाणामभावेऽपि तत्तद्गन्धसम्बन्धमात्रेण पूर्वस्थितां पुष्पसत्तामनुमाय मल्लिकापुट इत्यादिव्यवहारस्तथा वृत्तौ राजपदस्यार्थाभावेऽपि वाक्यदृष्टसार्थकराजशब्दवृत्तिवर्णानुपूर्वीसत्त्वमात्रेण वाक्ये यथा राजसम्बन्धवतः पुरुषस्यैव प्रतीतिस्तथेहापि राजसम्बन्धवतः पुरुषस्यैव पुरुषपदात् प्रतीतिरिति । समाधानान्तरमाह–"अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते, सामर्थ्यं नाम भेदः संसर्गो वा । अपर आह–भेदसंसर्गौ वा सामर्थ्यमिति । कः पुनर्भेदः संसर्गो वा ?, इह 'राज्ञः' इत्युक्ते सर्वं स्वं प्रसक्तम्, 'पुरुषः' इत्युक्ते सर्वः स्वामी प्रसक्तः, इहेदानीं 'राजपुरुषमानय' इत्युक्ते राजा पुरुषं निवर्तयत्यन्येभ्यः स्वामिभ्यः, पुरुषोऽपि राजानमन्येभ्यः स्वेभ्यः । एवमेतस्मिन्नुभयतो व्यवच्छिन्ने यदि स्वार्थं जहाति कामं जहातु, न जातुचित् पुरुषमात्रस्यानयनं भविष्यति ।" इति । अयमाशयः–"समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषया पदविधिषु–वृत्तिषु समर्थाधिकारः क्रियते, तत्र भेदः संसर्गो वा प्रत्येकं सामर्थ्यं, मिलितौ वा यथामतभेदम्, यथा 'राज्ञः' इत्युक्ते षष्ठ्या सम्बन्धिमात्रस्याक्षेपात् स्वत्वेन रूपेण सर्वस्य प्रसक्तिर्भवति । एवं 'पुरुषः' इत्येतावन्मात्रे कथिते पारतन्त्र्ये च प्रमाणान्तरेणाधिगते सति सर्वः स्वामित्वेन समुपतिष्ठते । 'राजपुरुषमानय' इत्युक्ते च राजा पुरुषमन्यस्वामिभ्यो निवर्त्तयति, पुरुषश्च राजानमन्येभ्यः स्वेभ्यः, इत्थं चोभाभ्यामुभयोर्व्यवच्छेदे कृते तन्मध्ये यदि कश्चित् स्वार्थं जहाति तदाऽपि न क्षतिः स्वकार्यस्य कृतत्वादिति न केवलपुरुषानयनप्रसक्तिरिति । तत्र भेदपक्षे राजा पुरुषं स्वाम्यन्तरेभ्यो निवर्त्त्य स्वार्थं जहाति,

पुरुषस्तु स्वार्थमजहदेव स्वान्तरेभ्यो राजानं निवर्त्तयतीति विशेषः। अस्मिन् पक्षे समभिव्याहृतपदार्थनिरूपितसंसर्गतदतिरिक्तभेदैतदुभयवान् योऽर्थः स समासेन प्रत्याय्यते तादृशपुरुषाद्युपस्थितावेव राजादिपदं तात्पर्यग्राहकम्। अन्वयादिति पूर्वोक्ते पक्षे च पुरुषपदमेव राजसम्बन्धवत्पुरुषत्वेनोपस्थापकम्, अत्र पक्षे च पुरुषपदात् पुरुषत्वेनैव पुरुषविशेषोपस्थितिः, राजपदं तात्पर्यग्राहकमित्यनयोर्भेदः। भेदः संसर्गो वा सामर्थ्यम्; भेदसंसर्गौ वा सामर्थ्यमित्यनयोः पक्षयोराशयो नागेशेनेत्थं स्फुटीकृतः—स्वत्वसमानाधिकरणो राजभिन्नस्वामिकभेदो राजसंसर्गव्याप्य इति भेदः सामर्थ्यमिति पक्षे। संसर्गः सामर्थ्यमिति पक्षे च वृत्त्युपस्थाप्यराजसम्बन्धवद्व्यक्तिगतराजसम्बन्धो राजभिन्नस्वामिकभेदव्याप्य इति। एवं च भेदवद्व्यक्तिबोधे सा व्यक्ती राजसंसर्गवत्यपीति तद्वती व्यक्तिरपि बुद्धैव। तथा संसर्गवद्व्यक्तिबोधे सा राजभिन्नस्वामिकभेदवत्यपीति तादृशभेदवती व्यक्तिरपि बुद्धैवेति योजनीयम्। भेदसंसर्गौ वेत्यस्यायं भावः—पूर्वोक्तरीत्योभयोः समनैयत्येन विनिगमनाविरहादुभयोर्यौगपद्येनैव सामर्थ्यप्रयोजकत्वम्। इत्थं जहत्स्वार्था वृत्तिरिति पक्षे दोषोद्धारः॥ अथाजहत्स्वार्थावृत्तिर्विचार्यते, तदाह—"अथवा पुनरस्तु अजहत्स्वार्था वृत्तिः" इति। तत्राक्षिपति—"युक्तं पुनरिदं यदजहत्स्वार्था नाम वृत्तिः स्यात्" इति। अयमाशयः—स्वार्थत्यागाभावे स्वार्थप्रतिपादनव्यग्राणां पदानां समुदायार्थप्रतिपादनस्यासम्भवादयुक्तत्वशङ्केति। समादधाति—"बाढं युक्तम्। एवं हि दृश्यते लोके—भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्वां न जहाति, संचयायैव प्रवर्त्तते" इति। अयमाशयः—यथा भिक्षुकः क्वचिदेकयैव भिक्षया कृतार्थोऽपि क्वचिदन्यामपि भिक्षामादाय संचिनोति, तथा शब्दोऽपि क्वचिदेकार्थः क्वचित् स्वार्थोपस्थापनपूर्वकमन्यार्थोपस्थापकोऽपीति संभाव्यत एवानेकार्थशब्दवदिति। अथाजहत्स्वार्थापक्षे पूर्वोक्तं दूषणं स्मारयति "ननु चोक्तम्—उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति" इति। प्रत्याक्षिपति—"कस्याः पुनर्द्विवचनं प्राप्नोति?" इति। अयमाशयः—'राजपुरुषः' इत्यादौ पूर्वं द्वे विभक्ती—राजनि षष्ठी पुरुषे प्रथमा, सम्प्रति चोद्यमानं द्विवचनं कस्या विभक्तेरिति वक्तव्यम्, एकया विभक्त्या गुणप्रधानभूतस्य राजपुरुषरूपार्थद्वयस्य प्रतिपादयितुमशक्यत्वादि इति। तत्राह—"प्रथमायाः" इति, प्रधानानुसारित्वादप्रधानस्य प्रधाने पुरुषे या विभक्तिस्तस्या एव द्विवचनं प्राप्नोतीति भावः। तत्राह—"न प्रथमासमर्थो राजा" इति। प्रथमया विभक्त्या राजनि विद्यमानो गुणभावो नाख्यातुं शक्यते, प्रथमया सम्बन्धार्थस्यासंप्रत्ययादिति भावः। पुनराह—"षष्ठ्यास्तर्हि प्राप्नोति" इति, सम्बन्धः षष्ठ्यर्थः, स एव चात्र प्रत्याय्यः, स चोभयनिष्ठ इति षष्ठ्या एव द्विवचनमिह प्राप्नोतीति भावः समाधत्ते—"न षष्ठीसमर्थः पुरुषः" इति, पुरुषपदोत्तरमुपात्तया षष्ठ्या पुरुषस्यापि राजसमकक्ष्यतया सम्बन्ध्यन्तरापेक्षा स्यादिति पुरुषस्य षष्ठ्या सामर्थ्यं न प्रतीयेतेति भावः। पूर्वोक्तमेव पक्षमभ्युपैति—"प्रथमाया एव तर्हि प्राप्नोति" इति, तत्र पूर्वोक्तं वाधकं स्मारयति—"ननु चोक्तं—न प्रथमासमर्थो राजा" इति। निराकरोति—"अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः, तत्र प्रातिपदिकार्थे प्रथमेति प्रथमाया एव द्विवचनं प्राप्नोति" इति। अयमाशयः—कश्चिदर्थोऽभिहितोऽपि नान्तर्भवति—यथा 'राज्ञः' इति षष्ठ्या सम्बन्धार्थोऽभिहितोऽपि न क्वचनान्तर्भूतः, कश्चिदर्थोऽन्तर्भूतोऽपि नाभिधीयते, यथा—राजसख इत्यादौ राजा सखा यस्येत्यर्थोऽन्तर्भवन्नपि न समासेनाभिधीयते बहुव्रीहिप्रसङ्गात्, कश्चिदर्थोऽभिहितोऽन्तर्भूतश्च, किन्तु नामार्थतां न व्रजति यथा—पचतीत्यादौ कर्त्ताऽभिधीयमानोऽन्तर्भवंश्च न नामार्थः। अत्र च राजपुरुषादिपदे सम्बन्धरूपोऽर्थोऽभिहितोऽन्तर्भूतो नामार्थतां च गत इति नामार्थेन सह कदाचिदपि तस्य भेदाभावान्नामार्थे विधीयमानया प्रथमयाऽसौ द्योतयितुं शक्यत इति प्रथमाया एव द्विवचनमत्र प्राप्नोतीति। अत्रोत्तरमाह वार्त्तिकेन—"संघातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः" इति, "संघातस्यैकत्वमर्थः, तेनावयवसंख्यातः सुबुत्पत्तिर्न भविष्यति"। अयमर्थः—इह 'राजपुरुष'शब्दात् संघाताद् विभक्त्योत्पत्तव्यम्, तेन च संघातेनावयवार्थोपकृत एकत्वसंख्यायुक्तो विशिष्टोऽर्थः प्रतिपाद्यत इति तदाश्रयमेकवचनमेवात्र भवति, न तु गुणभूतावयवसंख्यानिमित्तं द्विवचनमिति। अयमाशयः—राजपदस्य शास्त्रक्लृप्तशक्त्योपस्थितार्थत्यागे तद्बोधायातिरिक्तशक्तिकल्पने च मानाभावादजहत्स्वार्थामाश्रित्यावयवोपकृता समुदायशक्तिरिह स्वीकार्या। तत्र यद्यप्यवयवार्थस्तत्तद्विशेष्यत्वावच्छिन्नः [राजत्वनिष्ठप्रकारतानिरूपितराजनिष्ठविशेष्यतावच्छिन्नः] एव तथापि [पुरुषादिनिरूपित] विशेषणत्वेन तस्या [राजनिष्ठाया] विशेष्यताया आच्छादनात् तस्या अपि विशेषणतयैव प्रतीतिर्न तु स्वरूपेण इति। [विशेषणान्वयित्वरूपेणानुपस्थितेः] न [ऋद्धस्येत्यादि] विशेषणान्वयः। वाक्ये [राज्ञः पुरुष इत्यादौ] तु प्रत्येकपदजबोधकाले राजादिगतविशेष्यतायाः स्वरूपेणैव भानमिति विशेषणाद्यन्वयो भवत्येव। इयमजहत्स्वार्था 'वृत्तिवर्त्तनवादिनः' [कार्यशब्दवादिनः] 'तदवर्त्तनवादिनः' [नित्यशब्दवादिनः] च तुल्या। जहत्स्वार्था तु वृत्तिवर्त्तनवादिन एव। वृत्त्यवर्त्तनवादिनोऽपि मतद्वयम्—अखण्डानि निरवयवानि पदानीत्येकम्, सावयवानि [अर्थव्युत्पादनार्थं कल्पितावयवानि] पदानीति द्वितीयम्। तत्र प्रथमपक्षे उभयोरपि कदाप्यर्थाभावेन त्यक्तस्वार्थेत्यर्थकाजहत्स्वार्थापदप्रयोगोऽप्यसंगतः, द्वितीयपक्षे क्लृप्तशक्तेस्त्यागानौचित्येनाजहत्स्वार्थैव।

अक्षौहिणीरथन्तरादिपदे तु जहत्स्वार्थैव सर्वेषां तत्रावयवार्थस्य कस्मिन्नपि मते प्रतीत्यभावादित्यलमतिविस्तरेण, अधिकजिज्ञासुभिराकरग्रन्था अवलोकनीयाः ॥ २९ ॥

## *तद्धितीयो भावप्रत्ययः सापेक्षादपि* ॥ ३० ॥

सि०—सापेक्षस्यासमर्थत्वे पूर्वोत्तरन्यायेन बोधितेऽसमर्थस्य च वृत्त्ययोग्यतया तद्धितीयभावप्रत्ययोत्पत्तिरूपा वृत्तिरपि ततो न स्यादिति तत्प्राप्तये न्यायोऽयमुपात्तः । तत्र भावार्थे प्रत्ययः कृदधिकारोक्तोऽप्यस्ति तस्यापि सापेक्षादुत्पत्तिप्रसङ्ग इति तद्वारणाय तद्धितीय इति पदम् । अत्र च ज्ञापकं "पुरुषहृदयादसमासे" [ ७.१.७०. ] इति सूत्रस्थम् 'असमासे' इति पदम् । अनेन हि सूत्रेणासमासविषयाभ्यां पुरुष-हृदयशब्दाभ्यां भावे कर्मणि च वाच्येऽण् त्व-तलौ च विधीयेते, तथा च पुरुषस्य भावः कर्म वेत्यर्थे 'पौरुषम्, पुरुषत्वम्' इति च रूपे; समासे तु परमस्य पुरुषस्य भाव इत्यर्थेऽस्याप्राप्तौ 'भावे त्वतल्' [ ७. १. ५५. ] इति त्व एव भवति, न त्वनेनाण्, इति परमपौरुषमिति रूपव्यावृत्त्यर्थमसमासग्रहणं क्रियते । यदि च सापेक्षादयं प्रत्ययो न स्यात् तर्हि प्रकृतेऽपि पुरुषशब्दस्य परमशब्दसापेक्षत्वेन ततः प्रत्ययः स्वत एवाऽप्राप्त इति तदप्राप्त्यर्थम् 'असमासे' इति पदं व्यर्थमेव स्यात्, ततश्च स्वसार्थक्याय तज्ज्ञापयति—*तद्धितीयो भावप्रत्ययः सापेक्षादपि भवति*, इति ज्ञापिते चात्राणो वारणार्थमस्य स्वांशे चरितार्थ्यम् । फलं च काकस्य कृष्णस्य भावः 'काकस्य कार्ष्ण्यम्' इत्यत्र कृष्णस्य काकविशेषणस्य तदपेक्षत्वेऽपि ततो भावार्थकः "पति-राजान्त-गुणाङ्ग-राजादिभ्यः कर्मणि च" [ ७. १. ६०. ] इति ट्यण् सिद्ध इति । यत् तु—"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ।" इति नामलिङ्गानुशासनवचनाद् गुण-गुणिनोरभेदोपचाराद् गुणवाचकशब्देभ्यो मत्वर्थीयप्रत्ययलुबनुशासनाद् वा शुक्लादिगुणवाचकशब्दानां गुण-गुणिपरत्वयोः सर्वसम्मतत्वेन गुणवाचकात् कृष्णशब्दाद् भावे ट्यण्प्रत्यये पश्चात् काकेन सम्बन्धादस्य प्रयोगस्य [ 'काकस्य कार्ष्ण्यम्' इत्यस्य ] सिद्धिः संभाव्यते" इति केचिदाक्षिपन्ति, तन्न शोभनम्—तथा सति कार्ष्ण्यशब्दस्य जातिवाचकतापत्त्या तस्य काकेन सह सम्बन्धासम्भवः स्यात्, नहि कृष्णगुणगतजात्या काकस्य सम्बन्धसम्भावना । यदि च कृष्णगुणवाचकेन प्रकृत्यंशेन सम्बन्धविवक्षया षष्ठीति कथ्यते तदाऽपि तस्यासामर्थ्यं स्यादेवेति ततो भावप्रत्ययाप्राप्तिस्तदवस्थैव स्यादिति गुणिपरत्वमेव कृष्णशब्दस्य स्वीकृत्य ततो गुणार्थप्रत्यायनाय भावप्रत्ययोऽत्र विधेय इति, तथा सति कृष्णशब्दस्य विशेषणत्वेन सापेक्षत्वमस्त्येवेति प्रकृतन्यायं विनाऽत्र निर्वाहासम्भव एवेति तन्मतेन समाधानम् । स्वमतेऽत्र वर्णवाचकत्वाद् गुणवाचकत्वाच्च न प्रत्ययोऽपि तु गुणाङ्गवाचकत्वादिति पूर्वोक्तशङ्काया अनवकाशत्वमेवेत्यधिकं विवरणे स्पष्टम् ॥ ३० ॥

### *तद्धितीयो भावप्रत्ययः सापेक्षादपि* ॥ ३० ॥

त०—काकस्य कार्ष्ण्यमित्यादौ काकस्य कृष्णस्य [ कृष्णवर्णरूपगुणवतः ] भाव इत्यर्थे गुणाङ्गवाचकात् कृष्णशब्दात् "पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च" [ ७. १. ६० ] इति ट्यण् न प्राप्नोति, कृष्णशब्दस्य विशेषणभूतस्य विशेष्यकाकसापेक्षत्वात् सापेक्षस्य चासामर्थ्यादसमर्थस्य पदविधियोग्यत्वाभावात् । तत्र प्रत्ययसिद्धयेऽयं न्याय उपादीयते । यद्यपि कृष्णशब्दस्य कृष्णवर्णवाचित्वमप्यस्ति, तथा च "वर्णदृढादिभ्यष्ट्यण् च वा [ ७. १. ५९. ] इति ट्यणि कार्ष्ण्यपदं संसाध्य पश्चात् काकेन सम्बन्ध इति शङ्कितुं शक्यते, तथापि यत्र विशेषणत्वेन कृष्णशब्दो भावार्थाभिधानाय विवक्षितस्तत्रोक्तप्रयोगस्यासिद्धिशङ्काया निराकरणाभावात् । किञ्च—"यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्व-तलौ" इति "तस्य भावस्त्वतलौ" [ पा० सू० ५. १. ११९. ] इति सूत्रे महाभाष्योक्तवार्तिकव्याख्यायाम् "गुणशब्देन यावान् कश्चित् पराश्रयो भेदको जात्यादिरर्थः स सर्व इह गृह्यते, तस्य भावात्—विद्यमानत्वात्, द्रव्ये—विशेष्यभूते सत्त्वभावापन्नेऽर्थे, शब्दनिवेशः—शब्दस्य प्रवृत्तिर्यस्य गुणस्य शब्देन वाच्यस्यावाच्यस्य वा भावात् स त्वतलादिभावप्रत्ययाभिधेयः" इत्येवं वार्तिकार्थमुक्त्वा—"तत्र ये रूपादयः शब्दा गुणमात्रवृत्तयस्तेभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः—रूपत्वमिति, ये तु शुक्लादयो गुण-गुणिवृत्तयो गुण-गुणिनोरभेदोपचारान्मतुब्लोपाद् वा तेभ्यो गुणवृत्तिभ्यो गुणसमवायिनि सामान्ये एव भावप्रत्ययः, गुणिवृत्तिभ्यस्तु गुणे, अणु-महद्-दीर्घादयो नित्यं परिमाणिनि वर्तन्ते, न तु परिमाणमात्रे, तेन तेभ्यः परिमाणे गुणे भावप्रत्ययः" इत्यादिना कैयटेन भावप्रत्ययार्थस्य यो विचारः प्रदर्शितस्तद्रीत्या वर्णमात्रवाचकात् कृष्णशब्दाद् विधीयमानेन भावप्रत्ययेन कृष्णगुणगता जातिरेवाभिधातुं शक्यते, तस्याश्च काकेन सम्बन्धाभावात् काकस्य कार्ष्ण्यमिति प्रयोगो नैव स्यादिति तदर्थमिह गुणाङ्गवाचकस्यैव प्रयोग इति स्वीकार्यम्, गुणाङ्गवाचकाच्च विधीयमानो भावप्रत्ययः पूर्वोक्तकैयटरीत्या गुणवाचक इति तस्य काकेन सम्बन्धः साधुः घटते । एवं च—"ननु कृष्णस्य भावः कार्ष्ण्यमिति सामान्येन निष्पाद्य पश्चाद् विशेषप्रतिपत्त्यर्थं काकस्येत्यनेन योजयिष्यते, तथा च क्वैतन्न्यायावकाशः" इति शङ्कामुल्लिख्य, "उच्यते—कृष्णस्येत्यत्र कृष्णशब्दो गुणवाची गुणाङ्गवाची

वा त्वयेष्यते ? यदि कृष्णाख्यस्य वर्णस्य वाचक इति गुणवाची तदा ष्यण् न प्राप्नोति, गुणाङ्गतस्तद्विधानात्" इति न्यायार्थमञ्जूषान्यासे समाहितं, तत्तु न युक्तमिति प्रतिभाति–यतो वर्णमात्रवाचकादपि कृष्णशब्दात् "वर्णदृढादिभ्यः" [ ७. १. ५९. ] इति ष्यणो विधानं प्रसिद्धमेवेति कुतस्तदप्राप्तिरिति पूर्वोक्तसमाधानमेव युक्तम् । तथा चेह काकेन सह सम्बन्धस्य लाभाय गुणाङ्गवाचकत्वं कृष्णशब्दस्यास्थेयमिति ततो भावप्रत्ययेन गुणस्याभिधानात् पूर्वं सामानाधिकरण्यमूलापि काकपदे षष्ठी पश्चात् सम्बन्धमूला सम्पद्यते, तथापि च सापेक्षत्वमस्त्येवेति न्यायप्रवृत्तिं विना भावप्रत्ययोत्पत्तिरिह कर्तुमशक्येति भवत्यत्र न्यायप्रसरः ॥

अथात्र न्याये ज्ञापकं यदुक्तं "पुरुषहृदयादसमासे" [ ७. १ ७० ] इति सूत्रे 'असमासे' ग्रहणमिति, तद् विचार्यते-तत्र 'असमासे' इति न पर्युदासः किन्तु प्रसज्यप्रतिषेधः, पर्युदासे हि समासभिन्नायां तत्सदृश्यां कस्याञ्चिद् वृत्तावेव स्यादित्यर्थो लभ्यते । तथा च केवलात् पुरुषहृदयशब्दान्न स्यादिति न्यासकृतः । 'असमासे' इत्यत्र च विषयसप्तमी, न सत्सप्तमी, सत्सप्तम्यामाश्रितायां चासमासग्रहणस्य वैयर्थ्यमेव स्यात्, समासे सति *ग्रहणवता नाम्ना न तदन्तविधिः* इति न्यायेन तदन्तविधिनिषेधात् परमपुरुषादिशब्देभ्यः प्रत्ययस्याप्राप्तेः । अतश्च विषयग्रहणात् समासात् पूर्वमेव समासार्थप्रक्रियावाक्य एव परमस्य पुरुषस्य भाव इत्येवं विवक्षायां पुरुषशब्दादनेनाणि "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति परिभाषया पुरुषशब्दस्यादिस्वरस्य वृद्धौ 'परमपौरुषम्' इत्यनिष्टरूपापनोदार्थमसमासे इति क्रियते, तच्चानावश्यकम्–परमस्य पुरुषस्य भाव इति विग्रहानुसारिप्रक्रियावाक्ये परमशब्देन सह सामर्थ्यमारूढस्य पुरुषशब्दस्य केवलस्य समर्थत्वाभावात् प्रत्ययाप्राप्तेः । अत्र च परमस्य पुरुषस्य भाव इति वाक्ये "सन्महत्०" [ ३. १. १०७. ] इति समासप्राप्तावपि ततो भावप्रत्यये कृते तदपेक्षया सम्बन्धषष्ठ्यां सत्यां न तत्प्राप्तिः सामानाधिकरण्याभावादिति "षष्ठ्ययत्नात्" [ ३. १. ७६. ] इति षष्ठीतत्पुरुष एव भवति, तथापि च समासविषयता तिष्ठत्येव । अतश्च केवले पुरुषे सामर्थ्याभावात् ततः प्रत्ययाप्राप्तिरिति व्यर्थमसमासेपदं प्रकृतन्यायं ज्ञापयति, तदुक्तं प्रकृतसूत्रे [ "पुरुषहृदयादसमासे" ७. १. १७. इति सूत्रे ] बृहद्वृत्तौ–"अत एव निषेधात् सापेक्षादपि भावप्रत्ययो भवति" इति । अत्र च लघुन्यासे परमपौरुषशब्दस्यान्यथाऽपि सिद्धिरित्थं निराकृता–"ननु परमं च तत् पौरुषं चेति कृते परमपौरुषमिति भवति वा ?, उच्यते–सादृश्यान्न भवति, एवं हि कृते परमस्य पुरुषस्य भावः परमं च तत् पौरुषमिति वा विशेषो न ज्ञायते इति" । तथा च तस्य रूपस्य सन्दिग्धत्वेन शास्त्रस्य चासन्दिग्धानुष्ठानसाधकतया न तस्यापि रूपस्यानुज्ञेति तदाशयः । वस्तुतस्तु–तादृशे विग्रहे सति पौरुषे एव परमत्वं प्रतीयेत, न तु पुरुषे, तथा च पुरुषे परमपदान्वये समीहिते ततोऽण् न, पौरुषे च तदन्वयविवक्षायामपि बाधकाभाव इति युक्तं प्रतिभाति । भवति ह्यर्थभेदाच्छब्दभेद इत्यर्थानुसारेणैव साधुत्वासाधुत्वव्यवस्थायाः सम्बन्धादन्यार्थे तादृशरूपसिद्धावसमासे इत्यस्य बाधकत्वं नोचितमिति पौरुषे परमत्वप्रतिपादनाय परमपौरुषमिति साध्वेवेति ॥ ३० ॥

## *गति-कारक-ङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः* ॥ ३१ ॥

सि०—अनेन न्यायेन कृदन्तैः सह गति-कारक-ङस्युक्तानां विभक्त्युत्पत्तेः प्रागेव समासो नियम्यते । तत्रेदमाशङ्क्यते यत्–"नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३. १. १८. ] इति सूत्रमेव समासविधायकसूत्रेषु समुपतिष्ठते, । तथा च नाम्न एव नाम्ना सह समासो विधीयते सर्वत्र न विभक्त्यन्तस्येति विभक्त्युत्पत्तेः समासार्थमनपेक्षणात् स्वत एव सर्वत्र विभक्त्युत्पत्तेः पूर्वमेव समासः स्यादेवेति कृदन्तानां विशिष्य विभक्त्युत्पत्तेः पूर्वं समासबोधनमनवसरप्राप्तमिति; अत्रोच्यते–"नाम नाम्ना०" [ ३. १. १८. ] इत्यनेन यद्यपि विभक्त्यन्तेन सह विभक्त्यन्तं समस्यते इत्यर्थो न लभ्यते तथापि "ऐकार्थ्ये" [ ३. २. ८. ] इति सूत्रेण ऐकार्थ्यनिमित्तस्य स्यादेर्लुब्विधानादैकार्थ्यस्य च विभक्तिसहकारेणैव प्रतिपादनाद् विभक्त्यन्तस्यैव समास इति लभ्यते, न चैकस्य विभक्त्यन्तत्वे परस्परं सम्बन्धः शक्यते बोधयितुमित्युभयोः पदयोः सर्वत्र समासे विभक्त्यन्तत्वमपेक्षितमित्यायाति । तथा च यत्र गति-कारक-ङस्युक्तानां कृदन्तैः सह समासो भवति तत्र कृदन्तस्यापि स्याद्यन्तत्वं प्राप्तमिति तद्वारणाय न्यायोऽयमाश्रीयते । तत्र गतिः–"ऊर्याद्यनुकरण०" [ ३. १. २. ] इत्यादिसूत्रेण गतिसंज्ञिता उपसर्गा ऊर्यादयश्चान्ये च तत्प्रकरणपरिभाषिताः; कारकाणि प्रसिद्धानि; ङस्युक्तानि कृत्प्रकरणे–"कर्मणोऽण्" [ ५. ३. १४. ] इत्यादिरूपेण पञ्चम्यन्तपदेनोक्तानि, ङसीत्यस्य शब्दस्येह पञ्चमीस्यादिविभक्त्युपलक्षकत्वात्; एतानि विभक्त्यन्तानि कृदन्तैः सह विभक्त्युत्पत्तेः प्रागेव समस्यन्ते इति न्यायार्थः । अत्र ज्ञापकं चैकदेशानुमत्या "क्रीतात् करणादेः" [ २. ४. ४४. ] इति सूत्रेणाऽदन्तात् क्रीतशब्दात् ङीविधानम् । तथाहि–क्रीतशब्दस्य विशेषणं करणादेरिति, करणादित्वं च समासं विनाऽसम्भवि, समासश्च पूर्वोक्त-

रीत्या विभक्त्यन्तानामेवेति क्रीतशब्दस्यापि विभक्त्यन्तत्वे सत्येव समासेन भाव्यम्, विभक्त्युत्पत्तिश्च कारक-संख्याद्युपस्थितिनिबन्धनेति विभक्त्युत्पत्तेः पूर्वमेव लिङ्गोपस्थितिनिमित्तस्यापः प्रवृत्तिरिह स्यात्, जाति-द्रव्य-लिङ्ग-संख्या-कारकरूपाणां नामार्थानां क्रमिकोपस्थितिस्वीकारात्, पूर्वोपस्थितनिमित्तकत्वेन विभक्त्युत्पत्तितो लिङ्गनिमित्तकाबुत्पत्तेरन्तरङ्गत्वादित्यदन्तत्वाभावाददन्तात् क्रीतशब्दाद् विधीयमानो ङीर्निरवकाश एव स्यादिति सोऽदन्तादिति निर्देशो व्यर्थीभूय कारकाणां विभक्त्यन्तानां कृदन्तेन विभक्त्युत्पत्तेः पूर्वमेव समासं ज्ञापयिष्यति । एकदेशानुमत्या लक्ष्यानुरोधाच्च गति-ङस्युक्तविषयेऽप्यस्य न्यायस्य प्रामाण्यं स्वीक्रियते स्थालीपुलाकन्यायेन । तत्र गतेर्विभक्त्यन्तस्य कृदन्तेन समासस्योदाहरणं यथा–'विष्किरी' इति, अत्र विकिरति पक्षावित्यर्थे गतिसंज्ञे वौ उपपदे किरतेः "नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः" [ ५. १. ५४. ] इति के कृते पक्ष्यर्थमात्रापेक्षत्वेनान्तरङ्गत्वात् प्रथममेव "वौ विष्किरो वा" [ ४. ४. ९६. ] इति स्सटि कृते 'वि+स्किर' इति स्थिते स्किरेत्यनेन कृदन्तेन सह विभक्त्युत्पत्तेः प्रागेव "गति-क्वन्यः०" [ ३. १. ४२. ] इति तत्पुरुषसमासे ततो "असो-ङ-सिवू-सह-स्सटाम्" [ २. ३. ४८. ] इत्यनेन स्सटः सस्य षत्वे च स्त्रीत्वविवक्षायामदन्तत्वात् "जातेरयान्तनित्यस्त्रीशूद्रात्" [ २. ४. ५४. ] इति ङीः सिद्ध्यति । एतन्न्यायाभावे तु विभक्त्यन्तेन समासे समाश्रीयमाणे कर्मादिकारक-संख्याद्यपेक्षत्वेन बहिरङ्गाया विभक्तेरुत्पत्तेः पूर्वमेव स्त्रीत्वमात्रापेक्षत्वेन स्त्रीत्वस्य च कर्मादितः पूर्वमेवोपस्थित्यान्तरङ्गत्वादापः प्रवृत्त्याऽदन्तत्वाभावाद् ङीर्न स्यात्, स्वीकृते चास्मिन् न्याये विभक्त्युत्पत्तेः पूर्वमेव समासे विशेषविहितत्वादापं बाधित्वा ङीर्भवति ॥ १ ॥ कारकस्य कृदन्तेन विभक्त्युत्पत्तेः पूर्वं समासस्योदाहरणं यथा–'चर्मक्रीती' इति, अत्र 'चर्मणा अक्रायि' इत्यर्थे क्रीधातोः क्ते 'चर्मन्+टा+क्रीत' इति स्थिते एतन्न्यायबलात् स्याद्युत्पत्तेः पूर्वमेव "कारकं कृता" [ ३. १. ६८. ] इति समासे ततः स्त्रीत्वविवक्षायां "क्रीतात् करणादेः" [ २. ४. ४४. ] इत्यनेन क्रीतशब्दाददन्तान्ङीः सिद्धः, एतन्न्यायाभावे तु विभक्त्यन्तेन क्रीतशब्देन समासः स्यादिति विभक्त्युत्पत्तेः पूर्वमेव पूर्वोक्तरीत्याऽऽपि सति अदन्तत्वाभावान्ङीर्न स्यात्, कारकस्य विभक्त्यन्तत्वनियमाच्च चर्मन्शब्दस्य नलोपः सिद्धः ॥ २ ॥ ङस्युक्तस्य विभक्त्यन्तस्य कृदन्तेन विभक्त्युत्पत्तेः पूर्वं समासस्योदाहरणं यथा–'कच्छपी' इति, कच्छं पिबतीत्यर्थे नाम्न इत्याधिकारस्थेन "स्था-पा-स्ना-त्रः कः" [ ५. १. १४२. ] इति के 'कच्छ+अम्+प' इति स्थिते विभक्त्युत्पत्तेः पूर्वमेव "ङस्युक्तं कृता" [ ३. १. ४९. ] इति तत्पुरुषसमासे स्त्रीत्वविवक्षायां "जातेरयान्त०" [ २. ४. ५४. ] इति ङीर्भवति, एतन्न्यायाभावे तु विभक्त्यन्तेन सह समास इति पूर्ववद् विभक्त्युत्पत्तेः पूर्वमेव स्त्रीत्वनिमित्तके आपि सति विभक्त्युत्पत्तौ समासेऽदन्तत्वाभावान्ङीर्न स्यात् । इह समासात् पूर्वं जातेरप्रतीयमानत्वान्न जातिलक्षणङीप्रत्ययस्य प्राप्तिरिति बोध्यम् । ङस्युक्तपदे ङसेः पञ्चमीविभक्त्युपलक्षकत्वस्वीकाराच्च पञ्चमीभ्यसोक्तस्यापि संग्रहाद् विषधरीत्यादिसिद्धिः, तत्र हि विषं धरतीत्यर्थे "आयुधादिभ्यो धृगोऽदण्डादेः" [ ५. १. ९४. ] इत्यच्प्रत्यये 'विष+अम्+धर' इति स्थितौ विषशब्दस्यापि ङस्युक्तत्वात् तद्विषयेऽपि प्रकृतन्यायप्रवृत्त्या धरेत्यस्य स्याद्युत्पत्तेः पूर्वमेव "ङस्युक्तं कृता" [ ३. १. ५९. ] इति तत्पुरुषसमासे ततः स्त्रीत्वविवक्षायां "जातेरयान्त०" [ २. ४. ५४. ] इति ङीः सिद्धः; यदि चात्रैतन्न्यायप्रवृत्तिर्न स्यात् तर्ह्यत्रापि पूर्ववद् विभक्त्युत्पत्तेः पूर्वमेवाऽऽपि ततो विभक्त्युत्पत्तौ समासेऽदन्तत्वाभावान्ङीर्न स्यात् । अत्र कारकांशमात्रे ज्ञापकमुपन्यस्तं नान्यत्र । प्राचीनैस्तु 'विष्किरी-कच्छपी' इत्यादिसिद्ध्यै यत्नान्नराकरणं गतिङस्युक्तविषये ज्ञापकं वर्णितं, तच्च पूर्वं तत्तत्स्थलविशेषे प्रत्युक्तमेवेति न पुनः प्रत्युच्यते, विशेषश्च विवरणे स्पष्टः ॥ ३१ ॥

***गति-कारक-ङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः* ॥ ३१ ॥**

त०—विष्किरी, कच्छपी, अश्वक्रीती' इत्यादिलक्ष्याणां सिद्धयेऽयं न्यायः समाश्रीयत इति वृत्तौ प्रदर्शितमेव । एषु हि लक्ष्येषु विभक्त्युत्पत्तेः पूर्वं समासे सति जातिलक्षणोऽन्त्ये च करणपरत्वनिमित्तो ङीर्भवति, अन्यथा स्वार्थ-द्रव्य-लिङ्ग-संख्या-कारकाणां क्रमेणोपस्थितिः, येन च क्रमेण यदर्थोपस्थितिस्तेनैव क्रमेण तदर्थनिमित्तककार्योत्पत्तिरिति सिद्धान्ताद् विभक्त्युत्पत्तेः प्रागेव स्त्रीत्वस्योपस्थित्या तन्निमित्तकस्यापः प्रवृत्त्या ङीर्न स्यादित्यावेदितमेव । तत्रेदमाशङ्क्यते–उत्सर्गापवादस्थलेऽयं क्रमो भवति यत्–उत्सर्गशास्त्रमपवादशास्त्रविषयतायां भाविन्यामपि न प्रवर्त्तते, अन्यथाऽस्य प्रवृत्तावपवादशास्त्रस्यानर्थक्यं तिष्ठेदेव, तमेव चार्थमन्ये वैयाकरणाः *उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते* इति न्यायेन सूचयन्ति, तदर्थं चैवं वर्णयन्ति–उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसंभावनायामुत्सर्गशास्त्रस्य न प्रवृत्तिरिति । तथा च विष्किरीत्यादौ यद्युत्सर्गशास्त्रमाप्सूत्रं न प्रवर्त्तेत तदाऽपवादशास्त्रं "जातेरयान्त०" [ २. ४. ५४. ] इति प्रवर्त्तेतेति सम्भावनायाः सत्त्वेन पूर्वमापोऽप्रवृत्तिरेवेति विभक्त्युत्पत्तेः पश्चादपि समासे दोषाभावेन नात्र न्यायावश्यक-

तेति । अत्र केचित्-अपवादशास्त्रकृतसंकोचप्रकारेषु भविष्यदपवादविषयातिरिक्तत्वेनापि सङ्कोच इत्यस्मिन्नेवार्थे प्रकृत [ *उपसञ्जनिष्यमाण० *इत्यादि ]न्यायतात्पर्येण 'विष्किर' 'कच्छप' इत्यादिसमुदायस्यैव जातिवाचकत्वेन 'जातेरयान्त०" [ २. ४. ५४. ] इति सूत्रविषयत्वात् तदतिरिक्तत्वेन सङ्कोचसम्भवेऽपि 'स्किर-प'शब्दाभ्यामाप् स्यादेव । अथापवादविषयघटकातिरिक्तत्वेनापि सङ्कोच इति नात्रापः प्रवृत्तिः, अन्यथा सिद्धान्ते विभक्त्युत्पत्तेः प्राक् समासेऽप्यापः स्त्रीत्वमात्रनिमित्तकत्वेन तदपेक्षया जातिरूपस्याधिकस्यापेक्षणान्ङीविधानस्य बहिरङ्गत्वेनान्तरङ्गत्वादाप् स्यादेव, न चैवं सङ्कोचे 'अजया क्रीता-अजाक्रीती' इत्यादौ "क्रीतात् करणादेः" [ २. ४. ४४. ] इत्यपवादविषयघटकत्वेनाजशब्दादप्याप् न स्यादिति वाच्यम्, अपवादविषयान्तातिरिक्तत्वेन सङ्कोचे तात्पर्यादिति चेत्? न-तादृशसङ्कोचे मानाभावात्, किन्तु समकालिकापवादशास्त्रविषयातिरिक्तत्वेनैव सङ्कोचः, तथा चेहोत्सर्गस्यापोऽपवादस्य च ङीविधेः समकालप्राप्त्यभावेन तत्सङ्कोचविषयाभावाद् विभक्त्युत्पत्तेः पूर्वमापः प्रवृत्तौ बाधकाभावः, ङीस्तु ततः [ विभक्त्युत्पत्तेः ] पूर्वं न प्रवर्त्तेत, त्वन्मते तदवस्थायां समासाप्राप्त्या समुदाये शक्तेरनुत्पत्त्या जातिवाचकत्वाभावादित्याद्यावेदितं पूर्वं वृत्तावेव, 'चर्मक्रीती' इत्यत्रापि समासात् पूर्वं करणादित्वाभावेन न ङीप्राप्तिरिति बोध्यम् । "ङस्युक्तं कृता" [ ३. ५. ४९. ] इति सूत्रव्याख्यायां बृहद्वृत्तौ चायं न्याय 'इष्टि'त्वेनोक्तो न तु ज्ञापकसिद्धत्वेन, तथाहि-तत्रत्यो ग्रन्थः-"इह गति-कारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समास इष्यते, तेन 'प्र+स्+स्थ' इत्यादौ 'चर्मन्+टा+क्रीत' 'अभ्र+टा+विलिप्त' 'कच्छ+अम्+प' इत्यादौ च समासे सति अकारान्तत्वान्ङीः सिद्धः-प्रष्ठी, चर्मक्रीती, अभ्रविलिप्ती, कच्छपी, इत्यादि । यदि पुनर्विभक्त्यन्तैः कृदन्तैः समासः स्यात् तदाऽन्तरङ्गत्वाद् विभक्तेः प्रागेव आपः प्राप्तावकारान्तत्वाभावान्ङीर्न स्यात् । तथा 'माषान्+वापिन्' 'व्रीहीन्+वापिन्' इत्यादौ समासे नकारस्यान्तत्वाण्णत्वं सिद्धं-माषवापिणी, व्रीहिवापिणी, विभक्त्यन्तेन तु समासेऽन्तरङ्गत्वाद् विभक्त्युत्पत्तेः प्रागेव ङीप्राप्तौ नकारास्यानन्त्यत्वाण्णत्वं न स्यात्" इति । तथा च तत्र वचनरूपेणैवायं पठितो न तु ज्ञापकसिद्धत्वेन । तदाशयश्चायमेव, तद्यथा-गति-ङस्युक्तविषये ज्ञापकाभावात् कारकमात्रविषये ज्ञापकत्वोपन्यासाद् वरमस्य वचनरूपत्वेनैव स्वीकार इति । अन्ये वैयाकरणास्तु-सर्वांशेनैवात्र न्याये ज्ञापकसिद्धत्वं वर्णयन्ति, परं स्वमते प्रक्रियाभेदान्न तदाश्रयितुं शक्यते, ततश्च वरं वचनरूपेणैव स्वीकारः । केचिदस्य न्यायस्यानित्यत्वमिच्छन्ति, तथा च "सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी ।" इति प्रयोगे विभक्त्युत्पत्तेः पश्चात् समासेन पूर्वमेवापः प्रवृत्त्या ङीप्राप्त्यभावाद्धनक्रीतेति सिद्ध्यति । बृहद्वृत्तौ "क्रीतात् करणादेः" [ २. ४. ४४. ] इति सूत्रव्याख्यायां तु समाधानान्तरमुक्तम्, तथाहि-"कथं "सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी ।" इति ? धनं च सा क्रीता चेति कर्मधारयोऽयम्, करणविवक्षायामपप्रयोग एव, केचित्तु-धनेन क्रीतेत्यत्रावन्तेनापि समासमिच्छन्ति, बहुलाधिकारात्, तदाऽकारान्तत्वाभावान्ङीर्न भवति" इति । तथा च स्वमतेऽस्य न्यायस्य नानित्यत्वमिष्टमिति स्पष्टम् । परिभाषेन्दुशेखरे नागेशेनापि परोक्तमनित्यत्वोदाहरणरूपेण धनक्रीतेति प्रकृत्याजादिगणे पाठकल्पनात् तस्य सिद्धिमाश्रित्य तन्मते प्रमाणाभाव उक्तः । पूर्वोक्तबृहद्वृत्तिग्रन्थे प्रकृतन्यायस्य गतिसंज्ञकस्य कृदन्तेन विभक्त्युत्पत्तेः पूर्वं समासस्य प्रष्ठीत्युदाहरणं दत्तम्, अस्माभिश्च विष्किरीति । तस्यायमाशयः-प्रष्ठीत्यस्य गत्युदाहरणत्ववत् ङस्युक्तोदाहरणत्वमपि सम्भवति, तथाहि-अत्र प्रष्ठ इत्यस्य "उपसर्गादातो डोऽश्वः" [ ५. १. ५६ ] इति डप्रत्ययान्तत्वात् तत्र चोपसर्गादिति पञ्चम्यन्तपदेनोक्तस्य प्रस्य ङस्युक्तत्वेन "ङस्युक्तं कृता" [ ३. १. ४९. ] इति सूत्रेणापि समाससम्भवान्नेदं गतेरसाधारणमुदाहरणमिति । ङस्युक्तपदं च न केवलं पञ्चम्यन्तपरमपि तु पञ्चम्यर्थविहितप्रत्ययपरमपि, तथा च *प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानामपि ग्रहणम्* इति न्यायात् पञ्चम्यन्ताद् यः स्वार्थिकप्रत्ययस्तस् विहितस्तदन्तस्यापि ङस्युक्तत्वेन ग्रहणं भवति, यथा-"यत्कर्मस्पर्शात् कर्त्रङ्गसुखं ततः" [ ५. ३. १२५. ] इति सूत्रे "किमद्व्यादिसर्वाद्यवैपुल्यवहोः पित्तस्" [ ७. २. ८९. ] इति तस्प्रत्ययान्तं तत इति पदम् । तथा च पूर्वोक्तसूत्रार्थः-येन कर्मणा स्पृश्यमानस्य कर्तुरङ्गस्य सुखं जायते तस्मात् कर्मणः पराद् धातोः क्लीबे भावेऽर्थेऽनट् इति, यथा-पयःपानं सुखमित्यादि, अत्र पयःशब्दस्य तत इति ङस्युक्तत्वेनैतन्न्यायादविभक्त्यन्तेनैव पानशब्देन सह "ङस्युक्तं कृता" [ ३. १. ४९. ] इति समासे कृते पयसः पानसुखमित्यादि वाक्यं न भवति, न वा पयसः पानं सुखमिति, यदि च विभक्त्यन्तेन समासः स्यात् तर्हि समासान्तरवत् कदाचिद् वाक्यमपि प्रयुज्येतेति ॥ ३१ ॥

## *समास-तद्धितानां वृत्तिर्विकल्पेन वृत्तिविषये च नित्यैवापवादवृत्तिः* ॥ ३२ ॥

सिं०—समासतद्धितानामित्यत्र विषयत्वं षष्ठ्यर्थः सम्बन्ध एव वा, समासतद्धितविषया वृत्तिर्विकल्पेन भवति, तत्सम्बन्धिनी वा वृत्तिर्विकल्पेन भवति । पदानां पृथगर्थानां शास्त्रानुशासनबलात् स्वघटकपदान्यपदार्थकथनमेव वृत्तिः,

तदुक्तमभियुक्तैः–परार्थाभिधानं वृत्तिरिति । तत्र वृत्तेस्तात् त्रैविध्यं चातुर्विध्यं पाञ्चविध्यं वा । त्रिविधा वृत्तिरिति मते समास-तद्धित-नामधातुरूपा वृत्तयः, कृद्वृत्तिश्चतुर्थी, एकशेष-वृत्तिः पञ्चमीत्यपि केचित् । क्रमेणोदाहरणानि–राजपुरुषः, औपगवः, पुत्रकाम्यति, कुम्भकारः, घटा इति, अत्र सर्वत्र परार्थाभिधानसत्त्वात् । तत्र वाक्येनार्थस्याभिधाने प्राप्ते आरभ्यमाणा वृत्तिः *येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधको भवति*इति न्यायाद् वाक्यस्य सर्वथा बाधिकैव प्राप्तेति विकल्पेन वाक्यस्यावकाशोऽनेन न्यायेन बोध्यते। एवं चात्र विषये उत्सर्गापवादयोरपि विकल्पेन प्रवृत्तौ प्राप्तायां तत्रोत्सर्गस्य बाधेनापवादवृत्तेर्नित्यमेव प्रवृत्तिरित्यपि बोध्यते। तथा चायं न्यायश्चतुर्धा विभक्तुं शक्यते-समासस्य वृत्तिर्विक-ल्पेन १, समासवृत्तावपवादवृत्तिर्नित्या २, तद्धितस्य वृत्ति-र्विकल्पेन ३, तत्राप्यपवादवृत्तिर्नित्या ४ इति । तत्र प्रथमेंऽशे ज्ञापकम्-"नित्यं प्रतिनाऽल्पे" [ ३. १. ३७. ] इति सूत्रे नित्यग्रहणम्, तद्धि समासविधानसामर्थ्यादेव नित्यत्वे सिद्धेऽनेन न्यायेन प्राप्तस्यैव विकल्पस्य बाधनाय कृतमित्येत-न्न्यायं विनाऽनुपपद्यमानं न्यायमेनं ज्ञापयति, तेन 'शाकप्रति' इति नित्यमेव समासप्रयोगः, तदर्थप्रदर्शनं तु समासाघटक-पदसहकारेणैव–शाकस्याल्पत्वमिति, 'अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा' इति तल्लक्षणात् । फलं त्वस्यांशस्य 'राज्ञः पुरुषः' इति वाक्यस्यापि 'राजपुरुषः' इति समासवत् साधुत्वमिति ॥ १ ॥ द्वितीयांशे ज्ञापकं तु "पारे-मध्ये-ऽग्रे-ऽन्तः षष्ठ्या वा" [ ३. १. ३०. ] इत्यत्र वाग्रहणम्, तद्धि स्वविषये पक्षे औत्सर्गिकषष्ठीसमासाभ्यनुज्ञानार्थम्, तेन च पारेगङ्गमित्यव्ययीभाववत् पक्षे गङ्गापारमिति षष्ठीसमासोऽपि, अन्यथा [ वाग्रहणाभावे ] अस्यापवादविधित्वेन स न प्रवर्त्तेत। एतन्न्यायांशाभावे तु षष्ठीसमासप्रवृत्तौ बाधकाभावे तदभ्य-नुज्ञानार्थस्य वाग्रहणस्य वैयर्थ्यं स्यादेवेति तेन विना[ समास-वृत्तिविषये नित्यैवापवादवृत्तिरित्यंशेन विना ]ऽनुपपद्यमानो वाशब्दस्तदंशं ज्ञापयति । फलं चास्य पूर्वांऽशः कायस्येत्यर्थे "पूर्वापराधरो०" [ ३. १. ५२. ] इत्यंशितत्पुरुषे न्याय-पूर्वांशेन विकल्पेन प्रवृत्तेः पक्षे षष्ठीतत्पुरुषेण कार्यपूर्व इति प्रयोगो नेति ॥ २ ॥ तृतीयांशे ज्ञापकं तु–"नित्यं ञ-ञिनोऽण्" [ ७. ३. ५८. ] इत्यत्र नित्यग्रहणम्, तद्ध्यनेन न्यायेन विकल्पे प्राप्ते सत्येव सार्थकतां लभते, अन्यथा विधानसामर्थ्या-देव नित्यत्वसिद्धेस्तद्वैयर्थ्यं स्यात्। तथा च नित्यग्रहणं स्वसार्थ-क्याय न्यायमिमं ज्ञापयति, ज्ञापिते चैतन्न्यायप्राप्तविकल्प-प्रतिषेधार्थं तस्य स्वांशे चारितार्थ्यम्, तेन व्यतिहारेण व्यव-क्रोशनमित्यर्थे स्त्रीत्वविवक्षायां "व्यतिहारेऽनीहादिभ्यो ञः" [ ५. ३. ११६. ] इति ञे तदनु "नित्यं ञ-ञिनोऽण्" [ ७. ३. ५८ ] इति स्वार्थेऽणि ङ्यां च व्यावक्रोशीति सिद्धिः, न चाण्प्रत्ययं विना केवलञान्तो व्यवक्रोशेति प्रयोगः, तेन प्रज्ञ एव प्राज्ञ इतिवत् व्यवक्रोशैव व्यावक्रोशीति विग्रहवाक्यं न भवति। अन्यत्र फलं च 'औपगव' इत्यादिवत् उपगोरपत्य-मिति वाक्यस्यापि प्रयोगः इति ॥ ३ ॥ चतुर्थांशे ज्ञापकं च–"वोदश्वितः" [ ६. २. १४४. ] इति सूत्रे वाग्रहणम्, तद्धि स्वविधेयस्येकणोऽभावपक्षे औत्सर्गिकस्याणोऽभ्यनुज्ञानार्थं क्रियते, तच्चैतन्न्यायांशाभावे स्वभावत एव सिद्धमुभयोः शास्त्रयोः प्रवृत्तेर्निराबाधात्, प्रथमांशेन वृत्तेर्वैकल्पिकत्व-ज्ञापनादेव पक्षे वाक्यस्य तदन्यस्य वौत्सर्गिकविधेः प्रवृत्तेः सिद्धत्वात् । ततश्चापवादशास्त्रेणैव वृत्तिरिति रूपमिमं न्यायांशं विना वाग्रहणस्य सार्थक्यमनुपपन्नमेवेति तदेतन्न्यायांशज्ञापकं भवितुमर्हति । ज्ञापिते चास्मिन्न्याये वाग्रहणाभावे इकणेव स्यान्न त्वौत्सर्गिकोऽणिति 'औदश्वित' इति रूपं न स्यादिति तत्साधनाय वाग्रहणस्य स्वांशे चारितार्थ्यम् । फलं चैतदंशस्य गर्गस्यापत्यं वृद्धमित्यर्थे "गर्गादेः" [ ६. १. ४२. ] इति यञेव भवति, न तु "अत इञ्" [ ६. १. ३१. ] इत्यौत्सर्गिक इञ् । एवं चायं न्यायस्तत्तत्सूत्रैः प्रतीयमानस्य समास-तद्धितवृत्तिविषयस्य नियमस्यानुवादमात्रं, न तु किञ्चिन्नवीनं विदधाति । अन्ये च तान्त्रिका नेदृशं न्यायं पृथगनुमन्वते, सूत्रेष्वेव तत्र तत्र नित्यग्रहणस्य वाग्रहणस्य कृतत्वाद् व्यव-स्थायाः प्रतीयमानत्वात् । स्वमतेऽपि पूर्वोक्तरीत्या "नित्यं प्रतिना० [ ३. १. ३८. ] इति सूत्रे नित्यग्रहणेनान्यत्र समासे वाक्यमपि स्यादिति सूच्यते । एतच्च बृहद्वृत्तावपि तत्सूत्र-व्याख्यायां स्पष्टमेवोक्तम्, एवं–"पारे-मध्ये०" [ ३. १. ३०. ] इति सूत्रे वाग्रहणेन समासविषयेऽन्यत्रापवादवृत्ते-र्नित्यत्वमनुमापितमेव, नहि तेन पक्षे वाक्याभ्यनुज्ञा क्रियते इति शक्यते वक्तुं, तस्याः पूर्वज्ञापितेनापवादसमासविषये वृत्तेर्वैकल्पिकत्वेनैव सिद्धेः । तथा च समासविकल्पविधायका-पवादशास्त्रेण पक्षे उत्सर्गशास्त्रस्य प्रवृत्तिरेवाभ्यनुज्ञायते इति सिद्धम् । एवं तद्धितवृत्तेर्वैकल्पिकत्वं तद्धितप्रकरणादिस्थेन "वाऽऽद्यात्" [ ६. १. ११. ] इति सूत्रात् प्रवर्त्तमानेन वाग्रहणेनैवं सिद्धम्, "वोदश्वितः" [ ६. २. १४४. ] इत्यादि-सूत्रस्य वाग्रहणेन च तद्धितवृत्तीनामपवादविषयेऽन्यत्र नित्यैव प्रवृत्तिरित्यपि सूचितमेव । तथा च यत्र वाग्रहणं क्रियते तत्रैवापवादवृत्तिविषये औत्सर्गिकवृत्तिरन्यत्रापवादवृत्तिर्वाक्यं चेति निश्चीयत इति नायं न्यायोऽज्ञातविषयज्ञापकः । अत एव च नास्य चञ्चलतापि सूत्रबोध्यार्थबोधकत्वेन तदयोगात्। तथा-प्येकत्र सर्वार्थस्य संग्राहकत्वेन न्यायरूपेणोपन्यास इति ॥ ३२ ॥

***समास-तद्धितानां वृत्तिर्विकल्पेन, वृत्तिविषये च नित्यैवापवादवृत्तिः* ॥ ३२ ॥**

त०—समास-तद्धितादिषु वृत्तिषु सर्वत्र सामर्थ्यमपेक्ष्यते, तेषां पदविधित्वेन पदविधेश्च समर्थाश्रितत्वस्य "समर्थः पदविधिः" [ ७. ४. ११२. ] इति परिभाषया भाषितत्वात् । सामर्थ्यं च द्विधा–व्यपेक्षा, एकार्थीभावश्च, तयोश्च स्वरूपं पूर्वं निरूपितमेव । तत्र व्यपेक्षायां परस्पराकाङ्क्षावशात् सामर्थ्यमिति तत्र वाक्यमेव भवति, एकार्थीभावे च संगतार्थस्य संसृष्टार्थस्य वा साधुत्वमिति तत्र वृत्तिर्भवतीत्ययं सिद्धान्तोऽभिधानस्वाभाव्यादेव समाश्रितः । तत्र तयोर्व्यवस्थितयोः पक्षयोरेकेन वाक्यमपरेण वृत्तिरिति सर्वासु वृत्तिषु वाक्यमपि भवत्येव, स एव चार्थोऽनेन न्यायेन समास-तद्धितविषयेऽनूद्यते । न्यायसिद्धोऽप्ययमर्थः शास्त्रेण तत्र तत्र वाशब्द-नित्यशब्दप्रक्षेपेण विशदीकृतः, इतीयं वस्तुस्थितिः । तत्र वृत्तिस्त्रिधा–समासवृत्तिस्तद्धितान्तवृत्तिर्नामधातुवृत्तिश्चेति भेदात् । यद्यपि "समर्थः पदविधिः" [ ७. ४. १२२. ] इति सूत्रे बृहद्वृत्तौ–"समास-नामधातु-कृत्-तद्धितेषु वाक्ये व्यपेक्षा वृत्तावेकार्थीभावः, शेषेषु पुनर्व्यपेक्षैव सामर्थ्यम्" इति वदताचार्येण कृद्वृत्तिरपि स्वीकृतेति वृत्तेश्चातुर्विध्यमुचितम्, अथापि तस्याः [ कृद्वृत्तेः ] समासवृत्तावन्तर्भावात् त्रैविध्यमेवावशिष्यते, यतः कुम्भकार इत्यादिकृद्वृत्तौ "ङस्युक्तं कृता" [ ३. १. ४९. ] इत्यादिना समासभवनात्, अत एव "वृत्त्यन्तोऽसषे" [ १. १.    ] इति सूत्रे बृहद्वृत्तिगतस्य "परार्थाभिधानं वृत्तिः, तद्वांश्च पदसमुदायः समासादिः" इति पाठस्य व्याख्यानन्यासे–"आदिशब्दान्नामधातु-तद्धितपरिग्रहः" इति वदताचार्येणापि स्वयमेव वृत्तेस्त्रैविध्यं दर्शितमिति । दीक्षितस्तु–कृत-तद्धित-समासैकशेष-सनाद्यन्तधातुरूपाः पञ्च वृत्तय इत्याह, उपपादयन्ति चेदमपरे, तथाहि–सनाद्यन्तेष्वपि वृत्तित्वमस्त्येव, तत्रापि पठितुमिच्छतीत्याद्यर्थे पठितुमिति तुमन्तस्य परस्यार्थाभिधानमस्त्येवेति वृत्तिलक्षणसत्त्वात् । स्वीकृतं च सन्नन्तस्यापि वृत्तित्वं महाभाष्यकृताऽपि । तथाहि–"धातोः कर्मणः समानकर्तृकादिच्छायां वा" [ पा० सू० ३. १. ७. ] इति सूत्रे–"वावचनानर्थक्यं च, तत्र नित्यत्वात् सनः" [ वार्तिकम् ], वावचनं चानर्थकम्, किं कारणम्? तत्र नित्यत्वात् सनः । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च, स्वभावतश्चैतद् भवति–वाक्यं च प्रत्ययश्च । तत्र स्वाभाविके वृत्तिविषये नित्यमेव प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बद्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते । तस्मान्नार्थो वावचनेन" इति । अयमाशयः–सन्नन्तादिवृत्तिस्थले सर्वत्र वावचनं क्रियते सम्बध्यते वा, तेन तत्र वाक्यमपि भवति वृत्तिरपि भवति । एतच्च बृहद्वृत्तावपि स्वीकृतं "प्रयोक्तृव्यापारे णिग्" [ ३. ४. २०. ] इति सूत्रशेषे–"वाऽधिकार आ बहुलवचनात् पक्षे वाक्यार्थः" इति । एवं च स्वभावतो वाक्यस्य वृत्तेश्च सिद्धौ वाग्रहणमिह क्रियमाणं केन सम्बन्धं प्राप्नुयात्? यदि प्रत्ययसंज्ञया सम्बन्धः स्यात् तर्हि तु अनिष्टमेव प्रसज्येतेति वावचनं व्यर्थमेव । न च वाग्रहणाभावे सर्वदा प्रत्यय एव स्यात् प्रत्ययोत्पत्तिरूपाया वृत्तेर्वाक्यबाधकत्वसंभवादिति वाच्यम्, वाक्यस्य व्यपेक्षाविषयत्वं प्रत्ययस्य वृत्तिविषयत्वमिति विषयभेदात् । तदुक्तं तत्रैव कैयटे–"वृत्तेरेकार्थीभावविषयत्वाद् व्यपेक्षाविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद् बाध्यबाधकभावाप्रसङ्गात्" इति । तथा चैदृशे विषये वावचनं स्पष्टार्थमेवेति तदाशयः । अनेन च सन्दर्भेण सन्नन्तवृत्तिरपि पाणिनितन्त्रेऽभिमतेति स्पष्टीभवति । तत्र सनाद्यन्तपदस्य नामधातुसंग्राहकत्वेन नामधातुवृत्त्याः संग्राहसंभवेऽपि नामधातुवृत्त्या सनाद्यन्तवृत्तेरसंग्रहाद् नामधातुवृत्तिस्थाने सनाद्यन्तवृत्तिरेव पठितव्या, उपलक्षणविधया वा ज्ञेया । अथैकशेषस्य वृत्तित्वमपि विचार्यते–तत्राप्येकेन शिष्यमाणेन शब्देन लुप्यमानानां शब्दानामर्थस्याभिधानं स्वीक्रियते एव, 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायात् । तथा च परार्थाभिधानस्य तत्रापि सद्भावाद् वृत्तिलक्षणमस्त्येवेति साऽपि वृत्तिः । अत एव "समानानामर्थेनैकः शेषः" [ ३. १. ११८. ] इति सूत्रशेषे बृहद्वृत्तौ–"द्वन्द्वापवादश्चायम्" इत्युक्तम् । तथा च समासरूपवृत्त्यपवादतयाऽस्यैकशेषस्य वृत्तित्वमाचार्यस्याप्यभिमतमेवेति सिद्धं वृत्तेः पञ्चविधत्वमिति । वृत्तिविषये च वाक्यस्याभ्यनुज्ञाऽपि व्यपेक्षैकार्थीभावरूपसामर्थ्यद्वयवशात् प्राप्तैव । वृत्तिविषयेऽपवादविधेर्नित्या प्रवृत्तिरित्यस्यौत्सर्गिकशास्त्रप्रवृत्तिविषयाभावे एव तात्पर्यं न तु वाक्याभावे, सर्वत्र समासविधौ "नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३. १. १८. ] इति सूत्राद् बहुलग्रहणस्य, तद्धितविधौ च "वाऽऽद्यात्" [ ६. १. १. ] इति सूत्राद् वाग्रहणस्य चाधिकृतत्वात् । ततश्च तस्य बहुलग्रहणस्य वाग्रहणस्य च वाक्यसाधुत्वार्थत्वमेव । उक्तं चैतत् "समर्थानां प्रथमाद् वा" [ पा० सू० ४. १. ८२. ] इति सूत्रे महाभाष्येऽपि, कैयटेन च तत्रैतत् स्पष्टीकृतम् । तथाहि–तत्र भाष्यम्–"अथ तद्वावचनं नैव कर्त्तव्यम् । कर्त्तव्यं च । किं प्रयोजनम्? नित्याः शब्दाः, नित्येषु शब्देषु वाक्यस्य साधुत्वमनेनान्वाख्यायते" इति । तत्र कैयटः–"वृत्ति-वाक्ययोरवान्तरार्थभेदेऽपि प्रधानार्थाभेदादैकार्थ्याद् वाक्यस्य वृत्त्या बाधः स्यात् । तथाहि–औपगवमानयेत्युक्ते योऽर्थ आनीयते, स एवोपगोरपत्यमानयेत्युक्ते । तत्र यथा गोशब्देन गावीशब्दो निवर्त्यते, सत्यामपि गावीशब्दादधिकस्य स्त्रीत्वस्य प्रतिपत्तौ जातिलक्षणार्थाभेदात्, एवं वाक्यस्यापि वृत्त्या निवृत्तिः स्यादिति

तदभ्यनुज्ञानाय वावचनमिति । नागेशेन च समासविषयेऽपि क्रियमाणस्य महाविभाषाधिकारस्यैतदुक्त्यैव समर्थनं कृतम् ॥ एवं च वावचनसिद्धस्य सर्वत्र समासे तद्धिते च वाक्यसाधुत्वस्य निवर्त्तयितुमशक्यत्वात् तत्र तत्र समासे तद्धिते वा पठितेन 'वा'वचनेनापवादशास्त्रेष्वन्यत्रापवादशास्त्रस्य नित्यमेवोत्सर्गशास्त्रबाधकत्वमपि कथ्यत एवेति सर्वथा सिद्ध एवायं न्यायः ॥ ३२ ॥

## *एकशब्दस्यासंख्यात्वं क्वचित्* ॥३३॥

सि०—एकशब्दस्य संख्यावाचकत्वेनैव प्रसिद्धिरिति लक्ष्यानुरोधात् तस्य क्वचिदसंख्यावाचित्वमनेन न्यायेन व्यवस्थाप्यते । 'एकमहः' इत्युक्ते व्यक्तिविवक्षया 'अहः' इत्यनेनैवैकस्याह्नः समुपस्थितिरित्येकशब्दस्य तत्र निर्दिश्यमानाहोमात्रपरत्वं, न तु संख्यावाचकत्वमित्याश्रीयते, ततश्च तस्मिन्नर्थे तत्पुरुषसमासे "अह्नः" [ २. १. ७४. ] इति समासान्तेऽट्प्रत्यये "नोपदस्य तद्धिते" [ ७. ४. ६१. ] इत्यन्त्यस्वरादिलोपे "अह-निर्यूह-कलहाः" [ लिङ्गानु० पुं० १५. ३. ] इति पुंस्त्वे प्राप्तेऽपि "अहः-सुदिनैकतः" [ लिङ्गानु० न० ८. २. ] इति विशेषविधिना क्लीबलिङ्गत्वे-एकाहमिति सिद्धम् । यद्येकशब्दस्य संख्यात्वं गण्येत तर्हि "सर्वांशसंख्याव्ययात्" [ ७. ३. ११८. ] इत्यटि, अनेनैव चाह्नादेशे "अर्द्धसुदर्शनदेवनमह्नाः" [ लिङ्गानु० पुं० ११. १. ] इति पुँस्त्वे च-एकाह्न इत्यनिष्टं रूपं प्रसज्येत । ज्ञापकं चास्य "संख्यातपुण्यवर्षादीर्घाच्च रात्रेरत्" [ ३.७.११९. ] इति सूत्रे चकारेण "सर्वांशसंख्याऽव्ययात्" [७.३.११८.] इति सूत्रात् संख्याशब्दानुवृत्तावपि 'एकरात्र' इत्यस्यासिद्धौ तत्राद्विधानार्थमेकग्रहणम् । क्वचिदिति वचनाच्चान्यत्रैकशब्दस्य संख्यात्वेन ग्रहणमेव, तेनैकधा इत्यादौ "संख्याया धाः" [ ७.२.१०४. ] इति धाः सिद्धः । अयं च न्यायो निश्चल एव, क्वचिदित्युक्त्या स्वत एवेष्टस्थलमात्रप्रवृत्तिकत्वसूचनात् । अनिष्टप्रवृत्तिवारणायैव हि कस्यचिन्न्यायस्यानित्यत्वमाश्रीयते तदभावाच्च नानित्यतान्वेषणमिति ॥ ३३ ॥

## *एकशब्दस्यासङ्ख्यात्वं क्वचित्* ॥ ३३ ॥

त०—एकाहमित्यत्र "सर्वांशसङ्ख्याव्ययात्" [ ७. ३. ११८. ] इत्यनेनाट् अह्नादेशश्च न स्यादित्यर्थमयं न्यायः स्वीक्रियते; तच्च कार्यं केवलमत्रत्यसंख्याग्रहणेनैकशब्दस्याग्रहणमित्येतावज्ज्ञापनेनैव सेत्स्यति । अत एव "संख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत्" [ ७. ३. ११९. ] इति सूत्रे बृहद्वृत्तौ—"एकग्रहणं संख्याग्रहणेनानेनैकस्याग्रहणार्थम्, तेन पूर्वसूत्रे संख्याग्रहणेनैकस्याग्रहणम्; एकमहः-एकाहम्" इत्युक्तम् । अनेन च वृत्तिकृतां तस्य विशेषार्थज्ञापनपरत्वमेवाभिप्रेतं न तु सामान्यतो न्यायज्ञापनपरत्वमित्यायाति । एकशब्दस्यासङ्ख्यात्वमपि क्वचिदिति च तस्यानेकार्थत्वप्रसिद्धयाऽपि लभ्यत एव, तथा हि—

"एकोऽन्यार्थे प्रधाने च, प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च निगद्यते ॥"

इत्यनेकार्थत्वं तस्य प्रसिद्धम् । तथा च "एकशब्दस्य प्रसिद्धिस्तावत्सङ्ख्यात्वस्यैव" इति न्यायसंग्रहवृत्तिकृतां लेखः 'प्रसिद्धि'पदानुरोधेनैव कथञ्चिदुन्नेयः, 'एकगुरुकः, एकाधिकरणः, एक आचार्याः' इत्यादिषु तस्यार्थान्तरवाचित्वस्य सकलप्रामाणिकजनप्रसिद्धत्वात् । अन्ये च वैयाकरणा नेमं न्यायमाश्रयन्ते, किन्तु तैरेकाहशब्दसिद्ध्यर्थमह्नादेशस्याभावाय तन्निषेधके सूत्रे एवैकग्रहणं क्रियते "उत्तमैकाभ्यां च" [ पा० सू० ५.४.९०. ] इत्यत्र । एकाहशब्दश्च तन्मते पुँल्लिङ्ग एवेति भेदः, स च "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति महाभाष्यवचनेन लोकव्यवहारनिर्णेय इति न तत्रास्माकमवकाशो वचनस्य । पूर्वोक्तरीत्याऽस्याव्यापकत्वेन न्यायकोटावगणनीयत्वेऽपि प्राचां रीतिमनुसृत्य व्याख्यातोऽत्रेति विभावनीयं सूरिभिः ॥ ३३ ॥

## *आ दशभ्यः सङ्ख्या सङ्ख्येये वर्तते, न संख्याने* ॥ ३४ ॥

सि०—अत्र केचन-'आ दशभ्यः' इत्यस्य दशसंख्यावाचकशब्दपर्यन्तं या संख्या-तद्वाचकः शब्दः, सा संख्येये-संख्याविशिष्टे द्रव्यादौ वर्त्तते, न संख्याने-परिच्छेदे, इत्यर्थमाहुः । अपरे तु-"आ दशभ्यः" इत्यस्य यावद् दशशब्दश्रवणं तावत्पर्यन्तं, संख्या-तद्वाचकशब्दः, संख्येये वर्त्तते इत्यर्थः" इति वर्णयन्ति, अयमेव चार्थः संगतः, अन्यथा एकादशादिभ्यो बहुवचनं न स्यात् । तस्मात् 'आ दशभ्यः' इत्यस्याष्टादशपर्यन्तमित्यर्थात् तावत्पर्यन्तं यथासंख्येयं द्वित्वादि भवति, ततः परमेकोनविंशतिमारभ्य संख्यामात्रपरत्वेनैकवचनमेव । किञ्चैवं सिद्धे सति अष्टादशपर्यन्तं संख्यावाचकस्य शब्दस्य संख्येयेन सह सामानाधिकरण्येनैव प्रयोगः, ततोऽग्रे च सामानाधिकरण्येन वैयधिकरण्येन च । तथा च 'एको घटः, द्वौ घटौ, त्रयो घटाः' इत्यादि यावदष्टादश घटा इति; न तु 'घटानां त्रयः' इत्यादि । ऊनविंशत्यादिषु च—ऊनविंशतिर्विंशतिर्वा घटाः, घटानामूनविंशतिरिति च भवति, आ दशभ्य इत्युक्ततया च ततो[ऽष्टादशतो]ऽग्रे संख्यायां संख्येये च वृत्तेर्बोधितत्वात् । "अत्र च ज्ञापकम्—"सुज्वार्थे संख्या संख्येये संख्यया बहुव्रीहिः" [ २. १. १९. ] इति सूत्रेण संख्येयेऽर्थे वर्त्तमानायाः संख्यायाः समासविधानमेव, तथाहि—यदि तावदयं न्यायो न स्यात् तदाऽमुका संख्या संख्येय

वर्तिनीति व्यक्तिः कथं ज्ञायेत, तदज्ञाने च कथं संख्यावर्त्तिसंख्यापरिहारेण संख्येयवर्त्तिसंख्यया सह समासः क्रियेत" इति प्राचीनाः । तच्च न चारु–काचित् संख्या संख्येयवृत्तिरित्येतदर्थस्य ज्ञापनायोग्यत्वात्, सर्वासां संख्यानां संख्येयार्थवृत्तित्वस्य प्रसिद्धत्वात् । न च काचित् संख्या संख्येयमात्रवृत्तिरित्यर्थोऽनेन ज्ञाप्यत इति वाच्यम्, तस्या अत्राग्राह्यत्वात्, अत्र च संख्येयार्थाया ग्रहणं न तु संख्येयार्थमात्रपरायाः, अन्यथा विंशत्यादीनामिह ग्रहणं न स्यात्; अग्रिमसूत्रे च संख्येयपरत्वेन तासामपि ग्रहणस्येष्टत्वमेवेत्यास्तां तावत् । एतदग्रे "एतच्चोद्घोषकम् "आ दशभ्यः" इति पदं व्युदस्य शेषवाक्यापेक्षया योज्यम्, संख्येये वर्त्तमानाऽपि काऽपि संख्यास्तीत्येतावत एवार्थस्यानेनोद्घोष्यमाणत्वात्" इति वदता संख्येयमात्रपरत्वज्ञापनस्य स्वयमेवापोदितत्वात् । अग्रे च "अस्य चाप्रतिष्ठितत्वात् "आसन्नादूर०" [ ३. १. २०. ] इति बहुव्रीहौ "प्रमाणी-संख्याड्डः" [ ७. ३. १२८. ] इति डे च–आसन्नदशा इति, कोऽर्थः ? नवैकादश वा, अत्र आसन्ना दशेति कोऽर्थः ? दश संख्या येषामिति वाक्यं सिद्धम्" इति यदुक्तं, तदपि न, युक्तं भवेदनित्यत्वज्ञापनावश्यकत्वं यदि आ दशभ्यः संख्यायाः संख्येयपरत्वं भवद्रीत्या ज्ञापकमात्रसिद्धं स्यात्, न तु तथा, तस्य स्वाभाविकत्वेनाग्रे [ विवरणे ] निर्णेष्यमाणत्वात्, एवं च स्वाभाविकं दशशब्दान्तसंख्यायाः संख्येयमात्रपरत्वं कथमपोहितुं शक्यते विना प्रमाणम्, तथा च दशानामासन्ना इत्येव वाक्यम्, "आसन्नादूर०" [ ३. १. २०. ] इत्यादिसूत्रेण पृथग् बहुव्रीहिसमासविधानसामर्थ्याच्चैवमादिषु व्यधिकरणपदो बहुव्रीहिः स्वीकार्य एव, बृहद्वृत्त्युक्तं तादृशविग्रहवाक्यं चार्थप्रदर्शनपरमेव, स्पष्टश्चायमर्थः "आसन्नादूराधिकसंख्याः संख्येये" [पा० सू० २. २. २५.] इति सूत्रे महाभाष्येऽपि । स्वाभाविकसंख्येयपरत्वत्यागापेक्षया वरं सूत्रविधानसामर्थ्याद् व्यधिकरणपदबहुव्रीहिकल्पनेति । विवेचितं चैतद्विषये विवरणे विशेषत इति नेह प्रतन्यते ॥३४॥

## *आ दशभ्यः संख्या संख्येये वर्त्तते, न संख्याने* ॥ ३४ ॥

त०—यथायमर्थः स्वाभाविको न ज्ञापकसाध्यश्च तथोपक्षिप्तं वृत्तौ, अत्र च तदेव विविच्यते, तथाहि–ज्ञापकत्वेनात्र–"सुज्वार्थे संख्या संख्येये संख्यया०" [ ३. १. १९. ] इत्यत्र संख्येये वर्त्तमानया संख्यया सह समासविधानं प्राचीनैरुक्तम्, तच्च संख्येयार्थायाः संख्याया अस्तित्वबोधकमिति रीत्या, न च संख्यायाः संख्येयार्थत्वं पूर्वमप्राप्तम्, लोकतः प्राप्ते विषये शास्त्रस्याव्यापार इति तदर्थं न्यायाश्रयणमनावश्यकम् । संख्यायाः संख्येयार्थकत्वं तु लोकप्रसिद्धं कोशादिबोधितं च, तथाहि–अमरः—

[ "विपणो विक्रयः, संख्याः संख्येये ह्यादश त्रिषु ।
विंशत्याद्याः सदैकत्वे सर्वाः संख्येय-संख्ययोः ॥" ]

इति, दशश्रवणं यावत् संख्यानां संख्येयपरत्वं विशेष्यलिङ्गत्वं च, विंशत्यादीनामेकवचनान्तत्वं नियतलिङ्गत्वं संख्यासंख्येयोभयवाचकत्वं च कथयति । अत्रामरकोपटिप्पणीकृता व्याख्यातृणामन्येषामाचार्यहेमचन्द्राणां चैतद्विषयमतानि महाभाष्यादिवैयाकरणग्रन्थसम्मतिश्च यथा संगृह्य प्रदर्शितानि तानि तच्छब्दैरेव प्रदर्श्यन्ते तत्त्वनिर्णयाय–"एकाद्या दशान्ताः संख्याः संख्येयेषु वर्त्तमानास्त्रिलिङ्गाः, एका शाटी, एकः पटः, एकं कुण्डम् । दश स्त्रियः, दश पटाः, दश कुण्डानि । आदशेति अष्टादशान्ता इति क्षीरस्वामी । आदशेति दशशब्दश्रुतिपर्यन्तमष्टादशं यावत् संख्या एकादिकाः संख्येये द्रव्ये वर्त्तन्ते, हिरवधारणे, तेन सामानाधिकरण्येनैव तासां वृत्तिरित्यर्थः, यथा एको विप्रः, दश विप्रा इति, न तु वैयधिकरण्येन वृत्तिरिति, न तु एको विप्रस्य दश विप्राणामिति मुकुटः । अत्र चैकाद्या अष्टादशान्ता संख्या संख्येये वर्त्तते, यदाह वाचस्पतिः–अष्टादशभ्य एकाद्याः संख्याः संख्येयगोचराः ।" इति इति स्वोपज्ञनाममालाव्याख्यायां हेमाचार्यः । इदं च प्रायिकम्, "वहुषु बहुवचनम्" [ पा० सू० १. ४. २१. ] इति सूत्रे भाष्ये "किंसम्बन्ध्येकत्वे किंसम्बन्धि द्वित्वे किंसम्बन्धिवहुत्वे इत्यर्थेषु कस्यैकस्मिन् कयोर्द्वयोः केषां वहुषु" इति प्रयोगेण संख्यापरत्वस्यापि प्रतीतेः । इदं त्वत्रावगन्तव्यम्–संख्यापरत्वेऽप्येषां स्वाश्रयद्रव्यगतसंख्याविशिष्टधर्ममात्रप्रतिपादकता, अत एवोक्तभाष्यप्रयोगे द्विवचनादिः । विंशत्याद्याः सर्वा एव संख्याः संख्येये संख्यायां च नित्यमेकवचनान्ता एव वर्त्तन्ते, यद्भाष्यम्–"आ दशभ्यः संख्या संख्येये वर्त्तते, ऊर्ध्वं संख्याने संख्येये च" इति । विंशतिः पटाः, विंशतिः पटानाम्; शतं गावः, शतं गवाम्; इति क्षीरस्वामी । विंशत्याद्यास्तु संख्याशब्दा एकत्वे वर्त्तमानाः संख्येये संख्याने च वर्त्तन्ते, यथा–विंशतिर्घटाः, विंशतिर्घटानाम्; शतं गावः, शतं गवाम्, इति; यदाह–वाचस्पतिः–"ऊनविंशत्यादिकास्तु सर्वाः संख्येय-संख्ययोः" इति हेमचन्द्रः । [अत्र विशेषः] संख्यामात्रार्थे वर्त्तमानाया विंशत्यादेः संख्याया द्विवचनबहुवचने अपि स्त एकशेषेण–द्वे विंशती तिस्रो विंशतयः, गवां विंशती, गवां विंशतयः" इति क्षीरस्वामी । यदा तु भेदविवक्षायां संख्यान्तरस्यार्थेऽभिधेये विंशत्यादयो वर्त्तन्ते तदा तत्सामानाधिकरण्यादुपचारेण तेभ्यो द्विवचनबहुवचने अपि भवतः, यथा–द्वे विंशती तिस्रो विंशतय इति, सामानाधिकरण्याभावेऽपि गवां विंशती, गवां विंशतय इति मुकुटः । 'द्वित्व-बहुत्वयो-

वर्त्तमानास्तु विंशत्याद्याः संख्यायामेव वर्त्तन्ते' इति हेमचंद्रः । "पङ्क्तिविंशति" [ पा० सू० ५. १. ५९. ] इति सूत्रे भाष्यप्रदीपोद्द्योते नागेशभट्टेन तु-विंशत्याद्या द्व्यादयश्च धर्मशक्ता एव, धर्म-धर्मिणोरभेदाच्च व्यक्तौ कार्याणि, तयोश्च भेदाभेदौ विंशत्यादयः कदाचिद् भेदेन संख्यां वदन्ति-'गवां विंशतिः' इति, कदाचिदभेदेन-'विंशतिर्गावः' इति, यदाप्यभेदेन तदापि धर्मगतसंख्यावैशिष्ट्येनैव ततो द्रव्यप्रतीतिः शब्दशक्तिस्वभावात्, यथा गावो धनमित्यादौ प्रीतिहेतुत्वगुणगतसंख्यावैशिष्ट्येनैव द्रव्यप्रतीतिर्धनशब्दात् । इयांस्तु विशेषः-तत्र कदाचित् स्वगतसंख्यावैशिष्ट्येनापि प्रतीतिः, अन्यगतसंख्यावैशिष्ट्यमन्यस्य कथमिति चेत् ? आरोपेणेति गृहाण । द्व्यादयस्तु स्वगतवाच्यसंख्याविशिष्टद्रव्याभेदेन तद्गतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति शब्दशक्तिस्वभावादिति न कदाचिदपि तत्रैकवचनम् । नापि त्रिंशत्यादिभ्यो बहुवचनम्, विंशतिप्रचये तु बहुवचनमिष्टमेव । "द्व्येकयोर्द्विवचनैकवचने" [ पा० सू० १. ४. २२. ] इत्यादौ विंशतिवदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिरिति द्विवचनम् । एवं प्रतीतिरीदृशवृत्तिविषयैवेति नातिप्रसङ्ग इति निष्कर्ष उक्तः" इति [ अमरकोषटिप्पणीकारः, वर्गः ९, श्लोकः ८३ ] ।

इत्थमेकादीनां दशशब्दान्तानाम् [ अष्टादशपर्यन्तानाम् ] संख्यानां गुणिपरत्वं [ संख्येयार्थत्वम् ] विंशत्यादीनाम् [ ऊनविंशतिमारभ्य ] शतान्तानां च संख्यानां गुणगुण्युभय[ संख्यासंख्येयोभय ]परत्वमिति शब्दशक्तिस्वाभाव्यादेव निर्णयमिति न तत्र वचनस्यावश्यकतेति विषयो महता सन्दर्भेण महाभाष्यादिषु विचारितः, तस्य सर्वस्य च निष्कर्षः पूर्वोक्तनागेशग्रन्थेन संगृहीतः । एवं सति नायमर्थो ज्ञापकसाध्य इति यदुक्तं तत् सुव्यक्तं वेदितव्यम् । अस्य चार्थस्य ज्ञापकं यत्-"सुज्वार्थे०" [ ३. १. १९. ] इति सूत्रेण संख्येये संख्यायाः समासविधानमित्युक्तं, तच्च तत्सूत्रे वृत्तौ न स्पष्टम् । प्रायः सर्वत्र ज्ञापकस्य स्फोरणं क्रियत एव वृत्तिकृता । यच्चास्य न्यायस्यानित्यत्वमाश्रित्य 'आसन्नदशाः' इत्यादिप्रयोगविग्रहवाक्ये दशादीनां संख्यावाचकत्वं समर्थितं तदपि वृत्तौ प्रत्युक्तमेव, पुनरिह किञ्चिद् विचार्यते-दशशब्दस्य तत्र संख्यार्थत्वमाश्रित्य आसन्ना दश [ संख्या ] येषामित्यर्थमाश्रित्य च यद्यत्र समासः क्रियते तर्हि "एकाऽर्थं चानेकं च" [ ३. १. २२. ] इत्यनेनैव समासे सिद्धे "आसन्नादूराधिक०" [ ३. १. २०. ] इति सूत्रेण प्रतिपदसमासविधानं "प्रमाणी-संख्याड्डः" [ ३. १. १२८. ] इति डविधानार्थमिति तत्सूत्रशेषे बृहद्वृत्तिग्रन्थेन सूचितम्, तथा च तत्र दशादिसंख्यानां संख्यापरत्वमाचार्यस्याभिमतं, न तु तत्र न्यायानित्यत्वमाश्रितम् । तेन चैतत्सूत्रेण द्वितीयादिविभक्त्यर्थे समासविधानसामर्थ्यादेवैवं विग्रह आश्रितः, तदर्थं च स्वाभाविकं संख्येयपरत्वं त्यक्तमिति तेषां संख्यापरत्वमेतत्सूत्रज्ञाप्यमेव न तु न्यायानित्यत्वलभ्यमिति समायाति । न च तेन सूत्रेण न्यायानित्यत्वमेव ज्ञाप्यतामिति वाच्यम्, न्यायस्यैव पूर्वरीत्याऽपोदितत्वेन तदनित्यत्वचर्चाया निर्मूलत्वात् । यद्यपि तत्रत्यलघुन्यासग्रन्थे-"आ दशभ्यः संख्या" इत्यस्य प्रायिकत्वादत्र दशन्शब्दः संख्याने वर्त्तते इति न्यायार्थश्चर्चित इव, तथापि न न्यायस्य तेन समूलत्वमायाति, प्रायिकत्वादिति कथनेन तस्यार्थस्य स्वाभाविकत्वस्यैव सूचनादित्यास्तां प्रसक्तानुप्रसक्त्यानुधावनम् । वस्तुतस्तु-नायमर्थो वचनेन निर्णेयः, किन्तु शब्दशक्तिस्वभावलक्ष्यादिकमनुसृत्य यथायोगं संख्या-संख्येयोभयपरत्वं सर्वासां संख्यानामिति सकलैतद्विषयग्रन्थपर्यालोचनया समायाति । बाहुल्याभिप्रायेण चा दशभ्यः संख्या संख्येयपरा, विंशत्याद्या उभयपरा इति कथनमिति निष्कर्षः । अथ न्यायसंग्रहन्यासे-आसन्ना दशेति प्रतीकमुपादाय तत्र 'दश'शब्दस्य संख्यापरत्वमेव, न तु संख्येयपरत्वमिति शङ्कासमाधिभिः स्थिरीकृत्य पुनरपि तस्य दृढीकरणाय यदुक्तं, तदिह तदुल्लेखपूर्वकं विचार्यते-"ननु भवत्वेवम्, दशन्शब्दस्य दश संख्येत्यर्थो न स्यात् तदा किं विनश्येत् ? उच्यते-यद्यत्र दश संख्येति संख्यानवृत्तिदशन्शब्देन वाक्यं न क्रियते तदा आसन्ना दश येषामिति कोऽर्थः ? दश संख्येयपदार्था येषां नवानामेकादशानां वा संख्येयानामासन्नाः सन्ति ते आसन्नदशाः, एतावतैकोनविंशतिरेकविंशतिर्वा पदार्था इत्यर्थप्रतीतिः स्यात्, तथा च नवैकादश वेति पर्यायो बृहद्वृत्त्युक्तो विघटेत, ततो दश संख्येत्येवार्थोऽवश्यं वाच्यः । ननु संख्येयवर्त्तिदशन्-शब्दपक्षेऽपि आसन्ना दशेति दशसंख्याविशिष्टवस्तुनि यस्यैकस्य ययोर्द्वयोर्येषां वा त्र्यादीनां संख्येयार्थानामिति वाक्यं यदि क्रियते तदा आसन्नदशशब्देन द्वादशादयोऽपि प्रतीयन्ते, तदा कथमेकोनविंशतिरेकविंशतिर्वेत्येव संख्येयप्रतीतिः स्यादित्युक्तम् ?, उच्यते-यदि कस्मिन्नपि क्षेत्रे दश घटादीन् न्यस्य तदासन्नं वैकं द्वौ त्र्यादीन् वा घटादीन् न्यस्य, तदनु वाक्यं क्रियते, यथा-आसन्ना दश संख्येयपदार्था यस्यैकस्य संख्येयपदार्थस्य, ययोर्वा द्वयोः संख्येयपदार्थयोः, येषां वा त्र्यादीनां संख्येयपदार्थानामित्यनया रीत्या क्षेत्रापेक्षया दशवस्तूनामासन्नत्वं विवक्षितं स्यात्, तदैकादशादीनामपि प्रतीतिः स्यात्, अत्र तु संख्यापेक्षया आसन्नत्वं विवक्षितं, ततश्च दशसंख्येयानां नवैकादश वा संख्येयानि यथासन्नसंख्यावत्त्वेन संख्यापेक्षया आसन्नानि, न तथा एकादीनीति युक्तमेवोक्तमेकोनविंशतिरित्यादि" इति । अत्रेदं विचार्यते-अत्र "आसन्न-दूराधिक०" [ ३. १. २०. ] इति सूत्रेण समासो विधेयः, तदर्थश्च 'आसन्नादीनि संख्यावाचिना नाम्नैकार्थ्ये समस्यन्ते' इति, तर्हि दशन्शब्दस्य संख्येयार्थपरत्वे संख्यावाचि-

त्वमेव न स्यादिति समासाभाव एव स्यादिति कथमियमाशङ्कोदेति यत्–यदि दशन्शब्दस्य संख्यावाचित्वं न स्यात् तदा किं विनश्येदिति । अथोत्थिताऽपि चेत्? तर्हि समासाभावेनैव समाधेया, न पुनरर्थान्तरोपन्यासेन, किञ्च बृहद्वृत्त्युक्तपर्यायकथनविरोधप्रदर्शनाय तदुपन्यासेऽपि कथमासन्ना दश पदार्था येषां संख्येयानां नवानामेकादशानां वा इति विग्रहे 'एकोनविंशत्येकविंशतिसंख्येययोः प्रतीतिः?, येषामिति हि अन्यपदार्थोपस्थापकं पदम्, तदर्थ एव च कृतः–नवानामेकादशानामिति ते कथमेकोनविंशतितामेकविंशतितां वा गच्छेयुः?, किं बहुव्रीहौ स्वार्थान्यपदार्थयोः पृथक् स्वातन्त्र्येण भानमाश्रीयते?, यदि येषामित्यनेन संख्येयानामुपस्थितिराश्रीयते–दशशब्दोऽपि दशसंख्यावच्छिन्नपदार्थपरः, तर्हि कथं संख्यापेक्षयाऽऽसन्नत्वं विवक्षितं स्यात्, अस्तु वा कथंचित् संख्यापेक्षयैवासन्नत्वं तदाऽपि नवानामेकादशानां वा प्रतीतिः स्यात्, नैकोनविंशतेरेकविंशतेर्वा। आसन्नपदस्य युक्तत्वार्थत्वे दशसंख्यया नवसंख्याया एकादशसंख्याया वा योगे एकोनविंशतिरेकविंशतिर्वा संख्या प्राप्नोति, परं नासौ समासार्थः, आसन्नशब्दस्य समीपार्थकत्वमाश्रित्यैव येषामित्यस्य नवानामेकादशानां वेत्यर्थः क्रियते तर्हि कथं योगस्तदर्थः स्यात्, योगार्थत्वाभावे च दशसंख्येयपदार्था आसन्ना येषां नवानामेकादशानां वा संख्येयार्थानामिति वाक्येन कथमेकोनविंशत्येकविंशतिसंख्येयानां प्रतीतिरिति न बुद्धिपथमधिरोहति । अयं च तदीयो ग्रन्थः "आसन्नदूर०" [ ३. १. २०. ] इति सूत्रीयलघुन्यासव्याख्यानरूप एव, सोऽपि च ग्रन्थस्त्रुटित इव प्रतिभाति, तथाहि–तत्रत्यो ग्रन्थः–"यदि संख्येयवृत्तिना दशन्शब्देन आसन्ना दश येषामित्येवं वाक्यं क्रियते न दशत्वमिति तदा संख्यावाचिनेति वृत्त्यंशेन निषेधान्न स्यादनेन समासः, नवैकादश वेति पर्यायो विघटेत । यत इत्थं कृते 'एकोनविंशत्यैकविंशतिसंख्याप्रतीतिः" इति । अत्र शङ्कायाः समासाभावपर्यन्तं समाधानं निर्विवादम्, पर्यायविघटनकथनमपि साधु, यतो दशशब्दस्य संख्येयपरत्वे दश संख्येयाः पदार्था आसन्ना येषां ते नवैव एकादशैव वा कुतः स्युर्यथासम्भवमन्येऽपि भविष्यन्ति संख्येयानामानन्त्यात्, संख्यापेक्षया चासन्नत्वग्रहणे मानाभावात् । तदुपपादनपरश्च "यत इत्थं कृते एकोनविंशत्यैकविंशतिसंख्याप्रतीतिरिति ग्रन्थो मध्ये भग्न इति प्रतिभाति, असंलग्नत्वात्, पूर्वरीत्या तदर्थवर्णने न संख्याप्रतीतिरपि तु संख्येयप्रतीतिः, अथ च–एको विंशत्या एकविंशतिरिति तदीयच्छेदः स्यात्, स च प्रकृतेऽनुपयुक्तः । यदि च तादृश एव पाठः प्रामाणिकस्तर्हि तदाशय एवं वर्णनीयः स्यात्–यत इत्थमीदृशस्थले संख्येयपरत्वाश्रयणे एकोनविंशतिशब्देनैकविंशतिसंख्याया प्रतीतिः स्यात्, यतः एकोना विंशतिर्येषामित्यर्थे येषां संख्येयानामेकेनोना विंशतिर्भवति, एकविंशतिरेकोना सती विंशतिरेव भवतीत्येकोनविंशतिशब्दे बहुव्रीह्याश्रयणे संख्येयपरत्वे चैकविंशत्यर्थकत्वमेकोनविंशतिशब्दस्य घटते । 'आसन्नदश'-शब्दस्य तदर्थत्वं तु कथमपि नायातीति विभावनीयं सुधीभिरिति ॥ ३४ ॥

## *णौ यत् कृतं तत् सर्वं स्थानिवद् भवति* ॥ ३५ ॥

सि०—द्वित्वविधौ "न सन्धि-ङी-य-क्वि-द्वि-दीर्घासद्विधावस्क्लुकि" [ ७. ४. ११. ] इत्यनेन स्थानिवद्भावस्य निषिद्धत्वात् तत्रेष्टप्रयोगेषु द्वित्वे कर्त्तव्येऽपि स्थानिवद्भावसाधनार्थं न्यायमाह–णौ यत् कृतमिति । अत्र णाविति विषयसप्तमी न ग्राह्या, किन्तु निमित्तसप्तम्येव, तथा च णिनिमित्तं यत् कार्यं कृतं स्यात् तत् सर्वं द्वित्वादिविषयभूतमतथाभूतं च स्थानिवद् भवति–स्थानिनि सति तस्य स्थाने वा यत् कार्यं प्राप्नोति तत् कार्यमेव तत्रापि भवति, न तु स्वनिमित्तकं कार्यम् [ यतोऽतिदिश्यमानधर्मविरुद्धस्वाश्रयनिमित्तकार्याभावोऽतिदेशस्वभावसिद्धः ] इति न्यायार्थः । णावित्यत्र विषयसप्तम्यामाश्रितायां तु शुशावयिषतीत्यत्र श्वेः सन्परे णौ विषयभूते कृतस्य, अत एवान्तरङ्गस्य "श्वेर्वा" [ ४. १. ८९. ] इति य्वृद्भावस्य स्थानिवत्त्वं न भवति, तत्रैव णिनिमित्ताया वृद्धेस्तु स्थानिवत्त्वं भवत्येव, अत एव द्वित्वे पूर्वत्रोकारः श्रूयते तन्न स्यात्, सामान्यतो णाविति निर्देशान्निमित्तभावेन विषयभावेन वा णिमाश्रित्य कृतानां सर्वेषां कार्याणां स्थानिवद्भावापत्त्या य्वृतोऽपि ण्याश्रयत्वात् स्थानिवद्भावे द्वित्वे पूर्वत्रेकार एव श्रूयेत न तूकारः । अत्र ज्ञापकं तु "ओर्जान्तःस्थापवर्गेऽवर्णे" [ ४. १. ६०. ] इति सूत्रे "ओः पयेऽवर्णे" इत्येतावतैव सूत्रेण निर्वाहे सत्यपि दीर्घसूत्रकरणमेव; तथाहि–तत्र सूत्रे बृहद्वृत्तिग्रन्थः–"ननु ण्यन्तानां वृद्ध्यावादेशयोः कृतयोर्द्वित्वे सति पूर्वस्य उकारान्तता न सम्भवति, तत्र "सन्यस्य" [ ४. १. ५९. ] इत्यनेनैव सिद्धे किं गुरुणा सूत्रेण?, एतावत्तु विधेयम्–"ओः पयेऽवर्णे" इति, पिपविषते यियविषतीत्यत्र पूर्वस्योकारान्तस्येत्वं यथा स्यात्; सत्यम्–*णौ यत् कृतं कार्यं तत् सर्वं स्थानिवद् भवति*इति न्यायज्ञापनार्थं वचनम्। तेन पुस्फारयिषति, चुक्षावयिषति, शुशावयिषतीत्याद्यपि सिद्धम्। एतच्च ज्ञापकं चान्तस्थापवर्गवदन्यत्राप्यवर्ण एव द्रष्टव्यम्, तेनाचिकीर्त्तदित्यत्रेकारवतो द्विर्वचनं सिद्धम्" इति । अयं च बृहद्वृत्तिग्रन्थाशयः–अत्रोदाहरणेषु 'यियविषति, पियविषते' इति द्वे सन्नन्तेऽन्यानि ण्यन्तान्येव, तेषां सनि अवर्णपरजाद्यभावात्। णौ च वृद्धौ कृतायामावादेशे, द्वित्वे पूर्वत्रात एव सत्त्वेन

तेषु "सन्यस्य" [४. १. ५९.] इत्येव सिद्धेः। तथा च यत्र सनि इड् भवति—यथा पूङः सनि 'ऋस्मिपूङ्ञ्जशौकृगृदृधृप्रच्छः' [४. ४. ४८.] इतीड् भवति, यौतेः सनि "इवृधभ्रस्जदम्भश्रियूर्णु०" [४. ४. ४७.] इतीड् भवति, तत्र द्वित्वविधौ 'प्राक् तु स्वरे स्वरविधेः' इत्युक्तत्वात् सनश्च स्वरादित्वभावात् पूर्वं द्वित्वमेव भवति ततो गुणावादेशाविति द्वित्वे पूर्वत्रावर्णस्यासत्त्वेन "सन्यस्य" [४. १. ५९.] इत्यस्याप्राप्त्या तदर्थं 'ओः पयेऽवर्णे' [४. १. ६०.] इत्येव सूत्र्यताम् 'जान्तःस्थापवर्गे' इत्यादिबृहता न्यासेन किं प्रयोजनम्। तथा च तेषां ग्रहणं व्यर्थं सत् न्यायमिमं ज्ञापयति। ज्ञापिते चास्मिन्न्याये जिजावयिषतीत्यादौ ण्यन्तात् सनि वृद्धेरप्रवृत्त्या प्रवृत्तौ वा तस्य स्थानिवद्भावेन उकारविशिष्टस्यैव द्वित्वे सति, पूर्वत्रोकारस्य विद्यमानत्वेन "सन्यस्य" [४. १. ५९.] इत्यनेन कार्यस्य साधयितुमशक्यतया जान्तःस्थादिग्रहणं सार्थकम्। फलं चास्य—पुस्फारयिषति चुक्षावयिषतीत्यादौ द्वित्वे पूर्वत्रोकारस्य श्रवणम्। तत्र हि णिनिमित्तकस्य "चिस्फुरोर्नवा" [४. २. १२.] इति आत्वस्य स्थानिवद्भावो भवति, चुक्षावयिषतीत्यादौ च णौ कृताया वृद्धेः स्थानिवद्भावश्च भवतीति। ज्ञापकस्य सजातीयापेक्षत्वेन यत्र द्वित्वे परखण्डे प्रथमः स्वरोऽवर्णो भवति तत्रैवानेन ज्ञापितेन न्यायेन स्थानिवत्त्वं भवति। तच्चावर्णवत्त्वं प्रक्रियादशायां परिनिष्ठिते रूपे वेत्यन्यदेतत्। अवर्णपरत्वसम्पादकादेशस्यैव स्थानिवत्त्वमिति भावः। तेन चाचिकीर्त्तदित्यत्रेकारस्य न स्थानिवत्त्वं, तत्रावर्णवदुत्तरखण्डादेरभावात्। प्राचीनास्तु न्यायस्यानित्यतामाश्रित्येदं रूपं साधयन्ति, तच्च न प्रकृतवृत्तिग्रन्थारूढम्, अनित्यत्वज्ञापकप्रमाणान्तराभावाच्च। ज्ञापकसिद्धत्वेनासार्वत्रिकत्वं तु नानुगतं प्रमाणम्। 'एतच्च ज्ञापकं चान्तःस्थापवर्गवदन्यत्राप्यवर्ण एव द्रष्टव्यम्' इति ग्रन्थस्य स्पष्टमेव ज्ञापकसाजात्यमूलकस्यैवार्थस्य लाभे तात्पर्यात्। अतश्चात्रत्यः प्राचां ग्रन्थो न तदनुकूल इति प्रतिभाति। तथाहि—तेषां ग्रन्थः—अनैष्ठिकश्चायम्। तेन यस्य णिनिमित्तकृतकार्यस्य स्थानिवद्भावश्चिकीर्ष्यते तदाधारभूतो वर्णो वर्णसमुदायो वा अवर्णवान् यदि स्यात् तदैवायं न्यायः स्फुरेन्नान्यथा" इति। अत्रेदमुच्यते—अनैष्ठिकत्वमेव यदाश्रितं तदा तस्य स्थलविशेषनियमनं कुतो लभ्यते, स्थलविशेषनियमनं ह्यनित्यत्वज्ञापकाधीनम्, न च तत्किमपि निर्दिष्टमिति यत्किञ्चिदेतत्। स्थलविशेषस्वरूपवर्णनं च न संगतमिति निरूपितं विवरणे। ननु अचिकीर्तदिति यदुदाहृतं तन्न युक्तम्—यतः "कृतः कीर्त्तिः" [४. ४. १२२.] इति विहितस्य कीर्त्तादेशस्य न णिनिमित्तत्त्वमपि त्वनैमित्तिकत्वमेवेति तत्र न्यायप्रसराभावादिति चेत्? न—*येन विना यन्न स्यात् तत् तस्यानिमित्तस्यापि निमित्तम्* इति न्यायेन णिचि सत्येव विधीयमानस्य कीर्त्तादेशस्य णिनिमित्तत्वस्य दुर्वारत्वात्। "स्थानीवाऽवर्णविधौ" [७. ४. १०९.] इति परिभाषायाः प्रपञ्चभूतोऽयं न्याय इति प्राचीनाः, तदपि न रुचिरं प्रतिभाति, यतो यथाकथंचिदिहापि स्थानिभूतस्योवर्णस्यैवेत्वं चिकीर्षितमिति वर्णविधिसत्त्वेन तस्याः परिभाषाया विषयाभावः। स्वमतेऽपि यत् "स्वरस्य परे प्राग्विधौ" [७. ४. ११०.] इति स्थानिवत्त्वस्य द्वित्वे कर्त्तव्ये निषिद्धस्य प्रतिप्रसवरूपोऽयं न्याय इत्यवतरणे कथितम्, तदपि स्वविधौ न स्थानिवदिति स्वमात्रविधौ न स्थानिवदित्याशयकमित्याश्रित्य। वस्तुतस्तु—अप्राप्तस्यैव स्थानिवद्भावस्य विधायकमिदमित्यास्थेयमिति विवेचितं विवरणे ॥ ३५ ॥

## *णौ यत् कृतं तत् सर्वं स्थानिवद् भवति* ॥ ३५ ॥

त०—पुस्फारयति चुक्षावयिषतीत्यादौ द्वित्वे पूर्वत्रोकारस्य श्रवणार्थं पूर्वं द्वित्वे कृते णिनिमित्तकात्ववृद्ध्यादीनां प्रवृत्तिरिष्टा, परं सा दुर्लभा, णिमात्रनिमित्तककार्याणां ण्यपरणिनिमित्तकद्वित्वापेक्षयाऽन्तरङ्गत्वेन पूर्वमेव प्रवृत्तेरौचित्यात्। ततश्च तेषु कार्येषु कृतेष्वपि स्थानिवद्भावेन स्थानिन एवोकारस्य सत्त्वमाश्रित्य द्वित्वादिकेषु सत्सु पूर्वोक्तरूपाणां सिद्धिर्भवति। यद्यपि "स्वरस्य परे प्राग्विधौ" [७. ४. ११०.] इत्यत्र 'प्राग्विधौ' इत्यस्य स्वविधौ न स्थानिवदित्यर्थमाश्रित्य, अत्र च द्वित्वस्य स्थानिभूतस्वरमात्रस्थानिकत्वाभावेन स्थानिवद्भावः सिद्ध एवेत्याशङ्कितुं शक्यते, तथापि तस्यापि स्थानिवद्भावस्य द्वित्वविधौ "न सन्धिङी०" [७. ४. १११.] इत्यादिसूत्रेण निषेधात् स्थानिवद्भावोऽप्राप्त एव, यदि च प्राग्विधावित्यस्य स्वविधौ न स्थानिवदित्यर्थोपलक्षकत्वे मानाभावः, यदि वाऽत्राऽपि स्थानिन उकारस्य द्वित्वानुभवकर्तृत्वेन स्वविधित्वानपाय इत्युच्यते, तदा सर्वथाऽप्राप्त एव स्थानिवद्भावोऽनेन विधीयते इति मन्तव्यम्। स्थानिवद्भावेन च स्थानिरूपमेवातिदिश्यते इति तद्व्यवहार एव तत्र न स्वव्यवहारः [आदेशरूपव्यवहारः], अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मनिमित्तककार्याभावस्यातिदेशस्वभावत्वात्। न च ज्ञापितेऽपि न्याये पिपविषते यियविषतीत्यादौ कथमित्वं परखण्डे द्वित्वपरखण्डे कृतयोर्गुणावादेशयोः "स्वरस्य परे प्राग्विधौ" [७. ४. ११०.] इति स्थानिवत्त्वेनावर्णपरत्वाभावादिति वाच्यम्, सूत्रारम्भसामर्थ्यादेव तत्र स्थानिवद्भावाभावात्। ननु ज्ञापकघटितसूत्रे णिग्रहणाभावेन तत्रत्यज्ञापकेन कथं णिविषये एव स्थानिवद्भावानुमानम्? । अयमाशयः—"ओर्जान्तःस्थापवर्गे०" [४. १. ६०.] इति सूत्रेण सनि इत्वं भवति, स च सन् क्वचिन्मुख्यः 'यियविषति, पिपविषते' इत्यादौ, क्वचिच्च गौणः 'अवीभवत्, अपीपवत्' इत्यादौ, तत्र च वस्तुतो

ऽपरणेरेव सन्वद्भावेन सन्निमित्तककार्यकारित्वमिति यदि णावेवैतत्सूत्रेणेत्वं विधीयेत तर्हि णिविषये स्थानिवद्भावज्ञापनमेतत्सूत्रस्थेन जान्तःस्थावर्गग्रहणेन कर्तुं शक्यते, न तु तथाऽस्ति, सन्परेऽपि इत्वविधानात्, इति चेत्? सत्यम्–सनि परे विधीयमानमित्वं वस्तुतः केवलं पिपविषते यियविषतीति प्रयोगद्वय एव भवति, अन्यत्र सर्वत्र सनो णिव्यवहितस्यैव लाभात् तत्र च णौ वृद्ध्यादिषु सत्सु "सन्यस्य" [ ४. १. ५९. ] इत्येव सिद्धेर्जान्तःस्थावर्गग्रहणस्य वैयर्थ्यमिति तत् स्वसार्थक्याय स्वस्मिन् सम्भविनमेव णिनिमित्तत्वरूपं विषयं स्वज्ञाप्यस्य स्थानिवत्त्वस्य कल्पयतीत्यदोषात्। इदं च ज्ञापकं साजात्यादेव यत्र द्वित्वोत्तरखण्डे प्रथमः स्वरोऽवर्णः प्रक्रियायां परिनिष्ठिते रूपे वा लभ्यते तत्रैव प्रवर्त्तत इति स्वमतं वृत्तौ प्रोक्तम्। प्रक्रिया च साध्यावस्था, तत्रावर्णस्योत्तरखण्डे सत्त्वं यथा 'मा भवानूनत्' इति, अत्र 'ऊन'-धातोर्णौ तत्राकारलोपे कृतेऽपि तस्य स्थानिवत्त्वाद् द्वित्वे पूर्वत्राकारः श्रूयते, अन्यथा 'नि'शब्दस्य द्वित्वे 'मा भवान् ऊनिनत्' इति रूपं स्यात्, अत्र च यद्यपि परिनिष्ठिते रूपे द्वित्वोत्तरखण्डेऽवर्णो नोपलभ्यते तथापि प्रक्रियादशायामस्तीत्यत्रापि स्थानिवत्त्वप्रवृत्तिः सुसाधा। अचिकीर्त्तदित्यादौ च प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णस्य द्वित्वोत्तरखण्डादावभावान्न स्थानिवत्त्वमिति, परिनिष्ठितरूपे द्वित्वोत्तरखण्डेऽवर्णस्य सत्त्वं च जिजयिषतीत्यादौ तिष्ठतीति तत्र स्थानिवत्त्वं भवति। प्राचीनोक्तमनित्यत्वाश्रयणं तु बृहद्वृत्तिग्रन्थप्रतिकूलं महाभाष्यव्याकरणग्रन्थप्रतिकूलं च। महाभाष्येऽपि "द्विर्वचनेऽचि" [ पा० सू० १. १. ५९. ] इति सूत्रे 'णौ कृतस्य कार्यस्योक्तज्ञापकेन स्थानिवत्त्वं विज्ञाप्य शङ्कितम्–"यद्येतज्ज्ञाप्यते 'अचिकीर्त्तत्' अत्रापि प्राप्नोति?" इति, समाधत्ते–"तुल्यजातीयस्य ज्ञापकम्, कश्च तुल्यजातीयः? यथाजातीयकाः पुयण्जयः [ पवर्गान्तःस्थाजकाराः ], कथंजातीयकाश्चैते? अवर्णपराः" इति उक्तम्, तथा च साजात्येनैवोक्तार्थलाभस्तत्राप्यभिमतः। नागेशेन च "अवर्णपराः" इति भाष्यप्रतीकमुपादाय–"अवर्णपरत्वसम्पादकादेशस्थानिन इत्यर्थः, एवं चावर्णपरत्वसम्पादकादेशस्थानित्वेन तुल्यतेति भावः। एवं च 'औननत्, औजढत्' इत्यादि चिन्त्यमेव" इत्युक्तम्। यत्र द्विरुक्तौ परभागस्याद्योऽजवर्णस्तत्रेदमिति दीक्षितादिग्रन्थः किम्मूल इति न विज्ञायते। इत्थं च प्रकृतनागेशव्याख्यानरीत्या 'मा भवानूनिनत्' इत्येव रूपं, तत्राकारलोपस्य न स्थानिवत्त्वमित्यायाति, स्वमते चावर्णस्य प्रक्रियादशायां स्थितत्वादवर्णवत्त्वमिति तत्रापि स्थानिवद्भाव आश्रीयते इत्युक्तमेव पूर्वम्, किञ्चास्य न्यायस्यानैष्ठिकतामाश्रित्यास्य प्रवृत्तिस्थलनियमनपूर्वकमप्रवृत्तिस्थलप्रदर्शनमित्थं कृतं प्राचीनैः–"यस्य णिनिमित्तकृतकार्यस्य स्थानिवद्भावश्चिकीर्ष्यते तदाधारभूतो वर्णो वर्णसमुदायो वा अवर्णवान् यदि भवेत् तदैवायं न्यायः स्फुरेन्नान्यथा" इति। एतद्ग्रन्थस्य न्यासेन व्याख्यानं च तैः प्रदर्शितम्–"पुस्फारयिषतीत्यत्र णिनिमित्तकृतकार्यस्य आत्वरूपस्याधारभूतः 'स्फा' इति वर्णः, जिजावयिषतीत्यत्र णिनिमित्तकृतकार्यस्याधारभूतो 'जाव्' इति वर्णसमुदायः" इति। अत्रोच्यते–णिनिमित्तकार्यस्य वर्णस्य वर्णसमुदायरूपस्य वर्णः कथमाधारः स्यात्, किञ्च 'स्फा' इत्यस्य वर्णत्वं कथं, किमयमेको वर्णः, स चेद् वर्णात्मकः, न हि 'जाव्' इत्यस्य वर्णसमुदायात्मकत्वम्, प्रत्येकं स्वरस्य व्यञ्जनस्य वर्णत्वम्, अनेकवर्णानां वर्णसमुदायत्वमिति 'यथा 'जाव्' इति वर्णसमुदायस्तथा 'स्फा' इत्येषोऽपि समुदायरूप एवेति मन्तव्यम्। अत्र चान्यो विशेषः पूर्वमेव प्रपञ्चित इति न पुनरुच्यते॥ ३५॥

## *द्विर्बद्धं सुबद्धं भवति* ॥ ३६ ॥

सि०—क्वचित् क्वचिच्छास्त्रकृद्भिरेक एवार्थो द्विधा प्रतिपादितः, तत्र पुनरुक्तिदोषापनोदायायं न्याय आश्रीयते। द्विः–द्विवारं, बद्धं–बन्धनेन विषयीकृतं निरूपितमिति प्रकृतेऽर्थः, तत् सुबद्धम्-नियतबन्धनमव्यभिचारीति यावत्, भवति। अत्र च ज्ञापकं–"गॄ-लुप-सद-चर-जप-जभ-दश-दहो गर्ह्ये" [ ३. ४. १२. ] "जप-जभ-दह-दश-भञ्ज-पशः" [ ४. १. ५२. ] इति सूत्रयोः 'दश' इति पुनरुक्तनिर्देशः, स हि दंशेर्यङ्लुपि दंदशीतीत्यत्र न लोपस्याप्राप्तस्य प्राप्तये निपातनरूपेण क्रियते, केनापि सूत्रेणाप्राप्तोऽपि नलोपो यङ्लुपि स्यादित्यर्थमिति यावत्, स चैकेनैव निर्देशेन सिद्ध एवेति पुनस्तदर्थमेव सूत्रान्तरे निर्देशो व्यर्थ एव। स च 'एकेन निर्देशेन सकृज्ज्ञापितस्यापि विधेर्दशैकादशशब्दस्यादन्तत्ववत् कदाचिदनित्यताऽपि दृश्यते *समासान्तागम०* इति न्यायानुसारम्, यस्तु द्विर्निर्देशेन ज्ञाप्यते स विधिर्निश्चलो भवति' इति विज्ञापयति। स चायं न्यायो यद्यपि लोके प्रसिद्धः, दृश्यते हि व्यवहारे बन्धनादौ द्विग्रन्थ्यादिदानं दार्ढ्यार्थं तथाऽपि द्विवारं 'दश' इति निर्देशेन स न्यायः शास्त्रेऽपि प्रवर्त्तमानः सूच्यते इति बोध्यम्। यदि चायं न्यायो न स्वीक्रियेत, तर्हि सकृज्ज्ञापितार्थस्यादृढत्ववद् द्विर्ज्ञापितस्यापि तथात्वं भवत् केन वार्येत। तथा च ज्ञापनफलं स्वांशे दंदशीतीत्यत्र न लोपः। अन्यत्र च 'आस्थत्' इत्यत्राङो व्यभिचाराभावः, तथाहि–"असूच् क्षेपणे" इत्यस्याद्यतन्यां दिप्रत्यये आस्थदिति रूपं भवति, अस्यतेः "शास्त्यसू-वक्ति-ख्यातेरङ्" [ ३. ४. ६०. ] इति सूत्रे पुष्यादिगणे च पाठात्, अन्येषां तद्गणपठितधातूनां क्वचिदङो व्यभिचारोऽपि भवति, यथा 'भगवन्! मा कोपीः' इति बालरामायणप्रयोगः, अत्र कुप्यतेः पुष्यादिगणपठितत्वेऽपि नाङ्। केषांचिन्मते च यङ्लुबन्ते नलोपो नेष्यते, तन्मते

चायं न्यायोऽपि न ज्ञाप्यते । यदि च क्वचिदावश्यकता स्यात् तर्हि लोकसिद्धस्यैव कार्यवशादाश्रयणम्, तथा च दन्दशीतीत्येव रूपं तेषामिति स्पष्टमुक्तं "जप-जभ०" [ ४. १. ५२. ] इति सूत्रे बृहद्वृत्तौ ॥ ३६ ॥

*द्विर्बद्धं सुबद्धं भवति* ॥ ३६ ॥

त०—लौकिकव्यवहारसिद्धोऽप्ययं न्यायो वृत्तिदर्शितदिशा लक्ष्यसंस्काराय शास्त्रेऽप्याश्रीयते इति सूचितम् । एतन्न्यायफलत्वेन यदुक्तम्—आस्थदित्यत्राङो व्यभिचाराभाव इति, तच्च यद्यपि "शास्त्यसूवक्तिख्यातेरङ्" [ ३. ४. ६०. ] इति सूत्रस्य बृहद्वृत्तिग्रन्थप्रतिकूलमिति प्रतिभाति, तथाहि—तत्र "अस्यतेः पुष्यादित्वादङि सिद्धे वचनमात्मनेपदार्थम्" इत्युक्तम्, तस्यायं भावः—पुष्यादिनिमित्तोऽङ् परस्मैपद एव भवति, एतेन चात्मनेपदपरस्मैपदोभयोरेव भवतीति यत्रास्यतेरात्मनेपदं विधीयते, तत्र 'पर्यस्थत' इत्यादावङो विधानायेह तद्ग्रहणमिति । तथापि तत्रत्यलघुन्यासे पुष्यादिपाठस्य प्रकृतन्यायज्ञापनार्थत्वमुक्तम्, तथाहि—तत्रत्यो लघुन्यासः—"आत्मनेपदार्थमिति । तर्हि आत्मनेपद-परस्मैपदयोरनेनैव सिद्ध्यति किं पुष्यादिपाठेन? सत्यम्—अस्य पुष्यादिपाठो *द्विर्बद्धं सुबद्धं भवति* इति ज्ञापनार्थः । तेनास्यादङोऽव्यभिचारः, अन्येषां तु क्वचिद् व्यभिचारोऽपि, तेन भगवन्! मा कोपीरित्यादि बालरामायणोक्तं सिद्धम्" इति । अस्यायमाशयः—आत्मनेपदार्थमत्र सूत्रेऽस्यतेः पाठस्यावश्यकत्वे तेनैव परस्मैपदात्मनेपदयोरुभयोरपि सिद्धेः पुष्यादिपाठस्य प्रकृतन्यायज्ञापकत्वमास्थेयमिति । अस्य च प्रकृतन्यायज्ञापकत्वे "०दश०" [ ४. १. ५२. ] इति निर्देशस्य प्रकृतन्यायोदाहरणत्वं, तस्य ज्ञापकत्वे चास्योदाहरणत्वमास्थेयमिति न कोऽपि विरोधः । यदि ह्यर्थे दिवादौ क्वचिदवश्यं पठितव्ये पुष्यादावेवास्यधातुः पठितः, अङो विधानस्यापि तत्रेष्टत्वात्, पश्चाच्चात्मनेपदे तत्सिद्ध्यर्थमत्र सूत्रे तत्पाठ इत्याश्रीयते, तदा न पुष्यादिपाठो ज्ञापकोऽपि तु "०दश०" [ ४. १. ५२. ] इति निर्देश एवेति स्वीकर्तव्यमिति ॥ ३६ ॥

*आत्मनेपदमनित्यम्* ॥ ३७ ॥

सि०—आत्मनेपदस्य विशेषत्वं विशेषलक्षणविहितत्वेनेति तदव्यभिचारित्वे प्राप्ते क्वचिद् दृश्यमानव्यभिचारस्य साधुत्वाय न्यायोऽयं स्वीक्रियते । आत्मनेपदम्, अनित्यं—व्यभिचारि, व्यभिचारित्वं च द्विधा—कुतश्चिदात्मनेपदनिमित्तसहितादपि धातोस्तस्याभवनम्, कुतश्चिच्च तन्निमित्ताभावेऽपि भवनम् । अस्य ज्ञापकश्च—भ्राजेरात्मनेपदिषु धातुषु द्विधा पाठः, तथाहि—भ्राजेरात्मनेपदिषु प्रथमं तावत् "एजृङ् भ्रेजृङ् भ्राजि दीप्तौ" इति पाठं कृत्वा पश्चात् पुनरपि "राजृग् टुभ्राजि दीप्तौ" इति पाठः, स हि *द्विर्बद्धं सुबद्धम्* इति न्यायेनात्मनेपदस्याव्यभिचारार्थमेव कृतः सन् आत्मनेपदस्य व्यभिचारित्वं विनाऽनुपपन्न एवेति तद्व्यभिचारित्वं ज्ञापयति, सति हि तस्य [ आत्मनेपदस्य ] अव्यभिचारित्वे विनाऽपि द्विधा पाठेन तस्य नित्यात्मनेपदित्वे सिद्धेऽपि तन्नित्यत्वार्थं कृतो द्विधा पाठोऽनुपपन्नः [ व्यर्थः ] एव स्यात्, फलं च द्विधा पाठस्य स्वांशे चारितार्थ्यम्, ज्ञापिते ह्यात्मनेपदस्यानित्यत्वे भ्राजतेरव्यभिचरितात्मनेपदविधानात् । अन्यत्र च प्राप्तस्याप्यात्मनेपदस्याभावो यथा—"डुलभिंष् प्राप्तौ" इत्यस्य परस्मैपदेऽपि प्रयोगः—"सम्यक् प्रणम्य न लभन्ति कदाचनापि" [ ] इति, "क्लीबृङ् अधार्ष्ट्ये" इत्यात्मनेपदिनः शतृप्रत्ययस्य परस्मैपदस्य विधानम्, यथा—"कुरुद्योतं क्लीबद्दिन-पतिसुधांशौ तमसि मे" [ ], "क्लिशिच् उपतापे" इत्यस्मादात्मनेपदिनोऽपि शता, यथा "परार्थे क्लिश्यतः सतः" इति [ ], "षेवृङ् सेवने" इत्यस्याप्यात्मनेपदिनः परस्मैपदे प्रयोगः, यथा—"स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः ।" [ ] इति, "भाषि व्यक्तायां वाचि" इत्यस्मादात्मनेपदिनः परस्मैपदविधानम्, यथा—"मिथ्या न भाषामि विशालनेत्रे !" इति, तथा "तर्जिण् सन्तर्जने" तर्जयति, "भर्त्सिण् सन्तर्जने" भर्त्सयति, "शमिण् आलोचने" निशामयति, "भलिण् आभण्डने" भालयति, "कुत्सिण् अवक्षेपे" कुत्सयति, "वञ्चिण् प्रलम्भने" वञ्चयति, "विदिण् चेतनाख्याननिवासेषु" वेदयतीत्यादि; एषु धातूनामिङ्त्वेऽप्यात्मनेपदं नाभूत् । क्वचिदप्राप्तमप्यात्मनेपदं यथा—"षस्ज गतौ" इति परस्मैपदी, तस्मादात्मनेपदप्रयोगो यथा—"प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु" [ भगवद्गीता ], "सज्जमानमकार्येषु" इत्यादि । इत्थं चास्योभयथा व्यभिचरितं प्रदर्शितम् । तच्च लक्ष्यानुसाराज्ज्ञापकसाजात्याच्च "इङितः कर्त्तरि" [ ३. ३. २२. ] इति सूत्रविहितात्मनेपदविषयमेव, न तु "क्रियाव्यतिहारेऽगति-हिंसा-शब्दार्थे-हसो-ह-वहश्चानन्योऽन्यार्थे" [ ३. ३. २३. ] इत्यादिसूत्रैर्विशिष्य विहितात्मनेपदविषयम्, सूत्राणां न्यायापेक्षया प्राबल्यात् । "इङितः०" [ ३. ३. २२. ] इत्यनेन हि लिङ्गद्वाराऽऽत्मनेपदं विधीयत इति लाक्षणिकम्, तैश्च प्रतिपदोक्ततया विधीयत इति *लक्षणप्रतिपदोक्त*न्यायेनापि तद्विहितात्मनेपदस्य प्राबल्यात् तत्र व्यभिचरितत्वासम्भव इति ॥ ३७ ॥

*आत्मनेपदमनित्यम्* ॥ ३७ ॥

त०—आत्मनेपदं हि तत्तल्लिङ्गविशेषनिमित्तकं तत्तत्प्रकृतिविशेषोद्देश्यकं चेति "शेषात् परस्मै" [ ३. ३. १००. ] इति सामान्यतो विहितपरस्मैपदापेक्षया प्रबलमिति तस्याव्यभिचरि-

तत्वं प्राप्तमिति तद्व्यभिचारः क्वचिदुपलभ्यमानोऽपि शास्त्रकृत्सम्मत इत्यनेन न्यायेनानुमीयते । पाणिनीयेऽपि तन्त्रे 'चक्षिङ्'धातोर्ङित्करणेनैतस्य न्यायस्य ज्ञापनं प्राचीना अनुमन्यन्ते, नवीनास्तु तस्यान्यार्थतामाश्रित्य भाष्यादावस्य न्यायस्यादर्शनाच्च नात्र न्याये ज्ञापकसत्तेति यत्रात्मनेपदिभ्यो परस्मैपदप्रयोगो यत्र च परस्मैपदिभ्य आत्मनेपदप्रयोगस्तत्र आर्षत्वादिना समादधते, स्थितस्य गतेश्चिन्तनीयत्वात् । यदि हि सोऽर्थो न्यायानुमतः स्यात् तर्हि अयत्नेऽपि यथेच्छं तद्व्यभिचारः क्रियमाणः साधुत्वमश्नुवीतेत्याद्याहुः । क्षमतेऽपि भ्राजेर्द्विधा पाठस्यानुबन्धविशेषसम्बन्धार्थकत्वमिति कल्पयितुं शक्यत्वेन नात्र न्याये किमपि दृढतरं मानमिति कथयितुं शक्यते । यः कविप्रयोगेषु तत्र तत्र व्यभिचारो दृश्यते स तेषां निरङ्कुशत्वेन समाधेय इति युक्तं प्रतिभाति, एवंविधन्यायस्वीकारस्य शास्त्रीयप्रक्रियार्थमनावश्यकत्वादिति ॥ ३७ ॥

## *क्विपि व्यञ्जनकार्यमनित्यम्* ॥ ३८ ॥

सि०—क्विप् द्विविधः-नाम्नो विधीयमानो धातुत्वप्रयोजकः, धातोर्विधीयमानो नामत्वप्रयोजकश्च, तत्र द्विविधेऽपि क्विपि व्यञ्जननिमित्तकं कार्यम्, अनित्यं-प्राप्तमपि न भवति क्वचिदित्यर्थः । अत्र च ज्ञापकम्-"क्वौ" [ ४. ४. ११९. ] इति सूत्रकरणम्, मित्रशीरित्यादौ शास आस इसो विधानार्थं हि तत्, तच्च क्विपो व्यञ्जनादित्वमाश्रित्य "इसासः शासोऽङ्व्यञ्जने" [ ४. ४. ११८. ] इत्यनेनैव सिद्धमेव । तथा च सिद्धे सत्यारभ्यमाण इसादेशो ज्ञापयति-*क्विपि व्यञ्जनकार्यमनित्यम्* इति, तथा चानित्यत्वात् कदाचिन्नापि स्यादित्याशङ्क्यैव सूत्रमिदमारब्धं सत् तत्रेसादेशविधानेन चरितार्थम् । फलं चान्यत्राख्यातक्विपि राजेवाचरतीत्यर्थे "कर्तुः क्विप् गल्भ-क्लीब-होडात् तु ङित्" [ ३. ४. २५. ] इति क्विपि राजानतीति प्रयोगे क्विपि विद्यमानं ककारं वकारं वा व्यञ्जनं निमित्तीकृत्य प्राप्तस्य "नाम सिदय्व्यञ्जने" [ १. १. २१. ] इति पदत्वस्याभावात् "नाम्नो नोऽनह्नः" [ २. १. ९१. ] इति नस्य लुग् नाभूदिति । कृत्क्विपि यथा-गीर्यते इत्यर्थे "क्रुत्सम्पदादिभ्यः क्विप्" [ ५. ३. ११४. ] इति क्विपि पूर्ववत् पदत्वाभावात् "पदान्ते" [ २. १. ६४. ] इति दीर्घो नेति । क्विबत्रोपलक्षणं विचोऽपि, तेन *विच्यपि व्यञ्जनकार्यमनित्यम्* इति सिद्ध्यति । तथा च मुख्यमाचष्टे इत्यर्थे णिचि णिजन्तात् "मन् वन्०" [ ५. १. १४८. ] इति विचि 'मुख्य्' इति, अत्र विचि परे "य्वोः प्वय्व्यञ्जने लुक्" [ ४. ४. १२१. ] इति यलुग् न भवति । न चात्र णिलुचः स्थानिवत्त्वाद् यलुचः प्राप्तिरेव नास्ति तेन व्यवधानादिति वाच्यम्, यविधौ "न सन्धि-ङी-य-क्वि०" [ ७. ४. १११. ] इति स्थानिवत्त्वनिषेधात् । अस्य च न्यायस्य क्वाप्यबाध्यमानत्वान्नित्यत्वमेव । किञ्च न क्वापि क्वौ व्यञ्जनकार्यं जायमानं दृश्यते । इत्थं च यद्यपि क्विपि व्यञ्जनकार्यं न भवतीत्येव निश्चयगर्भं न्यायस्वरूपमाश्रयितुं शक्यते, तथापि मतान्तरे क्वचिद् व्यञ्जनकार्यस्य क्रियमाणत्वदर्शनेन तत्संग्रहाय [ परमतसाधारण्याय ] अनित्यत्वमेव ज्ञापितमिति द्रष्टव्यम् । इत्थं च "आचार्याः कृत्वा न निवर्त्तन्ते" इत्यपि प्रसिद्धिरनुगृहीता भवति । किञ्च न्याया एते चिरन्तना अतश्च तेषां स्वरूपपरिवर्त्तनं यथासम्भवं न कार्यमित्यपि सम्प्रदायः । अत एव च [ अनित्यत्वघटितन्यायस्वरूपस्वीकारादेव ] "पां पाने" इत्यस्मात् क्विपि "अप्रयोगीत्" [ १. १. ३७. ] इति तल्लुकि, लुप्तेऽपि तत्र व्यञ्जनादित्वमाश्रित्य "ईर्व्यञ्जने०" [ ४. ३. ९७. ] इतीत्वे पीरिति जयकुमारोक्तिरपि संगच्छते, अनित्यत्वघटितत्वे न्यायस्य तत्र कादाचित्कप्रवृत्त्या तदनुरूपकार्यसिद्धेः । कैश्चिच्चायं न्यायो नैव स्वीक्रियते, तत्प्रक्रियायाश्च स्वप्रक्रियाभेदाद् विनाऽपि न्यायं कार्यसिद्धिर्भवतीत्यन्यदेतत् ॥ ३८ ॥

## *क्विपि व्यञ्जनकार्यमनित्यम्* ॥ ३८ ॥

त०—क्विपः क्वाप्यप्रयोगेन "अप्रयोगीत्" [ १. १. ३७. ] इति तस्येत्संज्ञा भवति, तया च संज्ञया स गच्छतीति लोप एव तस्य स्वीक्रियते । तथा च शास्त्रे उच्चार्यमाणोऽपि प्रयोगेऽदृश्यमानो वर्णो वर्णसमुदायो वाऽनेनेत्संज्ञाविधानेनानूद्यते । तत्र ककार-पकारावनुबन्धौ वकारमात्रस्य प्रत्ययत्वम्, सोऽपि प्रत्ययनिमित्ते कार्ये जाते निवर्त्तते, तदुक्तम्-"अप्रयोगीत्" [ १. १. ३७. ] इति सूत्रे बृहन्न्यासे-"क्विबादीनां तु ककार-पकारयोः कार्यार्थत्वेनेत्त्वादभावोऽस्तु, [ इकारस्य ] तदुच्चारणार्थमुपात्तस्य कृतकार्यत्वान्निवृत्तिः, यतोऽप्रयोगशब्देन शास्त्रमभिधीयते, वकाराभावे तु कस्यायमित् स्यादित्यप्रयोगिशब्दाभिधेय एव न स्यात्, प्रत्ययत्वमप्यस्यैवं सिद्ध्यति, कृतकार्यत्वाच्च स्वयं निवर्त्तते, अत एव वकारः पठितः प्रविरलविषयत्वादस्य, अन्तःस्थानां पदान्तानां प्रायः प्रयोगानिष्टेः, यदाह-"नहि यणः पदान्ताः सन्ति" [ भाष्यम्, १. १. २-आह्निकम् ] इति" इति । इत्थं च वकारस्य प्रत्ययत्वं कार्यार्थत्वं चोक्तम् । तत्र च व्यञ्जनकार्यमपि प्राप्तम्, तच्चानेन न्यायेनापनोद्यते । तथा च तत्र कित्प्रत्ययत्वादिनिमित्तं कार्यमेव स्यान्न व्यञ्जननिमित्तम् । एवं विच्यपि 'व'कारमात्रस्यैव प्रत्ययत्वमिति क्विपा विजुपलक्ष्यते इति प्रतिपादितं वृत्तौ । यद्यपि तत्फलं-मुख्यमाचष्टे इत्यर्थे णिचि ततः क्विपि 'मुख्य्' इत्यत्र यलोपाभाव उक्तः, स च पूर्वोक्तबृहन्न्यासोद्धृतेन "नहि यणः पदान्ताः

सन्ति" इति भाष्यवचनेन विरुध्यते, तथाहि-तत्र यण्पदेनान्तःस्था [ यवरलाः ] इत्युच्यन्ते, तेषां च पदान्तेऽभावकथनेन 'मुख्य्' इति यान्तप्रयोगोऽनुचित इति तदनभिधानमेवाश्रयणीयम्, तथापि प्राचीनैस्तथोल्लेखादस्माभिरपि मतान्तरपरतया स्वीकृत्योद्धृतम् । वस्तुतस्तु नास्ति विचो ग्रहणे किञ्चित् फलं 'मुख्य्' इत्यादीनामनभिधानस्योक्तत्वात् । अन्यैश्च वैयाकरणैरेतन्न्यायस्वरूपमेव न स्वीक्रियते इति तेषां मते विच उपलक्षणत्वचर्चैव का ? ॥ ३८ ॥

## ※स्थानिवद्भाव-पुंवद्भावैकशेष-द्वन्द्वैकत्व-दीर्घत्वान्यनित्यानि※ ॥ ३९ ॥

सि०—स्थानिवद्भावः-"स्थानीवावर्णविधौ" [ ७. ४. १०९. ] इत्यादिसूत्रैरतिदिश्यमान आदेशे स्थानिव्यवहारः; पुंवद्भावः-स्त्री-क्लीब-लिङ्गानां शब्दानां वृत्त्यादावतिदिश्यमानः पुंलिङ्गस्वरूपातिदेशः; एकशेषः-"समानानामर्थेनैकः शेषः" [ ३. १. ११८. ] इत्यादिसूत्रैर्विधीयमानः; द्वन्द्वैकत्वं-द्वन्द्वगतमेकत्वं, समाहारद्वन्द्व इति यावत्; दीर्घत्वं च-यद्यप्यनेकत्रानेकधा विहितं तथापि "भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने" [ २. १. ६३. ] इतीह गृह्यते, व्याख्यानाल्लक्ष्यानुरोधाच्च; एतान्यपि कार्याणि अनित्यानि-सूत्रैरविकल्पभावेन विहितान्यपि लक्ष्यानुरोधात् तत्तज्ज्ञापकप्रामाण्याच्च क्वचिदनिष्टस्थले नापि भवन्तीति न्यायार्थः । तत्रैषामिष्टस्थलेषु प्रवृत्तिस्तु प्रसिद्धैवेति केवलमनिष्टस्थलेष्वप्रवृत्तिरेवानित्यत्वोदाहरणतया क्रमश उदाहरिष्यते । तत्र स्थानिवद्भावानित्यत्वे ज्ञापकम्-"उपान्त्यस्यासमानलोपिशास्वृदितो ङे" [ ४. २. ३५. ] इति सूत्रेऽसमानलोपिग्रहणम्, तथाहि-मालामाख्यत् 'अममालत्' इत्यादावुपान्त्यह्रस्वाभावार्थं तत् क्रियते, स च मालाशब्दाकारस्यान्त्यस्वरादिलुकः प्रसङ्गेन लुप्तस्य स्थानिवद्भावादेवाकारस्योपान्त्यत्वाभावेन सिद्ध एवेति तदर्थं क्रियमाणमसमानलोपिग्रहणं स्थानिवद्भावस्यानित्यत्वे ज्ञापकम् । तदनित्यत्वे हि कदाचित् स्थानिवद्भावाभावे ह्रस्वः स्यादिति तद्वारणायासमानलोपिग्रहणं स्वांशे चरितार्थम् । फलं चास्य स्वाद्वकार्षीदित्यर्थे स्वादुशब्दाण्णिचि उकारस्य वृद्धावन्त्यस्वरादिलुकि तस्य स्थानिवद्भावाभावदुपान्त्यह्रस्वे सति 'असिस्वदत्' इति रूपं सिध्यतीति । यद्यपि राजानमाख्यदरराजदित्यत्र "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इत्यनेनान्त्यस्वरादेः 'अन्'-शब्दस्य लोपे स्थानिवद्भावस्य स्वरमात्रस्थानिकादेशे एव प्रवृत्त्याऽत्र च न स्वरमात्रस्य लोप इति तस्याप्राप्त्या तत्रोपान्त्यस्य ह्रस्वाभावार्थमसमानलोपिग्रहणमिति वक्तुं शक्यते, तथापि 'अन्' इत्यस्य समुदायस्यावयवेऽकारेऽपि तस्य लोपस्य स्थानित्वमिति स्वीकृत्य स्थानिवद्भावेन सिद्धिः सम्भवति, अन्यथाऽत्र समानलोपित्वमेव कथं स्यात्, नहि समानमात्रस्य लोपोऽत्रास्ति, किन्तु समानस्य तदन्यस्य चेति यथाऽवयवाश्रयमेव समानलोपित्वमेवं स्वरादेशत्वमपीति तत्रापि स्थानिवद्भावेन सिद्धिरस्त्येवेति व्यर्थमेवासमानलोपिग्रहणमिति ज्ञापकं भवत्येव। उक्तं चैतद् बृहद्वृत्तावपि "उपान्त्यस्यासमानलोपि०" [ ४. २. ३५. ] इति सूत्रव्याख्यायाम्, तथाहि-"यत्रान्त्यस्वरादिलोपस्तत्र स्थानिवद्भावेन न सिद्ध्यतीति वचनम् । यत्र तु स्वरस्यैव लोपस्तत्र स्वरादेशत्वेन स्थानिवद्भावेनैव सिध्यति-मालामाख्यत्-'अममालत्' इत्यादि । ननु यत्रापि स्वरव्यञ्जनलोपस्तत्राप्यवयवावयविनोरभेदनयेन स्वरादेश एवेति स्थानिवद्भावेनैव सिद्ध्यति, किमसमानलोपिवचनेन ? सत्यम्-स्थानिवद्भावस्यानित्यत्वख्यापनार्थं वचनम्, तेन वास्या परिच्छिन्नवान्-पर्यवीवसत्, स्वादु कृतवान्-असिस्वददित्यादि सिद्धम्, अत्रेकारोकारयोः "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति वृद्धौ कृतायामन्त्यस्वरादिलोपित्वादसमानलोपित्वम्" इति ॥ अत्रेदं शङ्क्यते-'असिस्वदत्, पर्यवीवसत्' इत्यादौ "नामिनोऽकलि-हलेः" [ ४. ३. ५१. ] इति वृद्धेः परत्वात् "त्र्यन्त्यस्वरादेः" [ ७. ४. ४३. ] इत्यन्त्यस्वरादिलोपे पूर्वं प्रवृत्तेऽत्र समानलोपित्वस्य दुर्वारत्वेन ज्ञापितेऽपि न्यायेऽत्र नोपान्त्यह्रस्वसंभव इति; अत्रोच्यते-कलि-हलिवर्जनात् परमपि लोपं वृद्धिर्बाधत इति ज्ञापनात्, अन्यथा पूर्वमन्त्यस्वरादिलोपे वृद्धेरप्राप्तौ कलि-हलिवर्जनं व्यर्थमेव स्यात्; परमपि लोपं बाधित्वा वृद्धेः प्रवृत्तौ तु 'अचकलत्'इत्यादौ समानलोपित्वेन सन्वद्भावाभावाय तद्वर्जनस्य सार्थक्यमभूत्; इह च पूर्वं वृद्धेः प्रवृत्तौ समानलोपित्वाभावात् स्थानिवद्भावेनोपान्त्यह्रस्वविधातो मा भूदित्येतदर्थं स्थानिवद्भावानित्यत्वज्ञापनं सार्थकमिति ॥ १ ॥ पुंवद्भावोऽनित्य इत्यत्र ज्ञापकं यथा-"कौण्डिन्या-ऽगस्त्ययोः कुण्डिनागस्ती च" [ ६. १. १२७. ] इति सूत्रे कौण्डिन्येति निर्देशः, तथाहि-कुण्डिनीशब्दात् वृद्धापत्यार्थे "गर्गादेः" [ ६. १. ४२. ] इति यञि "जातिश्च णितद्धितय-स्वरे०" [ ३. २. ५१. ] इति यदि पुंवद्भावः प्राप्तः स्यात् तर्हि स्त्रीत्वनिवृत्त्या 'कुण्डिन्' इति नान्तपुंलिङ्गरूपताप्राप्तौ "नोऽपदस्य तद्धिते" [ ७. ४. ६१. ] इतीन्लोपे 'कौण्ड्य' इति रूपं स्यादिति कौण्डिन्येति रूपं न स्यात्, तथा च स निर्देशः पुंवद्भावानित्यत्वज्ञापनं विनाऽनुपपन्न इति पुंवद्भावानित्यत्वं ज्ञापयति । तथा च तदनित्यत्वेनाप्रवृत्तौ "अवर्णेवर्णस्य" [ ७. ४. ६८. ] इतीकारलोपे तस्य स्थानिवद्भावेन "नोऽपदस्य०" [ ७. ४. ६१. ] इति प्राप्तस्येनो लोपस्याभावे कौण्डिन्येति रूपसिद्धिर्भवति । फलं त्वस्यांशस्य-दक्षिणस्यां

दिशि भव इत्यर्थे "दक्षिणापश्चात्पुरसस्त्यण्" [६. ३. १३.] इति त्यणि दाक्षिणात्य इत्यत्र "सर्वादयोऽस्यादौ" [३. २. ६१.] इति प्राप्तोऽपि पुंवद्भावो नाभूदिति, पुंवद्भावे सति हि 'दक्षिण' इति पुंरूपप्राप्त्या दाक्षिणत्य इति विकृतं रूपं स्यात् तच्चानिष्टम् । यद्यपि "कौण्डिन्यागस्त्ययोः कुण्डिनागस्ती च" [६. १. १२७.] इति सूत्रस्थे बृहद्वृत्तिग्रन्थे कौण्डिन्यशब्दे निपातनात् पुंवद्भावाभाव इत्येवोक्तं न तु पुंवद्भावानित्यत्वज्ञापकत्वमुक्तम् । 'दाक्षिणात्य' इति रूपं च दक्षिणस्यां दिशि वसतीत्यर्थे दक्षिणाशब्दात् "वा दक्षिणात् प्रथमा-सप्तम्या आः" [७. २. ११९.] इत्याप्रत्यये दक्षिणा, तत्र भव इति विग्रहेऽव्ययाद् दक्षिणाशब्दात् त्यणि प्रत्ययेऽपि सिध्यतीति न पुंवद्भावानित्यत्वे ज्ञापनफलं किञ्चिदस्ति, तथापि लघुन्यासकारादिभिर्ज्ञापितोऽयमर्थ इति तदनुसृत्यास्माभिरपि स्थापितः । युक्तं च "दक्षिणापश्चात्पुरसात् त्यण्" [६. ३. १३] इति सूत्रेऽव्ययाभ्यां साहचर्यादव्ययस्यैव दक्षिणाशब्दस्य ग्रहणम्, दिग्वाचकस्य सर्वनाम्नो ग्रहणे हि सूत्रेऽपि 'दक्षिणपश्चात्' इति रूपेण कृतपुंवद्भावस्यैव निर्देशः समुचितः स्यात्, तत्रापि पुंवद्भावानित्यत्वाश्रयणाङ्गीकारापेक्षया त्वव्ययस्यैव ग्रहणमुचितम् । यद्यपि तत्र सूत्रे बृहद्वृत्तावुभयथापि रूपसिद्धिः प्रदर्शिता, न च पुंवद्भावस्य चर्चा कृता, अव्ययस्यैव ग्रहणमिति च मतान्तरत्वेन स्थापितम्, तथापि "कौण्डिन्यागस्त्य०" [६. १. १२७.] इति सूत्रे निपातनात् पुंवद्भावं कथयता प्रकृतेऽपि रूपस्योभयथा सिद्धिं दर्शयताऽस्य न्यायांशस्यानावश्यकत्वं स्पष्टमेव सूचितं प्रतीयत इति विचारणीयं सूरिभिः ॥ २ ॥ एकशेषस्यानित्यत्वे ज्ञापकं यथा–'तदतदात्मकं तत्त्वमातिष्ठन्ते जैनाः' इति, अयं च शिष्टप्रयोग एकशेषस्यानित्यत्व एवोपपद्यते, अन्यथाऽत्र "त्यदादिः" [३. १. १२८.] इत्येकशेषेण तदात्मकं तत्त्वमित्येव प्रयोग उपपन्नः स्यात्; सति चानित्यत्वे तच्चातच्च तदतदे, ते आत्मा स्वरूपं यस्य तत् तदतदात्मकमिति तदतदोः सह प्रयोगः सिद्धो भवति । अत्रातिष्ठन्ते इति "प्रतिज्ञायाम्" [३. २. ६५.] इत्यात्मनेपदम्, तच्छब्दस्य सर्वनामत्वात् तेनात्र–सत्त्वं, नित्यत्वं, सामान्यात्मकत्वम्, अभिलाप्यत्वं चोच्यते, अतच्छब्देन च तद्विपरीतमसत्त्वमनित्यत्वं विशेषात्मकत्वमनभिलाप्यत्वं चेति सर्ववस्तूनां सत्त्वनित्यत्वादिधर्मेषु स्याद्वादं जैनाः प्रतिजानत इति वाक्यार्थः । "त्यदादिः" [३. १. १२०.] इति सूत्रेण च त्यदादेरन्येन सह द्वन्द्वप्राप्तावेकस्य त्यदादिशब्दस्य शेषोऽपरस्य च लोपः क्रियते, अत्र च तच्छब्दस्त्यदादिः, अतच्छब्दश्च तदन्य इति तस्य लोपः प्राप्तः, परमेकशेषस्यानित्यत्वान्न भवति । तदनित्यत्वे ज्ञापकोऽपीदृशशिष्टप्रयोग एव, तदर्थं प्रयत्नान्तराकरणात् तस्य प्रयोगस्य चावश्यसाधुत्वार्हत्वात् ॥ ३ ॥ द्वन्द्वैकत्वस्यानित्यत्वे प्रमाणं च–"प्राणितूर्याङ्गाणाम्" [३. १. १३७.] इति सूत्रे बहुवचननिर्देश एव, अन्यथा ईदृशस्थलेषु आचार्यस्य सर्वत्रैकवचनप्रयोगस्यैव शैली दृश्यते लाघवार्था, तथेहापि लाघवार्थैकवचनस्यैव प्रयोगे समुचिते बहुवचनप्रयोगो विशिष्टकार्यज्ञापक एवेति प्रकृते बहुवचनप्रयोगेण द्वन्द्वैकत्वस्यानित्यत्वज्ञापनमेवेष्टमिति प्रतीयते, प्रयोजनान्तराभावात् । ज्ञापिते चात्र न्यायांशे बहुवचनप्रयोगः सार्थको भवति । फलं च 'शङ्खदुन्दुभिवीणाः' इत्यादिप्रयोगेषु तूर्याङ्गत्वेन "प्राणितूर्याङ्गाणाम्" [३. १. १३७.] इति प्राप्तोऽपि समाहारद्वन्द्वो नाभूत्, एतच्च प्राचां मतं, स्वमतं तु विवरणे प्रपञ्चयिष्यते ॥ ४ ॥ दीर्घत्वस्यानित्यत्वे प्रमाणं च 'स्फूर्ज्-ऊर्ज्-ऊर्णु'-प्रभृतीनां कृतदीर्घाणामेव धातुषु पाठः, अन्यथा ह्रस्वपाठेऽपि "भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने" [२. १. ६३.] इति सूत्रेण दीर्घे सिद्धे दीर्घपाठो व्यर्थ एव स्यात्, तथा च दीर्घपाठो दीर्घस्य व्यभिचरितत्वं ज्ञापयति, स्फूर्जादीनां च दीर्घस्याव्यभिचारार्थं दीर्घपाठः स्वांशे चरितार्थः । फलं च कूर्दते इत्यर्थे "रम्यादिभ्यः कर्तरि" [५. ३. १२६.] इत्यनेन अने कृते 'कुर्दनः' इति प्रयोगसिद्धिः । किञ्च "गुर्वै उद्यमे" इत्यस्मात् "णिन् चावश्यकाधमर्ण्ये" [५. ४. ३६.] इति णिनि स्त्रियां ङ्यां गुर्विणीति प्रयोगे "भ्वादेर्नामिनः" [२. १. ६३.] इति दीर्घो नाभूत् । नास्य न्यायस्यानित्यत्वज्ञापनावश्यकता, अनित्यस्यानित्यत्वे च नित्यत्वमेव लब्धं स्यादित्यनित्यत्वमेव व्याहन्येत । अनित्यत्वं हि क्वचिदप्रवर्त्तमानत्वमेव, तेनैवेष्टस्थले प्रवृत्तेरनिष्टस्थले चाप्रवृत्तेः सिद्धत्वेनानित्यत्वज्ञापनं व्यर्थमेव स्यादिति ५ ॥ ३९ ॥

### *स्थानिवद्भाव-पुंवद्भावैकशेष-द्वन्द्वैकत्व-दीर्घत्वान्यनित्यानि* ॥ ३९ ॥

त०—अत्र न्याये पञ्चांशाः, प्रत्येकं ज्ञापकफलादीनि वृत्तौ दर्शितानि । वस्तुतस्तु स्थानिवद्भावानित्यत्वमात्रमत्र सूत्राक्षरज्ञाप्यत्वाद् दृढम्, अन्यान्यनित्यत्वानि नातिप्रयोजनकानि, तच्चाग्रे स्फुटीकरिष्यते । इत्थंरूपेण ज्ञापकेन स्थानिवद्भावानित्यत्वं चान्यैरपि वैयाकरणैः स्वीक्रियते । तथा च पाणिनीये तन्त्रे "उपान्त्यस्यासमानलोपि०" [४. २. ३५.] इति सूत्रस्थपर्युदस्यमानार्थकं "नाग्लोपिशास्वृदिताम्" [पा० सू० ८. ४. २.] इति सूत्रं पृथगारभ्यते, तत्रापि महाभाष्ये एवमेव स्थानिवद्भावसाधनं दृश्यते । तथाहि–तत्रत्यो ग्रन्थः–"अग्लोपिप्रतिषेधानर्थक्यं च, स्थानिवद्भावात्" [वार्तिकम्], "अग्लोपिप्रति-

षेधश्चानर्थकः, किं कारणम् ? स्थानिवद्भावात्–स्थानिवद्भावादत्र ह्रस्वत्वं न भविष्यति । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः, क्व च स्थानिवद्भावो नास्ति ? यो हलचोरादेशः–अत्यरराजत् । किं पुनः कारणं हलचोरादेशो न स्थानिवदिति ? उच्यते–अजादेशः स्थानिवदित्युच्यते, न चायमच एवादेशः । किं तर्हि ? अचश्चान्यस्य च । अग्लोपिनां नेत्यपि तर्हि प्रतिषेधो न प्राप्नोति, किं कारणम् ? अग्लोपिनां नेत्युच्यते, न चात्रागेव लुप्यते । किं तर्हि ? अक् चान्यश्च, योऽत्राग् लुप्यते तदाश्रयः प्रतिषेधो भविष्यति । यथैव तर्हि योऽत्राग् लुप्यते तदाश्रयः प्रतिषेधो भवत्येवं योऽत्राज् लुप्यते तदाश्रयः स्थानिवद्भावो भविष्यति । एवं तर्हि सिद्धे सति यदग्लोपिनां नेत्येवं प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः–'इत ऊर्ध्वं स्थानिवद्भावो न भवति' इति । अयमाशयः–स्थानिवद्भावेन मालामाख्यदममालदित्यादिरूपाणां सिद्धावपि तत्रोपान्त्यह्रस्वनिषेधार्थमारभ्यमाणमसमानलोपिग्रहणं स्थानिवद्भावानित्यत्वे ज्ञापकं भवत्येव । न चात्यरराजदित्यादौ केवलस्य स्वरस्य लोपरूपादेशाभावात् तत्र स्थानिवद्भावाप्राप्तेरुपान्त्यह्रस्वाभावार्थं तच्चरितार्थमिति वाच्यम्, केवलसमानलोपाभावेऽपि समानलोपत्वस्वीकारवत् केवलस्वरस्थानिकत्वाभावेऽपि स्वरस्थानिकत्वस्यावयवद्वारा स्वीकरणीयत्वादिति । वस्तुतस्तु "स्वरस्य परे प्राग्विधौ" [ ७. ४. ११०. ] इति सूत्रस्थानीये "अचः परस्मिन् पूर्वविधौ" [ १. १. ५७. ] इति पाणिनीयसूत्रे महाभाष्ये स्वरव्यञ्जनयोरादेशो न स्वरादेश इत्यस्यार्थस्य निर्णीतत्वेनात्र स्वरव्यञ्जनयोरादेशस्य स्वरादेशत्वस्वीकरणं शिष्यव्युत्पादनार्थमात्रमेव । तथा च राजानमतिक्रान्त इत्यरराजदित्यादौ स्थानिवद्भावात् तत्रोपान्त्यह्रस्वनिषेधार्थमसमानलोपिग्रहणस्य चारितार्थ्येन न ज्ञापकत्वसंभवः । न चात्यरराजदित्यत्र समानमात्रस्य लोपाभावात् कथं समानलोपित्वनिमित्तक उपान्त्यह्रस्वाभावः स्यादिति शङ्कनीयम्, असमानलोपिग्रहणसामर्थ्याल्लक्ष्यानुरोधाच्च समानमात्रलोपित्वाभावेऽपि समानलोपित्वस्वीकारात् । न चाममालदित्यादावसमानलोपिग्रहणं सार्थकमिति वाच्यम्, तत्र स्थानिवद्भावेनापि सिद्धेः । स्पष्टं चेदं पूर्वोदाहृतभाष्यव्याख्यायां कैयटेऽपि । एवं च स्थानिवद्भावानित्यत्वेऽपि न दृढतरं ज्ञापकम्, वास्या परिच्छिन्नवान्–पर्यवीवसत्, स्वादु कृतवान्–असिस्वददित्यादौ चोपान्त्यस्य ह्रस्वार्थमातिदेशिकमनित्यमिति सामान्यन्यायेनैव स्थानिवद्भावाभाव इत्याश्रयणीयम् । यदि चायं न्यायः स्वशास्त्रे न व्यवहृतो दृश्यत इत्युच्यते तदा बृहद्वृत्त्युक्तरीत्या प्रकृतन्यायांशज्ञापनमास्थेयमेवेति ॥ १ ॥

पुंवद्भावानित्यत्वविषये च ज्ञापकं निपातनरूपमेवेति तत्र पुंवद्भावोऽनुमतोऽन्यत्रापि तज्ज्ञापकत्वे न किमपि विशिष्टं फलम्, दाक्षिणात्यसिद्धिश्चान्यथाऽपि वृत्तौ प्रदर्शितैवेति तदनित्यत्वज्ञापनमपि नातिप्रयोजनीयमिति वृत्तावेव निवेदितम् ॥२॥

एकशेषस्यानित्यत्वे ज्ञापकतया 'तदतदात्मकं तत्त्वमातिष्ठन्ते जैनाः' इति प्रयोग एवोक्तः, स एव च तदुदाहरणमपि । तत्रेदमभिधीयते–तदिति सामान्यार्थकम्, अतदिति विशेषार्थकमित्युभयोर्भिन्नार्थकत्वेन शिष्यमाणेन तच्छब्देन लुप्यमानस्यातच्छब्दस्यार्थो बोधयितुमशक्य इति गमकत्वाभावादेवात्रैकशेषो न भविष्यतीति न तदनित्यत्वमास्थेयम् । अयमत्राभिसन्धिः–एकशेषारम्भशास्त्रेण नैकस्मिन् शिष्यमाणे लुप्यमानार्थाभिधायित्वं विधीयते नवीनतया, अपि तु पूर्वतः सिद्धमेवानुशिष्यते, ततश्च यस्य शिष्यमाणस्य यदर्थबोधकत्वं दृष्टचरं स एव शिष्यतेऽन्यो लुप्यत इति वस्तुस्थितिः, एतच्च शब्दानुशासनमिति शब्देनापि साध्यते । किञ्च यत्र "त्यदादिः" [ ३. १. १२०. ] इति सूत्रेणैकशेषः क्रियते त्यदादेः, तत्र 'अयं च मैत्रश्च–इमौ' इत्यादौ न मैत्रादीनां लुप्यमानानां मैत्रत्वादिना विशेषरूपेण भानम्, अपि तु इदन्त्वेन सामान्यरूपेणैव, मैत्रादित्वेन बोधश्च प्रकरणादिगम्य एव । इत्थं च तदात्मकभिन्नस्यातदात्मकस्यार्थस्य पार्थक्येन भानायात्रैकशेषाभाव एवोचितो न त्वेकशेष इति नेदमेकशेषानित्यत्वोदाहरणं युक्तम् । एतच्च "त्यदादिः" [ ३. १. १२०. ] इति सूत्रस्थलघुन्यासग्रन्थेनापि प्रतीयते, तथाहि–तत्रत्यो ग्रन्थः "स च चैत्रश्चेति । ननु च त्यदादेः सामान्यशब्दत्वात् चैत्रोऽपि स चेति निर्देष्टुं शक्यः, न च तावित्युक्ते स च चैत्रश्चेति प्रत्ययः, किन्तु स च स चेति, तत्र च स्यादौ सरूपत्वात् पूर्वेणैव सिध्यतीति व्यर्थोऽस्योपन्यासः, न व्यर्थः, स च चैत्रश्चेत्येवंविवक्षायां द्वन्द्वः प्राप्नोतीति, तथाहि–तच्छब्दो यदा चैत्रव्यतिरिक्तार्थपरामर्शीति प्रकरणादिनाऽवगतं तदा गोबलीवर्दवत् तच्चैत्राविति स्यात्, वाक्यवत् तच्छब्दस्य वृत्तावप्यपेक्षा प्रतीयत इति द्वन्द्वनिवृत्तिप्रदर्शितार्थोऽस्योपन्यास इत्यदोषः" इति । अस्यायमाशयः–"स च चैत्रश्चेत्यादिविग्रहे तावित्यादिप्रयोगे न चैत्रत्वादिना भानमपि तु तच्छब्दार्थत्वेनैव, ततश्च तच्छब्दस्यैवायं समानरूपस्यैकशेष इति नायं विशेषविधिरावश्यक इति न वक्तव्यम्, 'तच्चैत्रौ' इत्यादिद्वन्द्वसमासनिवृत्त्यर्थत्वात्" इति । तथा च तत्पदादिना सहोच्यमानोऽन्यः शब्दः सामान्यरूपेणैव तमर्थं कथयति यत्र च सामान्यतो विशेषः प्रतिपादयितुमिष्टः स्यात् तत्रावश्यं पृथङ् निर्देशः कार्यः, स च पृथक्पदत्वेन समासादिना वा यथायोगमिति नाग्रहस्तत्रैकशेषविषये । इह च तदा तदात्मकं तत्त्वमित्यादावेकशेषे कृते न तच्छब्दः स्वविरुद्धमर्थमभिधातुं शक्नुयादिति सामर्थ्याभावादेव नैकशेषः, अवश्यं चैकशेषेऽपि समर्थाश्रितत्वमेषणीयमिति निर्णीतं पूर्वत्र *समासतद्धितानां वृत्तिर्विकल्पेन* इति न्यायव्याख्यायाम् । तथा चैकशेषानित्यत्वज्ञापनमपि नावश्यकमिति प्रतीमः ॥ ३ ॥

द्वन्द्वैकत्वानित्यत्वमपि न ज्ञापनार्हम् । इत्थं हि तत्र वस्तुस्थितिः—यत्रात्रयवगतसंख्याविवक्षा तत्र द्विवचनादिकं भवति, यत्र च समुदायविवक्षा तत्रैकत्वं भवति, ईदृशामवस्थायां व्यवस्थितायां यत्र द्वन्द्वैकत्वं विधीयते तत्र समुदायविवक्षैवाद्रियते नियमेनेति प्रतीयते । शङ्खदुन्दुभिवीणाश्चेत्यत्र च यद्यपि तूर्याङ्गत्वेनैकत्वं प्राप्तं, तथा दुन्दुभिश्च वीणा चेति द्वन्द्वं कृत्वा दुन्दुभिवीणमिति समाहारं विधाय पश्चात् शङ्खौ च दुन्दुभिवीणं चेति विग्रहे न समाहारः, किन्तु सर्वेषामितरेतरयोग एवेति "प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इति सूत्रस्थलघुन्यासग्रन्थतोऽप्यवसीयते, तथाहि तत्र—"यदा मृदङ्गश्च शङ्खपटहं चेति क्रियते तदा समाहारो न भवति तूर्याङ्गसमुदायत्वात्" इत्युक्तम् । अयमाशयः—यथा स्वाङ्गसमुदायो न स्वाङ्गं तथा तूर्याङ्गसमुदायो न तूर्याङ्गम्, ततश्च 'शङ्ख-दुन्दुभि-वीणाः' इत्यादावपि तूर्याङ्गसमुदायत्वमाश्रित्येतरेतरयोगसिद्धौ न तदर्थं द्वन्द्वैकत्वस्यानित्यत्वमेषणीयम् । किञ्चात्र यज्ज्ञापकत्वेनोक्तं "प्राणितूर्याङ्गाणाम्" [ ३. १. १३७. ] इति सूत्रस्थं बहुवचनग्रहणं, तदपि न घटते, तस्यान्यार्थताया बृहद्वृत्तौ प्रदर्शितत्वात्, तथाहि—"प्राण्यङ्गानां, तूर्याङ्गेषु शङ्ख-पटहादीनामप्राणिजातित्वात् पूर्वेण सिद्धे व्यक्तिविवक्षायां विधानार्थम्, जातिविवक्षायां प्राण्यङ्गाप्राण्यङ्गादिसम्भेदे एकत्वनिराकरणार्थं च वचनम्। एतज्ज्ञापनार्थमेव च बहुवचनम्" इति । तथा चायमत्रत्यग्रन्थाशयः—व्यक्तिविवक्षायां—समासावयवगतभेदविवक्षायामप्राणिजातित्वाभावान्नात्रैकत्वं प्राप्तं तत्रैकत्वविधानार्थं प्राण्यङ्गेति सूत्रम्, यत्र प्राण्यङ्गाप्राण्यङ्गानां सह विवक्षा तत्र जातिविवक्षायामपि न द्वन्द्वैकत्वं, यथा 'पाणिपणवौ' इत्यादौ, इति ज्ञापनार्थमेवेह बहुवचननिर्देशोऽत्रेति । इत्थं च कथमत्रत्येन बहुवचनेन द्वन्द्वैकत्वस्यानित्यत्वं ज्ञापयितुं युक्तं, यावता तस्यान्यार्थसाधकताऽऽचार्येण स्वत एवोक्ता । न च बहुवचनस्यैकेनैव फलेन भाव्यं न फलान्तरेणेति नास्ति नियम इति तस्य द्वन्द्वैकत्वानित्यत्वज्ञापकत्वमपि स्वीक्रियते इति वाच्यम्, 'एतदर्थमेव' इत्येवकारेण फलान्तरस्य व्यवच्छेदात् तथा च तदनित्यत्वे न किमपि ज्ञापकम् । तथा च 'शङ्ख-पटह-वीणाः' इत्यादिप्रयोगाणां सति प्रामाणिकत्वे द्वयोर्द्वन्द्वं कृत्वा पुनरेकेन द्विवचनान्तेन बहुवचनान्तेन वा द्वन्द्व इति, तत्र पूर्वद्वन्द्वस्य तूर्याङ्गसमुदायतया प्रकृतसूत्राप्रवृत्त्या इतरेतरयोगद्वन्द्वे बहुवचनं सेत्स्यतीत्येषैव गतिराश्रयणीयेति युक्तं प्रतिभाति ॥ ४ ॥

एवं भ्वादेर्नामिनो दीर्घत्वस्यानित्यत्वमपि नावश्यकम्, 'कुर्दनः' इत्यादौ दीर्घपाठस्यापि बहुत्रोपलब्धेः । यच्च 'ऊर्ज्-स्फूर्ज्-ऊर्णु' धातूनां दीर्घपाठस्य दीर्घानित्यत्वज्ञापकत्वमुपन्यस्यते तदपि न सर्वसाधारणम् । पाणिनीयादौ तन्त्रे "भ्वादेर्नामिनः०" [ २. १. ६३. ] इति सूत्रस्थानीयेन "उपधायां च" [ पा० सू० ८. २. ७८. ] इति सूत्रेण रेफ-वकारयोरुपान्त्यत्वे सत्येव दीर्घो विधीयते, तत्र 'ऊर्ज' इति धातुदीर्घः पठ्यते, तस्यायमाशयः—तस्य चौरादिकत्वेन ण्यन्तत्वाण्णिसहितस्यैव धातुत्वात् तत्र रेफस्योपान्त्यत्वाभाव इति, ऊर्णोतेस्तु स्वत एव रेफ उपान्त्यो नास्ति, स्फूर्ज्धातुश्च तत्र ह्रस्व एव पठ्यते इति तन्मते नात्र न्याये ज्ञापकसंभवः । न्यायैश्च साधारणैर्भवितव्यमिति नास्य न्यायस्याश्रयणमुचितम् । 'कूर्दनः' इति दीर्घसहित एव पाठः, न च दीर्घपाठे छन्दसि तत्कृतः कश्चन भेदो भविष्यति, संयोगपरत्वेन तस्य गुरुत्वस्य नैयत्यात् । इत्थं च विचारितेऽस्मिन् न्याये आद्योंऽश एव प्रयोजनीयो नान्येंऽशा इति प्रतीयत इति ॥ ३९ ॥

## ※अनित्यो णिच्चुरादीनाम्※ ॥ ४० ॥

सि०—चुरादिभ्यो धातुभ्यः स्वार्थे णिज् विहितः, स च सर्वदा प्राप्तः, दृश्यन्ते च तद्विरहिता अपि तेषां तेषां धातूनां प्रयोगाः, तत्साधनायायं न्याय आश्रितः । तथा च चुरादिगणपठितानां णिच्, तेभ्यो विहित इति यावत्, अनित्यः—यथाशिष्टप्रयोगं क्वचित् क्वचिन्नापि भवतीत्यर्थः । अत्र ज्ञापकं तु चुरादिषु पठितस्य घुष ऋदित्त्वकरणम्, तद्धि "ऋदिच्छ्वि-स्तम्भू०" [ ३. ४. ६५. ] इत्यङर्थं कृतम्, तेनाघुषदित्यादिरूपसिद्धिः, यदि चुरादीनां णिज् नित्यः स्यात् तर्हि ण्यन्ते तु "णि-श्रि-द्रु-स्रु०" [ ३. ४. ५८. ] इति विशेषविहितेन ङेन बाधादङोऽवकाशाभावेन तदर्थं कृतमृदित्त्वं व्यर्थमेव स्यात्, व्यर्थीभूतं च तच्चुरादीनामनित्यण्यन्तत्वं ज्ञापयति । तथा च "चुरण् स्तेये" इत्यस्य चोरतीत्याद्यपि रूपं स्यात्, "चितुण् स्मृत्याम्" इत्यस्य चिन्ततीत्यादि, "छदण् संवरणे" इत्यस्य छदनम्, "तुलण् उन्माने" इत्यस्मात् "भिदादयः" [ ५. ३. १०८. ] इत्यङि तुला इत्यादिरूपं सिध्यति । अस्य चानित्यत्वस्य प्रयोगानुसारित्वान्न नैयत्येन सर्वेषां चुरादीनां द्विधा प्रयोगः, किन्तु केषाञ्चिदेव कार्यविशेषहेतुकः, तत्तत्कार्यसाधकानुबन्धादिसूचितो णिज्रहितः प्रयोगोऽनुमन्यते । अतश्च नियतविकल्पणिजन्तत्वार्थं युजादीनां "युजादेर्नवा" [ ३. ४. १८. ] सूत्रेण विकल्पो विहितः ॥ ४० ॥

## ※अनित्यो णिच्चुरादीनाम्※ ॥ ४० ॥

त०—चुरादिषु तत्तदनुबन्धविशिष्टा अपि धातवः पठ्यन्ते येषामनुबन्धानां फलं ण्यन्तावस्थायां न लभ्यते, अतोऽस्ति णिरहिताप्यवस्थैतेषामित्यनुमीयते, यथा—'चितुण्' इत्युदित् पठ्यते, उदित्त्वस्य साक्षात् फलं नागमः, तच्च नकारसहितपाठेनापि साध्यम्, किन्तु नकारसहितपाठे आशिषि चित्यादिति रूपं स्यात् "नो व्यञ्जनस्यानुदितः" [ ४. २. ४५. ] इति

नलोपात्, उकारविशिष्टपाठे चोदित्त्वेन नलोपस्याऽप्रवृत्त्या चिन्त्यादिति रूपं स्यादिति विशेषः। स च यदि चुरादिभ्यो णिज् नित्यः स्यात् तर्हि व्यञ्जनान्तत्वाभावेन स्वत एव नलोपस्याप्रवृत्तौ 'उदित्'पाठो व्यर्थ एव स्यात्। एवम्—ऋदित्करणमपि वृत्त्युक्तदिशा प्रकृतार्थज्ञापकम्। न च ऋदित्करणसामर्थ्याण्णिजन्तादप्यङेवास्तु ङो मास्त्विति वाच्यम्, ङस्य विशेषविहितत्वात्। ननु ण्यन्तान्ङो विधीयते, ऋदितश्चाङ्, इत्युभयोरपि विशेषविहितत्वं समानमिति वाच्यम्, ण्यन्तादङोऽप्राप्तेः, अवयवेऽचरितार्था अनुबन्धाः समुदायस्योपकारका भवन्तीति न्यायस्यात्र विषयाभावाण्ण्यन्तस्य ऋदित्त्वाभावेन ततोऽङः प्राप्तेर्दुरुपपादत्वात्, नहि तेन न्यायेनान्यस्य धर्मोऽन्यस्मिन्नारोप्यते. ऋदित्त्वं घुषेर्धर्मो न तु ण्यन्तस्य घोषयतेः, ण्यन्तस्य शब्दान्तरतायाः सर्वैः स्वीकृतत्वात्। तथा च सामान्यविशेषभावमूलकोऽत्र नाङ्ङोर्बाध्यबाधकभावः, किन्तु ण्यन्तादङोऽप्राप्तिरेव व्याख्येयेति प्रतिभाति। सामान्यविशेषरीत्या वृत्तिगतं समाधानं तु प्राचामनुरोधेन। एतन्न्यायमाश्रित्य "युजादेर्न वा" [३. ४. १८.] इति णिज्विकल्पवैयर्थ्यं नु नाशङ्कनीयम्, सूत्रेण युजादीनां सर्वविभक्तिषु नैयत्येन णिचो विकल्पस्य बोधनात्। अयं च न्यायः शिष्टप्रयोगेषु दृश्यमानणिजभावसाधुत्वानुमोदकः। न च तेन सूत्रेणास्य न्यायस्याध्रौव्यमपि बोधनीयम्, अनित्यत्वस्य स्वत एवाध्रौव्यरूपत्वेन तस्याध्रौव्यस्य बोधने फलाभावादिति ॥ ४० ॥

## ※णिलोपोऽप्यनित्यः※ ॥ ४१ ॥

सि०—अपिशब्दः पूर्वन्यायस्य णिविषयत्वेन यथा चुरादीनां णिज् नित्यं विहितोऽपि क्वचिन्न भवति तथा णिलोपोऽपि क्वचिन्न भवतीति पूर्वन्यायसाम्यं व्यञ्जयति। अयं च न्यायः "भीषि-भूषि-चिन्ति-पूजि-कथि-कुम्बि-चर्चि-स्पृहि-तोलि-दोलिभ्यः" [५. ३. १०९.] इति सूत्रस्याङोऽधिकारे पाठेन विज्ञायते, अन्यथा "णि-वेत्त्यास-श्रन्थ-घट्ट-वन्देरनः" [५. ३. ११.] इत्यस्य बाधनार्थं "जागुरश्च" [५. ३. १०४.] इत्यतः प्रारब्धे 'अ'प्रत्ययाधिकारे एव पठितव्यं स्यात् तत् सूत्रम्। अप्रत्ययादङ्प्रत्ययस्यैतावानेव विशेषो यद्-अप्रत्यये परतो गुणादिर्भवति, अङ्प्रत्यये परतो न भवति, किन्तु प्रकृतसूत्रे भीष्यादीनां सर्वेषां ण्यन्तानामेव ग्रहणात् ततोऽप्रत्ययविधाने णेर्लोपे कृते नाम्यभावाद् गुणादीनामप्राप्तौ विशेषाभावेन तत्रैव पाठस्यौचित्यम्। एवं च तत्रापठित्वा "पितोऽङ्" [५. ३. १०७.] इत्यधिकारे पाठेनाप्रत्ययाऽङ्प्रत्यययोर्विशेषोऽत्र कश्चित् सम्भावित आचार्येणेति विज्ञायते, स च तदैव स्याद् यदि णिलोपो न भवेत्। तथा चाचार्येण णिलोपस्यानित्यतां सम्भाव्यैवात्र प्रकरणे तत्पाठः कृतः। तथा चायं न्यायोऽपेक्षित आचार्यस्येति प्रतीयते, सति चास्मिन् न्याये चिन्ति-पूजिभ्यामप्रत्ययो यदि क्रियेत न्यायप्रवृत्त्या च णिलोपो न भवेत् तर्हि गुणेऽयादेशे च चिन्तया पूजया चेति प्रयोगः स्यात्, इष्यते तु चिन्तिया पूज्या चेति। ततश्चाङधिकारे पाठः सार्थकः, अङि हि सति गुणाभावे पूर्वत्र "संयोगात्" [२. १. ५२.] इतीयि कृते चिन्तियेति, परत्र "योऽनेक०" [२. १. ५६.] इति यत्वे कृते पूज्येति रूपं सिद्धम्। अन्यत्र च फलम्—

"न यमेन न जातवेदसा न कुबेरेण न वज्रपाणिना।
मघवो युधि सुप्रकम्पयाः श्वसनेनैव वसुन्धरापते!॥"

इति पूर्वशिष्टप्रयोगे सुप्रकम्पया इति खल्प्रत्ययान्तप्रयोगे णेर्लोपाभावाद् गुणायादेशौ सिद्धौ। "भीषि-भूषि०" [४. ३. १०९.] इति सूत्रे लघुन्यासेऽप्येवमेतन्न्यायज्ञापनमवलोक्यते, तथाहि—तत्रत्यो ग्रन्थः—"अप्रत्ययाधिकारेऽप्यस्मिन् कृते साध्यसिद्धिः स्यात्, परमङ्प्रत्ययाधिकारे यत् कृतं तण्णिलोपस्यानित्यताज्ञापनार्थम्, तेन चिन्तिया, पूजिया, सुप्रकथिया इत्यादि सिद्धम्" इति। अत्र चायं विशेषो दृश्यते यत् सर्वत्रेयादेश एव कृतो न तु यादेशः, तत्र मूलं मृग्यम् ॥ ४१ ॥

## ※णिलोपोऽप्यनित्यः※ ॥ ४१ ॥

त०—अत्रायं नव्यो विचारः—"अयं च न्यायो नान्यत्र दृश्यते। न चास्यावश्यकताऽपि दृढतरा प्रतीयते। 'सुप्रकम्पया' इति प्रयोगस्य प्रामाणिकत्वे सुप्रकम्पं यातीत्यर्थे बाहुलकाद् यातेर्विचि सति तत्सिद्धिरेषणीया। 'चिन्तिया पूज्या' इत्यादीनामिष्टत्वे मूलाभावः। "भीषि-भूषि" [५. ३. १०९.] इति सूत्रस्याङधिकारे पाठश्चाकारप्रत्ययस्य प्रत्ययान्तत्वेनैव सिद्धेर्विशिष्यानस्य बाधनार्थत्वख्यापनार्थैव। किंच स्पृहयतेरकारप्रत्यये णिलोपे गुणे स्पर्हेति प्रयोगापत्तेस्तद्वारणार्थं ततोऽङ्प्रत्ययस्यैवौचित्येन ण्यन्तत्वसाम्यात् सर्वेभ्योऽङ्प्रत्यय एव विहितः। उभयत्र पाठे विशेषाभावेन विनिगमकाभावादत्रैव प्रकरणे वा पाठः कृत इत्यपि वक्तुं शक्यम्, इत्थं ज्ञापकाभावादपि नायं न्याय एष्टव्य इति प्रतिभाति" इति चिन्त्योऽयं विचारः सुधीभिः ॥ ४१ ॥

## ※णिच्सन्नियोग एव चुरादीनामदन्तता※ ॥ ४२ ॥

सि०—चुरादिषु केचनादन्ता धातवः पठ्यन्ते, चुरादयश्चानित्यणिजन्ता इति पूर्वन्यायेन निर्णीतम्। तथा च चुराद्यन्तर्गततया तेभ्योऽपि कदाचिण्णिजभावः संभाव्यते, सति चादन्तत्वे णिचोऽभावेऽनेकस्वरत्वनिबन्धनानि कार्याणि तेभ्यः

प्राप्नुवन्ति तानि च नेष्टानि, किन्तु जगाण जगणतुरित्यादिरूपेणैवानेकस्वरनिमित्तकामूरहितान्येव रूपाणीष्टानीति तेषां णिचूसन्नियोगेनैवादन्तत्वमेषितव्यमिति प्रतिभाति, तदेवानेन न्यायेन साध्यते । अत्र च ज्ञापकम्—"ई च गणः" [ ४. १. ६७. ] इति सूत्रेणाकारस्यापि विधानार्थं तत्र चकारकरणम्, अन्यथा "ई वा गणः" इति सूत्रविधानेऽपि ईकाराभावपक्षे स्वभावत एवाकारस्यैव श्रवणं स्यात्, इति तद्विधानं व्यर्थमेव स्यात् । न चानेनेकाराभावपक्षे सन्वद्भावेनेत्वे दीर्घे च पुनरप्यजीगणदित्येव रूपं स्यादिति वाच्यम्, समानलोपित्वेन सन्वद्भावाप्राप्तेः । एवं च सिद्धे सत्यपि यदित्वाभावेऽत्वविधानार्थमाचार्यश्चकारं पठति तज्ज्ञापयत्येवमादीनां धातूनां णिजभावेऽदन्तत्वाभावम् । तथा च सति यदा णिजभावे प्रेरणार्थो णिग् विधीयते तदाऽद्यतन्यां रूपद्वयस्य सिद्ध्यर्थमकारविधानमर्थवद् भवति, अन्यथा तत्रेकारस्य विकल्पेन विधानेऽपि पक्षे सन्वद्भावेनाजीगणदित्येकमेव रूपं स्यात् । तण्णिजभावे णिगि सत्यजगणदिति रूपमित्यर्थमेवाकारविधानमिति । फलं च जगाणेत्यादावनेकस्वरत्वाभावादामोऽभाव इति । न चेत्वाभावेऽकारविधानं बाधित्वा सन्वद्भावादावजीगणदित्येवरूपं कुतो नेति वाच्यम्, विशेषविहितत्वात् सन्वत्त्वनिमित्तकस्येत्वस्यानेन बाधात् । "पतण् गतौ वा" इत्यत्र वाशब्दो णिजदन्तत्वयोर्विकल्पार्थ इति धातुपारायणव्याख्यानेनास्यानियतत्वमपि लभ्यते, अन्यथा वाशब्दस्य णिज्विकल्पार्थत्वमात्रोक्तावप्यदन्तत्वविकल्पस्यैतन्न्यायबलेन लब्धत्वादुभयोर्विकल्पसिद्धावुभयार्थत्वव्याख्यानासङ्गत्यापत्तेः । तथा चोभयार्थत्वव्याख्यानेनैतन्न्यायानित्यत्वाशङ्कां दृढयतीति ॥ ४२ ॥

## *णिचूसन्नियोग एव चुरादीनामदन्तता* ॥४२॥

त०—अयं न्यायः पूर्वन्यायोत्थः, पूर्वेण हि न्यायेन चुरादीनां णिचोऽनित्यत्वे निवेदित एव तदभावे 'जगणतुः' इत्यादिरूपसंभवः, तत्र च तेषामदन्तत्वेऽनेकस्वरत्वापत्त्याऽऽम् स्यादिति तद्वारणार्थमेवास्योत्थानात् । तत्र णिजोऽनित्यत्वं न सर्वत्र, किन्तु यत्र किमपि तादृशमनुबन्धादिनिमित्तमस्ति, यस्य णिजन्ते प्रयोजनं नास्ति, तस्यैव धातोरनित्यो णिच्, यत्र वा किमप्यन्यच्छिष्टप्रयोगादि विनिगमकं भवेत् तत्रैव । तथा च जगणतुरित्यादिप्रयोगा यदि प्रामाणिकास्तर्हि गणयतेर्णिजनित्योऽस्तु, तदभावे च तस्यादन्तत्वमपि नास्ति, "ई च गणः" [ ४. १. ६७. ] इति सूत्रे चकारेणातोऽपि विधानात्, सर्वेषामनित्यणिज्त्वे प्रमाणाभावात् । यद्यपि "ई च गणः" इत्यस्य स्थाने "ई वा गणः" इति करणे मात्रागौरवमस्तीति लाघवमपेक्ष्यैवेत्थं सूत्रं रचितमिति कथयितुं शक्यते तथापि "ई वा गणः" इति करणे प्रक्रियालाघवस्य स्पष्टत्वेन प्रक्रियालाघवस्य मात्रालाघवापेक्षया प्रवरत्वेन च तदनुसारेण 'ई वा गणः' इत्येव विधेयं स्यादिति चकारः प्रकृतन्यायज्ञापको भवितुमर्हति । प्रकृतसूत्रे लघुन्यासेऽपि प्रकृतार्थसूचनं दृश्यते; तथाहि तत्र—"ननु "ई वा गणः" इत्येव क्रियतामदन्तत्वेन समानलोपित्वादेव पक्षेऽजगणदिति भविष्यति, सत्यम्—चुरादिभ्यो णिज् अनित्यो, णिच्सन्नियोगे एवैषामदन्तता, तदभावे तदभावादजगणदिति न सिध्येत् किन्त्वजीगणदित्येव" इति । तथा च णिच्सन्नियोगेनैवेषामदन्ततेति सिद्धवत्कृत्योक्तम् । वस्तुतस्तु—"गणेरदन्तत्वेन समानलोपित्वात् सन्वद्भावो दीर्घत्वं च न प्राप्नोतीति ईत्वविधिः" इति बृहद्वृत्तिग्रन्थेनाप्राप्तस्येत्वस्य विधानार्थत्वमेवास्य सूत्रस्येतीत्वेन नित्येनाकारश्रयणं नैव स्यादिति तदपि विहितमित्यायाति; न तु तस्य यत्रादन्तत्वाभावे ईत्वं स्वत एव लब्धं तत्रापि प्रवृत्तिरित्यदन्तत्वाभावे रूपद्वयस्य प्रयोगे किमपि दृढतरं प्रमाणं न दृश्यते । तथा च गणयतेर्णिजभावेऽद्यतन्यामजगणदित्यस्य सिद्ध्यर्थमकारविधानस्य चारितार्थ्यमिति न निरूपयितुं शक्यत इति प्रकृतन्यायज्ञापनेऽपि स्वांशे चारितार्थ्यं न प्रतीयत इति लाघवानुरोधेनैव चकारेणात्वविधानमिति प्रतीयते । एषामदन्तत्वं च णिनिमित्तकार्यस्य प्रकृतौ वारणार्थमेव कृतमिति णिजभावेऽदन्तत्वं स्वत एव न भविष्यतीति सर्वमनवद्यम् ॥ ४२ ॥

## *धातवोऽनेकार्थाः* ॥ ४३ ॥

सि०—धातूनामर्था धातुपाठादौ प्रदर्शिताः, तेभ्यश्चान्येष्वपि तेषां धातूनां प्रयोगा दृश्यन्ते, तत्र किं ते प्रयोगा औचित्यमावहन्ति न वेति सन्देहेऽनेन न्यायेन तेषामन्यत्रार्थेऽपि प्रयोगस्यौचित्यमन्वाख्यायते—धातवोऽनेकार्थाः, एकस्मिन्ननेकस्मिन् वाऽर्थे यत्रानुशिष्टा न तदर्थमात्रबोधकाः, अपि तु प्रयोगवशादन्यत्राप्यर्थे साधवो मन्तव्या इति तदर्थः । अत्र चार्थे ज्ञापकम्—"तक्षः स्वार्थे वा" [ ३. ४. ७७. ] इत्येवमादिसूत्रेष्वर्थविशेषनिबन्धनेन धातूनां कार्यविधानम् । यदि हि पठितेभ्योऽर्थेभ्योऽन्येऽर्था न स्युस्तर्हि 'स्वार्थे' इत्यादि तदर्थान्तरव्यावर्त्तकं पदं व्यर्थमेव स्यात् । सति चार्थान्तरे तत्र स्वविधेयस्य 'श्नु'प्रत्ययादेर्व्यावर्त्तनाय 'स्वार्थे' इत्यादि सार्थकम् । अनेकार्थत्वं यथा "विधत्" इति धातुर्विधानार्थे पठ्यते, व्यधार्थेऽपि च प्रयुज्यते, यथा—'वेधः, वेधनम्, शब्दवेधी'इत्यादौ । "एधि" इति धातुर्वृद्धौ पठ्यते, दीप्त्यर्थेऽपि च प्रयुज्यते, यथा—"पुरश्चक्रं तवैधते", प्राप्त्यर्थेऽप्यन्यत्र, यथा—"औपवस्त्रफलमेधते" । "शुच शोके" इति पठ्यते, शुचिरित्यादिशब्दे च तस्य पवित्रार्थत्वावगमः । एवं "हंग्"

धातुर्हरणे पठ्यते, भवति च तस्यानेकेष्वर्थेषु प्रयोगः, यथा–करणार्थे तस्य प्रयोगः "क्रियाव्यतिहारेऽगति०" [ ३. ३. २३. ] इति सूत्रबृहद्वृत्तौ विहितः, तथा हि–"इतरचिकीर्षितायां क्रियायामितरेण हरणं करणं क्रियाव्यतिहारः" इति । एवं मन्यतेर्मननार्थस्य समार्थे प्रयोगः, मतीकृता क्षेत्रभूरित्यादौ समीकृतेत्यर्थात् । अयमपि न्यायो न सर्वत्र प्रवर्त्तत इति "वियः प्रजने" [ ४. २. १३. ] इति सूत्रसामर्थ्याद् विज्ञायते, तथाहि–वियो गर्भग्रहणे आत्वं विकल्पेन विधीयते, तेन च प्रवापयति, प्रवाययति चेति रूपद्वयसिद्धिर्भवति, तच्च रूपद्वयमन्यथापि धातुद्वयोपष्टम्भेन सेत्स्यत्येव, प्रवापयतीति तावद् "वांकृ गति-गन्धनयोः" इत्यस्य णिगि सति सिद्ध्यति, प्रवाययतीति च "वींक् प्रजनन-कान्त्यसन-खादनेषु च" इत्यस्य भविष्यति । ततश्च विय आत्वविधानेन रूपद्वयसाधनस्यायमेवार्थो यत्–वातेर्गत्याद्यर्थस्य प्रजनार्थ [गर्भग्रहणार्थ] वाचकत्वं दुर्लभमिति तदर्थकस्यैव वियो रूपद्वयं सिद्ध्येदिति । यदि चायं न्यायोऽप्रतिहतः स्यात् तर्हि वातेरपि प्रजनार्थकत्वे सिद्धे किमर्थमिदं सूत्रं क्रियेत, कृतं चैतत् सूत्रमस्य न्यायस्यानियतत्वं विज्ञापयति । फलं चैतस्य–उपसर्गस्य धात्वर्थबाधकत्वकथनस्य सूरिकृतस्य साङ्गत्यम्, तथाहि–"धात्वर्थं बाधते कश्चित् [उपसर्गः]" इति हि तद्वचनम्, उदाहृतं च यथा–प्रतिष्ठते, प्रवसति, प्रसरतीत्यादि, यदि चायं न्यायोऽनित्यो न स्यात् तर्हि प्रकृते धातुपाठे पठ्यमानादर्थाद् भिन्नस्यापि प्रतीयमानस्यार्थस्य धात्वर्थत्वमेवेति कुत उपसर्गस्य धात्वर्थबाधकत्वकथनसङ्गतिः स्यात् । तथा हि सति 'आचष्टे, आलोकते' इत्यादौ यथोपसर्गस्य धात्वर्थानुवर्त्तकत्वमेव स्वीक्रियते, न बाधकत्वं तथैव 'प्रतिष्ठते' इत्यादावपि स्यादिति बाधकत्वं न स्यात् । ज्ञापिते चानित्यत्वेऽप्रामाणिकत्वे वा तिष्ठत्यादेः गतिनिवृत्त्यादिरेवार्थः स्वार्थः, ततश्च 'प्रतिष्ठते'इत्यादौ प्रतीयमानो गत्यर्थ उपसर्गबललभ्य एवेत्युपसर्गस्य धात्वर्थबाधकत्वं साधु घटत इति ॥ ४३ ॥

## *धातवोऽनेकार्थाः* ॥ ४३ ॥

त० —उक्तो न्यायार्थो ज्ञापकमुदाहरणानि चोक्तानि । वस्तुतस्तु नायं न्यायो ज्ञापनसाध्यः । धातूनामुक्तेभ्योऽर्थेभ्योऽन्यत्रापि शक्तिरिति न्यायतात्पर्यम्, तथा च धातूनामन्यत्रार्थेऽपि शक्तिरिति धातुनिष्ठशक्तिग्राहकोऽयं न्याय इति फलति । शक्तिग्रहश्च न ज्ञापनेन भवति,

"शक्तिग्रहं व्याकरणोपमान-कोषाऽऽप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति, सान्निध्यतः सिद्धपदस्य वृद्धाः ॥"

इत्युक्तेषु शक्तिग्राहकेष्वनुमानरूपस्य ज्ञापनस्यानाख्यानात् । तथा च स्वभावसिद्धमेव धातूनामनेकार्थत्वम् । न चेदं नियतमपि स्वभावत एव, केचिदनेकमर्थं बोधयन्ति केचिन्नेत्यत्रान्यस्य विनिगमकस्य वक्तुमशक्यत्वात् । अनेन च न्यायेन धातूनां यत्र क्वचनानेकार्थकथनमनूद्यत एव केवलम् । स्वशास्त्रव्यवहारश्च प्रायो धातुपाठादिषु निर्दिष्टेष्वेवार्थेषु यद्यपि प्राप्तस्तथापि यत्रान्यार्थे विशिष्य किमपि कार्यं व्यावर्त्तनीयं तत्रार्थविशेषग्रहणमपि धातूनां स्वभावसिद्धमनेकार्थावगमकत्वं द्रढयतीति "तक्षः स्वार्थे वा" [ ३. ४. ७७. ] इत्यादीनां न वैयर्थ्यम्, एवं च स्वीक्रियेत चेत् तर्हि "वियः प्रजने" [ ४. २. १३. ] इत्यादीनामपि सामञ्जस्यं स्वत एवेति न तैर्न्यायास्थिरत्वं ज्ञापनीयम् । अनेन न्यायेन विशेषेण सर्वेषामनेकार्थ[ सर्वार्थ ]वाचकत्वे समाश्रीयमाण एव वातेर्वियश्च क्रमेण प्रवापयति प्रवाययतीति रूपयोः सिद्धिमाश्रित्यैव हि तद्वैयर्थ्यं शङ्क्यते, किन्तु पूर्वोक्तरीत्याऽभिधानस्वाभाव्ये समाश्रिते न सर्वेषामपि विशेषेण सर्वार्थवाचकत्वमिति प्रजनार्थस्य विय एव रूपद्वयसाधनाय शास्त्रेणोपायः समालम्बनीय एवेति तस्य सार्थक्यं स्पष्टमेव । किञ्चैवं "धात्वर्थं बाधते कश्चिदुपसर्गः" इत्यादि वचनमपि सम्यगेव । योऽर्थो यस्माद्धातोर्नियमेन प्रतीयते स एव तदर्थ इत्युपसर्गवशादर्थान्तरभाने तस्योपसर्गस्य धात्वर्थबाधकत्वं स्पष्टमेवेति प्रतीयते । अत एव पातञ्जले महाभाष्ये–"अनेकार्था अपि धातवो भवन्ति" इत्युक्तम्, अत्रापिना सर्वेषां धातूनामनेकार्थत्वं भवत्येवेत्याग्रहो नास्त्येव इति स्फोरितमेवेत्यलमधिकेन ॥ ४३ ॥

## *गत्यर्था ज्ञानार्थाः* ॥ ४४ ॥

सि०—धातुप्रसङ्गाद् धातुविषयोऽयं न्यायोऽपि चर्चितः, 'धातवः' इति च पूर्वसूत्रात् सम्बद्धम्, तथा च ये गत्यर्था धातवस्ते ज्ञानार्था अपि 'भवन्ति' इति शेषः । अत्र च ज्ञापकं–"णावज्ञाने गमुः" [ ४. ४. २४. ] इति सूत्रे 'अज्ञाने' इतीणूधातोर्विशेषणम् । गत्यर्थस्य तस्य ज्ञानार्थत्वस्यासंभवात् तत्र निवृत्त्यर्थमज्ञाने इति विशेषणं व्यर्थमेव स्यात्, ज्ञापिते त्वस्मिन् प्रत्याययतीत्यादाविणो ज्ञानार्थत्वस्य दृष्टतया तत्र गम्यादेशाप्रवृत्त्यर्थमज्ञाने इति विशेषणं स्वांशे चरितार्थम्, फलं तु गमयति शब्दोऽर्थमित्यादौ ज्ञापयतीत्यर्थप्रतीतिः । अयं च लक्ष्यानुसारी, तेन क्वचिन्नापि प्रवर्त्तते । अस्यास्थैर्यस्त्वं च "गतिबोधाहारार्थ०" [ २. २. ५. ] इति सूत्रे बोधग्रहणेन विज्ञायते, तत्र हि गतेः प्राक् बोधग्रहणेन सर्वत्र गत्यर्थस्य ज्ञानार्थत्वं न नियतमिति प्रतीयते । तथा च लक्ष्यानुसाराद् व्यवस्थेयम् ॥ ४४ ॥

## *गत्यर्था ज्ञानार्थाः* ॥ ४४ ॥

त०—अत्रापि पूर्वन्यायवदेव विचारोऽवगन्तव्यः । गत्यर्थानां ज्ञानार्थत्वमपि गत्यर्थपुरस्कारेणैव । उपसर्गवशाद् प्रेरणा-

र्थकप्रत्ययवशाच्च गत्यर्थेभ्यो ज्ञानार्थावगतिः । तत्रोपसर्गस्य तु सामर्थ्यमचिन्त्यमेवेति सर्वधातुविषये स्वीकृतमेव ।

"उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहारा-ऽऽहार-संहार-विहार-परिहारवत् ॥"

इति प्राचीनोक्त्या । तथा चोपसर्गवशाद् गत्यर्थत्वमवगच्छतीत्यादिप्रयोगे दृश्यमानं न प्रकृतन्यायविषयः, गमयति शब्दोऽर्थमित्यादौ प्रेरणार्थकप्रत्ययवशाज्ज्ञानार्थत्वं प्रतीयमानं च गत्यर्थपुरस्कारेणैव, अर्थो ज्ञानविषयतां गच्छति, तं शब्दः प्रेरयतीत्यर्थप्रतीतिसत्त्वात् । ज्ञानविषयतारूपस्य कर्मणश्चातिप्रसिद्धत्वाच्च प्रयोगो भवतीति पूर्वन्यायवदयमपि न्यायो न ज्ञापनलभ्यः, किन्तु शब्दशक्तिस्वभावलब्ध एव । इत्थं च "णावज्ञाने गमुः" [४.४.२४.] इत्यादावुपसर्गवशात् प्रेरणार्थकप्रत्ययवशाच्च यत्र ज्ञानार्थप्रतीतिस्तत्र गम्वादेशवारणार्थमज्ञाने इति विशेषणं सार्थकमेव । सर्वत्र गत्यर्थस्य बोधार्थत्वविरहाच्च "गतिबोधाऽऽहारार्थ०" [२.२.५.] इत्यत्र बोधग्रहणमप्यञ्जसैव संगच्छते । तत्र यदि गत्यर्थग्रहणमेव क्रियते तर्हि 'बोधयति शिष्यं धर्मम्' इत्यादौ कर्मत्वं न स्यात्, बुद्ध्यतेर्गत्यर्थत्वाभावात्; यदि बोधार्थग्रहणमेव क्रियते तर्हि 'गमयति चैत्रं ग्रामम्' इत्यत्र बोधार्थत्वाभावात् कर्मत्वं न स्यादिति तद्द्वैयर्थ्यस्य प्रतिपादयितुमशक्यत्वेन प्रकृतन्यायानित्यत्वज्ञापनार्थत्वमिति वृत्तिग्रन्थे लेखः प्राचामनुरोधेनैव । गत्यर्थानां ज्ञानार्थत्वज्ञापनस्य कथमपि सम्भवेऽपि गति-ज्ञानयोर्भिन्नतया तयोरुपादानस्योक्तरीत्या परमावश्यकत्वादिति कृतं विस्तरेणेति ॥ ४४ ॥

## *नाम्नां व्युत्पत्तिरव्यवस्थिता* ॥ ४५ ॥

सि०—अर्थवन्ति शब्दस्वरूपाणि धातु-विभक्ति-वाक्यभिन्नानि नामानि कथ्यन्ते, तानि चार्थबोधनायान्यथान्यथा व्युत्पाद्यन्ते, यथा यथा ततोऽर्थः प्रतीयते तथा तथा तेषु प्रकृतिप्रत्ययादिकल्पना क्रियते, सेयं तेषां व्युत्पत्तेरव्यवस्था । यथा वडवा-सृगाल-मयूरादयः शब्दा द्विधा व्युत्पाद्यन्ते, पृषोदरादित्वादुणादित्वाच्च । तत्र पृषोदरादौ तावत् वडवाशब्दे 'अश्वस्याम्बा' इति विग्रहः, सृगाले 'असृगालेढि' इति विग्रहः, मयूरे 'मह्यां रौति' इति विग्रहः । एतेषामेवोणादित्वे तु "वड आग्रहणे" इति सौत्राद् धातोः "वडि-वटिः" [उणा० ५१५.] इत्यवप्रत्यये स्त्रियां 'वडवा' इति, सृधातोः "सर्तेर्गोऽन्तश्च" [उणा० ४७८.] इति किदाले गागमे च—सृगाल इति । मीनातेः "मी-मसि०" [उणा० ४२७.] इत्यूरे गुणेऽयादेशे—मयूर इति । एवं सूर्यशब्दोऽपि कृत्प्रत्ययेन तद्धितप्रत्ययेन च व्युत्पादितः, तत्र कृति तावत् "कुप्य-भिद्योध्य-सिध्य-तिष्य-पुष्य-युग्या-ऽऽज्य-सूर्यं नाम्नि" [५.१.३९.] इत्यनेन सृधातोः क्यपि निपातितः, तद्धिते च सूरशब्दस्य मर्तादिगणे पाठात् "मर्तादिभ्यो यः" [७.२.१५९.] इति स्वार्थिको यः प्रत्ययो विहित इति ततस्तद्धितान्तस्य तस्य सिद्धिः, एवमनेकधा तत्तन्नामव्युत्पादनेनैव चायमर्थः प्रतीयते यद्—एतेषां व्युत्पत्तिरव्यवस्थितेति । एतच्च "अधातु-विभक्ति-वाक्यमर्थवन्नाम" [१.१.२८.] इति सूत्रेण येषां रूढशब्दानां नामसंज्ञा क्रियते तद्विषये व्युत्पत्तेरव्यवस्थानं वेदितव्यम् । ये च कृदादिप्रत्ययैः धात्वादिभ्यो विहितैः समासादिना च व्युत्पाद्यन्ते तेषां व्युत्पत्तिश्च व्यवस्थितैवेति स्वीक्रियते । तथा च न तत्तत्प्रकरणप्रणयनप्रयत्नानर्थक्यमिति ॥ ४५ ॥

## *नाम्नां व्युत्पत्तिरव्यवस्थिता* ॥ ४५ ॥

त०—अयमपि न्यायः स्वाभाविक एव । [शब्दस्य नित्यतापक्षमाश्रित्याह—] शब्दा हि नित्या न व्याकरणेन निष्पाद्यन्ते, केवलं तेषामर्थावबोधाय शास्त्रकृद्भिः प्रकृति-प्रत्ययादिविभागः कल्प्यते, तत्र यस्माच्छब्दाद् यादृशोऽर्थो लोके प्रतीयते तदनुकूलैव कल्पना क्रियते । तथा च यस्माच्छब्दाद् विभिन्नप्रकारेणार्थोपस्थितिस्तस्य विभिन्नप्रकारेण व्युत्पत्तिः कल्प्यते, तदुक्तं हरिणा—

"उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥" इति,

उपायाः—प्रकृति-प्रत्ययादिविभागकल्पनास्तत्तदर्थविभागकल्पनाश्च, बालानाम्—अव्युत्पन्नमतीनां प्रतिपत्तॄणाम्, उपलालनाः—संक्षेपेणार्थबोधनार्थमृजुविनोदनव्यापाराः । तत्रार्थान्तरन्यासेन परिपोषमाह— असत्ये वर्त्मनि स्थित्वा—पूर्वं रेखागवयन्यायेनाऽसत्यरूपमेवाकारादिकं गृहीत्वा, ततः—तदुपायेन, सत्यं—वास्तविकमखण्डं शब्दकारं, समीहते—अधिगच्छतीति तदर्थः । न केवलमेकस्मिन्नेव व्याकरणेऽव्युत्पन्नानां नाम्नां व्युत्पत्तिरव्यवस्थितेति, व्याकरणान्तरेषु तादृशानां शब्दानां भिन्ना भिन्ना व्युत्पत्तिरवलोक्यते, तथाहि—पाणिनीये वडवाशब्दस्य कृत्तद्धितभेदेन व्युत्पत्तिद्वैविध्यं दृश्यते, तथाहि तद्धिते—वलं-सामर्थ्यमतिशयितमस्या इत्यर्थे "अन्येभ्योऽपि दृश्यते" इति "केशाद्वोऽन्यतरस्याम्" [पा० सू० ५.१.१०९.] इति सूत्रस्थेन वार्त्तिकेन 'व'-प्रत्यये आपि डलयोरैक्यात् साध्यते, कृदन्ते च वलं वातीत्यर्थे "आतोऽनुपसर्गे०" [पा० सू० ३.२.३.] इति के, वलं वजतीत्यर्थे "अन्येष्वपि दृश्यते [पा० सू० ३.२.१०१.] इति सूत्रस्थेन "अन्येभ्योऽपि" इति वार्त्तिकेन डे च ड-लयोर्ब-वयोश्चैक्येन साध्यते । सृगालशब्दश्च 'सृजति मायाम्' इत्यर्थे विसर्गार्थकसृज्धातोर्बाहुलकात् कालन्प्रत्ययेन न्यङ्क्वा-

दित्वात् कवर्गादेशेन, असृग् आलातीत्यर्थे वा के पृषोदरादित्वाद्-कारलोपेन च साध्यते; अयं च शब्दस्तालव्यादिरपि दृश्यते, तत्र च शृङ्गं न लातीति विग्रहं कृत्वा पृषोदरादित्वात् साध्यते। मयूरशब्दश्च "मय गतौ" इत्यस्मात् खर्जादित्वात् [ उणा० पा० ४. सूत्र-९० ] ऊरे, मीनातेरूरन्-प्रत्यये, मह्यां रौतीति विग्रहे पृषोदरादित्वाद् वा साध्यते। एवं चैषां व्युत्पत्तिरव्यवस्थितेति सर्वसम्मतम्। येषु च प्रकृति-प्रत्यययोगार्थ एव प्रवृत्तिनिमित्तत्वेन प्रतीयते तेषां च व्युत्पत्तिर्व्यवस्थितैवेति व्युत्पत्त्यव्युत्पत्तिपक्षद्वयमपि दृश्यते नामसु। तथा च रूढेष्वव्युत्पत्तिपक्षो यौगिकेषु व्युत्पत्तिपक्ष इति॥ ४५॥

## *उणादयोऽव्युत्पन्नानि नामानि* ॥४६॥

सि०—उणादय इत्यनेन उणादिप्रत्ययान्ता गृह्यन्ते, प्रत्ययग्रहणे "प्रत्ययः प्रकृत्यादेः" [ ७. ४. ११५. ] इति न्यायात् प्रकृत्यादेः समुदायस्य ग्रहणात्, तथा चोणादिप्रत्ययान्तानि कारु-वायु-पाय्वादीनि नामानीहोणादिशब्देन गृह्यन्ते, तानि यद्यपि "उणादयः०" [ ५. २. ९३. ] इति सूत्रसूचितेन "कृवापाजि०" [ उणा० १ ] इत्यादिसूत्रसमूहेन व्युत्पादितानि, तथापि तद्व्युत्पादनं वर्णानुपूर्वीनियमनाय प्रकृति-प्रत्ययविभागपरिदर्शनार्थमेव, न तु कर्तृत्वादिक्रिया-प्रवृत्तिनिमित्तशब्दवदन्वर्थताप्रदर्शनार्थम्। वस्तुतस्तु तान्यव्युत्पन्नान्येव रूढिशब्दत्वेन रूढेश्च योगापहारिणीत्वाद् योगार्थप्रतीत्यभावाद् व्युत्पत्तेरप्रयोजकत्वात्। अत्र च ज्ञापकम्—"अतः कृ-कमि०" [ २. ३. ५. ] इति सूत्रे कमेः पृथक् कंसग्रहणम्, तथाहि—कमिग्रहणेनैव कंसग्रहणं सेत्स्यति, कमेः "मा-वा-वद्यमि०" [ उणा० ५६४. ] इति सप्रत्यये कंसशब्दः साध्यत इति तत्रापि कमेः सत्त्वेन तद्ग्रहणेनैव [ कमिग्रहणेनैव ] कंसग्रहणं स्पष्टमेव। नहि केवलयोः कृ-कम्योः क्वचित्प्रयोगोऽस्ति *न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः* इति न्यायात्, तथा च प्रत्ययान्तयोरेव तयोर्ग्रहणमिष्टमिति कंसशब्दोऽपि प्रत्ययान्तः कमिरेव। एवं च यथा 'पयस्कामः' इत्यत्र कमिग्रहणेन सत्वं भवति तथा 'अयस्कंसः' इत्यत्रापि सत्वं सिद्धमेवेति पृथक् कंसग्रहणं प्रकृतन्यायसत्तां सूचयति। तथा च सति प्रकृतन्याये कंसशब्दस्य कमिप्रकृतिकत्वानभ्युपगमात् [ तत्र प्रकृतिप्रत्ययविभागानभ्युपगमात् ] तद्ग्रहणार्थं पृथक् तस्य ग्रहणमावश्यकम्। यद्ययं न्यायो न स्यात् तदा तु तदभावेऽपि सेत्स्यत्येवेति प्रकृतन्यायं विना तत्सार्थक्यं दुरुपपादमिति। फलं चास्य न्यायस्य वींक्धातोः "पटि-वीभ्याम्" [ उणा० ५७९. ] इत्यौणादिके डिसे-'विसम्' इत्यत्रास्याव्युत्पन्नत्वात् सस्य कृतत्वाभावेन षत्वं न भवतीति। अयं च न्यायो न सार्वत्रिकः, एतच्च "तृ-स्वसृ०" [ १. ४. ३८. ] इति सूत्रे तृग्रहणेनैव सिद्धे पुनर्नप्त्रादीनामौणादिकानां ग्रहणस्य नियमार्थत्वकथनेनावसीयते, तथाहि—तत्र सूत्रे बृहद्वृत्तिः—"व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम्, तेनान्येषामौणादिकानां न भवति—पितरौ, भ्रातरौ, मातरौ, जामातरौ" इति। तथा च तृग्रहणेनैव नप्त्रादीनामपि ग्रहणं सम्भाव्यैव नियमार्थत्वकथनं संगच्छते, यदि चायं न्यायो नित्यः स्यात् तर्हि नप्त्रादीनामव्युत्पन्नत्वेन तत्र प्रकृति-प्रत्ययविभागाभावात् तेषां तृग्रहणेन ग्रहणमसंभवमिति नियमार्थत्वकथनमसंगतं स्यात्, विध्यर्थत्वस्यैव सम्भवात्। तेन नियमेन च 'पितरौ' इत्यादावार् नेति। व्युत्पत्तिपक्षाश्रयणस्य फलमन्यत्र, यथा—वपेरौणादिके "रुध्यर्त्ति०" [ उणा० ९९७. ] इत्युसि—'वपुषा' इत्यादौ सस्य कृतत्वात् षत्वं भवति। न केवलमुणादिष्वेव, अन्यत्रापि क्वचित् प्रकृति-प्रत्ययविभागो न स्वीक्रियते, यथा निपातनस्थले। तथा च 'उणादयः' इत्युपलक्षणमन्येषामपि, तेन "संख्या-डतेश्चाशत्तिष्टेः कः" [ ६. ४. १३०. ] इति सूत्रे ष्ट्यन्तवर्जनं सार्थकम्, तद्धि षष्टिशब्दस्य वर्जनार्थं क्रियते, षष्टिशब्दश्च षड् दशतो मानमस्येति विग्रहे "विंशत्यादयः" [ ६. ४. १७३. ] इति सूत्रेण तिप्रत्ययेन निपातितः, इत्थं च तस्यापि तिप्रत्ययान्तत्वमिति तिप्रत्ययान्तवर्जनेनैव तद्वर्जने सिद्धे ष्ट्यन्तवर्जनं वृथैव स्यादिति कृतेन ष्ट्यन्तवर्जनेन तत्राप्यव्युत्पत्तिपक्षः स्वीकृत इति प्रतिभाति। एवं च लक्ष्यानुरोधादेवानयोः पक्षयोर्व्यवस्थेति स्पष्टं विवरणे॥ ४६॥

## *उणादयोऽव्युत्पन्नानि नामानि* ॥ ४६ ॥

त०—पूर्वन्यायेन नाम्नां व्युत्पत्तिरव्यवस्थितेति कथितमिति तत्प्रसङ्गादयं न्यायोऽपि विचारपथमायातः। यद्यपि 'उणादयः' इत्यस्य 'उणादिप्रत्ययान्ताः' इत्येवार्थ इति वृत्तावुक्तं, तथा च उणादिप्रत्ययान्ताः कारु-वायु-प्रभृतयः शब्दाः, अव्युत्पन्नाः—प्रकृतिप्रत्ययविभागशून्या इति कथनं परस्परविरुद्धमिव प्रतिभाति, यदि प्रकृति-प्रत्ययविभागशून्यत्वं तर्हि कथमुणादित्वम् [ उणादिप्रत्ययान्तत्वम् ], अथ चोणादिप्रत्ययान्तत्वं तर्हि कथमव्युत्पन्नत्वमिति शङ्का समुदेति, तथापि शास्त्रकृद्भिः शिष्यबुद्धिवैशद्याय वर्णानुपूर्वी निर्ज्ञानार्थमुणादिप्रत्ययान्तत्वेन कल्पिता अपि न वस्तुतः प्रकृति-प्रत्ययादिविभागवन्त इति न्यायार्थः। उणादीनाम् "उणादयः०" [ ५. २. ९३. ] इति सूत्रेण बहुलतया शास्त्रकृद्भिर्निर्दिष्टत्वान्न तेषां व्युत्पत्तेर्नैयत्यमिति लक्ष्यते, तद्विशेषाणां प्रधानप्रक्रियायामनिर्देशात्। दृश्यते लक्ष्यानुसारमुभयोः पक्षयोः परिग्रहणं तेषु। "तृ-स्वसृ०" [ १. ४. ३८. ] इति सूत्रस्थ-

बृहद्वृत्तिग्रन्थेनाप्युभयोः पक्षयोः सम्मतत्वमित्यायाति, तथाहि– "तृशब्दस्यार्थवतो ग्रहणेन प्रत्ययग्रहणान्नप्त्रादीनामव्युत्पन्नानां संज्ञाशब्दानां तृशब्दस्य ग्रहणेन ग्रहणं न भवतीति तेषां पृथगुपादानम्, इदमेव च ज्ञापकम् *अर्थवद्ग्रहणे नानर्थकस्य ग्रहणं भवति* इति। व्युत्पत्तिपक्षे तु तृग्रहणेनैव सिद्धे नप्त्रादिग्रहणं नियमार्थम्" इत्यादि। बृहन्न्यासे चेत्थं प्रपञ्चितमिदम्–"अथ नप्त्रादयः किं पृथगुपादीयन्ते? तत्र 'तृ' इत्येव सिद्धम्, अत आह–तृशब्दस्येत्यादि। अयमर्थः-तृशब्दस्य ऋकारान्तत्वाव्यभिचारात् पुनर्ऋकार इति यद् विशेषणं तद् ऋकारान्त एव य इति स्वरूपप्रतिपत्त्यर्थम्; यस्त्वधिकारापन्नः स स्थानिप्रत्यासत्त्याऽर्थः, अन्यथाऽनेकवर्णत्वात् सर्वस्य स्यात्, व्याकरणे च शब्दरूपवदर्थोऽप्याश्रीयते, अन्यथा च नप्त्रादिग्रहणमनर्थकं स्यात्। तेनार्थवतो ग्रहणे सम्भवति अनर्थकस्य ग्रहणं न भवति, स चार्थवान् प्रत्यय एवेति; यत्र त्वर्थो न संभवति तत्र वचनप्रामाण्यादनर्थकस्यापि ग्रहणं भवति, अत एव नप्त्रादीनामव्युत्पन्नानां प्रत्यस्तमितावयवार्थानां संज्ञाशब्दानां सम्बन्धिनस्तृशब्दस्य तृग्रहणेनानर्थकत्वाद् ग्रहणं न भवतीति तेषां पृथगुपादानं क्रियते। ननु नप्त्रादयोऽपि व्युत्पाद्यन्ते तत् कथमुच्यते–अव्युत्पन्नानामिति?, अत्रोच्यते–उणादिषु दर्शनद्वयं-केचिन्मन्यन्ते 'उणादयोऽव्युत्पन्नानि नामानि' इति, अपरे–'व्युत्पन्नानि' इति। लक्ष्यसिद्ध्यर्थं चेह क्वचित् किञ्चिद् दर्शनमाश्रीयते, तत्र यदा व्युत्पत्तिपक्ष आश्रीयते तदा नियमार्थं नप्त्रादिग्रहणम्–औणादिकानां संज्ञाशब्दानां नप्त्रादीनामेव न पित्रादीनामित्याह–व्युत्पत्तिपक्षे त्विति" इति। एतेन सन्दर्भेण लक्ष्यानुसारादेवेमौ पक्षौ व्यवस्थितौ पूर्वाचार्यैराश्रितावित्यायाति। तथा च नप्त्रादिग्रहणस्य नियमार्थत्वकथनं प्रकृतन्यायानित्यत्वज्ञापकमिति वृत्तौ यदुक्तं तत् पक्षान्तरस्यापि सत्त्वमस्तीत्येतावन्मात्राशयकमित्यवधेयम्। पाणिनेस्त्वव्युत्पत्तिपक्ष एवाभिमत इति "आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्" [ पा० सू० ७. १. २. ] इति सूत्रस्थमहाभाष्यादुपलभ्यते। अनेन सूत्रेण प्रत्ययादिभूतानां फादिवर्णानाम् 'आयन्' आदयो विधीयन्ते। तत्रेदं शङ्कितम्–उणादिषु ये ख-ढादयो वर्णाः प्रत्ययादौ श्रूयन्ते तेषामपि प्रकृतसूत्रनिर्दिष्टा आदेशाः स्युः, यथा-शङ्खः षण्ढः।" इत्यादि। तत्रान्यानि समाधानान्युक्त्वोक्तम्–"प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम्" [ वार्तिकम् ], प्रातिपादिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम्—उणादयोऽव्युत्पन्नानि प्रातिपदिकानि॥" इति। तत्रोक्तं नागेशेनोद्द्योते—"अत्र पाणिनेरित्युक्त्या 'सर्पिषा' 'यजुषा' इत्यादिकतिपयातिरिक्तोणादिषु पाणिनेरव्युत्पत्तिपक्ष एवाऽभिप्रेत इति दर्शयति। वस्तुतः 'सर्पिषा' इत्यादौ षत्वमपि बहुलग्रहणादिति सर्वथाऽव्युत्पत्तिरेवैतेष्विति बोध्यम्" इति। अयमाशयः–'वपुषा, सर्पिषा, यजुषा' इत्यादिशब्देषूणादिप्रत्ययस्थसकारस्य कृतत्वेन षत्वसिद्ध्यर्थमेवोणादिषु व्युत्पत्तिपक्ष आश्रीयते, तच्च षत्वम् "उणादयः०" [ ५. २. ९३. ] इति सूत्रे बहुलग्रहणानुवृत्त्या बहुलग्रहणस्य च 'बहूनि कार्याणि लाति' इति व्युत्पत्त्याऽलाक्षणिकस्य कार्यस्यापि साधकत्वमिति तत्सम्बन्धिसकारस्य षत्वार्थं कृतत्वं साधयितुं शक्यत इति तेषु [ उणादिषु ] अव्युत्पत्तिपक्ष एव पाणिनेरभिमत इत्यास्थेयमिति। प्रपञ्चितं चैतन्नागेशेनैव शब्देन्दुशेखरे इति विस्तरभयान्न प्रदर्श्यते इति॥ ४६॥

## *शुद्धधातूनामकृत्रिमं रूपम्*॥ ४७॥

सि०—शुद्धाश्च ते धातवस्तेषां, रूपम्–आनुपूर्वी, अकृत्रिमम्–न केनचिदपि शास्त्रेण निष्पाद्यतेऽपि तु स्वाभाविकमेव। 'शुद्धा' इत्यनेन धातुपाठे यथा पठितास्तथाभूता न तु काञ्चन विकृतिं प्राप्ता इति भावः। धातवो हि शब्दबीजभूततया स्वकीयमकृत्रिममेव स्वरूपं दधति, न तु तेषां स्वरूपं केनापि शास्त्रेण क्रियते इति भावः। विभक्त्यादीनां रूपं शास्त्रेण यद्यपि न निष्पाद्यते किन्तु ता अपि शास्त्रकृद्भिरुच्चारिता इति शुद्धा एव, तथापि तेषु तेष्वर्थविशेषेषु तासां विधीयमानत्वेन क्रियमाणत्वमिति स्वीक्रियते। यथासम्प्रदायमनुशासनस्य भेदात् स्वसम्प्रदाये तेषां कृतत्वमिष्यते। अयं च न्याय औचित्यप्राप्त एवेति नात्र ज्ञापकापेक्षा। विभक्तिषु कृतत्वस्वीकारफलं च 'वृक्षेषु' इत्यादौ सुपः "सप्तम्यधिकरणे" [ २. २. ९५. ] इति सूत्रेण विधीयमानत्वात् कृतत्वमाश्रित्य सस्य "नाम्यन्तःस्थाकवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेऽपि" [ २. ३. १५. ] इति षत्वं सिद्धम्। एवं धातोरपि धातुपाठसूत्रेणोच्चार्य कृतत्वात् षत्वं प्राप्तम्, यथा–'मुसच्' धातोरौणादिके कित्यले मुसलमित्यत्र, तस्य निषेधार्थमेवायं न्यायः स्वीक्रियते। शुद्धेति विशेषणात् "षन भक्तौ" इत्यस्य "षः सोऽष्ट्यै०" [ २. ३. ९८. ] इति से कृते 'सन्' इति रूपस्य कृत्रिमत्वात् णौ ङे 'असीषणत्' इत्यादौ "नाम्यन्तःस्था०" [ २. ३. १५. ] इति षत्वं भवत्येव। तत्र षस्य स्थाने सकारस्य विहितत्वेन कृतत्वात् शुद्धत्वाभावात्। अयं च न्यायः स्वभावप्राप्ताकृत्रिमत्वानुवादक इति नास्यानित्यता॥ ४७॥

## *शुद्धधातूनामकृत्रिमं रूपम्*॥ ४७॥

त०—प्रत्ययादिवद् धातूनामपि धातुपाठपठितसूत्रेण विधानात् कृतत्वं स्यादिति शङ्कापनोदायैव धातूनामकृत्रिमं रूपमिति सूचितमनेन न्यायेन। वस्तुतस्तु कृतत्वस्य किञ्चिदनूद्य विधीयमानत्वरूपत्वाद् धातुषु तथाभूतत्वाभावात् कृतत्वशङ्कैव नास्तीति नास्य न्यायस्यावश्यकतेति युक्तं प्रतिभाति। तथा च

स्वभावसिद्धमेव धातूनामकृत्रिमं रूपमिति न्यायेनानेनानूद्यते। न चैवं सामान्यतः सर्वेषामेव धातूनामकृत्रिमत्वस्वीकारे "पण भक्तौ" इत्यस्य सत्त्वे कृतेऽप्यकृतत्वमेव स्यादिति तस्यापि सकारस्य षत्वं न स्यादिति वाच्यम्, धातोः कृतत्वाभावेऽपि सकारस्य कृतत्वेन षत्वप्रवृत्तौ बाधकाभावात्। कृतस्येति पदं हि द्विधा व्याख्यायते–कृतस्य कृतस्थस्य चेति, तत्र धातोः कृतत्वाभावेन कृतस्थत्वं सकारस्य न भवतु, स्वाश्रयं कृतत्वं तु केन वारणीयम्। अन्ये च वैयाकरणा न्यायमिमं न मन्यन्ते, तथापि धातूनामकृत्रिमत्वं तु सर्वेषामभिमतमेव। धातुत्वमेव हि धातूनामकृत्रिमत्वप्रयोजकमिति न तत्र विशेषप्रयत्नापेक्षेति सिद्धार्थानुवादक एवायं न्याय इत्यनवद्यम्॥ ४७॥

## *क्विबन्ता धातुत्वं नोज्झन्ति, शब्दत्वं च प्रतिपद्यन्ते* ॥ ४८ ॥

सि०—क्विबित्यस्याप्रयुज्यमानप्रत्ययोपलक्षकत्वेन विचोऽप्युपलक्षकत्वम्। तथा च क्विबन्ता विजन्ताश्च धातुत्वं–धातुत्वनिमित्तककार्यभाक्त्वं नोज्झन्ति–न त्यजन्ति, शब्दत्वं धातुत्वशून्यार्थवच्छब्दस्वरूपत्वं नामत्वमिति यावत्, प्रतिपद्यन्ते–नामत्वनिमित्तककार्यभाजश्च भवन्ति। धातुत्वं नोज्झन्तीत्युक्त्या तेषु धातुत्वमन्तर्भूतं तिष्ठति, नामत्वं त्वाविर्भूतं सत्त्वप्राधान्यात्, "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति निरुक्तोक्तयास्कवचनम्, सत्त्वप्राधान्यादेव च न तेभ्यस्त्यादिविभक्त्युत्पत्तिः, तासां क्रियाप्राधान्ये एव विधानात्। एवं च स्वीकृते धातुत्वनिमित्तकप्रत्ययातिरिक्तं तत्स्थानिकं सर्वं कार्यं तेषां भवति, नामत्वनिमित्तकं च प्रत्ययाद्यपि तेभ्यो जायते इति विवेकः। धातुत्व-नामत्वनिमित्तकयोः कार्ययोरेकत्रासंभवात् तत्प्राप्त्यर्थोऽयं न्याय इति सारम्। ज्ञापकं चास्य "धातोरिवर्ण०" [२. १. ५०.] इत्युवबाधकं "स्यादौ वः" [२. १. ५७.] इति सूत्रेण वकारविधानम्, तथाहि–वत्वं धातोरुवर्णस्य स्यादावनन्तरे सति विधीयते, स्यादिश्च धातोर्न विधीयतेऽपि तु नामभ्य एव, इति धातोरनन्तरत्वं स्यादिनामसम्भवि, सति चास्मिन् न्याये क्विबन्तानामुभयविधकार्यसूचनात् तेभ्यो नामत्वनिमित्तकस्य स्यादेरुत्पत्त्या भवति स्यादिपरत्वं धातोः, धातुत्वस्यापि तेषु प्रकृतन्यायेन सूचनात्। इति प्रकृतन्यायं विनाऽनुपपद्यमानं स्याद्यनन्तरवर्त्तिधातुत्वमाश्रित्य वत्वविधानं प्रकृतन्यायं ज्ञापयतीति विज्ञायते। तथा च 'वसु इच्छति' इत्यर्थे क्यनि ततः क्विपि तल्लुकि–'वसूः, वस्वौ, वस्वः' इत्यादौ "स्यादौ वः" [२. १. ५७.] इति वत्वं सिद्धमिति स्वांशे चारितार्थ्यम्। फलं चास्य न्यायस्य 'नियौ लुवौ' इत्यादौ, धातुत्वाद् "धातोरिवर्ण०" [२. १. ५०.] इतीयुवौ, नामत्वाच्च तेषु स्याद्युत्पत्तिश्च सिद्धेति। "ननु नयनं लवनमित्यादाविवेह परत्वाद् गुण एव कुतो नेति चेत्? न–क्विपः कित्वात् तस्य स्थानिवद्भावेन गुणाप्राप्तेः" इति प्राचीनाः। वस्तुतस्तु "नामिनो गुणोऽक्ङिति" [४. ३. १.] इति सूत्रेण धातोर्गुणो विधीयते, स च प्रत्यये परे, तत्र प्रत्यासत्त्या धातुत्वं मुख्यमाश्रीयत इति प्रकृते धातुत्वस्य गौणत्वान्न भवतीत्येव समाधानं युक्तम्। अत एव प्रकृतसूत्रे बृहद्वृत्तौ 'नीभ्याम्, लूभ्याम्'इत्यत्र गौणत्वादेव गुणनिवारणं कृतम्, स्थानिवत्त्वेन क्विपः कित्वाद् गुणाभाव इति समाधानं चायुक्तम्, तत्र हि 'क्ङिद्वर्जिते प्रत्यये परे' इत्येवंरूपेण यस्मिन् प्रत्यये गुणश्चिकीर्षितस्तस्य क्ङिद्भिन्नत्वमावश्यकम्, न चात्र औकारः ङित्, स्थानिवद्भावेनापि तत्र ङित्वं दुर्लभं, तस्य तद्धर्मत्वाभावात्। यदि ह्यत्र प्रसज्यप्रतिषेधः स्यात्–ङिति नेति तदा क्विपः स्थानिवद्भावेन गुणवर्जनं कथञ्चिच्छक्यम्, न च तथा, पर्युदासतया व्याख्यानस्यैव लाघवेनाश्रितत्वात्। एवं च यत् प्राचीनैः प्रकृतन्यायवृत्तौ–"नामिनो गुणः०" [४. ३. १.] इत्यस्य वृत्तौ तु क्विबन्तानां धातुत्वस्य गौणत्वान्न गुण इत्युक्तम्, परं तदभिप्रायः सम्यग् नावगम्यते, यतो विजन्तानां धातुत्वस्य गौणत्वेऽपि गुणो दृश्यते, यथा हिनोतीति विचि–'हेः, हयौ, हयः' इत्यादौ धातुत्वाद् गुणः शब्दत्वात् स्यादयश्चेति" इति; तदेव किमाशयकमिति नावधार्यते, यतो नीभ्यामित्यादौ धातोः क्विपि कृते तस्य नामसंज्ञायां कृतायां ततो भ्यामि च समानीते तत्र परतो गुणस्य चर्चाऽस्ति, तस्यामवस्थायां तस्य सत्त्वप्रधानतया क्रियाप्राधान्याभावाद् धातुत्वस्य न्यायबललभ्यत्वेन गौणत्वं स्पष्टमेव। हिनोतीति 'हेः' इत्यादौ च विचि कृते तस्मिन् पर एव नामसंज्ञातः पूर्वमेव गुण इति तत्र नास्ति गौणत्वमिति न काऽप्यनुपपत्तिरिति विभावनीयं सूरिभिः। अयं च न्यायो धातोर्नामत्वप्रयोजकक्विब्विषय एव, तत्रैवोभयविधकार्यस्य सिसाधयिषितत्वात्, यश्च धातुत्वप्रयोजकः क्विप् तत्र न प्रवर्त्ततेति यत्र नाम्नः क्विप् क्रियते, तस्य धातुत्वप्रयोजकतया न नामत्वनिमित्तकं कार्यमिति 'राजानति' इत्यादौ न स्याद्युत्पत्तिः, एतदर्थं च प्रकृतन्यायानित्यत्वाश्रयणमनावश्यकम्। क्विबन्ता धातुत्वं नोज्झन्तीत्युक्त्या धातुत्वस्य तत्र पूर्वं सत्त्वमधुना तत्त्याग इति संभावना प्रतीयमाना यत्र धातोर्नामत्वं जायते तद्विषयत्वं न्यायस्यावबोधयति, इह च नामत्वं पूर्वमासीत् सम्प्रति धातुत्वमायातमिति न्यायस्य विषयाभावादेवाप्रवृत्तिः, न तु तदनित्यत्वमेषणीयमितीत्युक्तं प्रतिभाति॥ ४८॥

## *क्विबन्ता धातुत्वं नोज्झन्ति, शब्दत्वं च प्रतिपद्यन्ते* ॥ ४८ ॥

त०—क्विबन्तेषु प्रायो धातुस्वरूपमविकृतमेव तिष्ठति, क्वचित्तागमादिसद्भावेऽपि *आगमास्तद्गुणीभूताः०* इति न्यायेन धातुत्वेन ग्रहणस्य सुशक्यत्वात्; सत्त्वप्राधान्यस्य च सत्त्वान्नामसंज्ञा जायतेऽतस्तन्निमित्तकस्यादिप्रत्ययोत्पत्तिरेव न तु त्यादिप्रत्ययोत्पत्तिरिति सूचितं वृत्तौ। अत्रेदं शङ्कितम् "अधातु-विभक्ति-वाक्यमर्थवन्नाम" [ १. १. २७. ] इति सूत्रे बृहन्न्यासे—"एवं तर्हि 'छिद् भिद्' इत्यादीनां कथं नामसंज्ञा? यतः *न क्विबन्ता धातुत्वं जहति* इति 'अधातु०' इति प्रतिषेधेन भवितव्यम्, नैवम्—'अ० विभक्ति०' इति पर्युदासात् तत्सदृश-प्रत्ययग्रहणात् पर्युदासे विधि-प्रतिषेधयोर्विधेरेव बलीयस्त्वात् 'अधातु०' इति प्रतिषेधाऽप्रवृत्तौ नामत्वसिद्धिः" इति। अयमाशयः—'अहन्' इत्यादौ विभक्त्यन्तत्वाभावेनाडागमस्य च धातुभक्तत्वाद् धातुग्रहणेनैव ग्रहणात् तत्र नामत्वे नलोपो मा भूदिति धातोः पर्युदासः कृत इति तत्सार्थक्ये प्रदर्शिते 'छिद् भिद्' इत्यादिक्विबन्तस्यापि प्रकृतन्यायानुसारं धातुत्वसत्त्वात् तस्यापि नामसंज्ञा न भविष्यतीति चेत्? न—पर्युदासस्य सदृशग्राहित्वेन धातु-विभक्त्यन्तभिन्नस्य तत्सदृशस्य प्रत्ययान्तस्य ग्रहणात् क्विबन्तस्य च मुख्यधातुत्वाभावाद् धातुसदृशत्वेन प्रत्ययस्य स्थानिवत्त्वेन विभक्त्यन्तसदृशत्वेन च नामसंज्ञासिद्धेरिति। अन्ये तु तत्र धातुत्वमेव स्वीकुर्वन्ति, तथा च तत्र धातुभिन्नत्वमसम्भवीति कृदन्तस्य नामसंज्ञार्थं पृथक् सूत्रं कुर्वन्ति। स्वमते च तत्र सत्त्वप्राधान्येन धातुभिन्नत्वस्य तत्सादृशस्य च स्वीकार इति रहस्यम्। अन्यद् यद् वक्तव्यं तद् वृत्तावेव स्पष्टीकृतमिति ॥४८॥

## *उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक्* ॥ ४९ ॥

सि०—उभयोः—पूर्वपरयोः स्थाने, निष्पन्नः—विहितो वर्णः शब्दो वा, अन्यतरव्यपदेशभाक्—अन्यतरस्य—द्वयोरेकस्य, व्यपदेशं—व्यवहारं भजत इति तादृशः। अन्यतर इति कथनेनैकस्मिन् काले कस्यचिदेकस्यैव व्यपदेशं लभते नोभयोरिति लभ्यते। लोकेऽपि माता-पितृभ्यां जायमानः पुत्र उभयोरन्यतरस्य पुत्रत्वेन व्यवह्रियते। यद्यपि स क्वचिदुभयोरपि पुत्रत्वेनैकस्मिन्नेव काले व्यवह्रियते तथाप्यत्र तथा न लक्ष्यानुरोधात्, अन्यतरशब्दोच्चारणाच्च, विवेचितं चैतद् विवरणे। अयं च न्यायः पूर्वोक्तलोकन्यायदृष्टान्तसिद्ध एव। संवादश्चास्य "गडदबादेः०" [ २. १. ७७. ] इति सूत्रे साक्षात्प्रत्ययग्रहणार्थं कृतेन 'प्रत्यये' इत्यस्य ग्रहणेन भवति। तथाहि—*प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्* इति न्यायेन प्रत्ययस्यैव ग्रहणे सिद्धे प्रत्ययग्रहणं व्यर्थं सत् साक्षात्प्रत्ययग्रहणार्थमिति विज्ञायते, तेन धाधातोर्वसि द्वित्वे पूर्वस्य ह्रस्वे "द्वितीय-तुर्ययोः पूर्वौ" [ ४. १. ४२. ] इति दत्वे "श्नश्चातः" [ ४. २. ९६. ] इति धातोराल्लुकि "अदीर्घात्०" [ १. ३. ३२. ] इति धस्य द्वित्वे सति 'दद्ध्वः' इत्यत्र ध्वस्य प्रकृतिप्रत्ययस्थानजन्यत्वेन यद्येतन्न्यायबलात् प्रत्ययत्वमापद्यते, तदा कृतद्वित्वधकारसम्बन्धिना प्रथमधकारेण धातोश्चतुर्थान्तत्वे सति आदेश्चतुर्थत्वं न भवति, अत्र 'ध्व' इति, अस्य प्रकृतन्यायेन प्रत्ययत्वलाभात् साक्षात् प्रत्ययत्वाभावात्, प्रत्ययग्रहणस्य न्यायानपेक्ष[ अनतिदिष्ट ]प्रत्ययलाभार्थत्वात्। यदि चायं न्यायो न स्यात् तर्हि प्रकृते ध्वस्य प्रत्ययत्वं कथमपि न लभ्यत इति तस्मिन् परे 'दद्ध्वः' इत्यादौ चतुर्थाक्षरस्य प्रसक्तेरेवाभावेन तद्वारणाय न्यायानपेक्षप्रत्ययग्रहणाय प्रत्ययग्रहणं क्रियेत, सति चैतस्मिन् न्याये ध्वस्योभयस्थाननिष्पन्नत्वेन प्रत्ययत्वसिद्ध्या तस्मिन् परे चतुर्थत्वप्रसक्तिरिति शङ्कया तद्वारणाय 'प्रत्यये' इति सूत्रे पठ्यते। तथा च प्रकृतन्यायं विनाऽनुपपद्यमानसार्थक्यं तत् प्रकृतन्यायज्ञापकमिति तेन स्वांशे चारितार्थ्यं भवति। एतच्च "ग-ड-द-बादेः०" [ २. १. ७७. ] इति सूत्रे लघुन्यासग्रन्थेऽपि ध्वनितम्, तथाहि—"प्रत्यये किमिति प्रतीकमुपादाय—ननु *प्रत्ययाप्रत्यययोः प्रत्ययस्यैव* इति न्यायेन प्रत्यये एव भविष्यति किं प्रत्ययग्रहणेन? सत्यम्—'दद्ध्वः, दद्ध्वहे' इत्यत्र यदा *उभयोः स्थाने* इति न्यायेन 'ध्व' इत्यस्य प्रकृति-प्रत्ययस्थाननिष्पन्नस्य प्रत्ययव्यपदेशः स्यात् तदा आदिचतुर्थत्वं भवेत्, सति तु प्रत्ययग्रहणे न्यायनिरपेक्षो यः प्रत्ययस्तस्मिन्नेव भवति नेतरस्मिन् प्रत्ययग्रहणसामर्थ्यात्" इति। अत्र हि उभयस्थाननिष्पन्नत्वेनैव 'ध्व' शब्दे प्रत्ययव्यपदेशं व्यवहारता प्रकृतन्यायोऽपि ध्वनित एव। तत्र चेदं प्रत्ययग्रहणं तत्र ज्ञापकमिति यद्यपि नायाति, तथापि लोकसिद्धोऽयं न्यायोऽत्र प्रयोजनवशादाश्रीयते इति त्वायात्येव। वस्तुतस्तु प्रकृते ध्वस्योभयस्थाननिष्पन्नत्वं नास्ति, नहि प्रकृति-प्रत्यययोरन्यस्य वा प्रकृत्यवयवस्य प्रत्ययस्य च स्थानेऽयं ध्वशब्द आदिश्यते, किन्तु प्रकृत्यवयव-प्रत्यययोर्मेलनेन 'ध्व'शब्दोऽत्र प्रतीयते इत्येतावन्मात्रम्, तत्र च प्राधान्येन व्यपदेशा भवन्ति मल्लग्रामादिवदिति लौकिकं न्यायमाश्रित्यात्रत्य'ध्व'शब्दे प्रत्ययभागस्यैव प्राधान्यात् प्रत्ययत्वव्यपदेशः स्यादिति तादृशव्यपदेशलभ्यप्रत्ययत्ववति प्रवृत्तिर्मा भूदिति प्रत्ययग्रहणसार्थक्यम्। किञ्च *प्रत्ययाप्रत्यययोः०* इत्येतन्न्यायस्यापि प्रकृते न विषय इति प्रतीयते, *अर्थवद्ग्रहण*न्यायेनैव प्रकृतशङ्काया उत्थापयितुं शक्यत्वात्। अयमाशयः—'ध्व'शब्दोऽत्र सूत्रे पठ्यते, स च यदि प्रत्ययः प्रत्ययभिन्नश्चार्थवान् भवेत् तत्रो—

भयोर्ग्रहणे प्रसक्ते *प्रत्ययाप्रत्यययोः* इति न्यायस्य व्यवस्थार्थमवतारः स्यात्, न तु तथाऽस्ति, 'ध्व' इत्यस्य प्रत्ययभिन्नस्वार्थवतोऽलभ्यमानत्वात् । तथा च प्रत्ययग्रहणवैयर्थ्यशङ्का *अर्थवद्ग्रहण*न्यायमूलिकैव । उत्तरं च *अर्थवद्ग्रहण*न्यायस्य विशिष्टरूपोपादानविषयकत्वेनात्र तस्याऽपि न प्रवृत्तिः, नवा *प्रत्यया-ऽप्रत्यययोः०* इत्यस्य प्रवृत्तिः 'ध्व'शब्दमात्रस्य प्रत्ययत्वाभावात्, 'ध्वस्' इत्यस्य 'ध्वे' इत्यस्य वा प्रत्ययत्वात्, तथा चात्र निर्णायकाभावात् तादृशानुपूर्वीमात्रग्रहणप्रसक्तौ प्रकृते च तादृशानुपूर्वीमत्त्वात् सूत्रस्य प्रवृत्तिः स्यादिति तद्वारणाय प्रत्ययग्रहणम् । यद्यपि 'ध्व'मात्रस्य प्रत्ययत्वमप्रसिद्धमेवेति प्रत्ययग्रहणे कृतेऽसम्भव एव सूत्रलक्ष्यस्य स्यादिति वक्तुं शक्यते तथापि प्रत्ययपदस्य प्रत्ययसम्बन्धिनि लक्षणया प्रत्ययसम्बन्धिनि ध्वशब्दे परे इत्यर्थान्न दोष इति तत्त्वम् । न्यायस्योदाहरणं यथा-"ईषि गत्यादौ" इति धातोराङ्पूर्वात् घ्यणि-एष्य इति, ततस्तस्य प्रेण योगे 'प्र+एष्य' इति स्थितौ आङ्-ईतोः स्थाने निष्पन्नस्यैकारस्य यदा प्रकृतन्यायेन आङादेशत्वं तदा "ओमाङि" [ १. २. १८. ] इत्यल्लोपे प्रेष्य इति भवति; धात्वादेशत्वे च सति "उपसर्गस्यानिणेधेदोति" [ १. २. १९. ] इत्यल्लोपः प्राप्नोति, तं प्रबाध्य विशेषविहितत्वात् "प्रस्यैषैष्योढोढ्यूहे स्वरेण" [ १. २. १४. ] इत्यैत्वं च प्राप्तमपि न भवति *यस्मिन् प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति* इति न्यायात् । तथा चात्र प्राचां ग्रन्थे प्रैष्य इति रूपमपि भवतीति यदुक्तं तद् बृहद्वृत्तिग्रन्थविरुद्धमिति प्रतिभाति । तथाहि-तेषां ग्रन्थः-"यदा तु धात्वादेशत्वं तदा "उपसर्गस्यानिणेधेदोति" [ १. २. १९. ] इत्यनेन प्रस्याल्लोपः प्राप्नोति परं तं बाधित्वा विशेषविहितत्वात् "प्रस्यैषैष्योढोढ्यूहे स्वरेण" [ १. २. १४. ] इत्यैत्वे प्रैष्य इति स्यात्" इति । बृहद्वृत्तिग्रन्थश्चात्रैव सूत्रे-"कथं प्रेषः प्रेष्यः ? ईषे ईष्ये च भविष्यति, यदापि 'आ+ईष्य=एष्यः' तदापि "ओमाङि" [ १. २. १८. ] इत्यवर्णलोपे प्रेष्य इत्येव भवति *यस्मिन् प्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति* इति न्यायात्, "उपसर्गस्यानिणेधेदोति" [ १. २. १९. ] इत्यस्यैवायं बाधको, न "ओमाङि" [ १. २. १८. ] इत्यस्य" इति । तथा च यदा "आ+ईष्य" इति स्थिते एत्वं भवति, तस्य च धात्वादेशत्वं विज्ञायते तदा "उपसर्गस्य०" [ १. २. १९. ] इति यदिह प्राप्तं तत् "प्रस्यैष०" [ १. २. १४. ] इत्यादिना बाध्यं, किन्तु "ओमाङि" [ १. २. १८. ] इति तत्र प्रवर्त्ततैवेति प्रेष्य इत्येव रूपं, न तु प्रैष्य इति विज्ञेयम् । विशेषश्च विवरणे स्पष्टीकृतः । तथा च न्यायसंग्रहे प्राचां प्रैष्य इति रूपप्रदर्शनमेतद्ग्रन्थप्रतिकूलमिति व्यक्ती-

भवति । अस्य च लक्ष्यानुरोधादप्रवृत्तिरपि, तथा च राजानमाख्यादरराजादित्यत्रान्त्यस्वरादिलोपस्य अनुरूपस्वरव्यञ्जनोभयस्थानजत्वेऽपि स्वरादेशताव्यपदेश एव भवति, न तु व्यञ्जनादेशताव्यपदेशः, तद्व्यपदेशे सति हि असमानलोपित्वादुपान्त्यह्रस्वसन्वद्भावादिप्रवृत्तावरीरजदिति स्यात् । वस्तुतस्तु *नानिष्टार्था शास्त्रप्रवृत्तिः* इति न्यायेनैवात्र व्यञ्जनादेशत्वव्यपदेशाय न्यायो न प्रवर्त्ततेति तदर्थमस्यानोजस्त्वं नाश्रयणीयमिति युक्तम् ॥ ४९ ॥

*उभयस्थाननिष्पन्नोऽन्यतरव्यपदेशभाक्* ॥४९॥

त०—अन्यतर इत्युक्तत्वादेकदा नोभयव्यपदेशः, अत एव 'अभीयात्' इत्यत्र "आशिषीणः" [ ४. ३. १०७. ] इति ह्रस्वो न भवति, अत्र धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् दीर्घे कृते उपसर्गात् परस्येणोऽभावात्; यदि चोभयस्थाननिष्पन्नस्येकारस्य पूर्वस्थानिव्यपदेशः क्रियेत तर्हि उपसर्गत्वसत्त्वेऽपि ततः परस्येणोऽभावः, यदि च धात्वादेशत्वव्यपदेशस्तर्हि इकाररहितस्योपसर्गत्वमेवालभ्यम्, उभयव्यपदेशस्तु नैव भवति, अन्यतरपदोपादानात्, इति ह्रस्वो न भवति । यद्यपि लौकिकदृष्टान्तेन मातापित्रोः पुत्रस्यान्यतरेणोभाभ्यां च व्यपदेश इतीहापि तथा प्राप्नोति, तथापि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशेन साम्ये मानाभावादत्र लक्ष्यानुरोधादुभयव्यपदेश एकदा न भवति । कार्यार्थं हि व्यपदेशः, लौकिकदृष्टान्ते च व्यपदेशमात्रं न तु तत्तन्निमित्तं कार्यमवश्यं भावि, प्रकृते च व्यपदेशेन कार्यं स्यादिति तस्यानिष्टत्वेन नोभयव्यपदेश इति । अत्र "आ+ईष्यः=एष्यः, 'प्र+एष्यः' इति स्थितावस्य न्यायस्योभयथा-पूर्वव्यपदेशेन परव्यपदेशेन च प्रवृत्तौ-'प्रेष्यः, प्रैष्यः' इति रूपद्वयं प्राचीनैरुदाहृतं, तच्च वृत्तौ प्रतिक्षिप्तमपि तत्रत्यविशेषस्यास्माभिर्बृहन्न्यासानुसन्धाने प्रदर्शितत्वात्रापि दिक्प्रदर्शनं क्रियते, तथाहि-तत्र कथं 'प्रेषः प्रेष्यः' इति बृहद्वृत्तिप्रतीकमित्यमवतार्य व्याख्यातम्-"ननु प्रशब्दात् परतया 'एषः, एष्यः' इत्यनयोः स्थितौ नित्य एव ऐकारादेशोऽनेन [ "प्रस्यैषैष्य०" इत्यादिसूत्रेण ] भवेदिति 'प्रैषः प्रैष्यः' इत्येवं श्रूयमाणे रूपे नौचित्यमवत इत्याह-कथं प्रेषः प्रेष्य इति, 'प्रैषः प्रैष्यः' इत्येव स्यातामिति प्रष्टुराशयः । समाधत्ते-ईषे ईष्ये च भविष्यतीति, "ईष उञ्छे" इत्यतः "ईषि गति-हिंसा-दर्शनेषु" इत्यतो वा घञि घ्यणि च-ईष ईष्य इति, तयोः प्रशब्दात् परतया स्थितौ "अवर्णस्य०" [ १. २. ६. ] इत्येत्वे-प्रेषः [ प्रेषणार्थे पीडनार्थे ] प्रेष्यः [ दासे पीडनीये चार्थे ] निष्पद्येते, तत्र 'एषः, एष्यः, इति प्रशब्दात् परतो विजानतो भ्रान्तस्यैतद्रूपानौचित्यशङ्कैवानुचिता, अस्य सूत्रस्याप्राप्तेरेवेति समाधातुराशयः । ननु 'ईषः, ईष्यः' इत्यनयोः परत्वेऽस्य सूत्रस्य प्राप्तिरेव नास्तीत्यतो-

ऽत्र सूत्रेणानेन ऐकारादेशाभावो युक्तः, यदा तु आङ्पूर्वकादीष्धातोः 'एष्यः' इति निष्पद्यते तदा ऐकारादेशरहितः 'प्रेष्यः' इति प्रयोगो न युक्त इत्याशङ्कायामाह- यदाऽपीत्यादि, 'आ+ईष्यः= एष्यः' इति आङ्पूर्वकादीष्धातोर्घ्यणि अवर्णस्यैत्वे एष्य इति निष्पद्यते, स च प्रशब्दात् परो भवतीत्यर्थः। तथात्वे किं भवतीत्याह-तदाऽपीत्यादि, तथा निष्पन्नस्य एष्यशब्दस्य प्रशब्दात् परतया स्थितावपि नानेनैकारादेशः, अपि तु "ओमाङि" [१. २. १८.] इत्यवर्णलोप एवेत्यर्थः। ननु 'आ+ईष्य' इत्यत्र सहादेशे सत्येष्यशब्दे परे स्वविषयतां पश्यद् यथा "ओमाङि" [१. २. १८.] इत्यलोपः "प्रस्यैषै०" [१. २.-१४.] इत्यैकारादेशं बाधते, तथा आङा सहादेशरहिते पूर्वं साधिते 'एष्य'शब्दे परेऽपि स्वविषयतां पश्यत् "उपसर्गस्यानिणे०" [१. २. १९.] इत्यपि प्रकृतमैकारादेशं बाधतां वैषम्ययुक्त्यभावादित्याशङ्कायां तयोः ["ओमाङि" "उपसर्गस्यानिणे०" इत्यनयोः] वैषम्यं दर्शयति-यस्मिन्नित्यादिना, 'प्राप्ते' इत्यस्य प्राप्ते एव इत्यवधारणार्थो व्याख्यानात्। तथा चायं निर्गलितार्थः-यस्मिन्-यादृशोद्देश्यताके विधौ, प्राप्ते-व्यापकीभूतोद्देश्यतासम्बन्धेन सम्बन्धिनि सति, यो विधिरारभ्यते, तादृशोद्देश्यतानाक्रान्तेऽव्याप्नुवदुद्देश्यताको [ व्याप्योद्देश्यताको ] विधिर्भवति स व्याप्योद्देश्यताकः, तस्य-व्यापकोद्देश्यताकस्य बाधको भवतीति *येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः* इति हि न्यायस्वरूपम्, तस्यैवार्थमादाय 'यस्मिन् प्राप्ते०' इत्युक्तम्। प्रकृते एषैष्यान्यतराव्यवहितपूर्वत्वविशिष्टप्रशब्दीयावर्णत्वावच्छिन्नविषयतारूपैकारादेशीयोद्देश्यताया अधिकरणे ['प्र+एषः, प्र+एष्यः' इत्यत्र] "उपसर्गस्यानि०" [१.२.१९.] इत्येतदीयाया एकारादिधात्वव्यवहितपूर्वत्वविशिष्टोपसर्गीयावर्णत्वावच्छिन्नविषयतारूपोद्देश्यताया अभावविरहेण व्यापकत्वमस्तीति तमेव व्यापकोद्देश्यताकम् "उपसर्गस्यानि०" [१. २. १९.] इति विधिमयमादेशो बाधते, "ओमाङि" [१. २. १८.] इत्येतदीयायास्तु आङादेशाव्यवहितपूर्वत्वविशिष्टावर्णत्वावच्छिन्नविषयतारूपोद्देश्यतायाः प्रकृतसूत्रोद्देश्यताया अधिकरणे आङादेशरहिते पूर्वं साधिते एषे एष्ये च परे [ 'प्र+एषः,प्र+एष्यः, इत्यत्र ] अभावेन व्यापकत्वं नास्तीत्यव्यापकोद्देश्यताकं तं विधिमयमादेशो न बाधते इति प्रघट्टार्थः। अत्रत्यविस्तृतविवेचनप्रेप्सुभिः "प्रस्यैषैष्य०" [१. २. १४.] सूत्रस्थमस्मदीयं न्यासानुसन्धानमवलोकनीयमिति विस्तराद् विरमामः। इत्थं च 'आ+ईष्यः= एष्यः, प्र+एष्य' इति स्थितौ प्रेष्य इत्येव रूपं न तु प्रैष्य इति सुस्थिरम्॥ ४९॥

## *अवयवे च कृतं लिङ्गं समुदायमपि विशिनष्टि, चेत् तं समुदायं सोऽवयवो न व्यभिचरति* ॥ ५० ॥

सि०—अवयवे-तत्सहिततया प्रयुज्यमानसमुदायैकदेशे, कृतम्-उच्चारितं, लिङ्गम्-अनुबन्धादि, समुदायमपि-स्वसमवेतावयविनमपि, विशिनष्टि-स्वलिङ्गेन सम्बध्नाति; किं सर्वदा? नेत्याह-चेत् तमिति, सोऽवयवो यदि तं समुदायं न व्यभिचरति-न मुञ्चति, तत्समुदायाविनाभावमूलकत्वाद् स्वार्थस्य तत्सुदायव्यभिचारे मूलाभावाद् विशेषकत्वानौचित्यात्। अनुबन्धचारितार्थ्यमात्रमेव प्रार्थनीयं, तच्च यदि स्वाव्यभिचारिसमुदाये सम्पन्नं तर्हि स्वव्यभिचारिणि विशेषकत्वसामर्थ्याभाव इति वा। तत्र तत्रावयवेऽचारितार्थलिङ्गकरणमेव प्रकृतन्यायज्ञापकम्। उदाहरणानि यथा-"कुस्मिण्" धातोः "चुरादिभ्यः०" [३. ४. १७.] इति णिचि-कुस्मयते इति, आश्चर्यार्थकाण्डितश्चित्रशब्दाच्चित्रं करोतीत्यर्थे "नमोवरिवश्चित्रङोऽर्चा-सेवाऽऽश्चर्ये" [३. ४. ३७.] इति क्यनि-चित्रीयते इति, "महीङ् पूजायाम्" इत्यतः "धातोः कण्ड्वादेर्यक्" [३. ४. ८.] इति यकि-महीयते इति, एवमादौ प्रकृतीनामिङित्त्वं प्रत्ययान्तावयवभूतेषु तेष्वचरितार्थमिति स्वस्वसम्बद्धव्यभिचर्यमाणं णिच्-क्यन्-यगन्तसमुदायमपि स्वानुबन्धकत्वेन विशिनष्टीति तस्मादपि समुदायादात्मनेपदमेव भवति। चेत् तमित्यादिविशेषणाच्च येन सह विनाभावोऽपि दृष्टस्तदविशेषकत्वमेव, यथा-'कुस्मयति, चित्रीययति, महीययति' इत्यादौ णिच्-क्यन्-यगन्तेभ्यः कुस्म्यादिभ्यः प्रयोक्तृव्यापारार्थे णिगि सति तदन्तसमुदायादिङित्त्वहेतुकमात्मनेपदं न भवति, णिगः प्रयोक्तृव्यापारे सत्येवोत्पत्तेराकस्मिकत्वेन तं समुदायं प्रति कुस्म्यादीनामव्यभिचारित्वाभावात्। अस्य च न्यायस्यानुबन्धाचारितार्थ्यमूलतत्समुदायाव्यभिचारहेतुकत्वेन ज्ञापकसिद्धत्वाभावान्नानित्यता दृश्यते॥ ५०॥

## *अवयवे च कृतं लिङ्गं समुदायमपि विशिनष्टि, चेत् तं समुदायं सोऽवयवो न व्यभिचरति* ॥५०॥

त०—अयं न्यायोऽन्यैरपि वैयाकरणैः स्वभावसिद्धश्च लक्ष्यसिद्ध्यर्थमाश्रीयते, न ज्ञापकाद्यपेक्षाऽत्र। तत्र तत्रोच्चार्यमाणा अनुबन्धाः स्वसार्थक्याय समुदायमुपकुर्वन्तो न्यायमिमं संवादयन्तीत्येतावन्मात्रत्वेन तत्र तत्रावयवेऽचरितार्थलिङ्गकरणस्य प्रकृतन्यायज्ञापकत्वमुक्तं वृत्तौ॥ ५०॥

## ॐयेन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः॥ ॥ ५१ ॥

सि०—येन धातुना युक्ताः-यद्धात्वर्थक्रियाविशेषकाः प्रादयस्तं प्रत्येवोपसर्गसंज्ञा, तद्धातुनिरूपितमेवोपसर्गत्वं तेपामित्यर्थः। तथा च तदन्यधातुना सामीप्ये सत्यपि तदुपसर्गनिवन्धनं कार्यं न स्यादिति फलितम्। अस्य च ज्ञापकम् "ऋत्यारुपसर्गस्य" [ १. २. ९. ] इति सूत्रे 'उपसर्गस्य' इति वचनमेव, तथाहि-एतन्न्यायाभावेऽन्यधातुं प्रति जातमुपसर्गत्वं तदन्यधातुं प्रत्यपि स्यादेवेति प्रादेरेवोपसर्गसंज्ञकत्वेन लाघवात् प्रादिग्रहणमेवेह कृतं स्यादिति 'प्रार्च्छति, परार्च्छति' इत्यादौ सूत्रं यथा प्रवर्त्तते तथा प्रगता ऋच्छका यस्मात् स प्रर्च्छको देश इत्यत्रापि सूत्रप्रवृत्तौ प्रार्च्छको देश इति स्यात्, तद्वारणायैवोपसर्गग्रहणं क्रियते। अन्यधातूपसर्गस्यान्यधातुसम्वन्धेऽप्युपसर्गत्वस्य सत्त्वे च कृतेऽप्युपसर्गग्रहणे तत्रार् वारयितुमशक्य एवेति व्यर्थमेवोपसर्गग्रहणम्; तच्च व्यर्थीभूय प्रकृतन्यायं ज्ञापयति। ज्ञापिते च न्याये प्रगता ऋच्छका यस्मादिति विग्रहे 'प्र'शब्दस्य गम्धात्वर्थप्रकर्षद्योतकत्वेन ऋकारादिऋच्छधात्वर्थप्रकर्षद्योतकत्वाभावात् तं प्रत्युपसर्गत्वं नास्तीति न भवत्यार्। अयमाशयः—ऋच्छकशब्दे भागद्वयं प्रकृतिभागः प्रत्ययभागश्च, तत्र गतार्थमन्तर्भाव्य वर्त्तमानः प्रशब्दो 'ऋच्छक'शब्दे प्रधानीभूतं णकप्रत्ययार्थं कर्त्तारमेव विशिनष्टि, न तु धातुभागम्, कर्तृविशेषणत्वमपि गच्छत्यर्थद्वारैव। तथा च गच्छतिं प्रत्येव तस्य [ प्रशब्दस्य ] साक्षाद्विशेषणत्वं, न तु ऋच्छतिं प्रतीति ऋकारादिधातुनिरूपितोपसर्गत्वाभावान्न तत्रार् प्रवर्त्तत इति। किञ्च पितापुत्रादिसम्वन्धिशब्दवदुपसर्गशब्दोऽपि सम्वन्धिशब्द एव, तथा च पिता पुत्रादिशब्दार्थानां यथा नियतनिरूपकनिरूपितत्वं तथोपसर्गस्यापि नियतधातुनिरूपितोपसर्गत्वमेव, न तु यं कञ्चित् प्रतीति लौकिकन्यायसिद्धोऽयमर्थः । तथा चान्यधातुनिरूपितोपसर्गस्यान्यधातुं प्रति नोपसर्गत्वं किन्तु तत्र प्रादित्वमेवेति फलितम् ॥ ५१ ॥

## ॐयेन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः॥ ॥ ५१ ॥

त०—उपसृत्य धातुमर्थविशेषं सृजतीत्यर्थे उपपूर्वात् सृजेः "लिहादिभ्यः" [ ५. १. ५०. ] इत्यचि गुणे "न्यङ्कूद्गमेघादयः" [ ४. १. ११२. ] इति गत्वे च-उपसर्गशब्दो निष्पन्नः, स च येन-यत्क्रियावाचकेन यादृशानुपूर्वीमता धातुना, युक्तः-द्योतकताख्यसम्वन्धानुयोगी, तं प्रत्येव तस्योपसर्गत्वमुचितमिति तदेवानेन न्यायेनानूद्यते। अस्य न्यायस्य ज्ञापकम्—"ऋत्यारुपसर्गस्य" [ १. २. ९. ] इति सूत्रे उपसर्गस्येति ग्रहणमित्युक्तं वृत्तावुपपादितं च । तच्च तत्रत्यबृहद्वृत्तिग्रन्थादेवावसीयते, तथाहि-"उपसर्गस्येति किम्? इहर्च्छति, इह ऋच्छति ॐयेन धातुना युक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञाः॥, तेनेह न भवति-प्रगता ऋच्छका अस्मात्-प्रर्च्छको देशः, एवम्-प्रर्षभं प्रर्श्यं वनम्" इति। व्याख्यातश्चायं ग्रन्थोऽस्माभिस्तत्रत्यन्यासानुसन्धाने, तथाहि-"ननूपसर्गग्रहणाभावेऽपि 'ऋकारादौ धातौ परेऽवर्णस्यारादेशः' इत्यर्थे प्रार्च्छतीत्यादीनां सिद्धिर्निराबाधैवेति कथमुपसर्गग्रहणमित्याशङ्कते-उपसर्गस्येति किमिति। समाधत्ते-इहर्च्छतीति-अस्मिन्नर्थे "क्व कुत्रात्रेह" [ ७. २. ९३. ] इति निपातनात्-इहेति । 'इह+ऋच्छति' इति स्थिते उपसर्गग्रहणाभावेऽनेन नित्य आरादेशः स्यात्, स मा भूदित्युपसर्गग्रहणम्, "अवर्णस्य०" [ १. २. ६. ] इत्यस्य वैयर्थ्यं तु नाशङ्क्यम्, दीर्घे ऋकारे परे चारितार्थ्यात्, तथा चोपसर्गग्रहणे कृते प्रकृते उपसर्गस्याभावेन नास्य प्राप्तिरिति "अवर्णस्य०" [ १. २. ६. ] इत्यरादेशः "ऋ-लृति०" [ १. २. २. ] इति ह्रस्वश्च भवतः। इदमुपलक्षणं परमर्षिप्रभृतीनामपि; तथाहि-उपसर्गग्रहणाभावे इहर्च्छतीत्यादौ यथाऽरादेशबाधेनास्याऽऽरादेशस्य प्राप्तिस्तथैव परमर्षिप्रभृतिष्वपीति तत्राप्यारोऽभावाय सार्थकमुपसर्गग्रहणम्। न चोणादीनामव्युत्पत्तिपक्षे ऋकारादिधातुत्वाभावेन पमर्ष्यादावुपसर्गग्रहणाभावेऽपि न दोष इति वाच्यम्, व्युत्पत्तिपक्षे "ऋषैत् गतौ" इत्यतः "नाम्युपा०" [ उणा० ६९. ] इति किदिकारप्रत्ययेन निष्पन्नऋपिशब्दसमभिव्याहारे आरादेशप्राप्तेरप्रत्यूहत्वात्। नह्यनयोरन्यतरस्मिन् कस्मिन्नपि पक्षेऽत्र कोऽप्यारादेशमभिप्रैति। वस्तुतस्तु-उपसर्गत्वं क्रियायोगविरहे न भवतीति हेतोरुपसर्गग्रहणदशायां नान्तरीयकत्वं श्रयन्त्याः क्रियाया वाचको धातुराश्रितो विशेष्यतां गच्छंस्तदादिविधिना 'ऋकारादौ धातौ०' इत्यादिसूत्रार्थं सम्पादयति। इदानीमुपसर्गग्रहणाभावे सोपसर्गत्वमिव क्रियामन्तरेण किमप्यनुपपद्यमानमस्ति यदिह धातुमाक्षिप्य 'ऋकारादौ धातौ०' इत्यर्थं सम्पादयितुमीशीत, सत्येवं सामान्यतः शब्दस्वरूपं विशेष्यमादाय तदादिविधौ 'ऋकारादौ शब्दे परे' इत्यर्थे व्युत्पत्तिपक्षसाधारण्येन दोषः स्यादेव यदीह नोपसर्गग्रहणं क्रियेतेत्यवसेयम्। "अवर्णस्य०" [ १. २. ६. ] इति सूत्रं तु देवेन्द्र तवेहेत्यादौ कृतार्थमिति न वैयर्थ्यफलमादायैतस्याऽरो वाधः सम्भवति [ यद्यपि "अवर्णस्येवर्णादिनैदोदरल्" [ १. २. ६. ] इति सूत्रे चतुर्णामादेशानां निर्देशाच्चत्वार एव इकारोकारर्कारल्काराः स्थानिन आक्षिप्यन्ते इति देवेन्द्र तवेहेत्यादौ चारितार्थ्यदर्शनमात्रेण न सर्वांशे चारितार्थ्यमायाति तथापि दीर्घे ऋकारे परे 'उप+ऋकारीयति' इति स्थितौ 'उपर्कारीयति' इत्यादावरादेशस्यापि चारितार्थ्यमव-

सेयम् ] । इहर्च्छतीत्यत्र पक्षे ह्रस्वत्वे कृते तत्सामर्थ्यात् कार्यान्तरबाधे इह ऋच्छतीत्यपि भवतीत्याह–इह ऋच्छतीति ॥ अथ "प्र-परा-ऽप-समन्वव-निर्दुरभि-व्यधि-सूदति-नि-प्रति-पर्यपयः । उप आङिति विंशतिरेष सखे! उपसर्गगणः कथितः कविभिः ॥" इत्युक्तानां विंशतेरेव "धातोः पूजार्थ०" [ ३. १. १. ] इत्यनेनोपसर्गसंज्ञा विधीयते, नेतरस्य कस्यापीति "ऋति प्रादेः" इत्येवं लघुन्यास एव लक्ष्यग्रहणेऽलक्ष्यपरिहारे च पर्याप्नुयादित्युपसर्गपदभूतो गुरुन्यासो न युज्यत इति शङ्कामपनिनीषुराह–येन धातुनेति । अयं भावः–मैत्रोऽयं पुत्रं लालयतीत्युक्ते यथा मैत्रस्यैव पुत्रे मैत्रकृतं लालनं प्रतीयते, न देवदत्तादिपुत्रे, तथैव उपसर्गस्यामुकं कार्यं भवतीत्युक्तावपि यां क्रियामादायोक्तसूत्रेणोपसर्गसंज्ञा भवेत् तत्क्रियावाचकतद्धातुं प्रत्येव प्रादिविशेषस्योपसर्गत्वं व्यवह्रियते, क्रियान्तरयोगे उपसर्गसंज्ञां श्रयतः प्रादेस्तु क्रियान्तराभिधायिधातोः पूर्वं स्थितस्यापि नोपसर्गत्वव्यवहार इति सूत्रे उपसर्गपदोपादाने न तत्र भवत्यारादेशः, प्रादिपदोपादाने तु प्रपरेत्यादयो विंशतिः प्रादिपदेन ग्रहीतव्या इत्येतावन्मात्रवन्धनेनोपसर्गत्वानिरूपकक्रियावाचिधातोः पूर्वं विद्यमानस्य प्रादेः प्रादित्वेनोद्देश्यताको विधिर्न सुरगुरुणापि वारणीयो यः खलु विधिर्नेष्यते तत्रेति गुरुरप्युपसर्गपदसहित एव न्यास आदरणीयस्तत्रेति ॥ न्यायाक्षरार्थस्तु पूर्वमुक्त एव, तेन द्योतकताख्यसम्बन्धप्रतियोगिक्रियाविशेषवाचकधातुविशेषं प्रत्येवोपसर्गत्वेनेह वक्ष्यमाणे सूत्रान्तरलक्ष्ये न भवति, उद्देश्यत्वाऽलाभेन नायमादेशो भवतीत्यर्थः । लक्ष्यमाह–प्रगता इत्यादि–इह हि गतशब्दघटकगत्यर्थयोगे प्रशब्दस्योपसर्गत्वं विद्यते, आरादेशस्त्वयं तत्राभविष्यद् यत्र ऋकारादिधात्वर्थयोगेनोपसर्गत्वमस्यास्यत्, प्रशब्दोऽयं गम्यर्थं परिपोष्योपक्षीणशक्तिर्न शक्नोति ऋच्छत्यर्थं परिपोषयितुं येन ऋकारादिधात्वर्थक्रियायोगेनोपसर्गत्वमनुभवन् आरादेशं लभेत । ननु *येन धातुना युक्ताः प्रादयः०* इति न्याये किं बीजं ? येन लघुन्यासं तिरयसीति चेद् ? उच्यते–जगति जनिमतां जन्तूनां मातापितृत्वनिरूपितपुत्रत्वस्य सद्भावेऽपि यथा तन्मातृत्व-तत्पितृत्वाभ्यामेव तत्पुत्रत्वं निरूपितं भवति, नेतरमातर-पितृत्वाभ्याम्, तथैव प्रकृतेऽपि पृथक् पृथगेव तत्तद्धातुं प्रत्युपसर्गत्वं, न तु कतमञ्चिदेकं प्रति जातमुपसर्गत्वमिति तद् इतरधातुं प्रत्यप्युपर्गत्वमेवेति लौकिकन्यायसिद्धोऽयं न्यायः । यद्वा यदीतरधातुं प्रति जातमुपसर्गत्वमितरधातुं प्रत्यपि स्यादुपसर्गत्वं तदाऽस्मिन्नेव सूत्रेऽन्तरेणैवोपसर्गग्रहणं प्रादिशब्दग्रहणेनैव पूर्वोक्तेनोपसर्गपदग्राह्याणां ग्रहणे सिद्धे श्रितगौरवो न्यासः कथङ्कारमुपन्यस्यते ? उपन्यस्यैतं तु गुरुन्यासमाचार्यप्रवृत्तिर्ज्ञापयति–*येन धातुना युक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञाः* इति । तुल्यन्यायाद् गतिसंज्ञापक्षेऽप्ययमेव पन्था अवसेयः । ज्ञापिते त्वस्मिन् न्यायेऽन्यनिरूपितोपसर्गत्वे सत्यन्यं प्रत्युपसर्गत्वप्रयुक्तं कार्यं प्रर्च्छकादौ मा भूदिति प्रादिशब्दतिरस्कारेणोपसर्गपदं सूत्रे चारितार्थ्यमश्नुते । नन्वभ्युपेयमानेऽस्मिन् न्याये प्रगता नासिका यस्येत्यर्थे "उष्ट्रमुखादयः" [ ३. १. २३. ] इति सूत्रेण गतशब्दलोपपूर्वकसमासे "उपसर्गात्" [ ७. ३. १६२. ] इति नासिकाया नसादेशो न स्यात्, क्रियायोगे सत्येवोपसर्गसंज्ञाया जायमानत्वात्, क्रियायाश्च धात्वर्थत्वाद् नासिकार्थं प्रति नोपपद्यत उपसर्गत्वमिति प्रणसं मुखमित्याद्यनुपपत्तिरिति चेत् ? उच्यते–यत्र परतया धातुयोगे किमपि कार्यं विधीयते तत्रैव *येन धातुना* इति न्यायादरेणेतरस्याः क्रियाया योगे जायमानमुपसर्गत्वमितरां क्रियां प्रति नोपसर्गत्वं भवति, यथा- अभिषिञ्चत्यादिलक्ष्ये षत्वविधायके "उपसर्गात् सुग्-सुव्०" [ २. ३. ३९. ]इत्यादौ; यत्र तु परतया धातुयोगमनपेक्ष्य कार्यं विधीयते तत्र कामपि क्रियां प्रति प्रादेरुपसर्गत्वमादाय तत् तत् कार्यं विधीयते सूत्रारम्भसामर्थ्यात्, यथा–"उपसर्गादध्वनः" [ ७. ३. ८९. ] इत्यादौ, अनेन हि उपसर्गात् परस्य अध्वन्शब्दस्य अः समासान्तो भवति, यद्यत्राध्वन्शब्दार्थमपेक्ष्योपसर्गत्वं गृह्येत तदा तद् वन्ध्यापुत्रत्वमिवालीकतामुपयत् कार्याय न कल्पेत, तदेवं सूत्रमेव वैयर्थ्यमुपेयात्, यां कामपि क्रियामादायोपसर्गत्वभाजः शब्दात् परस्याध्वनः समासान्ते विधित्सिते तु प्रगतोऽध्वानमित्यर्थके 'प्राध्वो रथः' इत्यत्र गम्यर्थक्रियामादाय जातमेवोपसर्गत्वमिति भवति तत्र समासान्तः । 'प्रणसं मुखम्' इत्यत्रापि 'उपसर्गात् परस्य नासिकाशब्दस्य नसादेशो भवति' इत्यर्थकेन "उपसर्गात्" [ ७. ३. १६२. ] इत्यनेन नसादेशे विधास्यमाने नासिकार्थमपेक्ष्योपसर्गत्वग्रहणे तदसंभवितया सूत्रमेव व्यर्थं स्यादितीहापि लुप्यमानगतादिघटकगम्याद्यर्थक्रियामादाय जातमेवोपसर्गत्वं समाश्रीयत इति भवेदेव नसादेशः । न च यत्र परतया धातुयोगः किमपि कार्यं प्रयोजयति, यथा–अभिषेकशब्दादौ "स्था-सेनि-से०" [ २. ३. ४०. ] इति विधीयमानं षत्वम्, प्रकृतमिदं [ "ऋत्यारुपसर्गस्य" ] इति सूत्रं च, तत्रापरस्याः क्रियाया योगे उपसर्गत्वमनुभवन् प्रादिरुद्देश्यतया न गृह्येतेत्येतदर्थं साफल्यमश्नुतु नाम गुरुभूतमप्युपसर्गग्रहणम्, यत्र परतया धातुर्नाश्रीयते कार्याय तत्र प्रादिशब्द एवोपसर्गस्थाने कथं नाद्रियते ? यथैहैव नसादेशविधायके "उपसर्गात्०" [ ७. ३. १६२. ] "उपसर्गादध्वनः" [ ७. ३. ७१. ] इत्यादाविति चेत् ? मैवम्, गतार्थानन्तर्भावेण प्रादीनां नासिका-ध्वन्शब्दादिना सह समासे नसादेशादिवारणायोपसर्गग्रहणस्य सार्थक्यात् । नन्वेवमुपसर्गग्रहणस्य "उपसर्गादध्वनः" [ ७. २. ७९. ] इत्यादिस्थलीयस्य चारितार्थ्ये *यत्रोपसर्गत्वं न सम्भवति०* इत्येतन्न्यायज्ञापकत्वं

सर्वसम्मतं विलुप्येतेति चेत्? न–तन्न्यायज्ञापनद्वारैव चारितार्थ्यस्य वक्तव्यत्वात् । तथाहि–प्रादिग्रहणेन लघुना सिद्धे यदुपसर्गग्रहणं गुरुभूतमुपास्यते तज्ज्ञापयति–*यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते, न तु सम्भवत्युपसर्गत्वे* इति, यत्रोपसर्गत्वम्–यद्विधिसूत्रीयोपसर्गात् परत्वेनोद्देश्यताश्रयीभूतोपसर्गत्वम्, न सम्भवति–तदुद्देश्यार्थस्य क्रियात्वाभावाद् वा क्रियात्वेऽपि तया सह योगाभावाद् वा न सम्भवति, तत्रोपसर्गशब्देन–तद्विधिसूत्रीयोपसर्गशब्देन, प्रादयः–तदुद्देश्यताश्रयेतरव्यक्तिनिरूपितोपसर्गत्वभाजः प्रादयः, लक्ष्यन्ते–तत्सूत्रीयोद्देश्यतया ज्ञायन्ते, न तु सम्भवत्युपसर्गत्वे–तत्सूत्रीयोपसर्गात् परतयोद्देश्यताश्रयव्यक्तिनिरूपितोपसर्गत्वे सम्भवति, न तादृशा लक्ष्यन्ते, इति न्यायार्थः । प्रकृते 'प्रणसं मुखम्, प्राध्वो रथः' इत्यादौ "उपसर्गात्" [ ७. ३. १६२. ] "उपसर्गादध्वनः" [ ७. ३. ७९. ] इत्यादिसूत्रीयोपसर्गात् परतयाऽऽश्रिततयोर्नासिका-ऽध्वन्शब्दयोरर्थस्य क्रियात्वविरहेण तन्निरूपितमुपसर्गत्वं प्रादेर्न सम्भवतीति तत्रोपसर्गशब्देन नासिकादीतरार्थं गताद्यर्थं क्रियारूपमादाय तद्योगेनोपसर्गत्वं प्राप्तस्य प्रादेर्ग्रहणं भवतीति भवति तत्रेष्टो नसाद्यादेशः । यत्र तु सूत्रीयोपसर्गात् परतयोद्देश्यताश्रयव्यक्तिनिरूपितमप्युपसर्गत्वं सम्भवति, यथा–"ऋत्यारुपसर्गस्य" [ १. २. ९. ] तत्र नान्यनिरूपितोपसर्गत्वमादाय कार्यं भवतीति प्रार्च्छतीत्यादौ न दोषः । केचित्तु 'यत्सूत्रीयोद्देश्यताश्रयीभूतमुपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देनोपसर्गसंज्ञारहिता एव प्रादयो गृह्यन्ते, सम्भवत्युपसर्गत्वे तु न तथा, इति न्यायार्थमाचक्षते, परं तन्मते गताद्यर्थयोगानुभवेन हेतुनोपसर्गसंज्ञामनापन्नस्य प्रादेर्नासिका-ऽध्वन्-प्रभृतिना समं समासे नसादेशादिः कथं न वारणीय इति त एव प्रष्टव्याः । वयं तु नोपसर्गसंज्ञाविरहिणमुपसर्गपदेन लक्षयामः, किन्तु सूत्रीयोपसर्गात् परतयोद्देश्यताश्रयनिरूपितोपसर्गत्वविरहे व्यक्त्यन्तरनिरूपितोपसर्गत्वेऽपि प्रादिकार्यविधावाश्रयामः, इति गतादिघटकगम्याद्यर्थयोगमननुभवतः प्रादेरुपसर्गत्वविरहान्नास्माकं तत्र नसाद्यनिष्टादेशादिः सम्भवतीति सूक्ष्मशेमुषीजुषां ध्येयम्" इति । इदं च तत्रत्यव्याख्यानमेतन्न्यायसम्बद्धमेवेतीह प्रदर्शितम् । अयमत्र निष्कर्षः–उपसर्गत्वव्यवहारप्रयोज्यं कार्यं यदि धातुगतं चिकीर्ष्यते तर्हि पुत्रादिव्यवहारवत् स्वनिरूपितोपसर्गत्ववत्प्रयोज्यतायामेव कार्यम्, अन्यथोपसर्गसंज्ञाया महासंज्ञात्वकरणमेव व्यर्थं स्यात् । यत्र च न धातुगतं कार्यं चिकीर्षितमपि तु नामादिगतं तत्राग्रिमन्यायेन निर्वाह इति विषयविभागेन सर्वलक्ष्यसंस्कारे स्वीकृते न केषामपि दोषाणामवकाश इति ॥ ५१ ॥

## *यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देन प्रादयो लक्ष्यन्ते, न तु सम्भवत्युपसर्गत्वे* ॥ ५२ ॥

सि०–पूर्वन्यायेन यद्धात्वर्थक्रियाविशेषका उपसर्गास्तस्य धातोर्योग एव तेषामुपसर्गत्वमित्यस्यार्थस्य निर्णीतत्वाद् यत्र नाम्ना युक्ताः प्रादयस्तत्र तेषामुपसर्गत्वं नास्तीत्युपसर्गात् परतयोद्दिष्टानां तेषां कार्यं न स्यादिति तज्ज्ञापणार्थः पूर्वन्यायापवादभूतोऽयं न्यायः । अस्यार्थः–यस्मिन्–उपसर्गात् परतयोद्दिश्य कार्यविधायके शास्त्रे, उपसर्गत्वं–क्रियावाचिधातुयोगे विधीयमानमुपसर्गत्वं, न सम्भवति–तद्युक्तस्य पदस्य क्रियावाचकत्वाभावात् क्रियावाचकत्वेऽपि च तेन सह सम्बन्धाभावाच्च सम्भाव्यतां गच्छति, तस्मिन्–शास्त्रे, उपसर्गशब्देन प्रादयो लक्ष्यन्ते– तत्सूत्रीयोद्देश्यतया ज्ञायन्ते, सम्भवत्युपसर्गत्वे तु न, तथा सति उपसर्गत्वहीनाः प्रादयो न लक्ष्यन्त इति भावः । अत्र च ज्ञापकं तादृशोपसर्गपरत्वेनोद्दिष्टस्य कार्यविधायकं सूत्रमेव, यथा–प्रगतोऽध्वानं प्राध्वो रथ इत्यत्र प्रशब्दस्याध्वन्शब्दापेक्षयोपसर्गत्वविरहेऽपि "उपसर्गादध्वनः" [ ७. ३. ७३. ] इति समासान्तोऽत् भवति, अन्यथा प्रशब्दस्य गतशब्दार्थं प्रत्येवोपसर्गत्वात् प्रस्योपसर्गत्वाभावेन सूत्रस्याप्रवृत्तौ प्रसक्तायां स्वज्ञापितेन प्रकृतन्यायेनेदृशस्थले प्रादीनामुपसर्गशब्देन ग्रहणे स्थापिते भवति सूत्रप्रवृत्तिः । सूत्रारम्भसामर्थ्यानुमितस्य चास्य नानित्यत्वसम्भावना, न च तादृशं लक्ष्यमेव क्वचिदस्ति यदर्थमनित्यत्वमिष्येत । प्रगता नासिका यस्य स प्रणस इत्यादावपि "उपसर्गात्" [ ७. ३. १६२. ] इत्यस्य प्रवृत्तिः प्रकृतन्यायमूलिकैवेति तदप्यस्य न्यायस्य फलमिति बोध्यम् ॥ ५२ ॥

## *यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गपदेन प्रादयो लक्ष्यन्ते, न संभवत्युपसर्गत्वे* ॥ ५२ ॥

त०—पूर्वन्यायेनोपसर्गशब्दस्य सम्बन्धिशब्दरूपेण व्यवस्थायां कृतायां तदयोग्यानां नाम्नामुपसर्गनिमित्तकस्य कार्यस्याप्राप्तौ प्रसक्तायामिमं न्यायं निर्णायकत्वेनोदाहृतवानस्मि पूर्वन्यायविवरणे, तत्रैव चैतद्विषयो विशेषः प्रतिपादित इति नेह पुनर्विचार्यते । अन्यैरपि वैयाकरणैरीदृशविषये एवमेव भूतपूर्वामुपसर्गसंज्ञामादाय उपसर्गपदस्य प्राद्युपलक्षकत्वमाश्रित्य वा निर्वाहः क्रियते, तथाहि–पाणिनीयतन्त्रे महाभाष्ये "गतिश्च" [ पा० सू० १. ४. ५९ ] इति सूत्रे "गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्ता संप्रतीति वचनम्" इति वार्तिकं सप्रयोजनं व्याख्याय तत्र दूषणवार्तिकमिदमुपात्तम्–"वद्विधिनरभावार्थीत्वस्वाङ्गादिस्वरणत्वेषु दोषः" इति, तत उत्तरितम्–"वद्विधि-

नस्भावावीत्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात् सिद्धम्" इति। एतच्च वार्त्तिके भाष्यकृता इत्थं व्याख्यातम्—"अनवकाशा एते विधयः, ते वचनप्रामाण्याद् भविष्यन्ति" इति। अत्र कैयटः—"येषां हि क्रियाशब्दप्रयोगे तं प्रत्युपसर्गसंज्ञा ते संप्रत्यनुपसर्गसंज्ञा अपि गृह्यन्ते इत्यर्थः" इति। अनेन च यद्यपि *सांम्प्रतिकाभावे भूतपूर्वगतिः* इति न्यायबलेन तादृशस्थले भूतपूर्वमुपसर्गत्वं ग्राह्यमित्यायाति, तथापि "तत्र सर्वत्रोपसर्गग्रहणं प्राद्युपलक्षणमिति भावः" इति नागेशोक्त्या प्रादिलक्षणैवेति समायाति। स्वं मतमपि तथैवेति पूर्वं प्रदर्शितमेवेत्यलमधिकेनेति ॥ ५२ ॥

## *शीलादिषु प्रत्ययेषु नासरूपोत्सर्गविधिः* ॥ ५३ ॥

सि०—"असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः" [५. १. १६.] इति सूत्रेणापवादविषयेऽप्युत्सर्गप्राप्तप्रत्ययस्यासरूपस्य प्रवृत्तिः पक्षेऽनुज्ञायते; तस्य सूत्रस्य शीलादिष्वर्थेषु विहितानां प्रत्ययानां विषयेऽप्रवृत्तिसूचकोऽयं न्यायः। अत्र शीलादिष्वित्यत्रादिपदेन धर्म-साध्वर्थयोर्ग्रहणम्, तथा च धर्मार्थे साध्वर्थे शीलार्थे च विहितानां प्रत्ययानां विषयेऽसरूपस्योत्सर्गस्य सामान्यविहितस्य प्रत्ययस्य, विधिः—विधानम् "असरूपोऽपवादे०" [५. १. १६.] इतिसूत्रप्राप्तं न भवतीति न्यायार्थः। अस्य च ज्ञापकं "भूषा-क्रोधार्थ-जु-सृ-गृधि-ज्वल-शुच-श्चानः [५. २. ४२.] इति सूत्रे पचतेरनुकर्षणार्थं चकारकरणम्, अनेन हि सूत्रेणानो विधीयते, स च पचतेरिदित्वात् "इङितो व्यञ्जनाद्यन्तात्" [५. २. ४४.] इत्यनेनैव सिद्धः। तथा च सिद्धेऽपि सति यदनस्य विधानार्थमिह पचतेरनुकर्षणार्थं चकारः पठ्यते तेनायं न्यायो ज्ञाप्यते इति लभ्यते। कथं कृत्वा ज्ञापकमिति चेत्? उच्यते—"लष-पत-पद०" [५. २. ४१.] इत्युकणा बाधो मा भूदेतदर्थमेव हि "भूषा-क्रोधार्थ०" [५. १. ४२.] इति सूत्रे चकारेण पदनुकृष्यते, तच्च नावश्यकम् "असरूपोऽपवादे०" [५. १. १६.] इत्यनेन "इङितो व्यञ्जनाद्यन्तात्" [५. २. ४४.] इत्यौत्सर्गिकस्यानस्याऽनुज्ञातत्वेन बाधस्यासंभवात्। तथा च पदनुकर्षणार्थस्य चकारस्य वैयर्थ्यं स्पष्टमेव। ज्ञापिते चास्मिन् न्यायेऽनेन शीलादिप्रत्ययेष्वसरूपविधिर्निषिद्ध इति। "लष-पत-पदः" [५. २. ४१.] इत्युकणा बाधः स्यादेवेति पदोऽनुकर्षणार्थस्य चकारस्यानविधानार्थमावश्यकत्वमिति स्वांशे चारितार्थ्यम्। फलं चास्य—अलङ्करिष्णुः कन्यामिति यथा भवति तथाऽलंकर्त्ता कन्यामिति तृजन्तं रूपं न भवतीति। "भ्राज्यलंकृग्-निराकृग्-भू-सहि-रुचि-वृति-वृधि-चरि-प्रजना-ऽपत्रप इष्णुः" [५. २. २८.] इति शीलार्थे इष्णुर्विधीयते, तेनालङ्करिष्णुरिति रूपं भवति, स चेष्णुरसरूपस्योत्सर्गप्रत्ययस्य "तृन् शील-धर्म-साधुषु" [५. २. २७.] इति विहितस्य तृनो यदि विकल्पेन बाधकः स्यात् तर्हि अलङ्कर्त्ता इत्यपि रूपं स्यादेव, किन्तु प्रकृतन्यायेन शीलाद्यर्थप्रत्ययेष्वसरूपविधेर्निषिद्धत्वेन नित्यमेवापवादस्योत्सर्गबाधकत्वमिति 'अलङ्कर्त्ता' इति तृन्नन्तं रूपमसाध्वेव। न केवलमयं न्यायः शीलाद्यर्थानां प्रत्ययानां परस्परमसरूपविधावेव प्रवर्त्तते, अपि त्वन्यैरपि सहासरूपविधिर्न भवति, ततश्च शीलाद्यर्थविशिष्टे कर्तरि णकादयोऽप्युत्सर्गा न भवन्ति, इति मतान्तरसंग्रहार्थमस्य न्यायस्यान्योऽर्थ इत्थमाख्यायते—शीलादिप्रत्ययेषु विषयभूतेषु सामान्यतः कर्त्राद्यर्थविहित औत्सर्गिकः कृत्प्रत्ययोऽसरूपोत्सर्गविधिना प्राप्तोऽपि न भवति; तेनालङ्करिष्णुरित्यादौ शीलाद्यर्थे "भ्राज्यलङ्कृग्०" [५. २. २८.] इति विहितस्य इष्णुप्रत्ययस्य विषये सामान्यार्थविहितत्वात् प्राप्तः "णक-तृचौ" [५. १. ४८.] इति णको न भवतीति तत्रार्थे [ शीलाद्यर्थे ] 'अलङ्कारक' इति प्रयोगो न भवति। एतदर्थज्ञापकं च शीलाद्यर्थे 'परिवादक' इत्यस्य सिद्ध्यर्थं "वादेश्च णकः" [५. २. ६७.] इति सूत्रेण तत्रार्थे विशिष्य णकविधानम्, तथाहि—तत्रार्थेऽप्यसरूपविधिना "णक-तृचौ" [५. १. ४८.] इति णके सति परिवादकस्य सिद्धौ सत्यां तद्विध्यर्थं स्पष्टमेव, पश्यति त्वाचार्यो यत्—शीलाद्यर्थे विहितैस्तृन्नादिभिर्णको बाधिष्यत इति सामान्यार्थविहितस्य "णक-तृचौ" [५. १. ४८.] इत्यस्य प्रवृत्तिर्न स्यादिति परिवादक इत्यस्य सिद्ध्यर्थं "वादेश्च णकः" [५. २. ६७.] इति सूत्रं रचयति, तदिदं सूत्रं *शीलादिषु नासरूपोत्सर्गविधिः* इति न्यायो न शीलादिष्वेव परस्परमसरूपविध्यभावं वारयति, अपि तु तैः सह सामान्यविहितानामप्यौत्सर्गिकप्रत्ययानामसरूपविधिं वारयतीति ज्ञापयति। दीप्धातोः "इङितो व्यञ्जना०" [५. २. ४४.] इति सूत्रप्राप्तस्यानस्य निषेधाय "न णिङ्-य-सूद-दीपदीक्षः" [५. २. ४५.] इति सूत्रे दीपग्रहणेन प्रकृतन्यायस्य प्रथमार्थस्यानित्यत्वमिति विज्ञायते, तथाहि—दीप्धातोः "स्म्यजस-हिंस०" [५. २. ७९.] इति रो विधीयते, स च "इङितो व्यञ्जना०" [५. २. ४४.] इति विहितस्यानस्यापवादभूत इति सोऽनं बाधिष्यत एवेति तन्निषेधाय "न णिङ्-य-सूद-दीपदीक्षः" [५. २. ४५.] इति सूत्रे दीपधातोर्ग्रहणं व्यर्थमेव, न चासरूपविधेर्विकल्पेन बाधकत्वात् पक्षेऽनो भविष्यत्येवेति तद्बाधनार्थमावश्यकमेवात्र दीपग्रहणमिति वाच्यम्, प्रकृतन्याये शीलाद्यर्थेष्वसरूपविधेः प्रतिषिद्धत्वात्। एवं च प्रकृतन्यायाप्रवृत्तिं विना स्वसार्थक्यमलभमानं "न णिङ्-य-सूद०" [५. २. ५५.] इति सूत्रे दीप-

ग्रहणं प्रकृतन्यायानित्यत्वं ज्ञापयत्येव, तेन शीलाद्यर्थे "शॄ-कम-गम-हन-वृष-भू-स्थ उकण्" [ ५. २. ४०. ] इत्युकणो विषये 'आगामुकः' इति यथा भवति तथा "तृन् शील०" [ ५. २. २७. ] इति तृन्नपि भवतीति । प्रतिपादितं चैतद् विवरणेऽपि । द्वितीयव्याख्याया अपि बाहुल्येन लक्ष्यानुरोधित्वात् क्वचित् सामान्यार्थकप्रत्ययानामपि विषयेऽसरूपविधिः विकल्पेन शीलाद्यर्थेषु भवतीति "काम-क्रोधौ मनुष्याणां खादितारौ वृकाविव" इत्यादौ शीलार्थेऽपि सामान्यविहितस्य "णक-तृचौ" [ ५. १. ४८. ] इति तृचः प्रयोगो दृश्यते । न चात्र शीलार्थे तृन्नेव कुतो न स्वीक्रियत इत्याशङ्कनीयम्, तथा सति तद्योगे कर्मणि "तृन्नुदन्ता-ऽव्यय-क्वस्वाना-ऽतृश्-शतृ-ङि-णकच्-खलर्थस्य" [ २. २. ९०. ] इति निषेधान्मनुष्याणामित्यत्र षष्ठी न स्यात्, वृकाभ्यां सहोपमानोपमेयभावनिर्वाहाय च शीलार्थविवक्षात्रावश्यमङ्गीकरणीयेति शीलाद्यर्थप्रत्ययैः सह सामान्यार्थविहितानां प्रत्ययानामसरूपविधिरपि क्वचिद् भवत्येवेत्यवश्यमङ्गीकरणमिति प्रकृतन्यायद्वितीयार्थस्य लक्ष्यानुरोधात् क्वचिदनाश्रयणमिति स्वीकार आवश्यक एवेति प्रतीयते ॥५३॥

## ※शीलादिषु प्रत्ययेषु नासरूपोत्सर्गविधिः※ ॥५३॥

त०—"असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः" [ ५. १. १६. ] इति हि सूत्रं "स्त्रियां क्तिः" [ ५. ३. ९१. ] इत्यतः प्राग् योऽपवादस्तद्विषये, अपवादेनासमानरूप औत्सर्गिकः प्रत्ययो वा भवतीति बोधयति । तेनेत आरभ्य तत्सूत्रपर्यन्तं पठितेषु विधिषु, असरूपाः प्रत्ययाः, अपवादविषयेऽपि प्रवर्त्तन्त इति । अवश्यलाव्यमित्यत्र घ्यण्, अवश्यभवितव्यमित्यत्र तव्यश्च भवतः, अन्यथा "उवर्णादावश्यके" [ ५. १. १९. ] इत्यस्य विशेषविहितत्वेन तद्विषये तव्यस्य प्रवृत्तिर्न स्यात् तस्य सामान्यविहितत्वेनौत्सर्गिकत्वात् । अस्य च सूत्रस्य शीलाद्यर्थप्रत्ययेष्वपि प्रवृत्तौ तत्र शीलार्थका असरूपा उत्सर्गप्रत्ययाः कर्तृसामान्यार्थका णकादिप्रत्ययाश्च स्युरिति 'अलङ्करिष्णुः' इत्यत्रेष्णुरिव तृन् शीलार्थो णकादिः सामान्यार्थश्च प्रत्ययः स्यादिति तद्वारणायायं न्याय आश्रीयते । अत्र च ज्ञापकं "भूषार्थ०" [ ५. २. ४१. ] इति सूत्रे चकारेण पद्यतेरनुकर्षणमेवेति वृत्तौ प्रतिपादितम् । तथ्र बृहद्वृत्तावित्थं श्रूयते—"पदेरिदित्वादुत्तरेणैव सिद्धे सकर्मकार्थं वचनम्—अर्थस्य पदनः, ग्रन्थस्य पदनः, पदनः क्षेत्राणाम्, उत्तरत्र सकर्मकेभ्योऽपि विधिरित्येकेषां दर्शनम्, तथा चोकणा बाधितोऽप्यसरूपत्वात् पदेरनः प्रत्ययो न भवतीति चेत्? एवं तर्हि शीलादिप्रत्ययेष्वसरूपत्वेन शीलादिप्रत्ययो न भवतीति ज्ञापनार्थं पदिग्रहणम्, तेन चिकीर्षिता कटम्, अलङ्कर्ता कन्यामिति न भवति" इति । इत्थं न्यायज्ञापनं प्रदर्श्य तदनित्यत्वमपि प्रदर्शितम्, तथाहि—"कथं तर्हि गन्ता खेलः, आगामुकः; भविता भावुक इत्यादि? क्वचित् समावेशोऽपि भवति, एतदर्थमेव च 'न णिङ्-य०' [ ५. २. ४५. ] सूत्रे दीपिग्रहणम्; अन्यथा रेणाऽनोऽस्य बाध्येतेति तदनर्थकं स्यात्, अनस्यैव विषये समावेश इत्येके" इति । अयमाशयः—"भूषा-क्रोधार्थ०" [ ५. २. ४२. ] इति सूत्रेण पद्यतेरनो विधीयते, स चोत्तरसूत्रेण "इङितो व्यञ्जनाद्यन्तात्" [ ५. २. ४४. ] सिद्ध एवेति व्यर्थ एवेति यद्यपि प्रतीयते, तथापि तत्राकर्मकादित्यस्य सम्बन्धेन यत्र पद्यतेः सकर्मकत्वं यथा—"अर्थस्य पदनः' इत्यादौ, तत्र विधानार्थं इत्यास्थेयम्, इति स्वमतम् । एके चोत्तरसूत्रेण सकर्मकेभ्योऽपि विधानमिच्छन्ति, तथा च तन्मते वैयर्थ्यमेव, तथाहि—"लष-पत-पदः" [ ५. २. ४१. ] इत्युकणा बाधितोऽपि इङ्गिन्निमित्तोऽनोऽसरूपविधिमाश्रित्य पदेर्भविष्यत्येवेति व्यर्थं सत् तत् प्रकृतन्यायज्ञापकम् । तथा चापवादेनोकणाऽनस्य बाधो मा भूदिति पुनरनेन सूत्रेण [ भूषा-क्रोधार्थेत्यनेन ] चकारबलात् स विधीयत इति स्वांशे सार्थक्यं तस्य । तत्र च यद्यपि 'शीलार्थप्रत्ययेष्वसरूपत्वेन शीलार्थप्रत्ययो न भवति' इत्येव न्यायस्वरूपत्वमुक्तमिति शीलार्थप्रत्ययैः सह सामान्यार्थविहितानां प्रत्ययानां बाध्यबाधकभावविषये न प्रकृतन्यायप्रवृत्तिरित्याभिप्रायोऽनुमीयते, तथाऽपि 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति सामान्यतयैव शीलाद्यर्थेष्वसरूपविधेः प्रवृत्तिनिषेध एव ज्ञाप्यते इत्यास्थीयते, अन्यथाऽलङ्कारक इत्यादिप्रयोगाणां शीलाद्यर्थे वारणमशक्यं स्यात् । किञ्च "वादेश्च णकः" [ ५. २. ६७. ] इति सूत्रे बृहद्वृत्तौ—"असरूपत्वात् "णक-तृचौ" [ ५. १. ४८. ] इति सिद्धे पुनर्विधानं शीलादिप्रत्ययेष्वशीलादिकृत्प्रत्ययोऽसरूपविधिना न भवतीति ज्ञापनार्थम्, तेन 'अलंकारकः परिक्षिपः परिरटः' इत्यादि शीलाद्यर्थे न भवति" इत्युक्तम् । एवं च वृत्तावेवेदितो द्वितीयोऽर्थः प्रकृतन्यायस्य पृथगेव न्यायरूपत्वेन ज्ञापित आचार्येणेति स्पष्टम् । तस्यायमाशयः—स्वमते "भूषा-क्रोधार्थः०" [ ५. २. ४१. ] इति सूत्रे चकारेण पद्यतेरनस्य विधानं सकर्मकार्थमिति सूचितमिति तथा सति तस्य प्रकृतन्यायज्ञापकत्वासंभव इति तत्र परमतेनैव प्रकृतन्यायज्ञापनमुक्तम् । अत्र च शीलाद्यर्थाऽशीलाद्यर्थयोरसरूपविधेर्विचार इति तथैव न्यायस्वरूपं सूचितमित्येकस्यैव न्यायस्योभयथा योजनसंभवे सर्वमतसंग्रह इति तदेव विचार्यास्माभिर्द्विधाऽयं न्यायो व्याख्यातः । अस्य च न्यायस्य पूर्वार्थस्यानित्यत्वं पूर्वोदाहृत"भूषा-क्रोधार्थ०" [ ५. २. ४१. ] इति सूत्रबृहद्वृत्तिग्रन्थेनैव परिज्ञातम् । यद्यपि तत्र 'अनस्यैव विषये समावेश इत्येके' इति प्रतिपादनाद् येषां मते न्यायस्य ज्ञापनं तेषां मते केवलमनस्यैवापवादेन सह समावेशः [ तद्विषय एव प्रकृतन्यायाप्रवृत्तिः ] इति लभ्यते, तथापि तत्र

तावन्मात्रेण लक्ष्यनिर्वाह इति द्वितीयार्थस्यैवानित्यत्वेन स्वमतसाधनमिति मत्वा "वादेश्च०" [ ५. २. ६७. ] इति सूत्रशेषे बृहद्वृत्तौ—"शीलादिकृत्प्रत्ययोऽसरूपविधिना न भवति" इति ज्ञापने सकले प्रदर्शिते "बाहुलकात् क्वचिद् भवत्यपि—"कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।" अत्र णकविषये "[ निन्द-हिंस०" ५. २. ६८.] इति विधीयमानणकप्रत्ययविषये ] तृच्" इत्युक्तम् । एतच्चोदाहरणं वृत्तौ व्याख्यातपूर्वम् । शीलादिप्रत्ययेष्वशीलादिकृत्प्रत्ययोऽसरूपविधिना न भवति' इत्यत्र शीलादिप्रत्ययेष्वित्यस्य शीलाद्यर्थेषु विहितानां प्रत्ययानां प्राप्तौ सत्यामित्यर्थः । अत्र च 'अशीलादिकृत्प्रत्यय' इत्यस्य सामान्यतः कर्तरि विहितकृत्प्रत्यय इत्यर्थः । वस्तुतस्तु 'शीलाद्यर्थेष्वसरूपविधिर्नास्ति' इति सामान्यरूप एव न्यायोऽभिप्रेय उभयथा व्याख्यानस्यावश्यकत्वात् । आश्रितश्चायं न्यायोऽन्यैरपि वैयाकरणैः सामान्यरूप एव । तथा च शीलाद्यर्थेष्वित्यत्र विषयसप्तमीमाश्रित्योभयथा व्याख्यानस्य सुकरत्वमिति बोध्यम् ॥ ५३ ॥

## *त्यादिष्वन्योऽन्यं नासरूपविधिः* ॥ ५४ ॥

सि०—"असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः" [ ५. १. १६. ] इति सूत्रबाधकन्यायकथनप्रसङ्गेन पूर्वन्यायसमानविषयोऽयमपि न्यायः स्मृतिपथमधिरूढः । इदमसरूपविधायकसूत्रं कृत्प्रत्ययेष्विव निर्दिष्टावधिपठितासु त्यादिविभक्तिष्वपि प्रवर्त्तेत एवेति तद्विषयेऽपि लक्ष्यसंस्कारानुरूपोऽयं न्यायः । त्यादिषु—त्यादिविभक्तीनां परस्परं बाध्यबाधकविषये, असरूपविधिः "असरूपोऽवादे०" [ ५ १. १६. ] इति सूत्रविहितो विधिः—असरूपापवादप्रत्ययस्य विकल्पेनोत्सर्गविषये प्रवृत्तिरूपं विधानं न भवतीत्यर्थः । तेनोत्सर्गरूपायास्त्यादिविभक्तेर्विषयेऽपवादरूपा त्यादिविभक्तिरेव प्रवर्तते, न तु प्रकृतसूत्रबलेनोत्सर्गरूपाया अपि पाक्षिकी प्रवृत्तिरिति फलति । अत्र च ज्ञापकं "श्रु-सद-वस्भ्यः परोक्षा वा" [ ५. २. १. ] इति सूत्रे वाग्रहणम्, तद्धि यथास्वकालमद्यतन्यादिविधानार्थमित्युक्तं तत्रैव वृत्तौ। अद्यतनी-ह्यस्तन्यौ चोत्सर्गभूतेऽपवादभूतयाऽनयैतत्सूत्रविहितया परोक्षया "असरूपोऽपवादः०" [ ५. १. १६. ] इति सूत्रबलेन विकल्पेनैव बाधिष्येते इति तयोरपि समावेशः स्वत एव सिद्ध इति वाग्रहणं व्यर्थमेव, व्यर्थीभूतं च तत् प्रकृतन्यायं ज्ञापयति । तथा चोक्तं तत्रैव सूत्रे बृहद्वृत्तौ—"असरूपत्वादेवाद्यतन्यादिसिद्धौ वावचनं विभक्तिष्वसरूपोत्सर्गविभक्तिसमावेशनिषेधार्थम्" इति। ज्ञापिते चास्मिन् न्याये "श्रु-सद०" [ ५. २. १. ] इति विहिततया परोक्षया औत्सर्गिक्यावद्यतनी-ह्यस्तन्यौ नित्यमेव बाधिष्येते इति पक्षे यथास्वकालं तयोरपि समावेशार्थं "श्रु-सद०" [ ५. २. १. ] इति सूत्रे वाग्रहणं सार्थकम् । फलं चान्यत्र—'स्मरसि चैत्र! कश्मीरेषु वत्स्यामः' इत्यादौ "अयदि स्मृत्यर्थे भविष्यन्ती" [ ५.२.९. ] इति सूत्रविहितभविष्यन्तीविषये प्राप्ताऽपि "अनद्यतने ह्यस्तनी" [ ५. २. ७. ] इति ह्यस्तनी न भवति । अन्योऽन्यमिति च कथनं त्यादिविभक्तीनामेव परस्परमुत्सर्गापवादतया प्रवृत्तिविषये प्रकृतन्यायप्रवृत्तिरिति सूचनार्थम्, तेन त्यादिविभक्तेरपवादभूताया विषये उत्सर्गभूता त्यादिविभक्तिरेव न समाविशति, कृत्प्रत्ययस्तु तत्र विषये भवत्येव, यथा—तत्रैवोपशुश्रावेति प्रयोगो यथा भवति, तथोपशुश्रुतवानिति प्रयोगोऽपि भविष्यत्येवेति ॥ ५४ ॥

### *त्यादिष्वन्योऽन्यं नासरूपविधिः* ॥५४॥

त०—ननु पूर्वन्याय एव 'त्यादिषु च' इति पठितव्ये किमर्थमयं पृथगुपदिश्यते इति चेत्? न—'अन्योऽन्यम्' इति विशेषकथनार्थत्वात्, त्यादिषु हि त्यादीनामेव परस्परमुत्सर्गापवादभावे प्रकृतन्यायप्रवृत्तिस्वीकारात् । न च तदपि सहैव पठ्यताम्—'शीलाद्यर्थेषु त्यादिषु चान्योन्यं नासरूपविधिः' इति वाच्यम्, तथा सति शीलादिप्रत्ययानां सामान्यार्थप्रत्ययैः सहासरूपविधिनिषेधो न स्यात्, इष्यते च सोऽपीति पूर्वन्यायव्याख्यावसरे प्रपञ्चितम् । अत्र च न्याये ज्ञापिते सति "वाऽऽकाङ्क्षायाम्" [ ५. २. १०. ] इति "ह-शश्वद्-युगान्तः—प्रच्छये ह्यस्तनी वा" [ ५. २. १३. ] इति "वाऽद्यतनी पुराऽऽदौ" [ ५. २. १५. ] इत्यादिषु सर्वत्र वाग्रहणस्य सार्थक्यं सञ्जायते, अन्यथा त्यादिष्वसरूपविधिसत्त्वे तु सर्वत्र विनाऽपि वाग्रहणमुत्सर्गप्रत्ययानां पाक्षिकी प्रवृत्तिः स्यादेवेति तत्र तत्र वाग्रहणस्य वैयर्थ्यं स्यादेव । बृहद्वृत्तौ च 'वावचनं विभक्तिष्वसरूपोत्सर्गविधिनिषेधार्थम्' इत्येवोक्तम् । तथा च विभक्तिसामान्यग्रहणं कृतम्, न तु त्यादिग्रहणम्, तथापि "असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः" [ ५. १. १६. ] इति सूत्रगृहीतेऽवधौ त्यादय एव विभक्तयः पठ्यन्ते न तु स्यादय इति विशेषपर्यवसायित्वमेव न्यायस्येति फलति ॥ ५४ ॥

## *स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ* ॥ ५५ ॥

सि०—प्राक् क्तेः पठितेषु प्रत्ययेषु निर्णायकतया "असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः" [ ५. १. ५६. ] इति सूत्रमुक्तम्, क्तेः परतस्तन्निर्णयार्थमयं न्याय आश्रीयते । अत्र स्त्रीत्यनेन "स्त्रियां क्तिः" [ ५. ३. ८९. ] इत्यधिकारोक्ताः प्रत्यया गृह्यन्ते, स्त्रियामित्यस्याधिकारश्च "भावे" [ ५. ३. १२२. ] इति सूत्रपर्यन्तमस्ति । क्तिः, क्यप्, शः, यः, अः,

अङ्, अनः, क्विप्, जः, इन्, णकः, इत्येते प्रत्ययाः पठ्यन्ते, तेषां खलोऽनस्य च विषये अल् यदि प्राप्येत तर्हि ते प्रत्यया यथास्वमलो बाधका भवन्ति । 'अन' इत्यनेनानट् ग्राह्यः, स्त्री-खलनानां परस्परस्पर्धे च स्त्रियाः खलनौ बाधकौ स्याता-मिति न्यायार्थः । अयं च न्यायः स्पर्धमूलक इति "स्पर्धे" [ ७. ४. ११९. ] इत्यस्यैव प्रपञ्चरूपः, तत्र च परशब्दस्य पाठकृतपरत्वार्थकत्वमिष्टत्वार्थकत्वं चेति पूर्वस्यापि तेन संग्रहो भवति, कुत्र को विधिरिष्ट इत्यत्र लक्ष्यानुसारि शास्त्रकृद्व्याख्या-नमेव शरणम् । तथा च स्वीकृते न्याये चयनमित्यर्थे चिधातोः "युवर्ण-वृ-दृ-वश-रण-गमृद्ग्रहः" [ ५. ३. २८. ] इत्यल्, "स्त्रियां क्तिः" [ ५. ३. ९१. ] इति क्तिश्च प्राप्तौ, तत्र प्रकृतन्यायात् परत्वमूलके निर्णये परत्वात् क्तिरेव भवति, स्त्रीप्रत्ययत्वात् । एवं दुःखेन चीयते इत्यर्थे "दुःस्वीषतः कृच्छ्रा-ऽकृच्छ्रार्थात् खल्" [ ५. ३. १३९. ] इति खल्, पूर्ववत् "युवर्ण०" [ ५. ३. २८. ] इत्यल् च प्राप्तौ, तत्रापि परत्वात् खलेव भवति । एवं पलाशानि शात्यन्तेऽनेनेत्यर्थे पलाशोप-पदात् शातयतेः "करणाधारे" [ ५. ३. १२९. ] इत्यनटः, "युवर्ण० [ ५. ३. २८. ] इत्यलश्च प्राप्तौ परत्वादनडेवेति प्रथमां-शोदाहरणानि ॥ तथा दुःखेन भिद्यते इत्यर्थे "स्त्रियां क्तिः" [ ५. ३. ९१. ] इति क्तिः, "दुःस्वीषतः०" [ ५. ३. १३९. ] इति खल् च प्राप्तः, तत्र परत्वात् खलेव भवति, प्रकृतन्याय-स्वारस्यात् । तथा च 'दुर्भेदा भूः' इत्येव प्रयोगः कर्मणि खलो भवनात् । एवं 'सक्तवो धीयन्तेऽस्याम्' इत्यर्थे "स्त्रियां क्तिः" [ ५. ३. ९१. ] "करणाधारे" [ ५. ३. १२९. ] इत्याभ्यां क्रमात् क्त्यनटोः प्राप्तौ परत्वादनडेव भवतीति सक्तुधानीत्येव प्रयोगः । यद्यपि सर्वत्रात्र परत्वमूलिकैव व्यवस्थेति "स्पर्धे" [ ७. ४. ११९. ] इति परिभाषयैव निर्वाहः सिध्यति, तथापि क्वचिद्विषये तस्याः परिभाषाया अपि न नैयत्येन व्यवस्थाप-कत्वमिति सूचयितुं न्यायस्वीकारः कृतः । तथा चास्य लक्ष्यानु-रोधित्वेन क्वचिदप्रवृत्तिरपि, अत एव 'जयः' इत्यादिषु "स्त्रियां क्तिः" [ ५. ३. ९१. ] इति क्तेः, "युवर्ण०" [ ५. ३. २८. ] इत्यलश्च प्राप्तौ पूर्वोऽप्यलेव भवति परशब्दस्येष्टवाचित्वाश्रय-णात्, एवं 'शिरोऽर्तिः' इत्यादौ क्त्यनटोः प्राप्तौ क्तिप्रत्यय एव, अयमाशयः-शिरसोऽर्दनमित्यर्थे "स्त्रियां क्तिः" [ ५. ३. ९१. ] इति क्तिः, "अनट्" [ ५. ३. १२४. ] इत्यनट् च प्राप्तः, तत्र परोऽप्यनट् न प्रवर्तते किन्तु क्तिरेवेति ॥ ५५ ॥

## *स्त्रीखलना अलो बाधकाः स्त्रियाः खलनौ* ॥५५॥

त०—वृत्तिप्रदर्शितदिशा यद्यपि "स्पर्धे" [ ७. ४. ११९. ] इति सूत्रेणैव प्रकृतन्यायस्य गतार्थताऽस्ति, तथाप्यन्यत्रासरूप-विधिकथनेनात्र प्रकरणे "स्पर्धे" [ ७. ४. ११९. ] इति परि-भाषाया न प्रवृत्तिरिति शङ्कासम्भवात् तदपाकरणार्थं "शिरोऽर्त्तिः' इत्यादिप्रयोगे च पूर्वस्यैव विधेरिष्टतया स्पर्धनिमित्तकस्य परत्व-बलवत्त्वस्य नेहाश्रयणमिति प्रदर्शनार्थं च प्रकृतन्यायाश्रयणम्, न्यासस्य हि स्थविरयष्टिप्रायतया क्वचिदनाश्रयणस्य युक्तत्वात्, सूत्ररूपस्य च तस्यानाश्रयणे बीजाभावात् । किञ्च न्यायानां सर्वतन्त्रसाधारणतया यत्र तन्त्रे स्त्र्यधिकारोक्तप्रत्ययादीनामलः पूर्वतया पाठः स्यात् तत्र स्पर्धनिमित्तकव्यवस्थाया असम्भवात् तदर्थं प्रकृतन्यायस्यावश्यकत्वात् । एतच्च प्राचां दिशा, तैरेत-न्न्यायस्य "स्पर्धे" [ ७. ४. ११९. ] इति सूत्रप्रपञ्चत्वेनोक्ततया तदनुसारमिहास्माभिस्तथैव व्याख्यातत्वात् । वस्तुतस्तु नात्र स्पर्ध-मूलिका व्यवस्था न्यायं विना सम्भविनी, यतः पर-नित्या-ऽन्त-राङ्गा-ऽपवादानामुत्तरोत्तरं बलीयस्त्वस्य *परान्नित्यम्* इत्यादि-न्यायैः प्रतिपादितत्वेनेह सामान्यविशेषभावमूलकबाध्यबाधक-भावशङ्कायाः सत्त्वेन तदपाकरणायैव परत्वमूलिकाया व्यवस्थायाः ख्यापनार्थं न्यायादरः । तथा च न्यायो लक्ष्यानुरोधमूलक एव । अन्यैश्च वैयाकरणैरेतदर्थं वचनमेवारभ्यते, तथाहि—"ईषद्-दुः-सु-षु कृच्छ्रा-कृच्छ्रार्थेषु खल्" [ पा० सू० ३. ३. १२६. ] इति सूत्रे महाभाष्ये—"अजब्भ्यां स्त्री-खलनाः" "स्त्रियाः खलनौ विप्रतिषेधेन" इति वार्तिकद्वयमेतदर्थमुक्तम् । तत्र हि तन्त्रे स्वरभेदनिमित्तमलः स्थाने द्वौ प्रत्ययौ पठ्येते—'अच्, अप्' च । तथा च सूत्रे "एरच्" [ पा० सू० ३. ३. ५६. ] "ऋदोरप्" [ पा० सू० ३. ३. ५७. ] इवर्णान्तादच् प्रत्ययो भवति भावे, ऋवर्णादुवर्णान्ताच्च 'अप्' प्रत्ययः, प्रक्रियायां वैशिष्ट्याभावेऽपि स्वरे वैशिष्ट्याद् भेदाश्रयणम्, तयोः प्राप्तौ स्त्री-खलना भवन्ति विप्रतिषेधेनेति पूर्ववार्तिकार्थः; स्त्रिया अपि खलनौ भवतो विप्र-तिषेधेन [ स्पर्धेन ] इति परवार्तिकार्थः । तथा चापवादविषये-ऽप्राप्तस्य परबलवत्त्वस्य विशिष्य विधानमाश्रीयते । तथैव स्वम-तेऽपि विशिष्यैव विधानमेतन्न्यायरूपेण स्वीकृतमित्यवधेयम् । 'शिरोर्त्तिः' इति प्रयोगसाधनाय "नाम्नि पुंसि घः" [ ५. ३. १२१. ] इति सूत्रबृहद्वृत्तौ च बाहुलकादत्र क्तिरेवेति यदुक्तं तदपि प्रकृतन्यायाप्रवृत्तिज्ञापनद्वारैवेति सङ्गमनीयम्, इति प्राञ्चः, तच्च सति न्यायानित्यत्वस्य फलान्तरोपयोगे समादरणीयम्, अन्यथा बाहुलकस्य सर्वोपाधिव्यभिचारार्थत्ववत् न्यायबाधनेऽपि क्षम-त्वान्न न्यायेऽविश्वासः समाश्रयणीय इति युक्तं प्रतिभाति । लक्षणैक-चक्षुर्भिश्च स्वमतिवैभवेन किमपि निश्चेतुमशक्यमिति ॥ ५५ ॥

## *यावत् संभवस्तावद् विधिः* ॥ ५६ ॥

सि०—यावदिति तावदिति च क्रियाविशेषणे, तथा च यावद्वारं विधेः प्रवृत्तिः सम्भाव्यते, न केनचिन्निमित्तेन विहन्यते, तावत् प्रवृत्तिर्भवति । सकृत् प्रवृत्त्या कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तेरप्रयोजनत्वात् सत्यपि सम्भवे प्रवृत्तिर्न स्यादित्ययं

तद्व्यापकः, सति च केनचिन्निमित्तेन व्याघाते पुनः प्रवृत्तिप्रतिषेधकश्चायं न्यायः। अस्य च ज्ञापकं "य्वृत् सकृत्" [ ४. १. १०२. ] इति सूत्रम्, तद्धि "व्येंग् संवरणे" इत्यस्य "आत् सन्ध्यक्षरस्य" [ ४. २. १. ] इति कृतात्वस्य क्ये 'संवीयते' इत्यादावेकवारं "यजादि-वचेः किति" [ ४. १. ७९. ] इति सूत्रेण 'या' इत्यस्य य्वृति 'वि' इति जाते पुनः *एकदेशविकृत० *न्यायेन तस्य यजादित्वमाश्रित्य "यजादि०" [ ४. १. ७९ ] इत्यनेन प्राप्तय्वृन्निषेधाय क्रियते। यदि चायं न्यायो न स्यात् तदा सकृत् सूत्रं प्रवृत्तमिति कृत्वोक्तरीत्या पुनः प्रवृत्तेरव्याहतत्वेन सम्भवेऽपि पूर्वप्रवृत्त्यैव शास्त्रार्थस्य कृतत्वात् पुनः प्रवृत्तिर्न स्यादेवेति व्यर्थमेव तत् सूत्रम्। तथा च क्रियमाणमिदं सूत्रं प्रकृतन्यायसद्भावं गमयति। ज्ञापिते च न्याये पुनरपि 'य्वृत्' स्यात्, तद्वारणार्थं सूत्रं सार्थकम्। फलं चान्यत्र सूत्रन्यायानां यावत् संभवं प्रवृत्तिः। तथा च 'त्वक्' इत्यादौ "अदीर्घात्०" [ १.३.३२. ] इति कस्य विरामनिमित्तके द्वित्वे कृते पुनरप्येकव्यञ्जनपरत्वनिमित्तके च द्वित्वे कृते ककारत्रययुतं रूपं भवति, तत्र च मध्यमस्य कस्य "धुटो धुटि स्वे वा" [ १. ३. ४८. ] इति लोपे पुनराद्यकस्यैकव्यञ्जनपरत्वनिमित्तकं द्वित्वप्राप्तमपि न भवति, एवं सत्यनवस्थाप्रसङ्गेन क्रियानुपरमप्रसङ्गात् प्रयोगस्य परिनिष्ठितत्वं न स्यादिति व्याघातात्, किञ्च *यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते* इति न्यायेन निरर्थकविधेः प्रवृत्तेर्निषिद्धत्वान्न भवति। तथा चेतुमिच्छतीत्यर्थे चिकीषतीत्यत्र परत्वाद् द्वित्वात् पूर्वमेव "स्वर-हन्-गमोः सनि धुटि" [ ४. १. १०४. ] इति दीर्घे ततो द्वित्वादौ क्यादेशे कृते पुनः केर्दीर्घो भवति। न्याये यावत्संभवं प्रवृत्तिर्यथा–ब्रूगः कृतवोचादेशस्य प्रण्यवोचतेत्यादौ णत्वार्थं *भूतपूर्वकस्तदुपचारः* इति न्यायस्य द्विवारं प्रवृत्तिः, तत्र प्रथमप्रवृत्त्या वोचादेशस्य वचत्वोपचारः, द्वितीयप्रवृत्त्या च वचादेशस्य ब्रूत्वोपचारः, तस्मिंश्च सति "अकखादि०" [ २. ३. ८०. ] इत्यनेन नेर्नो णो भवति, न्यायस्य प्रथमप्रवृत्त्या तु न कार्यसिद्धिः, तेन वोचरूपलाभेऽपि तस्य [ आदेशरूपस्य ] धातुष्वपठितत्वात्, "अकखादि०" [ २. ३. ८०. ] इति सूत्रे च धातुपाठपठितस्यैव धातोर्ग्रहणात्। इत्थं च न्यायस्यापि यथासम्भवं प्रवृत्तिरावश्यकीति साऽनेन न्यायेन सिद्धा भवति। अस्य च न्यायस्य सम्भवमूलकत्वेन यत्रासंभवो व्याघातादिर्वा तत्र स्वत एवाप्रवृत्तेरनित्यत्वाश्रयणस्य नावश्यकतेति तच्चिन्ता न क्रियते ॥ ५६ ॥

*यावत् सम्भवस्तावद् विधिः* ॥ ५६ ॥

त०—'त्वक्' इत्यादौ द्विधा ककारस्य द्वित्वार्थमयं न्यायः समाश्रीयते। स्वीकृतश्चायमाचार्यैरपि, तथाहि–"य्वृत् सकृत्" [ ४. २. १०२. ] इति सूत्रे बृहद्वृत्तौ–"*यावत् सम्भवस्तावद् विधिः* इति न्यायात् पुनः प्राप्तं प्रतिषिध्यते" इत्युक्तम्। तत्र यद्यपि सिद्धतयैवायं न्यायः समुपलब्धस्तथापि ज्ञापकान्तरानुपलब्धेस्तदेव सूत्रमिह ज्ञापकमिति मन्तव्यम्। केचित् तु–'एकस्यां व्यक्तावेकं लक्षणं सकृदेव प्रवर्त्तते' इत्येकस्यां व्यक्तौ ककाररूपे एकं लक्षणम् "अदीर्घाद् विरामैकव्यञ्जने" [ १. ३. ३२. ] इति सकृदेव प्रवर्त्तिष्यत इति पुनर्द्वित्वं नोचितमित्याहुः, तन्न–पूर्वं विरामनिमित्तकं द्वित्वं भवति पश्चाच्चैकव्यञ्जननिमित्तकमित्युद्देश्यस्याभेदेऽपि निमित्तस्य स्फुटं भेदात्, एतेन चानन्त्यापत्त्यनवस्थापत्त्यादिदोषोऽपि निरस्तः ॥ ५६ ॥

## *सम्भवे व्यभिचारे च विशेषणमर्थवत्* ॥ ५७ ॥

सि०—संभवः-विशेषणस्य विशेष्यसम्बन्धयोग्यता, व्यभिचारः-विशेष्यस्य तेन विशेषणेन विनाऽप्युपलभ्यमानत्वम्, तयोः सतोरेव विशेषणस्य सार्थक्यं नान्यथेति तयोरुभयोरेकस्याप्यभावे विशेषणप्रयोगो नोचित इति न्यायतात्पर्यम्। *यं विधिं प्रत्युपदेशोऽनर्थकः०* इति न्यायस्यायं प्रपञ्च इति प्राञ्चः, तत्तु–आनर्थक्यांशमात्रमादायेत्यर्थपरतया नेयम्, अन्यथा विधेयविषयस्य तस्य वाक्यार्थविषयस्य चास्य नैकविषयत्वम्। यच्च तैः स्वकथने हेतुरुक्तः–"अनेनापि व्यर्थविशेषणविधेरेव निषेध्यमानत्वात्" इति, सोऽपि किञ्चित्करणमात्रं विधिरिति मत्वैवेति प्रतीयते, अज्ञातज्ञापनं विधिरिति सिद्धान्ते च विशेषणत्वविवक्षाया विधित्वाभाव एव। अयं च न्याय औचित्यमूलक एव। लोकेऽपि संभवव्यभिचारयोः सतोरेव विशेषणप्रयोगस्य दर्शनात्, नहि मनुष्ये चतुष्पादिति विशेषणं दीयतेऽसम्भवात्, नापि द्विपादित्यव्यभिचारात्। क्वचित् संभवमात्रेऽपि विशेषणं भवति, यथा–'आपो द्रव्यमिति, तत्र यद्यपि वस्तुगत्याऽपामेव विशेषणत्वमिति मते व्यभिचारोऽप्यस्त्येव, यदि च विशेष्यत्वमेव तस्य विवक्षितमित्याग्रहस्तर्हि संभवपदं सम्भवाभावव्यावृत्तिमात्रप्रयोजनमित्यास्थेयम्। तथा च संभवाभावे विशेषणं नार्थवदिति फलति। प्राञ्चस्तु "तौ मु-मो व्यञ्जने स्वौ" [ १. ३. १४. ] इति सूत्रे स्वाविति ग्रहणमस्य न्यायस्य संभावकमित्याहुः। तथाहि-तेषां ग्रन्थः–"तथाहि–स्वाविति विशेषणं तावद् द्विवचनेनानुस्वारस्यानुनासिकस्य च सम्बन्धितम्, तत्र चानुस्वारः कस्यापि स्वो न स्यादित्यतस्तस्यैतद् विशेषणमसंभवि, अनुनासिकस्तु स्वोऽप्यस्वोऽपि स्यादित्यतः संभवित्वाद् व्यभिचारित्वाच्चैतन्न्यायेन तस्यैवैतद् विशेषणं सार्थकम्। एवं च सति स्वाविति विशेषणमनुनासिकस्यैव निर्देष्टुं युक्तम्, तथापि

यद् द्विवचनेनोभयोरपि निर्दिष्टं तदुभयोः सम्बन्धनेऽप्येतन्न्यायात् स्वयमेवानुनासिकस्यैव सम्भन्त्स्यते इत्याशयैव" इति । अत्रेदमुच्यते-ज्ञापनं हि सर्वत्र स्वसार्थक्याय भवति, न च ज्ञापितेऽप्यस्मिन् न्याये स्वाविति द्विवचनस्य सार्थक्यं वक्तुं शक्यम्, द्वयोः सम्बन्धाभावात्, तथा च लौकिकव्यवहारौचित्यसिद्धोऽयं न्यायः, केवलमनुनासिकस्य विशेषणार्थमिहाऽऽश्रीयत इत्यास्थेयम् । अत एव "तौ मुमः०" [ १. ३. १४. ] इति सूत्रे बृहद्वृत्तौ–"स्वेत्यनुनासिकस्यैव विशेषणं नानुस्वारस्याऽसंभवात्" इति सिद्धवत्कृत्यैवायं न्याय आश्रितो न तु ज्ञापनमुक्तम् । अन्यत्रेदृशस्थले ज्ञापनं स्पष्टमेवोच्यते, तथा च ज्ञापकत्वासम्भवं विलोक्यैव तथा कृतमित्यवगम्यते । उदाहरणत्वेन चेदं सूत्रमुदाहर्तुं शक्यते । तथाहि–अत्र पदान्ते इति विशेषणं मग्रहणेनैव सम्बन्ध्यते, तस्य स्वं तरसीत्यादौ पदान्तत्वं 'रंरम्यसे' इत्यादौ तदपदान्तत्वं चास्तीति सम्भव-व्यभिचारयोः सत्त्वात् । क्वचिच्च सम्भवमात्रेणाऽपि विशेषणत्वमित्युक्ततया "द्वे ब्रह्मणी वेदितव्ये" इत्यादौ ब्रह्मणो द्वित्वाव्यभिचारेऽपि द्वे इति विशेषणसार्थक्यमिति प्राञ्चः । वस्तुतस्तु तत्रोभयोरेव विदिक्रियाकर्मत्वबोधनाय तद्विशेषणमुचितमेव । न च ब्रह्मणी इति द्विवचनेनैव गतार्थं तदिति वाच्यम्, एतादृशस्थले द्विवचनस्यानुवादकत्वस्वीकारात् । तथा च नायं न्यायव्यभिचार इति ॥ ५७ ॥

## ※संभवे व्यभिचारे च विशेषणमर्थवत्※ ॥ ५७ ॥

त०—संभवमूलके पूर्वन्याये विचारिते सत्ययमपि सम्भवमूलकतया स्मृतिपथमधिरूढ इति व्याख्यातः । अयं च न्याय औचित्यसिद्ध एवेत्युक्तं वृत्तौ, व्याकरणान्तरेऽपि तथैव स्वीक्रियते । ग्रन्थादौ चान्येषामपि काकाक्षिगोलकन्यायादीनामिहाश्रयणमित्यावेदितमेव । वृत्त्युदाहृतबृहद्वृत्तिग्रन्थव्याख्यानावसरे महान्यासे च तदभिप्राय इत्थमावेदितः–"संभवे व्यभिचारे च विशेषणमर्थवद् भवति, क्वचिद् 'आपो द्रव्यम्' इतिवत् सम्भवमात्रेऽपि, न तु संभवाभावे । क्वचिदपि मोश्च संभवाभावात् पदान्त इति विशेषणाभावः, तच्छब्दस्य पूर्वपरामर्शित्वेऽपि सकार-लुकोः स्वत्वासम्भवात्, अनुनासिकस्य च संभवाद् द्विवचनोपादानात् तत्प्रतिबद्धानुस्वारस्य न" इति । अग्रेऽपि स्वशब्दप्रयोजनवर्णनप्रसङ्गेन–'रंरम्यते' इत्यादि– रेफोष्मणां [ रशषसहानां ] रेफोष्मव्यतिरेकेणान्ये स्वा न सन्ति स्थानास्यप्रयत्नैक्याभावात्, रेफोष्मणां चानुनासिकत्वाभावात् स्वग्रहणादनुस्वार एव, स्वग्रहणमन्तरेणानुनासिकमात्रविधानेऽत्रापि मकारस्य [ म ] एव वा णकारादिर्वा निमित्तप्रत्यासत्त्या पक्षेऽनुस्वारश्च प्रसज्येतेति स्व इत्येवानुनासिको विधीयते" इति । तथा चैतेन ग्रन्थेन प्रकृतन्यायस्यात्र प्रसिद्धरूपेणैवाश्रयणं, न तु ज्ञापितत्वरूपेणेति समायाति । स्वशब्दस्य ज्ञापकत्वासंभवश्च वृत्तौ स्पष्टीकृत एव । 'द्वे ब्रह्मणी वेदितव्ये' इत्यादौ न्यायस्य व्यभिचारप्रदर्शनमपि न युक्तम्, नहि ब्रह्मशब्दस्य सर्वदा द्वित्वविशिष्टवाचकत्वमेव, तत्र यदा द्वित्वविशिष्टस्य वेदनकर्मत्वं तदा द्विशब्दप्रयोगस्य विशेषणत्वमुचितमेव, 'ब्रह्म जानाति' इत्यादौ व्यभिचारस्य सत्वात् । यद्यपि ब्रह्मणी इति द्विवचनेन द्वित्वस्योक्तत्वाद् ※उक्तार्थानामप्रयोगः※ इति न्यायस्य प्रसराद् द्वे इति विशेषणं नोचितं तथापि तादृशस्थले समुच्चयस्य द्योतनाय तथाप्रयोग इति "अधि-परी अनर्थकौ" [ पा० सू० १. ४. ९४. ] इति सूत्रे भाष्ये स्पष्टम् । तथा च तत्र समुच्चयो वा वाच्यः, अनुवादकत्वं वा द्विवचनस्यास्थेयमिति ॥ ५७ ॥

## ※सर्वं वाक्यं सावधारणम्※ ॥ ५८ ॥

सि०—अवधारणं-निश्चयः । लोके स्याद्वादः समाश्रीयते सर्वस्याप्यनैकान्त्यात्, व्याकरणेऽपि "सिद्धिः स्याद्वादात्" [ १. १. २. ] इति सूत्रेण स्याद्वादो लक्ष्यसिद्धये स्वीकृत एव । परमसौ न सार्वत्रिकः, अन्यथा प्रयोगविधेरनाश्वस्तत्व-[ विकल्पाविकल्पनिर्णयाभाव ]प्रसङ्गादिति तस्य क्वाचित्कत्वद्योतनायैष न्याय आश्रीयते, तथा च यत् किञ्चिदिह वाक्यमुच्चार्यते, तत् सर्वं स्वकीयमर्थमवधारयत्येव–निश्चिनोत्येवेति न्यायार्थः । [ वस्तुतस्त्वत्राप्यपेक्षावैचित्र्यात् स्याद्वादो वर्तत एव ] । अत्र च ज्ञापिका तत्र तत्र सूत्रेषु विकल्पोक्तिरेव, अन्यथैतन्न्यायाभावे "ऋलृति ह्रस्वो वा" [ १. २. २. ] इत्यादौ वाग्रहणाभावेऽपि ह्रस्वः स्यादिति कथने स्याद्वादाश्रयणाद्ध्रस्वः स्याच्च न स्याच्चेति विकल्पफलस्य स्वतः सिद्धत्वेन तदुक्तिर्व्यर्थैव स्यात् । "विधि-निमन्त्रणा-ऽऽमन्त्रणा-ऽधीष्ट-संप्रश्न-प्रार्थने" [ ५. ४. २८. ] इति सूत्रेण कामचारेऽपि सप्तम्या विधानेन स्याद्वादाभावेऽपि ह्रस्वविधाने कामचारस्य बोद्धुं शक्यत्वाच्च । इत्थं च सति प्रकृतन्यायज्ञापने तस्य वाक्यस्य [ ह्रस्वः स्यादित्यस्य ] सावधारणत्वनिश्चये ह्रस्वः स्यादेवेत्यर्थे सति कामचारो न स्यादिति गुणादिविशिष्टः प्रयोगो दुर्लभः स्यादिति तदर्थं विकल्पविधानस्य स्वांशे चारितार्थ्यम् । फलं चान्यत्र "समानानां तेन दीर्घः" [ १. २. १. ] इत्यादौ दीर्घः स्यादेवेत्यवधारणाद् दीर्घविशिष्ट एव 'दण्डाग्रम्' इत्यादिप्रयोगः साधुर्न तु तद्रहित इति । वाक्यमिति चोपलक्षणं, क्वचित् पदस्याप्यवधारणपरत्वस्य लक्ष्यानुरोधात् स्वीकर्तुमावश्यकत्वात्, तथाहि–"लुगस्यादेत्यपदे" [ २. १. ११३. ] इत्यत्र 'अपदे' इति पदस्याप्यवधारणपरत्वे सति 'अपदे एव'इत्यर्थपरतयाऽपदादिस्थ एवादेति परे लुग्विधानाद् दण्डाग्रमित्यादौ "ऋृत्यन्तोऽसपे"

[१. १. २५.] इति वृत्त्यन्तस्य पदत्वनिषेधेनाग्रशब्दस्य पदत्वाभावादपदादिस्थत्वेऽप्यग्रशब्दाकारस्य तस्मिन् परे प्राप्तोऽपि लुग् न भवति, यतोऽग्रशब्दस्याऽत्रापदत्वेऽपि नियमतोऽपदत्वाभावात्, अपदे एवेत्यवधारणेन च यस्य न कदाचित् पदत्वसम्भावना तदादिस्थ एवादेति परतः सूत्रप्रवृत्तेः, इह चाग्रशब्दस्य वृत्तिस्थस्य वृत्त्यन्तत्वावस्थायां "वृत्त्यन्तोऽसषे" [१. १. २५.] इति वचनात् पदत्वाभावेऽपि 'दण्डस्याग्रे' इत्यादिप्रयोगे पदत्वस्याक्षतेः, ततश्च नास्त्यस्यापदादिस्थत्वमेवेति नात्र लुकः प्रवृत्तिरिति। सूत्रं तु यस्यादेतः कदापि पदत्वं न सम्भाव्यते तत्र चरितार्थं तत्रैव च प्रवर्त्ततेऽपि; यथा-पचन्तीति, अत्र शवोऽकारस्यान्तिस्थेऽकारे परे लुक् भवति, स चाकारः सर्वदाऽपदादिस्थ एव न तु कदाचिदपि तस्य पदादिस्थत्वसम्भावना। पदविषयस्यावधारणस्य सूचकं च—'अपदे' इत्यवधारणरहितवचनमेव, दण्डाग्रमित्यादिसिद्धयेऽपद एवेत्यवधार्यं वचनस्यावश्यकत्वेऽपि तदवचनं प्रकृतन्यायस्योपलक्षणपरत्वसंभावनयैव। यत्र चैवकारादिरवधारणार्थः पठ्यते तत्र *द्विर्बद्धं सुबद्धं भवति* इति न्यायेन दोषाभावः, अन्यथा तद्वैयर्थ्यमापद्यते, विनाप्येवकारादिना प्रकृतन्यायेनावधारणार्थलाभात्। तथा च स न्यायः प्रकृतन्यायबाधक इति बोध्यम् ॥ ५८ ॥

***सर्वं वाक्यं सावधारणम्*** ॥ ५८ ॥

त०—"सिद्धिः स्याद्वादात् [१.१.२.] इति सूत्रेण सर्वस्यापि विधेरनैकान्तिकत्वे सत्यपि यदिह शास्त्रे तत्र तत्र विकल्पविधानं दृश्यते तेनैवायं न्यायो विज्ञाप्यत इत्युक्तं वृत्तौ। वस्तुतस्तु—स्याद्वादमुद्राविकलं किमपि वस्तु जगति नास्ति, यदाहुः—"आदीपमाव्योम समस्वभावं स्याद्वादमुद्रानतिभेदि वस्तु।" [कलिकालसर्वज्ञश्रीहेमचन्द्रसूरयः] इति। ननु स्याद्वादस्त्वनेकान्तवादः, तत्र कथङ्कारमवधारणार्थः सङ्गतिमङ्गतीति चेत्? उच्यते—तत्रापेक्षाभेदेनावधारणार्थस्याप्यन्तर्भावात्, अत एव स्याद्वादं श्रयन्त्यां सप्तभङ्ग्यां 'स्यादस्त्येव' इत्यादिषु भङ्गेषु ह्यवधारणार्थस्याप्याश्रयणात्, अयं भावः-अत्रानेकान्तद्योतकेन स्यात्पदेन योऽर्थोऽनेकान्तात्मको दर्शितस्तत्र येनापेक्षाविशेषेण नित्यत्वमनित्यत्वं वा दर्शितं तेनापेक्षाविशेषेण तत् तथैवेति प्रदर्शनायैवकारोपादानं, तया च स्याद्वादेऽपेक्षावैचित्र्यादनेकान्तताऽवधारणं च चारुतरमेवेति। "ऋ-लृति ह्रस्वो वा" [१. २. २.] इत्यादिषु विकल्पार्थं वाशब्दोपादानं च तत्र तत्रानेकान्तायातप्रवृत्त्यभावज्ञापनार्थम्।

अपेक्षावैचित्र्याश्रयणं च "सिद्धिः स्याद्वादात्" [१.१.२.] इति सूत्रस्य "एकस्यैव ह्रस्व-दीर्घादिविधयोऽनेककारकसन्निपातः सामानाधिकरण्यं विशेषणविशेषभावश्च स्याद्वादमन्तरेण नोपपद्यन्ते" इति या बृहद्वृत्तिः, तद्व्याख्यानावसरे शब्दमहार्णवन्यासे चारुतया दर्शितम्, स चायं ग्रन्थः—"एकस्यैवेति, तथाहि—यस्यैव वर्णस्य ह्रस्वत्वं विधीयते तस्यैव दीर्घत्वादिः, तस्य च सर्वात्मना नित्यत्वे पूर्वधर्मनिवृत्तिपूर्वकस्य ह्रस्वादिविधेरसम्भवः, एवमनित्यत्वेऽपि जननानन्तरमेव विनाशात् कस्य ह्रस्वादिविधिरिति सामान्यात्मना नित्यः, ह्रस्वादिधर्मात्मना चानित्य इति। तथा द्रव्याणां स्व-पराश्रयसमवेतक्रियानिर्वर्त्तकं सामर्थ्यं कारकम्, तच्च कर्त्रायनेकप्रकारमभिन्नस्याप्युपलभ्यते, यथा—'पीयमानं मधु मदयति, वृक्षमारुह्य ततः फलान्यवचिनोति, विषयेभ्यो बिभ्यदनात्मज्ञस्तेभ्य एवात्मानं प्रयच्छंस्तैरेव बन्धमाप्नोति' इत्यादि, तच्च कथमेकस्य सर्वथा नित्यत्वे एकरूपां वृत्तिमवलम्बमानस्यावस्थान्तराभिव्यक्तरूपोपलम्भाभावाद् घटते? इति साध्यसाधनरूपव्यवहारविलोपः; अनित्यत्वेऽपि न घटते, तथाहि—स्वातन्त्र्यं कर्तृत्वम्, तच्च

"इदं फलमियं क्रिया, करणमेतदेष क्रमो
व्ययोऽयमनुषङ्गजं फलमिदं दशेयं मम।
अयं सुहृदयं द्विषन् प्रकृतदेशकालाविमा-
विति प्रतिवितर्कयन् प्रयतते बुधो नेतरः" ॥

इत्येवमात्मकपरिदृष्टसामर्थ्यं कारकचक्रप्रयोक्तृत्वलक्षणम्, तदपि नानित्यस्य क्षणमात्रावस्थायित्वेनोपजननानन्तरमेव विनष्टस्य युज्यते, किं पुनः कारकसन्निपातः?, इति नित्यानित्यः स्याद्वादोऽङ्गीकर्तव्यः। तथा तमन्तरेण सामानाधिकरण्यं विशेषणविशेष्यभावोऽपि नोपपद्यते। तथाहि—भिन्नप्रवृत्तिनिमित्तयोरेकत्र वृत्तिः सामानाधिकरण्यम्, तयोश्चात्यन्तभेदे घट-पटयोरिव नैकत्र वृत्तिः, नात्यन्ताभेदे भेदनिबन्धनत्वात् तस्य, नहि भवति—नीलं नीलमिति। किञ्च नीलशब्दादेव तदर्थप्रतिपत्तावुत्पलशब्दानर्थक्यप्रसङ्गः; तथैकं वस्तु सदेवेति नियम्यमाने विशेषण-विशेष्यभावाभावः, विशेषणाद् विशेष्यं क्वचिदर्थान्तरभूतमभ्युपगन्तव्यम्, अस्तित्वं चेह विशेषणम्, तस्य विशेष्यं वस्तु तदेव वा स्यादन्यदेव वा? न तावत् तदेव—नहि तदेव तस्य विशेष्यं भवितुमर्हति, असति च विशेष्ये विशेषणत्वमपि न स्यात्, विशेष्यं विशेष्यते येन तद् विशेषणमिति व्युत्पत्तेः; अथान्यत् तर्हि, अन्यत्वाविशेषात् सर्वं सर्वस्य विशेषणम्; समवायात् प्रतिनियतो विशेषण-विशेष्यभाव इति चेत्? न—सोऽप्यविष्वग्भावलक्षण एवैष्टव्यो रूपान्तरपरिकल्पनायामनवस्थाप्रसङ्गः; न चासावत्यन्तभेदेऽभेदे वा सम्भवतीति भेदाभेदलक्षणः स्याद्वादोऽकामेनाप्यभ्युपगन्तव्यः" इति ॥ ५८ ॥

***परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति*** ॥ ५९ ॥

सि०—विनाऽवधारणवाचकपदमवधारणार्थस्य पूर्वन्यायेन

साधितत्वात् समानविषयोऽयं न्यायः स्मृतिपथमधिरूढः। परस्य शब्दस्यार्थे प्रयुज्यमानः शब्दस्तत्र स्वार्थप्रतिपादनासमर्थः सादृश्यमूलकसम्बन्धसाहाय्येन तत्सदृशार्थवाचक इति वतमन्तरेण–वतिप्रत्ययं विनाऽपि, वदर्थं–सादृश्यं, गमयति–बोधयतीति न्यायार्थः। अयमपि न्यायो लोकसिद्ध एव, तथाहि–'अग्निर्माणवकः' इत्यादौ माणवके प्रयुज्यमानोऽग्निशब्दः स्वार्थेऽसम्भवन् माणवकेऽग्निसादृश्यं लक्षणया प्रतिपादयति, तथा च तादृशस्थले शब्दार्थस्य बाधाल्लक्ष्यार्थप्रतीतिरेव। अत्र च विषये "वान्यतः पुमांष्टादौ स्वरे" [१. ४. ६१.] इति सूत्रे पुमानिति निर्देश एव मानम्, तथाहि–तत्र क्लीबे प्रयुज्यमानः पुंशब्दः स्वार्थेऽसम्भवन् वदर्थं सादृश्यं बोधयतीति पुंवदित्यर्थो गृह्यते, स चैतन्न्यायस्य स्वीकारसूचक एव। कृतश्च प्रकृतन्यायसमाश्रयोऽत्र सूत्रे बृहन्न्यासे इति विवरणे प्रतिपादयिष्यते। तथा च पुमानिति पदस्य पुंवदित्यर्थपरत्वात् तत्कार्यभाक्त्वरूपस्य सादृश्यस्य ग्रहणाच्च 'मृदवे कुलाय' इत्यादौ मृदुशब्दस्य पुंवद्भवनान्नपुंसकत्वनिमित्तः "अनामस्वरे०" [१. ४. ६४.] इति नागमो नाभूत्। अयं च न्यायो यत्र वत्करणं न क्रियते गम्यते च वत्यर्थस्तत्र तस्य समर्थनरूप एव, न तु किञ्चिन्नूतनं विधत्ते। तथा च यत्र स्पष्टप्रतिपत्तये वत्करणं तत्र न तस्य वैयर्थ्यमिति न तेनास्य न्यायस्यानित्यत्वं बोध्यम्। तथा च "परतः स्त्रीपुंवत् स्त्र्येकार्थेऽनूङ्" [३. ३. ४९.] इति सूत्रे न दोषः। यत् तु तत्र वद्ग्रहणेन क्वचिदस्योपरतिरिति प्राचीनैरुक्तं तदपि प्रकृताभिप्रायकमेव। अयमाशयः–क्वचित् प्रयोजनवशाद् रूढेर्वा लक्षणया प्रयोगश्चेत् सर्वत्र लक्षणयैव प्रयोक्तव्यमिति नाग्रहः कर्तुं शक्यते, इति यदि क्वचिद्वतमन्तरेणापि वदर्थप्रतीतिस्तेन सर्वत्र तदप्रयोगस्य न नियमः कर्तुं शक्यते इति तादृशनियामकत्वे न्यायस्य तात्पर्याभावात् क्वचित् कृतमपि वद्ग्रहणमुचितमेव, न व्यर्थमिति न तन्न्यायोपरतिज्ञापनायालमिति ॥ ५९ ॥

## *परार्थे प्रयुज्यमानः शब्दो वतमन्तरेणापि वदर्थं गमयति* ॥ ५९ ॥

त०–न्यायोऽयं सिद्धवत्कृत्य "वाऽन्यतः पुमांष्टादौ स्वरे" [१. ४. ६२.] इति सूत्रे बृहन्न्यासे समुपात्तः। इत्थं च तदुत्थानम्–"इह द्विधा लिङ्गव्यवस्था, केषांचित् स्वत एव लिङ्गम्, यथा–दधि-मध्वादिजातिशब्दानाम्, केषांचिदन्यतो–विशेष्यात्, यथा–गुण-क्रिया-द्रव्य-सम्बन्धिनां पट्वादिशब्दानाम्, ते हि विशेष्यलिङ्गमुपाददते न तेषां स्वतो व्यवस्थितं किञ्चिल्लिङ्गमस्ति, तथाहि–पटुः पुमान्, पट्वी स्त्री, पटु कुलम्, इति विशेष्यत एव लिङ्गं दृश्यते, न तु स्वत इत्यतः 'अन्यतः' इति गुण-क्रिया-द्रव्य-सम्बन्धनिमित्तप्रवृत्तिः शब्दोऽभिधीयत इति; अन्यतो नपुंसक इत्युच्यमानेऽपि नपुंसकोपादायिना शब्देन तदैव पुंस्त्वोपादानाभावः +++++ इति चेत्? न–परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणापि वत्यर्थं गमयत्येव, यथा–अब्रह्मदत्ते ब्रह्मदत्त इति। अत्र हि निर्ज्ञाते झटिति ब्रह्मदत्ते पदार्थैकदेशभूता रूढसम्बन्धाः क्रिया-गुणास्तानुपलभ्यैव ब्रह्मदत्त इत्युच्यते, समुदायपदार्थवादिनो ह्यवयवेऽपि शब्दप्रवृत्तिरेवंभूतश्च निर्देश इति नोपपद्यते, नहि नपुंसकस्य केचिल्लिङ्गधर्माः स्वतः प्रसिद्धाः सन्तीति, अस्ति तु लोके भाविनो धर्मान् भूतवदुपादाय व्यपदेशः–एष ब्रह्मदत्त इति, लभतामयं प्रतिपद्यतामयं ब्रह्मदत्तधर्मानिति भूतवदुपादाय सोऽयमित्यभिसम्बन्धेन तच्छब्दप्रतिलम्भः, एवमिहापि भाविनो नागमाभावादीन् पुंलिङ्गधर्मानुपादाय वतिमन्तरेणापि नपुंसके तच्छब्दप्रवृत्तिरिति" इति। एवं चास्य न्यायस्य लोकन्यायसिद्धत्वमेवेति स्पष्टं प्रतिपद्यते। तथा चात्रत्यवतिनिर्देशाभावस्तन्न्यायोदाहरणभूतस्तस्येहाश्रयणे प्रमाणभूत एवेति गम्यते ॥ ५९ ॥

## *द्वौ नञौ प्रकृतमर्थं गमयतः* ॥ ६० ॥

सि०–शब्दसामर्थ्यविशेषनिर्णायकन्यायव्याख्याप्रसङ्गेनायमपि न्यायस्तद्विषयतया स्मृतिपथमधिरूढः। 'नञ्'शब्दश्चात्र निषेधार्थपरः, तथा च द्वौ निषेधौ, प्रकृतमर्थं–पूर्वनञर्थप्रतियोगिनमर्थं, गमयतः–बोधयत इत्यर्थः, अभावाभावस्य प्रतियोगिरूपत्वमिति सकलविचारकसमुदायसम्मतमर्थमयं न्याय आह, ततश्च नास्य ज्ञापकापेक्षा। गृहीतश्चायं न्यायः स्वशास्त्रेऽपीति "नेनृसिद्धस्थे" ३. २. २९. इति सूत्रे नञ्ग्रहणेन प्रतीयते, तथाहि–"न नाम्येकस्वरात्०" [३. २. ९.] इति सूत्रान्नञनुवर्तमानो विभक्तिलुपोऽभावं बोधयति, अत्र च ["नेनृसिद्ध०" ३. २. २९. इति सूत्रे] यदि नञा द्विरुक्तेन प्रकृतनञर्थ एव दृढीक्रियेत तर्हि तस्य ग्रहणं व्यर्थमेव, न ह्येकवारं कथितस्यार्थस्यादृढत्वमिति क्वापि निश्चितम्। तथा च निषेधस्यायं निषेध इति प्रतीतौ लुपो विधानमित्यायाति, तदेव चाचार्यस्याभीष्टम्। अन्यत्र यद्यपि पुनरुच्यमानोऽर्थो *द्विर्बद्धं सुबद्धं भवति* इति न्यायेन पूर्वपदार्थमेव द्रढयति, तथापि नञो निषेधबोधकत्वेन पूर्वस्य निषेधस्य निषेधे पूर्वनिषेध्यस्योत्थानं भवति, ततश्च यद्यपि निषेधस्य स्वरूपेण कथनमेव युज्यते, तथापि भङ्ग्यन्तरेण प्रतिपादनात् तत्र दार्ढ्यमायाति। अत्र द्वाविति समसंख्योपलक्षणमिति चतुःषडादिनञामपि प्रकृतार्थ[प्रतियोगिरूप]दार्ढ्यबोधकत्वम्, विषमसंख्यास्तु नञर्थमेव दृढीकरिष्यन्ति। अयं च स्वभावतो यत्र निषेधद्वयस्य प्रयोगस्तत्रैव प्रकृतार्थदार्ढ्यबोधकः, यत्र च

सम्भ्रमादिना द्विश्चतुर्वा प्रयोगस्तत्र च नोपतिष्ठते, यथा-भुञ्जानोऽधिकग्रहणाय प्रेरितो न नेति सम्भ्रमादनेकवारं ब्रूते तत्र, यथा वाऽन्येनैवकारादिना सम्बद्धो नञ्, नैव च नैव चेत्यादौ, एतादृशस्थलेषु हि नञर्थनिषेधस्यैव दार्ढ्यं भवति ॥ ६० ॥

***द्वौ नञौ प्रकृतमर्थं गमयतः* ॥ ६० ॥**

त०—लोके शब्दाभ्यासेऽर्थस्य भूयस्त्वं [दार्ढ्यं] प्रतीयते, यथा-'अहो दर्शनीया अहो दर्शनीया' इत्यादौ, तथा नञ्द्वयसत्त्वेऽपि नञर्थस्यैवाधिक्यं स्यादिति तदपनयनाय न्यायोऽयमाश्रीयते। अयं च नञः पूर्वोद्दिष्टप्रतिषेधवाचकत्वस्वाभाव्यादेव लभ्यत इति न ज्ञापकसाध्य इत्यावेदितं वृत्तौ, वस्तुतस्तु नायं न्यायः किन्तु शब्दशक्तिस्वभावपरिचयवाक्यमात्रम्, अत एव प्रकृतन्यायार्थानुकूलं व्यवहरद्भिरप्यन्यैर्न न्यायत्वेनायमादृत इति न्यायसंग्रहेऽस्य समावेशो नावश्यकः । पूर्वैः संगृहीतत्वाचास्माभिरपि स्थापित इत्यवधेयम् ॥ ६० ॥

## *चकारो यस्मात् परस्तत्सजातीयमेव समुच्चिनोति* ॥ ६१ ॥

सि०—समुच्चया-ऽन्वाचयेतरेतरयोग-समाहाराश्चत्वारश्चार्थाः। "तत्रैकमर्थं प्रति द्व्यादीनां क्रिया-कारक-द्रव्य-गुणानां तुल्यबलानामविरोधिनामनियतक्रमयौगपद्यानामात्मरूपभेदेन चीयमानता समुच्चयः" इति "चार्थे द्वन्द्वः०" [ ३. १. ११७. ] इति सूत्रे बृहद्वृत्तिः । "एकस्मिन् कारकेऽनेकक्रियाणाम्, एकस्यां क्रियायामनेककारकाणाम्, एकस्मिन् द्रव्येऽनेककारकाणाम्, एकस्मिन् कारकेऽनेकद्रव्याणाम्, एकस्मिन् धर्मिण्यनेकधर्मिणां ढौकनं समुच्चयः" इति तदर्थमाह लघुन्यासकारः। इत्येवंरूपस्य समुच्चयस्य द्योतकश्चकारो यदव्यवहितपरत्वेनोच्चारितस्तत्सजातीयमेव समुच्चिनोति । अवश्यं स्वपरस्मिन् समुचेतव्ये विजातीयसमुच्चयोऽपि प्राप्तस्तद्वारणायायं न्यायः । एतन्न्यायमूलं तु साजात्यमेव, सजातीयानां सजातीयैः सह समुच्चयस्य लोके दृष्टत्वात्। तत्रोपसर्गेणोपसर्गस्य समुच्चयो यथा-"प्रतेश्च वधे" [ ४. ४. ९४. ] इत्यत्र १, प्रकृत्या प्रकृतेः समुच्चयो यथा-"एतदश्च व्यञ्जनेऽनग्नञ्समासे" [ १. ३. ४६. ] इत्यत्र २, प्रत्ययेन प्रत्ययस्य यथा-"अर्णौ च" [ १. ४. ३९. ] इत्यत्र ३, आदेशेनादेशस्य समुच्चयो यथा-"आ च हौ" [ ४. २. १०१. ] इत्यत्र ४, आगमेनागमस्य यथा-"अश्च लौल्ये" [ ४. ३. ११५. ] ५, अर्थेनार्थस्य यथा-"अतिरतिक्रमे च" [ ३. १. ४५. ] इत्यत्र ६, वाक्यार्थेन वाक्यार्थस्य यथा-"तस्य व्याख्याने च ग्रन्थात्" [ ६. ३. १४२. ] इत्यत्र च ७ । एषु च प्रथमे प्रतिशब्दात् पश्चादुपात्तश्चकारस्तत्सजातीयं पूर्वानुवृत्तम् 'उपात्' इत्युपसर्गवाचकपदमेव समुच्चिनोति, नान्यानर्थादीन् निमित्तान् । द्वितीये च एतच्छब्दात् परतः स्थितश्चकारस्तत्सजातीयपूर्वानुवृत्तं 'तदः' इति प्रकृतिमेव समुच्चिनोति, नान्यत् । तृतीये च ङाविति प्रत्ययात् परतः स्थितश्चकारो घुटीति प्रत्ययवाचकमेव पदं समुच्चिनोति । चतुर्थे च "आ च हौ" [ ४. २. १०१. ] इत्यादेशादाकारात् परतः समुच्चारितश्चकारः "इर्दरिद्रः" [ ४. २. ९८. ] इति सूत्रादनुवृत्तमिरिति स्वसजातीयमादेशमेव समुच्चिनोति । पञ्चमे अकार आगमः स्वसजातीयं स्सागममेव समुच्चिनोति । षष्ठेऽतिक्रमरूपार्थस्य परतः स्थितश्चकारः "सुः पूजायाम्" [ ३. १. ४४. ] इति पूर्वसूत्रस्थितं पूजायामिति पदबोध्यं पूजार्थमेव समुच्चिनोति । सप्तमे च 'तस्य व्याख्याने' इति वाक्यार्थपरत्वतात्पर्येणोच्चारितश्चकारः पूर्वाधिकृतं 'तत्र भवे' इति वाक्यार्थरूपमर्थमेव समुच्चिनोति, यद्यप्यर्थ-वाक्यार्थयोरर्थत्वेन साजात्यं समानमेव तथापि पदार्थत्ववाक्यार्थत्वकृतोऽवान्तरभेदः सुप्रसिद्ध इति पृथगुदाहरणस्यमर्हत्येव। अन्ये चात्र न्याये ज्ञापकमपि समुदाहरन्ति, तथा च तत्र तत्र पूर्वोक्तेषु स्थलेषु विजातीयसमुच्चयव्यावर्त्तनाय यत्नाकरणमेव तन्मते प्रकृतन्यायज्ञापकम्, परं तु तादृशस्य ज्ञापकत्वस्य पूर्वैरनादृतत्वान्न स्वीकरणमुचितमिति नोल्लिखितम् । यश्चानुकर्षणार्थश्चकारस्तद्विषये नायं नियमः, स च विजातीयमप्यनुकर्षत्येव ॥ ६१ ॥

***चकारो यस्मात् परस्तत्सजातीयमेव समुच्चिनोति* ॥ ६१ ॥**

त०—समुच्चयस्य लक्षणं बृहद्वृत्त्यनुसारं वृत्तौ प्रतिपादितमेव, तेन च लक्षणेन यद्यपि स्वजातीयेन सहैव समुच्चयः [ समुच्चये स्वसजातीयस्यैव संग्रहः ] इति नायाति, तथापि यत्र सजातीय-विजातीययोरुभयोः समुच्चयः प्राप्तस्तत्र सजातीयस्यैव समुच्चयः समुचित इत्येतावदेव प्रकृतन्यायतात्पर्यम्। कैयटेन च-"यदा परस्परनिरपेक्षाः पदार्थाः क्रियायां समुच्चीयन्ते तदा समुच्चयार्थः, स च चकारं विनापि प्रतीयते, यथा—

"अहरहर्नयमानो गामश्वं पुरुषं पशुम्।
वैवस्वतो न तृप्यति सुराया इव दुर्मदी ॥"

अत्र दुःखेन यो मायति स यथा सुराया न तृप्यति तथा यमो गवादीन् नयमानो न तृप्यतीत्यर्थः । तत्र नयनक्रियायां गवादीनां समुच्चयः प्रतीयते, स च चं विनापि, तथा च चं विनाऽपि तदर्थो गम्यते इति प्रसिद्धिः । समुच्चये च सत्यपि न तत्र सर्वेषां साजात्यमस्ति, तथा चकारप्रयोगेऽपि न साजात्य-

मवश्यमपेक्ष्यते, केवलं विजातीयापेक्षया सजातीयसमुच्चयस्य प्रावल्यमिति लोकव्यवहारतोऽवसीयते, तद्व्यवहारसिद्धमर्थमेवायं न्याय आहेति नापूर्वः ॥ ६१ ॥

## *चानुकृष्टं नानुवर्तते* ॥ ६२ ॥

सि०—स्थितस्य अनु-पश्चात्, कर्षणम्-अनुकर्षः, पूर्वसूत्रपठितस्य पदस्य वाक्यस्य वोत्तरसूत्रे सम्बन्धः। स च क्वचिदधिकाररूपेण भवति, तत्र चानुकर्षणार्थस्य चकारस्य नावश्यकता भवति, तत्र हि *अपेक्षातोऽधिकारः* इति न्यायेनैव कार्यं भवति। क्वचिच्चापेक्षाया अविवक्षितत्वाच्चकारस्तदर्थं पठ्यते, स च द्विविधः-विधेयघटितसूत्राव्यवहितसूत्रस्थः, तद्भिन्नसूत्रस्थश्च, तत्र द्वितीयप्रकारकचकारविषयेऽयं न्यायः। चकारेणानुकृष्टम्-चकारबलात् पूर्वसूत्रादुत्तरसूत्रे सम्बध्यमानं पदं वाक्यं वा, नानुवर्त्तते-न स्वाग्रिमसूत्रेषु सम्बध्यत इति न्यायार्थः। अत्र च ज्ञापकम्-"स्वञ्जश्च" [२. ३. ४५.] इति सूत्रे बृहद्वृत्तौ-"चकारः 'परोक्षायां त्वादेः' इत्यस्यानुकर्षणार्थः, ततश्चोत्तरत्राननुवृत्तिः" इति कथनमेव। तत्र चानुकृष्टस्य पदस्योत्तरत्राननुवर्त्तनं यथा-"ग-ड-द-बादेः०" [२. १. ७७.] इति सूत्रे 'स-ध्वोश्च' इति चेनानुकृष्टं 'पदान्ते' इति पदं "धागस्तथोश्च" [२. १. ७८.] इति तदुत्तरसूत्रे नानुवर्त्तते, तथा च तथयोरेव तत् सूत्रं प्रवर्त्ततेऽत्रत्यचकारेणानुकृष्टयोः स-ध्वोश्च, न तु पूर्वसूत्रे चकारेणानुकृष्टे पदान्ते। चानुकृष्टस्य वाक्यस्योत्तरत्राननुवृत्तिर्यथा-"सदोऽप्रतेः परोक्षायां त्वादेः" [२. ३. ४४.] इति सूत्रस्थं 'परोक्षायां त्वादेः' इति वाक्यं "स्वञ्जश्च" [२. ३. ४५.] इति सूत्रे चकारेणानुकृष्टं तदुत्तरपठिते "परि-नि-वेः सेवः" [२. ३. ४६.] इति सूत्रे नानुवर्त्तते, तेन च स्वञ्जेः परोक्षायां 'परिषस्वजे' इत्यत्रादेरेव षत्वं भवति, न तूभयोरेव, सेवेस्तूभयोरेव भवति-'परिषिषेवे' इति। अनुकर्षणार्थस्य चकारस्य विषय एवायं न्याय इति यत्र समुच्चयार्थश्चकारो भवति तत्समुच्चितं पदं वाक्यं वोत्तरत्राप्यनुवर्त्तत एव, यदि लक्ष्यसिद्ध्यै तदपेक्षा स्यात्, यथा "मो नो म्वोश्च" [२. १. ६७.] इत्यत्र 'पदान्ते' इत्यस्य समुच्चयार्थश्चकारः, तेन समुच्चितं च पदान्त इति पदं "स्रंस्-ध्वंस्-क्वस्सु०" [२. १. ६८.] इत्याद्युत्तरसूत्रेष्वनुवर्त्तत एव। अयं च न्यायोऽनित्यः, अत एव "मारण-तोषण०" [४. २. ३०.] इत्यत्र वृत्तौ-"चो 'णिचि च' इत्यस्यानुकर्षणार्थः" इत्युक्ततया चकारेणानुवृत्तमपि 'णिचि च' इति परत्र "चहणः शाठ्ये" [४. २. ३१.] इति सूत्रे ततोऽप्यग्रेऽनुवर्त्तत एव। यद्यपि लघुन्यासकारादिभिः प्रकृतन्यायविरोधसंभावनयाऽयं वृत्तिग्रन्थोऽन्यथा व्याख्यातः, तथाहि-तद्ग्रन्थः-"धात्वाकर्षणे पूर्वेण सिद्धे फलाभावात् प्रकृतेरपि [परतः] स्थितः प्रत्ययमाकर्षति। स्वरूपाख्यानमिदं, यावताऽधिकारायातमेव चकारेणानुमीयते, अन्यथा चानुकृष्टं नोत्तरत्रेति स्यात्" इति। तथापि प्रकृतन्यायस्यान्यैरपि क्वाचित्कत्वस्येष्टतया तेन वृत्तिकृद्वचनसङ्गतिसम्भवे तस्यान्यपरत्वाख्यानमयुक्तमेव। अन्येषामेतन्न्यायानित्यत्ववर्णनप्रकारश्च विवरणे स्पष्टीकृतः ॥ ६२ ॥

### *चानुकृष्टं नानुवर्तते* ॥ ६२ ॥

त०—चकारस्य द्वैविध्यमुक्तं वृत्तौ, तत्र द्वितीयचकारविषयेऽयं न्याय इत्यपि तत्रोक्तम्। स चायं नियम उदाहृतसूत्रेषु संगतः, यथा-"ग-ड-द-बादेः०" [२. १. ७७.] इति सूत्रं विधेयघटितमेव, न तु तदव्यवहितपरम्। तत्रस्थेन चकारेणानुकृष्टं 'पदान्ते' इति पदं "धागस्तथोश्च" [२. १. ७८] इत्युत्तरसूत्रे न याति। तथा वाक्यविषयोदाहृतसूत्रेष्वपि "स्वञ्जश्च" [२. ३. ४५] इति विधेय'ष्'घटितसूत्राद् बहुव्यवहितमेव। न चापेक्षातोऽधिकार इति न्यायेन चशब्दप्रतिपाद्यस्यार्थस्य सिद्धत्वान्नास्त्यनुवृत्त्यर्थेन चकारेण प्रयोजनमिति वाच्यम्, चकारेण स्पष्टप्रतिपत्तेः, अपेक्षायास्तु व्याख्यानाधीनत्वादिति। अत्र केचित्-अयं न्यायोऽनावश्यक इति "लुटि च क्लृपः" [पा० सू० १. ३. ९३] इति सूत्रस्थमहाभाष्यादप्यवसीयते, तत्र हि-"किमर्थश्चकारः? स्य-सनोरित्येतदनुकृष्यते यदि तर्हि नान्तरेण चकारमनुवृत्तिर्भवति, "द्युद्भ्यो लुङि" [पा० सू० १. ३. ९१.] इत्यत्रापि चकारः कर्तव्यो विभाषेत्यस्यानुकर्षणार्थम्। अथेदानीमन्तरेणापि चकारमनुवृत्तिर्भवति, इहापि नार्थश्चकारेण। एवं सर्वे चकाराः प्रत्याख्यायन्ते" इति ॥ ६२ ॥

## *चानुकृष्टेन न यथासंख्यम्* ॥ ६३ ॥

सि०—*यथासंख्यमनुदेशः समानाम्* इति न्यायेन समानां-समसंख्यानां मध्ये, यथागणनमुद्देशिभिः सहानुदेशिनां सम्बन्धः सूच्यते। तत्रोद्देशिनोऽनुदेशिनश्च द्विधा भवन्ति-केचित् साकल्येन सूत्रे निर्दिष्टाः केचिच्च सूत्रान्तरनिर्दिष्टा अपि चकारादिबलेन लभ्याः, तत्र ये चकारेणानुकृष्टतया लभ्यास्तेषामपि पूर्वोक्तन्यायेन संख्याक्रमानुरोधेनैव सम्बन्धे प्राप्ते तत्र नियमार्थमयं न्यायः। चानुकृष्टेन सह यथासंख्यं न भवति, चानुकृष्टोऽर्थो यथासंख्यान्वयानुपयोगीति फलितार्थः। एतन्न्यायमूलं च द्विरुच्चारणार्थस्य प्रयोग एव, तथा चोद्देश्यनुदेशिनोरुभयोरुच्चारणं भवति यत्र तत्रैव यथासंख्यमित्यर्थलाभ इत्यनुकृष्टेन यथासंख्याप्राप्तिरिति। केचित् त्वनिष्टस्य यथासंख्यस्य वारणार्थं यत्नाकरणमेव प्रकृतन्यायज्ञापकमित्याहुः, परन्त्वेवं ज्ञापनानौचित्यं पूर्वमुपपादितमेव।

न्यायं फलं तु "वौ व्यञ्जनादेः सन् चाय्वः" [४. ३. २५.] इति सूत्रे 'वौ' इत्यनेन उकारेकारयोरुपस्थापकेन पदेनोपस्थापितयोस्तयोः सना, चानुकृष्टेन क्त्वाप्रत्ययेन च यथासंख्याभावः। तथाहि–सूत्रार्थः 'तौ–उकारे इकारे वोपान्त्ये सति व्यञ्जनादेर्धातोः परौ सेटौ क्त्वा-सनौ प्रत्येकं किद्वद् वा स्याताम्, न तु य्वन्तात्' इति। तथा चात्र प्रकृतन्यायसहकारेणोकारेकाराभ्यां यथासंख्याभावे 'द्युतित्वा, द्योतित्वा; लिखित्वा, लेखित्वा; दिद्युतिषते, दिद्योतिषते; लिलिखिषति, लिलेखिषति;' इत्येवमुभयोरपि विषये उभयविधयोः [उकारोपान्त्येकारोपान्त्ययोः] सूत्रं प्रवर्त्तते। लघुन्यासरीत्या च "राष्ट्र-क्षत्रियात् स्वरूपाद् राजा-ऽपत्ये द्रिरञ्" [६. १. ११४.] इति सूत्रेऽपत्यग्रहणेन 'समुच्चीयमानेन न यथासंख्यम्' इति विज्ञायते, तथाहि–"शक्तार्हे कृत्याश्च" [५. ४. ३५.] इति सूत्रे "बहुवचनमिहोत्तरत्र च यथासंख्यनिवृत्त्यर्थम्" इति वृत्तिग्रन्थव्याख्यावसरे–"ननु समुच्चीयमानेन सह यथासंख्यस्य "राष्ट्र-क्षत्रिया०" [६. १. ११४.] इत्यत्रापत्यग्रहणेन निरस्तत्वाद् व्यर्थं बहुवचनम्, सत्यम्–ज्ञापकज्ञापिता विधयो ह्यनित्या इति न्यायज्ञापनार्थम्" इत्युक्तं तेन [लघुन्यासकारेण], तथा च तन्मते न्यायस्वरूपं *समुच्चीयमानेन न यथासंख्यम्* इति। तस्य चानित्यत्वं "शक्तार्हे कृत्याश्च" [५. ४. ३५.] इति सूत्रस्थबहुवचनेन विज्ञायते। न्यायज्ञापनं चापत्यग्रहणेनेत्थम्–"राष्ट्र-क्षत्रिया०" [६. १. ११४.] इति सूत्रे राजनि चेत्युक्तेऽपि चकारेणापत्यार्थस्य संग्रहे सिद्धे राष्ट्रवाचिभ्यो राजनि क्षत्रियवाचिभ्यश्चापत्येऽर्थे प्रत्ययविधानार्थं यथासंख्येनान्वयः स्यादिति 'अपत्ये' इति सूत्रे समुपात्तमिति विज्ञायते। तथा च चेन समुच्चीयमानेन सह यथासंख्यमनिष्टमाचार्यस्येति विज्ञायत इति। तथा च "शक्तार्हे कृत्याश्च" [५. ४. ३५.] इत्यत्र चकारेण समुच्चीयमानया सप्तम्या सह यथासंख्यं मा भूदित्येतदर्थं बहुवचनादरणं व्यर्थमेव स्यादिति न्यायानित्यत्वज्ञापनायैव तथावचनमाचार्याणामिति विज्ञायते, अन्यथा एकवचनोच्चारणेऽपि प्रकृतन्यायबलात् तत्र शक्तार्हाभ्यामर्थाभ्यां यथासंख्याभावः स्वभावसिद्ध एवेति किमर्थं बहुवचनोच्चारणरूपो यत्नः क्रियेत। न च कृत्यानां बहुत्वाद् बहुवचनमिति वाच्यम्, कृत्यत्वजातिविवक्षया एकवचनप्रयोगस्यैवौचित्यमित्याचार्याशयात्। दृश्यते चैकत्वेन प्रयोगः, यथा–"प्रैषा-ऽनुज्ञा-ऽवसरे कृत्य-पञ्चम्यौ" [५. ४. २९.] इति सूत्रे पञ्चम्या सहेतरेतरयोगे द्विवचनेन निर्देशः, अन्यथा तत्राऽपि बहुवचनमेव प्रयोक्तव्यं स्यात्। शक्तार्हाभ्यां यथासंख्यसम्बन्धसंभावनार्थं च कृत्यानामेकत्वेन विवक्षाया आवश्यकत्वमेव, अन्यथा तेषां बहुत्वेन सत्यप्येकवचनेन निर्देशे समसंख्याभावेन यथासंख्याप्राप्तिरेवेति तद्वारणाय बहुवचनाश्रयणस्य वैयर्थ्यापत्तेः। तथा च कृत्यानां बहुत्वेऽपि जातिविवक्षयैकवचनप्रयोगस्यैवौचित्ये बहुवचनप्रयोगः प्रकृतन्यायस्य क्वाचित्कत्वज्ञापनार्थ एवेति "राष्ट्र-क्षत्रियात्०" [६. १. ११४.] इति सूत्रेऽपत्यग्रहणं स्पष्टार्थमेव। न्यायस्य क्वाचित्कत्वेऽपि सर्वत्राप्रवृत्तिरेव नेति चकारेणापत्यार्थानुकर्षे कदाचिन्न्यायप्रवृत्त्या यथासंख्यं न स्यादिति संभावनयाऽपत्यग्रहणमिति पूर्वोक्त'दिश्'धात्वर्थबललभ्यत्वमेवास्य न्यायस्याङ्गीकर्त्तव्यमिति ॥ ६३ ॥

---

*चानुकृष्टेन न यथासंख्यम्* ॥ ६३ ॥

त०—अस्य न्यायस्य स्वमतानुसारिणी व्यवस्था वृत्तौ प्रदर्शिता, पाणिनीयतन्त्रेऽपि बहुधा प्रपञ्चितं विस्तारार्थिना तद्विलोक्यम् ॥ ६३ ॥

---

## *व्याख्यातो विशेषार्थप्रतिपत्तिः* ॥ ६४ ॥

सि०—व्याकरणप्रयोजनं हि सविशेषाणामर्थानां निश्चयः, तत्रासन्दिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे तत्र तत्राचार्यैः सन्दिग्धोच्चारणं कृतं, तत्र कस्तेषामाशय इति शिष्टपरम्परासमधिगततदीयव्याख्यानमन्तरा प्रतिपत्तुं न शक्यते इति व्याख्यानादेव निश्चयः कार्यो नान्यथेति बोधनार्थोऽयं न्यायः। विशेषार्थस्य–अन्यतरान्यतमाद्यर्थस्य, प्रतिपत्तिः–निश्चयः, व्याख्यातः–शिष्टकृतव्याख्यानादित्यर्थः। अत्र च ज्ञापकमाचार्यस्य सन्दिग्धोच्चारणमेव, तथाहि–"नेमा-ऽर्ध-प्रथम-चरम तया-ऽया-ऽल्प-कतिपयस्य वा" [१. ४. १०.] इति सूत्रे नामभिः सह पठितयोस्तयाऽ-ययोः प्रत्यययोरुच्चारणम्, तत्र साहचर्येण तयाऽययोः नाम्नोर्ग्रहणमुत *प्रत्ययाऽप्रत्यय*न्यायेन प्रत्यययोस्तयोर्ग्रहणमिति सन्देहः, स च व्याख्यानातिरिक्तनिमित्तेन नापनेतुं शक्यत इति तादृशमुच्चारणं सर्वत्र सन्देहेषु व्याख्यानमात्रनिवर्त्यत्वं ज्ञापयति। एतन्न्यायफलं तु करीषगन्धेरपत्यं वृद्धं स्त्रीत्यर्थे 'कारीषगन्ध्या' इत्यत्र "अणञेयेकण्-नञ्-स्नञ्-टिताम्" [२. ४. २०.] इत्यनेन ङीर्न भवति, किन्त्वदन्तत्वादाबेव भवति, अत्र हि "ङसोऽपत्ये" [६. १. २८.] इत्यणि "अनार्षे वृद्धे०" [२. ४. ७८.] इत्यनेनाणः ष्यादेशे "अणञेयेकण्-नञ्-स्नञ्-टिताम्" [२. ४. २०.] इत्यनेनाणन्तलक्षणो ङीः प्राप्तोऽपि न भवति, तत्र हि अणः स्वरूपेण ग्रहणमिति व्याख्यातम्, अत्र चाणः स्थाने ष्यादेशकरणादणः स्वरूपेणाभावः स्पष्ट एव, व्याख्यानादृते च तत्राणः स्वरूपेण ग्रहणमिति विज्ञातुम-

शक्यम् । व्याख्यानावलम्बनं च यद्यपि सर्वत्र कर्तुं शक्यते तथापि स्पष्टप्रतिपत्तये क्वचित् सूत्र एव विशेषः प्रतिपादितश्चेत् को दोषः । तथाहि—"सृजः श्राद्धे ञिक्यात्मने तथा" [ ३. ४. ८४. ] इत्यत्र श्राद्धशब्देन श्रद्धोपपन्नः कर्ता ग्राह्यः, "श्राद्धमद्यभुक्तमिकेनौ" [ ७. १. १६९. ] इत्यत्र श्राद्धमिति पितृदैवत्यं कर्म गृह्यते, तच्च व्याख्यानादेवेति तत्र प्रकृतन्यायाश्रयणं दृश्यते, किन्तु "शरदः श्राद्धे कर्मणि" [ ६. ३. ८१. ] इत्यत्र स्पष्टप्रतिपत्तये कर्मणीति पदं निविष्टमिति न दोषः; न चैतेन न्यायानित्यत्वं ज्ञापनीयम्, व्याख्यानं विना सर्वत्र विशेषार्थप्रतीतिरेवेति न्यायानाग्रहात् । तथा च कर्मणीति पितृदैवत्यस्य कर्मणोऽनायासेन बोधाय कृतमिति ॥ ६४ ॥

*व्याख्यातो विशेषार्थप्रतिपत्तिः* ॥ ६४ ॥

त०—सर्वथा स्वबुद्धिमाश्रित्यैव न प्रवर्तितव्यमपि तु गुरुपरम्पराप्राप्तव्याख्यानमाश्रयितव्यमिति स्वेच्छाप्रवृत्तिवारणाय शास्त्रकृद्भिः क्वचित् क्वचिद् ग्रन्थग्रन्थिः प्रयत्नादेव स्थापितः, यदाह श्रीहर्षः खण्डनखण्डखाद्यग्रन्थान्ते—

"ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया,
प्राज्ञंमन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुः श्लथीकृतदृढग्रन्थिः करोत्वादरा-
दद्वैतामृतसिन्धुसम्भवरसेष्वासञ्जनं सज्जनः ॥' १ ॥ इति,

तथा च व्याख्यानात् तन्निश्चयः कर्तव्य इति नाद्भुतं वस्तु, अपि त्वाचार्याणां शैल्येषा । तथा चायं न्यायोऽन्यैरपि वैयाकरणैर्ग्रन्थकृतां सन्दिग्धोच्चारणैरेवानुमीयते, न चानित्यत्वं तस्य स्वीक्रियते, तदावश्यकताभावस्य वृत्तौ प्रतिपादितत्वात् । किञ्चानित्यत्वज्ञापकं यदुक्तं "सृजः श्राद्धे" [ ३. ४. ८४. ] "श्राद्धं भुक्तम्" [ ७. १. ६९. ] इत्यनयोः श्राद्धशब्दस्यैकत्र श्रद्धावति परत्र पितृदैवत्ये कर्मणीति व्याख्यानात् "शरदः श्राद्धे कर्मणि" [ ६. ३. ८१. ] इत्यत्रापि व्याख्यानादेव सिद्धे कर्मणीति पदं, तदपि न युक्तम्—यतः "सृजः श्राद्धे" [ ३. ४. ८४. ] इत्यत्र "कर्तर्यनद्भ्यः शव्" [ ३. ४. ७१. ] इत्यतः कर्तरीत्यनुवर्तमानमेव श्रद्धावन्तं बोधयति योग्यत्वात्, "श्राद्धं भुक्तम्" [ ७. १. १६९. ] इत्यत्र च क्लीबत्वेन भुजिसाहचर्येण च पितृदैवत्यं कर्म विज्ञायते, न तु व्याख्यानमात्रापेक्षया, तथा चात्रापि स्वभावत एव तद्बोधाय कर्मणीत्युक्तमिति न तदेतन्न्यायानित्यत्वे ज्ञापकं भवितुमर्हतीति ॥ ६४ ॥



*यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते* ॥ ६५ ॥

सि०—यत्र-वाक्यबुद्ध्या प्रयुक्ते तदङ्गभूते पदसमुदाये, अन्यत्-अस्तिभिन्नं, क्रियापदं-साध्यत्वेनोपस्थापकं पदं, न श्रूयते-प्रयुज्यते, तत्र 'अस्तिः' इति क्रियापदस्यानुकरणं न, किन्तु धातुनिर्देशपरम्, ततश्च कालविशेषालाभादाह—भवन्तीपर इति—वर्तमानाप्रत्ययपर इत्यर्थः । इदं चोपलक्षणं यत्र यस्या विभक्तेः प्रयोग औचित्येन प्रतिभासमानः स्यात् तत्परत्वस्य । तथा च तत्र तत्रान्यविभक्तिपरस्याप्यस्तेः प्रयुज्यमानत्वं सिद्ध्यति । "सविशेषणमाख्यातं वाक्यम्" [ १. १. २६. ] इति वाक्यसंज्ञाविधायकसूत्रेणाख्यातस्यैव वाक्यत्वेन संकेतितत्वादाख्यातराहित्ये सति वाक्यत्वं न प्राप्तमिति तत्प्राप्तये न्यायोऽयमाख्याताध्याहारानुज्ञापकः । अत्र मूलमनुपपत्तिमूलकस्तर्क एव, तथाहि—*येन विना यदनुपपन्नं तेन तदाक्षिप्यते* इति न्यायेनाख्यातेन विनाऽनुपपद्यमानं वाक्यत्वमाख्यातपदमाक्षेप्स्यतीति तत्रान्याख्यातार्थानां सर्वत्रान्वयासम्भवादस्तेश्च सत्तार्थस्य सर्वत्र कारकेऽवश्यापेक्षणीयत्वात् तस्यैवाक्षेप इति । तत्रास्तेर्भवन्तीपरस्याक्षेपो यथा—'जम्बूद्वीपस्तत्र सप्त वर्षाणि' इति, अत्र वाक्यद्वयं, तत्र प्रथमेऽस्तीत्याक्षिप्यते, तत्र सप्त वर्षाणीत्यंशे सन्तीति । "शिर्घुट्" [ १. १. २८. ] "औदन्ताः स्वराः" [ १. १. ४. ] इत्यादौ 'भवति, भवन्ति'इत्यादिर्वर्तमानान्तः 'स्यात्, स्युः' इति सप्तम्यन्तो वाऽस्तिः प्रयुज्यते । क्वचित् पञ्चम्याशिषौ यथा—"देवो मुदे वो वृषभः परे च ।" इत्यत्र 'अस्तु' इति 'सन्तु'इति च, 'भूयाद्' 'भूयासुः'इति च वा । एवम्—'अवन्त्यां विक्रमनृपस्तस्य द्वापञ्चाशद् वीराः' इत्यत्र यथायोगं ह्यस्तन्यद्यतनी-परोक्षाणां प्रयोगः । 'अतः परं श्वो दर्शनम्' इत्यादौ श्वस्तन्याः, 'अद्य सायाह्ने विदुषां सम्मेलनम्' इत्यादौ च भविष्यन्त्याः प्रयोगः । क्रियातिपत्तिश्च क्रियातिपत्तेः प्रयोगं विना न प्रतीयत इति तस्याः साक्षादेव प्रयोग आवश्यकः, यथा—सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यदित्यादौ । एतन्न्यायसत्त्वादेव च "तदस्य पण्यम्" [ ६. ४. ५४. ] इत्यादिसूत्रेषु 'अस्ति' इति प्रयोगस्यावश्यकत्वेऽपि न कृतः । केचित्त्वेवं सूत्रनिर्देश एव प्रकृतन्यायज्ञापक इत्याहुः । अत्र चास्तीत्युपलक्षणम्, तेनान्यापि क्रिया यथौचित्यमध्याहर्तव्येति लभ्यते, यथा—'अर्हम्' इत्युक्ते 'प्रणिदध्महे' इति

क्रियाया योग्यतयाऽध्याहारः । केचित् त्वेतद्व्यायानित्यत्वेनान्यक्रियाध्याहारमाहुः, परं यथा 'भवन्ती'शब्दस्योपलक्षणपरतयाऽन्यविभक्तिविशिष्टक्रियाया अपि प्रयोगस्तयाऽस्तिशब्दस्याप्युपलक्षणपरत्वेनैव सिद्धौ न्याय[ औचित्य ]सिद्धस्यास्यानित्यत्वाश्रयणानौचित्यमेवेति विभावनीयम् ॥ ६५ ॥

इति न्यायसमुच्चयस्य द्वितीयोल्लासे, वाचकवतंसेन श्रीहेमहंसगणिमणिना समुच्चितानां पञ्चषष्टिमितानां न्यायानां, तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-सर्वतन्त्र-स्वतन्त्रश्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण 'व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्न'इति पदालङ्कृतेन विजयलावण्यसूरिणा विरचिता न्यायार्थसिन्धुनामा वृत्तिः ॥

## *यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयुज्यते* ॥ ६५ ॥

त०—यत्र क्रिया न प्रयुज्यते तत्र वाक्यत्वं न स्यात्, आख्यातस्यैव सविशेषणस्य वाक्यत्वोपवर्णनादिति क्रियाभावस्थलेऽपि क्रियापदमाक्षेप्तव्यं भवति, तत्रान्यासां क्रियाणां प्रकरणादिवशेनाध्याहारो भवति । अस्तिक्रिया तु सर्वत्रानध्याहृताऽपि वर्त्तत एव । एतच्च "तदस्यास्त्यस्मिन्निति मतुप्" [ पा० सू० ५. २. ९४. ] इति सूत्रस्थमहाभाष्यग्रन्थादप्यवसीयते, तथाहि—तत्रास्तिग्रहणस्य प्रयोजनवर्णनावसरे उक्तम्—"न सत्तां पदार्थो व्यभिचरतीति" । तस्यायमाशयः कैयटेन प्रकटितः—"यावद् बुद्ध्या पदार्थो न विषयीकृतस्तावत् पदस्य प्रयोगाभावः, तस्माद् बुद्धिसत्तासमाविष्टोऽर्थो विधि-निषेध-जननादिभिः सम्बध्यते—वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायत इति । अत्यन्तासतोऽपि बहिःशशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादि[ पद ]प्रयोगः । तस्माद् बुद्ध्यारूढोपचरिता [ बुद्ध्यारूढेषु पदार्थेषु उपचरिता—आरोपिता ] सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृ—प्रतिपत्तॄणां बहीरूपतयाऽवभासते । यदि वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात् तदा 'वृक्षः' इत्यतः सत्तावगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात्, नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाप्रसंगः, अङ्कुरो जायत इति च प्रयोगो न स्यात्, सतो जन्मविरोधात्, उपचारसत्तायां त्वेते दोषा नावतरन्ति, बुद्धिसत्तासमाविष्टस्य बहिःसत्त्वासत्त्वजननप्रतिपादनायास्ति नास्ति, जायते इति प्रयोगयोगात् ।" इति । अस्यायमाशयः—सर्वस्य पदार्थस्य बुद्ध्यारूढा सत्ता पदार्थान्तरसंबन्धाय स्वीकर्तव्या, यत्र च पदार्थान्तरसम्बन्धो न विवक्षितस्तत्र सैव सत्ता बहिरपि भासते इत्यास्थेयमिति "यत्र क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति गम्यते" इति "अनभिहिते" [ पा० सू० २. ३. १. ] इति सूत्रभाष्यादप्यवगम्यते, तत्र च 'गम्यते' इत्युक्त्या तस्यार्थस्य स्वाभाविकत्वं प्रतीयत इति न तत्र ज्ञापकापेक्षा । विभक्त्यन्तरपराया अस्तिक्रियायाः क्रियान्तरस्य वा यत्राक्षेपस्तत्र न स्वाभाविकत्वमपि तु प्रकरणादिबललभ्यमिति तेषामध्याहार एव, यथा—'प्रविश, पिण्डिम्' इत्यादौ । तथा चात्र न ज्ञापकापेक्षेति विज्ञेयम् ॥ ६५ ॥

इति न्यायसमुच्चयस्य सिन्धुकलिते द्वितीयोल्लासे, वाचकवतंसेन श्रीहेमहंसगणिमणिना समुच्चितानां पञ्चषष्टिमितानां न्यायानां, तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण 'व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्न'इति पदालङ्कृतेन विजयलावण्यसूरिणा विरचितं तरङ्गाभिधं विवरणम् ॥

क्वचित् प्राच्यः पन्थाः क्वचिदपि च नव्यो बुधपथः,
क्वचित् स्वातन्त्र्याध्वा क्वचिदपि च तेषां समुदयः ।
श्रितोऽस्मिन् शिष्याणां मतिविकसनार्थं शुभधिया,
बुधैर्बुद्धा तत्त्वं तदनुगतमर्प्यं श्रितजने ॥ १ ॥
सूरीन्द्रं हेमचन्द्रं कलिसकलविदं संस्मरामोऽभिरामं,
धीमन्तं हेमहंसं गणिमणिममलं तं कथं विस्मरामः ।
न्यायानामर्थसार्थं निजमतघटितं धारयन्तीं यदीयां,
मञ्जूषां प्राप्य जाता वयमिह प्रभवः साधु सिन्धौ तरङ्गे ॥२॥



## [ अथ न्यायसमुच्चये तृतीयोल्लासः ]

### अथ वाचकश्रीहेमहंसगणिवरेण समुच्चिता ये वचनविशेषा न्यायाकारास्ते व्याख्यायन्ते-

### *यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः* ॥ १ ॥

सि०—अस्य वचनस्याव्यापकत्वेन प्रकरणात् 'इटः' इति पदं सम्बध्यते । तथा च यदुपाधेः–यद्विशेषणविशिष्टस्य, विभाषा–विकल्पेनेड् विहितः, तदुपाधेः–तदुपाधिविशिष्टस्यैव "वेटोऽपतः" [ ४. ४. ६२. ] इतीट्प्रतिषेधो भवति। युक्तं चैतत्, यदा इड्निषेधसूत्रे विकल्पितेट एव इण्निषेधकार्ये ग्रहणं तदा यादृशस्य तस्येड्विकल्पो विहितस्तादृशस्यैव निषेधेन भाव्यम्, अन्यादृशस्योद्देश्यविशेषणतयाऽनुपस्थितत्वात्। तथा च नायमर्थोऽपूर्वः किन्तु सूत्रार्थमर्यादालभ्य एव । "आदितः" [ ४. ४. ७१. ] "नवा भावारम्भे" [ ४. ४. ७२. ] इति पृथक् सूत्रद्वयकरणाच्चायमर्थोऽनुमन्यते, तथाहि–तयोः सूत्रयोरेकत्र पाठेऽपि आदितां धातूनां भावारम्भार्थयोः क्तयोर्विकल्पेनेड्विधाने पारिशेष्यात् कर्तृ-कर्मादिविहितक्तयोः "वेटोऽपतः" [ ४. ४. ६२. ] इतीण्निषेधः सिध्यत्वेवेति विशिष्यादितामिण्निषेधविधानं व्यर्थमेव, किन्तु प्रकृतवचनानुसारं भावारम्भ एव वेट्त्वात् तत्रैव विहितयोः क्तयोरिण्निषेधः प्राप्नोति, तत्र च विकल्पेन विहित इत्यन्यत्रार्थे विहितयोः क्तयोरिण्निषेधो विशिष्य सूत्रं विना कर्तुमशक्य इति पृथक् सूत्रमिदमारब्धम्, तथा च प्रकृतवचनसत्ता तत्रानुमतेति गम्यते । स्वीकृते चास्मिन् न्याये "आदितः" [ ४. ४. ७१. ] "नवा भावारम्भे" "वेटोऽपतः" इति सूत्रयोः परस्परं विरोधोऽपि निवृत्तः । कथं विरोध आसीदिति चेत्? शृणु–"आदितो नवा भावारम्भे" इत्यनेनादितां धातूनां भावारम्भार्थे क्तयोरिड् विकल्पेन विधीयते "वेटोऽपतः" [ ४. ४. ६२. ] इत्यनेन च भावारम्भार्थकयोरेव क्तयोः स निषिध्यत इति । पृथग्योगकरणे तु कर्तृ-कर्मादिविहितयोः क्तयोरिण्निषेधः "आदितः" [ ४. ४. ६१. ]इत्यनेन सिद्धो भावारम्भयोस्तूत्तरेण विकल्प इति व्यवस्थास्वीकारादादिद्धातुविषये क्वचिदपि "वेटोऽपतः" [ ४. ४. ६२. ] इत्यस्यावकाशाभाव इति तदप्रवृत्त्यैव विरोधाभावः सिद्धो भवति । तदेवमेतन्न्यायमूलकविरोधाभावार्थो विहितः पृथग्योगः प्रकृतन्यायानुमोदकः। फलं चास्य "गम-हन-विद्लृ-विश-दृशो वा" [ ४. ४. ८३. ] इत्यनेन लृकारेतो विन्दतेरेव वेट्त्वात् तस्यैव "वेटोऽपतः" [ ४. ४. ७१. ] इतीण्निषेधो न तु ज्ञानार्थस्य 'विदक्' इत्यस्येति तस्य क्तयोः 'विदितः, विदितवान्' इत्येव, अन्यथा *नानुबन्धकृतमसारूप्यम्* इति न्यायेनानुबन्धभेदेऽपि धातो रूपे विशेषाभावात् सर्वेषां विदां वेट्त्वनिमित्तकः क्तयोरिण्निषेधो दुष्परिहरः स्यात् । एवं केश-लोम-विस्मयाद्यर्थस्य हृषेर्वेट्त्वेन तस्यैवेण्निषेध इति तुष्ट्यर्थस्य 'हृषितः, हृषितवान्' इत्येव रूपमिति ॥ १ ॥

### [ तृतीयोल्लासः ]

अथ वाचकश्रीहेमहंसगणिवरेण समुच्चिता ये वचनविशेषा न्यायाकारास्तेषां विवरणं क्रियते—

### *यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः* ॥ १ ॥

त०—नायं न्यायः किन्तु विशेषवचनमात्रं "वेटोऽपतः" [ ४. ४. ७१. ] इत्येतत्सूत्रमात्रविषयत्वात्, न्यायेन हि व्यापकेन भवितव्यम्, "वेटोऽपतः" [ ४. ४. ७१. ] इत्यनेन सामान्यतो विकल्पेटो धातोरिण्निषेधो विधीयते, तत्र धातोर्यत्र येनोपाधिना विशिष्टस्य विकल्प उक्तो भवेत् तदुपाधिविशिष्टस्यैव निषेधः, न तु सामान्यस्य धातोरिति नियमयत्ययम् । उपाधिश्च स्वरूपेऽनिविष्टो व्यावर्त्तको धर्मः, स चानुबन्धविकरणादिः, न तु निमित्तभूतः प्रत्ययादिर्वैयर्थ्यप्रसङ्गात् । एतच्च "यस्य विभाषा" [ पा० सू० ७. २. १५. ] इति सूत्रे महाभाष्येऽपि दृश्यते । तथाहि–तत्र शङ्कितम्–"यस्य विभाषाऽविदेः" [ वार्तिकम् ], यस्य विभाषाऽविदेरिति वक्तव्यम्, इह मा भूत्–'विदितः, विदितवान्' इति, तत् तर्हि वक्तव्यम्, न वक्तव्यम्, *यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः* शविकरणस्य विभाषा लुग्विकरणश्चायम्" इति। अयमाशयः–"यस्य विभाषा" [ पा० सू० ७. २. १५. ] इति सूत्रेण यस्य धातोः क्वचिद् विभाषयेड् विहितस्तस्येण्निषेधः क्रियते "वेटोऽपतः" [ ४. ४. ७१. ] इतिवत्, तत्र ज्ञानार्थस्य विदेरिट्प्रतिषेधो वक्तव्य इति शङ्कायां यदुपाधेरित्यादि भाष्यकृता समुत्तरितम्, तत्र उपाधिरित्यस्य "अभिधेयादिर्भेदकः" इति कैयटेनार्थः कृतः, तथा च तदनुसारं धातोरर्थोऽपि विशेषणभूततयोपाधिरेवेति यत्र येनार्थेन विशिष्टो धातुर्विभाषितेड् भवति तत्र तदर्थस्यैव तयोरिण्निषेध इत्यायाति, तेन च प्रकृते न कार्यनिर्वाहोऽर्थेन विन्दतेरनिर्देशादिति 'विशेषणमात्रमत्रोपाधिशब्देन लक्षितः' इति नागेश आह । तथा च भाष्योक्तं–'शविकरणस्य विभाषा लुग्विकरणश्चायम्' इत्युक्तमपि संगच्छते। पाणिनीयव्याकरणे इड्विकल्पविधायकं सूत्रं "विभाषा गमहनविदविशाम्" [ पा० सू० ७. २. ६८. ] इत्यस्ति । तत्र परतः पठितस्य विशधातोः साहचर्यं परत्वाद् बलवदिति *सहचरितासहचरितयोः सहचरितस्य* इति न्यायेन *साहचर्यात् सदृशस्यैव* इति स्वसंमतन्यायस्थानीयेन विशतेः शविकरणस्य

[ तौदादिकस्य ] साहचर्याच्छविकरण एव विन्दतिर्गृह्यते, इति तस्यैवेण्निषेधः । स्वसूत्रे तु–अनुबन्धविशिष्टस्य पाठादनुबन्धस्यापि च विशेषणविधया धातुभेदकतया तद्विशिष्टस्यैव ग्रहणमिति स्वभावप्राप्त एवायमर्थ इति नात्र ज्ञापकापेक्षा, न चापि प्रकृतार्थस्य न्यायरूपत्वमिति विज्ञेयमिति ॥ १ ॥

## *यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः* ॥ २ ॥

सि०—शास्त्रे प्रायः पदविशेषसम्बन्धमनुसृत्य कार्यं विधीयते, तत्र तादृशपदस्य तदव्यवहिता स्थितिरपेक्ष्यते, अन्यथा सम्बन्धस्य विच्छेदः स्यादिति शङ्कापनोदार्थमयमर्थो न्यायरूपेण व्यवह्रियते। यस्य येन पदेनार्थेन वाऽभिसम्बन्धः–अभिमतः सम्बन्धः स तत्र सम्बन्धिनि दूरस्थे सति दूरस्थस्य तस्य सम्बन्धानुयोगिनो भवत्येव, न तु विघटत इति न्यायार्थः । यथा "समस्तृतीयया" [ ३. ३. ३२. ] इति सूत्रेण तृतीयान्तेन युक्तात् संपूर्वकाच्चर्धातोरात्मनेपदं विधीयते, तच्च तृतीयान्ते पदे पदान्तरेण व्यवहितेऽपि भवत्येव, क्रियायाः करणतया तृतीयान्तस्य क्रियया सम्बन्धस्य दूरदोषेणापनेतुमशक्यत्वात् । अतश्च व्यवधानं शब्दयोर्नार्थाव्यवधानप्रयुक्तं सम्बन्धं विहन्तुं शक्नुयादिति भावः ॥ २ ॥

## *यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः* ॥२॥

त०—"संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते, तेषां यथेष्टमभिसम्बन्धो भवति" इति भाष्योक्तिमनुरुध्य, स्वभावतोऽपि वा जना यथेच्छं पदानि वाक्येषु स्थापयन्ति, तथापि यस्य पदार्थस्य येन पदार्थेन सह सम्बन्धोऽभिप्रेयते तेन स सम्बध्यत एव, न तु उच्चारणकृतव्यवधानेन सम्बन्धे कापि हानिरिति प्रकृतन्यायार्थः। अयमपि न किमप्यपूर्वं प्रतिपादयति किन्तु स्वभावसिद्धमेवार्थमाहेति नात्र ज्ञापकापेक्षा । न च केवलमयं न्यायः शास्त्रीय एव, यस्य हि मनुष्यस्य येन सह कश्चिल्लौकिकः सम्बन्धो भवति स न दूरस्थितौ निवर्त्तते, तथा च लोकसाधारणतया नायं न्यायत्वेनान्यैर्वैयाकरणैः संगृहीत इति ॥ २ ॥

## *येन विना यन्न भवति तत् तस्यानिमित्तस्यापि निमित्तम्* ॥ ३ ॥

सि०—येन–वस्तुतो निमित्तत्वाभाववता, विना–तदसत्त्व इति यावत्, यन्न भवति–तदवश्यस्थितिकं, तस्य–स्वसत्तायां भवतः कार्यस्य, अनिमित्तस्यापि–स्वमन्यद् वा निमित्तमुपाश्रित्याभवतोऽपि, निमित्तमिति व्यवह्रियत इति शेषपूरणेन न्यायार्थः। तथा च सति क्वचित् तद्विरहे सति *निमित्ताभावे नैमित्तिकस्याप्यभावः* इति न्यायात् तत्कार्यं न भवति, यथा–कृतण्धातोः कीर्त् आदेशः "कृतः कीर्तिः" [ ४. ४. १२३. ] इति सूत्रेण विधीयते, न च तस्य किमपि निमित्तमुपात्तम्, परन्तु तस्य धातोश्चौरादिकत्वेन चुरादीनां च ण्यन्तत्वेन णिचि परत एव दृश्यते, ततश्चासौ णिच् तस्य निमित्तत्वेनानुपात्तोऽपि निमित्तीभवतीति चुरादीनामनित्यण्यन्तत्वपक्षे णिजभावे 'कृतति' इत्येव रूपं भवति, न तु 'कीर्त्तति' इति न्यायफलम्। वस्तुतस्तु नायं न्यायोऽपि तु साहचर्यबललभ्योऽर्थः, अधिकं विवरणे स्पष्टम् ॥ ३ ॥

## *येन विना यन्न भवति तत् तस्यानिमित्तस्यापि निमित्तम्* ॥ ३ ॥

त०—अयं हि न न्यायान्तरवदपूर्वमर्थं सूचयति, किन्तु लौकिकव्यवहारेऽपि तथा प्रतीतिर्व्यपदेशश्च दृश्यत इति तेन सह साहचर्यदर्शनात् तन्मूलक एव तत्र निमित्तत्वव्यवहार इति संभाव्यते। एतन्न्यायफलं कृततीति रूपसिद्धिरिति वृत्तौ प्रदर्शितम्। अत्र कश्चिदाह–नन्वेवं सति "कृत ऋकारोपदेशोऽचीकृतदित्यत्र ऋकारश्रवणार्थः" इति "कृतः कीर्तिः" [ ४. ४. १२३. ] इति सूत्रस्थो बृहद्वृत्तिपाठो विरुध्यति, यतस्तत्राचीकृतदित्यत्र ऋकारश्रवणमात्रफलमुक्तं, भवद्रीत्या तु कृततीत्यत्रापि ऋकारश्रवणफलं भवतीति स्पष्ट एव विरोध इति, तन्न मनोरमम्–बृहद्वृत्तिपाठस्य तात्पर्यानवगमात्, धातुगणे एव 'कीर्तण्' इति पठ्यतां, तथा सति सूत्रारम्भमन्तरापि कीर्तयतीत्यादीनां सिद्धिरस्त्वलोपनतैवेति ऋकारघटितेन 'कृतण्' इति पाठेन किमित्याशङ्कायां समाधानात्मकोऽयं बृहद्वृत्तिपाठः, 'कृतण्' इति गणपाठे 'अचीकृतत्' इत्यपि रूपं सिद्ध्यति, 'कीर्तण्' इति गणपाठे कृते तु 'अचिकीर्तत्' इत्येकमेव रूपं स्यादिति समाधानग्रन्थाशयः; अयं भावः–'कीर्तण्' इति गणपाठे 'अचीकृतत्' इति रूपं न सिध्येत्, 'कृतण्' इति पाठे कृते तु "ऋदृवर्णस्य" [ ४. २. ३७. ] इति सूत्रेण कीर्तादेशबाधक ऋकारस्य ऋकारो वा भवतीति जायमाने 'अचीकृतत्' इति रूपे ऋकारश्रवणं भवति। ननु कथं कीर्तादेशबाध इति चेत्? उच्यते–"ऋदृवर्णस्य" [ ४. २. ३७. ] इत्यत्रोपान्त्यस्य ऋकारस्य ॠकारस्य च संग्रहार्थं वर्णपदोपादानम्, अथात्रापि यदि कीर्तादेशः स्यात् तदाऽन्यस्य ऋकारस्योपान्त्यस्याभावाद् "ऋदतः" इत्येतावतैव निर्वाहे वर्णग्रहणमनवकाशं सत् कीर्तादेशं बाधते। ननु 'कृतण्' इति ह्रस्व एव धातुगणे पठ्यतां, तावतापि तत्सामर्थ्याद् 'अचीकृतत्' इति सिध्यति, सूत्रे च वर्णग्रहणमपि न कर्तव्यम्, एवं "कृतः कीर्तिः" [ ४. ४. १२३. ] इति स्थाने "कृतः कीर्तिः" इति विन्यासे मात्राल्पत्वमिति लाघवमपि; सत्यम्–एवं सति 'कृतैत्' इत्यस्यापि

कीर्तादेशशङ्का स्यात् । किञ्च 'चुरादीनामनिलो णिच्' इति णिजभावे प्रस्तुतन्यायबलेन कीर्तादेशाभावे च कर्ततीत्यनिष्टं रूपं स्यात्, इष्यते च कृततीति अतः 'कृतण्' इति पाठः सम्यक्, सम्यक् च कृततीति रूपसिद्ध्यर्थं प्रस्तुतन्यायाश्रयणमित्यलं पल्लवितेन ॥ ३ ॥

## *नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम्* ॥ ४ ॥

सि०—नाम्नो ग्रहणे सति उपसर्गस्य नामत्वेऽपि तस्य ग्रहणं बाहुल्येन न दृश्यते । अयमपि लक्ष्यानुरोधमूलक एव न्यायो यदि तादृशं लक्ष्यं भवति, यथा—"स्पृशोऽनुदकात्" [ ५. १. १४९. ] इति सूत्रेणोदकभिन्नान्नाम्नः परस्माद्धातोर्विधीयमानः क्विप् सत्त्वप्रधाननाम्नः परत्वे एव भवति, यथा—'घृतस्पृक्' इत्यादि, उपस्पृशतीत्यर्थे चोपरूपोपसर्गनाम्नः परत्वे सत्यपि न भवति । प्रायेणेति वचनाच्च क्वचिन्नामग्रहणे उपसर्गस्यापि ग्रहणं भवत्येव, तेन "भजो विण्" [ ५. १. १४६. ] इति नाम्नः पराद् भजेर्विधीयमानो विण् उपसर्गपूर्वादपि भवति, यथा—'प्रभाग्' इत्यादौ, यदि तथाभूतः प्रयोगः क्वचिद् दृश्येत ॥ ४ ॥

### *नामग्रहणे प्रायेणोपसर्गस्य न ग्रहणम्* ॥ ४ ॥

त०—अयमपि न्यायो न क्वचिदुपलभ्यते, किन्तु संभावनामूलक एव । "स्पृशोऽनुदकात्" [ ५. १. १४९. ] इत्यत्र च 'अनुदकात्' इति पर्युदासदर्शनात् 'पर्युदासः सदृग्ग्राही' इति न्यायानुरोधेनोदकभिन्नादुदकसदृशाद् द्रव्यवचनान्नाम्नः परत्व एव प्रत्ययः, न त्वद्रव्यवाचिन उपसर्गात् परत्वे इति कल्पयितुं शक्यते ।तथा च प्रकृतसूत्रव्याख्यानभूतबृहद्वृत्तिग्रन्थादवप्ययमर्थो लभ्यते, तथाहि—तत्रोक्तम्—"अनुदक इति पर्युदासाश्रयणादुदकसदृशमनुपसर्गं नाम गृह्यते, तेनेह न भवति—उपस्पृशति" इति । तथा च पर्युदासबलादेव प्रकृते वारणमिति नात्र न्यायोपयोग इत्यायाति । यदि ह्ययं न्याय आचार्यस्येष्टः स्यादवश्यं स त्वत्र समाश्रितः स्यात्; सति चान्यस्मिन्नुपाये किमर्थं नवीनो न्याय आश्रीयेतेति । सति प्रयोजनेऽन्यत्र न्यायस्योपयोगेऽपि प्रकृतेऽनुपयोग एव । अन्यत्र च बहुत्र नामत्वेनोपसर्गस्य ग्रहणं दृश्यत एवेति ॥ ४ ॥

## *सामान्यातिदेशे विशेषस्य नातिदेशः* ॥ ५ ॥

सि०—अतिदेशनम्—अन्यधर्मस्यान्यत्र आरोपणम्—अतिदेशः, तत्र सामान्यधर्मस्यातिदेशे सति तदन्तर्भूतस्यापि विशेषस्यातिदेशो न भवतीति न्यायार्थः । "निर्विशेषं न सामान्यम्" इति नयेन सामान्यस्य विशेषाविनाभावेन सामान्यातिदेशे सर्वे तदन्तर्गता विशेषा अतिदिष्टाः स्युरिति शङ्कया न्यायोऽयमाश्रीयते । अयं च न्यायोऽतिदेशस्वभावसिद्ध एव, तथाहि—"भूतवच्चाशंस्ये वा" [ ५. ४. २. ] इति सूत्रे भूतवदित्यनेन कथनेन भूतसादृश्यं विधीयते, सादृश्यं च तद्वृत्तिधर्म एव, स च धर्मः क इति जिज्ञासायां सादृश्यप्रतियोगितावच्छेदकतया शब्दादुपस्थितस्तज्ज्ञानादनुमानेनोपस्थितस्तद्व्यापको धर्मस्तस्यैवातिदेशः, न तु तद्व्याप्यधर्मातिदेशः, तस्यानुपस्थितत्वादित्येवंरूपेणायं न्यायः फलति । तेन भूतवदिति कथनेन भूतत्वमात्रस्यैव व्यापकस्य धर्मस्यातिदेशो भवति, न तु तद्व्याप्यानामनद्यतनत्व-परोक्षत्वादिविशिष्टानां भूतविशेषाणामिति 'उपाध्यायश्चेदागमत् एते तर्कमध्यगीष्महि' इत्यादावनद्यतन-परोक्षयोरपि भूतत्वमात्रेणोपस्थितिरिति तत्तदर्थप्रयुक्ते ह्यस्तनी-परोक्षे विभक्ती न भवतोऽपि तु सामान्यभूतत्वनिमित्ताऽद्यतन्येव । लोकेऽपि मनुष्यादौ पशुत्वादेः सामान्येनातिदेशस्य स्थले न तत्तद्विशेषाणां गोत्वादीनामतिदेशो गम्यत इति लोकव्यवहारसिद्धोऽप्ययं न्याय इति विज्ञेयम् ॥ ५ ॥

### *सामान्यातिदेशे विशेषस्य नातिदेशः* ॥ ५ ॥

त०—सामान्योपस्थितिकाले विशेषोपस्थापकसामग्र्यभावोऽस्य न्यायस्य मूलमिति वृत्तौ प्रतिपादितम्, तस्यायमाशयः—सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते तत्र विशेषस्याशब्दार्थत्वाद् विशेषाश्रयं कार्यं नातिदिश्यते, यत्र तु विशेषशब्दोपादानेनातिदेशस्तत्र विशेषधर्मस्यातिदेशो भवत्येव । किञ्च विशेषातिदेशे सामान्यातिदेशोऽपि भवति, यथा ब्राह्मणविशेषस्य कठत्वादिधर्मस्यातिदेशे ब्राह्मणत्वादेशः सुतरां जायते, तत्र च सामान्यमनुमानेनोपस्थितम्, व्याप्येन हि व्यापकोपस्थितिरनुमानेन भवति । "स्थानिवदादेशोऽनल्विधौ" [ पा० सू० १. १. ५६. ] इति सूत्रे महाभाष्ये चायं न्यायो वार्तिकसिद्धत्वेन पठितो दृश्यते, तत्र हि वर्णविधौ स्थानिवद्भावप्रतिषेधाय 'अनल्विधौ' इति क्रियते, तस्य च वैयर्थ्यमनेन न्यायेनाशङ्कितम्, तथाहि—"आरभ्यमाणेऽप्येतस्मिन् योगे—"अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्तस्यादर्शनात्" [ वार्तिकम् ], अल्विधौ प्रतिषेधेऽसत्यपि विशेषणे समाश्रीयमाणे, असति तस्मिन् विशेषणेऽप्राप्तिर्विधेः, प्रसीव्य प्रदीव्य । किं कारणात्? तस्यादर्शनात्, बलादेरित्युच्यते, न चात्र बलादि पश्यामः । ननु चैवमर्थं एवायं यत्नः क्रियते—अन्यस्य कार्यमुच्यमानमन्यस्य यथा स्यादिति । सत्यम्—एवमर्थो यत्नः क्रियते, न तु प्राप्नोति, किं कारणम्? "सामान्यातिदेशे हि विशेषानतिदेशः" [ वार्तिकम् ]

सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति, तद्यथा-ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति, सामान्यं यद् ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते, यद् विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते । एवमिहापि सामान्यं यत् प्रत्ययकार्यं तदतिदिश्यते, यद् विशिष्टं वलादेरिति न तदतिदिश्यते" । इति । अयमाशयः-'प्रसीव्य, प्रदीव्य' इत्यादौ त्वाद्यशित्प्रत्ययनिमित्त इडागमः स्थानिवद्भावेन प्राप्त इति तन्निवारणाय वर्णविधौ तन्निषेधः क्रियते, तत्र 'त्वा'प्रत्ययस्थितं सामान्यं प्रत्ययत्वादेवातिदिश्येत, न तु तत्र स्थितं तादित्वादीतीटः प्राप्तिरेव नेति तत्प्रतिषेधो व्यर्थ इति । अन्ते च यद्यपि "ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इति सूत्रे 'अयपि' इति प्रतिषेधस्थानीयेन "नल्यपि" [ पा० सू० ६. ४. ६९. ] इति सूत्रेणास्य न्यायस्यानित्यत्वमपि साधितम्, तथाहि-यपि क्त्वावृत्तिकित्त्वातिदेशे सत्येव ईत्वं प्राप्नोति, कित्त्वं च विशेषधर्मस्तस्य चानेन न्यायेनातिदेशोऽलभ्य इति तदप्राप्तेरयपीति निषेधो व्यर्थः सन् प्रकृतन्यायानित्यत्वं ज्ञापयति । नवीना यद्यपि कित्त्वं क्त्वाप्रत्ययस्य सामान्यधर्म एवेति तदतिदेशे न्यायस्य बाधकत्वाभावान्न 'अयपि' इति निषेधेनास्यानित्यत्वं ज्ञापयितुं शक्यते इति साधयन्ति, तथापि तद्विचारः प्रकृते नातीवोपयोगीति विरम्यते ॥५॥

## *सर्वत्रापि विशेषेण सामान्यं बाध्यते, न तु सामान्येन विशेषः* ॥ ६ ॥

सि० - विशेषः-सामान्यव्याप्यं शास्त्रम्, सामान्यं-विशेषव्यापकं शास्त्रम्, सर्वत्रापि प्राप्ते प्राप्स्यति वा सामान्ये विशेषेण शास्त्रेण सामान्यशास्त्रं बाध्यते, तु-किन्तु, सामान्येन शास्त्रेण विशेषशास्त्रं न बाध्यत इति न्यायार्थः । लोकेऽपि विशेषेऽभिहिते सामान्यं विशेषानुस्यूततया भासमानमपि विशेषत्वेन रूपेणैव भासते, शब्दतो विशेषस्यैव प्रतीतेः, तथा शास्त्रेऽपि युक्तमेव, "तार्किकादिमते सामान्य-विशेषयोर्बाध्य-बाधकभावो नास्ति" इति तु केषांचिदुक्तिरप्रासङ्गिकी, तर्कादिशास्त्राणां प्रमाण-प्रमेयादिविचारपरत्वात् कस्यचिद् विधि-निषेधे तेषामव्यापारात् । अयं च बाध्यबाधकभावो विधि-निषेधविषय इति तदर्थकेषु धर्मशास्त्रादिषु प्रवर्त्तत एवायं न्यायः । व्याकरणशास्त्रे सामान्य-विशेषभावेन शास्त्राणां विधि-निषेधपरत्वात् तत्र प्रकृतन्यायस्य लक्ष्यलाभोऽस्ति, यथा-'कोऽर्थः' इत्यत्र 'क+स्+अर्थः' इति स्थितौ "सो रुः" [ २. १. ७२. ] इति सकारस्य रुत्वे कृते सति "रोर्यः" [ १. ३. २६. ] "अतोऽति०" [ १. ३. २०. ] इत्यनयोः प्राप्तौ "रोर्यः" [ १. ३. २६. ] इत्यस्य परत्वेऽपि सामान्येन स्वरे परे विधानात् सामान्यशास्त्रत्वम् "अतोऽति०" [ १. ३. २०. ] इत्यस्य चातीति विशेषस्वरे परे विधानाद् विशेषशास्त्रत्वेन तेनास्य बाधः सिध्यति । तथा च प्राप्ते सामान्ये विशेषेण तस्य बाधस्येदमुदाहरणं, प्राप्स्यति सामान्ये विशेषप्रवृत्तिस्थलोदाहरणं यथा-"सोऽहं तथापि तव" [ भक्तामरस्तोत्रे श्लो० ५ ] इत्यादि, अत्र हि "रोर्यः" [ १. ३. २६. ] "अतोऽति०" [ १. ३. २०. ] "तदः सेः०" [ १. ३. ४५. ] इत्येतेषां न सह प्राप्तिः, "तदः सेः०" [ १. ३. ४५. ] इत्यस्य प्राप्तिकालेऽन्ययोः प्राप्त्यभावात् । तथा च "रोर्यः" [ १. ३. २६. ] "अतोऽति०" [ १. ३. २०. ] इत्यनयोः प्राप्तिः "सो रुः" [ २. १. ७२. ] इत्येतत्प्राप्त्यनन्तरैवेति भविष्यत्प्राप्तिकस्येदमुदाहरणमित्युक्तं प्राचीनैः । वस्तुतस्तु प्रकृतसूत्राणां सामान्य-विशेषभाव एव दुर्निरूप इति केवलं "सो रुः" [ २. १. ७२. ] "तदः सेः०" [ १. ३. ४५. ] इत्यनयोरेव सामान्य-विशेषभावः कल्पनीयः । तथा च प्राप्तस्यैवेदमुदाहरणं न तु प्राप्स्यतः । किञ्च प्रकृते "तदः सेः०" [ १. ३. ४५. ] इत्यस्य प्राप्तिरप्यत्र नास्ति, यतस्तत्र 'पादार्था' इत्युक्ततया पादपूरणे सत्येव [ लुचैव यदि पादपूर्त्तिः स्यात् तदैव ] लुग् भवति, इह च लुचं विनाऽपि पादपूर्त्तिः स्पष्टा, एतच्च तत्सूत्रे बृहन्न्यासेऽप्युक्तम्, तथाहि-'पादपूरणी' इति बृहद्वृत्तिप्रतीकमुपादाय-"लुचैव" यदि पादः पूर्यते, यत्र लुच्यलुचि च पादपूरणमविशिष्टं तत्र लोपाभावः, यथा-"सोऽयमित्यभिसम्बन्धे प्रत्यभिज्ञोपजायते ।" अत्र लुच्यपि पादपूरणं भवति, यथा-"साऽयमित्यभिसम्बन्धे" इति [ अत्रापि "सोऽयमित्यभिसम्बन्धे" इत्येवं पाठः प्रमादान्मुद्रितः ]" । इत्थं च सोऽयमित्यस्य सोऽहमित्यस्य च सर्वथा तुल्ययोग-क्षेमत्वेन तत्र प्रकृतसूत्रचर्चैव नोचिता । किञ्चात्र लुचि सत्यां स्त्रीपुंसोः सन्देहोऽप्यापततीत्यपरं दूषणम्, यद्यपि प्रकरणात् तन्निर्णयः स्यात् तथापि सत्यां गतौ किमर्थं संदिग्धप्रयोगः क्रियेत । इत्थं च तत्रैव सूत्रे लघुन्यासे यदित्थमुक्तम्-"ननु "सोऽहं तथापि तव०" [ भक्तामरस्तोत्रे श्लो० ५ ] इत्यस्मिन् प्रयोगे "तदः सेः स्वरे पादार्था" [ १. ३. ४५. ] इत्यनेन प्रतिष्णातेन निमित्तस्वरे परत्रावतिष्ठमाने सति सेर्लुक् कथं न भवति? उच्यते-"तदः सेः स्वरे०" [ १. ३. ४५. ] इति सूत्रं "रोर्यः" [ १. ३. २६. ] इति सामान्यस्वरनिमित्तसूत्रविषये "सो रुः" [ २. १. ७२. ] इत्यस्य बाधकम्, न पुनः स्वरविशेषनिमित्तस्य "अतोऽति रोरुः" [ १. ३. २०. ] इत्यस्य विषये, कुतः? *सर्वत्रापि विशेषेण सामान्यं बाध्यते न सामान्येन विशेषः* इति न्यायात्" इति, तच्च पूर्वोदाहृतबृहन्न्यासग्रन्थप्रतिकूलमेव प्रतिभाति, सूत्रप्राप्तेः स्पष्टत्वेन तत्र क्लिष्टकल्पनया समा-

धानस्यानावश्यकत्वात् । *तक्रकौण्डिन्य*न्यायेन समानप्रयोजनोऽयं, सोऽपि न्याय एतन्न्यायमूलक एव । तक्रकौण्डिन्यन्यायस्य च–तक्रं देयमस्मै इति तक्रदेयः, स चासौ कौण्डिन्यश्चेति विग्रहे मयूरव्यंसकादित्वाद् देयशब्दलोपः, तस्य च न्यायशब्देन दृष्टान्तार्थेन समानाधिकरणसमास इति सिद्धिः, तस्य प्रवृत्तिश्चैवम्–सर्वेभ्यो ब्राह्मणेभ्यो दधि देयं तक्रं कौण्डिन्याय, तत्र ब्राह्मणेषु सामान्येन कौण्डिन्योऽपि समायात इति दधिदानं तस्य पूर्ववाक्येन प्राप्तम्, परन्तु परवाक्येन विशेषतस्तस्य तक्रदानं विहितमिति दधिदानं बाधते । यद्यपि दधिदानोत्तरं ततः पूर्वं वा तक्रदानमपि विधातुं शक्यत एव, तथापि विशिष्य विधानसामर्थ्यात् तक्रमेव दीयते न दधि । तथा च सत्यपि संभवे सामान्येन विशेषस्य बाध इति प्रकृतन्यायेन [ *तक्रकौण्डिन्य*न्यायेन ] लभ्यते । यत्र चासंभवे एव बाधकत्वमिष्यते विशेषस्य तत्र *माठर-कौण्डिन्यपरिवेषण*न्यायः समाश्रीयते, तथाहि–तन्न्यायस्वरूपम्– *सर्वे ब्राह्मणा भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविषाताम्* इति, अत्र भोजन-परिवेषणयोः समकालमसम्भव एवेति परिवेषणेन विशेषतो विहितेन सामान्यतो विहितं भोजनं तयोर्बाध्यते, अनयोश्च बाधनमनुक्तमेव सामान्यविशेषभावमूलकमेव प्रतीयते इति प्रकृतन्यायसमानयोग-क्षेमाविमौ, यथा "व्यञ्जनादेरेकस्वराद् भृशाभीक्ष्ण्ये यङ् वा" [ ३. ४. ११. ] इति सामान्येन विहितो यङ् "गत्यर्थात् कुटिले" [ ३. ४. ११. ] इति गत्यर्थेभ्यो धातुभ्यो विशिष्य कुटिलेऽर्थे विहितेन यङा बाधकेन बाध्यते, न चास्ति द्वयोरर्थयोरेकदा संभव इति *माठरकौण्डिन्यपरिवेषण*न्यायेन प्रकृते बाधः । तथा च सर्वत्र सामान्य-विशेषभाव एव बाधमूलमिति ॥ ६ ॥

### *सर्वत्र विशेषेण सामान्यं बाध्यते, नतु सामान्येन विशेषः* ॥ ६ ॥

त०—अत्र यद् वक्तव्यं तद् वृत्तावेवोक्तम् । विशेषश्चायम्–अयमपि न्यायोऽनवकाशमूलक एवेति *येन नाप्राप्ते यो विधिरारभ्यते स तस्यैव बाधकः* इति न्यायेनैव गतार्थ इति न पृथग् वक्तव्यः । अपवादस्थलेऽपि सामान्य-विशेषभावप्रयुक्त एव बाध्य-बाधकभावः । विशेषस्य सामान्यान्तर्गततयाऽवश्यं प्राप्ते सामान्यशास्त्रे एव विशेषशास्त्रमारब्धमिति तत् तस्य बाधकमेवेति नायं न्यायः पृथगारब्धव्य इति ॥ ६ ॥

## *ङित्त्वेन कित्त्वं बाध्यते* ॥ ७ ॥

सि०—पूर्वन्यायवदयमपि बलाबलकथनार्थमेवोपात्तः, अत्र चैकस्मिन् धर्मिणि ङित्त्व-कित्त्वयोः प्राप्तौ किंनिमित्तकेन कार्येण भाव्यमिति शङ्काऽपनोदार्थमयं न्याय आश्रीयते । तथा च यत्र कित्त्वं पूर्वस्थितमस्ति, तत्र ङित्त्वं चेद् विहितं कथमपि, तर्हि ङित्त्वनिमित्तकमेव कार्यं तत्र स्यात् । ङित्त्व-कित्त्वयोः स्वतः परस्परं विरोधाभावात् कार्यद्वारक एव विरोध इति तत्कार्यबाधनमेव तद्बाधनमेष्टव्यम् । अयं च स्पर्धमूलक एव, तत्र "स्पर्धे" [ १. ४. ११९. ] इति परिभाषासूत्रं पाठापेक्षं पूर्वत्वपरत्वमादाय प्रवर्त्तते, अयं च प्रवृत्त्यपेक्षं पूर्वत्वपरत्वमादायेति विशेषः । यथा–"णूत् स्तवने" इत्यस्य क्ते नुवितः प्रणुवित इत्यादिरूपाणि, तत्र क्तप्रत्ययस्य कित्त्वं स्वाभाविकं कुटादित्वप्रयुक्तेन ङित्त्वेन बाध्यते इति कित्त्वनिमित्तकः "उवर्णात्" [ ४. ४. ५८. ] इतीण्निषेधो नाभूत् । 'कित्त्वं [ पूर्वस्थितं ] बाध्यते' एतावन्मात्रोक्तौ तु 'प्रकृत्य' इत्यादौ क्त्वाप्रत्ययसम्बन्धिकित्त्वं पश्चात् प्रवृत्तस्य यपः पित्त्वेन बाधितं स्यादिति प्रकृत्येत्यत्र गुण आपद्येत, 'ङित्त्वं [ पश्चात् प्रवृत्तं ] बाधकम्' इत्येतावन्मात्रोक्तौ तु–"ध्रुंत् गतिस्थैर्ययोः" इत्यस्य क्त्व यबादेशे प्रध्रुत्येत्यत्र कुटादित्वप्रयुक्तङित्त्वेन यपः पित्त्वस्य बाधापत्तौ तागमो न स्यात् । न्यायस्यास्यास्थैर्याच्च क्वचिदप्रवृत्तिरपीति ङित्त्वेन कित्त्वस्याबाधान्नूतः प्रणूतवानित्यपि रूपम् । एतन्न्याये ङित्त्व-कित्त्वे उपलक्षणविधया प्रयुक्ते, तेनान्यत्रापि धात्वादिसम्बन्धी पूर्वावस्थानुबन्ध उत्तरावस्थानुबन्धेन [ पूर्वावस्थानुबन्धनिमित्तकं कार्यमुत्तरावस्थानुबन्धनिमित्तकेन कार्येण ] बाध्यते । तत्र धातोरनुबन्धस्य बाधो यथा–चक्षिधातोः स्थाने आदेशभूतस्य ख्यागो गित्त्वेन [ गित्त्वनिमित्तकोभयपदित्वेन ] पूर्वावस्थास्थितेदित्त्वस्य [ तन्निमित्तनित्यात्मनेपदित्वस्य ] बाधादुभयपदित्वमेव भवति, न तु नित्यात्मनेपदित्वम्–आचख्यौ, आचख्ये, इति । प्रत्ययसम्बन्धिनोऽनुबन्धस्य [ तन्निमित्तकार्यस्य ] बाधो यथा–'युतात्' इत्यत्र तातङो ङित्त्वेन तुवो वित्त्वस्य बाधात् "उत औविंति व्यञ्जनेऽद्वेः" [ ४. ३. ५९. ] इति औत्वं न । क्वचिच्च परस्तात् प्रवृत्तेनानुबन्धेन पूर्वानुबन्धस्य बाधाभावोऽपि, यथा–प्रकृत्येत्यत्रेत्युदाहृतं पूर्वमेवेति ॥ ७ ॥

### *ङित्त्वेन कित्त्वं बाध्यते* ॥ ७ ॥

त०—ङित्त्वेन पश्चात् प्रयुक्तेन पूर्वस्थितं कित्त्वं बाध्यत इति न्यायार्थः । बाध्य-बाधकभावव्याख्यानप्रसङ्गेनैतदपि औचित्यप्राप्तमिति पठितम् । अन्ये वैयाकरणा नैतदाद्रियन्ते, किन्तु यत्र पूर्वस्थितस्य कित्त्वस्य ङित्त्वेन बाध इष्टस्तत्र *येन नाप्राप्त०*न्यायेनैव निर्वाहः क्रियते, 'नुवितः' इत्यादाववश्यप्राप्ते कित्त्वे ङित्त्वं कुटादित्वप्रयुक्तं क्रियते, इति तत् [ ङित्त्वं ] तस्य [ कित्त्वस्य ] ङित्त्वेन बाधकं स्यात् । भाष्यकृता तु ङित्त्वेन कित्त्वस्य बाधो नोचित इत्येव साधितम्–'गाङ्कुटादिभ्यो-

ऽञ्णिन्ङित्'' [पा० सू० १. २. १.] इति सूत्रे, तत्र हि ङित्कितोः पृथगनुबन्धत्वकरणे प्रयोजनस्य विचारप्रसङ्गे–''कुटादीनामिट्प्रतिषेधः'' [वार्तिकम्], कुटादीनामिट्प्रतिषेधः प्रयोजनम्, यथेह भवति–'लूत्वा धूत्वा' इति ''श्र्युकः किति'' [पा० सू० ७. २. ११.] इतीट्प्रतिषेधः, एवं 'नुविता धुविता' अत्रापि प्राप्नोति। ''क्त्वायां कित्प्रतिषेधश्च'' [वार्तिकम्], क्त्वायां कित्प्रतिषेधः प्रयोजनम्, किंच–इट्प्रतिषेधः, नेत्याह, अदेशेऽयं चः पठितः–'क्त्वायां च कित्प्रतिषेध इति। यथेह भवति–'देवित्वा सेवित्वा' इति 'न क्त्वा सेट्' [पा० सू० १. २. १८.] इति कित्त्वप्रतिषेधः, एवं 'कुटित्वा, पुटित्वा' इहापि प्राप्नोति। अथवा देश एवायं चः पठितः–क्त्वायां कित्प्रतिषेधश्चेट्प्रतिषेधश्च। कित्प्रतिषेधे उदाहृतम्, इट्प्रतिषेधो यथेह भवति–'लूत्वा धूत्वा' ''श्र्युकः किति'' [पा० सू० ७. २. ११.] इति, एवं 'नुवित्वा धुवित्वा' अत्रापि प्राप्नोति। स्यादेतत् प्रयोजनं यद्यस्य नियोगत आतिदेशिकेन ङित्त्वेनौपदेशिकं कित्त्वं बाध्येत। सत्यपि तु ङित्त्वे किदेवैषः। तस्मान्नूत्वा धूत्वेत्येव भवितव्यम्'' इति सिद्धान्तितम्। अस्यायमाशयः–यद्यपि ङित्कितोर्गुणादिप्रतिषेधरूपं कार्यं समानमेवेत्येकेनैवानुबन्धेन सिध्यति, तथापि किति परे ''उवर्णात्'' [४. ४. ५२.] इतीट्प्रतिषेधो भवति, ङिति स न भवतीति तयोः पृथक्करणमावश्यकम्। तथा च 'नुविता, धुविता' इत्यत्र कुटादित्वाद् ङित्त्वे सति इट्प्रतिषेधो न भवति। इत्थं तयोः पृथगनुबन्धत्वफलमुक्त्वा क्वचित् कित्त्वस्य ङित्त्वेन बाधनादिट्प्रतिषेधाभावोऽपि फलमिति 'नुवित्वा, धुवित्वा' इति सिध्यतीति सिद्धान्त्येकदेशिनोक्तम्, तत्र च सिद्धान्तिना आतिदेशिकेन [कुटादित्वप्रयुक्तेन] ङित्त्वेन औपदेशिकस्य [स्वाभाविकस्य] कित्त्वस्य निवृत्तेरसम्भवात् क्त्वाप्रत्यये कित्त्वं स्यात्स्यैवेति 'नूत्वा धूत्वा' इत्येव युक्तमिति सिद्धान्तितम्। तथा च तुल्यन्यायात् क्तेऽपि 'नूतः' इत्येव रूपमिष्टमिति ङित्त्वेन कित्त्वस्य बाधो नेष्टः। *येन नाप्राप्त०*-न्यायमूलको हि बाध एष्टव्यः स्यात्, नास्ति च सर्वत्र ङित्त्वविषये कित्त्वस्यावश्यप्राप्तत्वम्, 'नुवितुम्' इत्यादौ कित्त्वाप्राप्तेः। तथा च नायं न्यायः पाणिनीयानामाहृत इति स्पष्टम्। यपः पित्त्वस्यापि ङित्त्वेन बाधाशङ्का नास्ति ङित्त्वापेक्षया पित्त्वस्य स्वाभाविकत्वात्, ङित्त्वं हि क्त्वाप्रत्ययस्यैव कुटादित्वात् प्राप्तं, न तु यपः, तस्यादेशत्वेन प्रत्ययत्वाभावात्, प्रत्ययस्थानिकत्वेन हि तत्र प्रत्ययत्वमानेयमिति साक्षात्प्रत्ययत्ववति क्त्वाप्रत्यये एव ङित्त्वप्रवृत्त्यौचित्यात्। तथा च यपि ङित्त्वं स्थानिधर्मः पित्त्वमात्मधर्म इति पित्प्रयुक्तं कार्यं तत्र स्यादेव। उपलक्षणतया पूर्वावस्थानुबन्धस्योत्तरावस्थानुबन्धबाधकत्वमपि न्यायाभावे कुतः स्वीकार्यम्। चक्षिङ्स्थानीये ख्याञादेशे च स्वत एव ञित्त्वप्रयुक्तं कार्यं स्यादेव। एवं युतादित्यादावपि स्वाश्रयानुबन्धनिमित्तकमेव कार्यं न तु स्थानिस्थितानुबन्धनिमित्तकं तस्य स्थानिवद्भावलभ्यत्वात्, 'ङिच्च पिन्न, पिच्च ङिन्न' इति ''हलः श्नः शानज्झौ'' [पा० सू० ३. १. ८३.] इति सूत्रे महाभाष्ये सिद्धान्तितत्वाच्चेति सर्वं सुस्थम्। स्वाश्रयानुबन्धकार्येण सह क्वचित् स्थानिसम्बन्ध्यनुबन्धनिमित्तमपि कार्यं भवत्येवेति प्रकृत्येत्यादौ स्थानिवत्त्वाद् यपः कित्त्वेन गुणाभावोऽपि सिध्यति॥ ७॥

## *परादन्तरङ्गं बलीयः* ॥ ८॥

सि०—परत्वं पाठापेक्षया पूर्वत्वेनाभिमतशास्त्रोच्चारणध्वंसाधिकरणक्षणे पठितत्वम्, तच्च पूर्वापेक्षया बलवत्त्वप्रयोजकमिति ''स्पर्धे'' [७. ४. ११९.] इति सूत्रेण प्रतिपादितमेव। परस्मान्नित्यस्य बलवत्त्वं *परान्नित्यम्* इति न्यायेन नित्यापेक्षयाऽन्तरङ्गस्य बलवत्त्वं *नित्यादन्तरङ्गम्*इति न्यायेन, अन्तरङ्गादप्यनवकाशस्य बलवत्त्वम् *अन्तरङ्गादनवकाशम्* इति न्यायेन च प्रतिपादितं, सम्प्रति परा-ऽन्तरङ्गयोः परस्परं स्पर्धे सति कस्य बलवत्त्वमित्याकाङ्क्षायां न्यायमिममुदाहरन्ति। अत्रापि च परस्य दौर्बल्यप्रयोजकं बहिरङ्गत्वमेवेति *असिद्धं बहिरङ्गमन्तरङ्गे* इति न्यायस्यैवायं प्रपञ्चः। तथा च तेनैव गताऽर्थोऽप्युदाहरणभेदमनुरुध्य पृथगुच्चार्यते। उदाहरणमस्य यथा–'स्योमा' इति। अत्र सीव्यतेः ''मन् वन्०'' [५. १. १४७.] इति मनि ''य्वोः प्वय्व्यञ्जने लुक्'' [४. ४. १२१.] इति वलोपे ''लघोरुपान्त्यस्य'' [४. ३. ४.] इति गुणे ''अनुनासिके च च्छ्वः शूट्'' [४. १. १०८.] इत्यूटि च प्राप्ते ऊट् वलोपमपवादत्वाद् गुणं च नित्यत्वाद् बाधते इति तौ प्रबाध्य ऊटि कृते तत उपान्त्यगुण-यत्वयोः प्राप्तौ गुणस्य बाह्यप्रत्ययनिमित्तकत्वेन बहिरङ्गत्वाद् यादेशापेक्षया परत्वे सत्यप्यनेन न्यायेन पूर्वं यादेशे तत उपान्त्यगुणस्याभावादूटो गुणे कृते रूपं सिद्ध्यति। इत्थं चायं न्यायोऽन्तरङ्गबहिरङ्गभावमूलक एवेति न नवीनस्तथापि पूर्वैः पृथग् लिखित इत्यस्माभिरपि व्याख्यात इति बोध्यम्॥ ८॥

## *परादन्तरङ्गं बलीयः* ॥ ८॥

त०—*परान्नित्यम्* नित्यादन्तरङ्गम्* *अन्तरङ्गाच्चानवकाशम्* इत्येतैः पूर्वव्याख्यातैर्न्यायैः पर-नित्या-ऽन्तरङ्गा-ऽनवकाशानामुत्तरोत्तरं बलीयस्त्वं साधितम्। ततश्च परापेक्षया बलवतो नित्यादप्यन्तरङ्गस्य बलवत्त्वे सिद्धान्तिते परादपि बलवत्त्वं कैमुतिकन्यायसिद्धमेवेति नायं पृथग्गणनामर्हति, तथापि वैचित्र्यार्थमुल्लेखोऽस्येति॥ ८॥

## *प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते* ॥ ९ ॥

सि०—लोपनं छेदनं लोपः, वर्णस्य नित्यत्वपक्षेऽखण्डस्य नित्यस्य छेदनाद्यसम्भवीति तददर्शनमिह लोपशब्देन ग्राह्यम्, अत एव पाणिनिना "अदर्शनं लोपः" [पा० सू० १. १. ६०.] इति लोपसंज्ञाऽपि विहिता । एवं च लुप्-लुगादिशब्दैरुच्यमानोऽर्थो लोपशब्दस्यापि वाच्यः । तत्र लुकि स्थानिवद्भावेन सिद्धिरिति लुप्येवास्य न्यायस्य प्रयोजनम्, तत्र हि 'लुप्यवृल्लेनत्' [७. ४. ११२.] इति सूत्रेण स्थानिवद्भावस्य निषिद्धत्वात् । न च तेन निषिद्धे स्थानिवद्भावेऽनेन प्रत्ययलक्षणं कार्यं चेद् विधीयेत व्यर्थं तत् सूत्रं स्यादिति वाच्यम्, तेन हि लुपि सत्यां लुप्तप्रत्ययपरत्वनिबन्धनस्यैव कार्यस्य निषेधात्, अनेन च न्यायेन लुप्तप्रत्ययान्तनिर्दिष्टकार्याणामनुमतत्वात् । अत्र च ज्ञापकं "सिज्विदोऽभुवः" [४. १. ३.] इति सूत्रे भूवर्जनम्, तद्धि अभूवन्नित्यत्रानः पुसादेशनिषेधार्थं कृतम्, तस्य चेहप्राप्तिरेव नास्ति, सूत्रे विद्यमानसिजन्तस्य ग्रहणात्, इह च सिचो लुप्तत्वात् । तथा च भूवर्जनाभावेऽपि सिजन्तत्वाभावादेव पुसोऽभावे सिद्धे सति तदर्थं कृतं भूवर्जनं प्रकृतन्यायं विना न सार्थक्यं प्राप्नुयात्, प्रकृतन्यायेन हि प्रत्ययान्तनिमित्तकार्यस्याभ्यनुज्ञानात् सिजन्तत्वं स्यादिति तद्वर्जनं सार्थकं भवति । फलं चास्य मासेन पूर्वायेति वाक्ये यथा "तृतीयान्तात् पूर्वापरं योगे" [१. ४. १३.] इति पूर्वशब्दस्य सर्वादित्वनिषेधेन 'स्मै' आदेशो न भवति तथा 'मासपूर्वाय'इत्यत्र "ऐक्यार्थे" [३. २. ८.] इति समासान्तःपातिन्यास्तृतीयाया लुप्यपि प्रकृतन्यायसहकारेण तृतीयान्तत्वे लब्धे सर्वादित्वनिषेधो भवति । एवं 'पापचीति' इति यङ्लुबन्ते *लुबन्तरङ्गेभ्यः* इति न्यायात् पूर्वमेव यङो लुपि प्रकृतन्यायबलाद् यङन्तत्वनिबन्धनं "सन्यङश्च" [४. १. १३.] इति द्वित्वं भवति । अयं च क्वचिदप्रवृत्तिरपि भवति, तत्र यौधेयशब्दस्य "द्रेरञणोऽप्राच्यभर्गादेः" [६. १. १२३.] इति अञ्लोपविधायकसूत्रस्थभर्गादिगणे पाठ एव ज्ञापकः, तथाहि–युधा नाम काचित्, तस्या अपत्यानीत्यर्थे "द्विस्वरादनद्याः" [६. १. ७१.] इत्येयणि–यौधेया इति, ततः स्त्रीत्वविशिष्टशस्त्रजीविसङ्घविवक्षायां "यौधेयादेः" [७. ३. ६५.] इत्यञि "अणञेय०" [२. ४. २०.] इति ङ्यां–यौधेय्य इति । अत्राञो लुबभावार्थं "द्रेरञणोऽप्राच्यभर्गादेः" [६. १. १२३.] इति सूत्रे भर्गादिगणे यौधेयशब्दपाठः कृतः, तेनाञो लुगभावे यौधेयीनां संघो 'यौधेयम्' इत्यत्र "सङ्घघोषाङ्कलक्षणेऽञ्यञिञः" [६. ३. १७२.] इत्यनेनाण् भवति । अत्र कैश्चिदञो लुगभावस्य फलमञ्निमित्ताया वृद्धेरनिवृत्तिरपीत्युक्तम्, तच्चिन्त्यम्–यतो यौधेयशब्दादेयणन्तादेवाञ् भवतीति अञं विनापि वृद्धिरिह पूर्वसिद्धैव, ततश्चाञन्तलक्षणस्याणो विधानमेव भर्गादिगणे यौधेयशब्दपाठस्य फलम् । यदि चायं न्यायः स्थिरः स्यात् तर्हि अञो लुपि सत्यामपि न्यायसाहाय्येनाञन्तनिमित्तोऽण् स्यादेवेति तदर्थं भर्गादिगणे यौधेयशब्दपाठो व्यर्थ एव स्यात्, तथा च स्वसार्थक्याय स प्रकृतन्यायानित्यत्वं ख्यापयति, ततश्च कदाचिदेतन्न्यायाप्रवृत्त्याण् न स्यादित्याशङ्कानिवृत्त्यर्थं तस्य [भर्गादिगणे यौधेयशब्दपाठस्य] सार्थक्यम् । यदि चात्राञो लुप् स्यात् तर्हि तत्र "सङ्घघोषाङ्क०" [६. ३. १७२.] इत्यस्याप्राप्त्या "गोत्राददण्डमाणवशिष्ये" [६. ३. १६९.] इत्यकञ् स्यात्, यथा 'पञ्चालस्य राज्ञोऽपत्यानि' इत्यर्थे "राष्ट्रक्षत्रियात् सरूपाद् राजापत्ये द्रिरञ्" [६. १. ११४.] इत्यञि "बहुष्वस्त्रियाम्" [६. १. १२४.] इति तल्लुपि च 'पञ्चालाः' इति, ततः पञ्चालानां सङ्घ इत्यर्थे प्रकृतन्यायस्यानित्यत्वादञन्तत्वाभावेन "सङ्घाङ्क०" [६. ३. १७२.] इत्यस्याप्राप्त्या "गोत्राददण्ड०" [६. ३. १६९.] इत्यकञि पाञ्चालकमिति भवति, तथेहापि अकञेव स्यादिति तन्नाचार्यस्येष्टमित्येतदर्थमेव प्रत्ययलक्षणकार्यस्य प्रकृतन्यायलभ्यस्यानित्यत्वज्ञापनाय भर्गादिगणे यौधेयशब्दः पठित इति ॥ ९ ॥

## *प्रत्ययलोपेऽपि प्रत्ययलक्षणं कार्यं विज्ञायते* ॥ ९ ॥

त०—लोपशब्दार्थो वृत्तौ प्रतिपादितः । प्रत्ययस्य लोपेऽदर्शने सत्यपि प्रत्ययलक्षणं–प्रत्ययनिमित्तं कार्यं विज्ञायते–अनुज्ञायत इति न्यायार्थः । अत्र द्विधा प्रत्ययग्रहणं दृश्यते, तत्र प्रथमप्रत्ययग्रहणाभावे–लोपे सति प्रत्ययलक्षणं कार्यं विज्ञायत इतीयत्युच्यमानेऽपि प्रत्यासत्त्या प्रत्ययस्यैव लोपो विज्ञास्यत एवेति तन्न कार्यमिति चेत्? अत्रोक्तं महाभाष्ये–"प्रत्ययलोपे प्रत्ययलक्षणम्" [पा० सू० १. १. ६२.] इति सूत्रे–"लोपे प्रत्ययलक्षणम्' इतीयत्युच्यमाने सौरथी वैहतीति गुरुपोत्तमलक्षणः ष्यञ् प्रसज्येत" इति । अयमाशयः–तथा सति कस्यापि लोपे सत्यपि प्रत्ययस्य लक्षणं–दर्शनं प्रादुर्भाव इत्यर्थो विज्ञायेतेति सुरथस्य विहितस्य चापत्यं वृद्धं स्त्रीत्यर्थे "अत इञ्" [६. १. ३१.] इतीञि, सुरथशब्दस्य रमुधातुनिष्पन्नत्वाद् विहतशब्दस्य च हन्धातुनिष्पन्नत्वात् तयोः सम्बन्धिनोर्मकार-नकारयोः सत्त्वे गुरुपान्त्यत्वाद् यथा "अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः" [२. ४. ७८.] इति ष्यस्य प्राप्तिस्तथा तयोर्लोपे सत्यपि स्यादिति । प्रत्ययग्रहणे कृते तु विरुद्धत्वान्नायमर्थो भवति–"प्रत्ययस्य लोपे सति तस्यैव पुनः प्रादुर्भावः" इति, एवं हि

लोपविधानमनर्थकं स्यात्, तस्मात् प्रत्ययलोपे सत्यपि प्रत्ययनिमित्तं कार्यं भवतीति वाक्यार्थ आश्रीयते। पुनराशङ्कितस्य स्थापनं इत्थं कृतम्–"नैष दोषः। नैवं विज्ञायते–लोपे प्रत्ययलक्षणं भवति–प्रत्ययस्य प्रादुर्भाव इति, कथं तर्हि प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवति" इति। अयमाशयः–प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि प्रत्यये भवतीत्यर्थस्य व्याख्यानात् प्रतीयमानत्वेन सौरथी वैहतीत्यत्र प्रत्ययलोपाभावेन प्रकृतन्यायविषयाभावान्नास्ति प्रथम'प्रत्यय'ग्रहणस्य प्रयोजनमिति। तत उक्तम्–"इदं तर्हि प्रयोजनम्, सति प्रत्यये यत् प्राप्नोति तत् प्रत्ययलक्षणेन यथा स्यात्, लोपोत्तरकालं यत् प्राप्नोति तत् प्रत्ययलक्षणेन मा भूदिति। किं प्रयोजनम्? 'ग्रामणिकुलम्, सेनानिकुलम्' औत्तरपदिके ह्रस्वत्वे कृते "ह्रस्वस्य पिति कृति तुक्" [ पा० सू० ६. १. ७१. ] इति तुक् प्राप्नोति, स मा भूदिति" इति। अयमाशयः–प्रत्ययग्रहणे कृते प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते, तथा च प्रत्यये सति यत् कार्यं दृष्टं तल्लोपेऽपि भवति। न च 'ग्रामणीः सेनानी'रित्यत्र प्रत्यये सति तागमो दृष्टः, तस्मिन् समये ह्रस्वाभावात्, इति कृते क्विलोपे ह्रस्वत्वे सति प्राप्तस्तुक् न भवति; एतदर्थं प्रथमप्रत्ययग्रहणमावश्यकमिति। पुनः शङ्कितम्–"यदि तर्हि यत् सति प्रत्यये प्राप्नोति तत् प्रत्ययलक्षणेन भवति, लोपोत्तरकालं यत् प्राप्नोति तन्न भवति,–'जगत् जनगत्' इति, अत्र तुक् न प्राप्नोति लोपोत्तरकालं ह्यत्र तुगागमः। तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन" इति। अयमाशयः–प्रत्यये सति जगदित्यादौ तागमो न भवति, किन्तु प्रत्ययलोपस्यान्तरङ्गत्वात् पूर्वं प्रवृत्तौ प्रकृतन्यायेन प्रत्ययलक्षणकार्यानुज्ञया तागमो भवति, स च पूर्वोक्तार्थस्वीकारे न स्यादिति दोषसद्भावादुक्तार्थलाभाय प्रत्ययग्रहणं नावश्यकमिति। ततः प्रत्याक्षिप्तम्–"कस्मान्न भवति–ग्रामणिकुलम्, सेनानिकुलम्? बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक्। *असिद्धं बहिरङ्गमन्तरङ्गे* इति। अयमाशयः–आद्ये प्रत्ययग्रहणाभावेऽपि 'ग्रामणिकुलम्, सेनानिकुलम्' इत्यादौ ह्रस्वत्वस्य कुलादिरूपोत्तरपदापेक्षत्वेन बहिरङ्गत्वं, तागमस्य च प्रत्ययमात्रापेक्षत्वेनान्तरङ्गत्वमिति तागमदृष्ट्या ह्रस्वस्यासिद्धतया न तत्र तागमप्राप्तिरिति न तन्निवारणार्थमाद्यप्रत्ययग्रहणमावश्यकमिति। ततः सिद्धान्तितम्–"इदं तर्हि प्रयोजनम्, कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात्, एकदेशलोपे मा भूदिति 'आघ्नीत, संरायस्पोषेण ग्मीय इति" इति। अयमाशयः–कृत्स्नप्रत्ययलोपे एव प्रत्ययलक्षणं कार्यं यथा स्यान्न तु 'प्रत्ययैकदेशलोपे' इत्यस्यार्थस्य लाभायाद्यप्रत्ययग्रहणमावश्यकम्, तेन प्रत्ययैकदेशलोपे प्रत्ययलक्षणं न भवति। इत्थमाद्यप्रत्ययग्रहणसार्थक्यं प्रदर्श्य द्वितीयप्रत्ययग्रहणस्यापि सार्थक्यमित्थं सशङ्कं प्रदर्शितम्–"अथ द्वितीयप्रत्ययग्रहणं किमर्थम्? प्रत्ययलक्षणं यथा स्यात्, वर्णलक्षणं मा भूदिति, गवे हितं–गोहितम्, रायः कुलं–रैकुलमिति" इति। एतदाशयः कैयटेनेत्थं वर्णितः–"प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययस्वरूपाश्रयणेन वर्णरूपताऽऽश्रयणेन वा तत् सर्वं स्यात्, सर्वनाम्नो वस्तुमात्रपरामर्शित्वात्। प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे सति भवति, न वर्णरूपतानिमित्तम्" इति। तथा च 'गवे हितम्' इत्यर्थे समासे "ऐक्यार्थे" [३.२.१८.] इति विभक्तिलुकि सत्यां वर्णनिमित्तं कार्यमवादेशः प्रत्ययलक्षणेन न भवति, एवं 'रायः कुलमित्यर्थे समासे विभक्तिलुकि वर्णनिमित्त आयादेशो न भवतीति। अयं च तत्रत्यः [ "प्रत्ययलोपे प्रत्ययलक्षणम्" १. १. ६२. इति सूत्रस्थो ] विचारः स्वमतेऽस्मिन् न्यायेऽपि सङ्गत इति संग्राह्य एव। एवं प्रकृतन्यायस्य स्थानिवद्भावेन–गतार्थत्वविषयकस्तत्रत्यविचारः स्वमतेऽस्य लुगर्थत्ववर्णनेन गतार्थ इवेति नात्र प्रदर्शितः, तन्मते च वर्णविधौ स्थानिवद्भावाभावेन यत्र एकवर्णमात्रस्यैव प्रत्ययत्वं तत्र तल्लोपेऽपि तन्निमित्तं कार्यं स्यादित्यर्थं प्रत्ययलक्षणवचनाश्रयणम्। यद्यपि वर्णाश्रये प्रत्ययलक्षणमपि नेष्टं तथापि तस्य वर्णप्राधान्ये एव निषेधकत्वम्, स्थानिवद्भावनिषेधस्त्वप्राधान्येनापि वर्णाश्रयणे प्रवर्तेत इति यत्र प्रत्ययस्य प्राधान्यं वर्णस्य चाप्राधान्यं तत्र प्रत्ययलक्षणनिषेधिनो वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति वचनस्यावसराभावात् प्रत्ययलक्षणार्थं सूत्रमिति सिद्धान्तितम्। एतदपि स्वमते न प्रतिकूलम्। अन्यश्च विशेषो विस्तरभयान्न प्रपञ्चितः॥ ९॥

## *विधि-नियमयोर्विधिरेव ज्यायान्* ॥ १० ॥

**सि०**—विधिः–अप्राप्तप्रापणम्, नियमः–पाक्षिकप्राप्तौ नित्यप्राप्तिसाधनम्, तयोरुभयोरेकत्र विषये सम्भवे सति विधिरेव ज्यायान्–प्रशस्यतमः, स एव समाश्रयणीय इति न्यायार्थः। अत्र च मूलम्–नियमेऽश्रुताया अन्यनिवृत्तेः कल्पनरूपं गौरवमेव। शास्त्रेषु व्याख्याया बुद्धिबलापेक्षत्वेनानियतत्वाद् यथारुचि नियमपरत्वेन विधिपरत्वेन च व्याख्यानमाश्रीयते, इह च व्याकरणे तस्या नियमनायायं न्याय आश्रीयते। अथवा सर्वशास्त्रसाधारणोऽयं न्यायः, मीमांसकादिभिरपि समादृतत्वात्, विवरिष्यते च मीमांसकसमयः संक्षेपेण विवरणे। तथा च "प्रत्यभ्यतेः क्षिपः" [ ३. ३. १०२. ] इत्यत्र "क्षिपींत् प्रेरणे" इत्ययं तौदादिको गृह्यते, तस्योभयपदित्वेन परस्मैपदस्य पक्षे प्राप्तत्वात् सर्वदा प्राप्तिरनेन सूत्रेण विधीयते, "क्षिपींच् प्रेरणे" इति केवलपरस्मैपदी दैवादिको न ग्राह्यः, तस्मात् परस्मैपदस्यैव प्राप्तत्वेन पुनरनेन विधाने 'प्रत्यभ्यतिभ्य एव परस्मैपदं नोपसर्गान्तरपूर्वान्नवानुपसर्गाद्' इति नियमाकारः स्यात्, स चानिष्ट इति विधिरेवाश्रीयते॥ १०॥

***विधि-नियमयोर्विधिरेव ज्यायान्* ॥ १० ॥**

त०—त्रिधा हि शास्त्रं दृश्यते-विधिर्नियमः परिसंख्या च, तेषां च लक्षणं जैमिनिना कारिकया संगृहीतम् । तथाहि–

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥"

तथा चात्यन्ताप्राप्तस्य प्राप्तिफलकं विधिशास्त्रं, यथा–'सोमेन यजेत' इत्यादि, यागस्य केनापि वचनान्तरेण प्राप्त्यभावे सति तत्प्रापकत्वात् । नियमस्तु–'व्रीहीनवहन्ति' इत्यादिः, अवघातस्य तण्डुलनिष्पादकत्वं शास्त्रमात्रसाध्यं नास्ति, किन्तु लोकतोऽपि सिद्धम्, तथा च लोकसिद्धत्वाद् विधातुमनर्होऽपि तण्डुलनिष्पत्तयेऽवघातः शास्त्रेण विधीयमानो नियमाय भवति अवघातेनैव तण्डुलान्निष्पादयेत्, न तु नखविदलनादिना । तथा च पक्षे प्राप्तोऽवघातः शास्त्रे नियम्यते, तथा चावघातनिष्पन्नैरेव तण्डुलैः सम्पादितो यागोऽपूर्वजननायालं, न तु नखविदलिततण्डुलनिष्पन्न इति लभ्यते । प्रकृतोद्देशेऽन्यत्र च शास्त्रविधेयस्यान्यत एव प्राप्तौ प्रकृतोद्देश्ये विधानं परिसंख्या । व्याकरणशास्त्रे च प्रायः परिसंख्यैव नियमपदेन व्यवह्रियते । परिसंख्यायां च दोषत्रयं मीमांसकैरुक्तम्–प्राप्तबाधः, अन्यनिवृत्तिः, परार्थपरिकल्पना च । तथा च "प्रत्यभ्यतेः क्षिपः" [ ३. ३. १०२. ] इत्यत्र परिसंख्यारूपनियमः समाश्रीयेत तर्हि अनुपसर्गपूर्वकात् प्राप्तस्य परस्मैपदस्य बाधः, अन्योपसर्गपूर्वकान्निवृत्तिः, अश्रुतस्यैवकारार्थस्य [ परार्थस्य ] लाक्षणिकस्य कल्पना चेति दोषत्रयं स्यादिति तदपेक्षया विधिरेव ज्यायान् । नियमेऽप्यन्यनिवृत्तिरूपस्याश्रुतार्थस्य कल्पनं भवत्येवेति तत्रापि गौरवमेवेति विधिरेव सर्वथा ज्यायानिति तत्त्वम् । प्रकृते च "प्रत्यभ्यतेः क्षिपः" [ ३. ३. १०२. ] इत्यत्र नियमस्वीकारे तदुपसर्गवर्जितस्य क्षिपेः प्रयोगाभाव एव प्रसज्येत । कुत इति चेच्छृणु–एतदुपसर्गपूर्वकादेव परस्मैपदमिति नियमे सत्यन्योपसर्गपूर्वकादनुपसर्गाच्च परस्मैपदं न स्यात्, विधायकसूत्राभावाच्चात्मनेपदं न स्यादिति निरुपसर्गादन्योपसर्गपूर्वकाच्चाख्यातप्रयोगो नैव स्यादित्यतोऽप्यत्र विधिरेव ज्यायान् इति ॥ १० ॥

## *अनन्तरस्यैव विधिर्निषेधो वा* ॥ ११ ॥

सि०—प्रत्यासत्तिन्यायमूलोऽयं न्यायः, निषेधशास्त्रस्य निषेध्याकाङ्क्षतया सामीप्यात् पूर्वमुपस्थितस्यानन्तरस्य विधेर्निषेधेन चारितार्थ्ये सति तद्भिन्नस्य व्यवहितस्य निषेधे सामर्थ्याभाव एवात्र मूलमिति भावः । एवं विधिपक्षेऽपि समीपस्थस्य विधेरेव केनापि निषिद्धस्य प्रतिविधानम्, नित्यविहितस्य वा विकल्पेन विधानं युक्तं, न तु व्यवहितस्य, विलम्बोपस्थितिकत्वाद्, इति विधेरप्यनन्तरस्यैव संभव इति तत्त्वम् । तत्रानन्तरनिषेधं दृष्टान्तीकृत्यैवानन्तरविधिरिह सिसाधयिषित इति पूर्वं निषेध एवोदाह्रियते, यथा "नामन्त्र्ये" [ २. १. ९२. ] इति सूत्रेण "नाम्नो नोऽनह्नः" [ २. १. ९१. ] इत्यनन्तरसूत्रविहितस्यैव नकारलुको निषेधः क्रियते, न तु व्यवहितैः "रात् सः" [ २. १. ९०. ] इत्यादिसूत्रैर्विहितानां सकारलुगादीनाम् । एवं विधिरपि, यथा–"क्लीबे वा" [ २. १. ९३. ] इत्यनन्तरसूत्रविहितस्य नकारलुको निषेधस्यैव विकल्पेन विधानं क्रियते, न तु ततः पूर्वैः "रात् सः" [ २. १. ९०. ] इत्यादिसूत्रैर्विहितानां सकारलुगादीनां विकल्प इति । अत्रोक्तं प्राचीनैः–"यद्यपि शब्दशक्तिरेवैषा–यद् विधिर्निषेधो वाऽनन्तरस्यैव स्यादिति, परं शब्दशक्तेरेवानुवाद्ययं न्यायो *विचित्राः शब्दशक्तयः*इत्यादिन्यायवद्" इति, तत्र शब्दशक्तिरित्यस्य शब्दस्वभाव इति तात्पर्यमवधारयामः, नहि वृत्तिरूपया शक्त्या तस्यान्येन सह सम्बन्धो नियन्तुं शक्यते, 'विचित्राः शब्दशक्तयः' इत्यत्रापि शब्दशक्तिस्वभाव एव शब्दशक्तिपदेन ग्राह्य इति विवेचयिष्यते तत्रैव ॥ ११ ॥

***अनन्तरस्यैव विधिर्निषेधो वा* ॥ ११ ॥**

त०—"नामन्त्र्ये" [ २. १. ९२. ] इत्यादिसूत्रे निषेध उक्तः, किन्तु निषेध्यस्वरूपं नोक्तम्, तत्र किं पूर्वोक्तानां सर्वेषां विधीनामयं निषेध उत यस्य कस्यचिदेकस्य, सर्वेषां निषेधोऽनिष्टः, यस्य कस्यचिदिति पक्षे च कस्येति न निर्णीतम्; एवं विधेरपि यत्र न विशिष्य विज्ञानं तत्रानिश्चय इति तन्निश्चयायायं न्याय उपादीयते; यत्र च विधेरपवादरूपस्य बाध्यशास्त्रद्वयमध्ये पाठः, ते च शास्त्रे व्यवहिते अव्यवहिते च 'तत्र*मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्* इति न्यायस्यास्य च विषयतायां सत्यामयं न्याय एवं बलीयानिति "अष्टाभ्य औश्" [ पा० सू० ७. १. २१. ] इति सूत्रे कैयट आह । तथाहि–'अष्टपुत्रः, अष्टभार्यः' इत्यादौ सामासिकविभक्तिलुचि प्राप्तायाम् 'औ' आदेशस्य लुकोऽवादतया 'औ' आदेशः कथं वारणीय इत्यस्य विचारावसरे महाभाष्ये *अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा* इति न्यायेनानन्तरां "डतिष्णः संख्याया लुप्" [ १. ४. ५४. ] इति सूत्रविहितामेव लुपम् 'औ' आदेशो बाधिष्यते, न तु सामासिकलुचमिति भाष्ये निर्णीतम् । तत्र *मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते* इति न्यायप्रसक्तिरायाता, यतः पाणिनीये तन्त्रे द्वितीयाध्याये सामासिको लुग् विहितः, सप्तमाध्याये च विभक्तिलुप्, सा च 'औ' आदेशस्यानन्तरं पाठिता, तत्र द्वयोर्न्याययोः प्राप्तौ केन प्रवर्त्तितव्यमित्यस्य विचारे–"नैष दोषः, यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहित-

स्मृत्युपारूढस्य पूर्वस्य बाधो युक्तः, इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुब् महता यत्नेन स्मरणीयोऽनन्तरस्त्वनुभवनीय इति स एव बाध्यते । अथवा सत्यामसत्यां चोपलब्धौ प्रत्यासत्त्याऽनन्तरस्यैव बाधेन भाव्यम् । एतच्च लुकः समकक्षत्वमभ्युपगम्योक्तम् । भिन्नकक्षौ त्वेतौ लुकौ, एकस्य सर्वत्र प्राप्त्याऽपरस्य क्वचित्प्राप्त्या" इति, स्वमते तु यद्यप्यत्र विषये द्वयोर्न्याययोः प्राप्तिर्नास्ति, यतो विभक्तिलुप् सामासिकलुक् च द्वे अपि उत्तरपठिते एव, तथापि द्वितीयया युक्त्या [ समकक्षत्व-विषमकक्षत्वरूपया ] प्रकृते निर्वाह इति बोध्यम् । अथवा लक्ष्यानुरोधादपि व्यवस्थेति नागेशेन पक्षान्तरमुक्तम् । तथा च क्वचित् स्वरितत्वप्रतिज्ञानात् क्वचित् सामर्थ्येन चायं न्यायोऽपि बाध्यत इति नागेशेन परिभाषेन्दुशेखरे विवेचितम् ॥ ११ ॥

## ॥ पर्जन्यवल्लक्षणप्रवृत्तिः ॥ ॥ १२ ॥

सि०—लक्षणानां-सूत्राणां, प्रवृत्तिः-स्वलक्ष्ये प्रवर्त्तनं, पर्जन्यवत्-मेघवद् भवति, यथा पर्जन्यो वर्षासमये कुत्र जलमपेक्ष्यते कुत्र नेत्यविचार्यैव जले वा स्थले वा ऊने वा पूर्णे वा सर्वत्र वर्षति तथैव लक्षणमपि मम प्रवृत्त्याऽत्र किमपि वैलक्षण्यं रूपभेदादि स्यान्नवेत्यविचार्यैव प्रवर्त्तत इति भावः । स्वोद्देश्यव्यापकेन हि लक्षणेन भवितव्यमिति सविशेषणे स्वोद्देश्ये सति फलमनपेक्ष्यैव प्रवर्त्तते व्यापकत्वलाभायेत्यव्याप्तिदोषाभाव एव तस्य तथा प्रवृत्तौ मूलम् । तथा च गोपायति, पापच्यते, चिकीर्षति, पुत्रीयतीत्यादावायादिप्रत्ययानामदन्तत्वेन तदन्तधातूनामदन्तत्वात् शव आकाङ्क्षाया अभावेऽपि "कर्त्तर्यनद्भ्यः शव्" [ ३. ४. ७१. ] इति शव् सिध्यति । एवं दधि अत्रेत्यत्र ह्रस्वस्यापि "ह्रस्वोऽपदे वा" [ १. २. २२. ] इति पुनर्ह्रस्वः, यद्यपि ह्रस्वविधानस्यात्र फलान्तरमप्यस्त्येव, यतो ह्रस्वविधिसामर्थ्यादेवात्र यत्वादिसन्धिकार्यं न भवति; तथापि तन्न तस्य साक्षात् फलमपि तु परम्परयेति प्रकृतन्यायविषयत्वं भवितुमर्हत्येव । पर्जन्यवदित्युपमया च तात्कालिकफलाभाव एव सादृश्यमुपादीयते, यथा ऊने पूर्णे च समानरूपेण वर्षतः पर्जन्यस्य वर्षायाः पूर्णे तात्कालिकं फलं नास्ति किन्तु स्थायिफलं तु तत्रापि भवत्येव, ततो निर्गतेन पयसा धान्यादिसिञ्चनरूपम् । लक्ष्यानुरोधाच्चास्य क्वचिदप्रवृत्तिरपि भवति, अत एव "समानानां तेन दीर्घः" [ १. २. १. ] इति सूत्रे समानानामिति बहुवचनस्याग्रेतनसूत्रसमानव्याप्त्यर्थं प्रयोगः । तदुक्तं तत्रैव सूत्रे बृहद्वृत्तौ—"बहुवचनं व्याप्त्यर्थम्, तेनोत्तरसूत्रेण ऌ-ऋतोऽपि ऋ-ऌति ह्रस्वो भवति-कृऌऋषभः, होतृऌकारः, अन्यथा 'ऋस्तयोः' [ १. २. ५. ] इति परत्वाद् ऋरेव स्यात्" इति । अयमाशयः—समानानामिति पदे बहुवचनस्य व्याप्त्यर्थत्वेन तस्यैवाग्रेऽनुवर्त्तनात् समानानां यद् यत् कार्यं प्राप्तं तत् सर्वं स्यादित्यर्थलाभात् "ऋ-ऌति ह्रस्वो वा" [ १. २. २. ] इति सूत्रमत्र प्रवर्त्तते, अन्यथा "ऋस्तयोः" [ १. २. ५. ] इत्यस्यैव प्रवृत्तिः स्यात् परत्वादिति बहुवचनस्य फलमुक्तम्, तस्यायमाशयः—यद्यपि ह्रस्वस्य स्वत एव वर्तमानत्वेन ह्रस्वविधाने न साक्षात् फलं तथापि कार्यान्तरबाधनाय तद् विधीयते, तच्च प्रकृतन्यायेनैव सिद्धमिति किं तदर्थं व्याप्त्यर्थकबहुवचनाश्रयणेन, ह्रस्वस्य च वैकल्पिकत्वेन पक्षे "ऋस्तयोः"[ १. २. ५. ] इत्यस्यावकाशलाभसंभवात्, सति चास्य न्यायस्यानित्यत्वे ह्रस्वस्य ह्रस्वो न स्यादिति बहुवचनसामर्थ्याद् भवति, तथा च तेन बहुवचनेन प्रकृतन्यायानित्यत्वं विज्ञायते । एतच्च प्राचामनुरोधेन, अस्माभिस्तु "स्पर्धे [ ७. ४. ११९. ] इति परिभाषाबाधनार्थं बहुवचनमिति वर्णितं न्यासानुसन्धाने, तच्च तत एवावलोकनीयमिति ॥ १२ ॥

## ॥ पर्जन्यवल्लक्षणप्रवृत्तिः ॥ ॥ १२ ॥

त०—पर्जन्यो यथाऽसम्भवत्स्वकृतविशेषे जलपूर्णेऽपि प्रवर्त्तते तथा शास्त्रमप्यसम्भवत्स्वकृतविशेषेऽपि प्रवर्त्तत इति न्यायार्थः । अत्र च शास्त्रस्य स्वीयोद्देश्यतावच्छेदकावच्छेदेन प्रवृत्तिरेव मूलमिति वृत्तौ प्रतिपादितमेव । न च *नहि प्रयोजनमनुद्दिश्य कस्यचित् प्रवृत्तिः* इति न्यायेन प्रवृत्तिः प्रयोजनव्याप्यैवेति प्रयोजनं विना कथं शास्त्रप्रवृत्तिरनुमोद्यत इति वाच्यम्, परम्परया प्रयोजनस्य सर्वत्र दृश्यमानत्वात्, साक्षात् तत्कृतरूपभेदरूपप्रयोजनाभावे सत्यपि प्रवृत्तिरिति हि प्रकृतन्यायस्वारस्यम् । "इको झल्" [ पा० सू० १. २. ९. ] इति सूत्रे महाभाष्येऽपि चायं न्याय उक्तः केनचिद् भेदेन, तथाहि-"दीर्घाणामपि दीर्घवचन एतत् प्रयोजनं-गुणो मा भूदिति । कृतकारि खल्वपि शास्त्रं पर्जन्यवत्, तद्यथा—पर्जन्यो यावदूनं पूर्णं च सर्वं वर्षति" इति । तथा च दीर्घस्यापि दीर्घवचने तत्कृतरूपे विशेषाभावेऽपि सूत्रान्तरप्रवृत्तिविघातरूपं प्रयोजनान्तरमस्त्येवेति निष्प्रयोजनत्वाभावोऽप्येवंरूपेण ग्रन्थेन दृढीकृतः । कृतकारित्वरूपमेव च तत्र साक्षात्प्रयोजनशून्यत्वमिति । अत एव 'ऊखतुः' इत्यादौ द्वित्वे सति पूर्वमेव "ह्रस्वः" [ ४. १. ३९. ] इति ह्रस्वे ततो दीर्घः सिध्यति, अन्यथा पूर्वं ह्रस्वप्रवृत्तेः प्रयोजनाभावेन दीर्घे सति ततो ह्रस्वे रूपं न सिध्येत् । यदि चायं न्यायो न स्यात् तदा पूर्वं ह्रस्वस्य ह्रस्वकरणे फलाभावेनैव ह्रस्वाप्रवृत्तिरिति *वार्णात् प्राकृतम्* इति न्यायस्यापि नावसरः, स्वीकृते च न्याये दीर्घह्रस्वयोर्युगपत् प्राप्त्या *वार्णात् प्राकृतम्* इति न्यायसहकारेण पूर्वं ह्रस्वो ततो दीर्घे *लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते* इति न्यायेन पुनर्ह्रस्वत्वं न भवतीति रूपसिद्धिर्भवति, विवेचितं चैतदन्यत्र विस्तरेणेति ॥ १२ ॥

### ※न केवला प्रकृतिः प्रयोक्तव्या※ ॥ १३ ॥

सि०—प्रकृतिर्द्विधा–नामरूपा धातुरूपा च, सा केवला–प्रत्ययरहिता न प्रयोक्तव्या । नामार्थमात्रविवक्षायां केवलस्य नाम्नः, धात्वर्थमात्रविवक्षायां च केवलस्य धातोरपि च प्रयोगे प्राप्ते नियमोऽनेन न्यायेन क्रियते–न केवला प्रकृतिः प्रयोक्तव्या, किन्तु यथायोगं प्रत्ययसहितैवेति । एवं च केवलं नामार्थविवक्षायामपि साधुत्वार्थिका प्रथमा प्रयुज्यते, केवलधात्वर्थविवक्षायामपि घञादयो धात्वर्थाभिधायका भावार्थे त्यादयो वा प्रयुज्यन्ते । केचित् त्वाहुः–"धातोः प्रत्ययान्तत्वे विवादाभावेन केवलत्वशङ्काया अभावान्नाम्नस्तु वक्ष्यमाणरीत्या प्रत्ययोत्पादे विवादस्य सत्त्वेन केवलत्वाशङ्कासद्भावान्नामरूपैव प्रकृतिरिहाधिक्रियते" इति । तत्र केवलधात्वर्थविवक्षायां धातोरपि प्रयोगः कुतो नेति रूपेण संभवतो विवादस्य सत्त्वेन धातोः प्रत्ययान्तत्वे विवादाभावेनेति न किञ्चिदेतत् । यच्च 'कटं करोति भीष्ममुदारं दर्शनीयम्' इत्यत्र कटस्यैव कर्मत्वेन तत एव द्वितीया स्यात्, भीष्मादिभ्यो न स्यादिति प्रकृतन्यायेन तेभ्योऽपि द्वितीयोत्पाद्यते सामानाधिकरण्येन विशेषणसिद्धये इति प्रकृतन्यायोदाहरणमुक्तं, तदपि न रोचयामहे–सामानाधिकरण्यार्थमिति द्वितीयोत्पत्तौ हेतुर्भवितुमर्हति, न तु विभक्त्युत्पत्तौ, विभक्त्युत्पत्तौ च प्रकृतन्यायो हेतुः । तथा च प्रथमाविभक्त्युत्पत्त्यापि प्रकृतन्यायोदाहरणत्वसिद्धौ द्वितीयोत्पत्तिचर्चा प्रकृतानुपयोगिनी । यच्चेश्वरसुहृदां निर्धनत्वेऽपीश्वरधनेनैव धनवत्त्वमित्यादिदृष्टान्तप्रदर्शनं, तदपि द्वितीयोत्पत्तिकारणमेव, न प्रकृतन्यायोपकारि । यदपि च प्रकृतन्यायेन प्रथमैवानेतुं शक्यत इति सयुक्तिकं प्रतिपाद्य न्यायार्थस्यान्यथा व्याख्यानम्–क्रियारहिता प्रकृतिर्न प्रयोज्येति; तदपि व्याकरणशास्त्राधिकारबहिर्भूतम्, पदसंस्कारमात्राधिकारत्वाद् व्याकरणस्य, न केवला प्रकृतिरित्यस्य 'प्रत्ययरहिता' इत्यर्थस्यैव योग्यत्वात् संयोगवद् विप्रयोगस्यापि सम्भावितसहचारवतैव योजनीयत्वात् । प्रत्ययापेक्षं हि प्रकृतित्वं, कैवल्यं च प्रकृतेः प्रत्ययराहित्यमेव न, क्रियाराहित्यं, क्रियाराहित्ये वाक्यत्वं न स्यादिति कथयितुं शक्यते, न पदत्वं न स्यादिति, ततश्च "यथा कटस्य करोतिना सम्बन्धस्तथा भीष्मादीनामपि, यथैव ह्ययं कटं करोति तथा तद्गतान् भीष्मादिगुणानपि, तत्र यद् यत् करोतिना व्याप्तुमिष्टं तत् सर्वं द्रव्यं गुणश्च कर्मेति सर्वेषां पृथक्कर्मत्वे सर्वेभ्यो द्वितीया, पश्चात् त्वेकवाक्यतया विशेषणविशेष्यभाव इति विशेषणानां विशेष्यसमानविभक्त्युपपादनार्थोऽयं न्यायः" इत्युक्तं, तदपि न प्रकृतन्यायार्थानुरोधीति विवेचितमन्यत्र, प्रकृतन्यायेन केवलप्रकृतेः प्रत्ययरहितायाः प्रयोगमात्रस्यैव नियम्यत्वेन विभक्तिविशेषनियमने व्यापाराभावादिति ध्येयम् ॥ १३ ॥

### ※न केवला प्रकृतिः प्रयोक्तव्या※ ॥ १३ ॥

त०—प्रत्ययविधावुद्देश्यत्वेनाश्रीयमाणः शब्दः प्रकृतिः, सा च व्याकरणशास्त्रे द्विधैव दृश्यते–नामरूपा धातुरूपा च, द्विधाऽपि सा प्रत्ययसहितैव प्रयोक्तव्या, न तद्रहिता । प्रत्यया हि कमपि विशिष्टमर्थं प्रत्याययन्त एव प्रत्ययत्वं भजन्ते; तथा च यत्र प्रकृत्यर्थमात्रविवक्षा तत्रान्यार्थप्रत्यायनरूपप्रयोजनाभावात् तत्र प्रत्ययो न स्यात्, इति प्रकृतन्यायेन साधुत्वसम्पादिकायाः पदत्वसम्पादिकाया वा विभक्तेरवश्यं प्रयोगः साध्यते, इत्येतद्वृत्तौ प्रतिपादितम् । तत्र प्राचीनानां व्याख्यानमपि चिन्तितम् । परैश्च वैयाकरणैरस्य न्यायस्य सिद्धिर्ज्ञापकेन क्रियते । तच्च ज्ञापकं पाणिनीयमते–"परश्च" [ ३. १. २. ] इति सूत्रमेव, तथाहि–महाभाष्ये तत्र सूत्रे बहु विचारितम्–किमर्थमिदं सूत्रमिति, अक्रियमाणेऽपि हि सूत्रे प्रत्ययविधिषु पञ्चमीश्रवणात् "पञ्चम्या निर्दिष्टे परस्य" [ ७. ४. १०४. ] इति परिभाषया प्रत्ययः पर एव भविष्यति । यद्यपि तत्र षष्ठी निर्दिश्यत इति परस्य स्थाने भवतीत्यर्थः संभवति तथापि प्रकृतेः परस्य प्रत्ययस्य साधुत्वमित्येवं तत्र साधुत्वस्यैव प्रत्ययविषयस्य विधानं स्वीकरिष्यते, इत्येवमादिभिरुपायैः "परश्च" [ पा० सू० ३. १. २. ] इति सूत्रस्य वैयर्थ्यमुपपाद्य–"प्रयोगनियमार्थं तर्हि परग्रहणं कर्त्तव्यम् । अथैतस्मिन् प्रयोगनियमार्थे किमयं प्रत्ययनियमः–'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, अप्रकृतिपरो न' इति, आहोस्वित् प्रकृतिनियमः–'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या, अप्रत्ययपरा न' इति । कश्चात्र विशेषः ? "तत्र प्रत्ययनियमे प्रकृतिनियमाभावः" [ वार्तिकम् ], तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति, अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति ।+++++ अस्तु तर्हि प्रकृतिनियमः, "प्रकृतिनियमे प्रत्ययानियमः" [ वार्तिकम् ], प्रकृतिनियमे सति प्रत्ययनियमो न प्राप्नोति ।++++ "सिद्धं तूभयनियमात्" [ वार्तिकम् ], सिद्धमेतत्, कथम् ? उभयनियमात्, उभयनियमोऽयं–'प्रकृतिपर एव प्रत्ययः, प्रत्ययपरैव च प्रकृतिः' इति । किं वक्तव्यमेतत् ? नहि, कथमनुच्यमानं गंस्यते ? परग्रहणसामर्थ्यादन्तरेणापि परग्रहणं स्यादेवायं परः । पर एव स्यादित्येवमर्थं परग्रहणम्" इति । तथा परग्रहणकृतो नियमो द्विविधः सम्पद्यते 'नित्यं परः प्रत्ययो यथा स्यात् मा कदाचित् परो न प्रयोजि' इत्यर्थेनैव द्विविधो नियमः–'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलप्रत्ययः' इति । तथा च नामार्थमात्रविवक्षायामपि प्रथमा भवति, धात्वर्थमात्रविवक्षायामपि प्रथमपुरुषैकवचनं भवतीति । कटं कुरु भीष्ममुदारं दर्शनीयमिति च "अनभिहिते" [ पा० सू० २. ३. १. ] इति सूत्रे महाभाष्ये कर्मण उक्तत्वाद् द्वितीया न प्राप्नोतीति विचारेणोत्थापितं; सर्वेषां कर्मत्वेन सामानाधि-

करण्यानुरोधेन वा समाहितमिति तत्र प्रकृतन्यायविषयाभाव एवेति तत्रैव विस्तरेण प्रतिपादितम् । प्राचीनैश्चैतदुदाहरणत्वकल्पनं किमाशयेनेति न प्रतीयते, "कर्मणि" [ २. २. ४०. ] इति सूत्रे बृहद्वृत्तौ–'कटं करोति भीष्ममुदारम्' इति वर्णनप्रसङ्गेऽग्रे *न केवला०* इति न्याय उपात्तस्तावताऽस्य न्यायस्यैतदुदाहरणत्वं न स्वीकर्तव्यम्, तत्रान्योदाहरणसिद्ध्यर्थमवश्यस्वीकरणीयेनानेन न्यायेनात्र प्रथमा स्यात्, किन्तु तथा सति सामानाधिकरण्यमत्र न सेत्स्यतीति सामानाधिकरण्यार्थं द्वितीयाऽत्र योग्येति तात्पर्यात् । तथा 'अपदं न प्रयुञ्जीत' इति सिद्ध्यर्थमेव प्रकृतन्यायोपादानं, तन्निषेधानुगतो वाऽयं न्याय इति विवेचनीयं सुधीभिरिति ॥ १३ ॥

## *क्विबर्थं प्रकृतिरेवाह* ॥ १४ ॥

सि०—प्रकृतिप्रत्ययौ सहभूयार्थं कथयतः, यत्रोभावपि श्रूयमाणौ तत्रेयं व्यवस्था; यत्र च केवलं प्रकृतिः श्रूयते तत्र प्रकृतिरेव प्रत्ययस्याप्यर्थं कथयति, यत्र केवलं प्रत्ययः श्रूयते तत्र प्रकृत्या मिश्रं स्वार्थं प्रत्यय एवाह, यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायात् । यथा–क्विप्प्रत्ययः क्वापि न श्रूयते, तत्र प्रकृतिरेव तत्प्रत्ययार्थमपि कथयति, यथा–'छिद् भिद्' इत्यादौ । अस्यापत्यम् 'इः' इत्यादौ प्रकृत्यर्थसहितमपत्यार्थं केवलप्रत्यय एव कथयति । अयं च न्यायः क्विप्प्रत्ययस्थलार्थं व्यवह्रियते । प्राचीनैश्चायं न्यायोऽन्यथा व्याख्यातः, 'णिच्-क्विबन्तयोर्युष्मदस्मदोः शब्दभेदादर्थभेदाच्चाप्राप्तस्य सर्वादित्वस्य प्रापणोऽर्थोऽयं न्याय इति तेषां सारांशः । तथाहि–त्वां मां वा आचक्षाणे इत्यर्थे णिजन्तात् । क्विपि 'युष्म् अस्म्' इति मान्ताद् ङौ "टाङ्योसि यः" [ २. १. ७. ] इति प्राप्तं यत्वं बाधित्वा परत्वात् त्व-मादेशे पश्चाच्च तदकारस्य यत्वप्राप्तावपि *सकृद् गते०* इति न्यायेनाप्रवृत्तौ णिच्-क्विबन्तयोर्युष्मदस्मदोः सर्वादित्वाभावात् स्मिन्नादेशाभावे 'त्वे मे' इति स्यात्, इष्टं तु 'त्वस्मिन् मस्मिन्' इति, तदर्थं चायं न्याय उपादीयते । अस्य चार्थः–क्विबन्तयोर्युष्मदस्मदोर्योऽर्थस्तमर्थं क्विब्रहिता युष्मदस्मद्रूपा प्रकृतिरेवाह, नहि प्रकृतिं विना क्विब् भवतीति । एतेनायं भावः–अगुडित इव [ असन्नद्ध इव ] गुडितोऽपि [ सन्नद्धोऽपि ] गजो गज एवोच्यते, नहि गजं विना गुडना भवति, तथा केवलाविव णिच्-क्विबन्तावपि युष्मदस्मच्छब्दौ तावेवेष्येते, न त्वपरं किञ्चित्, एवं च केवलयोस्तयोः सर्वादित्वमस्तीति कृत्वा णिच्-क्विबन्तयोरपि सर्वादित्वं विवक्ष्यते । न चात्र शब्दभेदस्यार्थभेदस्य च साक्षादेव लक्ष्यमाणत्वादयुक्तैवेयं विवक्षेति वाच्यम्, "सिद्धिः स्याद्वादात्" [ १. १. २. ] इति सूत्रेणाभिन्नानामपि भेदविवक्षाया भिन्नानामप्यभेदविवक्षायाश्चानुज्ञानात्, कथमन्यथा पीयमानं मधु मदयतीत्यत्रैकस्यैव कर्मत्वं कर्तृत्वं चेत्याद्युपपद्यते, ततो यथा मधुनोऽभेदेऽपि भेदविवक्षा तथाऽत्र भेदेऽप्यभेदविवक्षा, ततश्च णिच्-क्विबन्तयोर्युष्मदस्मदोः केवलाभ्यां ताभ्यां सहाभेदविवक्षया सर्वादित्वाद् ङेः स्मिन्नादेशे–त्वस्मिन् मस्मिन्नित्यपि स्यात्, इति तैरुक्तम् । स चायमर्थः "मोर्वा" [ २. १. ९. ] इति सूत्रे बृहद्वृत्तावपि पक्षान्तरत्वेनोक्तः–"युवां युष्मान् आवामस्मान् वाचष्टे [इत्यर्थे] णिचि क्विपि तल्लुकि च–'युष्म् अस्म्' इति मान्तत्वम्, [ तयोः ] टाङ्योसि नित्यत्वात् त्वमादिकार्येभ्यः प्रथममेव पूर्वेण मकारस्य मत्वे–युष्मा, अस्मा, युष्मि, अस्मि, युष्मोः, अस्मोः । अथ शब्दान्तरप्राप्त्या य त्वमप्यनित्यमित्याश्रीयते तदा परत्वात् पूर्वं त्वमाद्यादेशे अकारस्य यत्वे–त्व्या, म्या, त्वि, म्यि, युव्योः, आव्योः । अथ *सकृद्गते स्पर्धे यद् बाधितं तद् बाधितमेव* इत्याश्रीयते तदा यत्वाभावे–त्वेन, मेन, युवयोः, आवयोः, त्वे, मे; अत्रासर्वादिसम्बन्धित्वाद् ङेः स्मिन्नादेशो न भवति । अथ *क्विबर्थं प्रकृतिरेवाह* इति सर्वादिसम्बन्धित्वं तदा भवत्येव स्मिन्नादेशः ।" इति । अत्रेदं वक्तव्यम्–अत्र प्रथमकल्प एवाचार्यस्य स्वाभिमतः, तत्र यद्यर्थकशब्दाभावात्, इतरेषु तु पक्षेषु यद्यर्थकाथशब्दप्रयोगेणानभिमतत्वं सूचितम्, अन्तिमपक्षे च नितरामसम्मतत्वमुचितम्, यत आचक्षाणार्थण्यन्तात् क्विपि निष्पन्नं 'युष्म् अस्म्' इति रूपं गौणत्वान्न सर्वादि भवितुमर्हति, संज्ञोपसर्जनीभूतानां सर्वादित्वस्यानिष्टत्वात् । किञ्च "सर्वादेः स्मै-स्मातौ" [ १. ४. ७. ] इति सूत्रे बृहद्वृत्तौ–"द्वियुष्मद्भवत्वस्मदां स्मायादयो न सम्भवन्तीति सर्वविभक्त्यादयः प्रयोजनम्" इत्युक्ततया 'त्वस्मिन्' इत्यादिप्रयोगाणामनिष्टत्वस्य सुतरां विज्ञानात् । अत्र च आचक्षाणण्यन्तस्थले आचष्टेरेव प्राधान्यमिति युष्मदस्मदोर्गौणत्वं स्पष्टमेवेति, न स्वमते न्यायस्येदमसाधारणं फलमिति विवृतं विवरणे ॥ १४ ॥

## *क्विबर्थं प्रकृतिरेवाह* ॥ १४ ॥

त०—अस्य न्यायस्य स्वमता प्राचीनमता च व्याख्या वृत्तौ प्रदर्शिता । न च स्वमतव्याख्यायां 'त्व-मौ प्रत्ययोत्तरपदे चैकस्मिन्' [ २. १. ११. ] इति सूत्रे बृहद्वृत्तौ आचक्षाणण्यन्ताभ्यां युष्मदस्मद्भ्यां क्विपि तत्र सर्वादित्वलाभार्थं प्रकृतन्यायोपयोगः कृतः कथं संघटेतेति वाच्यम्, तस्य परमतानुसारित्वस्य वृत्तौ प्रतिपादितत्वात् । परे तु प्रकृतन्यायेनान्तर्भूतक्विबर्थस्य सर्वादिगणमध्यगतत्वमिच्छन्ति, तच्च नास्य न्यायस्य विषयः शब्देनालाभात्, प्रकृतन्यायगतशब्देन हि यत्र क्वचन नाम्नो

धातोर्वा क्विप् विधीयते तत्र क्विपोऽश्रूयमाणत्वेन कथं तदर्थप्रतीतिरिति शङ्काया निवृत्तिमात्रं क्रियते, न तु तत्र क्विवर्थविवक्षायामपि स्वाभाविकार्थप्रयुक्तं कार्यम्, क्विपोऽश्रूयमाणत्वेऽपि रूपादिभेदस्य स्पष्टमुपलभ्यमानत्वेन संज्ञोपसर्जनीभूतस्य च सर्वादित्वव्युदासेन क्विवन्तस्य आचक्षाणार्थे वर्त्तमानस्य सर्वादित्वसिद्ध्यसंभवात् । प्रदर्शितं हि महता ग्रन्थेन संज्ञाभूतानामुपसर्जनानां च सर्वादीनां सर्वादित्वमूलकार्यानौचित्यमाचार्येण स्वयमेव "सर्वादेः स्मै-स्मातौ" [ २. १. ११. ] इति सूत्रे महान्यासे । तथा चात्र 'युष्म् अस्म्' शब्दयोः क्विवन्तयोः प्रकृतित्वलाभेऽपि तत्प्रयुक्तान्यन्यानि कार्याणि भवन्तु नाम, सर्वादित्वप्रयुक्तं कार्यं तु नोचितमिति त्वस्मिन् यस्मिन्निति प्रकृतन्यायोदाहरणत्वेन न प्रदर्शयितुं शक्यत इति विभावयामः ॥ १४ ॥

## *द्वन्द्वात् परः प्रत्येकमभिसम्बध्यते* ॥ १५ ॥

सि०—सह विवक्षायां द्वन्द्वविधानाद् द्वन्द्वगतानां पदानां सर्वेषामेव समर्थेनान्येन सहैव सम्बन्ध उचितः, तथापि प्रकृतन्यायेन तस्य प्रत्येकं सम्बन्धः प्रतिपाद्यते । अत्र 'द्वन्द्वात् परः' इत्युपलक्षणं पूर्वस्यापि, तथा च द्वन्द्वात् पूर्वमपि श्रूयमाणः शब्दः प्रत्येकं सम्बध्यत एव । तत्र परस्योदाहरणं—"एक-द्वि-त्रिमात्रा ह्रस्व-दीर्घ-प्लुताः" [ १. १. ५. ] इति, अत्र मात्राशब्दस्य प्रत्येकमभिसम्बन्धः । पूर्वोदाहरणं यथा—"द्वेरञ्जणोऽप्राच्यभर्गादेः" [ ६. १. १२३. ] इति, अत्र द्वन्द्वात् पूर्वं श्रूयमाणस्य नञः प्राच्यभर्गाभ्यामुभाभ्यां प्रत्येकं सम्बन्धः । अत्र च न्याये शब्दशक्तिस्वभाव एव मूलमिति परन्यायमूलकोऽयमिति ॥ १५ ॥

*द्वन्द्वात् परः प्रत्येकमभिसम्बध्यते* ॥ १५ ॥

त०—अन्यैर्वैयाकरणैः *द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते* इति व्युत्पत्तिरङ्गीक्रियते, तदेकदेश एव चेह न्यायत्वेनोल्लिखितः, युक्तं तु पूर्वोच्चारितस्यापि पदस्य प्रत्येकेन सम्बन्धभवनम् । दृश्यते च तथा प्रयोग इति व्याकरणान्तरवत् स्वमतेऽपि पूर्वस्यापि प्रत्येकमभिसम्बन्धो न्याय्य इति तथा प्रदर्शितो वृत्ताविति ॥ १५ ॥

## *विचित्राः शब्दशक्तयः* ॥ १६ ॥

सि०—शब्दानां शक्तयः-अभिधानसामर्थ्यानि, विचित्राः-परस्परविलक्षणानि भवन्ति, न तासां विनिगमकं किञ्चिदस्तीति भावः । अत्र च तत्तद्वैचित्र्यदर्शनमेव मूलम्, तेन यत्र लिङ्ग-संख्यादौ वैचित्र्यं दृश्यते तत्र तत् तथैवेति स्वीकरणीयम्, न शास्त्रेण तत्र किमपि कर्तुं शक्यते, यथाकथञ्चिदन्वाख्यानं शास्त्रेण क्रियते । तत्र लिङ्गवैचित्र्यं यथा—तटादिषु शब्देषु त्रिलिङ्गत्वमित्यादि । अन्यच्च प्रशस्तं पचतीत्यर्थे "त्यादेश्च प्रशस्ते रूपप्" [ ७. ३. १०. ] इति स्वार्थिके रूपपि-पचतिरूपमित्यादौ "पदं वाक्यमव्ययं चेत्यसंख्यं च०" [ लिङ्गा० अ० श्लो०-१ ] इति लिङ्गानुशासनादलिङ्गस्यापि त्याद्यन्तपदस्य प्रत्ययविशेषयोगेन क्लीबलिङ्गत्वम् । तथा 'कुत्सिता स्वा-ज्ञातिः, इत्यर्थे कप्रत्यये आमि "स्व-ज्ञा-ऽज-भस्त्राऽधातुत्य-य-कात्" [ २. ४. १०८. ] इत्याप इत्वे—स्विका, अत्र ज्ञातौ "कामल-कुद्दाला-ऽवयव-स्वाः" [ लि० पु० श्लो० १४-१ ] इति लिङ्गानुशासनात् पुँल्लिङ्गस्यापि स्वशब्दस्य कुत्सितार्थविवक्षणाद् वाक्यावस्थायां कप्रत्ययान्तत्वे च स्त्रीलिङ्गत्वम् । तथा ह्रस्वा कुटीत्यर्थे "कुटी-शुण्डाद् रः" [ ७. ३. ४८. ] इति स्वार्थिके रे-'कुटीरः' इति पुँल्लिङ्गत्वम्, 'कुटीरम्' इति क्लीबत्वं च क्वचित्, कुटीशब्दस्य "लालसो रभसो वर्त्तिवितस्ति-कुक्षिशुटिः" [ लि० पुं० स्त्री० श्लो० ३-२ ] इति वचनात् पुंस्त्रीलिङ्गस्यापि प्रत्ययान्तरयोगेन पुंक्लीबलिङ्गत्वम् । तथा ह्रस्वं वनं—वनिका, अत्र वनशब्दस्य नान्तत्वात् "न-लस्तु-त-त्त-संयुक्त०" [ लि० न० १-१ ] इति पाठात् क्लीबलिङ्गस्यापि स्वार्थे कपि स्त्रीत्वम् । तथा च केचिच्छब्दाः पदान्तरापेक्षया केचिच्च स्वत एव तत्तल्लिङ्गानि कथयन्ति । तत्र पदान्तरापेक्षया यथा-अयं गौः, इयं गौरिति, अत्र गोशब्दस्योभयलिङ्गत्वेऽपि 'अयमियम्' इति पदान्तरापेक्षां विना तत्तल्लिङ्गस्य प्रतीतिर्न भवति । पदान्तरानपेक्षास्तु त्रिभिः प्रकारैर्लिङ्गानि कथयन्ति-नाममात्रेण आदेशेन प्रत्ययेन च, नाममात्रेण-स्वरूपत एव, यथा-पिता मातेति, अत्र न कस्यचिदन्यस्यापेक्षाऽपि तु स्वरूपत एव लिङ्गप्रतीतिः; आदेशेन यथा 'तिस्रः' इति, अत्र स्त्रीत्वं विनाऽनुपपद्यमानेन तिस्रादेशेन स्त्रीत्वं प्रतीयते, प्रत्ययेन यथा-राज्ञीति, अत्र स्त्रीत्वनिमित्तकेन ङीप्रत्ययेन स्त्रीत्वं प्रतीयते । संख्यावैचित्र्यं यथा-'दाराः, सुमनसः, अप्सरसः' इत्यादौ वस्त्वेकत्वेऽपि बहुवचनमित्यादि । स चायमर्थो न कारणनिर्देशपुरःसरं व्याख्यातुं शक्यत इति शब्दशक्तिवैचित्र्यमूलक एवावसीयते ॥ १६ ॥

*विचित्राः शब्दशक्तयः* ॥ १६ ॥

त०—अत्र शब्दशक्तिपदेन शब्दानां प्रातिस्विकः स्वभाव एव गृह्यते, येन शब्दस्वाभाव्येनैकमेव वस्तु भिन्नैः शब्दैरुच्यमानं भिन्नानि लिङ्गानि वचनानि च विधत्ते । यथा-'सर्वं वस्तु, सर्वः पदार्थः, सर्वा व्यक्तिः' इत्येवंरूपेण वस्तु-पदार्थ-व्यक्तिशब्दैः प्रतिपाद्यमाने सर्वस्मिन् लिङ्गत्रयमपि प्रयुज्यते । यथा वा-दार-

कलत्र-पत्नीशब्दा एकमेवार्थं कथयन्तोऽपि तत्तल्लिङ्गभाजो भवन्ति, तथा च न वस्तुतन्त्रं लिङ्गमपि तु शब्दतन्त्रमेव । एवं संख्याया अप्येष एव क्रमः, केचिच्छब्दा एकमर्थमभिदधाना अपि बहुत्वभाजो भवन्ति, यथा-दार-ऽप्सरः-सुमनःशब्दाः; केचनानेकार्थानभिदधाना अप्येकत्वभाजो भवन्ति, यथा-'वनम्, समूहः, अक्षतम्, विंशतिः' इत्यादयः शब्दा बहुत्वसंख्याविशिष्टमर्थमभिदधाना अप्येकत्वेनैवोपस्थापयन्तीत्यादयो विशेषाः शब्दशक्तिस्वभावमात्रसमर्थनीयाः । विचारितं चैतद्विषये "स्त्रियाम्" [ ४. १. ३. ] इति पाणिनीयसूत्रेऽन्यत्र च तत्तत्स्थलेषु महाभाष्यादौ । विस्तरभियेह न विशदय्य प्रदर्शितमिति । एवं क्वचित् कश्चिदर्थः शब्दप्रयोगमन्तरेण न प्रतीयते, क्वचिच्च विनापि शब्दप्रयोगं प्रतीयते, यथा-हस्तेनातिक्रामतीत्यर्थे "णिज् बहुलं नाम्नः०" [ ३. ४. ४. ] इति णिचि-'अतिहस्तयति' इत्यत्रातिशब्दं विनाऽतिक्रमार्थो न प्रतीयत इति स प्रयुज्यते, श्वेताश्वेनातिक्रामतीत्यर्थे च "श्वेताश्वा-ऽश्वतर-गालोडिता-ऽऽह्वरकस्याश्वतरेतकलुक्" [ ३. ४. ४५. ] इत्यनेनाश्वशब्दलुकि-श्वेतयतीत्यत्र त्वतेः प्रयोगं विनापि तदर्थप्रतीतेर्नातिः प्रयुज्यते । तथा खणम् प्रत्ययो यथाऽऽभीक्ष्ण्ये विधीयते तथा णम् प्रत्ययोऽपि, किन्तु खणम्-प्रत्ययस्थले द्वित्वमाभीक्ष्ण्यद्योतनाय दृश्यते, यथा-भोजं भोजं यातीति, अत्र हि "खणम् चाभीक्ष्ण्ये" [ ५. ४. ४८. ] इति खणम् विधीयते, णमि तु द्वित्वं विनाप्याभीक्ष्ण्यं प्रतीयते, यथा-'गेहानुप्रवेशमास्ते' इत्यत्र, अत्र हि 'गेहमनुप्रविश्यानुप्रविश्यास्ते' इत्यर्थे "विश-पत-पद-स्कन्दो वीप्सा-ऽऽभीक्ष्ण्ये" [ ५. ४. ८१. ] इति णम् भवति । एवमादिषु वैचित्र्यस्य कारणं शब्दस्वाभाव्यमेवेति ॥ १६ ॥

## ※किं हि वचनान्न भवति※ ॥ १७ ॥

सि०—वचनम्-इष्टार्थप्रत्यायनाय तादृशशब्दप्रयोगः, तद्बलात्, किं शास्त्रेण साक्षादविहितमपि कार्यं न भवति ? अपि तु सर्वं भवत्येव; इष्टार्थप्रत्यये सति शिष्टप्रयोगमनुसृत्य केचिच्छास्त्रेण साक्षादविहिता अपि विधयो भवन्त्येवेत्यर्थः । तुल्यन्यायादिष्टार्थप्रत्ययेऽसति च केचिद् विधयः शास्त्रविहिता अपि क्वचिन्न प्रवर्त्तन्त इत्यपि लभ्यते । यथा "समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषया सर्वेषां पदसम्बन्धिविधीनां समर्थाश्रितत्वं प्रतिपादितम्, इत्यसामर्थ्ये सति समासरूपः पदविधिर्विधातुं न युक्तः, तथापि 'असूर्यम्पश्या राजदाराः' इत्यादौ सूर्यमपि न पश्यन्तीत्यर्थे नञो दर्शनार्थेन सामर्थ्ये सूर्यपदार्थेन सह सामर्थ्याभावेऽपि च "असूर्योग्राद् दृशः" [ ५. १. १२६. ] इति सूत्रेऽसूर्य इति निर्देशरूपवचनात् सूर्यशब्दस्य नञा सह समासो भवति । एवम्-'अवत्सीयो गोधुक्' इत्यादौ वत्सेभ्यो न हित इत्यर्थविवक्षायां नञो हितेन सह सम्बन्धे सत्यप्यर्थप्रत्ययस्य जायमानत्वाद् वत्सशब्देन सह समासोऽसामर्थ्येऽपि । तदित्थमिह "समर्थः पदविधिः" [ ७. ४. १२२. ] इति परिभाषाबाधः स्पष्टः । वचननिर्देशात् प्राप्ताप्रवर्त्तनं यथा-"नहाहोर्धतौ" [ २. १. ८५. ] इत्यादौ धातुनिर्देशे प्राप्ता अपि इ-कि-श्तिवो न भवन्ति । इष्टार्थप्रत्ययाभावे प्राप्ताप्रवृत्तिर्यथा-'सर्वस्य भद्रं भूयात्' इत्यत्र प्राप्तोऽपि षष्ठीसमास इष्टार्थप्रत्ययाभावशङ्कया न भवति । तथाहि-सर्वभद्रं भूयादिति कथने कस्येत्याकाङ्क्षा स्यात्सर्वेति निराकाङ्क्षप्रतिपत्तये समासो न प्रवर्त्तते । इष्टार्थप्रत्यायनमूलकत्वाद् 'अभिधानलक्षणाः कृत्तद्धितसमासाः' इत्यादि प्रायो वादः, अभिधानम्-इष्टार्थप्रत्यायनं, तदेव लक्षणं-निमित्तं येषां तथाभूता इति तदर्थः । एवं वचनात्-सूत्रोक्तविधानबलात्, किं न भवति-अप्राप्तमपि विधीयत इत्यादिरूपाऽपि प्रकृतन्यायव्याख्या दृश्यते । तथा च 'श्रेष्ठः, श्रेयान्' इत्यादाविष्ठेयस्वोः परयोः प्रशस्यशब्दस्य श्रादेशविधानसामर्थ्यात् तस्य गुणाङ्गत्वाभावेऽपि "गुणाङ्गाद् वेष्ठेयसू" [ ७. ३. ९. ] इतीष्ठेयसू सिद्धौ । गुणाङ्गशब्देन गुणप्रवृत्तिनिमित्तः शब्दोऽभिधीयते, यथा पट्वादिशब्दः पटुत्वादिगुणप्रवृत्तिनिमित्तकः, प्रशस्यशब्दश्च प्रशंसाप्रवृत्तिनिमित्तकः; प्रशंसा च स्तुतिक्रियारूपा न गुणरूपा, ततश्चायं शब्दः पाचकादिशब्दवत् क्रियाप्रवृत्तिनिमित्तक एव न गुणप्रवृत्तिनिमित्तक इत्यप्राप्तावपि तौ प्रत्ययौ तयोः परतः श्रादेशविधानरूपवचनबलादेव प्रवर्त्ततः । तथा च वचनबलादिष्टार्थप्रत्यानरूपाभिधानबलाच्चाप्राप्तमपि विधीयते, प्राप्तमपि निवर्त्यते इति प्रकृतन्यायस्य क्वचिदप्राप्तप्रापकत्वं क्वचित्प्राप्तनिवर्त्तकत्वं वचनेषु अभिधानेषु च प्रतिपादनं विषयः । स च स्वभावसिद्ध एवेति नात्र ज्ञापकाद्यपेक्षेति ॥ १७ ॥

## ※किं हि वचनान्न भवति※ ॥ १७ ॥

त०—अयं न्यायो वचनस्याभिधानस्य चाद्भुतसामर्थ्यबोधकः । अयमाशयः-व्याकरणशास्त्रेण न शब्दा विरच्यन्तेऽपि त्वखण्डाः शब्दा लघीयसोपायेनार्थप्रत्यायनाय यथाशक्ति प्रकृति-प्रत्ययादिभिरुपायैः सामान्य-विशेषरूपैः शास्त्रैरन्वाख्यायन्ते । तत्र यदि कश्चिदर्थः शास्त्रैरप्रतिपाद्यमानोऽपि [ अविधीयमानोऽपि ] क्वचिद् दृश्येत, क्वचिच्च शास्त्रविहितोऽप्यर्थः प्रवर्त्तमानो न दृश्येत तत्र न शङ्का कार्या, यदि तादृशः शिष्टप्रयोगः स्यात्, यदि वा तादृशेन शब्देनेष्टोऽर्थः परम्परयाऽभिधीयमानो दृश्येत । तस्य चानुज्ञानं द्विधा ज्ञेयम्, क्वचिदाचार्याणां तादृशप्रयोगकरणेन क्वचिच्चेष्टार्थप्रत्यायनसामर्थ्यसत्त्वासत्त्वदर्शनेन, एष

एवार्थोऽनेन न्यायेन प्रतिपाद्यते । एतादृशाः [ यथापूर्वो न्यायोऽयमेतत्परश्च न्यायः ] प्रायोऽन्यैर्वैयाकरणैर्न्यायकोटौ न परिगणिताः, तथापि भवन्ति लक्ष्यसिद्धयुपकारका इति व्याख्याता अस्माभिः ।

एवमेतदतिरिक्ता अपि केचन न्यायाः क्वचित् क्वचित् पठ्यन्ते, यथा–१ ***विचित्रा सूत्राणां कृतिः*** २ ***मात्रालाघवमप्युत्सवाय मन्यन्ते वैयाकरणाः*** ३ ***ते वै विधयः सुसंगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च*** इत्यादयो न्यायानुसारिणो वाग्विशेषाः । ते च सूत्ररचनार्थमेवोपयुक्ता न तु लक्ष्यसिद्धाविति लक्षणैकचक्षुष्कानामनुपादेया इतीह न व्याख्याताः ॥

तत्र ***विचित्रा सूत्राणां कृतिः*** इत्यस्योदाहरणं यथा–"धातोरिवर्णोवर्णस्येयुव्०" [ २. १. ५०. ] इत्यत्रेवर्णोवर्णस्य स्थाने युवर्णस्येत्येतदपि प्रयोक्तुं शक्यते, यथा–"युवर्ण-वृ-दृ०" [ ५. ३. १८. ] इत्यत्रेवर्णोवर्णयोः स्थाने युवर्णशब्दपाठः, भवति च तथा पाठे लाघवं, किन्तु सूत्राणां कृतेर्वैचित्र्यबोधनायैव तथा पठितम् ॥ १ ॥

***मात्रालाघवमप्युत्सवाय मन्यन्ते वैयाकरणाः***

इत्यस्यार्थः–मात्रयाऽपि–सूक्ष्ममपि, लाघवं वैयाकरणा उत्सवाय–हर्षाय मन्यन्त इति । लाघवं च द्विधा–शब्दतः प्रक्रियातश्च, तत्र शब्दतो लाघवं यथा–"आपो ङितां यै-यास्-यास्-याम्" [ १. ४. १७. ] इत्यत्र ङित्चतुष्केण [ 'ङे ङसि ङस् ङि' इत्येतैः ] सह यथासंख्यलाभाय 'याम्' इत्येतदन्तात् पदाज्जसमानीय सौत्रत्वात् तल्लोपो विहितः । प्रक्रियालाघवं यथा–'भीलुक' इत्यस्य सिद्ध्यर्थं "भियो रु-रुक-लुकम्" [ ५. २. ७६. ] इति सूत्रे लुकप्रत्ययस्य रुकप्रत्ययात् पृथग् विधानम्, अन्यथा रुके कृतेऽपि "ऋफिडादीनाम्०" [ २. ३. १०४. ] इति सूत्रे ऋफिडादिगणे पाठेनैवाकृतिगणत्वेन वा लत्वं स्यादेवेति किमर्थं पृथक् प्रत्ययविधानं स्यात्, पश्यति त्वाचार्यस्तथा सति प्रक्रियागौरवमिति पृथगेव प्रत्ययं करोति, गणकार्याणामाकृतिगणत्वेन साधनं हि प्रयोगानुसरणम्, प्रयोगानुसरणे च गौरवं स्पष्टमेवेति तदपेक्षया प्रत्ययान्तरकरणे एव लाघवम् ।

एवं ***ते वै विधयः०*** इत्यादेरयमर्थः–शास्त्रेषु द्विधा वचनानि दृश्यन्ते–कानिचित् संक्षिप्तानि कानिचिद् विस्तृतानि, तत्र ये सूक्ष्ममतयस्तान् प्रति लक्षणं–संक्षेपेण वचनम्, ये च स्थूलधियस्तान् प्रति प्रपञ्चः, शास्त्रस्य हि परानुग्रह एव प्रयोजनम्, तत्र प्रतिपत्तॄणामुभयप्रकारत्वदर्शनात्, तत्र लक्षणं यथा–"तत्पुरुषे कृति" [ ३ २. २०. ] इत्यनेन अज्ञ्जनात् परस्याः सप्तम्याः कृदन्ते उत्तरपदे तत्पुरुषे लुग् निषिध्यते 'स्तम्बेरम्' इत्यादौ, अयमेवार्थोऽग्रे प्रपञ्चितः, यथा–"शय-वासि-वासेष्वकालात्" [ ३. २. २५. ] "वर्ष-क्षर-वरा-ऽप्-सरः-शरोरो-मनसो जे" [ ३. २. २६. ] इति सूत्राभ्यामेषु शब्देषु पूर्वविषये एव अलुग् विकल्पेन विधीयते, यथा–'बिलेशयः, बिलशयः' इत्यादि, 'वर्षेजः, वर्षजः' इत्यादिश्च । एवं–"द्यु-प्रावृट्-वर्षा-शरत्-कालात्" [ ३. २. २८. ] एषु नित्यमलुप् विधीयते, यथा–'दिविजः' इत्यादि । "नेन्-सिद्ध-स्थे" [ ३. २. २९. ] एषु लुबभावो निषिध्यते, तथा च लुबेव भवति, यथा–'स्थण्डिलशायी' इत्यादि । एष च सर्वः प्रपञ्चविषयः "तत्पुरुषे कृति" [ ३. २. २४. ] इति लक्षणसूत्रेणैव सिद्धः, यतस्तत्र "अद्व्यञ्जनान्तात् सप्तम्या बहुलम्" [ ३. २. १८. ] इति सूत्राद् बहुलमित्यस्यानुवृत्तिः, संभाव्यते, तदनुवृत्त्या च

"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः, क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥"

इत्यादिवैचित्र्यलाभसद्भावात् सूत्रचतुष्टयानुष्ठानं प्रपञ्चार्थमेव । एवं **पारिशेष्या**दयोऽपि न्यायाः सूत्रस्य नोपयोगिन एवेतीह नोपन्यस्ताः, स च न्यायः "नाम्नः प्रथमैकद्विबहौ" [२. २. ३१.] इत्यादिसूत्ररचनायामुपयुक्तः, तन्न्यायबलादेव हि कर्मादिशक्तिषु द्वितीयाविभक्तीनां विहितत्वात् पारिशेष्यादेव प्रथमाया नामार्थमात्रे विधानमिति सूत्रार्थः प्रतीयते । एवं–***यथोद्देशं निर्देशः*** इत्यादयोऽपि लक्ष्यैकचक्षुष्कप्रयोजना एवेति नेह क्वापि गृहीता इति ॥ १७ ॥

## *न्यायाः स्थविरयष्टिप्रायाः* ॥ १८ ॥

**सि०**–यथा स्थविरैर्गमनागमनकालेषु कार्यवशादेव यष्टयः समवलम्ब्यन्ते, नान्यथा, तथा न्याया अपि शिष्टप्रयोगसिद्ध्यर्थमेवाश्रीयन्ते नान्यथा । तथा च शिष्टप्रयोगप्रातिकूल्ये न्यायानाश्रयणमेव । एकस्मिन्नेव लक्ष्ये कस्यचित् कार्यस्य साधनाय न्यायाश्रयणं दृश्यते, तदन्यकार्ये च कर्तव्ये तदनाश्रयणमपि दृश्यते, तच्चायुक्तमिति शङ्काव्युदासायायं न्याय आश्रीयते । अत्र च मूलं तत्र तत्र तथाऽऽचार्याणां व्याख्यानमेव, यथा–रायमतिक्रान्तानां कुलानामित्यर्थे 'अतिरि'-शब्दस्य आमि "क्लीबे" [ २. ४. ९७. ] इति ह्रस्वत्वे सति तत्प्रयुक्ते नामादेशे सति ***एकदेशविकृतमनन्यवत्*** इति न्यायात् "आ रायो व्यञ्जने" [ २. १. ५. ] इत्यात्वं प्राप्तं, तच्च ***सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य*** इति न्यायमाश्रित्य वार्यते, यतस्तस्मिन् कृते नामादेशनिमित्तस्य सन्निपातस्य विघातः स्यात्, किन्तु तत्रैव "दीर्घो नाम्यति-सृ-चतसृ०" [ १. ४. ४७. ] इति दीर्घे कर्त्तव्ये स न्यायो नाश्रीयते, ततश्च 'अतिरीणाम्' इति दीर्घः सिध्यति । एवं "वत्तस्याम्" [ १. १. ३४. ] इत्यत्र वत्तस्योस्तद्धितयोः

साहचर्यादामोऽपि तस्यैव ग्रहणं प्राप्तं, परन्तु साहचर्यन्यायानाश्रयणात् परोक्षास्थानजोऽप्याम् गृह्यते, तत्रैव षष्ठीबहुवचनस्यामो ग्रहणवारणाय स न्याय आश्रीयते । तथा च स्थविरयष्टिप्रायत्वं न्यायानां स्पष्टमेवेति ॥ १८ ॥

इति न्यायसमुच्चयस्य तृतीयोल्लासे वाचकावतंसेन श्रीहेमहंसगणिमणिना समुच्चितानामष्टादशानां वचनविशेषाणां न्यायाकाराणां, तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण 'व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्न' इति पदालङ्कृतेन विजयलावण्यसूरिणा विरचिता न्यायार्थसिन्धु-नामा वृत्तिः ॥

### *न्यायाः स्थविरयष्टिप्रायाः* ॥ १८ ॥

त०—न्यायाः प्रायो ज्ञापकसिद्धा एवेह पूर्वं प्रदर्शिताः, केचिदस्पष्टमुपलब्धज्ञापका अपि यथाकथञ्चिदनुमिता एव । तथा च शास्त्रकृता सर्वेषामेषां न्यायानां प्रयोगस्येष्टत्वे कण्ठत एवोच्चारणं विधेयं स्यात्, संज्ञा-परिभाषादिसूत्रवत्, तच्च न कृतमिति तैस्तैर्ज्ञापकैरनुमीयन्ते । अनुमीयमानानि च वचनानि सन्दिग्धानि भवन्तीति यत्र शिष्टप्रयोगाणामानुकूल्यं तत्रैव तेषामाश्रयणं युक्तं लक्ष्यानुकूलत्वात्, लक्ष्यसिद्ध्यर्थमेव च लक्षणादीनामुपादानात् । शास्त्रकृद्भिः कण्ठतोऽनुच्चारितत्वमेवैतेषां दौर्बल्यबोधकम्, कण्ठत उच्चारितानां श्रुतत्वं, ज्ञापकसिद्धानां चानुमितिप्राप्तत्वम् । तथा चैषामाश्रयणमनाश्रयणं च यद्यपि शिष्टप्रयोगमात्रविज्ञेयम्, तथापि तत्र तत्रानित्यत्वज्ञापकान्यपि शास्त्रकृद्वचनानि प्रदर्शितान्येव । नन्वाचार्यादिभिः कण्ठतोऽनुक्तत्वाद् यदेषामनित्यत्वेन लक्ष्यानुरोधादाश्रयणमनाश्रयणं चेत्युच्यते तन्न वरम्, शब्दोच्चारणजन्यक्लेशानुत्पत्त्याऽनुमानाद् बोधनस्यान्यथासिद्धत्वेन प्रकृतार्थज्ञापकत्वायोगादिति चेत्? न—नहि शब्दोच्चारणजनककण्ठताल्वाद्यभिघातरूपगौरवमेवादर्त्तव्यं, न ज्ञानजनकमनोव्यापाररूपगौरवमिति राजाज्ञास्तीत्यादिरूपेणेदृशार्थस्य तत्र तत्र निरस्तत्वात् । यद्यपि यत्र न्यायो नाश्रीयते तत्रापि किमपि ज्ञापकमवश्यमेष्टव्यम्, यथोक्ते अतिरीणामित्यत्रात्वे कर्त्तव्ये *सन्निपातलक्षण* न्यायः समाश्रीयते दीर्घे नेत्यत्र "दीर्घो नाम्यतिसृ-चतसृ०" [ १. ४. ४७. ] इति सूत्रे 'तिसृ-चतसृ'वर्जनमेव ज्ञापकम्, अन्यथा सन्निपातन्यायेनैव तिसृणामित्यादौ दीर्घवारणसंभवे तद्वर्जनं व्यर्थमेव स्यात्; "वत्तस्याम्" [ १. १. ३४. ] इत्यत्र च अविभक्तित्वेन सादृश्यग्रहणे साहचर्यन्यायाश्रयणेनैव परोक्षास्थानजस्यामो ग्रहणं, षष्ठीबहुवचनस्याग्रहणमिति साधितं तत्रैव सूत्रे बृहन्न्यासे, उपायान्तरं च तत्र प्रदर्शितम्, अथवा आमेव य आम् इति व्याख्यानम्; षष्ठीबहुवचनाम् तु 'मनसाम्' इत्यादौ आम्, 'मतीनाम्' इत्यादौ नामिति तस्य न ग्रहणमिति । एवं रीत्या प्रायः सर्वत्र न्यायाश्रयणानाश्रयणे बीजं प्रदर्शयितुं शक्यत एव । तथापि क्वचित्प्रवृत्तिमूलानुपलम्भेऽपि लक्ष्यानुरोधादपि न्यायाप्रवृत्तिः कर्तुं शक्यत एवेत्यर्थमेव न्यायोऽयमुपात्त इत्यवधेयमिति शम् ॥ १८ ॥

इति न्यायसमुच्चयस्य सिन्धुकलिते तृतीयोल्लासे वाचकावतंसेन श्रीहेमहंसगणिमणिना समुच्चितानामष्टादशानां वचनविशेषाणां न्यायाकाराणां, तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण 'व्याकरणवाचस्पति-शास्त्रविशारद-कविरत्न' इति पदालङ्कृतेन विजयलावण्यसूरिणा विरचितं तरङ्गाभिधं विवरणम् ॥

क्वचित् प्राच्यः पन्थाः क्वचिदपि च नव्यो बुधपथः,
क्वचित् स्वातन्त्र्याध्वा क्वचिदपि च तेषां समुदयः ।
श्रितोऽस्मिन् शिष्याणां मतिविकसनार्थं शुभधिया,
बुधैर्बुद्ध्वा तत्त्वं तदनुगतमर्प्यं श्रितजने ॥ १ ॥
सूरीन्द्रं हेमचन्द्रं कलिसकलविदं संस्मरामोऽभिरामं,
धीमन्तं हेमहंसं गणिमणिममलं तं कथं विस्मरामः ।
न्यायानामर्थसार्थं निजमतघटितं धारयन्तीं यदीयां,
मञ्जूषां प्राप्य जाता वयमिह प्रभवः साधु सिन्धौ तरङ्गे ॥२॥



## [ चतुर्थोल्लासः ]

**अतः परं प्राक् प्रदर्शितन्यायसजातीय एवानुक्तार्थसाधको न्यायो विस्तरेण व्याख्यातुं पृथक् प्रदर्श्यते, स चायम्—**

***शिष्टनाम-निष्पत्ति-प्रयोग-धातूनां सौत्रत्वाल्लक्ष्यानुरोधाद् वा सिद्धिः* ॥ १ ॥**

सि०—इह हि यथासम्भवं लक्ष्याणि बुद्धौ सङ्कलय्य तत्साधनार्थं लक्षणानि शास्त्रकृद्भिः सूत्रितानि, परं नाम्नामानन्त्यात् तत्तत्प्रयोगविषयाणां क्रियादिपदानां च साकल्येन सङ्कलनमसम्भवि, उक्तं च भाष्यकृता पस्पशाह्निके–"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं शब्दपारायणं जगौ, तथापि नान्तं जगाम" इति । ततश्च बहूनि नामानि, बह्व्यश्च निष्पत्तयः, बहवश्च प्रयोगविशेषा नामा-ऽऽख्यातप्रकृतिभूता धातवश्च शब्दानुशासने साक्षाद् न सङ्कलिताः, तेषां संग्रहायायं न्यायः समाश्रीयते। तथा चायमर्थः–शिष्टाः–शब्दशास्त्रे व्याख्यानकर्मणि नायाता अनुक्ता इत्यर्थः, ये नामानि च निष्पत्तयश्च प्रयोगाश्च धातवश्च, तेषां [ इह शब्दानुशासनेऽनुक्तावपि ] सौत्रत्वात्-सूत्राणि–आचार्यप्रणीतानि, तेषु निर्दिष्टाः–सौत्राः, तेषां भावः–सौत्रत्वं, तस्मात्; लक्ष्यानुरोधात्–लक्ष्यं–शिष्टसम्प्रदायप्रयोगः, तस्यानुरोधात्–तद्गौरवबलादिति भावः, सिद्धिः–निष्पत्तिः। अत्र प्रकृतार्थबोधाय समुपयुक्तोऽपि सिद्धिशब्दो न्यायसंग्रहरूपग्रन्थस्यान्ते प्रयुक्तो मङ्गलार्थोऽपि सम्पन्नः । ग्रन्थान्तेऽपि मङ्गलाचरणं शिष्टपरम्पराप्राप्तमेव, उक्तं च महाभाष्ये–"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि च, अध्येतारश्च सिद्धार्था यथा स्युः" इति । तत्र तत्राकृतोपायकशब्दधात्वादिप्रयोगान् विदधताऽऽचार्येणैवायं न्यायः सूचित इति नात्र ज्ञापकविशेषोपन्यासावश्यकताऽस्ति । तत्र नाम्नां सौत्रत्वात् सिद्धिर्यथा–'चतुर्थी, षष्ठी' इत्यादिसौत्रनिर्देशात् 'चतुर्थ, षष्ठ' इत्यादिनाम्नां प्रकृतशब्दानुशासनसूत्रप्रातिकूल्येऽपि सिद्धिरिति । तद्यथा–'चतुर्णां षण्णां वा पूरणी' इत्यर्थे चतुर्-षष्-शब्दाभ्यां क्रमात् "चतुरः" [ ७. १. १६३. ] "षट्-कति-कतिपयात् थट्" [ ७. १. १६२. ] इति सूत्राभ्यां थट्प्रत्यये "नाम सिदय्व्यञ्जने" [ १. १. २१. ] इति पदत्वे–'चतुस्थी, षट्ठी' इति प्रयोगौ प्राप्नुतः, परं "चतुर्थी" [ २. २. ५३. ] "अज्ञाने ज्ञः षष्ठी" [ २. २. ८०. ] इति सौत्रप्रयोगाद् व्यञ्जनसन्धिकार्याणि न जातानि । एवं–भिस्सटा, कच्छाटिका, ग्रामटिकेत्यादिप्रयोगाणां शिष्टपरम्पराप्रयोगात् सिद्धिः, तथाहि–अभ्युपसर्गपूर्वात् "प्सांक् भक्षणे" इत्यस्माद् धातोः "उपसर्गादातः" [ ५. ३. ११०. ] इत्यङि "ङडेत्पुंसि चातो लुक्" [ ४. ३. ९४. ] इत्यालुकि पृषोदरादित्वादुपसर्गाद्यकारलोपे पकारस्य च सकारादेशे स्त्रिया आपि आपः प्राक् कुत्सार्थविवक्षया टागमे च–भिस्सटा, कुत्सितमन्नं भिस्सटेत्युच्यते । तदुक्तं लिङ्गानुशासनटीकायामाचार्यैः–"कुत्सिता भिस्सा भिस्सटा–दग्धिका, लक्ष्यानुरोधाट्टागमः" इति । अमरकोशे च–"भिस्सटा, दग्धिका०" [ २. ९. ४९. श्लो० ] इत्युक्तम्, तट्टीकाकृद्भिश्च 'भिस्सां टीकत इति व्युत्पाद्य भिस्सोपपदाट्टीक्धातोरयं शब्दः साधितः, वाचां व्युत्पत्तिवैचित्र्यात् । कच्छाटिका तु–

"नौकाङ्गे परिधाने च पश्चादञ्चलपल्लवे ।
कच्छा तु चीरिकायां तु वाराह्यां च निगद्यते ॥"

इति हेमकोशात् परिधानीयपश्चादञ्चलपल्लवार्थात् कच्छाशब्दात् कुत्सितार्थे के आपि लक्ष्यानुरोधादेव कात् पूर्वं टागमे ह्रस्वादौ कृते सिध्यति, तदुक्तं लिङ्गानुशासनटीकायामाचार्यैः–"अञ्चलपल्लवे चार्थप्राधान्यात् कच्छाटिकेत्यपि, यद् गौडः–"कच्छा-कच्छाटिके समे" इति । ग्रामटिकेति च ग्रामशब्दात् कुत्साद्यर्थे के स्त्रीत्वविवक्षायामापि टागमे इत्त्वादौ कृते सिध्यति । एवं–'कान्दविकः, वैणविकः, काम्बविकः' इत्यादौ 'ऋवर्णोवर्ण-दोसिसुसशश्वदकस्मात्त इकस्येतो लुक्" [ ७. ४. ७१. ] इतीकस्येतो लुग् न भवति । तथा च कन्दुः पण्यमस्येत्यर्थे "तदस्य पण्यम्" [ ६. ४. ५४. ] इतीकणि "अस्वयंभुवोऽव्" [ ७. ४. ७०. ] इत्यवादेशे सिध्यति, कन्दुना कृतं कान्दवं, तत् पण्यमस्येति वा सिध्यति; परे तु कन्दुः–मद्यनिर्माणोपयोगिपात्रं 'कराही' इति ख्यातम्, तत्र संस्कृतं भक्ष्यमित्यर्थे कान्दवं प्रसाध्य तस्मात् पण्यार्थे इकणि कृते 'कान्दविक' इति साधयन्ति, तच्च "आपूपिकः कान्दविको भक्षकारः" [ अ० २ । ९ । २८७ श्लो० ] इत्यमरकोशटीकायां स्पष्टम् । वेणुः–वेणुवादनं शिल्पमस्येत्यर्थे "शिल्पम्" [ ६. ४. ५७. ] इतीकणि अवादेशे सिध्यति, अत्र लक्ष्यानुरोधात् "ऋवर्णोवर्ण०" [ ७. ४. ७१. ] इतीकण इलोपाभावः; परे तु वेणुशब्दाद् विकारार्थे वैणवं संसाध्य ततः शिल्पार्थे इकणि कृते साधयन्तीति तन्मते न लक्ष्यानुरोधाश्रयणमावश्यकं भवति; एवं-कम्बुः–कम्बुवादनं शिल्पमस्येत्यर्थे पूर्ववत् काम्बविकसिद्धिः; अत्रापि परे विकारार्थे काम्बवं संसाध्य पश्चादिकणा काम्बविकं संसाधयन्ति, स्वमते इकारलोपाभावाय लक्ष्यानुरोधाश्रयणं तन्मते प्रत्ययद्वयविधानरूपप्रक्रियागौरवाश्रयणमित्युभयोः साम्यमेव ॥

शिष्टानां निष्पत्तीनां सौत्रत्वात् सिद्धिर्यथा–"अं-अः अनुस्वार-विसर्गौ" [ १. १. ९. ] "आपो ङितां यै-यास्-यास्-याम्" [ १. ४. १७. ] इत्यनयोः सूत्रयोः क्रमादौ-जसोर्विभक्त्योः सौत्रत्वादेव लुग् निष्पन्नः, लक्ष्यस्यैतादृशस्यान्यत्रानुपलब्धेर्न लक्ष्यानुरोधकृता सिद्धिरिह प्रदर्शिता । तथा चाग्रेऽपि यत्र यस्यैव हेतोः संभवः स एव प्रदर्शयिष्यते ॥

प्रयोगविशेषाणामर्थविशेषे नियन्त्रणादिकमपि लक्ष्यानुरोधकृतं भवति, यथा–रणादिधातूनां शब्दार्थत्वस्य साम्येऽपि भावे क्तान्ताः प्रयोगा अर्थविशेषे नियन्त्रिता लक्ष्यानुरोधादेव, तदुक्तं हैमधातुपारायणे–"इह च [ धातूनां ] शब्दार्थत्वाविशेषेऽपि रणितं नूपुरादौ, मणितं सुरतकूजिते, कणितमार्त्ते, क्वणितं वीणादौ रूढम्; एवमन्यत्रापि–कूजितं विहगादौ, बृंहितं गजे, हेषितं हये, वाशितं पशुषु, गर्जितं मेघादौ, [ क्वचिद् गर्जितं सिंहादौ ], गुञ्जितं सिंहादौ, [ क्वचिद् गुञ्जितं भ्रमरादौ ], इत्यादिकं लक्ष्यानुरोधादूह्यम् ।" इति ॥

धातूनां च सौत्रत्वात् संग्रहो लक्ष्यानुरोधाच्च, तत्र सौत्रा धातवः "धातोः कण्ड्वादेर्यक्" [ ३. ४. ८. ] इति सूत्रे कण्ड्वादिगणनिर्देशादभ्यूहिता बृहद्वृत्त्यादिषु विस्तरतो वर्णिताः । अन्येऽपि स्तम्भूप्रभृतयः सूत्रेषु तत्र तत्र पठिता धातवो "बहुलमेतन्निदर्शनम्" इति चुराद्यन्तर्गणसूत्रेणाचार्यैः सङ्गृहीताः । चुलुम्पादयश्च तत्र तत्र प्रयोगपथमायाता वाक्यकरणीयत्वेन प्रदिपादिता धातुपारायणादौ, तेऽपि प्रकृतन्यायविषयतां नातिक्रामन्ति । सौत्रादिधातूनामर्था अपि कविकल्पद्रुमादिग्रन्थेषु प्रतिपादिता इति विस्तरभयादिह नोच्यन्ते । तेष्वपि क-च-ट-त-पादिवर्णा अनुबन्धत्वेनासञ्जितास्तेषामनुबन्धानां फलानि च यथावसरं निरूपयिष्यन्ते । तत्तदनुबन्धवशलब्धतत्तद्गणान्तःस्थत्वविज्ञानात् तत्तद्गणपाठप्रयुक्तविकरणादिलाभः, गणविशेषपाठानुज्ञापकानुबन्धाभावे च शवेव विकरणम् । इ-ङित्त्वकृतमात्मनेपदमी-गित्त्वकृतमुभयपदं तदुभयविरहनिबन्धनं च "शेषात् परस्मै" [ ३. ३. १००. ] इति परस्मैपदमित्याद्यवधेयम् । अतः परमनुबन्धफलप्रदर्शनार्थं दिङ्मात्रं रूपाणि प्रदर्श्यन्ते । तथा च "स्तम्भू-स्तुम्भू-स्कम्भू-स्कुम्भू-स्कोः श्ना च" [ ३. ४. ७८. ] इति सूत्रपठितः स्तम्भूधातुः स्तम्भार्थः, स्तम्भश्च क्रियानिरोधः, स चोकारानुबन्धः, तस्माद् वर्त्तमानायां प्रथमपुरुषैकवचने पूर्वोल्लिखितसूत्रेण श्ना-श्नू प्रत्ययौ क्रमाद् भवत इति स्तभ्नाति स्तभ्नोतीति रूपे; क्ये च "नो व्यञ्जनस्यानुदितः" [ ४. २. ४५. ] इति नलोपे–स्तभ्यत इति, क्त्वि च कृते ऊदित्वात् "ऊदितो वा" [ ४. ४. ४२. ] इति वेटि–स्तब्ध्वा, स्तम्भित्वेति रूपद्वयम्; वेट्त्वादेव च क्तयोः परतो "वेटोऽपतः" [ ४. ४. ६२. ] इति क्तयोरिण्निषेधात्–स्तब्धः स्तब्धवानिति; अद्यतन्याम् "ऋदिच्छ्वि-स्तम्भू-म्रुचू०" [ ३. ४. ६५. ] इति वाऽङि–अस्तभत् अस्तम्भीदिति । एवम्–अग-पुलाभ्यां परस्मात् स्तम्भेः "अग-पुलाभ्या०" [ उणा० ३६३. ] इति डिति ये सति अगं स्तभ्नातीत्यर्थे–अगस्त्यः, पुलं स्तभ्नातीत्यर्थे च–पुलस्त्य इति रूपे भवतः; स्तभ्नातीत्यर्थे "जजल-तितिल०" [ उणा० १८. ] इत्यादिना सूत्रेण निपातनात्–तिन्तिभ इति, तस्माद् वृद्धापत्यार्थे गर्गादित्वाद् यञि–तैन्तिभ्य इति । अस्य धातोः सौत्रेष्वादौ पाठेनाभ्यर्हितत्वाद् वर्णक्रमं परित्यज्य पूर्ववर्णनं कृतम्, एवं–लौकिकेषु धातुषु क्रुवेः, वाक्यकरणीयेषु चुलुम्पेश्चादौ पाठेऽप्याचार्यवचनमेव मूलमिति ध्येयम्, तथाहि–तैः "बहुलमेतन्निदर्शनम्" इति चुराद्यन्तर्गणसूत्रस्य व्याख्यानावसरे–"तेनात्रापठिता अपि क्रुविप्रभृतयो लौकिकाः, स्तम्भूप्रभृतयः सौत्राः, चुलुम्पादयश्च वाक्यकरणीया उदाहार्याः" इत्युक्तम् ॥ १ ॥

अथान्त्यवर्णक्रमेण सौत्रधातूनां विशिष्टप्रयोगादिप्रदर्शनार्थं दिगुच्यते, तत्रादन्तेषु–"तन्द्रा आलस्ये" इत्यस्मात् तन्द्रातीत्यर्थे "शीङ्-श्रद्धा-निद्रा-तन्द्रा-दयि-पति-गृहि-स्पृहेरालुः" [ ५. २. ३७. ] इत्यालुर्विधीयत इति तन्द्रालुरिति प्रयोगः ॥ २ ॥

इदन्ताश्चत्वारः–तत्र "कि ज्ञाने" इत्यस्मात् कयतीत्यर्थे "जनि-पणि०" [ उणा० १४०. ] इत्यादिसूत्रेण टप्रत्यये दीर्घे च विहिते–कीट इति रूपम्; तस्मादेव "कि-शॄ-वॄभ्यः करः" [ उणा० ४३५. ] इति करे–केकरो वक्रदृष्टिः; अस्मादेव "तिनिशेतिशादयः" [ उणा० ५३७. ] इति सूत्रे आदिग्रहणात् किशप्रत्यये–कीशः–मर्कटः ॥ ३ ॥

"पति पतने" इत्यस्मात् पतयतीत्यर्थे "शीङ्-श्रद्धा०" [ ५. २. ३७. ] इत्यादिपूर्वोल्लिखितसूत्रेणालौ सति–पतयालुरिति, "पतण् गतौ वा" इत्यस्माच्चौरादिकादपि पतयालुरिति सेद्धुमर्हति ॥ ४ ॥

"गृहि ग्रहणे" गृहयति, अगृहायीत्, इति, "गृहणि ग्रहणे" इति चौरादिकादन्तस्य तु–गृह्यते अजगृहतेत्यादि, उभाभ्यामपि "शीङ्-श्रद्धा०" [ ५. २. ३७. ] इति पूर्वोदीरितसूत्रेणालौ विहिते–गृहयालुरिति ॥ ५ ॥

"चिरिट् हिंसायाम्" इत्यस्माच्चिरिणोतीत्यर्थे "चिरेरिटो भ् च" [ उणा० १४९. ] इतीटप्रत्यये भान्तादेशे जातित्वात् स्त्रियां ङ्यां–चिर्भिटी–वालुङ्की, अस्मादेव "डिण्टश्चर् च वा" [ उणा० १५०. ] इति सूत्रेण डिति इण्टप्रत्यये प्रकृतेर्विकल्पेन चरादेशे–चरिण्टी चिरिण्टी च प्रथमवयाः स्त्री, प्रथमवयोवाचित्वनिबन्धनमेव स्त्रियां ङीः ॥ ६ ॥

अथोदन्तौ द्वौ धातू-"जुं वेगे" "जुङ् गतौ" इत्येताभ्यामुभाभ्यामपि-'जवः, जवनः' इत्यादयः प्रयोगाः। यद्यपि निघण्टुवृत्तौ 'जु' इति सौत्राद् धातोर्जव इत्यादयः साधिताः; तच्चार्थान्तरपरिग्रहाय भविष्यति। पाणिनीयादितन्त्रे च धातुपाठेऽयं धातुर्नैव पठितः केवलं सौत्र एव, तन्मतानुसारेण वा तदुल्लेखः। तथाहि-"जुचङ्क्रम्य" [ पा० ३. २. १५०. ] इति सूत्रे भट्टोजिदीक्षित आह-'जु' इति सौत्रो धातुर्गतौ वेगे चेति ॥ ७ ॥

कुङ् गतौ" इत्यस्मात् क्रवते, कूयते, कव्यमित्यादयः ॥८॥

अथ ऊदन्तः-"भूङ् प्राप्तौ" इत्येकः, तस्मात् "भूङः प्राप्तौ णिङ्" [ ३. ४. १९. ] इति वा णिङि-भावयते, भवते, इत्यादयः, क्ते-भावितम्, भूतमित्यादयश्च ॥ ९ ॥

अथ ककारान्ताः षड् धातवः-"तर्क विचारे" अकारः श्रुतिसुखार्थ उच्चारणार्थो वा, न त्वनुबन्धः, चौरादिकानदन्तान् धातून् विहाय सर्वत्राऽकारान्तेष्वयं क्रमो विज्ञेयः। तर्कति, तर्क्यन्ते-प्रमितिविषयीक्रियन्ते पदार्था अनेनेति-तर्कः ॥१०॥

"कक कर्क हासे" ककति, भूते क्ते-ककितः, "क्तेटो गुरोर्व्यञ्जनात्" [ ५. ३. १०६. ] इत्यप्रत्यये-कका, अचि प्रत्यये-ककः ॥ ११ ॥

कर्कधातोः कर्कतीत्यर्थे "दिव्यवि-श्रु-कु-कर्वि-शकि०" [ उणा० १४२. ] इत्यादिसूत्रेणाटि प्रत्यये-कर्कटः-कपिलः कुलीरश्च, स्त्रियां जातित्वाद् ङीः-कर्कटी-त्रपुसी, "कर्कारुः" [ उणा० ८१३. ] इत्यारुप्रत्यये-कर्कारुः-क्षुद्रचिर्भटी। उणादिबृहद्वृत्तौ प्रकृतसूत्रव्याख्यानावसरे-कर्केति सौत्रादित्युक्त्याऽस्यापि सौत्रत्वं स्पष्टमेव ॥ १२ ॥

"सिक सेकने" सेकतीत्यर्थे "पृषि-रञ्जि-सिकि०" [ उणा० २०८. ] इति सूत्रेण किति अते प्रत्यये स्त्रियां-सिकताः-वालुकाः ॥ १३ ॥

"मर्क संप्रच्छने" मर्कतीत्यर्थे "दिव्यवि०" [ उणा० १४२. ] इति सूत्रेण टे-मर्कटः-वानरः, "कैरव-भैरव०" [ उणा० ५१९. ] इति सूत्रे आदिग्रहणेन निपातनात्-मार्कवः-केशरञ्जनः ॥ १४ ॥

"चक्कि भ्रमणे" चङ्कत इत्यर्थे "वाश्यसि-वासि-मसि०" [ उणा० ४२३. ] इति सूत्रेण उरप्रत्यये-चङ्कुरः-रथोऽनवस्थितश्च ॥ १५ ॥

"मकि गतौ" मकत इत्यर्थे "ककि-मकि०" [ उणा० २४५. ] इत्यन्दप्रत्यये-मकन्दो नाम राजा, येन निर्वृत्ता माकन्दी नाम नगरी ॥ १६ ॥

अथ खान्तः-"रिखिर्लिख्यर्थे" रेखति चित्रकृत्, भिदादयः" [ ५. ३. १०८. ] इति भावार्थेऽङि निपातनाद् रेखा ॥ १७ ॥

अथ गान्तः-"कगे संग्रहारे" अस्माद् "बहुलमेतन्निदर्शनम्" इति चुराद्यन्तर्गणसूत्रेण स्वार्थे चुरादित्वाण्णिचि ततः णम्परे "कगे-वनू-जनै-जृष्-क्नस् रञ्जः" [ ४. २. २५. ] इति वा दीर्घे-कगं कगं कागं कागम्, मिथोऽभीक्ष्णं संप्रहृत्येत्यर्थः, अयं मौन इत्यपि केचित्, कगति-मौनमाश्रयतीत्यर्थः। अयं क्रियासामान्यार्थ इति पाणिनीयाः, तथाहि-सिद्धान्तकौमुद्यां भट्टोजिदीक्षितः-'कगेनोच्यते' अस्यायमर्थ इति विशिष्य नोच्यते क्रियासामान्यार्थत्वात्, अनेकार्थत्वादित्यन्ये"। इत्याह, तथा च कगतीत्युक्ते यथाप्रकरणं याति भुङ्क्ते स्वपितीत्यादयोऽर्था बोद्धुं शक्यन्ते, अस्यैदित्त्वेनाद्यतन्यां प्राप्ताया "व्यञ्जनादेर्वोपान्त्यस्यातः" [ ४. ३. ४७. ] इति वृद्धेः "न श्वि-जागृ-शस-क्षण-ह्म्येदितः" [ ४. ३. ४९. ] इति निषेधात्-'अकगीत्' इत्येव रूपम् ॥ १८ ॥

अथ घान्तः-"अर्घ मूल्ये" महार्घः,

"दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः।
महिम्नस्तवपाठस्य कलां नार्हन्ति षोडशीम् ॥"

इति महिम्नस्तोत्रे पुष्पदन्तः ॥ १९ ॥

अथ चान्तः "मर्चण् शब्दे" मर्चयतीति चौरादिके स्वार्थे णिचि तस्य चानित्यत्वात् तदभावे मर्चतीत्यर्थे "भीण्-शलि-वलि-कल्यति-मर्त्यर्चि०" [ उणा० २१. ] इत्यादिसूत्रेण के "च-जः क-गम्" [ २. १. ८६. ] इति चः कत्वे-मर्कः-देवदारुः, वायुः, दानवः, मनः, पन्नगः, विघ्नकारी च। उणादिवृत्तिग्रन्थे "मर्चः सौत्रो धातुः प्राप्तौ" इत्याचार्याः ॥ २० ॥

अथ जान्तास्त्रयः-"मञ्ज सौन्दर्ये च" चात् शब्दे, मञ्जतीत्यर्थे उणादिषु "पष्ठेधिठादयः" [ उणा० १६६. ] इति सूत्रेणादिशब्दबलान्निपातनात्-मञ्जिष्ठा, "ऋच्छि-चटि०" [ उणा० ३९७. ] इत्यादिसूत्रेण अरे स्त्रियां गौरादित्वान्ङ्यां-मञ्जरी-आम्रादिशिखा, "कृ-शृ-पृ-पूग्-मञ्जि०" [ उणा० ४१८. ] इत्यादिसूत्रेण ईरप्रत्यये-मञ्जीरं-नूपुरः, एवमस्मादेव "कुमुलतुमुल-निचुल०" [ उणा० ४८७. ] इत्यादिना उलप्रत्ययान्ततया निपातनात्-मञ्जुलं-मनोज्ञम्, "खलि-फलि-वृ-पृ०" [ उणा० ५६०. ] इत्यादिना ऊषप्रत्यये स्त्रियां-मञ्जूषा-काष्ठकोष्टः, एवं "भृ-मृ-तृ०" [ उणा० ७१६. ] इत्यादिसूत्रे बहुवचननिर्देशादस्मादपि उप्रत्यये-मञ्जुः ॥ २१ ॥

"पञ्ज रोधे" पञ्जतीत्यर्थे "नाम्नि पुंसि च" [ ५. ३. १२१. ] इत्यके स्त्रियां-पञ्जिका, "ऋच्छि-चटि०" [ उणा० ३९७. ] इत्यादिसूत्रेण अरे-पञ्जरः-शुकाद्यवरोधसद्म ॥ २२ ॥

"कञ्ज शब्दे" कञ्जतीत्यर्थे "अग्यङ्कि-मदि-मन्दि०" [ उणा० ४०५. ] इत्यादिसूत्रेणारप्रत्यये-कञ्जारः-कुसूलजातिः, यूपः, व्यञ्जनं च ॥ २३ ॥

अथ टान्तास्त्रयः—"रण्ट प्राणहरणे" तस्मात् कुपूर्वात् "को रु-रुण्टि-रण्टिभ्यः" [ उणा० २८. ] इत्यकप्रत्यये—कुरण्टकः—वर्णगुच्छो वृक्षजातिविशेषः ॥ २४ ॥

"घट्ट शब्दे" उदित्वाद् "उदितः स्वरान्नोऽन्तः" [ ४. ४. ९८. ] इति नागमे—घण्टति, अस्मादेवाचि—घण्टः, स्त्रियां घण्टा च—वाद्यविशेषः ॥ २५ ॥

"मट ह्रासे" ह्रासो ह्रस्वत्वम्, मटतीत्यर्थे "कॄ-पॄ-कटि-पटि-मटि०" [ उणा० ५८९. ] इत्यहप्रत्यये—मटहः—ह्रस्वो भुजाद्यवयवः ॥ २६ ॥

अथ ठान्तः—"कुठ छेदने" कोठतीत्यर्थे "नाम्युपान्त्य०" [ ५. १. ५४. ] इति के—कुठः—वृक्षः, अस्मादेव "तुषि-कुठि०" [ उणा० ४०८. ] इत्यारे—कुठारः—परशुः ॥ २७ ॥

अथ डान्ताश्चत्वारः—"क्रुड शब्दे" "लिहादिभ्यः" [ ५. १. ५०. ] इत्यचि—क्रोडः—सूकरः, अङ्के वक्षसि च क्रोडा क्रोडम्, "स्त्री-नपुंसकयोः क्रोडा वक्षसि स्यात् किरौ पुमान् ।" इति गौडः ॥ २८ ॥

"उड सङ्घाते" ओडतीत्यर्थे "उडेरुपक्" [ उणा० ३११. ] इत्युपकि—उडुपः—प्लवः ॥ २९ ॥

"वड आग्रहणे" वडतीत्यर्थे "कॄ-शॄ-गॄ-शलि-कलि-गलि०" [ उणा० ३२९. ] इत्यभे स्त्रियां—वडभी—वेश्माग्रभूमिका, ऋफिडादित्वाल्लत्वे—वलभीत्यपि । "वडि-वटि-पेलॢ०" [ उणा० ५१५. ] इत्यवे स्त्रियां—वडवा—अश्वा । "कुलि-कनि-कणि-पलिवडिभ्यः किशः" [ उणा० ५३५. ] इति किति इश-प्रत्ययेबडिशं—मत्स्यग्रहणम् ॥ ३० ॥

"णडण् अवस्यन्दने" अवस्यन्दनं—भ्रंशः । अयं णोपदेशः, णडि-णटि-णुदि-णाधयश्चत्वारो णोपदेशा इत्यन्यत्रोक्तत्वात्, तत्फलं तु "पाठे धात्वादेः०" [ २. ३. ९७. ] इति णो ने विहिते तस्य "अदुरुपसर्गान्तरो ण-हिनु-मीना-ऽऽनेः" [ २. ३. ७७. ] इति सूत्रेण णत्वम्, प्रणाडयतीति । अस्मादेव घञि डस्य लत्वे—प्रणालः । चौरादिकणिचोऽनित्यत्वादभावेऽचि—नडः—तृणजातिः । "नडेर्णित्" [ उणा० ७१२. ] इति णिति ईप्रत्यये—नाडी—आयतसुषिरं द्रव्यम्, अर्धमुहूर्त्तश्च । नाडीशब्दात् स्वार्थे के—'नाडिका' इत्यपि, "नटण् अवस्यन्दने" इत्यस्य स्थाने "णडण्" इति नन्दी प्राह" इति धातुपारायणे कथितम् । तस्मात् परपठितधातुषु यद्यप्ययं पठितुं युक्तस्तथापि "नडेर्णित्" [ उणा० ७१२. ] इति सूत्रे नडेः सौत्रादिति बृहद्वृत्तिग्रन्थात् स्वमतेऽपि सौत्रेष्वयं पठितुं युक्त इति पठितः ॥ ३१ ॥

"किणत् शब्द-गत्योः" किणतीत्यर्थे "नाम्नि पुंसि च" [ ५. ३. १२१. ] इति णके—केणिका—पटकुटी । "निघृषी-ष्यृषि-स्नु-पुषि-किणि०" [ उणा० ५११. ] इति किति वे—किण्वं—सुराबीजं पापं च ॥ ३२ ॥

अथ तान्ताश्चत्वारः—"कुत गुम्फ-प्रीत्योः" कुत्यते—गुम्फ्यते छागरोमभिरिति कुतपः—कम्बलविशेषः, "भुजि-कुति-०" [ उणा० ३०५. ] इति किति अपे सिध्यति, श्राद्धकालार्थे च कोतन्ति—प्रीयन्ते पितरोऽस्मिन्नित्यर्थः ॥ ३३ ॥

"पुत गतौ" पोतन्ति—मधुने गच्छन्तीति विग्रहे "कृति-पुति-लति-भिदिभ्यः कित्" [ उणा०७६. ] इति किति तिक-प्रत्यये—पुत्तिका—मधुमक्षिकाः ॥ ३४ ॥

"लत आदाने" आङ्पूर्वादस्मात् "कृति-पुति०" [ उणा० ७६. ] इति किति तिके स्त्रियाम्—आलत्तिका—गानप्रारम्भः । निरुपसर्गात्—लत्तिका—वाद्यविशेषो गौर्गोधा च । गोपूर्वाद् गोलत्तिका—गृहगोधा । अवपूर्वाद्—अवलत्तिका—गोधा ॥ ३५ ॥

"सात सुखे" अस्माण्णिगि "साहि-साति-वेद्यु-देजि-धारि-पारि-चेतेरनुपसर्गात्" [ ५. १. ५९. ] इति शे—सातयः—सुखकारी ॥ ३६ ॥

अथ थान्तः—"कथ वाक्यप्रबन्धे" अयं चुराद्यन्तर्गत इति मते स्वार्थे णिचि, मतान्तरे प्रयोजकव्यापारे णिगि—कथयति, अचीकथत् । शिष्टप्रयोगोऽपि—"भूरिदाक्षिण्यसम्पन्नं यत् त्वं सान्त्वव्यचीकथः" [ महाभारते ], कथणिति चुरादिपठितस्य तु समानलोपित्वेन तस्याद्यतन्यामचकथदिति रूपम् ॥ ३७ ॥

अथ दान्ताश्चत्वारः—"उद आघाते" ओदति "कुटि-कुलि-कल्युदिभ्य इञ्चक्" [ उणा० १२३. ] इति किति इञ्चप्रत्यये उदिञ्चः—कोणो येन तूर्यं वाद्यते, परपुष्टश्च ॥ ३८ ॥

"क्षद हिंसा-संवरणयोः" क्षदति "त्रट्" [ उणा० ४४६. ] इति सूत्रेण धातुसामान्याद् विहितः त्रट्—क्षत्रम्, तस्यापत्यमित्यर्थे "क्षत्रादियः" [ ६. १. ९३. ] इतीये—क्षत्रियः । "त्वष्टृ-क्षत्तृ०" [ उणा० ८६५. ] इति तृप्रत्ययान्तनिपातनेन—क्षत्ता—नियुक्तः, अविनीतः, दौवारिकः, मुसलः, पारशवः, रुद्रः, सारथिश्च । प्रकृतोणादिसूत्रबृहद्वृत्तौ "क्षद खदने सौत्रः" इत्युक्तम्, तत्रापि खदनं—हिंसैवेति प्रतीयते ॥ ३९ ॥

"सुन्द हिंसा-सौन्दर्ययोः" अचि—सुन्दः, उपपूर्वकस्य उपसुन्दः, एतन्नामकौ दैत्यौ यौ स्त्रीनिमित्तं परस्परं प्रहृत्य मृताविति पुराणी प्रसिद्धिः । "ऋच्छि-चटि०" [ उणा० ३९७. ] इत्यरे—सुन्दरः—मनोज्ञः ॥ ४० ॥

"कदि वैक्लव्य-छेदनयोः" कदते अनटि—कदनम् । "पिचण्डैरण्ड-खरण्डादयः" [ उणा० १७६. ] इति सूत्रे आदिग्रहणेन निपातनात्—कोदण्डः—धनुः । "कदेर्णिद्वा" [ उणा० ३२२. ] इति सूत्रे वैकल्पिके णित्यम्बे—कादम्बः—हंसः, कदम्बः—वृक्षजातिः । "द्वार-शृङ्गार-भृङ्गार-कल्हार-कान्तार-

केदार-खारडादयः" [ उणा० ४११. ] इति सूत्रे निपातनात् कदेरत एदादेशे आरप्रत्यये च–केदारः–क्षेत्रं ग्रवश्च । "मृदि-कन्दि०" [ उणा० ४६५. ] इति सूत्रेणाले गौरादित्वान्ङ्यां–कदली, यद्यप्युक्तसूत्रे कदेः पाठो न दृश्यते, नवा वृत्तौ कदलीशब्दोल्लेखो दृश्यते, तथापि

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥"

इति प्राचामुक्तेः कदेरप्यलप्रत्ययः कल्पनीयः, अत एवाचार्यैरपि स्वोपज्ञाभिधानचिन्तामणिवृत्तावुक्तम्–कदिः सौत्रः, कद्यते कदली "मृदि०" [ उणा० ४६५. ] इत्यलः ॥ ४१ ॥

अथ धान्तः–"मिधृग् मेधा-हिंसा-सङ्गमेषु" अस्मात् क्ये–मिध्यते, मेधतीति "मेधृग् सङ्गमे च" इति पठितस्य । "वौ व्यञ्जनादेः०" [ ४. ३. २५. ] इति क्त्वो वा कित्त्वे–मिधित्वा, मेधित्वा । भिदादौ निपातनादङि–मेधा ॥ ४२ ॥

अथ नान्तः–"धनक् धान्ये" धान्यपदं धान्योपलक्षितक्रियोपलक्षकम्, एवं चोपलक्षणतया व्याख्यानस्य फलं क्रियार्थत्वनिमित्तं धातुत्वमेव, यथा "णील वर्णे" इत्यस्य धातुपारायणे वर्णपदस्य वर्णोपलक्षितक्रियापरत्वेन व्याख्यानं कृतं तथेहापि व्याख्यानमाश्रयणीयमेव । ह्वादित्वात् शिति "हवः शिति०" [ ४. १. १२. ] इति द्विर्त्वे–दधन्ति । "भृ-मृ०" [ उणा० ७१६. ] इत्युप्रत्यये–धनुः–अस्त्रं दानमानं च । "कृषि-चमि-तनि-धन्यन्दि०" [ उणा० ८२९. ] इति ऊप्रत्यये धनूः–धान्यराशिः, ज्या, वरारोहा च स्त्री ॥ ४३ ॥

अथ पान्ताश्चत्वारः–"रिप कुत्सायाम्" रेपति "असृ" [ उणा० ९५२. ] इति सूत्रविहितः सर्वधातुप्रकृतिकोऽसप्रत्ययः–रेपः–पापम् ॥ ४४ ॥

"कप कम्पने" कपति । "ऋ-कृ-मृ-वृ-तनि-तमि-चपि-कपि०" [ उणा० ४७५. ] इत्याले–कपालं–घटाद्यवयवः शिरोऽस्थि च । "कटि-पटि-कण्डि-गण्डि०" [ उणा० ४९३. ] इत्योले–कपोलः–गण्डः ॥ ४५ ॥

"क्षुप ह्रासे" "नाम्युपान्त्य०" [ ५. १. ५४. ] इति के–क्षुपः–ह्रस्वशाखस्तरुः ॥ ४६ ॥

"टुप संरम्भे" टोपति, आटोपनम्, आटोपः ॥ ४७ ॥

अथ वान्तः, "विम्ब दीप्तौ" विम्बति ॥ ४८ ॥

अथ भान्ताः पञ्च–"रिभि स्तुम्भू स्कम्भू स्तम्भे" विरेभते स्म इत्यर्थे "क्षुब्ध-विरिब्ध०" [ ४. ४. ७०. ] इत्यादिसूत्रेण क्तान्तनिपातनादिटोऽभावे–विरिब्धः स्वरः, विरिभितमन्यत् ॥ ४९ ॥

स्तुम्भू इत्यस्य "स्तम्भू–स्तुम्भू०" [ ३. ४. ७८. ] इति श्ना-श्नोः सतोः–स्तुभ्नाति, स्तुभ्नोति । क्ये नस्य लुकि–स्तुभ्यते, ऊदित्वात् क्त्वि वेटि–स्तुब्ध्वा, स्तुभित्वा, वेट्त्वनिमित्तक एव क्तयोः "वेटोऽपतः" [ ४. ४. ६२. ] इतीडभावः–स्तुब्धः, स्तुब्धवान् ॥ ५० ॥

स्कम्भू, अस्यापि पूर्वोक्तसूत्रेण श्ना-श्नोर्विधानाद् रूपे साम्यम्, विशेषश्च विष्कभ्नातीत्यत्र "वेः स्कभ्नः" [ २. ३. ५५. ] इति षः, 'स्कभ्नः' इति श्नानुकरणनिर्देशात् श्नौ तु विस्कभ्नोतीत्येव ॥ ५१ ॥

"स्कुम्भू विस्तारणे च" चात् स्तम्भे, प्राग्वदेव सर्वकार्यं श्नाश्न्वादि, केवलं "जम्बीर०" [ उणा० ४२२. ] इत्यादिसूत्रे ईरप्रत्ययान्तनिपातनात्–कुम्भीरः–जलचरः । "ककुप्-त्रिष्टुबनुष्टुभः" [ उणा० ९६२. ] इति सूत्रे कपूर्वस्य स्कुभ्नातेः 'ककुप्' निपात्यते, कं–वायुं ब्रह्म च स्कुभ्नन्तीति ककुभो दिशः, कुपूर्वात् कुकुप्–उष्णिक्छन्दः । एतेषां धातूनामेकत्र प्रयोगो यथा—

"मुसलक्षेपहुङ्कारस्तोभैः कलभखण्डिनि ! ।
कुचविष्कम्भमुत्तभ्नन् निःस्कुभ्नातीव ते स्वरः ॥" इति,

[ कश्चिन्नायको नायिकायाश्चाटुं रचयति– ] हे कलभखण्डिनि ! धान्यनिस्तुपीकारिणि ! स्वरः, मुसलस्य क्षेपे धान्यखण्डनायोद्यमने, हुङ्काराणां–मुसलक्षेपकालजातानां स्वाभाविकानां हुमितिशब्दानां, स्तोभैः–विश्रामैः, ते–तव, कुचयोर्विष्कम्भं–विस्तारम्, उत्तभ्नन्–ऊर्ध्वीकुर्वन्, निस्कुभ्नातीव–विस्तारयतीवेत्यर्थः ॥ ५२ ॥

"दभ वञ्चने" दभति । अस्मात् "आसु-यु-वपि-रपि-लपि-त्रपि-डिपि-दभि-चम्यानमः" [ ५. १. २०. ] इति ध्यणि दाभ्यः–वञ्चनीयः । बाहुलकात् स्वार्थे णिचि–दाभयति ॥ ५३ ॥

अथ मान्तौ द्वौ–"डिम हिंसायाम्" डेमति । "नाम्युपान्त्य०" [ ५. १. ५४. ] इति के–डिमः–दृश्यकाव्यविशेषः काव्यानुशासनादौ लक्षितः । अस्मादेव "डिमेः कित्" [ उणा० ३५६. ] इति किति डिमे–डिण्डिमः–वाद्यविशेषः ॥ ५४ ॥

"धम शब्दे" दधाम । धमतीत्यादि तु ध्मांधातुनाऽपि सिध्यति । "ध्वसि-रसि-रुचि०" [ उणा० २६९. ] इति सूत्रे आदिग्रहणादस्मादप्यने–धमनः–तृणजातिः । "भिल्ला-ऽच्छ-भल्ल-सौविदल्लादयः" [ उणा० ४६४. ] इति सूत्रे आदिग्रहणेन निपातनात्–धम्मिल्लः–केशपाशः । "सदि-वृत्यमि-धमि०" [उणा० ६८०.] इत्यनौ–धमनिः–मन्या रसवहा शिरा च ॥५५॥

अथ यान्तः–"पीय पाने" पीयति । "खलि-फलि-वृ-पृ०" [उणा० ५६०.] इत्यूषे–पीयूषं–प्रत्यग्रप्रसवक्षीरविकारः, अमृतं घृतं च । "लाक्षा-द्राक्षा-भिक्षादयः" [ उणा० ५९७. ] इति सूत्रे आदिशब्देन निपातनात्–पीयूक्षा–द्राक्षाविशेषः ॥ ५६ ॥

अथ रान्तास्त्रयः–"उर गतौ" ओरति। "उरेरशक्" [ उणा० ५३१. ] इति किदशे–उरशः–ऋषिविशेषः ॥ ५७ ॥

"तुर त्वरणे" तोरति। आङ्पूर्वादस्मात् "नाम्युपान्त्य०" [५. १. ५४.] इति के–आतुरः–रोगी। केवले तु–तुरः–शीघ्रगामी। तुरो गच्छतीत्यर्थे "नाम्नो गमः०" [ ५. १. १०१. ] इति डे–तुरगः। "तॄ-कॄ-शॄ-पॄ-भॄ-वॄ०" [उणा० १८७.] इति सूत्रे उपलक्षणार्थत्वोपगमादस्मादपि अणे–तोरणम्। "नाम्युपान्त्य-कॄ-गॄ-शॄ-पॄ-पूङ्भ्यः कित्" [ उणा० ६०९. ] इति किति इप्रत्यये–तुरिः–तन्तुवायोपकरणम् ॥ ५८ ॥

"तन्द्रि साद-मोहयोः" सादो विषण्णता, मोहो मौढ्यम्। तन्द्रते। ततन्द्रे। तन्द्रितः। तन्द्रा–आलस्यम्, "क्तेटो गुरोर्व्यञ्जनात्" [ ५. ३. १०६. ] इत्यप्रत्ययः। "तॄ-स्तॄ-तन्द्रि-तन्त्र्यविभ्य ईः" [उणा० ७११.] इति ईप्रत्यये–तन्द्रीः–मोहनिद्रा ॥ ५९ ॥

अथ लान्ताः षट्–"चुल परिवेष्टने" चोलति। "नाम्युपान्त्य०" [ ५. १. ५४. ] इति के–निचुलः। अचि–चोलः ॥ ६० ॥

"उल दाहे" ओलति। "निष्क-तुरुष्क०" [ उणा० २६. ] इति निपातनात्–उल्का–औत्पाकं ज्योतिः, अग्निज्वाला च। केचिज्ज्वलेरेवायमुलादेशो निपातनादिति वर्णयन्ति। "शम्बूक-शाम्बूक-वृधूक-मधूकोलूकोरुवूक-वरूकादयः" [ उणा० ६१. ] इति निपातनाद्–उलूकः–काकारिः, प्रकृतसूत्रे बृहद्वृत्तौ च 'अलेरुच्चोपान्त्यस्य' इत्युक्त्वोलूकशब्द उदाहृत इति तदनुसारमयमलधातुनाऽपि साध्यः। "तुरुष्क०" [ उणा० २६. ] इत्यादिसूत्रबृहद्वृत्तावपि उल्काशब्दव्युत्पादनसमये 'ज्वलेरुलादेशश्च, उलेः सौत्रस्य वा' इत्युक्तत्वादस्य सौत्रत्वप्रसिद्ध्याऽनेनापि उल्काशब्दः सिध्यतीति मत्वाऽस्माभिरुदाहृतम्। "विष्टपोलप-वातपादयः" [ उणा० ३०७. ] इति सूत्रे निपातनात्–उलपः–ऋषिः, उलपं-पर्वततृणं पङ्कजं जलं च। "उलेः कित्" [ उणा० ८२८. ] इति किति अक्षुप्रत्यये–उलक्षुः–तृणजातिः ॥ ६१ ॥

"लुल कम्पने" लोलति। लुलितम्। "कुलि-लुलि-कलि-कषिभ्यः कायः" [ उणा० ३७२. ] इति किति आये-लुलायः–महिषः ॥ ६२ ॥

"सल्ल गतौ" सल्लति। "दॄ-कॄ-नॄ-सृ-भृ-धृ०" [ उणा० २६. ] इति अके गौरादित्वाद् ङ्यां–सल्लकी–वृक्षविशेषः, सल्कुत्य लक्यते–स्वाद्यते गजैरिति वा–सल्लकीति प्रकृतसूत्रे बृहद्वृत्तिः ॥ ६३ ॥

"हल्ल घूर्णने" हल्लति। "दॄ-कॄ०" [ उणा० २७. ] इत्यके–हल्लकी–रक्तोत्पलजातिः। यद्यपि "दॄ-कॄ०" [ उणा० २७. ] इति सूत्रे हल्लिर्न पठ्यते तथापि बहुवचननिर्देशादवगम्यते इति व्युत्पादितम् ॥ ६४ ॥

"भिलण् भेदे" भेलयति। णिचोऽनित्यत्वे केवलादचि–भेलः–तरण्डः, डलयोरैक्यात्–भेडः–अजः। "विलि-भिलि०" [ उणा० ३४०. ] इति किति मे–भिल्मं–भास्वरम् ॥ ६५ ॥

अथ वान्तो द्वौ–"धन्व तव गतौ" धन्वति। "उक्षि-तक्षि०" [ उणा० ९००. ] इत्यन्प्रत्यये–धन्वा–मरुः, धनुश्च ॥ ६६ ॥

तव, तवति। "तवेर्वा" [ उणा० ५५० ] इति णिति इषे–ताविषः, तविषो वा–स्वर्गः, ताविषं तविषं वा–बलं तेजश्च। टिद्विधानात् स्त्रियां ङ्यां ताविषी तवषी च–बाला देवकन्या च ॥ ६७ ॥

अथ शान्तास्त्रयः–"पशी स्पशी बाधन-ग्रथनयोश्च" बाधनं प्रतीघातः, चाद् गतौ, पशति, पशते। गतौ कुटिलार्थे यङि "जप–जभ०" [ ४. १. ५२. ] इति म्वागमे–पम्पश्यते। यङ्लुपि–पम्पशीति पम्पष्टि ॥ ६८ ॥

स्पशी–स्पशते, स्पशति। णौ ङे सन्वद्भावापवादभूते "स्मृ-दॄ-त्वर-प्रथ-म्रद-स्तॄ-स्पशेरः" [ ४. १. ६५. ] इति द्वित्वे पूर्वस्य अत्वे–अपस्पशत्। णौ क्ते "णौ दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञसम्" [ ४. ४. ७४. ] इति सूत्रेण णिलुग्-ह्रस्वयोः समुच्चयेन वैकल्पिके निपातने- स्पष्टं स्पाशितम्। अचि–स्पशः–चरः। घञि–स्पाशः–बन्धनम्। अत एव सेयमुभयतःपाशा रज्जुरिति प्रयुज्यते। "स्पशि-भ्रस्जेः स्लुक् च" [ उणा० ७३१. ] इति उः प्रत्ययः स्लुक् चेति–पशुः–तिर्यङ् मन्त्रवध्यश्च जनः ॥ ६९ ॥

"ऋशत् गति-स्तुत्योः" ऋशति। "ऋशि-जनि-पुणि-कृतिभ्यः कित्" [ उणा० ३६१. ] इति किति ये–ऋश्यः–मृगजातिः ॥ ७० ॥

अथ षान्तौ द्वौ–"भिष भये" भेषति रोगोऽस्मादित्यर्थे "भिषेर्भिष-भिष्णौ च वा" [ उणा० १३१. ] इत्यजप्रत्यये पाक्षिके भिषादेशे–भिषजः, भिष्णादेशे च–भिष्णजः–वैद्यः। उभयोरादेशयोरभावे–भेषजम्–औषधम्। "ऋधि-पृचि-भिषिभ्यः कित्" [ उणा० ८७४. ] इति किति अज्प्रत्यये–भिषक्–वैद्यः। "सम्प्रदानाच्चान्यत्रोणादयः" [ ५. १. १५. ] इत्यनेनापादाने उणादिप्रत्ययानां निषेधेऽप्येते शब्दा भीमादिषु कृतपाठानुमानाः "भीमादयोऽपादाने" [ ५. १. १४. ] इति सूत्रेणैवाज्ञाऽज्प्रत्ययान्ता अनुशिष्टा इति विज्ञेयं लक्ष्यानुरोधात् ॥ ७१ ॥

"युपी सेवने" योषति, योषते। "हृ-सृ०" [उणा० ८८७.] इति इत्प्रत्यये–योषित् स्त्री । प्रकृतसूत्रवृहद्वृत्तौ च योषति–गच्छति पुरुषमिति व्युत्पत्तिरुपदिष्टेति युषूधातोर्गत्यर्थत्वमपि तदनुमतमिति प्रतिभाति । "युष्यसिभ्यां क्मत्" [उणा० ८९९.] इति किति मदि–युष्मत्, अत्र युषेः सेवनार्थत्वमुक्तम् ॥ ७२ ॥

अथ सान्तास्त्रयः–"लुस हिंसायाम्" लोसति । "ऋषि-वृषि-लुसिभ्यः कित्" [उणा० ३३१.] इति कित्यभे–लुसभः–हिंस्रः, मत्तहस्ती वनं चेति वृहद्वृत्तिः, लुसभो बालहस्तीति केचित् ॥ ७३ ॥

"पसी गति-बन्धन-निवासेषु" पसते, पसति । गतौ कुटिलार्थे यङि "जप-जभ०" [४. १. ५२.] इति सूत्रे दन्त्यान्तस्यापि पाठस्येष्टत्वाद् म्वागमे पम्पस्यते । यङ्लुपि–पम्पसीति, पम्पस्ति । बन्धने बाहुलकात् स्वार्थिके णिचि–पासयति पाशैरश्वम् । निवासे "मृ-शी-पसि-वस्यनिभ्यस्तादिः" [उणा० ३६०.] इति तादौ ये–पस्त्यं गृहम् ॥ ७४ ॥

"भसक् भर्त्सन-दीप्त्योः" अयं ह्वादिः, "ह्वः शिति" [४. १. १२.] इति द्वित्वे–बभस्ति, क्ते–भसितम् । "हु या-मा-श्रु-वसि-भसि०" [उणा०४५१.] इति त्रे स्त्रियां–भस्त्रा–चर्ममयमावपनमुदरं च । अत्रोक्तं वृहद्वृत्तौ–"भसिं जुहोत्यादौ स्मरन्ति" । तथा च पाणिनीयादौ "भस भर्त्सन-दीप्त्योः" इति जुहोत्यादिगणे पठ्यते । "मन्" [उणा० ९११.] इति सर्वधातुप्रकृतिके मनि–भसितं तदिति भस्म–भूतिः ॥ ७५ ॥

अथ हान्तौ द्वौ–"लुहं हिंसा-मोहयोः" लोहति । अनुस्वारेत्त्वात् "एकस्वरादनुस्वारेतः" [४. ४. ५६.] इतीडभावे–लोढा, लोढुम् । अचि–लोहम् । "मृदि-कन्दि०" [उणा० ४६५.] इत्यलप्रकरणे "मुरलोरल०" [उणा० ४७४.] इति सूत्रे आदिग्रहणाद् लोहलोऽपि निपात्यते, स चास्फुटवाचि रूढ इति केचित् । "मुरलोरल०" [उणा० ४७४.] सूत्रे च काहलशब्दोऽव्यक्तवाचि जने व्युत्पादितः, काहला–वाद्यविशेष इत्यपि तत्रैव । लोहलशब्दश्च तत्र न दृश्यते ॥ ७६ ॥

"रिहं हिंसा-कत्थनादौ" कत्थनं-श्लाघा । रेहति । अनुस्वारेत्त्वादिट् न–रेढा, रेढुम् । रिह्यत इति क्ते स्वार्थे के च कृते–रीढकः–पृष्ठवंशः । भिदादित्वादङि गणे निपातनात्–रीढा–अवज्ञा ॥ ७७ ॥

अथ क्षान्तौ द्वौ–यद्यपि मूर्धन्यान्तत्वेनानयोः षान्तेषु पाठो युक्तस्तथापि वर्णमालासु क्षस्य पृथगपि पाठस्य लोकव्यवहारदृष्टत्वेन वैचित्र्यार्थमन्ते पठितौ, एवमग्रे परपठितधातुष्वपि क्षान्तानामन्ते पाठे हेतुरूह्यः । "चुक्ष शौचे" चुक्षति । क्ते–चुक्षितः । "क्तेटो गुरोर्व्यञ्जनात्" [५. ३. १०६.] इत्यप्रत्यये–चुक्षा, चुक्षा शीलमस्येत्यर्थे "अङ्स्या-च्छत्रादेः" [६. ४. ६०.] इत्यञि चौक्षः, तस्य भावः कर्म वा "पतिराजान्त०" [७. १. ६०.] इति ट्यणि–चौक्ष्यम् ॥ ७८ ॥

"चिक्षि विद्योपादाने" चिक्षते, चिक्षितः, चिक्षा, इति पूर्ववत् ॥ ७९ ॥

इत्येतेषां धातूनां सौत्रत्वाल्लक्ष्यानुरोधाच्च सिद्धिः ॥

अथ गहयतिं यावद् वक्ष्यमाणा धातवः प्रायश्चौरादिका एव, तत्र क्लुवि, चुलुम्पि, कूचि, उद्धुपि, उल्कसि, क्रंशत्यादिपञ्चकं, स्तनादिषट्कं च चुरादित्वप्रयुक्तं कार्यं न लभत इति विज्ञेयम् । चुरादयो धातवोऽसंख्येया एव सन्ति, तेषामियत्ताया अवधारयितुमशक्यत्वात्, अतश्च ते यथालक्ष्यदर्शनमेवानुसर्त्तव्याः । अत एव चन्द्रगोमीनामा वैयाकरणो द्वित्रानेव धातून् दिङ्मात्रप्रदर्शनार्थं चुरादिषु पठितवान् ।

अथ पूर्वं लौकिका धातवो वर्ण्यन्ते, तत्र क्लुविवर्जास्तेऽदन्ता विज्ञेयाः–"क्लुवि वैक्लव्ये" विक्लवते । अचि–विक्लवः । अस्य लोके प्रयोगो यथा—

"मिलन्त्याशासु जीमूता विक्लवन्ते दिवि ग्रहाः ।" इति 'विक्लवन्ते' इत्यस्य विच्छायीभवन्तीत्यर्थः ।

"निसर्गदुर्बोधमबोधविक्लवाः,
क्व भूपतीनां चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया,
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥"

[ किरातार्जुनीये स० १ श्लो० ६ ] इति च भारविः ॥ १ ॥

"वीजण् व्यजने" वीजयति । "राजहंसैरवीज्यन्त" [ ] इति कर्मणि लौकिकप्रयोगः । ङे अदन्तत्वेन "अतः" [४. ३. ८२.] इत्यलुकि समानलोपित्वात् "उपान्त्यस्य०" [४. २. ३५.] इत्यनेनोपान्त्यह्स्वाभावे–अविवीजत् । विपूर्वस्य "ईजि कुत्सने" इत्यस्य च णौ वीजयतीत्यत्र सारूप्येऽपि "व्यैजयत्, व्यैज्यन्त, व्यैजिजत्' इत्यादिरूपं स्यादिति भेदः ॥ २ ॥

"हीलण् निन्दायाम्" हीलयति । ङे प्राग्वदुपान्त्यह्स्वाभावे–'अजिहीलत्' इति रूपम् । क्ते–हीलितः । "णि-वेत्त्या०" [५. ३. १११.] इत्यने–हीलना । णिचोऽनित्यत्वे "क्तेटो गुरोर्व्यञ्जनात्" [५. ३. १०६.] इति 'अ'प्रत्यये–हीला ॥ ३ ॥

"अन्दोलण् हिन्दोलण् प्रेङ्खोलण् दोलने" दोलनम्–उत्क्षेपः । ङे "स्वरादेर्द्वितीयः" [४. १. ४.] इति द्वितीयांशस्य द्वित्वे तत्रापि "न वदनं०" [४. १. ५.] इति नस्य द्वित्वनिषेधे समानलोपित्वाच्च "उपान्त्यस्य०" [४. २. ३५.] इति ह्स्वाभावे–आन्दुदोलत् ॥ ४ ॥

हिन्दोलण्–हिन्दोलयति । अजिहिन्दोलत् ॥ ५ ॥

प्रेङ्खोलण्–प्रेङ्खोलयति । ङे-अपिप्रेङ्खोलत् ॥ ६ ॥

"रूषण् रूक्षण-व्याप्त्योः" रूषयति । अटन् रूषयति भुवमित्यर्थे पृषोदरादित्वात्–आटरूषकः । ङे समानलोपित्वाद् ह्रस्वाभावे–अरुरूषत् । लक्ष्यं यथा—

"परिभ्रमन् लोहितचन्दनोचितः,
पदातिरन्तर्गिरिरेणुरूषितः ।
"महारथः सत्यधनस्य मानसं,
दुनोति नो कच्चिदयं वृकोदरः ॥"

[ किरात० स० ३ ] इति भारविः ।

एवमादयो धातवो लौकिकप्रयोगेषु प्रसिद्धाः, प्रकृतधातुपाठादिषु पाठाभावेऽपि लक्ष्यानुरोधादनुसर्त्तव्या इति शास्त्रकृतां परामर्शः ।

अथ वाक्यकरणीयाः "चुलुम्प च्छेदने" चुलुम्पति । "कञ्चुका-ऽशुक-नंशुक-पाकुक०" [ उणा० ५७. ] इत्यादिसूत्रे निपातनादन्त्यस्वरादिलोपपूर्वके किदुकप्रत्यये–चुलुकः–करकोशः । "कीचक-पेचक०" [ उणा० ३३. ] इत्यादिसूत्रे आदिग्रहणात्–चुलुम्पकः–कृमिजातिः । लक्ष्यं यथा—

"निपानं दोलयन्नेष प्रेङ्खोलयति मे मनः ।
पवनो वीजयन्नाशा ममाशामुच्चुलुम्पति ॥" [ ] ॥१॥

"कूच उन्नंदने" कूचति "नाम्नि पुंसि च" [५. ३. १२१.] इति णके स्त्रियां–कूचिका–चित्रकरलेखनी कुञ्चिका च ॥ २ ॥

"घटण् बन्धने" निर्घाटयति । णके–घाटकः । णिचोऽनित्यत्वात्तदभावेऽचि घटः–तुला ॥ ३ ॥

"उल्लुडण् उट्टीकने" अदन्तः । उलयोरभेदाद्–उल्लुलयतीत्यपि । तथा च माघः—

"अग्रे क्रमेलकसमागमभीतभीत—
स्तावत् खरः प्रखरमुल्लुलयांचकार ।
यावच्चलासनविलोलनितम्बबिम्ब—
विस्रस्तवस्त्रमवरोधवधूः पपात ॥"

[ शिशुपालवधे ],

अत्राल्लुकः स्थानिवत्त्वादुपान्त्यगुणो न ॥ ४ ॥

"अवधीरण् अवज्ञायाम्" । लक्ष्यं यथा–"तन्न धर्ममवधीरय धीर०" [ ] ङे आववधीरत् ॥ ५ ॥

"उद्धुषत् उल्लकसत् उच्छ्वसने" प्रथमः कुटादिः, उद्धुषत्युल्लकसति चाङ्गमनेन–उद्धुषणमुल्लकसनं च–रोमाञ्चः । अत्र "कुटादेः०" [ ४. ३. १७. ] इत्यनटो ङित्वाद् गुणाभावः । अत्र लौकिकानां वाक्यकरणीयानां च धातूनां ग्रन्थभेदेन पाठसाङ्कर्यं दृश्यते, केचित् कुत्रचिल्लौकिकेषु पठिता अपि, ग्रन्थविशेषे वाक्यकरणीयेषु निबद्धाः, वाक्यकरणीयत्वेनान्यत्र ख्याताश्च परत्र लौकिकेषु पठिता दृश्यन्ते । लक्षणभेदश्चैषामवलोक्यते, तेनैषां लौकिकत्वस्य वाक्यकरणीयत्वस्य च निश्चयो लक्ष्यैकचक्षुष्कैरेवावधारणीयः, न तु लक्षणैकचक्षुष्कैरस्माभिर्लक्षणस्य तादृशस्यानुपलब्धेरिति न तदर्थं प्रयत्यते । यानि चैषां लक्षणानि विवरणे प्रतिपादितानि तान्यपि प्रायिकान्येव ॥ ६–७ ॥

अथ सौत्र-लौकिक-वाक्यकरणीयेभ्योऽन्येऽपि येऽदन्ता धातवो धातुपारायणादौ पठितास्तेषामपि प्रयोगविशेषपरिज्ञानाय परेषां तद्वर्णनव्यवहारस्य च परिपालनायेह शिष्यबुद्धिवैशद्यार्थं प्रदर्शनं क्रियते–"खचण् बन्धने" "तडित् खचयतीवाशाः" इति वर्षावर्णने वाल्मीकिः, "आसने रत्नखचिते" इत्यादिश्च कवीनां बहुशः प्रयोगोऽस्य । अस्यादन्तत्वेन "अतः" [ ४. ३. ८२. ] इत्यल्लुकः स्थानिवद्भावादुपान्त्यवृद्धिर्न, ङे समानलोपित्वात् "असमानलोपे०" [ ४. १. ६२. ] इति पूर्वस्य सन्वद्भावो दीर्घश्च न ॥ १ ॥

"ओजण् बल-तेजसोः" ओजयति । सनि "स्वरादेः०" [ ४. १. ४. ]इति जेर्द्वित्वे-ओजिजयिषति, ङे- औजिजत्, न चाल्लुकः स्थानिवद्भावाज्ज इत्यस्यैव द्वित्वं युक्तमिति कथं जिशब्दस्य द्वित्वमिति शङ्क्यम् "अतः" [ ४. ३. ८२. ] इत्यस्य वृत्तौ णिविषये अल्लुक् स्यादिति व्याख्याया दर्शनेन णेर्विषयतायामेवाल्लुकः प्रवृत्त्या तस्य परनिमित्तकत्वाभावेन "स्वरस्य परे०" [ ७. ४. ११०. ] इत्यस्य च परनिमित्तकस्वरादेशस्यैव स्थानिवद्भावविधानात् स्थानिवत्त्वाप्रवृत्तेः, यद्यप्यत्रोपान्त्यकार्यस्य द्वित्वात् प्रबलत्वेन द्वित्वात् पूर्वम् "उपान्त्यस्य०" [ ४. २. ३५. ] इति ह्रस्वः प्राप्नोति तथापि समानलोपित्वेन न भवति । अचि सति–ओजं–विषमसंख्यास्थानम् । "अस्" [ उणा० ९५२. ] इति सर्वधातुप्रकृतिकेऽसि–ओजः–बलम् ॥ २ ॥

"स्फुटण् प्राकट्ये" स्फुटयति, अल्लुकः स्थानिवद्भावाद् गुणाभावः । स्फुटयत्यर्थमित्यचि-स्फोटः ॥ ३ ॥

"तुच्छण् आच्छादने" तुच्छयति ॥ ४ ॥

"स्कन्धण् समाहारे" स्कन्धयति । यद्यपि स्फुट-तुच्छ-स्कन्धादयः शब्दाः प्रसिद्धा एव, तेभ्यः करोत्यर्थे णिजि स्फुटं करोति स्फुटयतीत्यादयः प्रयोगाः साधयितुं शक्यन्त एव, तथा चैषामदन्तधातूनां चुरादौ पाठो नावश्यक इति प्रतिभाति, तथापि चुरादिषु पाठात् तेषां चानित्यणिजन्ततया क्वचिण्णिचं विनाऽपि धातुपाठप्रयुक्तः क्रियात्वेन प्रयोगः सिद्ध्येदित्यभिप्रायेणेह पाठः । एषां चादन्तत्वेनानेकस्वरत्वनिमित्तानि कार्याण्यपि भवन्ति, अन्यथा णिचोऽभावेऽनेकस्वरत्वाभावान्न स्युः, यद्यपि णिच्सन्नियोग एव चुरादीनामदन्तता इति सिद्धान्तस्तथापि

न्यायानां स्थविरयष्टिप्रायत्वेन तस्येहानाश्रयणं लक्ष्यानुरोधादिति ध्येयम्। तथा चानेकस्वरत्वादेकस्वरत्वनिमित्तको यङ् "व्यञ्जनादेकस्वरात्०" [३. ४. ९.] इति विहितो न भवति, तथा "धातोरनेकस्वरात्०" [३. ४. ४६.] इति परोक्षायां आम् च भवति, एवं शीलाद्यर्थे "निन्द-हिंस०" [५. २. ६८.] इति णके-स्फुटक इत्यादि च सिध्यति। कैश्चित्तु-एवंप्रकाराणां धातूनामतो लुकं बाधित्वाऽन्त्यवृद्धिविधानात् प्वागमकरणाच्च स्फुटापयतीत्यादीनि रूपाणि सम्मतानि। अत्र कैश्चित् तुच्छधातोर्लक्ष्यप्रदर्शनाय माघकवेः "पांसुर्दिशां मुखमतुच्छयदुत्थितोऽद्रेः" [शिशुपालवधे ६.] इत्युदाहृतं, परन्तु साम्प्रतिके मुद्रितपुस्तके "पांसुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः" इत्येव पाठः समुपलभ्यते, पाणिनीयचुरादिगणपाठे च "तुत्थ आवरणे" इति पठ्यते, किमत्र युक्तमिति लक्ष्यैकचक्षुष्का एव निर्णेतुमलम्॥ ५॥

"ऊषण् छेदने" ऊषयति। सनि "स्वरादेः०" [४. १. ४.] इति षिशब्दस्य द्वित्वे-ऊषिषयिषति, ङे-औषिषत्, प्रागुक्तन्यायेन अल्लुको णिविषयतायामेव विधानात् स्थानिवद्भावाभावः। 'मा भवानूषिषत्' इत्यत्रादन्तत्वेन समानलोपित्वाद् द्वित्वात् पूर्वं प्राप्तः "उपान्त्य०" [४. २. ३५.] इति ह्रस्वो न॥ ६॥ इत्यादि।

अथ "कुशु ['कुशु' इति क्वचित् पाठः, किन्तु समुपलभ्यमानधातुपारायणपुस्तके 'कुशु' इत्येव पाठः समुपलभ्यते] पिशु कुसु दसु त्रसु" अनुक्तार्थाः। उदित्त्वान्नागमे-कुंशतीत्यादिरूपाणि। यद्यप्येते चुरादौ भासार्थत्वेन पठिताः, किन्त्वर्थान्तरेऽपि ते धातवः सन्तीति धातुपारायणे कथितम्, परन्तु लक्ष्यादर्शनेनार्थानां निर्णयस्य कर्तुमशक्यत्वेनास्माभिरनुक्तार्थत्वेनोक्ताः, सति च लक्ष्यदर्शने प्रकरणवशादेवैषामर्थनिर्णयः कार्य इति हृदयम्। यद्यप्यन्येषामपीदृशानां धातूनामर्थनिर्णयायेयमेव गतिस्तथाप्येते दिगर्थमुक्ताः॥ ५॥

अथ परपठिता धातवः, अत्र प्रकरणे ये धातवः परैरधिकाः पठ्यन्ते ते, ये च हैमधातुपाठे पठिता अपि परैरन्यथा पठ्यन्ते, तेऽपि प्रदर्श्यन्ते शिष्यबुद्धिवैशद्यार्थम्। तत्र प्रथमं त्रिंशददन्ता धातवः प्रदर्श्यन्ते-"खेडण् भक्षणे" खेडयति। ङे समानलोपित्वात् "उपान्त्यस्य०" [४. २. ३५.] इति ह्रस्वाभावे-अचिखेडत्॥ १॥

"पणण् विक्रये" ण्यन्तात् "युवर्ण-वृ-दृ-वश-रण-गमृद्ग्रहः" [५. ३. २८.] इत्यलि अदन्तत्वादेव णिनिमित्तवृद्ध्यभावे णिलोपे-विपणः-विक्रयः, "पणि व्यवहार-स्तुत्योः" इत्यस्य चेवर्णाद्यन्तत्वाभावेनालोऽप्राप्त्या घञि-विपाण इति स्यात्॥ २॥

"वित्तण् दाने" वित्तयति। क्ते-वित्तितः। क्त्वि-वित्तयित्वा। अदन्तत्वसामर्थ्यादतो लुगभावे तस्य मतान्तरप्रसिद्ध "अचो ञ्णिति" [पा० सू० ७. २. ११५.] इति वृद्धौ-वित्तापयतीत्यपीति केचित्॥ ३॥

"कर्त्त कर्त्र कत्थण् शैथिल्ये" कर्त्तापयति। 'कर्त्तयति, अचकर्त्तत्' इत्यादि तु "कृतैत् छेदने" "कृतैप् वेष्टने" इत्याभ्यामपि स्वार्थिके णिचि स्यात्॥ ४॥

कर्त्रण्-कर्त्रयति, कर्त्रापयति, कर्त्रितम्॥ ५॥

कत्थण्-कत्थापयति। 'कत्थयति' इति तु "कत्थि श्लाघायाम्" इत्यस्यापि स्वार्थिके णौ सिद्धम्॥ ६॥

"श्लथ शरण् दौर्बल्ये" श्लथयति। अशश्लथत्, अदन्तत्वनिबन्धनो वृद्ध्यभाव-सन्वद्भावाभावौ॥ ७॥

शरण्-शरयति। अदन्तत्वाद् वृद्धिर्न-अशशरत्, समानलोपित्वात् सन्वद्भाव-दीर्घौ न॥ ८॥

"छदण् संवरणे" छदयति। यद्यपि छदेर्घटादिपाठात् णौ "घटादेः०" [४. २. २४.] इति ह्रस्वे छदयतीत्यादिरूपमदन्तत्वाभावेऽपि सिध्यति, तथापि घटादौ ऊर्जनार्थकस्यैव पाठादिह संवरणरूपेऽर्थान्तरे तथा रूपसिद्धिः फलम्। किञ्च तस्य [घटादेः] प्रयोक्तृव्यापारविवक्षायामेव णेर्लाभ इह च स्वार्थेऽपीति विशेषः। यद्यपि "बहुलमेतन्निदर्शनम्" इत्युक्ततया घटादेरपि स्वार्थे णिर्लभ्यत एव, तथापि तस्यादन्तत्वाभावेन ङे 'अचिच्छदत्' इति रूपं स्यात्, अस्य चादन्ततया समानलोपित्वेन 'अचच्छदत्' इति रूपमिति विशेषः स्पष्ट एवेति चुरादावदन्ततया पाठ आश्रीयते॥ ९॥

"लभण् प्रेरणे" अदन्तत्वाद् वृद्ध्यभावे-लभयति, लभितम्। "णि-वेत्ति०" [५. ३. १११.] इति अने-विलभना॥ १०॥

"श्रपण् पाके" श्रपयति। ङे-अशश्रपत्। क्ते-पाकार्थे शृतमिति निपातनात्, शृतं-हविः क्षीरं वा, क्षीरहविर्भ्यामन्यत्र श्रपितमित्येव॥ ११॥

"खादण् क्षेपे" खादयति। ङे-अचखादत्॥ १२॥

"स्तन ध्वन स्वन स्यम शब्दे"। अनेकस्वरत्वहेतोर्भृशाभीक्ष्ण्येऽप्येभ्यो यङ् न भवति, तस्मादेव हेतोः परोक्षाया आमि-स्तनाञ्चकारेत्यादि रूपं भवति। शीलाद्यर्थे "निन्द-हिंस०" [५. २. ६८.] इति णके-स्वनकः स्यमक इत्यादि। 'स्तनकः, ध्वनकः' इत्यादि 'स्तनयति, अतस्तनत्, ध्वनयति, अदध्वनत्' इत्यादि च यथा प्रकृताभ्यां स्तन-ध्वनाभ्यां सिध्यति तथा "स्तनण् गर्जे" "ध्वनण् शब्दे" इत्याभ्यां चुराद्यदन्ताभ्यां स्वपठितधातुभ्यामपि सिध्यति। स्वनस्य चावर्तसन एव घटादित्वमित्यतोऽत्रादन्तेषु पाठादर्थान्तरेऽपि स्वनय-

तीति सिद्धम् । अदन्तत्वेन समानलोपित्वाच्च ङे–असस्वनदिति, स्तमस्य चासस्तमदिति, अनदन्तत्वे स्वनयोर्ङेऽसमानलोपित्वात् सन्वद्भावे–'असिस्वनत्, असिस्तमत्' इति रूपे स्याताम् । स्तमयतीति त्वदन्तत्वाभावेऽपि "अमोऽकम्यमि-चमः" [४. २. २६.] इति ह्रस्वे स्यादेव ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥

"षम ष्टम वैक्लव्ये" षोपदेशाविमौ । अत्र–शास्त्रे षम १–ष्टम २–ष्वेक्क ३–ष्वर्त्ति ४–षाधि ५–षन्ति ६–षुन्भि ७–षुरि ८–षिलि ९–षान्त्वि १०–ष्णुसि ११–ष्णसि १२–ष्टृहि १३–ष्टृंहि १४–ष्टृक्षयः १५ पञ्चदश धातवः सादित्वेऽपि पाठे षोपदेशाः सन्ति, ततश्च "षः सोऽष्ट्यै-ष्ठिव०" [ २. ३. ९८ ] इति षस्य सत्वे कृते सस्य कृतत्वेन "नाम्यन्तस्थाकवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेऽपि" [ २. ३. १५. ] इति षत्वं भवति, तेनात्र णौ सनि–'सिषमयिषति, तिष्टमयिषति, इति रूपयोः सिद्धिः । णौ ङे अदन्तत्वात् सन्वद्भावाद्यभावे–'अससमत्, अतस्तमत्' इति । अनेकस्वरत्वाच्च यङपि न, परोक्षायाश्चाम् भवतीति–समाञ्चकार, स्तमाञ्चकारेत्यादि । शीलाद्यर्थे "निन्द-हिंस०" [ ५. २. ६८. ] इति णके–समकः स्तमक इति ॥ १७ ॥ १८ ॥

"ललण् ईप्सायाम्" ललयति, ङे पूर्ववत् सन्वद्भावाद्यभावात्–अललत् । "ललिण् ईप्सायाम्" इत्यस्य तूपान्त्यवृद्ध्या–लालयते, अलीललतेत्यादि ॥ १९ ॥

"मलण् धारणे" मलयति । "युवर्ण०" [ ५. ३. २८. ] इत्यलि–परिमलः । "वल्पुल वल्पूल पल्पुल पप्पूल वत्पुलण् लवन-पवनयोः" पञ्चाप्येते ओष्ठ्यमध्याः । वल्पुलयतीत्यादि क्षेत्र-सबुसधान्ययोः कर्मतया प्रयोगे । ङे सन्वद्भावाद्यभावात्–'अववत्पुलत्' इत्यादि ॥ २१–२५ ॥

"कुमालण् क्रीडायाम्" कुमालयति, अचुकुमालदित्यादि । सुपूर्वादचि–सुकुमालः । रलयोरभेदात् सुकुमार इत्यपि ॥२६॥

"पशण् अनुपसर्गो वा" विकल्पेनादन्त इत्यर्थः । अयं च प्रकृतेऽनिर्दिष्टार्थोऽपि कैश्चिद् गत्यर्थ इष्टः । पशयति, पाशयति, अपपशत्, अपीपशदित्यादि, अदन्तत्वस्य वैकल्पिकत्वेन पक्षे वृद्धिः सन्वद्भावादि च भवति । अनुपसर्ग इति किम् ? उपसर्गे सति 'प्रपशति, प्रपशते' इत्यादि, पशी इति सौत्रस्योभयपदिनः प्रयोगेऽदन्तत्वनिबन्धनकार्याभावो यथा स्यात् ॥ २७ ॥

"शशण् कान्तौ" शशयति । ण्यन्तस्येवर्णान्ततया "युवर्ण०" [ ५. ३. २८. ] इत्यलि–शशः ॥ २८ ॥

"अन्सण् विभाजने" व्यंसयति । व्यंसको धूर्त्तः, मयूरव्यंसकः । सनि "स्वरादेः०" [ ४. १. ४. ] इति सेर्द्वित्वे–व्यंसिसयिषति, "शिड्ढेऽनुस्वारः" [ १. ३. ४०. ] इत्यत्र 'अनु' इत्यधिकारात् सर्वेषु कार्येषु कृतेषु पश्चात् तस्य प्रवृत्त्या द्वित्वे कर्त्तव्ये नकारस्यैव सत्त्वेन तस्य "न बदनं संयोगादिः" [ ४. १. ५. ] इति नकारस्य द्वित्वं निषिध्यते, एवं ङे–व्यंसिसत्, पूर्वमेवानुस्वारे तु तत्सहितस्य द्वित्वेऽनिष्टप्रयोगापत्तिः । अदन्तत्वसामर्थ्यात् कदाचिदतो लुगभावे वृद्धौ प्वागमे च–व्यंसापयतीत्यपि ॥ २९ ॥

"गहण् गहने" गहयति, गहापयतीत्यादि ॥ ३० ॥ इत्यदन्ताः परपठिताः ॥

अथ द्वावादन्तौ–"गाक् जन्म-स्तुत्योः" ह्वादिरयम्, "ह्वः शिति" [ ४. १. १२. ] इति द्वित्वे–जगाति ॥ ३१ ॥

"माङ्च् माने" मायते, श्यस्य शित्त्वादत्र "ईर्व्यञ्जनेऽयपि" [ ४. ३. ९७. ] इतीत्वं नास्ति तत्राशितीत्युक्तत्वात् । "नेर्ङ्मा-दा०" [ २. ३. ९७. ] इति नेर्णत्वे–प्रणिमायते ॥३२॥

अथ चत्वार इदन्ताः–"किक् ज्ञाने" ह्वादित्वात् "ह्वः शिति" [ ४. १. १२. ] इति द्वित्वे–चिकेति ॥ ३३ ॥

"क्षि जिरिद् हिंसायाम्" क्षिणोति ।

"यदि नाम जिगीषयापि ते निपतेयुर्वचनेषु वादिनः ।
चिरसंगतमप्यसंशयं क्षिणुयुर्मानमनर्थसंचयम् ॥"
[ सिद्धसेनीयचतुर्थद्वात्रिंशिकायां श्लो० १४ ]

तथा—

"शस्त्रेण रक्ष्यं यदशक्यरक्षं, न तद्यशः शस्त्रभृतां क्षिणोति ।"
[ रघुवंशे द्वि० स० ] इति कालिदासः ।

"क्षिणूयी हिंसायाम्" इत्यस्य तु गुणे–क्षेणोतीति स्यात् ३४ जिरिद्–जिरिणोति ॥ ३५ ॥

"चिगण् चये०" अयं चुरादिरपि घटादिः, "घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे" [ ४. २. २४. ] इति ह्रस्वे–चययति । "चिस्फुरोर्नवा" [ ४. २. १२. ] इत्यात्वं त्वस्य परैर्नेष्यते । ञिणम्परे णौ तु वा दीर्घे–अचायि, अचयि, चायं चायं, चयं चयम् । णिजनित्यत्वपक्षे च–चयति, चयते । अचुरादेरघटादेश्च "चिंग्ट् चयने" इत्यस्य तु–चिनुते, चिनोतीत्यादि, णौ तु "चिस्फुरोर्नवा" [ ४. २. १२. ] इत्यात्वविकल्पनात्–चापयति, चाययतीत्यादि, ञिणम्परे णौ तु–अचापि, चापं चापम्, अचायि, चायं चायम्, इति भवति । पाणिनीयैस्तु–चौरादिकस्य घटादेरप्यात्वविकल्प इष्यत इति 'चपयति चययति' इति द्वैरूप्यं तस्यापि भवतीति स्पष्टं चुरादिगणे वै० सिद्धान्तकौमुद्याम् ॥ ३६ ॥

अथ नव इदन्ताः–"दीधीकि दीप्ति-देवनयोः" दीधीते । क्तौ–निपातनाद् दीधितिः । ३७ । "ई वेवीकि प्रजन-कान्त्य-

सन-खादन-गतिषु" प्रजनं-प्रथमगर्भग्रहणम्, असनं-क्षेपः, अशनं वा-तृप्तिः । इते गौः, प्रथमगर्भं गृह्णातीत्यर्थः । एवं-वेवीते ॥ ३८ ॥ ३९ ॥

"क्षींष्श् हिंसायाम्" क्षीणाति, क्षीतः, क्षीतवान् । षित्त्वात् "षितोऽङ्" [ ५. ३. १०७. ] इत्यङि-'क्षिया' इति तु "क्षिपृश् हिंसायाम्" इत्यस्मादपि सेत्स्यति ॥ ४० ॥

"व्रींश् वरणे" "भ्रींश् भरणे" एतौ प्वादी । "प्वादेर्ह्रस्वः" [ ४. २. १०५. ] इति ह्रस्वे-व्रिणाति, भ्रिणाति । प्वादित्वस्यास्वीकारे-व्रीणाति, भ्रीणातीत्यपि ॥ ४१ ॥ ४२ ॥

"प्लींश् शोषणे" ओष्ठ्योपान्त्योऽयम्, प्वादिर्ल्वादिश्चायम् । प्वादित्वाद् ह्रस्वे-ल्पिनाति, ल्वादित्वाच्च क्त-क्तवतु-क्तीनां तकारस्य "ॠल्वादेरेषां तो नोऽप्रः" [ ४. २ ६८. ] इति नकारे-ल्पीनः, ल्पीनवान्, ल्पीनिः इति । अनुस्वारेत्त्वादिडभावे-ल्पेता, ल्पेतुम् ॥ ४३ ॥

"ल्वींष् गतौ" अस्य प्वादित्वं ल्वादित्वं वा नानुमन्वते, तेन 'ल्वीनाति' इति । क्तादीनामपि तकारस्य नकाराभावे-ल्वीतः, ल्वीतवान्, ल्वीतिः, इत्येव ॥ ४४ ॥

"ज्रीण् वयोहानौ" युजादिरयम्, ततश्च "युजादेर्नवा" [ ३. ४. १८. ] इति वा णिचि-ज्राययति, ज्रयति । "जॄण्" इत्यस्य तु-जारयति, जरतीति स्यात् ॥ ४५ ॥

अथ द्वावुदन्तौ-"खुंङ् गतौ" खवते, चुखुवे । अनुस्वारेत्त्वादिडभावे-खोता, खोतुम् ॥ ४६ ॥

"धुग्ट् कम्पने" धुनुते, धुनोति । लक्ष्यं यथा- 'पद्मान्तराणि च दुनोति धुनोति पक्षौ' "धूग्ट् कम्पने" इत्यस्य तु धूनोति, धूनुत इत्यादि, "धूगौदितः" [ ४. ४. ३८. ] इति वेटि-धूता धवितेत्यादि । अस्य चानुस्वारेत्त्वात्-धोता, धोतुम्, क्ते-विधुत इति । यथा "आराधयन्ति विधिवद् विधुतान्यकृत्याः" ॥ ४७ ॥

अथ त्रय ऊदन्ताः-"गूं गूतृच् पुरीषोत्सर्गे" अत्र द्वितीयस्य चित्त्वेऽपि प्रथमो भ्वादिरेव, अनुस्वारेच्च, द्वितीयस्तु तुदादिरिति विवेचनीयम्, एतदर्थसूचनार्थमेव चकारस्य प्रयोगोऽन्यत्र च तदप्रयोगः, अन्यत्र च सर्वत्रानेकधातुप्रान्तस्थेन काद्यनुबन्धेन तत्रत्यानां सर्वेषामेव तदनुबन्धफलभाक्त्वम् । गवति । अनुस्वारेत्त्वादिडभावे-अगौषीत् । गूत्वा । "गुंङ् शब्दे" इत्यस्य तु गवते, "धुड्-ह्रस्वात्०" [ ४. ३. ७०. ] इति सिजिकि-न्यगुत, क्त्वि गुत्वेति च भवति । गोता, गोतुं, गोतव्यमिति तूभयोः सममेव ॥ ४८ ॥

गूत्, कुटादिरयम्, तेन सिचः "कुटादेः०" [ ४. ३. १७. ] इति ङित्त्वे "सिचि परस्मै समानस्याङिति" [ ४. ३. ४४. ] इति वृद्धिर्न, इटि ईति च "धातोरिवर्ण०" [ २. १. ५०. ] इत्युवादेशे च-न्यगुवीत्, तृजादीनामपि ङित्त्वाद् गुणाभावे-गुविता, गुवितुं, गुवितव्यम् । क्त्वाप्रत्यये "उवर्णात्" [ ४. ४. ५८. ] इतीड्निषेधे-गूत्वा । "गुंत् पुरीषोत्सर्गे" इत्यस्य तु-अनुस्वारेत्त्वादिडभावे-न्यगुषीदित्यादि, गुता, गुतुं, गुतव्यमित्यादि च ॥ ४९ ॥

"दूट् हिंसायाम्" दूनोति "टुदुंट् उपतापे" इत्यस्य दुनोतीत्यादि भवति ॥ ५० ॥

अथ ऋदन्ता अष्टौ-"जृं अभिभवे" जरति । यथा च "यमी जरति कर्माणि" इति । अनुस्वारेत्त्वादिडभावे-जर्त्ता, जर्तुम् । शीलार्थे "वयः-शक्ति-शीले" [ ५. २. २४. ] इति शाने जरमाणो नाम कश्चित्, तस्यापत्यं वृद्धमित्यर्थे "गर्गादेः०" [ ६ १. ४२. ] इति यञि-जारमाण्यः ॥ ५१ ॥

"घृक् क्षरण-दीप्त्योः" "सृक् गतौ" "हृक् बलात्कारे" त्रयो ह्वादौ, "हवः शिति" [ ४. १. १२ ] इति द्वित्वे-जघर्त्ति, ससर्त्ति, जहर्त्ति । ५२ । ५३ । ५४ ॥

"स्पृंट् पालन-प्रीत्योः" ओष्ठ्योपान्त्योऽयम् स्पृणोति, पस्पार । अनुस्वारेत्त्वादिण् न-स्पर्त्ता, स्पर्त्तुम् ॥ ५५ ॥

"ऋट् कृग्श् हिंसायाम्" ऋणोति । "ऋणूयी गतौ" इत्यस्य गुणे-अर्णुते, अर्णोतीति स्यात् ॥ ५६ ॥

"कृंग्श्, ल्वादिरयम्, तेन तो ने-कृणः, कृणवान्, कृणिः । कॄग्शस्तु-कीर्णः, कीर्णवान्, कीर्णीरिति । कृणातीति तु कॄग्शोऽपि स्यात् ॥ ५७ ॥

"वृग्श् वरणे" अयमपि ल्वादिः, तेन क्तादीनां तः "ॠल्वादेः०" [ ४. २. ६८. ] इति नकारे-वृणः, वृणवान्, वृणिः । वॄग्शस्तु "ओष्ठ्यादुर्" [ ४. ४. ११७ ] इत्युरि-वूर्णः, वूर्णवान्, वूर्णिरिति । वृणातीति तूभयोस्तुल्यमेव ॥ ५८ ॥

अथ ॠदन्तास्त्रयः-"चॄ भक्षण-गत्योः" चीर्णा, अचारि गवा, आचीर्णं तपः । अस्य च क्त-क्तवत्वोरेव कृति प्रयोगो, न तु प्रत्ययान्तरे ॥ ५९ ॥

"पॄक् पालन-पूरणयोः" ह्वादिरयम् । तसि "हवः शिति" [ ४. १. १२. ] इति द्वित्वे पूर्वस्य "पृ-भृ-मा-हाङामिः" [ ४. १. ५८. ] इति इत्त्वे "ओष्ठ्यादुर्" [ ४. ४. ११७. ] उत्युरि "भ्वादेर्नामिनः०" [ २. १. ६३. ] इति दीर्घे च-पिपूर्त्तः, अन्तौ परे-पिपुरति, सप्तमीयाति-पिपूर्यात्; पिपर्त्तीत्यादि तु "पृंक्" इत्यस्यापि स्यादेव ॥ ६० ॥

"दॄङ्च् भये" दीर्यते । कर्मकर्त्तरि भाव-कर्मणोश्च 'दीर्यते' इति तु "दॄ भये" इत्यनेनापि सिध्यति ॥ ६१ ॥

अथ ओदन्तः-"ज्योङ् उपनयन-नियमन-व्रतादेशेषु" उपनयनं-मौञ्जीबन्धः, नियमः-संयमः, व्रतादेशः-संस्कारादेशः । क्ते-जीतः "ज्या-व्यधः क्ङिति" [ ४. १. ८१. ]

इति ग्वृत्। "व्यञ्जनान्तः स्थातोऽख्याध्यः" [ ४. २. ७१. ] इति नत्वं तु नेष्यते परैः, आगमानामनित्यत्वादिडपि न ॥६२॥

अथ कान्ताः पञ्च–"दकु कृच्छ्रजीवने" आङ्पूर्वात् क्वौ उदित्त्वान्ने–आदङ्क्, आदङ्केति त्याद्यन्तप्रतिरूपमव्ययमप्यस्ति ६३

"तिकृङ् टेकृङ् षेकृङ् गतौ" णौ ङे ऋदित्त्वात् "उपान्त्यस्य०" [ ४. २. ३५. ] इति ह्रस्वाभावे–अतितेकत्, अटिटेकत्; अनृदितोस्त्वेतयोः–अतीतिकत्, अटीटिकदिति स्यात्। 'तेकते, टेकते' इत्यादि तु ऋदितानृदितोस्तुल्यमेव। असिषेकत्, षेकः षोपदेशत्वेन "षः सः०" [ २. ३. ९८. ] इति षस्य सत्वे कृतत्वात् "नाम्यन्तस्था०" [ २. ३. १५. ] इति षत्वम्। एवं णौ सनि–सिषेकयिषति। केवलस्य तु षत्वापन्ने सनि "णिस्तोरेवास्वद-स्विद-सहः षणि" [ २. ३. ३७. ] इति नियमान्न षः–सिसेकिषते, अषोपदेशत्वे तु षस्य कृतत्वाभावेन षत्वप्राप्तेरेवाभावात्–असिसेकत्, सिसेकयिषतीत्येव स्यात्। 'सेकते' इत्यादि तु षोपदेशाषोपदेशयोरुभयोस्तुल्यमेव ॥ ६४ ॥ ६५ ॥ ६६ ॥

"चिक्कण् व्यथने" चिक्कयति। उणादावणे–चिक्कणः, असे–चिक्कसः–यवक्षोदः ॥ ६७ ॥

अथ खान्तास्त्रयः–"चखु गतौ" उदित्त्वान्ने–चङ्खति। किति नस्य लुगभावे–चङ्ख्यते चङ्खितः। "क्तेटः०" [ ५. ३. १०६. ] इति अः–चङ्खा ॥ ६८ ॥

"खक्ख हसने" खक्खति। खक्खितः। "क्तेटः०" [ ५. ३. १०६. ] इत्ये–खक्खा ॥ ६९ ॥

"लिखत् अक्षरविन्यासे" कुटादिरयम्, तेन तृजादिषु ङित्त्वाद् गुणाभावे–लिखिता, लिखितुम्, लिखनीयम्। अकुटादेस्तु–लेखिता, लेखितुम्, लेखनीयमित्यादि स्यात्। लिखतीत्यादि तूभयथापि। केचित् कड-स्फर-स्फलानपि कुटादौ पठन्ति, तत्पाठबलात् तेषां णिति वृद्धिनिषेधं चाहुः–यथा–कडकः, स्फरकः, स्फलक इत्यादि, तत् तु प्रकृते न प्रदर्शितम्, उक्तरूपाणामिष्टत्वेऽच्प्रत्ययान्तात् स्वार्थे कपि सिद्धिसंभवात् ॥ ७० ॥

अथ घान्ताः पञ्च–"घग्घ हसने" घग्घति, घग्घितः, "क्तेटः०" [ ५. ३. १०६. ] इत्ये–घग्घा ॥ ७१ ॥

"दघ सघ तिघ चषघट् हिंसायाम्" दघ्नोति। घञि–दाघः, निदाघः ॥ ७२ ॥

सघट्–णौ सनि अषोपदेशत्वेन सस्य कृतत्वाभावात् षत्वाभावे–सिसाघयिषति। एवं णौ ङे–असीसघदित्यादि, षोपदेशत्वे तु षत्वमपि स्यादेव। सघ्नोतीतूभयथापि ॥ ७३ ॥

तिघट्–तिघ्नोति, तितेघ, ॥ ७४ ॥

चषघट्–चषघ्नोति। अनेकस्वरत्वात् परोक्षाया आमि चषघांचकार ॥ ७५ ॥

अथाष्टौ चान्ताः–"मुचि कल्कने" कल्कनं–दम्भः शाठ्यं कथनं च। मोचते ॥ ७६ ॥

"अचूग् अचुग् गतौ" अचते, अचति। आचे, आच। अचिता, अचितुम्। ऊदित्वात् क्त्वि वेटि–अक्त्वा, अचित्वा। "अञ्चू" इत्यस्य तु गतौ ऊदित्वात् क्त्वि वेटि–अङ्क्त्वा, अञ्चित्वेति द्वैरूप्यं स्यात् ॥ ७७ ॥

अचुग्–उदित्वान्ने–अञ्चति, अञ्चते। क्ये नस्य लुगभावे–अञ्च्यते। इटि–अञ्चितम्, यथा–"कुर्वन्नुदञ्चिते नेत्रे" "अञ्चूग्" इत्यस्य तु–ऊदित्त्वेन वेट्त्वात् क्तयोः "वेटोऽपतः" [ ४. ४. ६२. ] इतीड्निषेधे "अञ्चोऽनर्चायाम्" [ ४. २. ४६. ] इति नस्य लुकि च 'उदक्त' इति रूपं भवति ॥ ७८ ॥

"टुयाचृग् याच्ञायाम्" ट्वित्वात् "ट्वितोऽथुः" [ ५. ३. ८३. ] इत्यथौ–याचथुः। ऋदित्त्वात् णौ ङे उपान्त्यह्रस्वाभावे–अययाचत्। 'याचते' इत्यादि तु–"डुयाचृग्" इत्यतोऽपि स्यात् ॥ ७९ ॥

"विचृंकी पृथग्भावे" ह्वादिरयम्। "ह्वः शिति" [ ४. १. १२. ] इति द्वित्वेऽन्तौ–वेविचति, परेषामिष्टत्वेन "निजां शिति०" [ ४. १. ५६. ] इत्येत्वम्। वेवेक्तीत्यादि तु "विजृंकी" इत्यस्यापि स्यात्। णिगि–वेचयतीत्यादि। ऋदित्त्वादङि–अविचत्। विवेचनं, विवेकः, इत्यादि तु "विचृंपी पृथग्भावे" इत्यस्यापि स्यात् ॥ ८० ॥

"चर्चत् परिभाषणे" चर्चति। "नाम्नि पुंसि च" [ ५. ३. १२१. ] इति णके स्त्रियां–चर्चिका। चर्चती चर्चन्ती स्त्रीकुले वा, अत्र "अवर्णादश्नोऽन्तो वाऽतुरीङ्योः" [ २. १. ११५. ] इति विकल्पेनान्तादेशः ॥ ८१ ॥

"खचश् भूतप्रादुर्भावे" भूतप्रादुर्भावः–अतिक्रान्तस्य पुनरुत्पत्तिः। "तवर्गस्य०" [ १. ३. ६०. ] इति श्नो नस्य जत्वे–खच्ञाति, हौ "व्यञ्जनाच्छ्नाहेरानः" [ ३. ४. ८०. ] इति श्नाहेरानादेशे–खचान, खचिता, खचितुम् ॥ ८२ ॥

"गुर्चण् निकेतने" "भ्वादे०" [ २. १. ६३. ] इति दीर्घे–गूर्चयति ॥ ८३ ॥

अथ छान्तः–"पिच्छत् बाधने" पिच्छति, पिपिच्छ, पिच्छिता, पिच्छितुम्, पिच्छती पिच्छन्ती स्त्री कुले वा। अनि स्त्रियां–पिच्छा ॥ ८४ ॥

अथ जान्ताः सप्त–"लुजु हिंसा-बल-दान-निकेतनेषु" उदित्वान्ने–लुञ्जति। क्ये नस्य लुगभावे–लुञ्ज्यते ॥ ८५ ॥

"भ्रिज गतौ" भ्रेजति। यङि–देभ्रिज्यते। यङ्लुपि देभ्रिजीति, देभ्रेक्ति। भ्रजेस्तु भर्जति, दरीभृज्यत इत्यादि ॥८६॥

"रिजि गति-स्थाना-ऽर्जनोर्जनेषु" ऊर्जनं–प्राणनम्। आगमानित्यत्वादिटोऽभावे–उद्रिक्तः ॥ ८७ ॥

"ओनजैङ् व्रीडे" नजते। क्ते-ओदित्त्वात् तो ने, ऐदित्त्वाच "डीयश्वि०" [ ४. ४. ६१. ] इति क्तयोरिड्निषेधे-नग्नः, नग्नवान्, स्वार्थे के स्त्रियां-नग्निका-अरजाः स्त्री। प्रानजिष्ट, अणोपदेशत्वात् "अदुरुपसर्गान्तरो०" [ २. ३. ६६. ] इति नस्य णो न ॥ ८८ ॥

"मृजैकि संपर्चने" मृक्ते। ऐदित्वात् "डीयश्वि०" [ ४. ४. ६१. ] इत्यनेन क्तयोरिड्निषेधे-मृक्तः, मृक्तवान् ॥ ८९ ॥

"वृजैप् वर्जने" "रुधां स्वराच्छ्नो नलुक् च" [ ३. ४. ८२. ] इति श्नेऽन्तौ वृञ्जन्ति, ववर्ज। घञि जस्य गत्वे-वर्गः। वृणक्तीत्यादि तु "वृचैप् वरणे" इत्यनेनापि स्यात् ॥ ९० ॥

"मर्जण् शब्दे" मर्जयति। क्ते-मर्जिता-रसाला ॥ ९१ ॥

अथ टान्तास्त्रयोदश-"शौटृ गर्वे" शौटति, शुशौट। ऋदित्त्वात् णौ ङे "उपान्त्यस्य०" [ ४. २. ३५. ] इति ह्रस्वाभावे-अशुशौटत् ॥ ९२ ॥

"यौटृ सम्बन्धे" सम्बन्धः-श्लेषः। यौटति, युयौट। ऋदित्त्वात्-अयुयौटत्। णके-यौटकं-युग्मम्। यौटितः, ॥ ९३ ॥

"मेटृ म्रेटृ म्लेटृ लौटृ उन्मादे"। मेटति, म्रेटति, म्लेटति, लौटति। ऋदित्त्वादुपान्त्यह्रस्वाभावे अमिमेटत्, अमिम्रेटत्, इत्यादि ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

"स्फटु विशरणे" उदित्त्वान्नागमे-स्फण्टति वस्त्रम्। किति नस्य लुगभावे-स्फण्ट्यते। णिगि स्वार्थे णिचि वा-स्फण्टयति ॥ ९८ ॥

"मुटु प्रमर्दने" मुण्टति। अचि-मुण्टः। "ते घ्नन्ति कुण्टमुण्टा" ॥ ९९ ॥

"नट नृत्तौ" अणोपदेशत्वात् णत्वाभावे प्रनटति। णौ-प्रनाटयति, नतावेवास्य घटादित्वादत्र न ह्रस्वः। णोपदेशस्य घटादेस्तु-प्रणटति, प्रणटयतीत्यादि स्यात् ॥ १०० ॥

"णटि नतौ च" चान्नृतौ। "पाठे धात्वादेः०" [ २. ३. ९७. ] इति णस्य ने कृते णोपदेशत्वात् "अदुरुपसर्ग०" [२. ३. ७७.] इति णत्वे प्रणटते। नेटे, नेटाते, नेटिरे ॥ १०१ ॥

"अटि अट्टति हिंसा-ऽतिक्रमयोः" अतिक्रमः-उल्लङ्घनम्। सनि इटि ट्टेर्द्वित्वे "व्यञ्जनस्यानादेः" [ ४. १. ४४. ] इति टस्य लुकि-अतिटिषते। 'अट्ट' इति दोपान्त्यस्य तु सनि इटि "न वदनम्०" [ ४. १. ५. ] इति दस्य द्वित्वनिषेधात् "स्वरादेः" [ ४. १. ४. ] इति द्वितीयांशस्य टेरेव द्वित्वम्, "तवर्गस्य०" [ २. ३. ६०. ] इति दो डे तस्य "अघोषे प्रथमः०" [ २. ३. ५०. ] इति टे च 'अट्टिटिषते' इति स्यात्। 'अट्टते' इति तूभयोरपि स्यादेव। एवमड्डतेरपि बोध्यम् ॥ १०२ ॥

अड्डति-सनि इटि ड्डतेर्द्वित्वे "व्यञ्जनस्यानादेः" [ ४. १. ४४. ] इति तो लुकि-अटिड्डिषते, क्विपि "पदस्य" [ २. १. ८९. ] इति संयोगान्तलोपे-अट्, टान्तदोपान्त्यस्य तु 'अत्' इति। अत्र 'अट्टत्' इत्ययं तान्तोऽपि रूपादिसाम्याट्टान्तेषु पठितः। अग्रेऽपि पाठव्यतिक्रमेऽयमेवेदृश एव वा लाघवादिहेतुरूहनीयः ॥ १०३ ॥

"मिटुण् स्नेहने" स्नेहनं स्नेहयोजनम्, उदित्त्वान्ने-मिण्टयति ॥ १०४ ॥

"सुट्टण् अनादरे" ङेऽषोपदेशत्वात् षत्वाभावे-असुसुट्टत्, सनि च तथैव-सुसुट्टयिषति, षोपदेशत्वे तु षत्वमपि स्यादेव, सुट्टयतीति चोभयोरपि ॥ १०५ ॥

"शटि शलिण् श्लाघायाम्" शाटयते। अटि-शाटः। "णिवेत्ति०" [ ५. ३. १११. ] इत्यने स्त्रीत्वात्-शाटना ॥ १०६ ॥

शलिण्-शालयते ॥ १०७ ॥

अथ ठान्तौ द्वौ-"रुठि प्रतीघाते" द्युतादिरयम्। रोठते, रुरुठे। अद्यतन्यां "द्युद्भ्यः०" [ ३. ३. ४४. ] वाऽऽत्मनेपदम्, पक्षे "शेषात्०" [ ३. ३. १००. ] इति परस्मैपदं च तत्र "लृदिद्-द्युतादि०" [ ३. ४. ६४. ] इत्यङि-अरुठत्, आत्मनेपदे त्वङोऽप्राप्त्या-अरोठिष्ट ॥ १०८ ॥

"चुठुण् हिंसायाम्" चुण्ठयति ॥ १०९ ॥

अथ दश डान्ताः-"चुडु अल्पीभावे" उदित्वान्ने-चुण्डति, चुचुण्ड। अचि-चुण्डः ॥ ११० ॥

"पिड सङ्घात-शब्दयोः" अचि-पेडा-वस्त्रादिभाजनविशेषः ॥ १११ ॥

"कड्ड कार्कश्ये" क्विपि "पदस्य" [ २. १. ८९. ] इति संयोगान्तलोपे "विरामे वा" [ १. ३. ५१. ] इति डस्य विकल्पेन टत्वे-कड्, कट्। 'कद्‌ड्' इति दोपधपाठे तु 'कद्, कत्' इति स्यात्। कड्डतीति तूभयोरपि ॥ ११२ ॥

"अड्ड अभियोगे" क्विपि प्राग्वत् कार्ये-अड्, अट्। सनि तु ड्डेर्द्वित्वे-अडिड्डिषति, दोपधस्य तु क्विपि प्राग्वत् अद्, अत्, सनि "न वदनम्०" [ ४. १. ५. ] इति दस्य द्वित्वनिषेधे डेरेव द्वित्वे-अड्डिडिषतीत्यादि च स्यात्। अड्डतीत्यादि तूभयोः समम् ॥ ११३ ॥

"चुड्ड हावकरणे" हावः-भावसूचनम्। क्विपि प्राग्वत्-चुड्, चुट्, दोपधस्य तु 'चुत्, चुद्' इति। चुड्डतीत्यादि तूभयोरपि ॥ ११४ ॥

"तुड्ड तोडने" तोडनं-दारणम्, यथा-"तुड्डत्यंहः सकलमचिरात् तोडयत्यश्रियं च।" इति कविरहस्ये ॥ ११५ ॥

"क्ष्विड्डा अव्यक्ते शब्दे" क्ष्वेडति, अक्ष्वेडीत्। मीत्त्वात्

"ओनजैङ् व्रीडे" नजते। क्ते-ओदित्त्वात् तो ने, ऐदित्त्वाच्च "डीयश्वि०" [ ४. ४. ६१. ] इति क्तयोरिड्निषेधे-नग्नः, नग्नवान्, स्वार्थे के स्त्रियां-नग्निका-अरजाः स्त्री। प्रानजिष्ट, अणोपदेशत्वात् "अदुरुपसर्गान्तरो०" [ २. ३. ६६. ] इति नस्य णो न ॥ ८८ ॥

"मृजैकि संपर्चने" मृक्ते। ऐदित्वात् "डीयश्वि०" [ ४. ४. ६१. ] इत्यनेन क्तयोरिड्निषेधे-मृक्तः, मृक्तवान् ॥ ८९ ॥

"वृजैप् वर्जने" "रुधां स्वराच्छ्नो नलुक् च" [ ३. ४. ८२. ] इति श्नेऽन्तौ वृञ्जन्ति, ववर्ज। घञि जस्य गत्वे-वर्गः। वृणक्तीत्यादि तु "वृचैप् वरणे" इत्यनेनापि स्यात् ॥ ९० ॥

"मर्जण् शब्दे" मर्जयति। क्ते-मर्जिता-रसाला ॥ ९१ ॥

अथ टान्तास्त्रयोदश-"शौटृ गर्वे" शौटति, शुशौट। ऋदित्त्वात् णौ ङे "उपान्त्यस्य०" [ ४. २. ३५. ] इति ह्रस्वाभावे-अशुशौटत् ॥ ९२ ॥

"यौटृ सम्बन्धे" सम्बन्धः-श्लेषः। यौटति, युयौट। ऋदित्त्वात्-अयुयौटत्। णके-यौटकं-युगमम्। यौटितः, ॥ ९३ ॥

"मेटृ म्रेटृ म्लेटृ लौटृ उन्मादे"। मेटति, म्रेटति, म्लेटति, लौटति। ऋदित्त्वादुपान्त्यह्रस्वाभावे अमिमेटत्, अमिम्रेटत्, इत्यादि ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥

"स्फटु विशरणे" उदित्त्वान्नागमे-स्फण्टति वस्त्रम्। क्विति नस्य लुगभावे-स्फण्ट्यते। णिगि स्वार्थे णिचि वा-स्फण्टयति ॥ ९८ ॥

"मुटु प्रमर्दने" मुण्टति। अचि-मुण्टः। "ते हुन्ति कुण्टमुण्टा" ॥ ९९ ॥

"नट नृत्तौ" अणोपदेशत्वात् णत्वाभावे प्रनटति। णौ-प्रनाटयति, नतावेवास्य घटादित्वादत्र न ह्रस्वः। णोपदेशस्य घटादेस्तु-प्रणटति, प्रणटयतीत्यादि स्यात् ॥ १०० ॥

"णटि नतौ च" चान्नृत्तौ। "पाठे धात्वादेः०" [ २. ३. ९७. ] इति णस्य ने कृते णोपदेशत्वात् "अदुरुपसर्ग०" [२. ३. ७७.] इति णत्वे प्रणटते। नेटे, नेटाते, नेटिरे ॥१०१॥

"अटि अट्टति हिंसा-ऽतिक्रमयोः" अतिक्रमः-उल्लङ्घनम्। सनि इटि टेर्द्वित्वे "व्यञ्जनस्यानादेः" [ ४. १. ४४. ] इति टस्य लुकि-अतिट्टिषते। 'अद्ट' इति दोपान्त्यस्य तु सनि इटि "न वदनम्०" [ ४. १. ५. ] इति दस्य द्वित्वनिषेधात् "स्वरादेः" [ ४. १. ४. ] इति द्वितीयांशस्य टेरेव द्वित्वम्, "तवर्गस्य०" [ २. ३. ६०. ] इति दो डे तस्य "अघोषे प्रथमः०" [ २. ३. ५०. ] इति टे च 'अट्टिटिषते' इति स्यात्। 'अट्टते' इति तूभयोरपि स्यादेव। एवमट्टतेरपि बोध्यम् ॥ १०२ ॥

अट्टति-सनि इटि ट्टेर्द्वित्वे "व्यञ्जनस्यानादेः" [ ४. १. ४४. ] इति तो लुकि-अटिट्टिषते, क्विपि "पदस्य" [ २. १. ८९. ] इति संयोगान्तलोपे-अट्, टान्तदोपान्त्यस्य तु 'अत्' इति। अत्र 'अट्ट' इत्ययं तान्तोऽपि रूपादिसाम्याट्टान्तेषु पठितः। अग्रेऽपि पाठव्यतिक्रमेऽयमेवेदृश एव वा लाघवादिहेतुरूहनीयः ॥ १०३ ॥

"मिटुण् स्नेहने" स्नेहनं-स्नेहयोजनम्; उदित्त्वान्ने-मिण्टयति ॥ १०४ ॥

"सुट्टण् अनादरे" ङेऽषोपदेशत्वात् षत्वाभावे-असुसुट्टत्, सनि च तथैव-सुसुट्टयिषति, षोपदेशत्वे तु षत्वमपि स्यादेव, सुट्टयतीति चोभयोरपि ॥ १०५ ॥

"शटि शलिण् श्लाघायाम्" शाट्यते। अटि-शाटः। "णिवेत्ति०" [ ५. ३. १११. ] इत्यने स्त्रीत्वात्-शाटना ॥ १०६ ॥

शलिण्-शालयते ॥ १०७ ॥

अथ ठान्तौ द्वौ-"रुठि प्रतीघाते" द्युतादिरयम्। रोठते, रुरुठे। अद्यतन्यां "द्युद्भ्यः०" [ ३. ३. ४४. ] वाऽऽत्मनेपदम्, पक्षे "शेषात्०" [ ३. ३. १००. ] इति परस्मैपदं च तत्र "लृदिद्-द्युतादि०" [ ३. ४. ६४. ] इत्यङि-अरुठत्, आत्मनेपदे त्वङोऽप्राप्त्या-अरोठिष्ट ॥ १०८ ॥

"चुठुण् हिंसायाम्" चुण्ठयति ॥ १०९ ॥

अथ दश डान्ताः-"चुडु अल्पीभावे" उदित्वान्ने-चुण्डति, चुचुण्ड। अचि-चुण्डः ॥ ११० ॥

"पिड सङ्घात-शब्दयोः" अचि-पेडा-वस्त्रादिभाजनविशेषः ॥ १११ ॥

"कड्ड कार्कश्ये" क्विपि "पदस्य" [ २. १. ८९. ] इति संयोगान्तलोपे "विरामे वा" [ १. ३. ५१. ] इति डस्य विकल्पेन टत्वे-कड्, कट्। 'कद्ड्' इति दोपधपाठे तु 'कद्, कत्' इति स्यात्। कड्डतीति तूभयोरपि ॥ ११२ ॥

"अड्ड अभियोगे" क्विपि प्राग्वत् कार्ये-अड्, अट्। सनि तु ड्डेर्द्वित्वे-अडिड्डिषति, दोपधस्य तु क्विपि प्राग्वत् अद्, अत्, सनि "न वदनम्०" [ ४. १. ५. ] इति दस्य द्वित्वनिषेधे डेरेव द्वित्वे-अड्डिडिषतीत्यादि च स्यात्। अड्डतीत्यादि तूभयोः समम् ॥ ११३ ॥

"चुड्ड हावकरणे" हावः-भावसूचनम्। क्विपि प्राग्वत्-चुड्, चुट्, दोपधस्य तु 'चुत्, चुद्' इति। चुड्डतीत्यादि तूभयोरपि ॥ ११४ ॥

"तुड्ड तोडने" तोडनं-दारणम्, यथा-"तुड्डत्यंहः सकलमचिरात् तोडयत्यश्रियं च।" इति कविरहस्ये ॥ ११५ ॥

"ञिक्ष्विडा अव्यक्ते शब्दे" क्ष्वेडति, अक्ष्वेडीत्। मीत्त्वात्

"ज्ञानेच्छार्चार्थजीच्छील्यादिभ्यः क्तः" [ ५. २. ९२. ] इति वर्तमाने काले क्ते–क्ष्विट्टः । आदित्वात् "आदितः" [ ४. ४. ७१. ] इतीण्निषेधः । अचि–क्ष्वेडः–विषम् । गेह एव क्ष्वेडतीत्यर्थे "ग्रहादिभ्यो णिन्" [ ५. १. ५३. ] इति णिनि "पात्रेसमितेत्यादयः" [ ३. १. ९१. ] इति तत्पुरुषसमासे निपातनात् तेनैव सप्तम्यलुपि च–गेहेक्ष्वेडी । भिदादित्वादङि क्ष्वेडा–सिंहनादः ॥ ११६ ॥

"ञिक्ष्विडाङ् मोचन-स्नेहनयोः" द्युतादिरयम् । क्ष्वेडते, अद्यतन्यां "द्युद्भ्यः०" [ ३. ३. ४४. ] इति विकल्पेनात्मनेपदम् , पक्षे "शेषात्" [ ३. ३. १००. ] इति परस्मैपदं च, तत्र सति द्युतादित्वादङि–अक्ष्विडत्, आत्मनेपदे तु नाङ्, तेन–अक्ष्वेडिष्ट । शीलाद्यर्थे "इङितः" [ ५. २. ४४. ] इत्यने–प्रक्ष्वेडनः–सर्वलोहमयो बाणः ॥ ११७ ॥

"अडट् व्याप्तौ" अड्णोति ॥ ११८ ॥

"ओलडुण् लडुण् उत्क्षेपे" उदित्वान्ने–लण्डयति । क्त-क्तवत्वोः परयोः "सेट्क्तयोः" [ ४. २. ८४. ] इति णेर्लुकि ओदित्करणबलादिड्व्यवधानेऽपि "सूयत्योदितः" [ ४. २. ७०. ] इति क्तयोस्तकारस्य नत्वे–लण्डिनः, लण्डिनवान् । "णिवेत्ति०" [ ५. ३. १११. ] इत्यने स्त्रियां–लण्डना । णिचोऽनित्यत्वादभावे–लण्डति । अनित्यत्वादिटोऽप्यभावे ओदित्वात् क्तयोस्तो नत्वे "तवर्गस्य०" [ १. ३. ६०. ] इति णत्वे च–लण्ड्णः, लण्ड्णवान् । यदि त्वोकारस्य धात्ववयवत्वमेव नानुबन्धत्वमिति मतं तदा–ओलण्डयति, ओलण्डितः, ओलण्डितवान् , ओलण्डना, इत्यादिरूपाणि ॥ ११९॥

लडुण्–उदित्वान्नागमे–अवलण्डयत्युष्ट्रम् ॥ १२० ॥

"त्रुडिण् छेदने" उत्त्रोडयते तृणम् ॥ १२१ ॥

अथ णान्ताश्चत्वारः–"फण गतौ" अघटादिरयम् । णौ फाणयति गाम्, गत्यर्थस्यास्य घटादित्वाभावात् "घटादेः०" [ ४. २. २४. ] इति ह्रस्वो न । अनेकार्थत्वान्निःस्नेहनार्थोऽप्ययम्, यथा–फाणयति घटम्, निःस्नेहयतीत्यर्थः । फाण्यते द्रवत्वादिति–फाणितं–खण्डश्रोतः । घटादेस्तु ह्रस्वे–फणयति, फण्यते, फणितमित्यादि। फणतीत्यादि तूभयोरपि ॥ १२२ ॥

"अणिण् प्राणने" प्राणनं–जीवनव्यापारः । अण्यते, आणे ॥ १२३ ॥

"घृणू घणूयी दीप्तौ" तत्राद्यात् "तिकृतौ नाम्नि" [ ५. १. ७१. ] इति तिकि "न तिकि दीर्घश्च" [ ४. २. ५९. ] इति निषेधान् "अहन्पञ्चमस्य क्वि-क्ङिति" [ ४. १. १०७. ] इति दीर्घस्य "यमि-रमि-नमि-गमि०" [ ४. २. ५५. ] इति णलुकश्चाभावे "तवर्गस्य०" [ १. ३. ६०. ] तस्य टे–घृण्टिः । नान्तस्य तु तिकि 'न तिकि०' [ ४. २. ५९. ] इति दीर्घ-नलुकोर्निषेधे "र्नां धुट्०" [ १. ३. ३९. ] इति नस्य णापवादे ने–घृन्तिरिति । अस्मादेव क्त्वाप्रत्यये, ऊदित्वाद् विकल्पेनेटि सेटः "क्त्वा" [ ४. ३. २९. ] इति कित्त्वनिषेधात्–घर्णित्वेति, इडभावे "यमिरमि०" [ ४. २. ५५. ] इति णस्य लुकि–घृत्वेति, क्त्वि वेट्त्वात् क्तयोरिडभावे णलुकि–घृतः, घृतवानिति, क्तौ णलुकि–घृतिरिति । 'घर्णोति, घर्णुते' इति तु नान्तणान्तयोस्तुल्यमेव ॥ १२४ ॥

घणूयी–घणुते, घणोति, जघाण, जघणे । ऊदित्वात्–क्त्वि वेटि–घणित्वा, इडभावे "यमि–रमि०" [ ४. २. ५५. ] इत्यन्तलुकि–घत्वा, वेट्त्वात् क्तयोरिडभावे–घतः, घतवानिति ॥ १२५ ॥

अथ तान्ताः षट्–"इतु बन्धने" उदित्वान्नागमे–इन्तति । किति नस्य लुगभावे–इन्त्यते । "गुरुनाम्यादेः०" [ ३. ४. ४८. ] इति परोक्षाया आमि–उन्ताञ्चकार ॥ १२६ ॥

"ज्युति भासने" उणादौ इसि प्रत्यये–ज्योतिः ॥ १२७ ॥

"कितक् ज्ञाने" ह्वादिरयम्, तस्मात् "ह्वः शिति" [ ४. १. १२. ] इति द्वित्वे–चिकेत्ति । न न चिकेत्तीत्यर्थे नखादित्वान्निपातने–नाचिकेतो नाम कश्चित् । 'केतति, केतनम्' इत्यादयस्तु भौवादिककितिना साधवः ॥ १२८ ॥

"पतिंच् ऐश्वर्ये" पत्यते अधिपतिः अपत्त, पत्स्यते । धातुपारायणे त्वनुस्वारेतोऽन्यस्य 'पतिष्यते, अपतिष्ट' इतीडुदाहृतः, तच्चागमशास्त्रस्यानित्यत्वादिति कश्चित् । वस्तुतस्तु–आगमशास्त्रस्यानित्यत्वमिडभावे हेतुर्भवितुमर्हति, न तु निषेधस्याप्रवृत्तौ, तथा च प्रकृतधातोः परमतानुसारित्वेन तत्र चास्य सेट्त्वमेवेति तदनुसारमेव धातुपारायणीयपाठः संभवति । तत्र चानिट्कारिकास्वस्य धातोः पाठस्यानुपलम्भोऽस्त्येवेति बोध्यम् ॥ १२९ ॥

"वावृतु विवरणे" यथा–"ततो वावृत्यमाना सा रामशालां न्यविक्षत ।" इति [ भट्टिकाव्ये ], अत्र च वावृत्यमानेत्यस्य 'वरयन्ती' इत्यर्थः, शूर्पणखाया वर्णनप्रसङ्गोऽयम् । उदित्वात्–क्त्वि वेट्–वावर्त्तित्वा, वावृत्त्वा, वेट्त्वादेव क्तयोरिट् न–वावृत्तः, वावृत्तवान् , अत एव "वृते तु वृत्त-वावृत्तौ" इति निघण्टुः ॥ १३० ॥

"ष्वर्त्तण् गतौ" षोपदेशत्वात् सिष्वर्त्तयिषतीत्यादिप्रयोगे सस्य षत्वम्, अषोपदेशत्वे तु सिस्वर्त्तयिषतीत्यादि स्यात् । स्वर्तयतीत्यादौ तु न भेदः ॥ १३१ ॥

अथ थान्तौ द्वौ–"पर्थ पार्थण् प्रक्षेपणे" ङे–अपपर्थत् । "पृथण् प्रक्षेपणे" इत्यस्य "ऋद्वर्णस्य" [ ४. २. ३७. ] इत्यनेन ऋकारस्य ऋकारे कृते–अपीपृथदिति रूपं भवति, ऋकारादेशाभावपक्षे च "लघोरुपान्त्यस्य" [ ४. ३. ४. ]

इति गुणे-अपपर्थदिति प्रकृतधातुसदृशमेव रूपं भवति । पर्थयतीति तु तुल्यमेव ॥ १३२ ॥

पार्थण्-पार्थयति । ङे-अपपार्थत् ॥ १३३ ॥

अथ दान्ता अष्टौ-"पद स्थैर्ये" पदति ॥ १३४ ॥

"कदिष् क्रदिष् क्लदिष् वैक्लव्ये" कदते, क्रदते, क्लदते । षित्त्वस्य सर्वैः सम्बन्धात् तन्निमित्तेऽङि-कदा, क्रदा, क्लदा, इति ॥ १३५ ॥ १३६ ॥ १३७ ॥

"मन्दि जाड्ये" मन्दते । क्ये नस्य लुकि-मद्यते ॥१३८॥

"खुर्दि गुधि क्रीडायाम्" "भ्वादेः०" [ २. १. ६३. ] इति दीर्घे-खूर्दते, चुखूर्दे, गोधते, जुगुधे । "वौ व्यञ्जनाऽऽदेः सन् चाय्वः" [ ४. ३. २५. ] इति विकल्पेन क्त्वा-सनोः कित्त्वे-गुधित्वा, गोधित्वा, जुगुधिषते, जुगोधिषते ॥ १३९ ॥ १४० ॥

"ऊवेदृग् ऊबन्धृग् आलोचने" वेदते, वेदति । ऊदित्वात् क्त्वि वेट्-वेदित्वा, वेत्त्वा । वेट्त्वादेव क्तयोर्नेट्-वेन्नः, वेन्नवान्, वेन्ना-नाम काचिन्नदी । ऋदित्त्वाद् वाऽङि-अवेदत्, अवेदीत्, आत्मनेपदे त्वङोऽभावाद्-अवेदिष्ट ॥ १४१ ॥

ऊबन्धृग्-बुन्धते, बुन्धति । बुबुन्धे, बुबुन्ध । बुन्धिता बुन्धितुम् । ऊदित्वात् क्त्वि वेटि नलोपे च-बुधित्वा, बुद्धा । ऋदित्वात् परस्मैपदे वाऽङि-अबुधत्, अबुन्धीत्, आत्मनेपदे तु-'अबुन्धिष्ट' इत्येकमेव ॥ १४२ ॥

"णुदीत् प्रेरणे" ईदित्त्वात् कर्तृगामिनि फले आत्मनेपदविधानात्-नुदते, नुनुदे, "णुदंत्" इत्यस्य तु-नुदति, नुनोदेत्याद्येव । णोपदेशत्वात्-प्रणुदतीत्याद्युभयोरेव ॥ १४३ ॥

अथ धान्ताश्चत्वारः-"वध हिंसायाम्" । लक्ष्यं चास्य यथा-"यत्र सालप्रतीकाशः कर्णोऽवध्यत संयुगे ।" तथा "नास्ति चेद् भक्षको यत्र वधकोऽपि न विद्यते ।" इति च । वधक इत्यत्र, अवधीदित्यत्र च "न जनवधः" [ ४. ३. ५४. ] इति वृद्धिनिषेधः । अन्यत्र तु ववाध, लक्ष्यं यथा-"नूनं न सत्त्वेष्वधिको बवाध, तस्मिन् वने गोप्तरि गाहमाने ।" [ र० वं० स० २ ] ॥ १४४ ॥

"णाधृङ् याच्ञोपतापैश्वर्याशीःषु" णोपदेशत्वात् प्रणाधत इत्यादौ णत्वम् । ऋदित्वात् णौ ङे उपान्त्यह्रस्वाभावे 'अनना' धत्, इत्यादि तूभयोरेव समम् ॥ १४५ ॥

"साधंच् षाधंट् संसिद्धौ" साधयत्यन्नम् ॥ १४६ ॥

षाधंट्-षोपदेशत्वात् सनि 'सिषात्सति' इत्यत्र सस्य षत्वम्, अनुस्वारेत्त्वाच्चेडभावः । ण्यन्तात् सनि-सिषाधयिषति, णौ ङे-असीषधत्, अषोपदेशस्य तु-सिसात्सति, सिसाधयिषतीत्यादि । केवलस्य च साध्नोतीत्यादि । अनुस्वारेत्त्वादिडभावे-'साद्धा, साद्धुम्' इति तूभयोस्तुल्यमेव ॥१४७॥

"गृधण् वञ्चने" णिजन्तस्य।पीष्टिवशात् "प्रलम्भे गृधिवञ्चेः" [ ३. ३. ८९. ] इत्यात्मनेपदे-गर्धयते वटुम् । स्वमते तु-णिगन्तस्यैवात्मनेपदमिष्टम् ॥ १४८ ॥

अथ नान्तौ द्वौ-"मन स्तम्भे" ममान । मनतीत्यादि तु "म्नां अभ्यासे" इत्यस्यापि भवति ॥ १४९ ॥

"जनक् जनने" ह्वादिरयम् । शिति द्वित्वे-जजन्ति । "जजान गर्भं मघवा" अत्रेन्द्रो जनयामासेत्यर्थः, अन्तर्भावितण्यर्थत्वात् । जज्ञतुः, "जज्ञुः पादाम्बुरुहि तव विभो!" "जनैचि प्रादुर्भावे" इत्यस्य तु-जायते, जज्ञे, जज्ञाते, जज्ञिरे, इत्यादि ॥ १५० ॥

अथैकादश पान्तास्त्रयः फान्ताश्च, पान्तेष्वाद्यौ घटादी-"क्षप प्रेरणे" णौ घटादित्वाद् ह्रस्वे-क्षपयति । "उपक्षपयति प्रावृट्" आसन्नीभवतीत्यर्थः । ञिणम्परे तु णौ वा दीर्घे-अक्षापि, अक्षपि, क्षापं क्षापं क्षपं क्षपम् । "क्षपण् प्रेरणे" इत्यघटादेः क्षपेस्तु-अदन्तत्वादुपान्त्यवृद्ध्यभवनेन क्षपयतीत्यादि यद्यपि तुल्यं तथापि 'ञिणम्परे णौ घटादिनिमित्तकवैकल्पिकदीर्घाभवनेन-अक्षपि, क्षपं क्षपमित्येव स्यात्, न तु-अक्षापि, क्षापं क्षापमिति दीर्घाश्रयं रूपमिति विशेषः ॥१५१॥

"त्रप लज्जायाम्" घटादित्वाण्णौ ह्रस्वे-त्रपयति । ञिणम्परे णौ वा दीर्घे-अत्रापि, अत्रपि, त्रापं त्रापं, त्रपं त्रपमिति । "त्रपौषि लज्जायाम्" इत्यघटादेस्तु णावुपान्त्यवृद्धौ-त्रापयतीत्यादि, ञिणम्परे च-अत्रापि, त्रापं त्रापमित्येव, न त्वत्रपि त्रपं त्रपमिति ह्रस्वाश्रयाणि रूपाणि ॥ १५२ ॥

"सप समवाये" अषोपदेशत्वाद् णौ सनि षत्वाभावे-सिसापयिषति, णौ ङे-असीसपत् । षोपदेशत्वे तु षत्वे-सिषापयिषति, असीषपदित्यादि ॥ १५३ ॥

"हेपृङ् गतौ" । हेपते । णौ ङे ऋदित्त्वादुपान्त्यह्रस्वाभावे-अजिहेपत् ॥ १५४ ॥

"तुप तुम्प तुफ तुम्फ रिम्फत् हिंसायाम्" । तुपति, तुपती तुपन्ती स्त्री कुले वा, "अवर्णादश्नः०" [ २. १. ११५. ] इत्यन्तादेशविकल्पः । भौवादिकस्य तुपेस्तु-तोपतीत्यादि, ई-ङ्योस्तु शतुः 'श्य-शवः' [ २. १. ११६. ] इत्यन्तादेशो नित्यमेवेति 'तुपन्ती स्त्री कुले वा' इत्येकमेव, एवमन्येष्वपि भावनीयम् ॥ १५५ ॥

तुम्प-तुम्पति, प्रस्तुम्पति गौरित्यपि, शे परे "नो व्यञ्जनस्य०" [ ४. २. ४५. ] इति प्राप्तोऽपि नस्य लुक् परैर्नेष्यते । तुम्पती तुम्पन्ती स्त्री कुले वा, भौवादिकस्य तु नित्यमेवान्तादेशः ॥ १५६ ॥

तुफ-तुफतीत्यादि तुपवत् ॥ १५७ ॥

तुम्फ-तुम्फतीत्यादि तुम्पवत् ॥ १५८ ॥

रिम्फत्-रिम्फति, रिरिम्फेत्यादि ॥ १५९ ॥

"तृप तृम्पत् तृप्तौ" तृपति, तृम्पतीत्यादि ॥१६०॥१६१॥

"स्तुप स्तूपण् समुच्छ्राये" स्तोपयपि । अषोपदेशत्वात् सस्य षत्वाभावे-तुस्तोपयिषति, अतुस्तुपत् । ष्टूपणस्तु-स्तूपयति, तुष्टूपयिषति, अतुष्टुपदित्यादि ॥ १६२ ॥

स्तूपण्-अषोपदेशत्वात् तु स्तूपयिषतीति षत्वं न । ङे "उपान्त्यस्य०" [ ४. २. ३५. ] इति ह्रस्वे-अतुस्तुपत् । स्तूपयतीत्यादि तु ष्टूपणोऽपि स्यादेव ॥ १६३ ॥

"तुपुण् अर्दने" उदित्वान्नागमे-तुम्पयति । किति नस्य लुगभावे-तुम्प्यते, । भौवादिकतुम्पेस्तु-किति नस्य लुकि-तुप्यत इति ॥ १६४ ॥

अथ त्रयोदश वान्ताः-"घर्व कन्व खन्व गन्व चन्व तन्व नन्व पन्व बन्व शन्व षन्व गतौ" । घर्व-घर्वति । घर्वितः, क्ते सेट्त्वात् "क्तेटः०" [ ५. ३. १०६. ] इत्यः-घर्वा॥१६५॥

कन्व-कम्वति । किति नस्य लुकि-कव्यते । एवं-खन्वादीनां बन्वपर्यन्तानामूह्यम् ॥ १६६-१७३ ॥

शन्व-शम्वतीत्यादि पूर्ववत् । णिगि चुरादेराकृतिगणत्वात् स्वार्थे णिचि वा-शम्वयति ॥ १७४ ॥

षन्व-"षः०" [ २. ३. ९८. ] इति षस्य सत्वे-सम्वति, सव्यते, सम्वितः, सम्वा, इत्यादि । णौ सनि षोपदेशत्वात् सस्य षत्वे-सिषम्वयिषति ॥ १७५ ॥

"साम्वण् सम्बन्धे" साम्वयति । अषोपदेशत्वात् षत्वाभावे-सिसाम्वयिषति, णिचोऽनित्यत्वात् तदभावे-सिसाम्बिषति । अलि-साम्बः ॥ १७६ ॥

"कुटुम्विण् धारणे" कुटुम्वयते ॥ १७७ ॥

अथाष्टौ भान्ताः-"सुम्भ नभि हिंसायाम्" अषोपदेशत्वात् षत्वाभावे-सुसुम्भयिषति, असुसुम्भत् ॥ १७८ ॥

नभि-द्युतादिरयम्, तन्निबन्धनेऽङि-प्रानभत्, "द्युद्भ्यः०" [ ३. ३. ४४. ] इत्यात्मनेपदपक्षे त्वङोऽभावे-प्रानभिष्ट, णोपदेशत्वाभावान्न णत्वम्, णोपदेशत्वे तु-प्राणभत्, प्राणभिष्टेति स्यात् ॥ १७९ ॥

"षुम्भ भाषणे च" चाद्धिंसायाम्, "षः सः०" [ २. ३. ९८. ] इति षकारस्य सकारे-सुम्भति । णौ ङे-असुसुम्भत् । णौ सनि च-सुषुम्भयिषति । केवलात् तु षत्वापन्ने सनि "णिस्तोरेव०" [ २. ३. ३७. ] इति नियमात् षत्वाभावे-सुसुम्भिषति कुपूर्वादसादच्चि-कुसुम्भः । अस्य प्रयोगो यथा-"सावष्टम्भनिशुम्भसुम्भना" इति ॥ १८० ॥

"ष्टभुङ् स्तम्भे" टपरषादिरयम्, यस्तु सूरिभिः पठितः स च ष्टुंक्वत् तपरसादिः, षोपदेशत्वार्थं तु ष्टभुङ् इति पेठे, तेन तस्य "षः सोऽष्ट्यै०" [ २. ३. ९८. ] इति षः सो भविष्यति, अस्य तु षः सत्वं नेष्यते परैः । उदित्वान्नागमे-ष्टम्भते । किति नस्य लुगभावे-ष्टम्भ्यते । यङि-टाष्टभ्यते, यङ्लुपि-टाष्टम्भिध, सनि-टिष्टम्भिषते, णौ सनि-टिष्टम्भयिषति, णौ ङे-अटिष्टम्भत् । सूरिपठितस्यास्य तु षः सत्वे कृते *निमित्ताभावे०* इति न्यायात् टस्याप्यभावे तकारस्यैव श्रवणमिति-स्तम्भते, स्तम्भ्यते, तास्तम्भ्यते, तास्तम्भिध, इति । तथा षत्वापन्ने सनि "णि-स्तोरेव०" [ २. ३. ३७. ] इति नियमात् तिस्तम्भिषते इति, ण्यन्तस्य तु निषेधाभावात् षत्वे सति-तिष्टम्भयिषतीति, णौ ङे-अतिष्टम्भदित्यादि ॥ १८१ ॥

"डभु डिभुण् सङ्घाते" उदित्वान्नागमे-डम्भयति । णिचोऽनित्यत्वात्तदभावेऽपि कित्युदित्वान्नस्य लुगभावे-डम्भ्यते । एवं डिम्भ्वादिष्वपि ॥ १८२ ॥

डिभुण्-डिम्भयति, डिम्भ्यते । अचि-डिम्भः ॥ १८३ ॥

"दभु दिभुण् वञ्चने" उदित्वान्नागमे-दम्भयति, दम्भ्यते ॥ १८४ ॥

दिभुण्-दिम्भयतीत्यादि पूर्ववत् ॥ १८५ ॥

अथ मान्तौ द्वौ-"छद्म गतौ" गतिरत्र छद्मप्रकाररूपा प्रकरणवशात् । छद्मति । सिचि-अच्छद्मीत् । णवि-चच्छद्म ॥१८६॥

"सामण् सान्त्वने" ङे उपान्त्यह्रस्वे-असीसमत्, चुराद्यदन्तस्य तु-अससामदिति ॥ १८७ ॥

अथ रान्तास्त्रयः-"तुरझ त्वरणे" ह्वादिरयम् । शिति द्वित्वे सति-तुतोर्ति ॥ १८८ ॥

"पुरत् ऐश्वर्य-दीप्त्योः" षपाठात् सस्य षत्वे-सुषोर, असूषुरत्, सुषोरयिषति । अषोपदेशस्य तु-सुसोरेत्यादि । सुरतीत्यादि तूभयोस्तुल्यम् ॥ १८९ ॥

"गुद्रुण् अनृतभाषणे" गुन्द्रयति । अचि-गुन्द्रा-उत्तममुस्ता ॥ १९० ॥

अथ लान्ता एकादश, तत्राद्यौ घटादी-"स्खल संचलने" "दल विशरणे" णौ घटादित्वाद्ध्रस्वे-स्खलयति, दलयति, जिणम्परे णौ तु वा दीर्घे-अस्खालि, अस्खलि; स्खालं स्खालं, स्खलं स्खलम्, अदालि, अदलि, दालं दालं दलं दलम् । अघटाद्योस्तु ह्रस्वाभावे-स्खालयति, दालयति, अस्खालि, अदालि, स्खालं स्खालम्, इत्याद्येव । स्खलति, दलतीति तूभयोरेव समम् ॥ १९१ ॥ १९२ ॥

"स्थल स्थाने" अषोपदेशत्वात् षत्वाभावे णौ सनि-तिस्थालयिषति । ङे-अतिस्थलत् । षोपदेशस्य तु षत्वे-तिष्ठालयिषतीत्यादि । स्थलतीति तूभयोरेव समम् ॥१९३॥

"बलि परिभाषण-हिंसा-दानेषु" ओष्ठ्यादिरयम् । बलते । दन्त्यौष्ठ्यवादित्वाभावेन "न शस-दद-वादि-गुणिनः" [ ४. १. ३०. ] इत्येत्वनिषेधाभावात् 'अनादेशादेरेकव्यञ्जनमध्येऽतः" [ ४. १. २४. ] इत्येत्वे द्वित्वाभावे च-बेले बेलाते बेलिरे ॥ १९४ ॥

"षिलत् उञ्छे" उञ्छः-कणश आदानम्, षोपदेशत्वात् सस्य षत्वे-सिषेल, असीषिलत्, सिषेलयिषति । षोपदेशत्वाभावे च-सिसेलेत्यादि । सिलतीति तूभयोरपि ॥ १९५ ॥

"पुलत् महत्त्वे" पुलति, भ्वादेस्तु-पोलतीत्यादि ॥१९६॥

"वल वलण् प्राणने" आद्य ओष्ठ्यादिर्द्वितीयो दन्त्योष्ठ्यादिः, उभावपि घटादी, तेन घटादित्वनिमित्ते ह्रस्वे-वलयति, वल्यति । जिणम्परे णौ वा दीर्घे-अवालि, अवलि, वालं वालं, वलं वलम्, अवालि, अवलि, वालं वालं, वलं वलम् ॥ १९७ ॥ १९८ ॥

"मुलण् रोहणे" मोलयति । णिचोऽनित्यत्वादभावे "नाम्युपान्त्य०" [ ५. १. ५४. ] इति के-मुलः ॥ १९९ ॥

"पालण् रक्षणे" ण्यन्तात् "स्वरेभ्य इः" [ उणा० ६०६. ] इति इः, ततः स्त्रियां ङीः-पाली ॥ २०० ॥

"गालिण् श्रावणे" गालयते, उद्गालयते । ण्यन्तात् पूर्ववत् इः-गालिः, स्त्रियां ङीः-गाली ॥ २०१ ॥

अथ वान्तास्त्रयः-"क्षीवृ निरसने" क्षीवति । क्ते"अनुपसर्गाः क्षीबोल्लाघ-कृश-परिकृश-फुल्लोत्फुल्ल-संफुल्लाः" [ ४. २. ८०. ] इति निपातनस्य क्षीवृङ एवेष्टत्वादस्य क्षीवितः ॥ २०२ ॥

"चीवी आदान-संवरणयोः" णौ ङे उपान्त्यह्रस्वे-अचीचिवत्, चीवृगस्तु-ऋदित्वादुपान्त्यह्रस्वाभावे-अचिचीवदिति । चीवते इत्यादि तूभयोरपि ॥ २०३ ॥

"षान्त्वण् सामप्रयोगे" षोपदेशत्वात् सस्य षत्वे- सिषान्त्वयिषति, अषोपदेशस्य तु-सिसान्त्वयिषतीत्यादि । सान्त्वयतीति तूभयोरपि ॥ २०४ ॥

अथ शान्ताश्चत्वारः-"रश शब्दे" रशति । औणादिके अने-रशना-मेखला, मौ-रश्मिः । णिति इकारे-राशिः ॥२०५॥

"वाशृङ्च् शब्दे" णौ ङे ऋदित्वादुपान्त्यह्रस्वाभावे-अववाशत्, वाशिचस्तु-उपान्त्यह्रस्वे-अवीवशत् । वाश्यते इत्यादि तूभयोरेव ॥ २०६ ॥

"लश लषण् शिल्पयोगे" लाशयति लाषयति वा दारु, भ्रमादिना तक्ष्णोतीत्यर्थः ॥ २०७ ॥

"दाशिण् दाने" दाशयते, ङे-अदीदशत । "दाशृग् दाने" इत्यस्य तु ऋदित्त्वादुपान्त्यह्रस्वाभावे-अददाशतेत्यादि ॥ २०८ ॥

अथ षान्ता अष्टौ-"खष हिंसायाम्" खषति, चखाष ॥ २०९ ॥

"सूष शूष प्रसवे" अषोपदेशत्वात् षत्वाभावे-सुसूष, षोपदेशस्य तु-सुषूष । सूषतीत्यादि तूभयोरेव ॥ २१० ॥

शूषति-शूषति । अचि-शूषा-शाकजातिः ॥ २११ ॥

"घषुङ् करणे" उदित्त्वान्नागमे तस्य "शिड्हे०" [ १. ३. ४०. ] इत्यनुस्वारे-घंषते, घंषिता "घसुङ् करणे" इत्यस्य तु-घंसते, इत्यादि ॥ २१२ ॥

"धिषक् शब्दे" ह्वादिरयम्, तेन शिति द्वित्वे-दिधेष्टि ॥ २१३ ॥

"मुषक् खण्डने" पुष्पादिरयम् । मुष्यति, पुष्पादित्वादङि-अमुषत ॥ २१४ ॥

"घूष घूसण् कान्तीकरणे" घूषयति, घूसयति ॥२१५॥२१६॥

"धृषिण् सामर्थ्यवारणे" धर्षयतेऽरीन् ॥ २१७ ॥

अथ षट् सान्ताः-"जर्त्स परिभाषण-हिंसा-तर्जनेषु" जर्त्सति । जर्त्सन्ती स्त्री कुले वा, ई-ङ्योः "श्य शवः" [ २. १. ११६. ] इति शतुर्नित्यमन्तादेशः । 'जर्त्सन्ती' इति रूपप्रदर्शनं चास्य धातोस्तौदादिकत्वशङ्कापनुत्त्यै धातुपारायणे कृतमित्यस्माभिरपि तदर्थमेवोपात्तमिति बोध्यम् । तौदादिकस्य तु "अवर्णादश्न०" [ २. १. ११५. ] इति शतुर्वैकल्पिकेऽन्तादेशे रूपद्वयं स्यात् ॥ २१८ ॥

"ष्णुसच् अदने" "षः सः०" [ २. ३. ९८. ] इति सत्वे-स्नुस्यति । षोपदेशत्वात् षत्वे-सुष्णोस, णौ ङे-असुष्णुसत्, णौ सनि-सुष्णोसयिषति । केवलात् तु षत्वापन्ने सनि "णिस्तोरेव०" [ २. ३. ३७. ] इति नियमात् षत्वाभावे-सुस्नुसिषति, सुस्नोसिषति, अत्र च "वौ व्यञ्जनादेः०" [ ४. ३. २५. ] इति सेट्सनः कित्त्वविकल्पाद् गुणो वैकल्पिकः; एवं सेट्क्त्वोऽपि कित्त्वस्य विकल्पात्-स्नुसित्वा, स्नोसित्वा ॥ २१९ ॥

"ष्णसूच् निरसने" घटादिरयम् । "षः सः०" [ २. ३. ९८. ] इति षः सत्वे णौ घटादित्वनिमित्तके ह्रस्वे च-स्नसयति, जिणम्परे णौ वा दीर्घे-अस्नासि, अस्नासि, स्नासं स्नासं, स्नसं स्नसम्, णौ सनि-सिष्णसयिषति । अघटादेस्तु-स्नासयति, अस्नासि, स्नासं स्नासं, सिष्णासयिषतीत्यादि स्यात् । स्नसतीति तूभयोरेव ॥ २२० ॥

"दासट् हिंसायाम्" दास्नोति ॥ २२१ ॥

"उध्रसूश् उच्छे" उध्रस्नाति, हौ श्नाहेरानादेशे-उध्रसान, अनेकस्वरत्वात् परोक्षायां आमि-उध्रसांचकार । सनि उदिध्रसिषति । ऊदित्वात् क्त्वि वेटि-उध्रसित्वा, उध्रस्त्वा । उत्पूर्वस्य ध्रस्नातेस्तु-उद्ध्रस्नाति, उद्ध्रसान, उद्दध्रास, उद्दिध्रसिषति, क्त्वि यपि-उद्ध्रस्येत्यादि स्यात् ॥ २२२ ॥

"उध्रसण् उत्क्षेपणे" उध्रासयति, ङे-औदिध्रसत्, उत्पूर्वस्य ध्रासेस्तु उद्ध्रासयति, उददिध्रसत्, इत्यादि ॥२२३॥

अथ हान्ताः पञ्च-"गृहौङ् ग्रहणे" औदित्वादिड्विकल्पे-गर्हिता, गर्ढा । वेट्त्वात् क्तयोरिडभावे-गृढः, गृढवान् । क्तौ-गृढिः । "नाम्युपान्त्य०" [ ५. १. ५४. ] इति के-गृहम्, गृहाः ॥ २२४ ॥

"स्नुहूङ् विश्वासे" दन्त्यादिः, द्युतादिरयं, सस्नंहे । "द्युद्भ्योऽद्यतन्याम्" [ ३. ३. ४४. ] इति विकल्पेनात्मनेपदे-अस्रंहिष्ट, परस्मैपदे द्युतादित्वादङि-अस्रहत् । ऊदित्वात् क्त्वि वेटि सेटः क्त्वः "क्त्वा" [ ४. ३. २९. ] इति कित्त्वाभावे "नो व्यञ्जनस्य०" [ ४. २. ४८. ] इति नस्य लुकोऽप्राप्तौ-स्रंहित्वा, इडभावपक्षे तु हो ढत्वादौ सति "ढस्तड्ढे" [ १. ३. ४२. ] इति ढलुपि दीर्घे च-स्राढ्वा ॥ २२५ ॥

"ष्टृहौ ष्टृन्हौत् उद्यमे" णौ सनि षोपदेशत्वात् सस्य सस्य षत्वे–तिष्टर्हयिषति ॥ २२६ ॥

ष्टृन्हौत्–प्राग्वत् सस्य षत्वे–तिष्टृंहयिषति । अषोपदेशयोस्त्वेतयोः–'तिस्तर्हयिषति, तिस्तृंहहिषति' इत्येव ॥ २२७ ॥

"दहुण् रक्षणे" दंहयति । णिचोऽनित्यत्वादभावेऽप्युदित्त्वात् क्ये नस्य लुगभावे–दंह्यते ॥ २२८ ॥

अथ क्षान्ताश्चत्वारः–"ष्टृक्ष गतौ" णौ सनि–तिष्टृक्षयिषति । अषोपदेशस्य तु षत्वाभावेन तिस्तृक्षयिषति ॥२२९॥

"जक्षुङ् गति-दानयोः" घटादिरयम् । उदित्त्वान्ने–जङ्क्षते । क्ङिति नस्य लुगभावे–जङ्क्ष्यते । जजङ्क्षे । जङ्क्षिता । क्ते–जङ्क्षितः । "क्तेटः०" [ ५. ३. १०६ ] इत्ये–जङ्क्षा, णौ–जङ्क्षयति । जिणम्परे णौ"घटादेः०" [ ४. २. २४. ] इति वा दीर्घे–अजाङ्क्षि, अजङ्क्षि । जाङ्क्षं जाङ्क्षं, जङ्क्षं जङ्क्षम् ॥२३०॥

"भक्षी अदने" भक्षते, बभक्षे, भक्षति, बभक्ष, भक्षितुम्, भक्षितम् ॥ २३१ ॥

"ऋक्षद् उपशमने" ऋक्ष्णोति । जन्वि–ऋक्षं–नक्षत्रम् ॥ २३२ ॥ इत्यादि ॥

कैश्चित् परैर्भ्वादिपठिता अपि धातवश्चुरादिषु पठिता णिजर्थं, त एव क्वचिदात्मनेपदार्थं, क्वचिदात्मनेपदिनः परस्मैपदार्थं, क्वचिदर्थभेदाय क्वचिदनिटोऽन्यत्रेडागमार्थं च पुनः पठिता दृश्यन्ते । तेऽत्र प्रायो नोदाहृताः, चुरादिषु शेषे "बहुलमेतन्निदर्शनम्" इत्युक्ततया चौरादिकणिचो यथाप्रयोगं सर्वधातुभ्योऽपि बाहुल्येन प्रयोक्तुं शक्यत्वात्, आत्मनेपदस्य चानित्यत्वेन परस्मैपदिभ्योऽपि सौलभ्यात्, धातूनां चार्थनिर्देशस्य दिक्प्रदर्शनमात्रत्वेन तेषामनेकार्थत्वात्, आगमशास्त्रस्यानित्यतयेडागमस्याप्यनित्यत्वाच्च ।

आगमिका अपि धातवः केचिदेभ्योऽन्ये दृश्यन्ते, यथा–"दट्ट आच्छादने" दट्टिता पट्टशाला ॥ १ ॥

"विकुर्व विक्रियायाम्" "भ्वादेः०" [ २. १. ६३. ] इति दीर्घस्यानित्यत्वादभावे–विकुर्वति, विकुर्वितुम्, विकुर्वित्वा ॥२॥

"कुर्व करणे" पूर्ववद् दीर्घाभावे–कुर्वति । अस्य विपूर्वस्य क्त्व यपि–विकुर्व्य ॥ ३ ॥

"उषण् निवासे" अदन्तः । "णि-वेत्ति०" [ ५. ३. १११. ] इत्यने–पर्युषणा ॥ ४ ॥

"युहं उद्धरणे" निर्यूठम् ॥ ५ ॥

इत्यादि । एते च सर्वे लौकिका धातवोऽपठिता अपि लक्ष्यानुसारादेव सिद्धा इति प्रकृतन्यायविषयतयोदाहृताः ।

॥ इति शम् ॥

इति न्यायसमुच्चयस्य चतुर्थोल्लासे पूर्वदर्शित-
न्यायसजातीयस्य विस्तरतो व्याख्यातुं
पृथगुपात्तस्य न्यायस्य, तपोगच्छाधि-
पति-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्र-
श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारेण
'व्याकरणवाचस्पति-शास्त्रविशा-
रद-कविरत्न' इति पदालङ्कृ-
तेन विजयलावण्यसूरिणा
विरचिता न्यायार्थसिन्धु-
नामा वृत्तिः ॥

**समाप्ता न्यायसमुच्चयस्य सिन्धुनामा वृत्तिः ।**

## प्रशस्तिः ।

[ वसन्ततिलकानि ]

अस्ति प्रसिद्धविभवं निकषो बुधानां, विद्याविलासिजनसेवितमादरेण ।
श्रीमज्जिनायतनपूर्णकलेवरं सत्, पुण्यं पुरं सुकलयन्निजनाम सत्यम् ॥ १ ॥

तत्र स्थितिं विदधता किल वृष्टिकाले, लावण्यसूरिमुनिपा विजयान्वितेन ।
न्यायार्थसिन्धुरयमारचितो बुधानां, मोदाय मन्दमनसामपि बोधनाय ॥ २ ॥

श्रीहेमहंसगणिना रचिताऽतिमञ्जु-मञ्जूषिका सुविमला बहुलार्थयुक्ता ।
सन्न्यायसंग्रहगता वृहता युता च, न्यासेन किन्तु नहि तेन नवीनतोषः ॥ ३ ॥

ज्ञात्वेति तत्पथपरिष्करणार्थमेव, तत्प्रत्ननूतनजनतोपकृतौ प्रयत्नः ।
मध्यस्थवृत्तिमवलम्ब्य कृतोऽयमास्तां, न्यायार्थबोधरुचिलोकहिताय शश्वत् ॥ ४ ॥

आकाश-चन्द्र-गगना-ऽक्षिमितेऽत्र वर्षे, सद्वैक्रमेऽवसित एष गुरोः प्रसादात् ।
आचन्द्रभास्करमुपेत्य परां प्रसिद्धिं, सिद्धिं करोतु पठतां च मनोरथानाम् ॥ ५ ॥

## [ चतुर्थोल्लासः ]

अथ पूर्वदर्शितन्यायसजातीय एवानुक्तार्थसाधको न्यायो विस्तरेण विव्रियते—

### ※शिष्टनाम-निष्पत्ति-प्रयोग-धातूनां सौत्रत्वाल्लक्ष्यानुरोधाद् वा सिद्धिः※

**त०** —अयं न्यायो न केवलं न्यायसङ्ग्रहशिष्टांशपूरक एवाऽपि तु सकलशब्दशास्त्रशिष्टांशपूरकः। शब्दशास्त्रविषये तत्र तत्र महाभाष्यकृदादिभिरुद्घोषितं यत्–"प्रयुक्तानामिदमन्वाख्यानम्" इति। सत्यप्याचार्याणां बहुदर्शित्वे कलिकालसर्वज्ञताभाजनत्वे च स्वदृष्ट्या तेषामपि छद्मस्थत्वात् छद्मस्थानां च सम्भवति कदाचित् किञ्चिद्विषयकमननुसन्धानमित्यनुक्तोपायकशब्दप्रयोगदर्शने शिष्याः कदाचित् तस्य साधुत्वे संशयमाप्नुयुरिति तेषां संशयापनोदायैवायं न्याय आश्रित इति प्रतीयते। नाम्नां चानन्तत्वं जगदानन्त्यात् सुसिद्धमेव। निष्पत्तयश्च निपातनरूपा आचार्यैः सर्वांशस्य लक्षणमात्रगम्यत्वाभावज्ञापनायैव तत्र तत्र प्रयुक्ताः। प्रयोगाश्च तत्तद्धातूनामेकार्थत्वेऽप्यनादिलोकव्यवहारसिद्धतत्तदर्थविशेषसम्बन्धनिबन्धना एवेति ते लक्ष्यानुरोधं विना न शक्या अन्यैरुपायैरुपदेष्टुमिति तदर्थं तदाश्रयणमावश्यकमेव, न केवलमर्थविशेषसम्बन्ध एव शब्दानां नियतोऽपि तु देशविशेषसम्बन्धोऽपि। यदाह महाभाष्यकारः पस्पशाह्निके–"एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते, तद्यथा–शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एवैनमार्या भाषन्ते 'शव' इति। हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु" इति। शब्दप्रयोगविषयस्यातिमहत्त्वमपि तत्प्रकरण एव महाभाष्ये प्रपञ्चितम्। तथा च साकल्येन सर्वप्रयोगसङ्ग्रहोऽप्यसाध्य एवेति स्वमतिशिष्टप्रयोगसहकारेण प्रकृतशास्त्राविरोधेन च तत्र तत्र साधुत्वमनुसन्धेयमिति लक्ष्यानुरोधात् प्रयोगसिद्ध्यभिप्रायः। अत्र च सौत्र-लौकिक-वाक्यकरणीय-परपठितभेदेन चतुर्द्धा धातवो वृत्तौ समुदाहृताः। तत्र सौत्रा धातवस्तावदित्थमनुगन्तव्याः–क्रियावाचित्वे सति धातुपाठापठितत्वे सति तत्तद्विधिसूत्रपरिगृहीतत्वं सौत्रत्वमिति। लौकिकत्वं च क्रियावाचित्वे सति धातुपाठापठितत्वे सति सूत्रापरिगृहीतत्वे च सति केवललोकप्रयोगावगतसत्ताकत्वम्। वाक्यकरणीयत्वं च क्रियावाचित्वे सति धातुपाठापठितत्वे सति सूत्रागृहीतत्वे सति शिष्टप्रयोगप्रयोज्यग्रहविषयत्वम्। यद्यपि परपठितधातूनामपि प्रकृतवाक्यकरणीयेषु सङ्ग्रहः शक्यः कर्तुं तथापि धातुपाठत्वेन तद्धातुपाठस्यापि ग्रहीतुं शक्यत्वेन तदपठितत्वं तेषां सन्दिग्धमिति पृथगेव तदुपन्यासः कृतः। वर्णिताश्च सौत्रादयो धातवो वृत्तौ, तत्र च यत्र क्वचन विवरणस्यापेक्षासीत् तत् संक्षिप्य तत्रैव प्रदर्शितम्। परपठितधातुषु ये सूरिपठितधातव एवान्यैरन्यथा पठिताः, ये च केचनाधिका एव पठितास्तेषां स्वरूपपरिचयाय संक्षिप्य विव्रियते। तथाहि–**"खेडण्"** इत्यस्य स्थाने "खेटण्" इति सूरिसम्मतः पाठः, प्रकृतपाठस्तु देवनन्दिपरिगृहीतः, परमयमुच्चारणभेदकृतो लेखकप्रमादकृतश्च भेदो भवितुमर्हति, तथापि "स्मृतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ।" इति प्राचीनोक्तिमनुसृत्योभावपि धातू संग्राह्यावेव। **पणणि**त्यधिकमेव केचित् पठन्ति। **"वित्तण्"** इति च "व्ययण् वित्तसमुत्सर्गे" इति पाठे वित्तेति धात्वन्तरमिति मत्वा केचिदाहुः, समुत्सर्गश्च दानमेव। कविकल्पद्रुमादौ च दानार्थेऽयं पठित इत्यस्माभिरपि तदुदाहृतम्। **"कर्त"** इति–"कत्रण् शैथिल्ये" इत्येतं "कर्त्तण्" इति केचिदाहुः, **"कत्रण्"** इति चन्द्रः, **"कत्थण्"** इति देवनन्दी। **"श्लथ"** इति–"श्रथण् दौर्बल्ये' इत्यस्यैव ऋफिडादित्वाल्लत्वममन्यमानाः केचिल्लत्वविशिष्टमेव पेठुः। **"शरण्"** इति–"शारण् दौर्बल्ये" इत्येतस्यैव रूपान्तरेण पाठो नन्दिसम्मतः। **"छदण्"** संवरणे" इत्येतं केचिददन्तमाहुः। **"लभण्"** इति–"लाभण् प्रेरणे" इत्येतस्य स्थाने सभ्याः पेठुः। **"श्रपण्"** इत्ययमधिक एव कैश्चित् पठ्यते। **"खोदण्"** इति "खोटण् क्षेपे" इत्येतमेव केचिद् दान्तं मन्यन्ते। **"स्तन"** इत्यादयः षड् भ्वादौ व्यञ्जनान्ताः पठितास्तानेवादन्तान् सभ्याः पठन्ति। **"मलण्"** इति–"मलि धारणे" इत्येतमेव चुरादावदन्तत्वेन केचित् पठन्ति। **"वल्पुल०"** इति "पल्पूलण् लवन-पवनयोः" इत्ययमेव रूपभेदेन कैश्चिदन्यथाऽन्यथा पठ्यते। तथा चास्य वल्पुल वल्पूल पल्पुल पल्पूल वत्पूलेति स्वरूपाण्युपलभ्यन्ते। **"कुमालण्"** इति–"कुमारण् क्रीडायाम्" इत्यस्यैव लत्वविशिष्टः पाठः। **"पशण्"** इति–"पषण् अनुपसर्गो वा" इति चुरादावदन्तत्वेन पठितस्य तालव्यान्तत्वं वाऽदन्तत्वं च केचिन्मन्यन्ते। **"शशण्"** इत्यधिकमेव धातुः सूर्यप्रज्ञप्तिवृत्तौ दृश्यते। **"अंसण् विभाजने"** इति–"अंशण् समाघाते" इत्येतस्यैव रूपान्तरम्, समाघातशब्दश्च धातुपारायणे विभाजनवचनत्वेन व्याख्यातः। **"गा०"** इत्यादि, गां ह्वादौ माङ च दिवादौ केचिदधिकमेव पठन्ति। **"जिरिद०"** इत्यादि, जिरिं स्वादौ, चिरणं च चुरादिगतं घटादित्वेन केचिदधिकमेव पेठुः। **"दीधी-ई-वेवी"** धातूनपि पाणिन्यादयोऽधिकानेव पेठुः, तत्र दीधी-वेवी धातू ते छान्दसौ मन्यन्ते। **प्वादी एतावि**ति, सूरिभिस्तु "व्री-भ्री०" धातू क्र्यादौ प्वादेर्बहिरेव पठितौ। **"ल्पींश्"** इति–अमुं केचिदधिकमेव पेठुः। **"ल्वींश्"** इति–सूरिभिरयं प्वादिमध्ये पठितः। **"ज्रीण्"** इति–युजादिमध्यस्य "जॄण् वयोहानौ" इत्यस्यैव स्थानेऽयं नन्दिना पठ्यते। **"खुङ्"** इति–"उङ्

कुङ्" इत्यादिवत् कैश्चिद् गत्यर्थे पठ्यते, **"धुगृट्"** च स्वादावधिक एव पठ्यते। **"गृ"** इति–"गुङ् शब्दे" इत्येतमेव दीर्घान्तं परस्मैपदिनं पुरीषोत्सर्गेऽर्थे केचिदाहुः । **"गृत्"** इति–"गुंत् पुरीषोत्सर्गे" इत्ययमेव कुटादिस्थो दीर्घः सेट् च कैश्चिन्मन्यते । **"दूट्"** इत्येतं केचिदधिकमेव स्वादौ पठन्ति, **"जृं"** इति–"ञिं अभिभवे" इत्ययमेव रूपान्तरेण कैश्चित् पठितः। **"घृ-स्तृ-हृ"** इत्येतेऽधिका एव ह्लादौ कैश्चिदूहिताः **"स्पृंट्"** इति–"स्मृंट् पालने च" इत्येतस्यैव पोपान्त्यत्वेन पाठः। **"ऋट्"** इत्येतं स्वादावधिकमेव पेठुः। **"कृग्श्"** इति–"कृश् हिंसायाम्" इति पठित एव ह्रस्वान्तः कैश्चिन्मन्यते । एवं **"वृग्श्"** इत्ययमपि "वृग्श् वरणे" इत्यस्यैव ह्रस्वान्तपाठः। **"चॄ भक्षण-गत्योः"** इति–चरतिसमानार्थोऽयमन्य एव धातुः क्त-क्तवतुविषयत्वेन कैश्चित् स्मर्यते, उक्तश्चायमर्थः "रदादमूर्छमदः" [ ४. २. ६९. ] इत्यस्य वृत्तौ **"पॄक्"** इति–"पृंक्" इत्ययमेव दीर्घान्तः सेट् चेत्येके प्राहुः। **"दॄङ्च्"** इति–"दृ भये" इत्ययमेव कैश्चिद् दिवादावपि पठ्यते । **"ज्योङ्"** इति–"दीक्षि मौण्ड्येज्योपनयनदानेषु" इति वृद्धपाठं केचिद् भित्वा "दीक्षि मौण्ड्ये" "ज्यो उपनयनदानेषु" इति पठन्ति, ङकारं चात्मनेपदित्वज्ञापनाय तत्र न्यस्यन्ति। **"दकु"** इति च "तकु कृच्छ्रजीवने" इत्यस्य स्थाने कैश्चित् पठ्यते। **"तिकृङ्"** इति–"तिकी-टिकी गत्यर्थौ" भ्वादिष्वात्मनेपदिनौ पठितौ, तावेव केचिद्दितौ मन्यन्ते। **"षेकृङ्"** इति च "सेकृङ्" इत्यस्यैव षोपदेशत्वं प्राहुः। **"चिक्कण्"** इति–चुक्कणः स्थाने कौशिकेन स्वीकृतः। **"चखु"** ( वखु ) इति च "चख [ वख ] गतौ" इत्यस्य स्थाने पठ्यते। **"खक्ख"** इति–"कक्ख हसने" इत्यस्यैवान्यथा पाठः। **"लिखत्"** इति–अमुं केचित् कुटादौ पेठुः। पाणिनीये तन्त्रे च "लिख अक्षरविन्यासे" इति धातुः कुट्धातोरादौ पठ्यते, तस्य कुटादित्वप्रयुक्तकार्यसिध्यर्थं कुटस्यादिः कुटादिरिति तत्पुरुषसमासोऽपि तत्र तन्त्रेण निर्दिष्ट इति केचिदाहुः। तथा चैतेन कुटादिपाठेन फलैक्यम्। **"घग्घ"** इति "गग्घ" इत्यस्यैवान्यथा पाठः । **"दघ-तिघ-चषघान्"** स्वादावधिकानेव केचित् पेठुः। **"सघ"** इति–"षघट् हिंसायाम्" इत्यस्यैवाऽषोपदेशत्वं मन्यन्ते। **"मुचि"** इति–"मचिं कल्कने" इत्यस्य स्थाने चन्द्रः पपाठ । **"अचूग्०"** इति–"अञ्चू० गतौ च" इत्यस्यैव स्थाने "अचूग्" इत्येके "अचुग्" इत्यपरे। **"ड्याचृग्"** इति–ड्वितः डुयाचृगः स्थाने द्वितः पाठः। **"विचृंकी"** इति–"विजृंकी" इत्यस्यैव स्थाने पठ्यते सभ्यैः। **"चर्चत्"** इति–"झर्चत्" इत्यस्य स्थाने। **"खचश्"** इति–"खवश्" इत्यस्य स्थाने। **"गुर्चण्"** इत्यधिक एव कैश्चित् पठ्यते। **"पिच्छत्"** बाधने" इति–"सिच्छत् उत्क्लेशे" इत्यस्य स्थाने द्रमिलैः पठ्यते, उत्क्लेशश्च बाधनमिति धातुपारायणे प्रोक्तमिति स एवार्थ इह स्पष्टप्रतिपत्तये दत्तः। **"भुजु"** इति–अयमप्यधिक एव "तुज पिजुण्"वत् पठ्यते । **"भ्रिज"** इति–"धृज गतौ" इत्यस्यैवान्यथा पाठः। **"रिजि"** इति–गत्यादौ पठितस्य "ऋजि" इत्यस्यैवान्यथा पाठ उद्रिक्तादिरूपसिध्यर्थः, स्वमते तु–"रिचृंपी विरेचने" इत्यनेनैव तत् सिध्यति। **"ओनजैङ्"** इति–"ओलजैङ् व्रीडे" इत्ययमेव नादिरिति चन्द्रः। **"मृजेकि"** इति–"पृचैङ् सम्पर्चने" इत्यस्यैवायं कौशिकसम्मतः पाठः। **"वृजेप्"** इति–"वृचैप् वरणे" इत्ययमेव जान्तो वर्जनार्थश्चेति। के**"मर्जण्"** इति–"मार्जण् शब्दे" इतिवत् केषाञ्चित् सम्मतः। **"शौट्ट०"** इति–"शौड़ गर्वे" इत्यादयः षड् डान्ता भ्वादिषु पठितास्तेषामेव टान्तत्वमन्येषां सम्मतम्। **"स्फट्ट" "मुट्ट"** इति–"स्फट विशरणे" "मुट मर्दने" इत्येतावेवोदिताविति परे। **"नट"** इति–"णट नृतौ" इत्ययमेवाणोपदेशः। **"णटि"** इति–नटेर्भ्वादावात्मनेपदित्वं नन्दिसम्मतमिति धातुपारायणे प्रोक्तम्, नटिश्च भ्वादौ, घटादिर्नत्यर्थोऽन्यश्च नृत्यर्थः, उभयोश्चात्मनेपदित्वज्ञप्त्यर्थं "णटि नतौ च" इतीह पठितम्। **"अतट"** इति–टोपान्त्यस्य हिंसातिक्रमार्थस्य तोपान्त्यत्वेन पाठः। **"अट्ति"** इति–प्रागुक्तस्यैव टोपान्त्यत्वं तान्तत्वं चान्येषां सम्मतम्। **"मिट्ठण्"** इति–"मिदुण् स्नेहने" इत्यस्यैव टान्तत्वम्। **"सुट्टण्"** इति–"षुट्टण्" इत्ययमेवाषोपदेशोऽनादरार्थश्चेत्येके। **"शटि"** इति–"शठिण् श्लाघायाम्" इत्यस्य स्थाने "शट" इति नन्दी प्राह, "शल" इति तु कौशिकः। **"रुठि"** इति–"रुटि प्रतीघाते" इत्ययमेव ठान्त इत्यन्ये। **"वुठुण्"** इति–"बुधुण् हिंसायाम्" इत्ययमेव ठान्तः कैश्चिन्मन्यन्ते। **"चुड्ड"** इति–"चुट्ट अल्पीभावे" इत्ययमेव डान्त इत्यन्ये। **"पिड"** इति–"पिट शब्दे" इत्येतमेव डान्तं केचित् पठन्ति, तत्फलं पेडेति सिद्धिः। स्वमते च "पेल्ट गतौ" इत्यस्मादचि डलयोरैक्यात्–पेडेति सिद्धम्। **"कड्ड"** इति–"कड्ड कार्कश्ये" इत्यादयस्त्रयो दोपान्त्या भ्वादौ ये पठितास्त एव डोपान्त्या इत्यन्ये। **"तुड्ड"** इति–"तुड तोडने" अयमेव संयुक्तडान्त इत्यन्ये। **"ञिक्ष्विडा"** इति–परस्मैपदिष्वव्यक्तशब्दार्थो "ञिक्ष्विदा" धातुः पठ्यते, द्युतादौ चात्मनेपदित्वेन "ञिक्ष्विदा स्नेहन-मोचनयोः" इति पठ्यते, तावुभौ डान्ताविल्यन्ये। नन्वेवं लाघवार्थं "ञिक्ष्विडाग्" इति गिदुभयपदी द्युतादिषु पठ्यतामर्थाश्च त्रयोऽपि तत्रैव निर्दिश्यन्ताम्, ङिद्ङितोरर्थभेदश्च धातूनामनेकार्थत्वेन परिहरणीय इति चेत्? सत्यम्–ङित्त्वं विना प्रक्ष्वेडनेति रूपस्यासिद्ध्या ङिदवश्यं पठनीय इति क्ष्वेडतीत्यादिपरस्मैपदिरूपसिध्यर्थमङितोऽपि पाठ आवश्यक एवेत्युभयोः

पार्थक्येनैव पाठ आदृत इति परमाशयात् । "अड्ड" इत्यमुमधिकमेव केचित् पेठुः । "ओलड्डुण्" इति-धातावोकारो न धात्ववयवः किन्त्वनुबन्ध इत्येके । "भडुण्" इति-अयं चान्द्रसम्मतो धातुः । "त्रुडिण्" इति-"त्रुटिण् छेदने" इत्यस्यैव डान्तत्वमित्येके । "फण गतौ" इति-स्वमते घटादावयमस्ति, अन्ये चाघटादिमिमं मन्यन्ते । "अणिच्" इति-"अनिच् प्राणने" इत्यस्यैव णान्तत्वम् । "घृणू" इति-अयं दीप्तौ तनादौ नान्त एव "रघुवर्णा० [ २. ३. ६३. ] इति णत्वं विधाय पठ्यते, स एव स्वाभाविकनान्त इति केचित् । "घणूयी" इति-"घृणूयी" इत्यस्यैवाकारोपान्त्यत्वमन्ये मन्यन्ते । "इतु" इति-"अतु बन्धने" इत्यस्य स्थाने कैश्चित् पठ्यते । "ज्युति" इति-ज्योतिःशब्दसिद्ध्यै कौशिकसम्मतो धातुः "जुतृङ् भासने" इत्यस्य स्थाने पठ्यते । स्वमते तु "द्युति दीप्तौ" इत्यस्मात् "द्युतेरादेश्च जः" [ उणा० ९९१. ] इति इसि दकारस्य जकारे-ज्योतिःशब्दसिद्धिः । "कितक्" इति-ह्वादावयमधिक एव कैश्चित् पठ्यते । "पतिंच्" इति-"तपिंच्० ऐश्वर्ये" इत्यस्यैव वर्णव्यत्ययेन द्रमिलसम्मतः पाठः । "वावृतूचि" इति-"वृतूचि वरणे" इत्यस्यैव स्थाने कैश्चित् पठ्यते । "ष्वर्तण्" इति-"स्वर्तण् गतौ" इत्यस्यैव षोपदेशपाठः । "पर्थ पार्थण्" इति-"पृथण् क्षेपणे" इत्यस्यैव स्थाने मतभेदेनैतौ पठ्येते । "पद" इति-"वद स्थैर्ये" इत्ययमेव पकारादिः कण्ठसम्मतः । "कदिष्" इत्यादि-"कदुङ् क्रदुङ् क्लदुङ् वैक्लव्ये" एषामनुदित्त्वं नन्दी प्राह । "मन्दि" इति-"मदुङ् स्तुति-मोदादौ" इत्यस्य स्थाने चन्द्रेण जाड्येऽर्थे पठितः । "खुर्दि गुधि" इति-"गुर्दि गुदि क्रीडायाम्" इत्यनयोः स्थाने कैश्चित् पठ्येते । "ऊवेदृग्" इत्यादि-"ऊवुन्दृग् निशामने" इत्यस्य स्थाने "ऊवेदृग्" इति केचित्, "ऊन्धृग्" इत्यन्ये । निशामनं चालोचनमिति धातुपारायणे प्रोक्तम्, तदनुसारेणेहालोचनार्थत्वमेवोक्तम् । "णुदींत्" इति-"णुदंत् प्रेरणे" इत्ययमेव ईदिदित्येके । "वध" इति-केऽप्यमुमधिकमेव पठन्ति । "णाधृङ्" इति-नाधृङः स्थानेऽयं णोपदेश इति केचित् । "साधंच्" इति-केचित् साधेः श्यमिच्छन्ति, तन्मतानुसारमयं दिवादित्वेनैव पठितः । "षाधंट्" इति-"साधंट् संसिद्धौ" इत्यस्यैव षोपदेशत्वमेकेषां मतम् । "गृधण्" इति-"गृधूच् अभिकाङ्क्षायाम्" इति दिवादिं केचिच्चुरादिं मन्यन्ते । "मन" इति-"मनिण् स्तम्भे" इत्यस्यैव चान्द्रसम्मतः पाठो ममानेत्यादिसिद्ध्यर्थः । "जनक्" इति-अयमधिक एव ह्वादौ कैश्चित् पठ्यते । "क्षप प्रेरणे" "त्रप लज्जायाम्" इति-इमौ सूरिभिर्घटादेर्बहिः पठितौ, कश्चिद् घटादी मन्यते । "सप" इति-"षप समवाये" इत्ययमेवाषोपदेश इत्येके । "ह्वेपृङ्" इति-"मेपृङ् रेपृङ्" इत्यादिवदयमपि गत्यर्थ इति कौशिकः । "तुप०" इत्यादि-"तुप-तुम्प-तुफ-तुम्फाः" ये भ्वादौ पठितास्ते तुदादावपि सन्तीति केचित् । "तृप तृन्पत्" इति-फान्तौ "तृफ तम्फत्" एतौ पान्तावित्यन्ये । "स्तुप स्तूपण्" इति-"ष्टूपण् समुच्छ्राये" इत्ययं "स्तुपण्" इत्यन्ये, अषोपदेशः "स्तूपण्" इति परे । "तुपुण्" इति-"तुवुण् अर्दने" इत्यस्य स्थाने, अधिक एव वाऽयमिति परे । "घर्व" इति-"अर्व-कर्व०" इत्यादिवदयमपि गत्यर्थ इति, केचित् । "कन्व०" इत्यादि-"कर्व-खर्व०" इत्यादीनां रेफस्य स्थाने नकारं कौशिकः पपाठ । "साम्वण्" इति-"सम्वण् बन्धने" इत्यस्य स्थाने कैश्चित् पठ्यते । "कुट्टुम्बिण्" इति-"तन्त्रिण् कुटुम्बधारणे" इत्यत्र "कुटुम्ब" इत्ययं धातुरेव पृथगिति चान्द्राः । "सुम्भ" इति-"शुम्भ भाषणे" इत्यस्यैव हिंसार्थत्वमथ दन्त्यादित्वं चेत्येके । "नभि" इति-द्युतादिस्थो "णभि हिंसायाम्" इत्ययमेवाणोपदेश इति केचित् । "पुम्भ" इति-पूर्वपठितो दन्त्यादिरेव षोपदेश इति गुप्तः । "डभु डिभुण्" इति-"डपु डिपुण्" इत्येतावेव भान्ताविति केचित् । "दभु दिभुण्" इति-एतौ धातुपारायणसूचितौ, तत्र यद्यप्यर्थकथनं न कृतं तथापि दभेः सौत्रस्य वञ्चनार्थत्वमुक्तमिति तत्सहचरिताविमावपि तदर्थाविति मत्वा वञ्चनार्थे पठितौ, दभिश्च "आप्नु-यु-वपि०" [ ५. १. २०. ] इति सूत्रे पठितस्तत्रैव तस्य वञ्चनार्थत्वं वृत्तावुक्तम्, दभिश्च सौत्रधातुष्वेव पठित इतीह पुनर्न पठितः । "छद्म" इति-"त्सर च्छद्मगतौ" इति धातुपाठे "छद्मति" इति धातुरेव पृथगिति कौशिकः । "सामण्" इति-अदन्तोऽयं चन्द्रेण व्यञ्जनान्तः पठ्यते । "तुरक्" इत्ययमधिक एव केषाञ्चित् सम्मतः । "पुरत्" इति-"सुरत् ऐश्वर्ये" इत्ययमेव षोपदेश इति केचित् । "गुट्टुण्" इति-"कुट्टण् अनृतभाषणे" इत्ययमेव गादिः परेषां मते । "स्खल चलने" "दल विशरणे" एतावघटादित्वेन पठितौ परेषां मते घटादी स्तः । "स्थल" इति-"ष्ठल स्थाने" इत्यस्यैवाषोपदेशत्वं मन्यन्ते । "वलि" इति-"भलि परिभाषण-हिंसा-दानेषु" इत्यस्य स्थाने ओष्ठ्यादिं वलिं केचिदाहुः । "विलत्" इति-"सिलत् उञ्छे" इत्यस्यैव षोपदेशत्वमिति केचित् । "पुलत्" इति-"पुल महत्त्वे" इत्यस्य तुदादित्वमपि मन्यन्ते । "मुलण्" इति-"मूलण् रोहणे" इत्यस्यैव ह्रस्वादित्वं नन्दी प्राह । "पलण् रक्षणे" इत्यस्यैव स्थाने "पाल" इति चन्द्रः, उभयो रूपे विशेषाभावेऽपि धातुपारायणेऽस्य पृथगेव चर्चितत्वादिह पाठः कृतः । "गलिण्" इत्यमुमधिकमेव केचित् पठन्ति, "क्षीवृ" इत्ययमपि तथा । "चीवी" इति-"चीवृग् ज्ञपीवत्" इत्येतभृदितमेके नेच्छन्ति, तेनोभयपदित्वज्ञापनायात्रैवं पेठे, ज्ञपीश्चादान-संवरणयोरर्थयोः पठ्यते, ततश्चायमपि तदर्थयोः पठ्यते ।

**"षान्त्वण्"** इति–"सान्त्वण् सामप्रयोगे" इत्ययमेव षोपदेश इति केचित् । **"रश"** इति–अयमधिक एव केषाञ्चिन्मते । **"वाशृङ्च्"** इति–"वाशिच् शब्दे" इत्यस्यैव ऋदित्वं केचिन्मन्यन्ते । **"लश लषण्"** इति–"लसण् शिल्पयोगे" इत्ययमेव तालव्यान्त इति कौशिकः, मूर्धन्यान्त इत्यन्ये । **"दाशिण्"** इत्ययमधिक एव परसम्मतः । **"खष"** इति–"कष शिष०" इत्यादिवदयमपि हिंसार्थ इति कण्ठः । **"सूष शूष"** इति–"षूष प्रसवे" इत्ययमषोपदेश इत्येके, तालव्यादिरिति चारकाः । **'घषुङ्'** इति–"घसुङ् करणे" इत्ययमेव मूर्धन्यान्ततेन चन्द्रसम्मतः । **"धिषक्"** इतीमं ह्वादावधिकं केचित् पठन्ति । **"मुषच्"** इति–पुष्पादिस्थो "मुसच् खण्डने" इत्ययं षान्त इत्यपरे । **"जत्स"** इतीममधिकमेव केचित् पठन्ति । **"ष्णुसच्"** द्रमिलैरधिकमेव पठ्यते । **"ष्णसूच्"** इत्ययं घटादिवहिर्भूतो घटादित्वेनैकैर्मन्यते । **"दासट्"** इत्यधिक एव । **"उध्रसूश्" "उध्रसण्"** इति–"ध्रसूश् उञ्छे" "ध्रसण् उत्क्षेपे" इति द्वावप्युकारादी इत्येके । **"गृहौङ्"** इति–"ग्लहौङ् ग्रहणे" इत्यस्य स्थाने इति केचित् । **"स्नम्हुङ्"** इति-द्युतादिस्थः "स्रम्भूङ् विश्वासे" इत्ययमेव हान्त इति परे । **"ष्टृहौ ष्टृन्हौत्"** इति–"स्तृहौ स्तृंहौत् हिंसायाम्" इत्येतौ षोपदेशावित्येके । **"दहुण्"** इत्यमुं केचिदधिकमेव पठन्ति । **"ष्टृक्ष"** इति–"स्तृक्ष गतौ" इत्ययमेव षोपध इति चन्द्रः । **"जक्षुङ्"** इति–"क्षजुङ् गतिदानयोः" इत्यस्य वर्णविपर्ययेण कौशिकसम्मतोऽयम् । **"भक्षी"** इति–"भ्लक्षी भक्षणे" इत्यस्य स्थाने इति केचित् । **"ऋक्षद्"** इति–अयमधिक एव स्वादौ कैश्चित् पठ्यते । एवं निरूपितः परपठितधातूनां परिचयः । स्वार्थिकणिज्मात्रार्थं चन्द्रो "धृण् धारणे" इति पपाठ, स च "वहुलमेतन्निदर्शनम्" इत्युक्त्यैव साधितः । तल्लक्ष्यं च 'मैत्राय शतं धारयति' इत्यत्र "रुचिक्लृप्त्यर्थ-धारिभिः" [ २. २. ५५. ] इत्युक्तमर्णाच्चतुर्थी सिद्धा । स्वमते च तत्सिद्धिः कर्मकर्तुः शतस्य केनचित् प्रेरणे णिगि चौरादिकणिचो वाहुलकत्वाद् वा । आत्मनेपदार्थं पाठो यथा–"कृत् विक्षेपे" इत्यस्य 'कारयते' इति सिद्धये "कृण् विज्ञाने" इति चन्द्रः पपाठ । तस्य च स प्रयोगो विज्ञानार्थे विवक्षितो धातूनामनेकार्थत्वाश्रयणेन साध्यमानोऽप्यात्मनेपदमात्रसिद्धिः फलम् । "षचि सेचने" इत्यस्य धातूनामनेकार्थत्वात् समवाये वृत्तिसत्त्वेऽपि परस्मैपदार्थं "सच समवाये" इति चन्द्रेण पठ्यते । एवमिडर्थमपि क्वचित् पाठभेदो दृश्यते, यथा–"उषू दाहे" इत्यस्योदित्त्वेन स्वमते क्त्वि वेट्त्वात् क्तयोरिड्निषेधात्–उष्टः उष्टवानित्येव भवति । अन्यैस्तु तत्रेट्सिद्धयर्थम् "उष दाहे" इति पाठः सम्मत इति क्त्वि नित्यमिटि–उषित्वेत्येकमेव, क्तयोश्च उषितः, उषितवानितीट्सहितं रूपमिति । तदप्यागमशास्त्रस्यानित्यत्वादेव सिद्धमिति सकलेष्टसाधकस्यास्य न्यायस्य संक्षिप्तं विवरणम् ॥

प्रायोऽस्मिन् न्यायसङ्ग्रहे श्रीहैमशब्दानुशासनोपयुक्ताः सर्वेऽपि न्यायाः सङ्गृहीता एव, कतिचनैतेभ्यो भिन्ना अपि *अनेकान्ता अनुवन्धाः* *एकान्ता अनुवन्धाः* *यथोद्देशं संज्ञापरिभाषम्* *कार्यकालं संज्ञापरिभाषम्* इत्यादयः, एवं *सकृद् गते स्पर्धे यद् वाधितं तद्वाधितमेव* इति न्यायस्यापवादभूतः *पुनः प्रसङ्गविज्ञानम्* इति चैवमादयोऽपि न्यायाः सूरिभिः क्वचिन्न्यासादावुपयुक्ताः सन्ति । इमे च न्यायाः पातञ्जलमहाभाष्यादौ यत्र तत्र व्यवहृताः । परमेषां लक्ष्यानुरोधेनैवाश्रयणीयतया तदनुरोधेनैव व्यवस्थापनीयतया वा प्रकृतन्यायेनैव गतार्थत्वमिति नाधिकं तत्परिचयाय प्रयत्यते । सूरिभिश्च वैयाकरणपरम्पराप्राप्तप्रथमादिसंज्ञानामन्यैः । [ पाणिन्यादिभिः ] इव तत्तन्त्रप्रसिद्धानां लौकिकन्यायसिद्धानामेषां प्रकरणवशादुल्लेखः कृतः, न तावता तेषामवश्यसंग्रहणीयत्वमायाति । किञ्चानुवन्धविषये 'एकान्तत्वस्यैव' तैरपि स्वीकृतत्वेन तस्यैव च न्याय्यत्वेन, अनुवन्धपदव्युत्पत्तिलभ्यत्वेन चात्र सन्देहाभावेन तन्निर्णयाय नास्य न्यायतयोपयोगोऽपि तु सिद्धार्थत्वेनैवेति ध्येयम् । एवं यथोद्देशकार्यकालपक्षयोरपि तत्र तत्र लक्ष्यानुसारित्वेनाश्रयणं तैरपि स्वीकृतमेव । एवं *पुनः प्रसङ्गविज्ञान* न्यायव्याख्यावसरे नागेशादिभिरपि लक्ष्यानुसारित्वमेव स्वीकृतमित्ययमेव न्यायस्तत्तदवशिष्टन्यायविषयसङ्ग्राहक इत्यलमतिविस्तरेणेति ॥ शम् ॥

इति न्यायसमुच्चयस्य सिन्धुकलिते चतुर्थोल्लासे पूर्वदर्शित-
न्यायसजातीयस्य विस्तरतो व्याख्यातुं पृथगुपात्तस्य
न्यायस्य, तपोगच्छाधिपति-सूरिचक्रचक्रवर्ति-
सर्वतन्त्रस्वतन्त्र-श्रीमद्विजयनेमिसूरीश्वर-
पट्टालङ्कारेण 'व्याकरणवाचस्पति-
शास्त्रविशारद-कविरत्न' इति पदा-
लङ्कृतेन विजय-लावण्य-
सूरिणा विरचितं तरङ्गा-
भिधं विवरणम् ॥

क्वचित् प्राच्यः पन्थाः क्वचिदपि च नव्यो वुधपथः,
क्वचित् स्वातन्त्र्याध्वा क्वचिदपि च तेषां समुदयः ।
श्रितोऽस्मिन् शिष्याणां मतिविकसनार्थं शुभधिया,
वुधैर्वुद्ध्वा तत्त्वं तदनुगतमर्प्यं श्रितजने ॥ १ ॥
सूरीन्द्रं हेमचन्द्रं कलिसकलविदं संस्मरामोऽभिरामं,
धीमन्तं हेमहंसं गणिमणिममलं तं कथं विस्मरामः ।
न्यायानामर्थसार्थं निजमतघटितं धारयन्तीं यदीयां,
मञ्जूषां प्राप्य जाता वयमिह प्रभवः साधु सिन्धौ तरङ्गे ॥ २ ॥

